# महाकविबाणविरचितम्
# श्रीहर्षचरितम्

जीवानन्दविद्यासागरभट्टाचार्यकृतया
संस्कृतटीकया
**समलङ्कृतम्**

# संक्षिप्तश्रीहर्षचरितम् ।

## प्रथम उच्छ्वासः ।

यत्प्रभावात् सती विद्या साधूनां आसते हृदि ।
तां विश्ववन्द्यां परमां वाग्देवीं प्रणमाम्यहम् ॥
बाणभट्टकृतं गद्यं सङ्क्षिप्य क्रियते मया ।
सङ्क्षिप्तहर्षचरितं श्रीजीवानन्दशर्म्मणा ॥

पुरा किल भगवान् विश्वपतिः परमेष्ठी इन्द्रादिभिः देववृन्दैः महर्षिभिश्च सह संलपन् स्वं लोकम् अधितष्ठौ। तत्र महर्षिषु वेदान् पठत्सु कदाचित् अतिकोपनो मुनिः दुर्व्वासाः द्वितीयेन सहचरेण मन्दपालनाम्ना मुनिना सह विरोधम् आचरन् क्रोधात् विस्वरं साम जगौ। तत् आकर्ण्य शापभयात् अन्येषु दोषम् अकथयत्सु देवेषु मुनिषु च, अवधीरयति च अन्यासङ्गव्याजेन देवे पद्मसम्भवे, भगवती कुमारी तत्र चामरेण पितामहम् उपवीजयन्ती वाग्देवी मृदुमन्दम् अहसत्। स च मुनिः तां तथा हसन्तीम् अवलोक्य "रे पापे ! दुर्व्वाससं माम् उपहससि ?" इत्युक्त्वा कमण्डलुजलेन उपस्पृश्य शप्तुं प्रचक्रमे। अत्रान्तरे तत्र स्थिता देवी सावित्री तर्जनीम् उत्क्षिप्य "आः पाप ! दुर्विनीत ! ब्राह्मणापसद ! सुरासुरवन्द्यां देवीं सरस्वतीं शप्तुमिच्छसि ?" इत्यभिदधाना क्रोधात् आसनात् उदतिष्ठत्। ततो देवैः स्वशिष्यैश्च शतशः प्रसाद्यमानोऽपि, पिता अत्रिणा "पुत्र ! मा तपःक्षयं कुरु, स्खलितम् अस्या एकं क्षमस्व" इति निषिध्यमानोऽपि दुर्व्वासाः "दुःशीले ! मर्त्य-

भूमिं गच्छ" इति तां शशाप। ततश्च प्रतिशापोद्यतां सावित्रीं देवी वाग्देवी एव "सखि! संहर कोपं, स्वत एव द्विजन्मानो माननीयाः" इत्युक्त्वा न्यवारयत्।

अथ तां सरस्वतीम् अभिशप्ताम् आलोक्य विरिञ्चिः धीरेण स्वरेण उवाच,—"ऋषे! नायं सज्जनाचरितः पन्थाः येन प्रवृत्तोऽसि, क्षमा हि तपसो मूलं, क्रोधेन बुद्धिः विक्रियते, विकृतबुद्धयश्च अन्धा इव हिताहितं न पश्यन्ति, तस्मात् क्रोधम् अपहाय चरितव्यं निश्चितः तापसैः" इत्युक्त्वा अब्रवीत्,—"वत्से सरस्वति! मा विषीद, भवितव्यता अत्र बलवती, एषा त्वाम् अनुचरिष्यति सावित्री, विनोदयिष्यति च अस्माद्विरहिताम्। शापश्च अयं सुताननकमलालोकनावसानः" इति। एवं सान्त्विता पितामहेन सा सह सावित्र्या विषण्णा गृहम् आजगाम।

अथ गतेऽपि सावित्री विषादसागरपतितां सबाष्पां सरस्वतीम् आह,—"सखि! त्वं हि त्रिलोकशिक्षादायिनी, तव पुरतः किमहं ब्रवीमि? विदितवृत्तान्ताऽसि दैवकृतवाच्ये। यत् सत्यं दुःसहो बन्धुजनविरहः तापयतितराम्; तदत्र आर्तिविषये किं कर्तुम् अर्हसि? नाल अनुशोचितव्यम्; कथय, इदानीं कतमं भूतलविभागमलङ्कर्तुम् इच्छसि अवस्थानेन? इतः प्रभृति एव देवदेवं खेददातारं मनसा स्मर, अचिरेण एव कालेन गतशापा पुनः स्वधाम प्रतिपत्स्यसे" इति।

तथा अभिहिता सा प्रत्यब्रवीत्,—"सखि! त्वया सह वसन्त्या न मे स्वस्थानभ्रंशः सर्वलोकवासदुःखं वा अतिपीडाम् आवहति, केवलं पद्मयोनिचरणसेवनसुखं विगलयति मे चित्तम्: तत् त्वमेव मर्त्यभूमौ धर्मक्षेत्राणि पुण्यतीर्थानि जानासि, यदेव स्थानं तुभ्यं रोचते, तत्रैव वत्स्यामि" इत्युक्त्वा अनिमीलितनेत्रैव रजनीम् अगमयत्।

ततः अपरेद्युः उदिते भगवति सवितरि मुनिशापसमुद्विग्ना सावित्र्या सह महीतलम् अवततार। अवतीर्य्य च भूतले उपभोग्यं तत्तीरदेशस्य रामणीयकेन आकृष्टहृदया तत्रैव वासम् अरोचत, अवदत् च सावित्रीं,—"सखि! रोचते मे तटभूः अस्य महानदस्य, तदत्र एव स्थातुम् अभिलषति हृदयम्" इति। सावित्री च तथा अनुमोदमाना तस्य नदस्य पश्चिमे तीरे कस्मिंश्चित् शुचौ शिलातलसनाथे लतामण्डपे सरस्वतीम् अवासयत्।

अथ कदाचित् तत्र स्थिता प्रतिदिवसम् इष्टदेवम् आराधयन्ती, प्रहरमात्रोदिते सवितरि उत्तरस्यां दिशि अश्वह्रेषितम् आकर्ण्य लतामण्डपात् निर्गत्य, कतिपयमात्रेण पदातिसैनिकेन सह आगच्छत् अश्वसैनिकं, मध्ये च तस्य निरुपमं विधातुः सर्गमिव अष्टादशवर्षदेशीयं तरुणं, तत्पार्श्वे च स्थविरमेकम् असिचर्मधरं पुरुषम् अद्राक्षीत्। स च युवा अग्रयायिनां, तत् कन्यायुगलम् अवलोकयतां पदातीनां मुखात् श्रुत्वा तत् दिव्याकृति कन्यारत्नयुगलं सञ्जातकौतुकः स्वयं दिदृक्षुः तूर्णजवेन वाजिना तत्प्रदेशम् आययौ, अवततार च तुरगात् तेन द्वितीयेन परिणतवयसा सह पुरुषेण। ततश्च तौ चरणाभ्यामेव सविनयं तत् लतामण्डपम् आगतौ सह सावित्र्या सरस्वत्या वनवासोचितेन आतिथ्येन यथार्हम् उपचरितौ। अथ क्षणमिव विश्रान्तं तं द्वितीयं प्रवयसं सावित्री ईषद्व्रीडितेव सविनयम अवादीत्,—"आर्य्य! कुत आगम्यते? क्व वा गमिष्यति मलैन्याभ्यां भवद्भ्याम्? अद्य आश्चर्योऽयमागमनेन भवतोश्चरितार्थ इव संवृत्तः, न चेत् रहस्यं दोषो वा, तदाख्यातुम् अर्हति भवान्, कोऽयं महाभागः? त्रिभुवनरमणीयं रूपम् इदम् अवलोक्य मर्त्त्यभूमेः स्वर्गातिशायिताम् इव पश्यामि" इति।

इत्थम् अभिहितोऽसौ पुरुषः सप्रश्रयम् अवादीत्—"देवि। साधवः स्वतः प्रियंवदा भवन्ति, तन्न अतिविस्मयाय इदं भवद्वचनामृतम्। शृणोतु भवती—अयं हि भृगुकुल-तिलकस्य भगवतः च्यवनस्य वहिर्जीवितं दधीचो नाम कुमारः। माता च अस्य शर्य्यातस्य नृपतेः कन्या त्रिभुवनललामभूता सुकन्या नाम। स च राजर्षिः दौहित्रम् इमम् अतिप्रियम् अस्य पितुः अनुमत्या स्वगृह एव लालितवान्, अशिक्षयच्च सर्व्वाः विद्याः सकलाश्च कलाः। माञ्च अस्य नरपतेः आज्ञाकरं जानीहि विकुक्षिनामानम्।

अथ प्राप्ते सर्व्वविद्याऽधिगमे मातामहः शर्य्यातिः अस्य पितुः आश्रमम् एनं कृतविद्यं प्रदर्शयिष्यन् मद्वितीयं सहाश्व-वृन्दैः सपदातिभिश्च प्राहिणोत्। इतश्च न नातिदूरे उपशोणं तस्य भगवतः च्यवनस्य आश्रमपदं च्यावनं नाम काननम्। एष तावत् गमनवृत्तान्तः। साम्प्रतं शुश्रूषवो वयम् आयुष्मत्योः वृत्तं, न इयमाकृतिः कदाचित् मानवी भवितुमर्हति; तत् आवेदयतु भवती, परं कौतुकम् अत्र नौ वर्त्तते" इति।

सा अब्रवीत्—"भद्र। श्रोतव्यमावयोः वृत्तं कालेन; बहून् दिवसान् अत्र आवां स्थास्यावः। न च विस्मर्त्तव्योऽयम् अस्मत्परिचय आर्य्येण" इति। दधीचस्तु धीरमधुरम् अवादीत्,—"आर्य्ये। करिष्यति एव आर्य्या नौ प्रसादं, तिष्ठतु तावत् अधुना, तातमेव शीघ्रं द्रष्टुम् अभिलषति मे मनः, तत् उत्तिष्ठ. व्रजावः" इति।

अथ सरस्वती अश्वमारूढं प्रयान्तं तं युवानं प्रति अनि-मिषनयना यावन्नात्येति दृष्टिपथात् तावत् व्यलोकयत्। क्रमेण च शोणम् उत्तीर्य्य दधीचः पितुः आश्रमम् अवाप, उवास च कियतो दिवसान् पित्राऽऽनन्दितः तस्मिन् कानने।

अथ सरस्वती तं युवानम् आलोक्य कुसुमशरशरविद्धा अभवत्। अथ अपरेद्युः च्यवनाश्रमात् तं देशमागत्य कृतासन-परिग्रहं दधीचसहचरं विकुक्षिं दृष्ट्वा प्रीत्या पप्रच्छ सावित्री,—"आर्य्य! कुशली तावत् कुमारः दधीचः?" इति। सोऽवदत्—"देवि! कुशली कुमारः, स्मरति च आयुष्मत्योः अमीषु दिवसेषु। वृत्तान्तञ्च कुमारस्य समाख्यातुं मालती नाम काचित् किङ्करी अचिरेण एव आगमिष्यति युवयोः सकाशम्" इति। इत्युक्त्वा यथाऽभिलषितं प्रदेशम् अयासीत् विकुक्षिः। ततः परेद्युः एव मालती दधीचवार्त्तां समादाय तयोः आश्रमम् अभ्याययौ।

अथ शोणम् अवतीर्णायां सावित्र्यां स्नातुं रहसि मालती सरस्वतीम् अवोचत्,—"देवि! विदितमेव भवत्याः माधुर्य्यं विषयस्य, लोलुपता च इन्द्रियाणाम्। किमुच्यते, लज्जेऽहं वक्तुं, तथाऽपि स्वामिनिदेशोऽपरिहरणीय इति विवक्षा मां बाधते। तत् आकर्णयतु भवती, यदा एव दृष्टाऽसि कुमारेण, तत एव आरभ्य गाधयः किमिव तं न व्यथयन्ति? न अकार्य्यमस्ति कुसुमायुधस्य; किमधिकेन विज्ञापनेन, यदि न अनुकम्पसे, तदा अनिष्टमपि घोरम् आपतिष्यति कुमारस्य इति हृदयमाशङ्कते; तत् अधुना अनुरूपोऽयं देव्याः वर इति सालम् आवेदयामि, इति श्रुत्वा देवी प्रमाणम्" इत्युक्त्वा व्यरंसीत्। सरस्वती तु अब्रवीत्,—"अयि मालति। किमत्र प्रतिवच्मि, नात्र बहु भाषितुम् अवसरोऽस्ति मे; तदिदानीं ते वचनकारी अयम् जनः अनुकम्प्यतां कुमारमसमागमेन" इति। ततश्च मालती प्रीता दधीचम् आनेतुं च्यवनाश्रमम् अगात्। सावित्री च स्नाताऽऽगता विदितवृत्तान्ता हृष्टा आसीत्।

अथ आगत्य दधीचः मालतीवचननन्दितः तम् आश्रमं तया मनोरमया रमण्या सह सङ्गतः यथासुखम् अधिकं संवत्सरकालम्

एकं दिवसम् इव स्मरणोऽतिवाह्याञ्चकार। दधार च गर्भं सरस्वती, असूत च सर्व्वलक्षणसम्पन्नं कुमारम्। ततश्च तस्मै "सर्व्वे सरहस्याः वेदाः साङ्गोपाङ्गाः, सर्व्वाणि च शास्त्राणि, सर्व्वाश्च कलाः स्वयम् आविर्भविष्यन्ति" इति वरं दत्त्वा सह सावित्र्या गतशापा ब्रह्मलोकं प्रत्याजगाम। तस्याञ्च गतायां दधीचः तद्विरहकातरः स्वतनयस्य संवर्द्धनाय भार्गववंश-समुत्पन्नस्य भ्रातुः ब्राह्मणस्य पत्नीम् अक्षमालां नाम नियुज्य, जातवैराग्यः तपश्चरणाय वनम् अगात्, यस्मिन् एव दिने सरस्वती प्रसूतवती, तस्मिन्नेव दिने अक्षमालाऽपि तनयमेकं प्रासोष्ट। सा तु अक्षमाला तौ अभिनवजातौ कुमारौ निर्व्विशेषं वर्द्धयामास। तयोः एकः सारस्वतो नाम, द्वितीयो वत्सनामा आसीत्। द्वौ एव सोदरौ इव परस्परम् अकृत्रिमसद्भावौ तौ एकत्र अवर्द्धेताम्।

अथ गच्छता कालेन सारस्वतः मातृवरप्रभावेण यौवनारम्भ एव सर्व्वविद्यापारगः तस्मिन् समवयसि प्रियतमे भ्रातरि वत्से सर्व्वं वाङ्मयं सङ्क्रामयामास, स्थापयामास च तं कृतदार-परिग्रहं तत्रैव प्रदेशे प्रीतिकूटाभिधाने नगरे। स्वयन्तु नैष्ठिक-ब्रह्मचर्य्यपरः तपस्यतः पितुः अन्तिकम् अगमत्।

एतस्माच्च वत्सात् प्रादुरभवत् महत्तरो वंशः। तथा च, प्राक् तस्मात् एव वंशात् वात्स्यायना नाम गृहधर्म्मिणो मुनयः समजायन्त। क्रमेण कलौ सम्प्रवृत्ते अस्मिन्नेव विश्रुते कुले कुबेरो नाम कश्चित् द्विजः समुद्बभौ; तस्य चत्वारः सुता आसन् अच्युतः, ईशानः, हरः, पाशुपतश्च इति। तस्माच्च पाशुपतात् एक एव कुमारो जज्ञे अर्थपतिर्नाम। तस्य च एकादश-सूनवः समभवन्,—भृगुः, हंसः, शुचिः, कविः, महीदत्तः, धर्म्मः, जातवेदाः, चित्रभानुः, त्र्यक्षः, अहिदत्तः, विश्वरूपश्चेति। चित्रभानुश्च तेषां राजदेव्याख्यायां पत्न्यां बाणं नाम सुतम् अजीजनत्। स तु

बाणः शैशव एव मातृहीनः चतुर्दशवर्षदेशीयश्च पित्रा व्ययुज्यत। ततश्च पितृशोकेन दग्धहृदयः कथमपि कालेन विरलतां गते च शोके, चापलतया यौवनारम्भस्य सर्व्वदोषाकरतया च स्वातन्त्र्यस्य अनेकानि चापलानि आचरन् तुल्यशीलवयोभिः बहुभिः सुहृद्भिः सह देशान्तरदर्शनाकृष्टचेताः देशात् देशान्तरं गच्छन् अलभत सतां निन्दनीयताम्। अथ शनैः शनैः राजकुलानि पश्यन्, विद्यालाभार्थं गुरुगृहाणि अधितिष्ठन्, सहृदयगोष्ठीश्च निषेवमाणः बुधमण्डलानि च उपचरन् भूयोऽपि स्वकुलोचितां वैदुषीं प्रकृतिं प्रापत्। एवञ्च सुबहोः कालात् ताम् एव जन्मभूमिं पुनरागात्।

## द्वितीय उच्छ्वासः।

एकदा निदाघेऽतीवोग्रे काले चन्द्रसेननामा कश्चिदस्य पारशवः भ्राता स्वगृहस्थितं तम् आगत्य अब्रवीत्,—"आर्य्य! द्वारि स्थितो दीर्घाध्वगो भवताम् अन्तिकं श्रीहर्षदेवस्य महाराजाधिराजस्य कृष्णाभिधानेन भ्रात्रा प्रेषितः कश्चित्" इति। बाणोऽवदत्—"भ्रातः! अविलम्बेन एव प्रवेशयैनम्" इति। ततश्च प्रविशन्तं लेखहारकं दृष्ट्वा अभ्यभाषत,—"भद्र। कुशलमत्रभवतः कृष्णस्य सन्निधबन्धोः?" स तु "कुशलम्" इत्युक्त्वा "लेख एष स्वामिना प्रहितः" इत्यर्पयामास। बाणस्तु सादरं लेखमादाय स्वयमेव वाचयित्वा विदितलेखार्थः सन्देशमपृच्छत्। मेखलको नामासौ लेखहरः प्रत्यवादीत्,—"ब्रह्मन्। एवमाह अस्मत्-स्वामी,—'यत् अदृष्टे त्वयि विना कारणं किमपि आशङ्कते मे स्निग्धं हृदयं, तत् भवता अकृतकालक्षेपेण एव राजकुलम् आगन्तव्यम्' इति"। अथ बाणः तं लेखहरं "विश्रामय" इति

भ्रातरं चन्द्रसेनम् आदिश्य कथमपि तदहः समुत्सुक एव अत्यवाहयत्।

अथ अन्येद्युः प्रातः स्नात्वा कृतदेवार्चनः तस्मात् प्रीतिकूटात् निर्गत्य सद्य एव मल्लकूटाख्यं ग्राममाससाद। तत्र सुहृदा जगत्पतिनामधेयेन कृतातिथ्यः सुखोषितः परेद्युः यष्टिगृहकनामानं वनग्रामं गत्वा निशामयापयत्। ततोऽपरस्मिन् दिने राजभवनसन्निधौ विश्रान्तः मेखलकेन तेन सह अपराह्णसमये राजद्वारं प्राप। मेखलकस्तु "तिष्ठतु तावत् क्षणमात्रम् अत्र भवान्" इत्यभिधाय एक एव पुरमविशत्। क्षणेन च पुनः निर्गच्छता तेन सह समागतः पारियात्राख्यः प्रतीहारः मधुरवाचा सविनयम् अभ्यभाषत,—"ब्रह्मन्! आगच्छतु, प्रविशतु च अभ्यन्तरं भवान्, दर्शनाय कृतप्रतीक्षो देवः प्रसादेन" इति।

बाणस्तु "कृतार्थोऽस्मि" इत्यभिधाय पुरं प्रविशन् प्रथममेव दर्पशातनामानं गजेन्द्रम् आलोक्य विस्मयाक्षिप्तचेताः क्षणं तदवलोकनकौतुकी समतिष्ठत। ततश्च "पुनरपि समये एनं द्रक्ष्यसि, साम्प्रतं प्रतीक्षमाणं देवं तावत् पश्य" इत्यभिधीयमानो दौवारिकेण, समतिक्रम्य कक्ष्यान्तराणि त्रीणि, चतुर्थे आस्थानमण्डपस्य पुरतः चत्वरे राजभिः परिवृतम्, अमात्यैश्च समुपास्यमानं, दर्शनीयतमं, राजाधिराजं हर्षदेवं पश्यन् समुपेत्य कृताशीर्वादः स्वस्तिशब्दम् अकरोत्। राजा तु तं दृष्ट्वा गम्भीरेण स्वरेण "किम् अयं स बाणः?" इति अभ्यधात्। दौवारिकेण तु "देव! स एव अयम्" इति निवेदितः "न तावदेनम् अकृतप्रसादः पश्यामि" इति चक्षुषी प्रत्यावर्त्तयन् पृष्ठतो निषण्णस्य अतिप्रियस्य मालवेन्द्रसूनोः अवदत्,—"महान् अयं विटः" इति। एतत् आकर्ण्य सर्वस्मिन् एव राजलोके निःशब्दे मुहूर्त्तम् इव तूष्णीं स्थितो बाणः समभ्यधात्,—"देव! अविदिततत्त्व इव

अज्ञातलोकवृत्त इव कथमेवम् आज्ञापयसि? संसारेऽस्मिन् विचित्रमेव लोकानां चरितं स्वभावश्च; तत् अत्र साधुभिः यथार्थदर्शिभिः एव भाव्यम्। विचारे यदि अहं दोषी इति प्रतीयते, तदा एव माम् अधिक्षेप्तुमर्हति महाभागः। न तु अकारणं माम् अन्यथा सम्भावयतु देवः। ब्राह्मणोऽस्मि महति वात्स्यायने कुले जातः; मया साङ्गा वेदाः सम्यक् पठिताः, अन्यानि शास्त्राणि यथाशक्ति समालोचितानि। तत् कथं मम विटत्वम् अवधार्य्यते देवेन? सर्व्वथा समयेन मां यादृशं यथाऽहञ्च ज्ञास्यति महाराजः स्वयमेव" इति। अथ नरपतिः "एवम् अस्माभिः श्रुतम्" इति अभिदधानः समुचितसमादरादिना वह्निर्न एनम् अभ्यनन्दत्, केवलं सस्नेहेन दृष्टिपातेन एव प्रीतिं प्रकटयन् विसर्ज्जितराजलोकोऽभ्यन्तरमेव प्राविशत्।

अनन्तरं भूपतेः तादृशेन आचरणेन व्यथितो बाणः तस्मात् राजभवनात् निर्गत्य तावत् बान्धवानां भवनेषु विमना एव अतिष्ठत्, यावत् अस्य कृतप्रसादो महीपतिः एनम् अभिनन्दन् स्वयं न आह्वयत्। अथ कालेन नरेन्द्रेण तथा अस्य प्रसादः कृतः, यथा असौ राजभवने स्थितो देवस्य हर्षवर्द्धनस्य परमप्रेमास्पदम् अतीव विश्रम्भभाजनं मित्रत्वम् आसाद्य परं सुखमन्वभवत।

---

## तृतीय उच्छ्वासः।

अथ एकदा शरदारम्भे बाणो हर्षसकाशात् बन्धून् द्रष्टुं तमेव ब्राह्मणनिवासम् आजगाम; आगत्य च ज्ञातिभिरभिनन्दितः तैः सह समयोचितम् आलपन् परं मुमुदे। अत्रान्तरे सुदृष्टिः नाम पुस्तकवाचकः तत्रागत्य श्रोतृचित्त समाकर्षन् पुराणम्

अपठत्। तदानीञ्च नातिदूरवर्त्ती बन्दी सूचीबाण: तारमधुरेण स्वरेण इदम् आर्य्यायुगलं पठितवान्,—

"तदपि मुनिगीतमतिपृथु तदपि जगद्व्यापि पावनं तदपि।
हर्षचरितादभिन्नं प्रतिभाति हि मे पुराणमिदम् ॥ १ ॥
वंशानुगमविवादि स्फुटकरणं भरतमार्गभजनगुरु।
श्रीकण्ठविनिर्यातं गीतमिदं हर्षराज्यमिव" ॥ २ ॥

एतत् आकर्ण्य बाणस्य चत्वार: पितृव्यपुत्रा: परस्परं मुखम् अवलोकयामासु:। तेषु सर्व्वकनीयांश्च श्यामलो नाम प्रियतर: सप्रणयम् अवादीत्,—"भ्रात:। यदि एवं तदा भवता वर्त्तमानस्य अस्य पवित्रकीर्त्तेः चक्रवर्त्तिनो हर्षदेवस्य पूर्व्व-वंशानुक्रमसहितम् आमूलात् चरितस्य श्रवणे सकौतुका वयम्; तच्च द्वितीयं महाभारतमिव कस्य कीर्त्त्यमानं न आहरति प्रीतिम्? तदाख्यातु भवान्" इति। तदाकर्ण्य विहस्य बाणोऽब्रवीत्,—"आर्य्य। न युक्तम् उक्तं भवता; यत: को हि पुरुषायुषशतेनापि समग्रम् अस्य चरितम् आख्यातं शक्नुयात्? कियति अपि वर्णिते यदि व: कौतुकं, तत् कथयामि। अद्य प्रायेण अतिक्रान्तो दिवस:, तत् परेद्यु: आरप्स्यते वर्णयितुम्" इति। ते च सर्व्वे भ्रातर: तथा एव अन्वमोदन्त।

अथ परस्मिन् अहनि सर्व्वे बाणस्य ज्ञातय: सुहृदश्च सकौतुका: समागमन्। स चापि बाण: तेषां पुरत: हर्ष-चरितम् आख्यातुम् उपचक्रमे।—

"अस्ति श्रीकण्ठो नाम पुण्यवतां निवासोऽपरो वासवावास इव वसुधां गत: कश्चित् जनपद:, वर्त्तते च तत्र स्थाण्वीश्वराख्यो नगरविशेष:। तत्र पुष्पभूति: नाम राजाधिराज: प्रादुरासीत्। तस्य भगवति भूतभावने भवे सहजा भक्ति: आसीत्। एकदा असौ परमशैवो भूपति: लोकमुखात् भैरवाचार्य्यनामानम् एकं

महापाशुपतं स्वजनपदमागतम् अश्रौषीत्। श्रुत्वा एव तन्नाम तस्मिन् महती भक्तिः बभूव अस्य भूपतेः।

कदाचित् परिणते वासरे प्रतीहारी राजानमेत्य व्यज्ञापयत्,—'देव! द्वारि स्थितः परिव्राट् भैरवाचार्य्यादेशात् अनुप्राप्तः देवं द्रष्टुम् इच्छति'। तदाकर्ण्य राजा अभ्यधात्,—'अविलम्बं प्रवेश्यताम् एषः' इति। ततश्च प्रविष्टं तम् अपृच्छत् नरपतिः,—'क्व भैरवाचार्य्यः?' इति। प्रीतमनाः परिव्राट् नगरात् सरस्वतीतटैकदेशे वनान्तर्वर्त्तिनि शून्याऽयतने स्थितं तमाख्यातवान्। पुनश्च अकथयत्,—'देव! स भगवान् तत्र स्थितो महाभागम् अर्च्चयति आशीर्वचसा' इत्युक्त्वा प्रादात् योगकरण्डात् गृहीत्वा पञ्च राजतानि रत्नोज्ज्वलानि कमलानि भैरवाचार्य्यप्रहितानि।

राजा तु सादरं तानि आदाय अब्रवीत्,—'योगिन्! मनोरथदुर्लभफलप्रसविनी शिवभक्तिः इयम् अस्माकं, यया एवम् अस्मासु प्रसीदति भगवान् भैरवाचार्य्यः; तत् परश्वः भगवन्तं साक्षात्करिष्यामि' इत्युक्त्वा तं परिव्राजं विससर्ज।

अथ अन्येद्युः प्रातरुत्थाय अश्वारूढः कतिपयैरेव राजपुत्रैः अनुद्रुतः भैरवाचार्य्यसकाशं प्रायात्। गत्वा च तम् आश्रमं तत्र स्थितं शिष्यमेकं तदीयं दृष्ट्वा अपृच्छत्,—'क्व इदानीं भगवान् भैरवाचार्य्यः?' इति। सोऽब्रवीत्,—'महाभाग। एतस्य जीर्णमातृगृहस्य उत्तरेण बिल्ववाटिकाम् अधितिष्ठति' इति। तयोक्तश्च असौ नरपतिः गत्वा ताम् एव बिल्ववाटिकाम् अविशत्, अपश्यच्च तत्र प्रातःस्नातं, हुतहुताशनं, व्याघ्राजिनमधितिष्ठन्तं, कार्पटिकगणैः परिवृतं प्रमथगणवृतं भगवन्तं विरूपाक्षमिव भैरवाचार्य्यम्। स आचार्य्यः दृष्ट्वैव तं राजानं प्रत्युज्जगाम, समवर्द्धयच्च स्वस्तिगिरा गम्भीरया। राजा तु दूरतः

कृतप्रणामोऽब्रवीत्,—'भगवन् ! मनोरथशिष्योऽयं जनो भवतां समागतः' इति। तदाकर्ण्य भैरवाचार्यः परमप्रीतः आसनदानेन तम् अभ्यर्च्य स्वयं व्याघ्राजिन एव निषसाद। राजा तु तत्र नानाविधाभिः कथाभिः चिरं स्थित्वा तेनानुमतः पुनः राजधानीं प्रत्याजगाम।

अन्येद्युश्च भैरवाचार्योऽपि राजानं द्रष्टुं तदीयं राजभवनमगात्। आगताय च तस्मै राजा परमया भक्त्या सर्वं सपरिजनं सकोशं सान्तःपुरम् आत्मानं न्यवेदयत्। योगी विहस्य अब्रवीत्,—'राजन्। क्व वयं वनवासिनः फलमूलाशनाः निःस्पृहाः ? क्व वा भोगविभवाः ? विभवमदो हि नाशयति मनस्विताम् ; तत् भवादृशा एव एतान् भोक्तुमलं, न वयम्' इति उक्त्वा कियन्तं कालं विविधाभिः वाग्भिः राजानम् अभिनन्द्य स्वम् एव आश्रयं प्रत्यागमत्।

एवञ्च असौ परिव्राट् अन्यानि तादृशानि पञ्च पञ्च कमलानि अन्तरा अन्तरा राज्ञ उपायनानि प्राहिणोत्। एकदा स श्वेतकार्पटावृतं किमपि आदाय राजभवनम् आगत्य राजानम् अब्रवीत्,—"महाभाग ! भगवान् भैरवाचार्यः भवन्तमेवम् आह यत्,—'मम एकेन शिष्येण पातालस्वामिना कस्यचित् ब्रह्मराक्षसस्य हस्तात् महाऽसिः अट्टहासो नाम अधिगतः, सोऽयं भवद्भुजमेव अलङ्कर्तुमलं, गृह्यताम्' तत् तमिममसिं गृहाण" इत्युक्त्वा तस्मात् श्वेतकार्पटात् आकृष्य कृपाणं प्रादात्। नृपतिस्तु आयुधप्रियतया तत् आदाय पश्यन् परमां प्रीतिम् अवाप, अवोचत् च समयोचितं सविनयं किञ्चित्। स च परिव्राट् सपरितोषं 'स्वस्ति भवते' इत्यभिधाय स्वमेव आश्रमम् अयासीत्।

अथ गच्छत्सु कालेषु कदाचित् भैरवाचार्यः स्वयमागत्य रहसि राजानम् अवदत्—"तात ! कमपि महासत्त्व सेवितवान्

अस्मि महाश्मशाने कोटिजपेन, तस्य सिद्धिस्तु वेतालसाधनावसाना, सा च असहायेन न कदाचित् लभ्यते। त्वमेव अलमस्य साहायकत्वे ; त्वयि च अङ्गीकृतभारग्रहणे अपरे च त्रयः सहायाः सम्भविष्यन्ति, एकः स खलु पातालस्वामी, अपरः स एव परिव्राट् टीट्टिभनामा अस्मच्छैशवसुहृत्, अन्यश्च कर्णतालो नाम शिष्यः'। अथ 'तथा' इति स्वीकृतवचसि भूपतौ भैरवाचार्य्यः प्रहृष्टः चकार सङ्केतम्,—'आगामिन्यां कृष्णचतुर्दश्याम् अर्द्धरात्रे महाश्मशानेऽस्मिन् शून्याऽऽयतने शस्त्रधारिणा भवता साक्षात्करणीया वयम्' इति।

अथ तस्यां कृष्णचतुर्दश्याम् आगतायां निशीथे नरपतिः शस्त्रमात्रसहायः तमेव उद्देशमगच्छत्। ते च त्रयः पातालस्वामिप्रभृतयः तं प्रत्युदगमन् विकटवेशाः। तमसाऽऽच्छन्नतया तत्प्रदेशस्य अदृष्टशरीरत्वात् तेषां राजा 'कः कोऽत्र भो !' इति तान् अपृच्छत्, अब्रुवंश्च ते त्रयः स्वं स्वं नाम इति। अथ नृपतिः तैः अनुगम्यमानः तामेव साधनभूमिम् अगच्छत्। तत्र गत्वा च महतो मण्डलस्य मध्ये कमपि जपन्तम् आचार्य्यम् अपश्यत्, प्राणमच्च। ततश्च पूर्व्वसङ्केतानुसारेण पातालस्वामी प्राचीं दिशं, कर्णतालः कौवेरीं, परिव्राट् पश्चिमां, राजा दक्षिणाम् आश्रित्य तस्थौ।

एवमवस्थितेषु तेषु, विस्रब्धम् आचरति च स्वं कर्म्म भैरवाचार्य्ये, निवृत्तेषु च जनितकर्णज्वरेषु अतिचिरं कृतकलकलेषु विफलप्रयासेषु विघ्नकारिषु यातुधानेषु, समतिक्रामति च निशीथसमये, मण्डलस्य उत्तरेण भूः अदीर्य्यत, उज्जगाम च सहसा तस्मात् विदीर्णात् भुवो भागात् कश्चित् कुवलयश्यामः पुरुषः, उच्चैः जगाद च विहस्य,—'भोः। किमयं विद्याऽवलेपः !! महायमदो वा !! यत् मह्यम् अविधाय बलिं जाल्म इव

सं-श्री—ख

त्वसिद्धिम् अभिवाञ्छसि ? दुर्मतिरियम्, एतत्क्षेत्राधिपतिरहं श्रीकण्ठो नाम नागाधिपतिः, प्रतिकूलवर्त्तिनि मयि का शक्तिः ग्रहाणामपि गगनमार्गं सञ्चरितुम् ? अनुभूयताम् अस्य दुर्नयस्य फलमिदानीं सहायवताऽपि' इत्यभिधाय प्रकोष्ठप्रहारैः त्रीनपि तान् पातालस्वामिप्रभृतीन् असिचर्म्मवतोऽपि न्यपातयत्। नरपतिस्तु सावहेलमब्रवीत्,—'रे काकोटराधम ! काक ! जीवति मयि राजहंसे बलिमादातुं न जिह्रेषि ? परप्रभावार्पितैः का श्लाघा ? भुजे एव वीर्य्यं वसति, न वचने। गृहाण शस्त्रं, यदि एवं प्रतिपत्तिस्ते' इति। नागस्तु अनादृत्य तद्वचनम्— 'आगच्छ, किं शस्त्रेण, भुजाभ्याम् एव शातयामि ते दर्पम्' एवमभिदधानः समास्फोटयामास। राजा तु तथाऽधिक्षिप्तः परिकरं बध्नन् युद्धार्थमुद्यतस्तम् आक्रम्य केशेषु जग्राह, पातयामास च तत्क्षणमेव भूतले तं पापं नागम्। अथ आकृष्य तम् अट्टहासं शिरश्छेत्तुम् उपक्रममाणः सोपवीतं तदङ्गं पश्यन् अब्रवीत्,—'पाप ! दुर्विनीत। पश्यामि ते दुर्नयनिर्वाहबीजमिदं, यतो निःशङ्कमेवाचरसि अविनयम्; ब्रह्मबधोऽकर्त्तव्य एव' इति वदन् तं सुदूरतः समुत्ससर्ज।

अनन्तरञ्च सहसा एव ददर्श सान्तमालोकम्, अजिघ्रच्च घ्राणतर्पणमतिसौरभम् आमोदं, शुश्राव च नूपुरनिस्वनम्। नूपुरशब्दानुसारेण च व्यापारितचक्षुः अभिमुखम् आपतन्तीं कामपि कामिनीं दृष्ट्वा राजा असम्भ्रान्त एव अप्राक्षीत्,—'भद्रे ! काऽसि ? किमर्थं कुतो वा दृष्टिपथम् आगता ?' इति।

अथ सा अब्रवीत्,—'महाभाग। जानीहि मां भगवतो विष्णोर्वक्षःस्थलविहारिणीं लक्ष्मीम्। अपहृताऽस्मि ते निरुपमेण अनेन साहसेन दुर्ज्जयनागनिपातिना; वृणीष्व इदानीं स्वाभिलषितं वरम्' इति। परोपकारपरायणस्तु राजा

तां प्रणम्य स्वार्थनिःस्पृह एव आचार्य्यस्य सिद्धिमेव अयाचत। सा तु लक्ष्मीः 'तथा अस्तु' इत्यभिधाय पुनरब्रवीत्,—'राजन्! अनेन तव सत्त्वोत्कर्षेण, असाधारणया च शिवभक्त्या, स्वार्थनिःस्पृहतया च भृशं प्रीताऽस्मि; ददामि ते अपरम् अभीष्टं,—भविष्यति भवान् महतो राजवंशस्य कर्त्ता, यस्मिन् उत्पत्स्यते महाराजाधिराज आदिराजः पृथुः इव हर्षो नाम, सेविष्यते हि यं मदीयमिदं करकमलं कमलमपहाय गृहीतचामरम्' इत्युक्ता तिरोबभूवे।

अथ राजा तत्प्रसादेन नितरां प्रीतिमवाप हृदयेन। भैरवाचार्य्योऽपि राजप्रसादात् विद्याधरत्वमधिगतः प्राब्रवीत्,—'नरनाथ। प्रीतोऽस्मि ते महासत्त्वतया परोपकारितया च, स्वप्नेऽपि असम्भावितां कोऽन्यो भवन्तमपहाय गुरवे ईदृशीं दक्षिणां दातुमलम्!! तदिच्छामि केनचित् कार्य्योपयोगेन आत्मानम् अनृणीकर्त्तुं भवतः' इति। राजनि तु,—'भवत्सिद्धैव कृतकृत्योऽस्मि, नान्यत् किमपि कामये, साधयतु यथासमीहितं स्थानम् आचार्य्यः' इत्यभिहितवति आचार्य्यः स्वाभीष्टं विद्याधरलोकं जिगमिषुः समालिङ्ग्य तान् शिष्यान् पातालस्वामिप्रभृतीन्—'तात! साधयामि इति न स्नेहानुरूपं वचनं, स्मर्त्तव्योऽयं स्वार्थपरो जनः सर्व्वथा कथाऽन्तरेषु' इत्यादिकं तत्कालोचितं राजानं व्याहरन् उत्पपात गगनतलं, प्राप च सिद्धिलब्धं स्थानम्। श्रीकण्ठोऽपि नागराजः,—'राजन्! पराक्रमक्रीतोऽयं जनः स्मर्त्तव्यः' इत्यभिदधान एव भुवो विवरं प्राविशत्।

क्षितिपतिस्तु अवसितायां रजन्यां त्रीनपि तान् पातालस्वामिप्रभृतीन् सहायीकृत्य वनवापीसलिले अङ्गानि प्रक्षाल्य स्वं नगरं प्रत्यागमत्। कियता कालेन तेषु त्रिषु परिव्राट्

वलम् अयत्। पातालस्वामि-कर्णतालौ तु शौर्य्यरसानुरागिणौ तमेव राजानम् आश्रित्य तस्थतुः।

---

## चतुर्थ उच्छ्वासः।

---

अथ असौ पुष्पभूतिः शूर इव हरिवंशं महान्तं राजवंशम् अजीजनत्। तस्माच्च राजवंशात् क्रमेण बहवो राजानः सम-जायन्त। तेषु च तथाविधेषु धरणिं पालयत्सु उदभूत् प्रभा-करवर्द्धनो नाम भूपतिः; यशोवती नाम तस्य राजर्षेः महादेवी पार्व्वती इव भगवतः शङ्करस्य परमप्रेयसी आसीत्। असौ च नृपतिः प्रकृत्यैव सूर्य्यभक्तः अन्वहम् अजपत् मन्त्रम् आदित्यहृदयम् अपत्यकामः त्रिकालम्। कदाचित् स ग्रीष्म-रजन्यां यदृच्छया यशोवत्या सह प्रियया हर्म्म्यपृष्ठे सुष्वाप। गत-भूयिष्ठायाञ्च निशायां राजमहिषी यशोवती सहसा एव 'परि-त्रायस्व परित्रायस्व आर्य्यपुत्र!' इति व्याहरन्ती, भूषणरवेण आह्वयन्ती इव परिजनं वेपमानाङ्गयष्टिः उदस्थात्। तेन रवेण सहसा प्रबुद्धो राजा 'देवि! न भेतव्यं न भेतव्यं, किमेतत्?' इति आलपन् सहसा उदतिष्ठत्; चतुर्दिक्षु दत्तदृष्टिश्च यदा न किमपि दृष्टवान्, तदा तां भयकारणम् अपृच्छत्।

क्षणेन च साध्वसे प्रशान्ते सा देवी प्राब्रवीत्,—'आर्य्यपुत्र! दृष्टवत्यस्मि स्वप्ने—भगवतः सवितुर्मण्डलात् निर्गत्य द्वौ कुमारौ ज्योतिर्मयौ बालातपेन पूरयन्तौ दिगन्तराणि, अशेषेण जगता जनेन अभिवन्द्यमानौ, कन्यया एकया च चन्द्रकलया इव अनुगम्यमानौ, भुवं गतौ विलपन्त्या मे शस्त्रेण उदरं विदार्य्य प्रविशन्तौ' एवम् आलोक्यैव भीता प्रबुद्धाऽस्मि आर्य्यपुत्रम् आक्रोशन्ती कम्पमाना' इति। तत् आकर्ण्य राजा ताम्

अवादीत्,—'प्रिये ! हर्षे विषादम् अनुभवसि, पूर्णमनोरथौ आवां, प्रसन्नोऽस्माकं रविः भगवान् अचिरेण एव अपत्यरत्न-त्रयप्रदानेन प्रीणयिष्यति देवीम्' इति।

अथ गच्छता कालेन देवी यशोवती राज्यवर्द्धनं नाम प्रथमं तनयम् असूत। ततश्च समतिक्रान्ते कस्मिंश्चित् काल-लवे, देवक्या इव भगवान् चक्रपाणिः, यशोवत्याः हृदये गर्भे च सममेव प्रादुरासीत् हर्षः। सम्प्राप्ते च ज्येष्ठामूलीये मासि, बहुलासु बहुलपक्षद्वादश्यां व्यतिक्रान्तायां प्रदोषवेलायां साम्राज्यलक्षणाक्रान्तमूर्त्तिः देवो हर्षः समजायत। अत्रान्तरे मौहूर्त्तिकः तारको नाम राज्ञः परमसम्मतः समागत्य 'मान्धाता किल एवंविधे व्यतीपातादिदोषविरहिते वासरे, सर्व्वेषु उच्चस्थानावस्थितेषु च ग्रहगणेषु, ईदृशि एव लग्ने प्रादु-रासीत्; ततोऽनन्तं पुनः ईदृशि लग्ने चक्रवर्त्तिजनने नान्यः कोऽपि समजायत। सप्तचक्रवर्त्तिनृपाणां धुरीणः, सप्तरत्नानां चक्रवर्त्तिलक्षणानाञ्च भाजनं, सप्तसागराधिपतिः सुतोऽयं देवस्य जातः' इति राजानं व्यज्ञापयत्। अथ गच्छति च काले धात्र्याः कराङ्गुलिम् अवलम्ब्य पञ्चषाणि पदानि प्रक्षिपति हर्षे, षष्ठञ्च हायनम् अनुप्रविशति राज्यवर्द्धने देवे, सा यशोवती गौरीमिव हिमाद्रिजाया प्रासोष्ट राज्यश्रियं नाम कन्यकाम्।

अत्रान्तरे च यशोवत्या भ्राता पुत्रं भण्डिनामानम् अष्ट-वर्षवयसं मनोभवमिव पुनरुत्पन्नं परमसुन्दरम् अनुचरं कुमा-रयोः समर्पयामास। राजा तु तस्मिन् पुत्रयोः इव समदृष्टि-रासीत्। राजपुत्रौ तेन मधु-माधवौ इव मलयमारुतेन परां शोभां प्रापतुः। क्रमेण च यौवनपदवीमारुरुहतुः तौ पित्रोः आनन्देन समं वर्द्धमानौ।

कदाचित् अन्तःपुरवर्त्ती राजा सस्नेहनिर्भरम् अभाषत,—

'वत्सौ ! दुर्लभाः सद्भृत्याः, तदेव तावत् प्रथमं राज्याङ्गम्; धूर्ता हि क्रीडारसप्रसङ्गेन पार्थिवं रञ्जयन्तः जनयन्ति स्वप्ना इव मिथ्यादर्शनेषु सद्बुद्धिं, भ्रंशयन्ति च क्रमेण बहुविधाभिः उपधाभिः स्वपदात्। तत् एतौ सर्वैः एव दोषाभिषङ्गैः अनाघ्रातौ, बहुधा अस्माभिः विप्रलम्भेन परीक्षितौ, विशुद्ध-प्रकृती, विनीतौ, विक्रमशालिनौ. अभिरूपौ च मालवेन्द्रतनयौ भुजौ इव मे शरीरादभिन्नौ कुमारगुप्त-माधवगुप्ताभिधानौ अस्माभिः भवतोः अनुचरौ निर्दिष्टौ। अनयोः उभयोरपि भवद्भ्यां सोदरदृष्टिभ्यां वर्त्तितव्यम्' इत्युक्त्वा तयोः आह्वानाय दौवारिकान् आदिदेश।

अचिरेणैव तौ तेन प्रतीहारेण समम् आगतौ प्रविश्य अभ्यन्तरं राजानं यथाविनयं प्रणेमतुः, उपविविशतुश्च नरपतिनिर्दिष्टे अनुरूपे आसने। भूपतिः तौ आदिदेश तथास्थितौ,— 'वत्सौ ! अद्य प्रभृति भवद्भ्यां कुमारयोः अनुचराभ्यां भवितव्यम्' इति। तौ च 'यथा आज्ञापयति देवः' इत्युक्त्वा कुमारौ राज्यवर्द्धन-हर्षौ सविनयं प्रणम्य ततः प्रभृति नक्तन्दिवं तौ अनुचरन्तौ तस्थतुः।

अथ राज्यश्रीः अपि राज्यश्रीः इव क्रमेण व्यवर्द्धत। अल्पैः एव दिवसैः तरुणीभूतां तां राजानः दूतसम्प्रेषणादिभिः अयाचन्त। एकदा राजा केनापि पठ्यमानाम् आर्य्याम् इमाम् अश्रौषीत्,—

'उद्वेगमहावर्त्ते पातयति पयोधरोन्नमनकाले।
सरिदिव तटमनुवर्षं विवर्द्धमाना सुता पितरम्॥' इति।

एतां च आकर्ण्य रहसि राज्ञीं यशोवतीं प्राह राजा,—'देवि! यौवनसीमाम् अनुप्राप्ता ते दुहिता। तुल्यायामपि अपत्यतायां दुहितुः जनने हि तप्यन्ते गृहिणः। अपत्यविरहं दुःसहमपि

सहमानाः कथञ्चित् प्राणाधिकामपि दुहितरं पात्रसात् कृत्वा सुखिनो भवन्ति सन्तः। सकलभुवनवन्द्यो हि मौखरो वंशः, तस्मात् उत्पन्नः अवन्तिवर्म्मसुतो ग्रहवर्म्मा एनाम् अस्मत्सुतां कामयते; यदि भवत्या अनुमोदितमेतत्, तदा अस्मै एव सुतां राज्यश्रियं समर्पयामि' इति। देवी प्राह,—'आर्य्यपुत्र! धात्रीनिर्व्विशेषा हि भवन्ति जनन्यः कन्यापुत्राणां प्रतिपालन-मात्रक्षमाः, दाने तु प्रमाणं पितरः। तदेतदेव ब्रवीमि—यथा यावज्जीवमावयोः व्यथां न जनयति, सत्पात्रम् आसाद्य सुखेन कालं नेष्यति च दुहिता, तथा आर्य्यपुत्र एव अव-धारयतु' इति।

अथ नरपतिः ग्रहवर्म्मणे दातुं कृतनिश्चयः, शुभे दिवसे शुभे च लग्ने ग्रहवर्म्माणम् आहूय सुतां राज्यश्रियं सम्प्रददौ। जामाता च तां परमसुन्दरीं भार्य्याम् अधिगम्य, तया एव सह श्वशुरकुले कियन्ति दिनानि स्थित्वा, कथमपि श्वश्र्वा श्वशुरेण च यौतुकादिभिः सत्कृत्य विसर्ज्जितः तां राज्यश्रियम् आदाय स्वराज्यमयासीत्।

## पञ्चम उच्छ्वासः।

एकदा राजा राज्यवर्द्धनं युवराजं कृत्वा हूनान् जेतुम् उत्तरापथं प्रजिघाय। देवोऽपि हर्षवर्द्धनः तं सौभ्रात्रेण कियन्तम् अध्वानं तुरङ्गारूढोऽनुससार। अथ प्रविष्टे भ्रातरि कैलासप्रभोद्भासिनीमाशां, वहिरेव कियन्तं कालं मृगयाव्यप-देशेन व्यलम्बत। एकदा तु रजन्यां परिणतायामिव स्वप्ने दुरन्तेन दावानलेन दह्यमानं केशरिणम् अद्राक्षीत्। तस्मिन् एव च दहने समुत्सृज्य सुतस्नेहं, भाविनः पतिविरहस्य दुर्वि-

प्रहतां चिन्तयन्तीं केशरिणीम् आत्मानं पातयन्तीम् अद्राक्षीत्। समुदितश्च अस्य चेतसि,—'संसारेऽस्मिन् लोहेभ्योऽपि कठिनतराः प्रणयपाशाः, यन्निबद्धाः समाचरन्ति तिर्य्यञ्चोऽपि एवमेवम्'। अथ प्रबुद्धस्य 'किमेतत्?' इति भावयतः परस्पन्दे मुहुर्मुहुः दक्षिणेतरं चक्षुः, चलितमिव अभूत् हृदयम्। इत्थं विषण्ण एव शून्येन चेतसा प्रभाते मृगयां विजहार, मध्याह्ने च वेत्रपट्टिकाशयनम् अधिशयानः साशङ्क एव अतिष्ठत्।

अत्रान्तरे कश्चिल्लेखहरः कुरङ्गकनामा दीर्घाध्वगः समुपेत्य कृतप्रणामः शुष्केण एव मुखेन स्वान्तर्दुःखम् उद्गिरन् लेखम् उपानयत्। तञ्च आदाय देवो हर्षः स्वयमेव अवाचयत्। विदितलेखार्थश्च 'किं मान्द्यं तातस्य?' इति तम् अप्राक्षीत्। स च 'महान् दाहज्वरः' इति प्रत्युवाच। श्रुत्वा एव एतत् निदारुणं वचः समुत्पन्नवेपथुः पितुरारोग्यकामः विप्रेभ्यः अमितसुवर्णरत्नादिकं दत्त्वा, तस्मिन् एव दिने अकृताहार एव प्रयाणशङ्खमादिशन् एकाकी एव अश्वमारुह्य नगराय गन्तुम् उपचक्रमे। सहचराश्च राजलोकाः ससैनिकाः तम् अनुवव्रजुः। पथि गच्छंश्च महद्भिः दुर्निमित्तशतैः अनभिनन्द्यमानगमनः साशङ्क एव नक्तन्दिवं चलन्, अन्येद्युः मध्याह्नसमये स्कन्धावारम् आससाद; प्रविशंश्च तत्र यमपट्टिकेन केनचित् गीयमानं श्लोकमिमं शुश्राव,—

'मातापितृसहस्राणि पुत्रदारशतानि च।
युगे युगे व्यतीतानि कस्य ते कस्य वा भवान्?॥' इति।

अथ क्रमेण राजद्वारम् आगत्य अन्तःपुरात् बहिरागच्छन्तं सुषेणनामानं वैद्यकुमारं वैद्यकशास्त्रपारगं पितुः प्रियम् अपृच्छत्,—'सुषेण! अपि तातस्य कश्चित् विशेषः?' इति। सोऽवदत्,—'कुमार! नास्ति, इदानीं यदि कुमारं दृष्ट्वा भवेत्'

इति। अथ प्रविश्योऽभ्यन्तरं मात्रा यशोवत्या 'आर्य्यपुत्र ! स्वपिषि कच्चित् ?' इति व्याहरन्त्या सविषादं सर्व्वाङ्गेषु सवाह्य-मानं, वलदाहज्वरेण विकृतिमापद्यमानं पितरम् अवलोकयामास। रा॰ा तु दूरादेव पुत्रं कनीयांसमागतं दयिततमम् आलोक्य तदवस्थोऽपि 'एहि एहि वत्स !' इति प्रसार्य्य बाहू शरीरार्द्धं शयनात् उदतिष्ठत्, अस्पृशच्च पुनरेनं कम्पमानेन करतलेन सर्व्वाङ्गेषु. अब्रवीच्च कृच्छ्रात् इव चयच्चामकण्ठः,— 'वत्स ! कृशोऽसि' इति।

क्षणिडस्तु अब्रवीत्,—'देव ! अद्य तृतीयं दिनम् अस्य कृताहारस्य' इति। तदाकर्ण्य वाष्परुद्धकण्ठः कथञ्चमपि दीर्घं निश्वसन् पुनरवादीत्,—'वत्स। वेद्मि त्वां पितृवत्सलं, सुकोमलहृदयञ्च। अवस्था च एतादृशी विधुरयति धीरस्य अपि धियम्। बन्धुजनस्नेहोऽतीव प्रमाथी संसारे अस्मिन् मानवानां, तथाऽपि, 'आत्मानं सततं रक्षेत्' इति नीतिम् अनुसृत्य सर्व्वथा शोकप्रसरो न दातव्यः। उत्कटदाहज्वर-दग्धोऽपि वत्सस्य अनेन क्लेशवार्त्ताश्रवणेन अतिमात्रं दह्ये। त्वां तनुताम् आपन्नं दृष्ट्वा अतीव व्यथते मे हृदयम्। मदीयं सुखं, राज्यं, कुलञ्च, जीवितञ्च, त्वदधी॰म्। तव एव जन्मना अस्मि चरितार्थः। साम्प्रतं निराशोऽस्मि संवृत्तो जीविते, केवलं भिषजाम् अनुरोधः पाययति मां भेषज॰; तत् अविलम्बम् उत्तिष्ठ, कुरु आहारं, कृताऽऽहारे च त्वयि अहं यथा-॰तं पथ्यं करिष्यामि' इति। श्रुत्वा च पितुर्वचनं देवस्य हर्षस्य शोकानलः सुतराम् अदीप्यत। क्षणं स्थित्वा पित्रा पुनः आहारार्थम् आदिष्टः तस्मात् पितुर्गेहात् अवततार, अचिन्तयच्च ॰तसि,—"अकाण्डे एवायं समापतितः महान् अनर्थः निर्मेघ इव अशनिसम्पातः, किमत्र करवाणि ?' इति। अथ गत्वा

च स्वं धाम परिजनैः अनुगम्यमानः कथञ्चित् कतिपयान् कवलान् गृहीत्वा पुनरपि पितुरन्तिकमागात्। तत्र पितुरवस्थाम् अतीव शोचनीयाम् आकर्णयन् पश्यंश्च जाग्रदेव दीर्घदीर्घां निशाम् अयापयत्, प्राहिणोच्च प्रत्यूषसि एव भ्रातुरन्तिकं दूतान्।

अथ अन्यस्मिन् अहनि 'क्व असौ कुमारो हर्षः?' इति आलपन्ती वेलाभिधाना यशोवत्याः प्रतीहारी तम् उपेत्य व्यजिज्ञापयत्,—'कुमार! परित्रायस्व परित्रायस्व, जीवति एव पत्यौ किमपि अध्यवसितं भवज्जनन्या' इति। तदाकर्ण्य हर्षः सत्वरं प्रविशन् अन्तःपुरं मर्त्तुं कृतव्यवसायां मातरम् अद्राक्षीत्, अभ्यधाच्च दूरादेव सवाष्पदृष्टिः उच्चैः,—'मातः! किमेवं व्यवस्यति भवती? मन्दभाग्यान् अस्मान् त्वमपि त्यक्तुमिच्छसि? प्रसीद, निवर्त्तस्व अस्मात् दुर्व्यवसितात्' इति अभिधाय पादयोः न्यपतत्।

देवी च ससम्भ्रमं सस्नेहञ्च तमुत्थाप्य सुतं वाष्पनिरुद्धकण्ठी पुनः पुनः निश्वस्य आचष्ट,—'वत्स। नासि त्वम् अप्रियो निर्गुणो वा, येन त्वां परित्यजामि; स्तन्येन सह एव त्वया पीतम् अस्मद्धृदयम्; परं कुलवधूः अहं चारित्रवती, धर्म्मोज्ज्वले च कुले जाता। किं न जानासि, महावीरस्य पुरुषप्रवरस्य महिषीं मां केशरिण इव केशरिणीम्? वीरपत्नी, वीरजननी, वीरकन्या च अहम् अविधवा एव मर्त्तुम् अभिलषामि। किं बहुना वत्स! यश एव चिरस्थायि, भौतिकं कलेवरन्तु न; तत् माम् अस्मात् व्यवसायात् निवर्त्तयितुं न अर्हसि, कथम् एतादृशी सुभगा भूत्वा भर्त्तृविरहानलदग्धा चिरं स्थास्यामि?' इति।

स तु दुर्निवारतां तादृशस्य शोकस्य समवधार्य्य, कुलाङ्गना-

नाम् उचितां श्रेयसीञ्च तां गतिं मन्यमानः तूष्णीम् अवाङ्मुखः तस्थौ। यशोवती च सन्त्यक्तसुतस्नेहा चरणाभ्यामेव च अन्तःपुरात् निर्गत्य अनुसरस्वतीतटं चिताऽग्निम् आरुरोह।

हर्षस्तु मातुर्मरणेन नितरां विह्वलः पुनः पितुः अन्तिकम् आगच्छन्, तञ्च स्वल्पावशेषजीवितम् अश्रुस्रोतसा वर्षन् विमुक्तकण्ठमतिचिरं प्रारोदीत्। राजा तु चिरात् चक्षुरुन्मील्य पुत्रं तथाविधं दृष्ट्वा प्रक्षीणस्वरेण कथञ्चित् उवाच,—'वत्स! कथमेवं विक्लवीभवन्तस् आत्मानं न रुणत्सि? त्वादृशा हि न असहासत्त्वाः, न अल्पमतयश्च; क्व त्वद्विधाः? क्व च वैक्लव्यम्? भूरियं तव, इति सार्व्वभौमलक्षणवतः पुनरुक्ततास् एति। अवलम्ब्यतां लक्ष्मीः, इति लक्ष्म्या स्वयं गृहीतपाणेः न युज्यते। निगृह्यतां चापलम्, इति स्वभावधीरस्य निरर्थकोपदेशः' इत्येवं ब्रुवन् एव पञ्चत्वम् अगात् राजसिंहः।

अत्रान्तरे अस्तमयासीत् वासरमणिः। प्रकाशमाने च प्राच्यां दिशि तारापती, स्वयमेव समर्पितस्कन्धैः सामन्तैः पौरजनैश्च पुरोधःपुरःसरैः गृहीत्वा प्रवशिविकाम् उपसरस्वतीतटं, चितायां नरनाथार्हयां वह्निसत्कारेण कीर्त्तिमात्रावशेषतां निन्ये यशोधनः औशीनर इव राजेन्द्रः। अथ उदिते च सवितरि देवो हर्षः स्नात्वा पित्रे अददुदकाञ्जलिम्। अपस्नातस्यार्द्रमस्तक एव पिधाय उद्गमनीय-दुकूलवसने पादचारेणैव क्षितितलनिहितनयनः उष्णं निश्वसन् प्रत्याजगाम भवनम्।

एवं देवो हर्षः सममेव पितृभ्यां विहीनः, नितान्तविह्वलः, किङ्कर्त्तव्यविमूढोऽपि भ्रातृगतहृदयः समचिन्तयत्,—'अपि नाम आर्य्यः ईदृशं पितृमरणं महाप्रलयसमम् आकर्ण्य गतधैर्य्यो बाष्पवारिक्लिन्नस्नातो वनमाश्रयेत्? उत राज्यपदं परित्यजेत्? न आद्रियेत वा राजलक्ष्मीमुपसर्पन्तीम्? अतीव पितृवत्सलः

आर्य्यः ; सर्व्वदा तातं श्लाघमानः मास् आह स्म,—'वत्स हर्ष! कस्यचिदपरस्य अस्ति, आसीत्, भविष्यति वा तातसदृशं कलेवरम्? मुखकमलञ्च एतादृशम्? भुजदण्डौ च इत्यम्भूतौ? क्व वा दृश्यन्ते ईदृशानि विचेष्टितानि? कश्च अपरो मानी विक्रान्तः दानशौण्डो वा तातादन्यः?' एतानि नानाविधानि चिन्तयन् भ्रातुरागमनं प्रतीक्षमाणः कथमपि शोकार्त्तः तस्थौ।

## षष्ठ उच्छ्वासः।

अथ भुक्ते प्रथमप्रेतपिण्डादके विप्रे, अतीतेषु च अतिवैक्लव्य-जननेषु अशौचकालेषु, चितार्पितकलेवरे काव्यार्पिताख्ये च नृपतौ, कुमारो हर्षः कदाचित् शोकाकुलचेताः सहसा महाजनमज्ञातसमागमं दृष्ट्वा मनसि अचिन्तयत्,—'किमन्यत् भवितुमर्हति कारणमेतस्यागमनस्य? मन्ये, आर्य्यम् एव सम्प्राप्तम् आवेदयति अयं शोकाकुलो जनगणः' इति अपृच्छत् कञ्चित् प्रविशन्तं पुरुषं,—'किमार्य्यः समागतः?' इति। स तु शनै-रवादीत्,—'देव! यथा आज्ञापयसि'। ततश्च अचिरेण एव प्रविशन् देवो राज्यवर्द्धनः दूरादेव प्रियं भ्रातरं दृष्ट्वा, चिरसञ्चित-बाष्पवेगेण निरुद्धकण्ठो बाहुयुगलेन कण्ठे गृहीत्वा मुक्तकण्ठं प्रारोदीत्।

अथ पर्जन्य इव निरवशेषनयनाम्बुः, सुचिराच्च कथञ्चिदपि प्रशान्तमन्युवेगः देवो राज्यवर्द्धनः परिजनानीतेन सलिलेन मुखादिकं प्रक्षाल्य सुचिरं तूष्णीं स्थित्वा स्नानागार-मगच्छत्। तत्र स्नात्वा विलम्बकुन्तलः विमुक्ताभरणः शयनीये निपत्य मौनमतिष्ठत्। अथ अन्येद्युः प्रभाते समागत्य समुपविष्टेषु राजलोकेषु, भ्रातरं हर्षवर्द्धनमब्रवीत्,—

'तात! पात्रमसि गुरुवचनानाम्। शैशवत एव भवता चित्तवृत्तिम् अनुसरता सम्यक् आराधितः तातः; तत् एवं गते वचनस्थितं त्वां किमपि विवक्षुः अस्मि, नात्र चापल्यात् विमतिः अवलम्बनीया, न च अत्र मदीहिते प्रत्यूहलवोऽपि विधेयः। ज्ञायत एव भवता लोकवृत्तं बहुदर्शनेन; पश्य,—मान्धातरि निधनं गते किमध्यवसितं पुरुकुत्सेन तदात्मजेन? दिलीपे वा रघुणा? दशरथे च रामेण? दुष्मन्ते वा भरतेन? सन्तु तावदेते, तातेन अपि पितरि सुगृहीतनाम्नि स्वर्गं गते नाकारि किं राज्यम्? नावलम्बितं किं गार्हस्थ्यम्? न रक्षिता वा प्रजाः? शोकपरिभूतञ्च जनं कापुरुषम् आचक्षते विद्वांसः, अबला एव विषयः शोकसञ्चाराणाम्; तथाऽपि किं करोमि? अहन्तु स्वभावदुर्बलतया कापुरुषतया वा शोकविह्वलः किङ्कर्त्तव्यविमूढोऽस्मि। मम हि, एवं विपर्य्यस्ते संसारे प्रनष्ट एव प्रज्ञाऽऽलोकः, विच्युतमिव धैर्य्यम्; किं बहुना, सर्व्वथा निरुत्सुकोऽस्मि विषयेषु। राज्यं विषमिव चकोरस्य चक्षुर्मे विरक्तीकरोति। वंशलक्ष्मीमुद्वोढुं न अभिलषति मे मनः। तदहम् इच्छामि, पुरुरिव आज्ञया गुरोर्जरां, त्वहाण मे राज्यलक्ष्मीम् इति। त्यक्त्वा च सर्व्वाणि बालक्रीडितानि हरिः इव लक्ष्म्या विहर। त्यक्तं मया अद्य प्रभृति शस्त्रम्' इत्यभिधाय निजं खड्गं खड्गधारिणो हस्तात् आकृष्य भूमौ न्यपातयत्।

तत् आकर्ण्य देवो हर्षः सुतरां विदीर्णहृदयः सञ्चिन्तितवान्,—'किम् अयम् आर्य्यः मां ब्रवीति!! किमसौ केनचित् माम् अन्तरेण कोपितः? अथवा एवं मां परीक्षते? उत शोकजः कोऽपि चेतोविका[illegible]षः? आहोस्वित् शोकविरूढ़धिया एकं विवक्षितम्, अन्यत् मुखात् निर्गलितम्? केन हि ईदृशे भ्रातरि ज्यायसि त्यक्तराज्ये नववयसि लक्ष्मीः कामयेत

चाण्डालेनापि ? कथं वा सम्भावितम् इदम् अतीव अनुचितं चित्तवता आर्य्येण ? किं वा अनेन विस्मृतः सौमित्रिः ? अथवा भीमसेनादयः पाण्डवाः ? यत् भवतु, आर्य्ये मां विहाय तपोवनं विशति नाहं क्षणमपि जीवितुं शक्नोमि' इति।

इत्थं चिन्तयति तस्मिन्, सहसा राज्यश्रियः परिजनः संवादको नाम समेत्य, मुक्तकण्ठं विरुदन् सभायाम् आत्मानं न्यपातयत्। ततश्च सम्भ्रान्तो देवो राज्यवर्द्धनः सह भ्राता 'किम् ?' इति तं पप्रच्छ। स तु कथमपि संवृतवाष्पवेगः प्राब्रवीत्,—'देव ! पिशाचस्य इव नीचस्य चरितं रन्ध्रप्रहारि। यस्मिन् दिने राजाधिराजः प्रभाकरवर्द्धनो देवभावं गत इति वार्त्ता आसीत्, तस्मिन्नेव दिने दुरात्मना मालवेन्द्रेण ग्रहवर्म्मा व्यापादितः कूटकारिणा। देवी च राज्यश्रीः संयता कान्यकुब्जदुर्गे कारायां निहिता। जनश्रुतिश्च एषा यत्,— अराजकं राज्यमिदं मन्यमानोऽसौ दुर्म्मतिः एतामपि भुवम् आत्मसात् कर्त्तुम् आजिगमिषति' इत्युक्त्वा विरराम।

श्रुत्वा एतत् आकस्मिकम् अनुप्रेक्षणीयम् अपरं दुर्घटनं पर-परिभवस्य अनाकर्णितपूर्व्वतया, तेजस्विततया नवयौवनस्य, स्वसुः स्नेहवशंवदतया च सद्य एव अस्य तादृशः शोको व्यरंसीत्। कोपाविशश्च गम्भीरं हृदयम् आचक्राम। पुनरपि परित्यक्तं शस्त्रं ग्रहीतुं समूलमालवोन्मूलनाय प्रससार दक्षिणोऽस्य करः। ततश्च कनीयांसम् अब्रवीत् भ्रातरम्,—'आयुष्मन् ! राजकुल-मिदं, बान्धवा इमे, परिजनोऽयं, भूश्च इयं रक्ष्यताम् ; गत एव अहम् अद्यैव मालवराजविध्वंसनाय। इदम् एव तावत् मे तपः दुर्विनीतारिनिर्मूलनम्। कुरङ्गकैः कचग्रहः केशरिण इव, भेकैः करप्रहारः कालसर्पस्य इव, मालवैः परिभवोऽस्मद्वंश्यस्य ; तिष्ठन्तु अन्यानि साधनानि, एक एव अयं भण्डिः

अयुतमात्रेण अश्वानां मया सह प्रयातु' इत्यभिधाय प्रयाणार्थं पटहम् आज्ञापयत्।

तथा प्रज्ञान्तं तम् आह स्म सविनयं देवो हर्षः,—'आर्य्य! माम् अनुगन्तुम् आदिशतु, नाहं भवता विना क्षणमपि अत्र अवस्थातुम् उत्सहे; प्रसीदतु भवान्, न वञ्चितोऽस्मि कदाचिदपि प्रसादेषु आर्य्येण' इत्यभिदधान एव पादयोः अपतत्। तं पुनश्चरणपतितम् उत्थाप्य सस्नेहं प्रोवाच देवो राज्यवर्द्धनः,—'वत्स! कथम् एवम् अतिसमारब्धसमुद्योगेन गौरवम् आरोप्यते लघीयान् अरातिः? न हि कुलाद्रिसमुत्पाटनक्षमाः प्रभञ्जनाः समुज्जृम्भन्ते अतिचपले तूलराशौ। अचिरात् एव ग्रहीष्यसि अस्त्रं दिशां विजये। साम्प्रतं दृश्यन्ताम् अनाथाः प्रजाः' इत्यभिधाय तस्मिन्नेव दिने प्रायात् मालवेन्द्रनिर्मूलनाय।

अथ देवो हर्षः भ्रातरि तथा प्रयाते खिद्यमानहृदयः परिणतप्रायायां रजन्याम् एकदा स्वप्ने अभङ्गुरं लोहस्तम्भं भज्यमानम् अद्राक्षीत्। सहसा प्रबुद्धश्च व्यचिन्तयत्,—'किम् एवं माम् एषः दुःस्वप्नः एतदवश्यमपि विधुरयति!! स्फुरति च निरन्तरम् अशुभसूचनाकुशलं सव्यं नयनम्; सुदारुणाश्च विविधा उत्पाताः पुनः प्रबलपार्थिवनाशमाचक्षाणाः मुहूर्त्तमपि न प्रशाम्यन्ति; सर्व्वथा स्वस्ति अस्तु सङ्ग्रामविजयिने आर्य्याय'। इत्थं मनसा अभिध्यायन् समुत्थाय आस्थानमण्डपगत एव सहसा प्रविशन्तं कुन्तलं नाम अश्ववारं राज्यवर्द्धनस्य प्रीतिभाजनम् अद्राक्षीत्; अश्रौषीच्च तस्मात् वाष्पपूर्णनयनात्,—अवज्ञानिर्ज्जितमालवराजमपि गौड़ाधिपेन अलीकोपचारजनितविश्वासम् अशस्त्रं स्वभवनगतम् एव भ्रातरं निहतम्। श्रुत्वा एव शोक-क्रोधाभ्यां सममेव समाक्रान्तहृदयः अब्रवीत्,—'कः खलु तादृशं महापुरुषम् अकाण्डे गर्हितेन उपायेन मृत्युवशं नयेत् अनार्य्यात् गौड़ाधिपात्

अपरः ? न जाने, स खलु दुरात्मा कां गतिं वा योनिं गमिष्यति ? कस्मिन् वा निरये पतिष्यति ? चाण्डालोऽपि क इदं विगर्हितम्, अकार्य्यम् आचरेत् ? नामग्रहणमपि अस्य पापकारिणः पापं जनयति। इदानीं गमिष्यतेऽनेन दुरात्मना ?' इत्येवं वदत एव अस्य समीपगतः, पितुः मित्रं सेनापतिः सिंहनादनामा गम्भीरया वाचा सैनिकानां समररसम् उत्तेजयन् समभ्यधात्,—'देव ! न क्वचित् कृताश्रयया मलिनया मलिनतराः कोकिलया काका इव कापुरुषाः हतलक्ष्म्या विप्रलभ्यमानम् आत्मानं न खलु चेतयन्ते। श्रियो हि दोषान्धतादयः कामला विकाराः; आतपत्रा-वृतवयो हि न स्मरन्त्यपरं तेजस्विनं कुधियः; किं वा करोतु वराकः ? येनातिभीरुणा नित्यसमरविमुखेन नावलोकितान्येव कुपितानां शूराणामाननानि ? नासौ मूढः जानाति एवं यत्, —अभिचारा इव अपमानिताः सद्य एव समग्रवंशविनाशं विदधति मनस्विनः। वीरसमाजावहेलितस्य निर्घृणस्य तस्यैव उचितमिदं दुर्जनस्य दुष्पारनरकनिपातकुशलं कर्म्म। न खलु कदाचित् तेजस्विनं स्प्रष्टुं शक्नोति शोकः। त्वन्तु सत्त्ववतां प्राग्र-हरोऽसि, किम् एकेन गौड़ाधिपेन,—तथा कुरु, अन्योऽपि कश्चित् कदाचित् एवं यथा नाचरेत् इति। समाश्वास्यन्ता-मशरणाः प्रजाः। समर्प्यन्तां भूपतीनां शिरःसु शारदीयेन सूर्य्येण इव ललाटन्तपाः पादन्यासाः' इति।

तत् आकर्ण्य देवो हर्षस्तं प्रत्यवोचत्,—'करणीयमेव इदम् अभिहितम् आर्य्येण। शृणु तावत्, प्रतिजाने आर्य्यस्य पाद-रजःस्पर्शेन,—यदि अल्पीयसा एव कालेन निर्गौड़ां न करोमि पृथ्वीं, ततो जातवेदसि ज्वलति पतङ्ग इव महापातकी पातयामि कलेवरम्' इति।

एवं कृतशपथश्च सभां त्यक्त्वा रात्रौ शयनतलनिलीनगात्रः

शोकानलदह्यमानान्तःकरणः चेतसि अकरोत्,—'कथमिव अस्य हतजीवितकामस्य आर्य्यविरहे क्षणमपि युक्तम् उच्छ्वसितुम् !! क्व गता सा प्रीतिः भक्तिः अनुवृत्तिः वा ? कः खलु आर्य्यविरहे मम जीवितं सम्भावयेत् ? तथाविधम् ऐक्यम् एकपद एव विलीनम् !! अभिन्नोऽपि हतविधिना सहसा विभिन्नः कृतः। दग्धरोषाऽऽविष्टचेतसा शोकात् रुदितमपि न मुक्तकण्ठं निर्घृणेन मया !! पर इव अहम् आर्य्यं मां विहाय स्वर्गं गते स्वस्थः इव तिष्ठामि !!' इत्येवं बहुविधानि चिन्तयन् निर्निद्र एव क्षपां नीत्वा प्रभातायाम् एव शर्व्वर्य्यां सकलगजसैन्याध्यक्षं स्कन्दगुप्तमाहूय विजयप्रयाणशङ्खपूरणाय समादिशत्।

## सप्तम उच्छ्वासः ।

अथ अन्येद्युः देवो हर्षः चतसृणाम् अपि दिशां विजयाय शुभे लग्ने कृतमङ्गलाचारः प्रातिष्ठत। उपसरस्वति तृणनिर्म्मितं मन्दिरम् अधितिष्ठति तस्मिन्, कोऽपि समागत्य वृषाङ्कामिकां काञ्चनमयीं मुद्राम् अर्पयामास। जग्राह च राजा। समुपस्थापिते च आदावेव सा करात् परिभ्रश्य मृत्पिण्डे अवनतमुखी महीतले पपात। मृदुमृत्तिकायां पतनेन अस्या वर्णावलयः स्फुटतया अराजन्त। अशुभशङ्किषु अपि परिजनेषु देवस्य हर्षस्य मनसि भूयसी प्रतीतिः एषा जाता—'यस्मादियं वर्णराजिर्दृश्यते, अनेन एकशासनमुद्रिता भूर्भविष्यति इति निवेदितं निमित्तेन शुभेन' इति ताम् अभिनन्द्य मनसा राजा हर्षदेवः तत्रैव तं दिवसम् अयापयत्। अथ रात्र्यां परिणतायां प्रयाणपटहः समताड्यत। पूरितञ्च राजद्वारम् उद्घोष्यमाणनामधेयैः भूपतिभिः।

अथ उदिते एव भगवति मरीचिमालिनि प्रयियासुः नरपतिः अनुगच्छतां राजलोकानां सुभटानाञ्च यथायथं सम्मानेन प्रयाण-मर्य्यादां विसृज्य प्रतस्थे। ततः कियन्तम् अध्वानं गत्वा शिविर-सन्निविष्टं तं प्रविश्य प्रतीहारो व्यजिज्ञपत्,—'देव! द्वारि स्थितः प्राग्ज्योतिषेश्वरकुमारेण प्रेषितो हंसवेगो नाम दूतः' इति। राजा 'शीघ्रमेनं प्रवेशय' इति तम् आज्ञापयत्। अथ प्रविशन्तं तम् अपृच्छत्,—'हंसवेग! अपि कुशलं कुमारस्य?' इति। स प्रत्यवादीत्,—'साम्प्रतम् असौ कुशली, येन देवेन एवं स्नेह-सिक्तया वाचा पृच्छ्यते' इति।

क्षणं स्थित्वा असौ पुनः अब्रवीत्,—'यदि च दुर्लभं देवस्य अनुरूपं जगति प्राभृतं, तथाऽपि सन्देशम् अशून्यं करणीयम् इति अस्मात् कारणात् प्रभुणा पूर्व्वपुरुषोपार्ज्जितं वारुणम् आतप-त्रम् आभोगाऽऽख्यं प्रेषितं, तत् इदम् अनुरूपस्थानन्यासेन कृपया प्रतिगृह्यताम्। अस्य च बहूनि आश्चर्य्याणि सन्ति,—प्रतिदिनं प्रविशति अस्मिन् चन्द्रमसः किरणावलितः एकैकः रश्मिः शैत्यार्थं छायायाः। प्रविष्टे च चन्द्रकिरणे प्रच्यवन्त्यस्य मणिमयशलाकाभ्योऽच्छा धाराः सोमसयूखानां बहुशः। यः खलु वरुण इव चतुर्णाम् अम्भोधीनाम् अधिपतिः भूतो भावी वा, तमेव सेवते छायया, न इतरम् इदम्। नेदं जातवेदसा दह्यते, पृषदश्वेन न ह्रियते, नोदके आर्द्रतां नीयते, न रजोभिः मालिन्यं प्राप्यते, नापि जरया जीर्य्यति। तदेतत् अनुगृह्यतां देवेन कटाक्षपातेन, सन्देशं कमपि सुविस्रब्धं श्रोष्यति' इत्यभिधाय पश्चाद्वर्त्तिनं पुरुषं प्राब्रवीत्,—'भद्र! दर्शय एतत् देवस्य' इति।

अथ तेन तत् निचोलकात् निष्कोषितं राजा राजन्यगण-परिवृतः साश्चर्य्यम् अवलोकयन् 'त्रिभुवनरत्नम् एतदद्भुतम्' इति

ननन्द। दृष्टे च तस्मिन् राज्ञा, अपराण्यपि उपायनानि प्रदर्शयामास सः। 'प्रथमे प्रयाणे शोभनं निमित्तमिदम्' इति मनसा प्रीयमाणो हंसवेगमाबभाषे,—'भद्र! एतस्य आतपत्ररत्नस्य कुमारात् लाभोऽतीव प्रीतिं जनयति, तत् विश्रम्यताम्' इत्यभिधाय स्वयम् आभोगस्य तस्य छायाम् अधितष्ठौ। एवम् आनन्दम् अनुभवन् तं दिवसम् अनयत्।

अथ रजन्यां विसर्ज्जितपरिजनो हंसवेगम् आहूय आदिदेश सन्देशकथने। स च प्रणम्य कथयितुम् आरेभे,—'देव! आसीत् पुरा नरको नृपतिः महावीरः। स इदं वरुणस्य प्राणसमं छत्ररत्नं जहार। तस्य महासत्त्वस्य अन्ववाये भगदत्तप्रभृतयो राजानः समभवन्; तेषु च कालेन व्यतिगतेषु भूतिवर्म्मा नाम नरपतिः अजायत। तस्मिन् पुनः देवभावं गते, चन्द्रमुखवर्म्मा तत्पुत्रः तदीयं सिंहासनम् अभजत। तस्मिंश्च स्वर्गते तत्पुत्रः स्थितिवर्म्मा राज्यम् अवाप। ततः सुस्थिरवर्म्मा नाम तत्पुत्रो महाराजपदवीं लेभे, यं मृगाङ्क इति लोका आहुः। तस्य च सुगृहीतनाम्नः देवस्य श्यामाऽभिधानायां महादेव्यां भास्करवर्म्माऽपरनामा तनयः कुमारः समजायत। सोऽयं कुमारः जगदेकवीरेण देवनिभेन देवेन सख्यम् इच्छति, तत् आज्ञादानेन अनुमोदतां देवः, अनुभवतु साम्प्रतं देवस्य गाढालिङ्गनसुखं कामरूपेश्वरः। न अभिनन्दति चेत् एतं प्रणयम् अस्य देवः,—तत् आज्ञापयतु, किमस्य कथनीयम्?' इति।

अथ भूपतिः तं सादरम् अब्रवीत्,—'हंसवेग! कथमिव तथाविधे गुणवतां प्रवरे मादृशस्य अन्यथा स्वप्नेऽपि प्रवर्त्तेत हृदयम्? अतिशुभः सङ्कल्पः कुमारस्य। स्वयम् असौ बाहुवीर्य्यशाली मया च समालम्बितशरासनेन सख्या किमिव न

अधिकरिष्यति ? तत् तथा यतस्व,—यथा न चिरम् इयं क्लेश-यति अस्मान् कुमारदर्शनोत्कण्ठा' इति।

अथ प्रभाते प्रभूतानि प्रतिप्राभृतानि प्रधानप्रतिदूताधिष्ठितानि दत्त्वा हंसवेगं व्यसर्ज्जयत्। स्वयमपि तत आरभ्य अविरतैः प्रयाणैः अभ्यमित्रम् अयासीत्।

प्रयांश्च कियन्तम् अध्वानं राज्यवर्द्धनभुजोपार्जितम् अशेषं मालवराजसैनिकाम् आदाय समागच्छन्तं भण्डिं शुश्राव। तत्र च अभिनवेन पुनः भ्रातृशोकस्मरणेन सम्पीड्यमानहृदयस्य शिविरं प्रविशतः सहसा भण्डिरागत्य अधोमुखो मुक्तकण्ठं रुदन् पादयोः पपात। राजा च सुचिरम् अतिकरुणं प्रारोदीत्। अथ कथञ्चिदिव प्रशान्ते मन्युवेगे देवो हर्षः क्षणं स्थित्वा भ्रातृमरणवृत्तान्तम् अपृच्छत्; अब्रवीच्च यथावृत्तं भण्डिः। अथ राजा पुनः अकथयत्,—'राज्यश्रीवृत्तमाख्याहि'। सोऽवदत्,—'देव! देवभूयं गते राज्यवर्द्धने, गुप्तनाम्ना च गृहीते कुशस्थले, राज्यश्रीः परिभ्रश्य बन्धनात् विन्ध्याटवीं सपरिजना प्रविष्टेति लोकमुखात् श्रूयते वार्त्ता। अन्वेषणार्थञ्च तस्याः प्रहिताः कतिपये जना नाद्यापि निवर्त्तन्ते' इति। तदाकर्ण्य राजा अवादीत्,—'यत्र सा, तत्र अहमपि गमिष्यामि। भवान् कटकम् आदाय प्रवर्त्ततां गौड़ाभिमुखम्'।

अथ अन्येद्युः स्वसारम् अन्वेष्टुं हयसाधनैः कतिपयैः प्रातिष्ठत विन्ध्याचलम्; प्रापच्च कतिपयैः एव अहोभिः तम्। प्रविशंश्च दूरतो वनग्रामम् अद्राक्षीत्, प्राविशच्च तत्रैव इति।

---

## अष्टम उच्छ्वासः।

---

अथ अन्येद्युः देवो हर्षः तस्मात् वनग्रामात् निर्गत्य विन्ध्या-

टवीम् अविशत्, पर्य्यटच्च तत्र समन्तात् बहून् दिवसान्। कदाचित् परिभ्रमतः तस्य भूपतेः व्याघ्रकेतुः नाम कश्चित् आटविकसामन्तस्य शरभकेतोः सूनुः कुतोऽपि शबरयुवानम् एकम् आदाय सन्निकर्षम् आगच्छत्, व्यज्ञापयच्च,—'देव! एतस्य खलु विन्ध्यस्य स्वामी शबरसेनापतिः भूकम्पो नाम। तस्य अयं निर्घातनामा स्वस्रीयः सर्व्वस्य अस्य विन्ध्यारण्यस्य पर्णानामपि अभिज्ञः, किमुत तत्तत्प्रदेशानाम्' इति। नृपतिः तम् अपृच्छत्,—'भद्र! काचित् रूपवती नारी दर्शनपथम् आगता तव?' इति। स प्रत्यवोचत्,—"न एवंरूपा काऽपि दृष्टिपथं गता, इदानीं तावत् देवादेशात् अन्वेष्टुं यतिष्ये। इतश्च न अतिदूरे दिवाकरमित्राख्यः कोऽपि पाराशरी गिरिनदीम् आश्रित्य प्रतिवसति, स यदि विन्देत वार्त्ताम्' इति। तत् आकर्ण्य राजा चिन्तयामास,—'श्रूयते—स्वर्गतस्य ग्रहवर्म्मणः शैशवमित्रं दिवाकरमित्रो नाम युवा एव सौगतधर्म्मम् आश्रित्य काषायपरिवीतो व्यचारीत्' इति। प्रकाशम् अवादीत्,—'भद्र! उपदिश्यतां तन्निवासस्थानं, यत्रासौ प्रतिवसति'।

अथ नरपतिः तेन निर्घातेन सह गत्वा तरुषण्डमध्यवर्त्तिनं दिवाकरमित्रं दृष्ट्वा,शिरसा मनसा वाचा च वन्दित्वा व्यजिज्ञपत्,—भगवन्! मम हि विनष्टनिखिलप्रियजनस्य जीवितनिबन्धनं एकैव यवीयसी भगिनी अवशिष्टा। साऽपि भर्त्तृवियोगात् वैरिपरिभवम् असहमाना विन्ध्याटवीम् अविशत् इति वार्त्ता। ताञ्च अन्वेष्टुं वयम् अविरतम् इमाम् अटवीं पर्य्यटामः, न च एषा अधिगम्यते। तत् कथयतु गुरुदेवः, यदि कदाचित् वनं पर्य्यटतो दृष्टिपथं गता सा भवतः श्रुतिपथं वा' इति।

तत् आकर्ण्य जातानुकम्पः पाराशरी समभ्यधात्,—'भद्र! न अधिगतः कश्चित् वृत्तान्त एवंरूपः' इति ब्रुवति एव तस्मिन्

कश्चिज्जातकरुण इव भिक्षुः ससम्भ्रमम् आगत्य उपरचिताञ्जलिः समभाषत,—'भगवन् भदन्त ! महत् खलु कारुण्यं वर्त्तते, परित्रायस्व,—बाला काचित् बलवद्व्यसनाभिभूता इव दृश्यमाना कल्याणरूपा वैश्वानरं प्रवेष्टुम् उद्यता' इति। तत् आकर्ण्य राजा सञ्जातानुजाशङ्कः प्राह,—'भद्र ! कियद्दूरे सा ? कथं वा आर्य्यस्य दृष्टिपथं गता ?' इति।

तथाऽभिहितोऽसौ भिक्षुः प्राब्रवीत्,—"महाभाग ! श्रूयताम्,—अहम् अद्य प्रत्युष एव यदृच्छया गतवान् अतिदूरम्; गत्वा च एकस्मिन् वनलतागहने नारीणां रुदितम् अशृणवम्; सञ्जातकृपश्च तम् उद्देशं गतोऽस्मि; दृष्टवान् च अस्मि परं कारणं करुणायाः योषितमेकाम्; अचिन्तयच्च 'चित्रमिदम् !! ईदृशीमपि आकृतिम् अभिभवति दारुणः सन्तापः !!' इति। सन्निहितश्च मां काऽपि अन्यतरा योषित् तस्मात् स्त्रैणादुत्थाय समब्रवीत्,—'भगवन् ! सर्व्वभूतानुकम्पनपरा प्रायेण प्रव्रज्या श्रूयते ; तत् इयं नः स्वामिनी पितुः अवसानेन, भर्त्तुः वियोगेन, भ्रातुः अकालमृत्युना, शेषस्य बान्धववर्गस्य भ्रंशेन च सबाष्पनयनं भृत्यवर्गं विहाय अग्निं प्रविशति ; परित्रातुम् अर्हति'। अहन्तु तत् आकर्ण्य समुद्विग्नतरः शनैः अवदम्,—'आर्य्ये ! यथा कथ्यते, तथा, शक्यते चेत् मुहूर्त्तमात्रमपि त्रातुं, तदा न व्यर्थेयं प्रार्थना भविष्यति। मम आचार्य्यः सन्निहित एव। तदन्तिकम् अस्मिन् वृत्तान्ते कथिते, अवश्यमेव असौ समागत्य प्रतिविधास्यति। सुकौशलेन कुशलशीलामिनां कियन्तं कालं प्रबोध्य रक्षतु भवती, अहम् अविलम्बेनैव गत्वा व्यतिकरम् इमं गुरवे निवेदयिष्यामि' इत्युक्त्वा भवदन्तिकम् उपागाम्"।

तदाकर्ण्य राजा श्रमणाचार्य्यमब्रवीत्—'भगवन्। नियतं सा एव इयम् अनार्य्यस्य अस्य हतभाग्यस्य स्वसा इति विदीर्य्य-

साणमेव इदं हतहृदयम् आवेदयति, तत् सत्वरं परित्रायताम्' इत्युक्त्वा तमपि भिक्षुम् अब्रवीत्,—'आर्य्य! दर्शय प्रत्यानं, क्व असौ? तत्र गच्छामः, यदि कथमपि जीवितां पश्याम.'।

अथ सर्व्वे ते गतवन्तः तम् उद्देशम्; दृष्टवन्तश्च वैश्वानर-प्रवेशोद्यतां राज्यश्रियम्। अथ भ्राता हर्षस्तां ससम्भ्रमम् अग्नि-सान्निध्यात् आक्षिप्य तरुतलम् आनीतवान्। दृष्ट्वा च भ्रातरं सुचिरमतिकरुणं विललाप सा। परिजनैश्च महता प्रयत्नेन प्रबोध्यमाना कथङ्कथमपि निवर्त्तितवती। ततः स्वसारं शनैः अब्रवीत् राजा,—वत्से! वन्दस्व भगवन्तं श्रमणाचार्य्यम्, एष ते भर्त्तृहृदयं ˜ तीयं, गुरुश्च अस्माकम्' इति। ततश्च भ्रातृवच-नात् पतिवार्त्ताऽऽकर्णनप्रसङ्गेन पुनरपि अश्रुपूर्णलोचनायां राज्यश्रियां नमन्त्यां आचार्य्यः दीर्घं निश्वसन् सुहृच्छोकेन, क्षणं स्थित्वा मधुरया वाचा समभ्यधात्,—'वत्से! अलमति-रुदितेन' इति राज्यश्रियमुक्त्वा राजानं पुनरवादीत्,—'वत्स! गम्यतां पुनः मदीया आवासभूमिः' इति।

ततो राजा सपरिजनां भगिनीमादाय तमेव देशं गत्वा आबन्धनात् पावकप्रवेशोद्योगपर्य्यन्तं सर्व्वं वृत्तान्तं स्वसुः परिजनात् शुश्राव। तथा श्रवणकातरश्च तं देवं हर्षं श्रमणा-चार्य्यः सान्त्वयन् प्रोवाच,—'श्रीमन्! श्रूयतां तावत्, वक्तव्यमस्ति किञ्चित्,—एकदा नागार्ज्जुनेन नाम भिक्षुणा नागराजात् अङ्गतप्रभाभासिनी विषसन्तापशमनी मन्दाकिनी नाम एकावली लेभे। स च शातवाहनाभिधानाय राज्ञे सख्ये तां दत्तवान्। सा च इयं कालेन शिष्यपरम्परया अस्माकं हस्तं प्राप्ता। यदि च परिभव इव भवादृशां दत्तिम उपचारः, तथाऽपि ओषधिबुद्ध्या धीमता सर्व्वसत्त्वरक्षाप्रवृत्तेन विषसन्तापात् रक्षितुकामेन गृह्यताम्' इत्युक्त्वा तां मन्दाकिनीं

राज्ञे प्रादात्। राजा च तां प्रभूतैः मयूखैः भासमानां सर्व्वाशापूरणीं दृष्ट्वा सादरम् अग्रहीत्। गते च एकावली-प्रसङ्गे प्राप्तविश्रम्भा राज्यश्रीः ताम्बूलकरङ्कवाहिण्या पत्रलेखया हर्षं विज्ञापयामास,—'काषायग्रहणानुज्ञया अनुकम्प्यतामियम् अपुण्यभाजनं ते भगिनी' इति। राजा तु तदाकर्ण्य किमपि नाभ्यधात्। अथ आचार्य्यः विविधैः प्रबोधवचनैः सान्त्वयामास ताम्। ततश्च भूपतिः सविनयम् आबभाषे श्रमणाचार्य्यं,—'प्रार्थनाऽस्ति काचित् विधेयस्यास्य, इयमस्माकं भगिनी सर्व्वकार्य्योपरोधेनापि पालनीया नित्यम्; अतः अद्यावधि यावदहं लघयामि प्रतिज्ञाभारं, तावदिमाम् अत्रभवतः धर्म्माभिः कथाभिः अस्मत्पार्श्ववर्त्तिनीमेव प्रतिबोध्यमानामिच्छामि। इयं पुनः अवसितकृत्येन मयैव समं ग्रहीष्यति काषायाणि' इति उक्त्वा तूष्णीम्बभूव भूपतिः। अथ आचार्य्ये तस्मिन् 'तथा' इति अभिनन्दितप्रणये प्रीयमाणः राजा तत्र तां रजनीम् अतिवाह्य, प्रभाते वसनालङ्कारादिभिः परितोष्य विसर्ज्य च निर्घातम् आचार्य्येण सह स्वसारम् आदाय कटकम् अनुजाह्नविनिविष्टं प्रत्यागमत्।

---

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचित

सङ्क्षिप्तश्रीहर्षचरितं समाप्तम्।

---

# महाकवि-श्रीबाणभट्ट विरचितम् ।

# श्रीहर्षचरितम् ।

## प्रथम उच्छ्वासः ।

चतुर्मुखमुखाम्भोज-वनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्व्वशुक्ला सरस्वती ॥ १ ॥

---

प्रणम्य परमात्मानं श्रीजीवानन्दशर्म्मणा ।
श्रीहर्षचरितस्यैषा विवृतिः क्रियतेऽमला ॥

प्रारिप्सितपरिसमाप्तिकामः तत्रभवान् महाकविर्बाणभट्टः आशङ्कितविघ्नव्यूह-विनाशाय अविगीतशिष्टाचारपरम्पराप्राप्तं वाग्देवतास्मरणरूपं मङ्गलं शिष्यशिक्षायै ग्रन्थादौ निबध्नाति, चतुर्मुखेत्यादि !—चतुर्मुखस्य—चतुराननस्य, ब्रह्मण, इत्यर्थः, मुखानि—चत्वारि आननान्येवेत्यर्थः, अम्भोजानि—पुण्डरीकाणि, तेषां यत् वनं—काननं, तत्र हंसवधूः—हंसी, 'चतुराननवदनकमलवनविहारिमरालवधूस्वरूपेत्यर्थः, सर्वशुक्ला—सर्वेण—सकलेन, शरीरेण वसनेन स्वाधिष्ठानेन चेत्यर्थः, पक्षे,—च्युत-संस्कृत्याद्यभावरूपेण सर्व्वप्रकारेणेत्यर्थः, शुक्ला—श्वेतवर्णा, पक्षे,—परिशुद्धा, सरस्वती—वाग्देवी, पक्षे,—संस्कृतभारती, मम मानसे—चित्ते पक्षे—मानसाभिधेयसरसि, (यथा हि मानससरोविहारिण्यः मानसौकसः कामिन्यः स्वर्गसुखभागुपभोग्यं स्वभवनं मानसं विहाय रमणीयमपि अन्यत् किमपि सरः गन्तुम् अनिच्छन्त्यः अतितरां तस्यैव शोभां प्रकाशयन्ति, तथैव 'विदग्धकलकमलकलहंसी' भगवती भारती मन्मानस-मन्दिरमनियतकालमेव अध्युष्य अखिलं सदर्थजातं तत्र समुल्लासयिष्यति इति श्लेष-तात्पर्य्यम्, मानससर्गोनिषय एव मरालानुरागः कविसमयसिद्धः, तथा हि,—"अस्ति यद्यपि सर्व्वत्र नीरं नीरजमण्डितम् । रमते न मरालस्य मानसं मानसं विना ॥" इति) नित्यं—सर्व्वदा, अनियतकालमित्यर्थः, रमतां—विहरतु, [प्रार्थनायां लोट्]।

नमस्तुङ्गशिरश्चुम्बि-चन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भ-मूलस्तम्भाय शम्भवे ॥ २ ॥

मानससन्निधेये सरोवरे कमलकानने हंसीव या चतुराननाननकमलवने नित्यं श्रुतिस्वरूपेण विहरति, साऽतिविशुद्धवागधिष्ठात्री देवी मम मानसमन्दिरे नियतं निवसतु इति निष्कृष्टार्थः। अत्र भगवत्यां सरस्वत्यां हंसवध्वाः, तथा चतुर्मुख-मुखेषु अम्भोजानां तादात्म्याध्यासात् तथा श्लेषमहिम्ना मानस-सरस्वत्यादिपदानां चित्त-वागाद्यर्थान्तरावगमाच्च श्लिष्टं समस्तवस्तुविषयं साङ्गं रूपकमलङ्कारः। अनुष्टुप् वृत्तम् ॥ १ ॥

अथेदानीं जन्मान्तरीणान् प्रत्यूहव्यूहान् बलवत्तरमैहिकं विघ्नं वा समाशङ्क्य तान् समूलमुन्मूलयितुं भूयसा स्वाभीष्टदेवममितप्रभावं शिवं स्तौति, नम इति।—तुङ्गं—कदाऽपि कुत्राप्यनवनततया सदा समुन्नतमित्यर्थः, शिरः,—मस्तकं, चुम्बति—स्पृशति, तत्र तिष्ठति इत्यर्थः यः तथाविधः, सततसमुन्नतोत्तमाङ्गसंस्थ इत्यर्थः, यः चन्द्रः,—शशाङ्कः, स एव चामरं—चमरमृगधवलपुच्छविनिर्म्मितव्यजनं, तेन चारुः, मनोहरः तस्मै, त्रैलोक्यं—त्रिभुवनमेव, नगरं—पुरं, तस्य आरम्भः,—निर्म्माणोपक्रमः, तस्य मूलस्तम्भः,—धवलशिलामय-स्थूणाविशेषः तस्मै, शम्भवे—शिवाय, नमः, बहुक्तत्वः प्रणतिरस्त्वित्यर्थः। यथा हि कश्चिदपूर्व्वकारुः लोकातिशायिनीं महानगरीं निर्म्मातुं प्रवृत्तः गोपुरं पुरतः विरचय्य, तत् विशालस्थूणासनाथं कृत्वा तस्योपरि अपूर्व्वशोभासम्पत्तये श्वेतपताकामिव कौमुदीरुचिं धवलचामरं निदधाति, तद्वत् यस्तावत् त्रिभुवननगरनिर्म्मित्सया स्वयमेव मूलस्तम्भस्वरूपतामुपगतः सितचारुचामरोपमं चन्द्रमसं शिरसा दधत् परमरमणीयतामुपलेभे, त्रिलोकीमूलहेतवे तस्मै शम्भवे नमः इति समुदिततात्पर्य्यम्। श्लोकेऽस्मिन् "स्वयम्भुः शम्भुरादित्यः" इति हरेर्नामसहस्रे भगवतो नारायणस्यापि शम्भुनामदर्शनात् केचित् अस्य श्लोकस्य विष्णोर्नमस्कारपरत्वमपि वदन्तः एवं व्याचक्षते; तथा हि,—हरेः शिरो हि द्युलोकः, "यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ मही" इति वचनात्, तथा च तुङ्गम्—उन्नतं, यत् शिरः,—द्युलक्षणो मूर्द्धा, तच्चुम्बी चन्द्र एव चामरं तेन चारवे, अन्यत् सर्व्वं पूर्व्ववदिति। अत्र त्रैलोक्ये नगरतादात्म्याध्यासः शम्भौ मूलस्तम्भतादात्म्याध्यासस्य मस्तकस्थचन्द्रे चामरतादात्म्याध्यासे कारणमिति परम्परितरूपं रूपकमलङ्कारः, तदुक्तं दर्पणे,—"यत्र कस्यचिदारोपः परारोपणकारणम्। तत् परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ॥" इति। अनुष्टुप् वृत्तम् ॥ २ ॥

हरकण्ठग्रहानन्द-मीलिताक्षीं नमाम्युमाम्।
कालकूटविषस्पर्श-जातमूर्च्छागमामिव ॥ ३ ॥
नमः सर्व्वविदे तस्मै व्यासाय कविवेधसे।
चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥ ४ ॥

पूर्व्वमशेषकारणं सर्व्वाधारं शङ्करं संस्तुत्य, स्त्रीजनसुलभेन सारल्येन वात्सल्येन च अचिरादेव वाञ्छितार्थप्रपूरणं सम्भाव्य च तच्छरीरार्द्धजाया तदाश्रया पार्व्वतीं स्तवीति, हरेति।—हरस्य—पत्युः पशुपतेरित्यर्थः, कण्ठग्रहे—कण्ठाश्लेषे, यः आनन्दः,—आह्लादः, निरतिशयं सुखमित्यर्थः, तेन मीलिते—सङ्कुचिते, तदुपभोगात् ईषन्मुकुलिते इत्यर्थः, अक्षिणी—नेत्रे यस्याः तां, स्वयंग्रहाश्लेषसुखस्पृहयालीमित्यर्थः, अत एव काल-कूटस्य—कालकूटाभिधेयस्य, कालकूटेति स्वनामप्रसिद्धस्येति यावत्, हरकण्ठस्थितस्येति भावः, ("काकोलकालकूटहलाहलाः······विषभेदा अमी नव" इत्यमरः) विषस्य—गरलस्य; [ अत्र कालकूटस्यैव विषविशेषार्थकतया तेनैव प्रकृतार्थसङ्गतौ पुनः विष-पदोपादानं पौनरुक्त्यदोषमावहतीति नाशङ्कनीयं, गोबलीवर्द्दन्यायेनैव झटिति अर्थ-प्रतीतिसौकर्य्यार्थं सामान्यविशेषार्थपरशब्दद्वयप्रयोगस्य सुधीसम्मतत्वात्; यथा हि बलीवर्द्दस्य गोविशेषत्वेऽपि तस्य झटिति गोत्वेन बोधनार्थं "बलीवर्द्दमानय" इति उक्त्वाऽपि पुनः "गामानय" इति कथयति, तथाऽत्र कालकूटस्य विषविशेषत्वेऽपि झटिति तस्य विषत्वेन बोधनार्थं पुनर्विषशब्दप्रयोगः समादृत इति सुधीभिर्विभाव्यम्। कालकूटेति विशेषणेन च विषस्य निरतिशयौत्कट्यं प्रकटीकृतम् ] स्पर्शेन—संश्लेषेण, सम्पर्केणेत्यर्थः, जातः,—उद्भूतः, मूर्च्छागमः,—मोहावेशः यस्याः तथाभूतामिव, उमां—गौरीं, नमामि—वन्दे; विषाक्तद्रव्यसंसर्गे हि दारुणगरलप्रभावेण श्वासप्रश्वास-वशात् संस्पृष्ट शरीरेऽपि विषक्रियासम्भवात् मूर्च्छा नासम्भवनीया, तेन हि विष-कण्ठस्य स्वामिनः सकण्ठग्रहालिङ्गनजनितानन्दविगलितकलेवरायाः मुग्धायाः पर्व्वत-दुहितुः विषोपहृतवत् अक्ष्णो निमीलनं सुसङ्गतमेवेति कविना सप्रणयालिङ्गनसुखोप-भोगकृतनयननिमीलनेऽपि पतिकण्ठसङ्क्रमितविषक्रियाकृतमोहावेशत्वेन उत्प्रेक्षित-मिति बोध्यम्। अत्र प्रकृते पतिकण्ठालिङ्गनजनितानन्दकृते नेत्रनिमीलने विष-सम्पर्कजनितत्वेन सम्भावनात् उत्प्रेक्षाऽलङ्कारः। अनुष्टुप् वृत्तम ॥ ३ ॥

अथ आत्मनः प्रकृष्टकवित्वाभिमानप्रकटनाय कविकुलशिरोमणिं भगवन्तं महर्षिं श्रीकृष्णद्वैपायनं स्तौति, नम इति।—सर्व्वविदे—सर्वं—सकलं, वेदादिकं गीतादि-कलाकलापञ्चेत्यर्थः, वेत्ति—जानातीति तथोक्ताय योगजसन्निकर्षेण सर्व्वज्ञायेत्यर्थः,

प्रायः कुकवयो लोके रागाधिष्ठितदृष्टयः।
कोकिला इव जायन्ते वाचालाः कामचारिणः ॥ ५ ॥

विभुसमायेति यावत्, कविवेधसे—कवीनां—काव्यरचयितॄणां, वेधाः,—विधाता तस्मै, कविभ्यः अभिनवमहाकाव्यरचनापद्धतिप्रदर्शनेन शिक्षाविधायिने इति यावत्, "अपारे काव्यसंसारे कविरेव प्रजापतिः" इति स्मरणात्, तस्मै—प्रसिद्धाय, व्यस्यति—विभजति, ऋग्यजुःसामाथर्व्वलक्षणान् वेदानिति व्यासः तस्मै, नमः,—सङ्ग्रा‌ऽतीता प्रणतिरस्त्वित्यर्थः। [प्रथमतो वेदशास्त्रम् अविभक्तवाङ्मयरूपेणावस्थितं, तच्च पराशरसुतो द्वैपायनः ऋग्यजुःसामाथर्वाख्यया मन्त्र-ब्राह्मण-उपनिषद्विधया विभज्य, पञ्चमवेदभूतमहाभारतेन तथा वेदार्थोपनिबन्धॄणा पुराणादिना बहुधा विहृतवान् इत्यस्य व्याससंज्ञेति प्रसिद्धिः]। प्राक्कथितकविविधातृत्वञ्चास्य रचितग्रन्थख्यापनेन विशिनष्टि, चक्रे इति।—यः,—कविवेधा व्यासः इत्यर्थः, भारतं—तदाख्यं महाकाव्यं, भारतं वर्षमिव—भरतराजाधिकृतप्रदेशमिवेत्यर्थः, [अत्र "भारतम्" इत्येकस्यैव पदस्य श्लेषमहिम्ना उभयार्थपरतया "वर्षमिव" इत्यनेनाप्यन्वेति इति बोध्यम्] सरस्वत्या—वागधिष्ठात्र्या देव्या, पक्षे,—ब्रह्मावर्त्तजनपदैकदेशप्रवाहिण्या स्वनामप्रसिद्धया नद्येत्यर्थः, पुण्यं—पवित्रं, चक्रे—कृतवान्; तदुक्तं,—"भारताध्यापनात् पुण्यादपि पादमधीयतः। श्रद्दधानस्य पूयन्ते सर्व्वपापानि देहिनः॥" इति। यथा विधाता निजनिर्म्माणकौशलस्य परां कोटिमेकत्र प्रदर्शयितुं सर्व्वर्त्तुसुमनोहरं विविधामूल्यरत्नाकरं सर्व्वतः समधिगतसमुत्कर्षं भारतवर्षं वहिःप्रकटिताखिलकलुषनाशाय अन्तःसलिलशालिन्या परमपवित्रप्रवाहिण्या सरस्वत्या स्रोतस्वत्या पवित्रीचकार, तथाऽयमपि योगबललब्धाखिलविद्याप्रकाशः वेदव्यासः सर्व्वसारसमलङ्कृतम् अशेषकाव्यलक्षणसमन्वितं स्वप्रणीतं महाभारतं लोकातिशायिना अन्तर्निगूढभावप्रसविना वागधिदेवतायाः कलाविलासेन पवित्रतामनयदिति निष्कृष्टार्थः। अत्र महाभारतस्य भारतवर्षेण सह अवैधर्म्यसाम्यकथनादुपमाऽलङ्कारः, तेन च व्यासस्य विधातृतादात्म्यं व्यज्यते, तथा च उपमाऽलङ्कारेण रूपकालङ्कारध्वनिरिति बोध्यम्। अनुष्टुप् वृत्तम् ॥ ४ ॥

अथेदानीं श्लोकषट्केन लौकिककवीनां स्वभावं पर्य्यालोचयन्नाह, प्राय इति।—रागः,—असदभिनिवेशः, तेन अधिष्ठिता—आक्रान्ता, दृष्टिः,—ज्ञानं येषां तथाविधाः, अत एव कुकवयः,—कु—कुत्सिताः, कवयः,—काव्यप्रणेतारः, असत्काव्यरचयितारः इति यावत्, प्रायः,—बाहुल्येन लोके—जगति, दृश्यन्ते इति शेषः, विषयरागान्धतया अज्ञानोपहतदृष्टीनां कुकवीनां यानि हि भूयांसि काव्यानि इह लोके दृश्यन्ते, तानि तु आलङ्कारिकादिप्रदर्शितसत्पथाननुसृततया केवलमसारतर-

सन्ति श्वान इवासङ्ख्या जातिभाजो गृहे गृहे।
उत्पादका न बहवः कवयः शरभा इव ॥ ६ ॥

विषयसम्बद्धतया च प्रेक्षावतां काव्यानुशीलनप्रवृत्तेः विघातकारणीति सर्व्वथा तानि सर्व्वेषामेवानिष्टसम्पादकतया हेयानीति भावः, तथा हि —ते तु केवल कोकिला इव वाचालाः,—श्रुतिमधुरया वाचा अज्ञाना चित्ताकर्षिणः, असम्बद्धप्रलापिन इति यावत्, कामचारिणः,—आलङ्कारिकगणाननुमतशैलीमाश्रित्य यथाकाम विचरन्तः, सदाचारानभिज्ञाः स्वेच्छाचारिणश्च असन्त कवय इति भावः, जायन्ते—सम्पद्यन्ते, ते तु न स्वेतस्मादन्यत् किमपि ( इति असत्कविनिन्दा ), कोकिलाः यथा कुहरवेण प्राकृताना जनान चेतांसि उन्मादयन्ति, तथैव पूर्व्वाचार्य्यैः परिशीलित मार्गमननुसरन्तः स्वेच्छया काव्यकान्तारसञ्चरणपरायणाः ये हि केवल वाङ्माधुर्य्येण जनानां मानसानि प्रीणयितु यतन्ते अध्येतॄणा सदनुमतेषु कार्य्येषु प्रवृत्तिं तथा अकार्य्यात् निवृत्ति विधातुमसमर्थाना तेषान्तु कवीना काव्यालापोऽपि वर्ज्जनीय इति तात्पर्य्यम्। एतानि विशेषणानि कोकिलपक्षेऽपि व्याख्यायन्ते, तथा हि,—राग.—लौहित्य, तेन अधिष्ठिता—आक्रान्ता, तद्विशिष्टा इत्यर्थः. दृष्टि.—चक्षुः येषा तथाभूता वाचालाः, —वाचा—गिरा, कुहरवेणेत्यर्थः, आलाः—आ—समन्तात्, लान्ति—आवर्जयन्ति, वशीकुर्व्वन्तीति यावत्, [ लातेः कर्त्तरि ड. ] चेतः इति शेषः, ये तादृशाः, कामचारिणः,—काम—मनसिज, सम्भोगेच्छामित्यर्थः. चारयन्ति—विस्तारयन्तीति तादृशाः कामोद्दीपकाः, जायन्ते—कामोद्दीपनविभावतां यान्तीत्यर्थः। [ "वाचालाः" इत्यत्र "अवाचालाः" इति पाठे—केचित् कवयः कोकिला इव अवाचालाः —मरवाचः इति यावत्, तथा कामचारिणः,—यथाकाम विचरन्तः; स्वप्रतिभाऽनुसारेण अभिनव काव्य कुर्व्वाणाः इत्यर्थः, जायन्ते सुकवय इति शेषः। अस्मिन् पक्षे सुकविप्रशंसैवेयमिति बोध्यम् ]। अत्र कुकविषु कोकिलानामवधर्म्यसाम्यप्रतीतेः श्लिष्टविशेषणकृतं चानुप्राणितोपमाऽलङ्कारः। अनुष्टुप् वृत्तम् ॥ ५ ॥

पुनरपि असङ्ख्यातान् असतः कवीन् निन्दति. सन्तीति।—गृहे गृहे—प्रतिगृहम्, असङ्ख्याः—बहव इत्यर्थः. जातिः,—जन्म ("जातिः सामान्यजन्मनो" इत्यमरः) तन्मात्र भजन्ते इति तथोक्ताः केवलमुत्पत्तिभाजः न तु अभिनवग्रन्थरचनया किमपि जगतः उपकर्त्तुं क्षमाः, वैदग्धीभिभूयिष्ठा निरतिशयचमत्कारित्वाधायिका वाच विन्यस्तुमनीशा इत्यर्थः, श्वान इव—सारमेयाः इव सन्ति—विद्यन्ते; ते हि यथा भुक्तोद्गीर्णभोजनप्रिया, इतिहरणपटवश्च सर्व्वतः अमेध्यभोजनेस्पृया यथा;

अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः।
अनाख्यातः सतां मध्ये कविश्चौरो विभाव्यते ॥ ७ ॥

कामं विचरन्ति, तद्वत् अगणनीयाः कुकवयः कुकाव्यरचनया कालं नयन्तः वान्तोपम-परकीयार्थप्रवृत्तिपरायणाः काव्यकलापैः विहरन्तीति समन्तात् दृश्यन्ते. एवम्भूतास्तु नियतं निन्दनीया एवेति भावः। यदि हि अन्यदीयवर्णितवस्तुप्रवृत्तिभाजः निन्द्याः स्युः, तर्हि के ख्यातिमन्तः? इत्याशंसायामाह, उत्पादका इति।—किन्तु बहवः,—भूयांसः, नावयः,—कवित्वख्यातिमधिगन्तुमिच्छन्तः काव्यकलापप्रणयनोत्सुकाः पुरुषाः, शरभा इव—अष्टापदमृगविशेषा इव, न उत्पादकाः,—न अभिनवरचनानिपुणा इत्यर्थः, सन्तीति पूर्वेणान्वयः, अत्यल्पे एवैते विद्यन्ते इति तात्पर्य्यम्। "अष्टपादूर्ध्वनयन ऊर्ध्वपाद-चतुष्टयः" इत्युक्तलक्षणाक्रान्ताः शरभाः नाम केचन षट्पादः ऊर्ध्वपादाश्च मृगविशेषाः पुरा आसन्, अद्यापि कुत्रचिदेव विद्यन्ते किलेत्यनुमीयते, ते तु यथा दृष्टचराः, इदानीन्तु प्रायः कैरपि कुत्रापि अदृष्टतया कल्पनामात्रपर्य्यवसायिनः सम्पद्यन्ते, तद्वत् अलौकिकप्रतिभावलेन अपूर्व्वकाव्यसौन्दर्य्यसाधनेश्वराः कवयस्तु दुर्लभा एव; तथा च, ये पुनः अनुच्छिष्टकाव्यकामिनीलास्यलीलाविन्यासपटीयांसः, त एव सत्कविता-वनिताभोगसौभाग्ययशोभाजनं भवन्तीति कवेराशयः। अत्र कुकविषु शूनां सुकविषु च शरभाणाञ्च वैधर्म्यसाम्यप्रतिपादनादुपमाद्वयम्, अन्योऽन्यनैरपेक्ष्यतया स्थितेश्चानयोः संसृष्टिः। अनुष्टुप् वृत्तम् ॥ ६ ॥

अन्यार्थग्राहकानां कवीनां चौर्य्यापराधं विशदीकृत्य विवृणोति; अन्येति।—अन्यस्य, कवेरिति शेषः, वर्णानां—सुविन्यासेन विरचितानामक्षरसमूहानामिति भावः, परा-वृत्तिः,—विपर्य्यासेन स्थापनं तया, अन्यत्र,—अन्ये वर्णाः,—गौरकृष्णादयः तेषां परा-वृत्तिः,—वर्णान्तरेण तिरोधानं तया, तथा बन्धानां—गौडीवैदर्भ्यादीनां, चिह्नानां—श्लेषौजःप्रसादादिचिह्नानाञ्च, निगूहनैः,—गोपनैः, अन्यत्र,—बन्धचिह्नस्य— बन्धन क्षतादिचिह्नस्य, निगूहनैः, अनाख्यातः,—अकथितः, (अपरिवाच्यापरा/ध्यैः) अथ च, —न ना सता—असत्पुरुषः, कापुरुष इति यावत्, इत्थं ख्यातः,—सर्व्वत्र परि-चितः, कविः,—काव्यप्रणेता, सतां—सहृदयानां मध्ये, चौरः,—तस्करः, विभाव्यते —ज्ञायते, परिचीयते इत्यर्थः; यथा हि, तस्कराः प्राप्तदण्डाः सभ्यजनसमाजे स्वरूपगौरादिस्वरूपं स्वकीयं रूपं गोपायन्ति, निगडादिपूर्व्वोपात्तबन्धनजनितं तच्चिह्नञ्च सर्व्वथैव निगूहन्ति, तथैव सुकवीनां मधुरपदलालित्यसम्पन्नविधीनां वाचामपहारकाः कवयः, केवलं ककारादिवर्णमालां, तथा माधुर्य्यादिगुणयुतां वैदर्भ्यादिरीति-

श्लेषप्रायमुदीच्येषु प्रतीच्येष्वर्थमात्रकम् ।
उत्प्रेक्षा दाक्षिणात्येषु गौड़ेष्वक्षरडम्बरः ॥ ८ ॥
नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ॥ ९ ॥

विशोभितां पद्यादिबन्धोपनिबद्धां सत्कविभणितिं यथाकामं विपरिणमय्य स्वकृतित्वेन तया जनान् विमोहयन्तीति भावः। अत्र कवौ चौरतादात्म्याध्यासात् श्लिष्टविशेषण-कृतेन श्लेषेणानुप्राणितः रूपकमलङ्कारः। अनुष्टुप् वृत्तम् ॥ ७ ॥

काव्योत्कर्षापकर्षविचारविरहितानां मन्दधियां विभिन्नदेशीयानां कवीनां रुचिवैचित्र्यं विवरीतुं तत्तत्कविकृतिषु श्लेषादिबाहुल्यं प्रदर्शयति, श्लेषेति।— उदीच्येषु — उदीच्याम् उत्तरस्मिन् देशे भवा ये तथाभूताः, शरावत्याः नद्याः पश्चिमोत्तरदेशवास्तव्या इत्यर्थः तेषु, कविषु इति शेषः, श्लेषप्रायं—श्लेषाणाम्—अनेकार्थाभिधानानां, प्रायः,—बाहुल्यं यस्मिन् तथाभूतं, बह्वर्थाभिधायकपदोपनिबद्धमिति यावत्, काव्यबन्धनं स्वाभीष्टतया परिगृहीतमिति दृश्यते इति शेषः, उदीच्याः कवयः प्रायेण श्लेषालङ्कारभूयिष्ठं काव्यं प्रणयन्तीति भावः; प्रतीच्येषु—पश्चिमदेशीयेषु, पाश्चात्येष्वित्यर्थः, अर्थमात्रकम्—अर्थस्य—वाच्य-लक्ष्य-व्यङ्ग्यभेदेन भिन्नस्य, मात्रकं—बाहुल्यं यस्मिन्, तथाभूतम्, अर्थ-गाम्भीर्य्यपूर्णपदनिबन्धनमित्यर्थः; तथा च प्रतीच्यानाम् अर्थविशेषादर एव, न तु उदीच्यानामिव तेषां शब्दालङ्कारादिषु प्रयासबाहुल्यम् इति मात्र-पदेन प्रत्याय्यते; दाक्षिणात्येषु—आ विन्ध्याचलात् महासागरं यावत् ये भूमिभागाः तेषु, तदधिष्ठितेषु इत्यर्थः, उत्प्रेक्षा—संशयमूलकः प्रकृतस्य अप्रकृतरूपतया तादात्म्याध्यासः, तथा हि,—"भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इत्युक्तलक्षणालङ्कारविशेषः इत्यर्थः, आद्रियते इति शेषः, गौड़ेषु—वङ्गदेशात् प्रभृति उत्कलदेशसीमायामवस्थितां सुवर्णरेखां नदीं यावत् विस्तृतजनपदेषु, प्राच्येष्विति भावः, अक्षराणां—वर्णानां, डम्बरः,—ओजोगुणवतां समासभूयिष्ठानां पदानां बन्धकृतं रचनाचातुर्य्यमित्यर्थः; अत एव रीतिषु गौड़ी नाम एका पदसङ्घटना दृश्यते; तथा हि,—"ओजःप्रकाशकैर्वर्णैर्बन्ध आड़म्बरः पुनः। समासबहुला गौड़ी –" इत्यालङ्कारिकाः; एतेन एतदुक्तं भवति, यत्, सर्व्वेष्वेव कविषु कश्चित् कश्चित् गुणो वर्त्तते, स तु न सहृदयप्रीतिकरः, यत्र तु सर्व्वे एव गुणाः पूर्णतया वर्त्तन्ते, स एव सत्कविषु श्रेयान्, अन्ये केवलं तदाख्यामात्रभाजः इति भावः। अनुष्टुप् वृत्तम् ॥ ८ ॥

साम्प्रतं सहृदयप्रीतिकररचनाप्रकारं विवक्षुः, साधारणकविभिरुपनिबद्धेषु

किं कवेस्तस्य काव्येन सर्व्ववृत्तान्तगामिनी।
कथेव भारती यस्य न प्राप्नोति दिगन्तरम् ?॥ १० ॥

काव्येषु सामाजिकजनानामभीप्सितगुणसमुदायानां ग्रन्थना अतीव दुर्लभेत्याह, नव इति।—नवः,—नूतनः, अन्यैः कविभिरनिबद्ध इति यावत्. अर्थः,—अभिधेयः, अभिनवोपनिबद्धं वस्त्वित्यर्थः, ("अर्थोऽभिधेयरैवस्तु-प्रयोजननिवृत्तिषु" इत्यमरः) अग्राम्या—अधमजनप्रयुज्यमानो वाक्प्रपञ्चः ग्राम्यः, स च दोषविशेषतया ख्यातः, तद्वर्जिता, जातिः,—काव्यानामुत्पत्तिः, अभिनवदोषविरहितकाव्यरचनमित्यर्थः, श्लेषः, —शब्दार्थोभयवृत्तिः श्लिष्टपदपर्य्यालोचनाजनितालङ्कारविशेषः, अक्लिष्टः,—अदुर्बोधः, अगूढ़तया स्फुटविभावानुभावादिभिः व्यक्तीकृतः इति यावत्, रसः,—शृङ्गारादिः, स्फुटः, – सुखसंवेद्यतया श्रवणसमकालमेव सुव्यक्तः, तथा विकटः,—वैकट्यं हि पदानां नृत्यत्प्रायत्वं, तद्गुणविशिष्टः, अक्षरः,—ककारादिवर्णः, तेन बन्धः,—ओजोगुणप्रकाशकैः आड़म्बरबहुलैः गौड़रीत्यनुकूलैः वर्णैः गुम्फनमित्यर्थः, एतत् कृत्स्नं—सर्व्वम्, अभिनववस्तुविरचितत्वं ग्राम्यादिदोषविनिर्म्मुक्तत्वं, सुबोध्यश्लेषालिङ्गितत्व, स्फुटरसत्वं, गौड़रीतिबन्धनञ्चेत्यर्थः, एकत्र—एकस्मिन्, काव्यितरीति शेषः, दुष्करं—दुर्लभमिति यावत्; एते काव्योत्कर्षविधायका गुणा एकस्मिन् साधारणकविनिबद्धे काव्ये न दृश्यन्ते, सत्कवीनां काव्यन्तु प्रोक्तसर्व्वगुणशालितया सहृदयप्रीतिकरमिति तदेव सुपाठ्यमिति भावः। अनुष्टुप् वृत्तम् ॥ ९ ॥

प्रागुक्तगुणवती रचनैव सर्व्वत्रादियते, अत एव ये हि कवयः प्रोक्तगुणग्रामयुतं काव्यं रचयितुमनीशाः, तेषां कवित्वख्यातिलाभाय काव्यप्रणयनप्रयासो वृथैवेति प्रकटयति, किमिति।—यस्य—मन्दबुद्धेः कवियशःप्रार्थिनः काव्यरचयितुः, कथा—सन्दर्भवाक्, सर्व्ववृत्तान्तगामिनी—सर्व्वविषयप्रकाशिनी; यद्वा, सर्व्वाणि यानि वृत्तानि—वर्ण-मात्रा-गण-समार्द्धसम-विषमात्मकानि विविधानि छन्दांसि, तेषाम् अन्तम्—अवसानं गच्छति या तथाभूता, तत्तद्वृत्तविशेषेण सामाजिकजनहृदयग्राहिणी इत्यर्थः, भारतपक्षे, —दीपवदखिलगूढ़ार्थप्रकाशिनी, वेदार्थानुस्यूततया च कृत्स्नतत्त्वार्थविबोधिनी, प्रागुक्तनवार्थादिसर्व्वगुणोद्भासिनी च, भारतीव—महाभारतकथा इव. दिगन्तरम्—अन्यां दिशं, न प्राप्नोति—न गच्छति, अभिनवया प्रतिभया असीमया स्वव्युत्पत्त्या च झटिति जनानां मानसानि नावर्ज्जयति; [एतेनास्य कवेरिदम् अनवद्यं काव्यं भारतीव कथा इव प्रोक्तगुणगणयोगात् सर्वोत्कर्षतामागतमिति ध्वनितम्] भगवतः द्वैपायनस्य महाकाव्यस्य सर्व्वलोकसमादृतत्वं दृश्यते; तथा हि,—"नारदोऽश्रावयद्देवानसितः

उच्छ्वासान्तेऽप्यखिन्नास्ते येषां वक्त्रे सरस्वती।
कथमाख्यायिकाकारा न ते वन्द्याः कवीश्वराः ? ॥ ११ ॥
कवीनामगलद्दर्पो नूनं वासवदत्तया।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥ १२ ॥

देवलः पितॄन्। गन्धर्व्वयचरचांसि श्रावयामास वै शुकः॥" इति। [ "न प्राप्नोति दिगन्तरम्" इत्यत्र "न व्याप्नोति जगत्त्रयम्" इति पाठान्तरम् ] तस्य कवेः काव्येन किम्?—कवित्वयशोऽधिगतये काव्यविरचने यतमानस्य दुर्मेधसः कवेः काव्येन न किमपि प्रयोजनमित्यर्थः; यत् सर्व्वैश्च न समाद्रियते, तत् काव्यं विफलमेवेति भावः। अनुष्टुप् वृत्तम् ॥ १० ॥

अधुना वृन्दारकवन्दितगुणान्, केवलं लोकस्थितये एव न तु यशसे सतां काव्यानां विधातॄन् कवीनामीश्वरान् सुकवीन् अष्टाभिः श्लोकैः प्राधान्येन स्तोतुं प्रवृत्तः प्रथमं स्वानौद्धत्यप्रदर्शनाय तानभिवन्दते, उच्छ्वासेति।—येषां वक्त्रे—वदने, सरस्वती—वाग्देवी, नियत नृत्यतीति शेषः, उच्छ्वासस्येव—सुदीर्घनिश्वासमारुतत्यागस्येव उच्छ्वासस्य—वाग्विश्रान्तिस्थानस्य, परिच्छेदसमाप्तेरित्यर्थः, अन्ते—अवसानेऽपि, अखिन्नाः,—अनन्तररचने अभिनवस्वतःप्रतिभातवस्तूनां विन्यासेऽपि अश्रान्ताः इति यावत्, आख्यायिकाकाराः,—आख्यायिकाम्—इतिवृत्त, कुर्व्वन्तीति तथोक्ताः, कथारचयितार इति यावत्, ते—प्रसिद्धाः, कवीश्वराः,—कविश्रेष्ठाः ते—तव, कथं न वन्द्याः ?—न पूज्याः ? अपि तु सर्व्वतोभावेन त्वया सर्वैः गुणग्राहिभिर्श्चासङ्कुचितचेतसा अर्च्चनीयाः खलु, असूयया न हि वयं दोषमात्रानुसन्धातारः, परन्तु गुणिषु आदरप्रदर्शनपरा इति कवेराशयः। अनुष्टुप् वृत्तम् ॥ ११ ॥

इदानीं सुकविकुलावतंसमभिनवसर्व्वगुणभूषितकथारचयितारं महाकविं सुबन्धुं तद्रचितप्रबन्धप्रशंसया प्राधान्येन प्रथमतः प्रस्तौति, कवीनामिति।—कर्णस्य—राधेयस्य दुर्य्योधनसुहृदः स्वनामख्यातस्य च वीरविशेषस्य एव, गोचरः,—स्थानं तं, कर्णसमीपे एकपुरुषघातिनी शक्तिरस्तीति पाण्डुतनयानां श्रुतिपथपतनमात्रकालमिति यावदिति वा अन्यत्र,—कर्णः,—कवीनां स्वीयं स्वीयं श्रवणमेव, गौः,—इन्द्रियं, तस्य चरं—विषय. कवीनां श्रवणपथातिथित्वमित्यर्थः गतया प्राप्तया, वासवः,—इन्द्रः, तेन दत्ता तया, शक्त्या—तदाख्येन अक्षयकवचग्रहणावसरे प्रीतेन इन्द्रेण कर्णाय प्रदत्तेन अस्त्रविशेषेणेत्यर्थः, पाण्डुपुत्राणां—पाण्डवानां युधिष्ठिरादीनामिव, वासवदत्तया—वासवदत्ताचरिताख्यापक-तदाख्यग्रन्थविशेषेण, कवीनां दर्पः,—

पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः ।
भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥ १३ ॥
अविनाशिनमग्राम्यमकरोत् सातवाहनः ।
विशुद्धजातिभिः कोषं रत्नैरिव सुभाषितैः ॥ १४ ॥

---

अहङ्कारः, नूनं—निश्चितम्, अगलत्—ध्वंसमवापेत्यर्थः। इन्द्रदत्तामेकपुरुषघातिनीं शक्तिमवेक्ष्य पाण्डवा यथा विजयाशारहिता हृतदर्पा आसन्, तथा महाकवेः सुबन्धोः कृतेः श्लेषगुणराजिभूषितस्य वासवदत्तासन्दर्भस्य चारुतामवलोक्य सर्वे कवयः तत्-समुत्कर्षं मनसाऽपि कर्तुमक्षमा हताहङ्कारा अभवन्निति निष्कर्षः। [एतेन वासव-दत्तासरसप्रबन्धस्यातीव समुत्कर्षं उक्तः; तथा महाकविसुबन्धुविरचितकथावत् एषा श्रीहर्षचरितकथाऽपि सर्व्वगुणालङ्कृता सहृदयानां हृदयग्राहिणी च इत्यभिप्रायो व्यज्यते]। उपमाऽलङ्कारः। अनुष्टुप् वृत्तम् ॥ १२ ॥

अथ सुकवीनामग्रेसरस्य कविकुलतिलकस्य महाकवेः हरिचन्द्रस्य गद्यकाव्यस्य प्राधान्यं प्रतिपादयति, पदेति।—पदानां—सुप्तिङन्तानां, बन्धः, वैदर्भ्यादिरीत्या रचनाविशेषः, नृपपक्षे—स्वमण्डलायष्टम्भश्च. तेन उज्ज्वलः,—समुद्भासितः, हारी—मनोहरः, हारालङ्कारशाली च, ["अहारी" इति पाठे—नास्ति हारी—द्यूतो यस्मात् तथाभूतः, अन्यत्र,—न हरति कस्यापि धनमित्यहारीत्यर्थः] कृता—सम्पादिता, वर्णानाम्—अक्षराणां, ब्राह्मणादीनाञ्च, क्रमेण—रीतिपरिपाट्या मर्यादानु-सारेण च, स्थितिः,—सन्निवेशः, अवस्थानञ्च यस्मिन् येन वा तथोक्तः, भट्टारः,—पूज्यः, हरिचन्द्रः,—तदाख्यः कश्चित् कविविशेषः तस्य. गद्यबन्धः,—गद्यग्रन्थः, ["पद्यबन्धः" इति पाठान्तरं] नृपः,—राजा, स इवाचरतीति नृपायते—राजवत् समुद्भासते, सर्व्वोत्कर्षेण वर्त्तते इत्यर्थः। हरिचन्द्रकवेः काव्यं सर्व्वश्रेष्ठमिति तात्पर्य्यम्। अनुष्टुप् वृत्तम् ॥ १३ ॥

अपरमपि कविश्रेष्ठं सातवाहनं प्रस्तौति, अविनाशिनमिति।—सातवाहनः,—तदाख्यः कविः, विशुद्धा—निर्दोषा, जातिः,—अभिनवकाव्यार्थानामुत्पत्तिः, अलङ्कार-विशेषो वा येषु तथाविधैः, सुभाषितैः,—हृदयग्राहिभिः वाक्यैः, रत्नैरिव—मण्यादिभि-रिव, पद्मरत्नसमूहैरित्यर्थः. अविनाशिनम्—अनश्वरम्, अतिरमणीयत्वेन चिरस्थायिन-मिति भावः, अग्राम्यं—ग्राम्यदोषवर्जितं, कोषं—काव्यमञ्जूषाम्. अकरोत्—विदधौ; अत्र रत्नैः सह सुभाषितानामवैधर्म्यसाम्यप्रतीतेरुपमाऽलङ्कारः। अनुष्टुप् वृत्तम् ॥ १४ ॥

कीर्त्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला ।
सागरस्य परं पारं कपिसेनेव सेतुना ॥ १५ ॥
सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ १६ ॥

प्रवरसेननामकमपरमपि कवीन्द्रं प्रशंसति, कीर्त्तिरिति ।—प्रवरसेनस्य—तदाख्यस्य कवेः, अन्यत्र,—प्रवे—रलयोरेकत्वात् प्लवे इत्यर्थः, रसः,—रागी येषां ते प्रवरसाः,—वानराः, तेषामिनः,—स्वामी तस्य वानरराजस्य सुग्रीवस्येत्यर्थः, ("इनः पत्यौ नृपार्कयोः" इति मेदिनी) कुमुदवत्—कैरववत्, उज्ज्वला—प्रदीप्ता धवला च ; यद्वा,—कुः,—पृथिवी, तस्याः मुत्—आनन्दः, तया उज्ज्वला—भासुरा, कीर्त्तिः,—एकत्र—काव्य-प्रणयनजम्, अपरत्र—वैदेह्याः समुद्धरणजनितं यशः, ("यशः कीर्त्तिः समज्ञा च" इत्यमरः) कुमुदोज्ज्वला—कुमुदेन—तदाख्येन वानरसेनापतिना, उज्ज्वला—प्रशस्ता, तस्य शौर्य्यसमुद्भासिता इत्यर्थः, कपिसेनेव—वानरचमूरिव, सेतुना—तदाख्यकाव्यग्रन्थेन, अन्यत्र—तदाख्यया प्रसिद्धेन श्रीरामकृतमार्गेण, सागरस्य परं पारं प्रयाता—गता । यथा वानरसेना सेतुबन्धेन सागरमुत्तीर्य्य अपरपारस्थितां लङ्कां गता, तथा प्रवरसेनस्य यशः तदीयकाव्यग्रन्थस्य प्रचारेण सागरमपि उत्तीर्य्य देशान्तरं गतमिति निर्गलितोऽर्थः । अनुष्टुप् वृत्तम् ॥ १५ ॥

अथ दृश्यकाव्यरचयितारमतीव प्राचीनं भासकविं प्रस्तौति, सूत्रेति ।—भासः,—तदाख्यः कविः, सूत्रं—नाटकीयप्रयोगानुष्ठानं, धारयतीति सूत्रधारः,—नाटकाभिनेतृ-प्रधानपुरुषविशेषः, स्थपतिश्च, तेन कृतः आरम्भो येषां तैः, बह्वी भूमिका—अनुकरणा-वस्थाविशेषेण वेशपरिवर्त्तः, रचना च, शिल्पकौशलमिति यावत् येषु तथोक्तैः, पताका—"बीजं बिन्दुः पताका च प्रकरी कार्य्यमेव च । अर्थप्रकृतयः पञ्च" इति पञ्चविधानां तृतीया अर्थप्रकृतिः, सा च "यत् वृत्तन्तु परार्थं स्यात् प्रधानस्योप-कारकम् । प्रधानवच्च कल्प्येत सा पताकेति कीर्त्त्यते ॥" इत्युक्तलक्षणा, वैजयन्ती च, तया सहितैः, देवकुलैरिव—देवमन्दिरैरिव, नाटकैः,—रूपकभेदैः, तल्लक्षणं दर्पणकारेण,—"तत् रूपारोपात्तु रूपकम्" इति, "नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् । विलासर्द्ध्यादिगुणवत् युक्तं नानाविभूतिभिः ॥ सुखदुःखसमुद्भूति नानारसनिरन्तरम् । पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥ प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् । दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥ एक एव भवेदङ्गी शृङ्गारो वीर एव वा । अङ्गमन्ये रसाः सर्वे कार्य्यं निर्वहणेऽद्भुतम् ॥ चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृत

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ? ॥ १७ ॥
समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना ।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा ? ॥ १८ ॥

पूरुषाः । गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्त्तितम् ॥" इति च; यशः,—कीर्त्तिं, लेभे—प्राप । यथा हि कारुप्रवरः विविधसूक्ष्मकारुकार्य्यसमन्वितं सुमनोहरं देवमन्दिरं निर्म्माय अपूर्वशोभासम्पत्त्यै उपरि पताकां स्थापयति, तद्वत् नाट्यरचनाकुशलः महाकविः भासः बहुभिः शैलूषैः अभिनीयमान पताकास्थानीपशोभितमभिनवनाटकं विरचय्य जगति स्वीयाससीमां कीर्त्तिमस्थापयदिति तात्पर्य्यम् । उपमाऽलङ्कारः । अनुष्टुप् वृत्तम् ॥ १६ ॥

अथ कविकुलकलहंसं महाकाव्ये नाटके च अनिर्वचनीयां प्रतिभां प्रदर्श्य जगति समसेव सर्वजनवन्दनीयतामधिगतवन्तं महाकविं कालिदासं प्रस्तौति, निर्गतास्विति । —निर्गतासु—स्वभावकवितया पदार्थचिन्तनप्रयासं विनैव स्वतः स्वमुखात् समुच्चरितासु, अभिनवमुद्भिन्नासु च, मधुराः,—मनोहारिण्यः, आस्तां तावदर्थावगतिः, उच्चरित-समकालमेवानन्दजनन्य इत्यर्थः, सान्द्राः,—घनाः, गाढ़तया प्रयुक्ताः सुरसा इति यावत्, अन्यत्र—मधु विद्यते यासु ता मधुराः,—मकरन्दवाहिन्य इत्यर्थः, सान्द्राः,—घनाः, पूर्णावस्थां गताः इत्यर्थः, मकरन्दपरिपूर्णाः इति भावः, मधुराश्च ताः सान्द्राश्च तथाविधासु, मञ्जरीष्विव - कुसुमवल्लरीष्विव, कालिदासस्य—तन्नामकस्य सर्वजनप्रसिद्धस्य महा-कवेः, सूक्तिषु—शोभनेषु वाक्येषु, गलदपारमाध्वीभरितासु इत्यर्थः, कस्य—जनस्य वा, प्रीतिः न जायते ?—न सम्पद्यते ? अपि तु सर्वस्यैव सहृदयस्य असहृदयस्य च समा प्रीतिर्भवत्येवेत्यर्थः । [ "मधुरसान्द्रासु" इत्यत्र "मधुरसार्द्रासु" इति पाठे—मधु—चौद्रं, तद्वत् अतीव सुस्वाद इति भावः, रसः,—शृङ्गारादिः, अन्यत्र—मधुरसः,—मकरन्दः, तेन आर्द्रासु—सिक्तासु पूर्णास्विति भावः ] । उपमाऽलङ्कारः । अनुष्टुप् वृत्तम् ॥ १७ ॥

इदानीं वृहत्कथारचयितारं प्राधान्येन प्रस्तौति, समुद्दीपितेति ।—समुद्दीपितः,—प्रज्वालितः, कन्दर्पः,—कामः यया तथोक्ता, बहूनां कामिजनानां वर्णनश्रवणात् सहृदयानां मन्मथोद्भेदात् रतिस्थायिभावकः शृङ्गाररसः समुद्भवति हि, तथा चोक्तम्,—"ऋतुमाल्यालङ्कारप्रियजनगान्धर्वकाव्यसेवाभिः । उपवनगमनविहारैः शृङ्गार-रसः समुद्भवतीति ॥" अन्यत्र,—समुद्दीपितः,—नेत्रानलेन दग्धः, कन्दर्पः,—

आढ्यराजकृतोत्साहैर्हृदयस्थैः स्मृतैरपि।
जिह्वाऽन्तः-कृष्यमाणेव न कवित्वे प्रवर्त्तते ॥ १९ ॥
तथाऽपि नृपतेर्भक्त्या भीतो निर्वहणाकुलः।
करोम्याख्यायिकाऽम्भोधौ जिह्वाप्लवनचापलम् ॥ २० ॥

कामः यस्यां तथोक्ता, यद्वा,—समुद्दीपितः,—प्रज्वलितः, कन्दर्पः, कामः यस्यां तथाभूता, मदनप्रकटीकृतविविधविलासा इत्यर्थः, (पुरा हि भगवतः शङ्करस्य समाधिभङ्गाय मनसिजेन विविधस्य विलासस्य अनुष्ठापितत्वादिति) कृतम्—अनुष्ठितं, गौर्य्याः,—ईश्वर्य्याः, प्रसाधनम्—आराधनं, नायकेन नरवाहनदत्तेनेति भावः यस्यां तथाभूता; अन्यत्र,—कृतम्—अनुष्ठितं, गौर्य्या—पार्वत्या, (कर्त्तृभूतया) प्रसाधनम्—आराधनं, हरस्येति भावः; यद्वा —गौर्य्याः (कर्म्मभूतायाः) प्रसाधनम्—अलङ्करणं, हरेण कर्त्रेति भावः यस्यां तथाभूता, बृहत्कथा—तदाख्यम् इतिहासकाव्यं, हरलीलेव —शिवविलास इव, कस्य—जनस्य, विस्मयाय—आश्चर्य्याय, गर्व्वपरिहाराय वा, नो? भवतीति शेषः; अपि तु सर्व्वस्यैव कवेः सामाजिकजनस्य च विस्मयाय भवतीत्यर्थः। उपमाऽलङ्कारः। अनुष्टुप् वृत्तम् ॥ १८ ॥

अपरञ्च आढ्यराजनामानं कविं प्रस्तवीति, आढ्येति।—आढ्यराजो नाम कश्चित् कविः, तेन कृताः,—प्रणीताः, ये उत्साहाः,—स्वीयासीमाध्यवसायफलभूताः सन्दर्भविशेषाः तैः, हृदयस्थैः,—चित्तनिहितैः, मनसा पर्य्यालोचितैरित्यर्थः, अपि—किंवा, स्मृतैः,—कदाचित् स्मरणपदवीं गतैः सद्भिः, जिह्वा—रसना, मदीयेति भावः, अन्तः-कृष्यमाणेव—केनचित् बलात् हृदयाभ्यन्तरं नीयमानेवेत्यर्थः, यथा तव वाङ्निःसारणप्रयास एतेषाम् उत्साहानां पुरस्तादित्याशयेनेति भावः, कवित्वे—कवित्वं प्रकटयितुमित्यर्थः, न प्रवर्त्तते—नोत्सहते; उत्साहसन्दर्भ ईदृशनीरसः यत्, तदग्रे मम सन्दर्भः न सुष्ठु प्रतिभातुं शक्नोतीति भावः। [ "आढ्यराजकृतोत्साहैः" इत्यत्र "आढ्यराजकृतोच्छ्वासैः" इति पाठे—उच्छ्वासाः,—तदाख्यकाव्यभेदास्तैरित्यर्थः। अत्र प्रकृतायाः कवित्वप्रकटनाप्रवृत्ताया जिह्वायाः अप्रकृतेन अन्तःकृष्यमाणत्वेन संशयमूलकतादात्म्याध्यासादुत्कटैककोटिकसन्देहोदयात् उत्प्रेक्षाऽलङ्कारः। अनुष्टुप् वृत्तम् ॥ १९ ॥

इदानीं पूर्व्वोक्तसुकाव्यपेक्षया आत्मनो न्यूनत्वेऽपि काव्यप्रणयने हेतुं प्रकटयति, तथाऽपीति।—तथाऽपि—प्राचां सूक्तिभिः मे जिह्वाया अन्तःकृष्यमाणत्वेऽपि, नृपतेः,—राज्ञः श्रीहर्षस्य, स्वचरितवर्णने मम प्रवर्त्तकस्येति भावः, भक्त्या—अनुरागपारवश्येनेति भावः, निर्वहणे—परिसमाप्तौ, आकुलः,—महाराजस्य चरितकथायाः परिसमाप्ति-

सुखप्रबोधललिता सुवर्णघटनोज्ज्वलैः ।
शब्दैराख्यायिकाऽऽभाति शय्येव प्रतिपादकैः ॥ २१ ॥

वेत्ति न वेत्ति संशयान इति यावत्, अत एव भीतः,—सहृदयसमाजे महाराजस्य समीपे वा किमु अप्रतिभो भविष्यामीति शङ्कितः सन्, [ "भक्त्याभीतः" इत्यत्र भक्त्या अभीतः इति विशेषणपक्षे तु—भक्त्या, अहम् अभि—समन्तात्, इतः,—युक्तः; यद्वा —अकपट-राजभक्तिवशेन प्रोत्साहिततया असङ्कुचितचेता इत्यर्थः ] आख्यायिका—इतिहास एव, अम्भोधिः,—समुद्रः, राज्ञः सुविस्तृतचरितरूप इत्यर्थः तस्मिन्, जिह्वया—रसनया, प्लवनं—सन्तरणमेव, चापलं—चपलकर्म, चापल्यं वा, करोमि—विदधामि; उडुपेन दारिधितरणवत् जिह्वया तच्चरितोदधितरणम् अत्यन्तमसम्भवितमपि भक्तिभावमाश्रित्य केवलं तत्र प्रवृत्तो भवामीति तात्पर्य्यम् । अत्र आख्यायिकायामुपमानभूतस्य अम्भोधेः-रताद्रात्म्याध्यासात् रूपकमलङ्कारः । अनुष्टुप् वृत्तम् ॥ २० ॥

अथ प्रेक्षावतामाख्यायिकायां प्रवृत्तिं जनयितुं तां सामान्येन सौन्दर्यकथनपुरःसरं विवृणोति, सुखेति ।—सुखस्य—आलोचनाजनितस्य निरतिशयानन्दस्य, प्रबोधः,—प्रकृष्टानुभवः; यद्वा, —सुखेन प्रबोधः,—प्रकृष्टं व्यवहारादीनां ज्ञानम्, अथवा,—कान्तासम्मिततया च कोमलया हृदयग्राहिण्या, न तु श्रुतिस्मृत्यादिवत् कठोरया वाचा प्रदत्तसदुपदेशजनितः बोधः; ( उक्तञ्च मम्मटभट्टेन —"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥" इति ) तेन ललिता—मनोहारिणी, अन्यत्र,—सुखस्य—निधुवनानन्दस्य, प्रबोधः—विकाषकः, रतिरसोद्भासक इत्यर्थः, ललितं—शृङ्गारानुगुणः चेष्टाविशेषः यस्यां तथाभूतेत्यर्थः आख्यायिका—उपलब्धार्थविषयकं गद्यकाव्यं, ( तथा हि आलङ्कारिकाः,—"आख्यायिका कथावत् स्यात् कवेर्वंशानुकीर्त्तनम् । अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित् ॥" इति ) सुवर्णानां—सु—सुप्रयुक्तानां, वर्णानाम्—अक्षराणाम्, ( उक्तञ्च दर्पणे —"एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग् भवति" इति ) अन्यत्र,—सुवर्णानां—हेम्नां, घटनया—योजनया, अन्यत्र,—कारुकर्मणैकत्वेन, उज्ज्वलैः,—प्रदीप्तैः मनोरमैरित्यर्थः, प्रतिपादकैः,—विवक्षितार्थबोधकैः शब्दैः; अन्यत्र,—प्रतिपादकैः,—सोपानविशेषैः, चरणन्यासपीठैर्वा, शय्येव—पर्य्यङ्क इव आभाति—राजते । [ "प्रतिपादकैः" इत्यत्र "प्रतिपादुकैः" इति पाठान्तरम् ] । अत्राख्यायिकायाः शय्यया सहावैधर्म्यसाम्यप्रतिपादनात् श्लिष्टविशेषणकृततया श्लिष्टमायिकोपमाऽलङ्कारः । अनुष्टुप् वृत्तम् ॥ २१ ॥

दर्शयन्ती सुखे खेदं प्रस्खलन्ती पदे पदे।
कथञ्चित् नीयते शय्यां कथा नववधूरिव ॥ २२ ॥
जयति ज्वलत्प्रतापज्वलनप्राकारकृतजगद्रक्षः।
सकलप्रणयिमनोरथसिद्धिश्रीपर्व्वतो हर्षः ॥ २३ ॥

---

अथ चिकीर्षितव्याख्यायामाख्यायिकायां सर्वेषां सामाजिकानां युगपत्साम्मुख्यकरण दुष्करमेवेत्याह, दर्शयन्तीति।—सुखे—प्रारम्भे, वदने च, खेदं—विमनायमानानां सामाजिकानां विरागमिति यावत्, अन्यत्र,—सुरतविधौ अनिच्छाजनितम् अननुराग-मित्यर्थः, दर्शयन्ती—प्रकटयन्ती, तथा पदे पदे—प्रतिपदप्रयोगान्ते इति भावः, अन्यत्र,—प्रतिपादविक्षेपमित्यर्थः, प्रस्खलन्ती—व्याकरणालङ्कारादिसदनुशीलितपथात् शनैरयतं प्रच्यवमाना, अन्यत्र,—नववधूचितलज्जया सङ्गमसाध्वसेन वा पतिमुपगन्तु-मनिच्छन्ती, अत एव नववधूरिव—नवोढ़ा कामिनीव, कथा—आख्यायिकाकाव्यं, कथञ्चित्—महता कष्टेन, अतिप्रयत्नेनेत्यर्थः, शय्यां—सहृदयहृदयरूपविश्रान्तिस्थानम्, अन्यत्र,—शयनं, नीयते—प्राप्यते। अत्र नववध्वा सह कथायाः साम्यप्रदर्शनात् श्लिष्टविशेषणोत्थापिततया श्लेषानुप्राणितोपमाऽलङ्कारः। अनुष्टुप् वृत्तम् ॥ २२ ॥

साम्प्रतं स्ववर्णनीयकाव्यनायकमाशिषा संवर्द्धयति, जयतीति।—ज्वलन्—दीप्य मानः, प्रताप एव ज्वलनम्—अग्निः, तदेव प्राकारः,—सालः, प्राचीरम् इत्यर्थः ("प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः" इत्यमरः) तेन कृता जगतां रक्षा येन तथाभूतः; प्राकारवेष्टिता पुरी यथा अनायासेन संरक्षितुं शक्यते, तथा विशालमपि साम्राज्यं महाप्रतापेन येन एकपुरमिव सुखं पालयाञ्चक्रे, एतेनास्य प्रतिमशौर्य्यशालित्वं प्रतिपादितमिति, तथा सकलानां—समग्राणां, प्रणयिनाम्—अर्थिनां, मनोरथस्य—अभीष्टस्य, सिद्धौ—सम्पूरणे श्रियां—सम्पदां, पर्व्वतः,—गिरिः लक्ष्मीनिवासभूताचलः इत्यर्थः; लक्ष्मीसद्मभूतः अनन्तरत्नप्रभवः गिरिः यथा समागतानां धनार्थिनामीप्सितं पूरयति, तथैव यो हि अकातरमर्थिषु धनं तोयवत् विकीर्य्य प्रार्थिसार्थमनोरथमपूपुरत्, एतेनास्यासीमदानशौण्डत्वं प्रतिपादितमिति ज्ञेयम्; हर्षयति—आनन्दयति जनानिति हर्षः,—तदाख्यः नृपतिः, जयति—सर्व्वोत्कर्षेण वर्त्तते। [जयति ज्वलत्" इत्यत्र "जय ज्वलत्" इति पाठे—त्वं जय इति व्याख्यायते]। अत्र प्रतापे ज्वलनतादात्म्याध्यासात्, तथा राजनि हर्षे च श्रीपर्व्वताभेदारोपात् निरङ्ग रूपकमलङ्कारः। आर्य्या वृत्तम् ॥ २३ ॥

एवमनुश्रूयते,—(१) पुरा किल भगवान् स्वलोकमधितिष्ठन् परमेष्ठी विकासिनि पद्मविष्टरे समुपविष्टः सुनासीरप्रमुखैर्गीर्वाणैः परिवृतो ब्रह्मोद्याः कथाः कुर्व्वन् अन्याश्च निरवद्या विद्यागोष्ठीर्भावयन् कदाचिदासाञ्चक्रे। (२) तथाऽऽसीनञ्च तं त्रिभुवनप्रतीच्यं मनुदक्षचाक्षुषप्रभृतयः प्रजापतयः सर्व्वे च सप्तर्षिपुरःसरा महर्षयः सिषेविरे। केचित् ऋचः स्तुतिचतुराः

(१) एवमिति।—अनुश्रूयते—परम्परया आकर्ण्यते। किलेति—प्रसिद्धौ। भगः,—ऐश्वर्य्यादिषट्कः विद्यते अस्येति भगवान्, तदुक्तम्,—"ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गनः॥" इति। स्वस्य—आत्मनः लोकं स्वलोकं—ब्रह्मलोकमित्यर्थः। अधितिष्ठन्—समादरेण तद्योगक्षेमादिकमादधन्। परमे—सर्वोत्कृष्टे स्थाने तिष्ठतीति परमेष्ठी—ब्रह्मा। विकासिनि—विकस्वरे। पद्ममेव—कमलमेव, विष्टरः,—आसनं तस्मिन् पद्मविष्टरे। सुनासीरप्रमुखैः,—इन्द्रप्रभृतिभिः, ["वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः इत्यमरः। सुष्ठु नासीरः,—अग्रगं सैन्यं यस्य सः, इन्द्रः इति व्युत्पत्तिः]। गीर्वाणैः,—देवैः, ("गीर्वाणा दानवारयः" इति देवपर्य्यायेष्वमरः)। परिवृतः,—चतुर्दिक्षु परिवेष्टितः, तस्य चतुराननत्वात्। ब्रह्मोद्याः,—ब्रह्म—वेदः, ("वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः) परमात्मा वा, उद्यते—कथ्यते, कीर्त्त्यते इति यावत् याभिः तथाभूताः, [ वदः सुपि क्यप् च" (३।१।१०६ पा०) इति भावे क्यप्, कर्म्मणि प्रत्ययः इत्येके, तथा च उक्तं,—"ब्रह्मोद्या सा कथा यस्यामुच्यते ब्रह्म शाश्वतम्" इति, तासां वक्ष्यमाण-गोष्ठ्यनुकूलत्वेन प्रधानतया स्वयं प्रतिपादनम्। "ब्रह्मोदिताः" इति पाठे—ब्रह्मणा—वेदेन, उदिताः,—उक्ता इत्यर्थः]। अन्याः,—वेदबाह्या इत्यर्थः, निरवद्याः,—अनिन्द्याः, विद्यागोष्ठीः,—ज्ञानालोचिनीः सभाः, समानविद्यावित्तशीलबुद्धिवयसामनुरूपैरालापैरेकत्रोपसंस्थानरूपा इति यावत्; तथा च वात्स्यायनीये,—"या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी। परहिंसात्मिका या च न तामवतरेद्बुधः॥ लोकचित्तानुवर्त्तिन्या क्रीड़ामात्रैककार्य्यया। गोष्ठ्या सह चरन् विद्वान् लोकसिद्धिं नियच्छति॥" इति। भावयन्—सम्पादयन्। आसाञ्चक्रे—वतस्थे।

(२) तथाऽऽसीनमिति।—तथा—तेन प्रकारेण, आसीनम्—उपविष्टं, त्रिभुवनप्रतीच्यं—त्रिलोकीपूज्यं, ("प्रतीच्यः पूज्यः" इत्यमरः)। ऋचः,—ऋग्वेदान्॥

समुदचारयन्, केचिदपचितिभाञ्जि यजूंषि अपठन्, केचित् प्रशंसासामानि जगुः; अपरे विहतकर्म्मक्रियातन्त्रान् मन्त्रान् व्याचचक्षिरे। विद्याविसंवादकृताश्च तत्र तेषाम् अन्योऽन्यस्य विद्याविवादाः प्रादुरभवन्।

(२) अथातिरोषणः प्रकृत्या महातपा मुनिः अत्रेः तनयः तारापतेः भ्राता नाम्ना दुर्व्वासा द्वितीयेन मन्दपालनाम्ना मुनिना सह कलहायमानः साम गायन् क्रोधान्धो विस्वरम् अकरोत्। सर्व्वेषु च शापभयप्रतिपन्नमौनेषु मुनिषु, अन्यालापलीलया अवधीरयति कमलसम्भवे, कुमारी किञ्चिदुन्मुक्त-

---

स्तुतिचतुराः,—स्तुतिषु—स्तोत्रपाठेषु, चतुराः,—दक्षाः। समुदचारयन्—सम्यक् उदात्तादिवैस्वर्य्यादिप्राधान्येन उच्चारितवन्तः। अपचितिभाञ्जि—अपचितिं—पूजां, भजन्ते इति तथोक्तानि, पूजासम्बद्धानीत्यर्थः, ("पूजा नमस्याऽपचितिः" इत्यमरः)। यजूंषि—मन्त्राख्यवेदभागानित्यर्थः। प्रशंसासामानि—स्तुतिपराणि सामानि, सङ्गीतमयान् वेदभागानित्यर्थः। जगुः,—गीतवन्तः। विहतकर्म्मक्रियातन्त्रान्—विहतानि—प्रकटितानि, कर्म्मक्रियाणां—कार्य्यानुष्ठानानां, तन्त्राणि—प्रकरणानि यैः येषु वा तान्। ["विहतक्रतुक्रियातन्त्रान्" इति पाठान्तरे—विहतानि क्रतुक्रियाणां—यज्ञकर्म्मणां, तन्त्राणि यैस्ते] विद्याविसंवादकृताः,—विद्यानां—दर्शनादीनां, विसंवादेन—मतभेदेन, कृताः,—जनिताः, न तु मात्सर्य्यादिना।

(२) अतिरोषणः,—अतिकोपनः। प्रकृत्या—स्वभावेन, अन्यथा ब्रह्मसंसदि कथमेवमाक्षेपः स्यात्। तारापतेः,—चन्द्रस्य। ["मन्दपालनाम्ना" इत्यत्र "मन्दुपालनाम्ना" इति पाठान्तरम्]। कलहायमानः,—कलहं कुर्व्वन्। गायन्—सङ्गीतस्वरेण पठन्। विस्वरं—विकृताः स्वराः,—उदात्तादयः यस्मिन् तथाभूतं यथा तथा। दुर्व्वाससि तथा विस्वरं साम गायति यदि कश्चित् दोषमुत्कीर्त्तयति, तदा तं प्रति अनेन शापोत्सर्गः क्रियते इत्याशयेनाह, शापेति।—शापभयप्रतिपन्नमौनेषु—शापात् भयं शापभयं, तेन प्रतिपन्नम्—अङ्गीकृतं, मौनं यैः तथाभूतेषु। अन्यालापलीलया—अपरकथाच्छलेनेत्यर्थः। अवधीरयति—अवज्ञां कुर्व्वति, दुर्व्वाससं प्रतीति शेषः। कमलसम्भवे—पद्मयोनौ, ब्रह्मणीत्यर्थः। कुमारी—अनूढ़ा बाला, कौमारव्रतं—ब्रह्मचर्य्यं दधती वा। ["कुमारी" इत्यतः प्राक् "भगवती" इति विशेषणत्वेन क्वचित् पाठः,

बालभावे भूषितनवयौवने वयसि वर्त्तमाना, गृहीतचामरप्रचलभुजलता पितामहमुपवीजयन्ती, (४) निर्भर्त्सनताड़नजातरागाभ्यामिव स्वभावारुणाभ्यां पादपल्लवाभ्यां समुद्भासमाना, शिष्यद्वयेनेव पदक्रममुखरेण नूपुरयुगलेन वाचालितचरणा, मदननगरतोरणस्तम्भविभ्रमं बिभ्राणा जङ्घाद्वितयं, सलीलम् उत्ककलहंसकुलकलाऽऽलापप्रलापिनि मेखलादाम्नि विन्यस्तवामहस्तकिसलया, विद्वन्मानसनिवासलग्नेन गुणकलापेनेव अंसावलम्बिना ब्रह्मसूत्रेण पवित्रीकृतकाया, भास्वन्मध्यनायकम् अनेकमुक्ताऽनुयातम् अपवर्गमार्ग-

---

—तत्र भगवती—प्रागुक्तषड़ैश्वर्य्यशालिनीत्यर्थः ]। किञ्चिदुन्मुक्तबालभावे—ईषद्विगतशैशवे इत्यर्थः। गृहीतचामरप्रचलभुजलता—गृहीतेन चामरेण—बालव्यजनेन, प्रचला—चञ्चन्ती, भुज एव लता यस्याः तथोक्ता, ["प्रचलभुजलता" इत्यत्र "प्रचलद्भुजलता" इति पाठान्तरे—प्रचलन्ती भुज एव लता यस्याः सा ]। पितामहं—ब्रह्माणम्। उपवीजयन्ती—वीजनेन आराधयन्तीत्यर्थः।

(४) निर्भर्त्सनेति।—निर्भर्त्सनाय—विस्वरपाठकं दुर्व्वाससं प्रति तिरस्कारणाय, ताड़नं—प्रहारः, रोषाद्भूमिहननमित्यर्थः, तेन जातः,—उद्भूतः, रागः,—लौहित्यं ययोः तथाभूताभ्यां, स्वभावारुणाभ्यां—सहजरक्ताभ्याम्। समुद्भासमाना—सम्यक् विद्योतमाना। पदक्रममुखरेण—पदयोः क्रमः,—विक्षेपः, तेन मुखरं—सशब्दं, रणदित्यर्थः तेन। वाचालितचरणा—वाचालितौ—नदन्तौ, चरणौ यस्याः तथोक्ता। मदननगरतोरणस्तम्भविभ्रमं—मदनस्य—कामस्य, नगरम्—अवस्थानस्थानं, तस्य तोरणः—वहिर्द्वारं, ("तोरणोऽस्त्री वहिर्द्वारम्" इत्यमरः) तस्य स्तम्भौ तयोः विभ्रम इव विभ्रमः,—विलासः यस्य तथाभूतम्। जङ्घाद्वितयम्—ऊरुयुगलम्। ["मदन" इत्यत्र "धर्म्म" इति पाठान्तरम् अप्रसिद्धत्वादुपेक्ष्यम् ]। उत्केति।—उत्कानाम्—उत्सुकानां, कलहंसानां कुलस्य कलः,—मधुरास्फुटरवः, स एव आलापः,—आभाषणं, तद्वत् प्रलापिनि—मधुरास्फुटशब्दायमाने इत्यर्थः। मेखलादाम्नि—काञ्चीस्रजि। विद्वन्मानसनिवासलग्नेन—विदुषां मानसं—हृदयं, तत्र निवासः,—स्वावस्थितिः, तेन लग्नं—संसक्तं तेन, गुणकलापेनेव—दाक्षिण्यशौचादिगुणसङ्घेनेव। अंसावलम्बिना—स्कन्धविलम्बमानेन, ब्रह्मसूत्रेण—यज्ञोपवीतेन। भास्व-

मिव हारसुरसा समुद्वहन्ती, (५) वदनप्रविष्टसर्व्वविद्या-वधूचरणालक्तकरसेनेव पाटलेन स्फुरता दशनच्छदेन विराज-माना, सङ्क्रान्तकमलासनकृष्णाजिनप्रतिमां मधुरगीताऽऽकर्णना-वतीर्णशशिहरिणाम् इव कपोलस्थलीं दधानां, तिर्य्यक् सावज्ञम् उन्नमितैकभ्रूलता, श्रोत्रमेकं (६) विस्वरश्रवण-कलुषितं प्रक्षालयन्तीव अपाङ्गनिर्गतेन लोचनांशुजलप्रवाहेण इतरश्रवणेन च विकसितसितसिन्धुवारमञ्जरीजुषा हसतेव

न्मध्यनायकं—भास्वान्—दीप्यमानः, मध्यनायकः,—मध्यमणिः यस्य यत्र वा तम्; पक्षे,—भास्वतः,—सूर्य्यस्य, सूर्य्यमण्डलस्येत्यर्थः, मध्यं तेन नयति सः; यदुक्तं,—"परिव्राड्योगयुक्तश्च शूरश्चाभिमुखं हतः। द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ॥" इति। अनेकमुक्तानुयातम्—अनेकाभिर्मुक्ताभिः,—मुक्ताफलैः, अनुयातं—ग्रथितम्; पक्षे,—अनेकैः मुक्तैः,—मोक्षगामिभिः, अनुयातं—सेवितम्। अपवर्गमार्गमिव—मुक्तिपथमिव, अपवर्गमार्गस्य मुक्ताजालस्य च विशुद्धस्वच्छत्वात् तयोरैक्षितम्। हारं—मुक्ताकलापं, हरसम्बन्धिनम् अपवर्गञ्च, तत्प्रसादप्राप्यत्वात् इति सङ्क्षेपः।

(५) वदनेति।—वदने—मुखे, प्रविष्टानां सर्वासां विद्यानामेव वधूनां—नारीणां, चरणेषु यः अलक्तकरसः,—लाक्षाद्रवः तेनेव, अलक्तकरसद्वारेवेत्यर्थः, पाटलः,—रक्तः तेन। स्फुरता—विलसता। दशनच्छदेन—ओष्ठाधरेणेत्यर्थः। सङ्क्रान्तेति।—सङ्क्रान्ता—संलग्ना, कमलासनस्य—ब्रह्मणः, कृष्णाजिनस्य—कृष्णमृग-चर्म्मणः, प्रतिमा—प्रभा यस्मिन् तथाभूताम्, अत एव मधुरेति।—मधुरस्य गीतस्य आकर्णनाय—श्रवणाय, अवतीर्णः,—अवरूढः, उपस्थितः इत्यर्थः, शशिनः,—चन्द्रस्य, हरिणः,—कलङ्करूपी मृगो यत्र तादृशीं, कपोलस्थलीं—गण्डदेशम्। तिर्य्यक्—कुटिलं यथा तथा। सावज्ञम्—अवज्ञया, विस्वरपाठकं दुर्वाससं प्रति जनितयेति भावः, सह वर्त्तमानं यथा तथा। उन्नमितैकभ्रूलता—उन्नमिता—ऊर्द्ध्वं नीता, एका भ्रूलतेव यया तथोक्ता। श्रोत्रं – कर्णम्।

(६) विस्वरेति।—विस्वरश्रवणेन—विकृतस्वराकर्णनेन, कलुषितं – दूषितम्, अपवित्रमिति यावत्। अपाङ्गनिर्गतेन – नेत्रप्रान्तनिर्गलितेन। लोचनांशुजलप्रवाहेण—लोचनस्य—नयनस्य, अंशवः,—किरणा एव, जलानि तेषां प्रवाहः,—स्रोतः तेन, ["लोचनांशु" इत्यत्र "लोचनाश्रु" इति पाठान्तरम्]। इतरश्रवणेन—अपर-

प्रकटितविद्यामदा, श्रुतिप्रणयिभिः प्रणवैरिव कर्णावतंसकुसुममधुकरकुलैः उपास्यमाना, सूक्ष्मविमलेन प्रज्ञाप्रतानेनेव अंशुकेनाच्छादितशरीरा, वाङ्मयमिव निर्मलं दिक्षु दशनज्योत्स्नालोकं विकिरन्ती देवी सरस्वती श्रुत्वा जहास।

(७) दृष्ट्वा च तां तथा हसन्तीं स मुनिः,—"आः पापे! दुर्गृहीतविद्यालवावलेपदुर्विदग्धे! माम् अपि उपहससि?" इत्युक्त्वा शिरःकम्पविशीर्य्यमाणबन्धविसरैः उन्मिषत्तड़ित्तन्तुपिङ्गलिम्नो जटासञ्चयस्य रोचिषा सिञ्चन्निव रोषदहनद्रवेण

---

कर्णेन। विकसितेति।—विकसिता—विकाश गता, या सितसिन्धुवारस्य—शुक्लपुष्पतरुविशेषस्य, मञ्जरी—वल्लरी, तट्जुषा—तच्छालिना, अत एव हसतेव—दुर्वासस प्रति अवहेलनजनित हास कुर्वतेव। प्रकटितेति।—प्रकटित',—प्रकाशित., विद्यामद.,—विद्याजानताऽहङ्कार, यया तादृशी। श्रुतिप्रणयिभि,—श्रुतिभि.,—कर्णै. सह, य: प्रणय. स विद्यते येषा तै, श्रुतिसुख जनयद्भिरिति यावत, मधुरध्वनित्वादिति भाव., अन्यत्र,—श्रुतिषु—वेदेषु, प्रणय,—सर्वोत्कर्षेण प्रियता, अनुराग इत्यर्थ., तद्वद्भि.। प्रणवैरिव—ब्रह्मप्रतिपादकमन्त्रविशेषैरिव। कर्णावतसकुसुममधुकरकुलै:,—कर्णभूषणीकृतपुष्पलग्नभ्रमरवृन्दै, उपास्यमाना—`व्यमाना। प्रज्ञाप्रतानेन—प्रज्ञा—प्रकृष्टा मति., तस्या. प्रतान..—प्रसर' तेनेव। अंशुकेन—वसनेन। वाङ्मयमिव—विद्यामिव। दशनज्योत्स्नालोक—दन्तचन्द्रिकाद्योतमिव। विकिरन्ती—वर्षन्ती।

(७) दृष्ट्वेत्यादि।—स मुनि' ता तथा हसन्ती दृष्ट्वा शापजल जगाहेत्यन्वय। तथेति।—चरणताडनभ्रूकुटिसञ्चारपूर्वकमित्यर्थ.। स मुनि,—पूर्वकथितस्वरूप.। आ. इति कोपार्थकमव्ययम्, [ "पापे" इत्यत्र "पापकारिणि" इति पाठान्तरम् ]। दुर्गृहीतेति।—दुर्गृहीत,—दुरभ्यस्त., य. विद्यालव,—विद्यालेश, स्वल्पमात्रा विद्येत्यर्थ:, तेन अवलेप,—गर्व., `न दुर्विदग्धा—द्`नीता, तत्सम्बु`ौ। मामपि—त्रिजगत्प्रसिद्धतेजस दुर्वाससमपीत्यर्थ.। शिर.कम्पेति।—शिरस कम्पन—विधूननेन, विशीर्य्यमा ।,—विच्याव्यम ना:, ये बन्धविसरा.,—बन्धनसञ्चया, ते.। उन्मिषन्—उद्यन्, तडित्तन्तुना—विद्युद्दाम्ना, पिङ्गलिमा—पिङ्गल यस्य तथाभूतस्य। जटासञ्चयस्य—जटासमूहस्य। [ "शिर.कम्पशीर्य्यमाणव`विशरार्`

दश दिशः, (८) कृतकालसन्निधानामिव अन्धकारितललाटपट्टाष्टापदाम् अन्तकान्तःपुरमण्डनपत्रभङ्गमकरिकां भ्रुकुटिमाबध्नन्, अतिलोहितेन चक्षुषा अमर्षदेवतायै रुधिरोपहारमिव प्रयच्छन्, निर्दयदष्टदशनच्छदो दन्तांशुच्छलेन भयपलायमानां वाचमिव निरुन्धन्, अंसस्रंसिनः शापशासनपट्टस्येव ग्रथ्नन् ग्रन्थिम् अन्यथा कृष्णाजिनस्य, स्वेदकणप्रतिबिम्बितैः

---

रुन्मिषत्पिङ्गलिम्नो जटाकालापस्य" इति पाठे,—शिरःकम्पेन शीर्णो यो बन्धः तेन विशरारोः,—विस्मरस्य, इतस्ततः इति योजना, अत एव उन्मिषन् उद्यन्, पिङ्गलिमा—पिङ्गलत्वं यस्य तथाभूतस्य, जटाकलापस्य—जटासमूहस्येत्यर्थः ]। रोचिषा—अर्चिषा, ("शोचिषा" इति पाठेऽपि स एवार्थः, "रोचिः शोचिरुभे क्लीवे" इत्यमर )। सिञ्चन्निव वर्षन्निव, रोषदहनद्रवेण—कोपाग्निप्रस्रवेण।

(८) कृतेति।—कृतः कालस्य—अन्तकस्य, कृष्णवर्णस्य वा, सन्निधानम्—उपस्थितिर्यया तथाभूताम्। अन्धकारितेति।—अन्धकारितम्—आकुञ्चितत्वेन दुष्प्रेक्ष्यं, ललाटपट्टमिव अष्टापदं—हेम यया तादृशीम्, [ एतेन भूविक्षेपप्रकटीकृतस्वरूपवत्त्वेन एतस्यादर्शनीयत्वं विस्पष्टम् ]। अन्तकेति।—अन्तकस्य—यमस्य, अन्तःपुरम्—अवरोधकामिनीमित्यर्थः, तस्य मण्डनाय—अलङ्करणाय, पत्रभङ्गस्य मकरिका—मकराकारकिसलयच्छेद इत्यर्थः ताम्, रूपकमलङ्कारः। [ "अन्तकमण्डन—" इति पाठस्तु तन्मण्डनमकरिकाया अयुक्तत्वादुपेक्ष्यः ]। भ्रुकुटिं—भ्रूभङ्गिम्, ( "भ्रुवोर्मूलसमुत्क्षेपाद्भ्रुकुटिः परिचक्षते" इति कोषः )। आबध्नन्—कुर्वन्नित्यर्थः। अतिलोहितेन—अतिरक्तेन। अमर्षदेवतायै—अमर्षः,—क्रोधः, तस्य अधिष्ठात्री या देवता तस्यै। रुधिरोपहारं—रक्तरूप पूजाद्रव्यम्। ["रुधिरोपहारम्" इत्यत्र "स्वरुधिरोपहारम्" इति पाठान्तरम् ]। प्रयच्छन्—अर्पयन्। निर्दयेति।—निर्दयं—दृढं यथा तथा, दष्टः दशनच्छदः,—ओष्ठः, अधरोष्ठ इति यावत् येन तथाभूतः। दन्तांशुच्छलेन—दशनकिरणनिर्गमनव्याजेन। भयपलायमानां—भयात्—शापादिनिबन्धनादिति भावः, पलायमानां—प्रतिष्ठमानाम्। निरुन्धन्—निरुद्धां कुर्वन्। [ "निर्दयदष्टदशनच्छदभयपलायमानामिव वाचं रुन्धन् दन्तांशुच्छलेन" इति पाठे—निर्दयं यथा तथा दष्टः यो दशनच्छदः तस्मात् भयेन पलायमानामिवेति समासः ]। अंसस्रंसिनः,—स्कन्धावलम्बिनः, सरम्भादिति भावः। [ "अंसस्रंसिनः" इत्यत्र "अंसावस्रंसिनः" इति पाठान्तरम् ]। कृष्णाजिनस्य—कृष्णमृगचर्मणः। शापस्य शासनपट्टः,—स्वनन्दफलक

शापशङ्काशरणागतैरिव सुरासुरमुनिभिः प्रतिपन्नसर्व्वावयवः, कोपकम्पतरलिताङ्गुलिना करेण प्रसादनलग्नाम् अक्षरमालामिव अक्षमालाम् आक्षिप्य कामण्डलवेन वारिणा समुपस्पृश्य शापजलं जग्राह।

(९) अत्रान्तरे स्वयम्भुवोऽभ्यासे समुपविष्टा देवी मूर्त्तिमती पीयूषफेनपटलपाण्डरं कल्पद्रुमदुकूलवल्कलं वसाना, विसतन्तुमयेनांशुकेन उन्नतस्तनमध्यबद्धगात्रिकाग्रन्थिः, तपोबलनिर्जितत्रिभुवनजयपताकाभिरिव तिसृभिर्भस्मपुण्ड्रकराजिभिर्विराजितललाटाजिरा, स्कन्धावलम्बिना

---

तस्यैव, शासनपट्टस्य स्वतः शुक्लत्वात् लिपिकणत्वाच्च श्वेतबिन्दुचित्रितकृष्णाजिनतुल्यत्वात् तथोत्प्रेक्षितम्। ग्रन्थिम् अन्यथा—सम्भ्रमातिशयात् अन्यप्रकारेण, विकृतभावेनेति भाव, ग्रथ्नन्—बध्नन्। स्वेदेति।—स्वेदकणेषु—रोषजनितेषु घर्म्मबिन्दुषु, प्रतिबिम्बितै,—प्रतिफलितै.। प्रतिपन्नसर्व्वावयव,—समाश्रितसमस्तदेह'। कोपकम्पतरलिताङ्गुलिना—कोपेन यः कम्प., तेन तरलिता.,—चलिता, अङ्गुलयो यस्य तथोक्तेन। ["कोपतरलिताङ्गुलिना" इति पाठान्तरम्]। प्रसादनलग्ना—प्रसादनार्थे—सान्त्वनार्थं, लग्ना—समागता ताम्। ["प्रसादलग्नाम्" इति पाठोऽपि स एवार्थ]। अक्षरमालामिव—वर्णावलीमिव, भारतीसम्बन्धेनैतदुक्तम्। अक्षमाला—रुद्राक्षजपमालिकाम्। आक्षिप्य—परित्यज्येत्यर्थ.। ["विक्षिप्य" इति पाठोऽपि स एवार्थ.]। कामण्डलवेन—मुनिकरकस्थितेन। समुपस्पृश्य—आचम्य।

(९) अत्रान्तरे इत्यादि।—मूर्त्तैश्चतुर्भिर्वेदै. सह सावित्री समुत्तस्थौ इत्यन्वय.। अभ्यासे—अन्तिके। पीयूषेति।—पीयूषम्—अमृत, तस्य फेनपटल—फेनराशि., तद्वत् पाण्डर—शुभ्रम्। कल्पद्रुमेति।—कल्पद्रुमस्य—सुरतरुभेदस्य, दुकूल—वसनमिव, वल्कल तत्। वसाना—परिदधाना। विसतन्तुमयेन—मृणालसूत्रमयेण। अंशुकेन—सूक्ष्मवसनेन। उन्नतेति।—उन्नतयोः स्तनयोर्मध्ये बद्धा गात्रिकाग्रन्थि.—ग्रन्थिविशेष यया तथोक्ता, स च स्वस्तिकाकार. स्त्रीणा स्तनोद्देशे भवति। तपोबलेति।—तपसा—चान्द्रायणादीना, बलेन निर्जितस्य—नितरा जितस्य, त्रिभुवनस्य जयपताकाभिरिव—जयध्वजैरिव, ["तपोनिर्जितत्रिभुवनजयपताकाभिरिव" इति पाठान्तरम्]। भस्मपुण्ड्रकराजिभिः,—भस्मकृततिलकैरित्यर्थः। विराजितललाट-

सुधाफेनधवलेन तपःप्रभावकुण्डलीकृतेन गङ्गास्रोतसेव योगपट्टकेन विरचितवैकक्ष्यका, सव्येन ब्रह्मोत्पत्तिपुण्डरीकमुकुलमिव स्फटिककमण्डलुं करेण कलयन्ती, दक्षिणमक्षमालाकृतपरिक्षेपं (१०) कम्बुनिर्मितोर्मिकादन्तुरितं तर्ज्जनतरलिततर्ज्जनीकम् उत्क्षिपन्ती हस्तम्—"आः पाप। क्रोधोपहत! दुरात्मन्। अज्ञ! अनात्मज्ञ। ब्रह्मबन्धो। मुनिखेटकापसदनिराकृत! आत्मस्खलितविलक्ष! कथं सकलसुरासुर-

जिरा—बिराजितं—शोभित, ललाटाजिरं—भालचत्वरं यस्या तथाभूता। स्कन्धेति।—स्कन्धौ—असौ, तदवलम्बिना—तत्संलग्नेन इत्य., सुधाफेनधवलेन—अमृतफेनपाण्डरेण, ["फेनधवलेन" इति पाठान्तरम्]। तपःप्रभावकुण्डलीकृतेन—तपसा प्रभावेण—माहात्म्येन, कुण्डलीकृतेन—कुण्डलवत् वर्त्तुलतां नीतेन, सङ्कोच नीतेनेति भाव। योगपट्टकेन—तदाख्येन उपवीताकारेण पदार्थेन, [अभेदे तृतीया]। विरचितवैकक्ष्यका—विरचित—गृहीत, वैकक्ष्यकं—तिर्य्यग्वक्षसि विक्षिप्तो हारविशेषः यया तथाभूता, वैकक्ष्यकाकार योगपट्टं धारयन्तीत्यर्थः, (तथा च—"तिर्य्यग्वक्षसि विक्षिप्तं वैकक्ष्यकमुदाहृतम्" इति कोष.)। सव्येन—वामेन। ब्रह्मोत्पत्तिपुण्डरीकमुकुलमिव—ब्रह्मणः उत्पत्ति यस्मात् तत् पुण्डरीक—श्वेतपद्म, ("पुण्डरीकं सिताम्भोजम्" इत्यमरः) तस्य मुकुलमिव। कलयन्ती—धारयन्ती। अक्षमालाकृतपरिक्षेपम्—अक्षमालया—जपमालया, कृतः परिक्षेप,—वेष्टन यस्य तम्। ["अक्षमालापरिक्षेपम्" इति पाठे—अक्षमालया परिक्षेपः यस्य तथोक्तम्]।

(१०) कम्बुनिर्म्मितोर्म्मिकादन्तुरित—कम्बु.—शङ्ख., ("शङ्ख. स्यात् कम्बुरस्त्रियाम्" इत्यमर.) तेन निर्म्मिता या ऊर्म्मिका—अङ्गुरीयक, तेन दन्तुरित,—उन्नतवत् कृत., युक्त इति भाव तम्। तर्जने—आक्रोशने, तरलिता—चलिता. ["तरङ्गिता" इति पाठे—तरङ्गवत् कृता] तर्जनी—प्रदेशिनी यस्य तम्। ["हस्तम्" इत्यत्र "करम्" इति पाठान्तरम्]। क्रोधोपहत!—क्रोधेन उपहत,—विनाशं गत तत्सम्बुद्धि आत्मविनाशार्थमेव ते क्रोध इति भाव। ब्रह्मबन्धो!—निकृष्टब्राह्मण। मुनिषु ये खेटका,—अधमा, तेषु अपसदा,—नीचा, तै निराकृत,—तैर्भ्योऽपि दूषितत्वात् ताडित इत्यर्थ, तत्सम्बुद्धौ। "मुनिखेटक।" "मुनिखेट।" इति पाठान्तरम्, ["निराकृते।" इति पाठे—मुनिखेटकापसदैः निराकृति,—निराकरण,

मुनिसनुजवृन्दवन्दनीयां त्रिभुवनमातरं भगवतीं सरस्वतीं शप्तुमभिलषसि ?" इत्यभिदधाना, (११) रोषविमुक्तवेत्रासनैः ओङ्कारमुखरितमुखैः उत्क्षेपदोलायमानजटाभारभरितशिरोभिः परिकरबन्धभ्रमितकृष्णाजिनच्छायाश्यामायमानदिवसैः (१२) अमर्षनिश्वासदोलाप्रेङ्खोलितब्रह्मलोकैः सोमरसमिव स्वेदविसरव्याजेन स्रवद्भिः अग्निहोत्रपवित्रभस्मस्मेरललाटैः

दूरीकरणमित्यर्थः यस्य तथोक्तः, तत्सम्बुद्धिः। क्वचित् पुस्तके "मुनिखेट। अपसद। निराकृत।" इति प्रत्येकं पृथक् पृथक् सम्बोधनपदं दृश्यते, तत्र निराकृत।—अस्वाध्याय इत्यर्थः]। आत्मस्खलितेति।—आत्मनः,—स्वस्य, स्खलितं—दोषः, विस्वरपठनजनितमिति भावः, तेन विलक्षः,—लज्जितः, लज्जा प्राप्तु योग्य इत्यर्थः, तत्सम्बुद्धिः। सकलसुरेति।—परस्परविरुद्धस्वभावाना सुरासुरमुनिमानवानामपि अत्र न कश्चिद्विरोधः इति भावः। ["आत्मस्खलितविलक्ष। कथं सकलसुरासुर—" इत्यत्र "कथमात्मस्खलितविलक्ष सुरासुर—" इति पाठान्तरे—आत्मनः स्खलितेन विलक्षः,—लज्जा प्राप्तु योग्योऽपि त्वमित्यर्थः]।

(११) रोषेति।—रोषेण—दुर्वाससं प्रति क्रोधेन, विमुक्तानि—त्यक्तानि, वेत्रासनानि—वेतसनिर्मितानि आसनानि यैः तथोक्तैः। ओङ्कारेति।—ओङ्कारेण मुखरितं—ध्वनितं, मुखं येषां तैः, सततं प्रणवमुच्चरद्भिरिति भावः। उत्क्षेपेति।—उत्क्षेपेण—उत्थानेन, दोलायमानैः,—चलद्भिरित्यर्थः, जटाभारैः,—जटासमूहैः, भरितानि—आपूरितानि, शिरांसि येषां तैः। ["जटाभारभरितशिरोभिः" इत्यत्र "जटाभारभरितदिग्भिः" इति पाठान्तरे—जटाभारैः, भरिताः,—व्याप्ताः, दिशः यैः तैः]। परिकरेति।—परिकरबन्धः,—कटिबन्धः, तेन भ्रमितं—घूर्णितं, यत् कृष्णाजिनं तस्य छायया—कान्त्या, प्रभया इत्यर्थः, ("छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः) श्यामायमानाः,—कालिमानमापद्यमानाः, दिवसाः यैः तथाभूतैः, ["—कृष्ण—" इत्यत्र "कृष्णाजिनाटोपच्छाया" इति पाठान्तरम्]।

(१२) अमर्षेति।—अमर्षेण—क्रोधेन, यः निश्वासः स एव दोला—दोलनयन्त्रं, पूरणरेचनोभयरूपत्वात् निश्वासस्येति भावः, तया प्रेङ्खोलितः,—आन्दोलितः, ब्रह्मलोकः यैः तथाभूतैः। सोमरसमिव—सोमो नाम लताविशेषः, तस्य रसः तमिव। स्वेदविसरव्याजेन—घर्मप्रसरच्छलेन। स्रवद्भिः,—क्षरद्भिः। अग्निहोत्रेति।—अग्निहोत्रस्य पवित्रं—विशुद्धं यत् भस्म तेन स्मेराणि——विकस्वराणि, ललाटानि येषां तैः।

कुशतन्तुचारुचामरचीरचीवरिभिः आषाढ़िभिः प्रहरणीकृत-दण्डकमण्डलुमण्डलैः मूर्त्तैश्चतुर्भिर्वेदैः सह कृषीमपहाय सावित्री समुत्तस्थौ।

(१२) ततः "मर्षय भगवन्! अभूमिरेषा शापस्य" इत्यनुनाथ्यमानोऽपि विबुधैः, "उपाध्याय! स्खलितमेकं क्षमस्व" इति बद्धाञ्जलिपुटैः प्रसाद्यमानोऽपि स्वशिष्यैः, "पुत्र! मा कृथास्तपसः प्रत्यूहम्" इति निवार्यमाणोऽप्यत्रिणा रोषावेश-विवशो दुर्वासाः "दुर्विनीते! व्यपनयामि ते विद्यालवावलेप-विशेषजनिताम् उन्नतिमिमाम्; अधस्तात् गच्छ मर्त्त्यलोकम्" इत्युक्त्वा तच्छापोदकं विससर्ज। ततः प्रतिशापदानोद्यतां सावित्रीं "सखि! संहर रोषम्, असंस्तुतमतयोऽपि जात्यैव द्विजन्मानो माननीयाः" इत्यभिदधाना सरस्वती एव न्यवारयत्।

---

कुशेति।—कुशाना तन्तव,—सूत्राणि एव, चारूणि—मनोज्ञानि, चामराणि येषां तथाभूता. कुशतन्तुचारुचामराः, तथा चीराणि—वस्त्रखण्डानि, चीवराणि—कौपीनानि च सन्ति येषां तथोक्ताः तै.। आषाढिभि',—पालाशदण्ड आषाढ. तद्वद्भिः, तथा चोक्तम्,—"आषाढस्तु दण्डस्तु पालाशो व्रतचारिणाम्" इति। प्रहरणीकृतेति।—प्रहरणीकृताः,—प्रहरणार्थम् उद्धृता', क्रोधादिति भाव, दण्डाः, कमण्डलुमण्डलानि—कमण्डलुसमूहाश्च यैः तथाभूतैः। मूर्त्तैः,—देहवद्भिः। कृषीम्—आसनम्, ("व्रतिनामासनं कृषी" इत्यमरः)।

(१२) तत इत्यादिकं तच्छापोदकं विससर्ज इत्यन्वयसम्बन्धः। मर्षय—क्षमस्व। अभूमिः,—अस्थानम्, अयोग्यस्थानमित्यर्थः। अनुनाथ्यमान,—प्रार्थ्यमान'। ["अनुशास्यमान" इति पाठे—उपदिश्यमानः इत्यर्थः]। उपाध्याय!—आचार्य। इति सम्बोधनम्। स्खलितम्—अपराधमित्यर्थ.। प्रत्यूहं—विघ्नं, शापदाने तपस. क्षयादिति भाव। अत्रिणा—महातपसा स्वपित्रा इत्यर्थ.। दुर्विनीते!—दुष्टे। व्यपनयामि—नाशयामि। विद्येति।—विद्यालव,—विद्यालेश, स्वल्पा विद्येत्यर्थ, तेन य अवलेपविशेषः,—गर्वातिशयः, तज्जनिता—तत्सम्भूताम्। उन्नतिमिति।—उच्चदेशस्थस्वाधो नयनेन समुचितोऽयं वाक्यनिवेशः। अधस्तात्—अवनीभूमिम्। विससर्ज—तत्याज, निचिक्षेप इत्यर्थ.। असंस्तुतेति।—न संस्तुता—न

(१४) अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहो भगवान् कमलोत्पत्तिलग्नमृणालसूत्रामिव धवलयज्ञोपवीतिनीं तनुमुद्वहन्, उद्गच्छदच्छाङ्गुलीयकमरकतमयूखलताकलापेन त्रिभुवनोपप्लवप्रशमकुशापीडधारिणेव दक्षिणेन करेण निवार्य्य शापकलकलम्, अतिविमलदीर्घैर्भाविकृतयुगारम्भसूत्रपातमिव दिक्षु पातयन् दशनकिरणैः, सरस्वतीप्रस्थानमङ्गलपटहेनेव पूरयन्नाशाः स्वरेण सुधीरमुवाच,—"ब्रह्मन्! न खलु साधुसवितोऽयं पन्थाः, येनासि प्रवृत्तः; निहन्ति परस्तात्।

---

विशुद्धा, न संस्कृतेति यावत्, मतिः,—चित्तं येषां तथाभूताः। ["असस्तुतमतय." इत्यत्र "असस्कृतमतय" इति पाठान्तरेऽप्ययमेवार्थः]।

(१४) अथेत्यादिके भगवान् पितामहः सुधीरमुवाच इत्यन्वयसम्बन्धः। तथेति।—तेन प्रकारेण इत्यर्थः, निर्दोषां सरस्वतीम् इत्याशयः। कमलेति।—कमलात्—नारायणनाभिपद्मात्, या उत्पत्तिः,—जन्म, स्वस्येति भावः, तया हेतुभूतया लग्नं—ससक्तं, मृणालसूत्रं योनिपद्मस्येति भावः यस्याः तथाभूतामिव। धवलेति।—"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इति प्रशंसार्थे नित्ययोगार्थे वा "अत इनि-ठनौ" (५।२।११५ पा०) इति मत्वर्थीयः प्रत्ययः "बिसकिशलयच्छेदपाथेयवन्तः" इत्यादाविव बोध्यः, न चेत्, कर्मधारयानन्तरम् एकप्रज्ञानुमानात्मके बहुव्रीहौ प्रतिपत्तिः सम्पद्यते, अन्यच्च तु बुद्धिद्वययोगः इति नियमबन्धस्य लघुत्वादेवमुक्तम्। उद्गच्छदिति।—उद्गच्छन्—उद्गच्छन्, अच्छस्य—विशदस्य, अङ्गुलीयकमरकतस्य—मरकतनिर्म्मिताङ्गुरीयकस्येत्यर्थः, मयूखलताकलापः,—किरणावलीसमूहः यस्मात् तथाभूतेन। त्रिभुवनेति।—त्रिभुवनस्य—त्रिलोकस्य, उपप्लवः,—सङ्कटः, तस्य प्रशमाय—शान्तये, कुशापीडं—कुशतन्तुसमूहं, धारयतीति तथोक्तेनेव, कुशानां माङ्गलिकत्वेन अमङ्गलनाशकत्वादिति भावः। भावीति।—भाविनः,—भविष्यतः, कृतयुगस्य—सत्ययुगस्य, आरम्भे यः सूत्रपातः—सूत्रविन्यासः तमिव। पातयन्—कुर्व्वन्, इह केवलधात्वर्थगतानुज्ञानवृत्तिकः क्रियार्थः, "सबले चालिते वस्ते" इत्युदाहरणवज्ज्ञेयः। दशनकिरणैः,—दन्तमयूखैः। सरस्वतीति।—सरस्वत्याः,—शप्तायाः इति भावः, प्रस्थानं—ब्रह्मलोकात् मर्त्त्यलोके गमनमित्यर्थः, तस्य मङ्गलपटहः,—माङ्गलिकवाद्यविशेषः; तेनेव। सुधीरं—सुगम्भीरम्। येनासि प्रवृत्तः,—येन पथा प्रवृत्तः,—प्रचलित-

(१५) उद्दामप्रसृतेन्द्रियवाजिसमुत्थापितं हि रजः कलुषयति दृष्टिम् अनक्षजिताम्। कियद्दूरं वा चक्षुरीक्षते? विशुद्धया हि धिया पश्यन्ति कृतबुद्धयः सर्व्वानर्थान् असतः सतो वा। निसर्गविरोधिनी चेयं पयः-पावकयोरिव धर्म्म-क्रोधयोः एकत्र वृत्तिः। आलोकमपहाय कथं तमसि निमज्जसि? क्षमा हि मूलं सर्व्वतपसाम्। परदोषदर्शनदक्षा दृष्टिरिव कुपिता बुद्धिर्न ते आत्मरागदोषं पश्यति। क्व महातपोभारवैवधिकता? क्व पुरोभागित्वम्? अतिरोषणश्चक्षुष्मान् अन्ध एव जनः। न हि कोपकलुषिता विमृशति मतिः कर्त्तव्यमकर्त्तव्यं वा। कुपितस्य हि प्रथमा अन्धकारिणी भवति विद्या, ततो भ्रुकुटिः। आदौ इन्द्रियाणि रागः समास्कन्दति, चरमं चक्षुः। आरम्भे तपो गलति, पश्चात् स्वेदसलिलम्।

---

मुंयतः, असि—भवसि। निहन्त्येव,—एव,—पत्याः, निहन्ति, गच्छन्तमिति शेष।

(१५) उद्दामेति।—उद्दामम्—उच्छृङ्खलं यथा तथा, प्रसृतानि—प्रवृत्तानि, प्रचलितानीत्यर्थः, इन्द्रियाण्येव वाजिनः,—अश्वा तैः समुत्थापितं - समुद्धतम। रजः,—रागः, धूलिश्च। कलुषयति—आविलयति, कार्य्याकार्य्यदर्शनसामर्थ्यनाशं करोतीति भाव। अनक्षजिताम्—अक्षाणि—इन्द्रियाणि, जयन्तीति अक्षजितः, ते न भवन्तीति अनक्षजितः तेषाम्, अजितेन्द्रियाणामित्यर्थः। कृतबुद्धयः,—मञ्जत- मतयः। निसर्गविरोधिनी—स्वभाववैरिणी। पय-पावकयोरिव—जलानलयोरिव। महातपोभारवैवधिकता—महतां तपसां भारस्य वैवधिकः,—वाही तस्य भावः तत्ता, ("वोढा भारस्य धीमद्भिर्जनैः वैवधिकः स्मृत." इति कोषः)। पुरोभागित्वं— दोषैकदर्शित्वम्। ("दोषैकदृक् पुरोभागी" इत्यमरः)। विमृशति—विचारयति। प्रथमा—प्राक्क्षणाश्रया, अन्धकारिणी—अन्धकाराच्छन्ना, कलुषिनेति भाव। [ "कुपितस्य प्रथममन्धकारीभवति विद्या" इति पाठे—कुपितस्य विद्या—ज्ञानं, प्रथमम्—आदौ, अन्धकारीभवति—आच्छन्न भवतीत्यर्थः ] ततः,—तदनन्तरं, भ्रुकुटिः, —भ्रूभङ्गः, भवतीति शेषः। रागः,—समासक्तिः, लौहित्यञ्च। समास्कन्दति— आश्रयति। चरमं—पश्चात्; चक्षुः, समास्कन्दतीत्यनुषङ्गः। आरम्भे, कोपस्येति

पूर्व्वमयशः स्फुरति, अनन्तरमधरः। कथं लोकविनाशाय ते विषपादपस्येव वल्कलानि जातानि? अनुचिता खलु अस्य मुनिवेशस्य हारयष्टिरिव वृत्तमुक्ता चित्तवृत्तिः। (१६) शैलूष इव वृथा वहसि कृत्रिमम् उपशमशून्येन चेतसा तापसाकल्पम्। अल्पमपि न ते पश्यामि कुशलजातम्। अनेनातिलघिम्ना अद्याप्युपर्य्येव प्लवसे ज्ञानोदन्वतः। न खलु अनेड़मूकाः एड़ा जड़ा वा सर्व्वे एते महर्षयः। रोषदोषनिषद्ये! स्वहृदये निग्राह्ये किमर्थमसि निगृहीतवाननागसं सरस्वतीम्? एतानि तानि आत्मस्खलितवैलक्ष्याणि, यैर्याप्यतां

---

शेष.। गलति—स्रवति. चयोन्मुखीभवतीत्यर्थः। पूर्वं—प्राक्। अयशः,—अकीर्त्तिः। विषपादपस्येव—विषवृक्षस्येव। ["वल्कलानि" इत्यत्र "जटावल्कलानि" इति पाठे—जटाः,—शिखाः, निर्य्यासमिलितवत् परस्परं लग्नकेशाः इत्यर्थः मूलानि च। वल्कलानि—मुनिवस्त्राणि, त्वचश्च। वृत्तमुक्ता—सुचरितच्युता, सुवर्त्तुलमुक्ताफला च।

(१६) शैलूष इव—नट इव, "जायोपजीवी हि जनः शैलूषः कथितो बुधैः" इत्युक्तलक्षणो वा। उपशमशून्येन—शान्तिरहितेन। तापसाकल्पं—मुनिवेशम्। कुशलजातं—मङ्गलसमूहम्। अतिलघिम्ना—अतिलाघवेन। ज्ञानोदन्वतः,—ज्ञानसमुद्रस्य, उपरि एव प्लवसे—सन्तरसि, न तु अभ्यन्तरं विशसीति भावः। अनेडमूकाः,—श्रोतुं वक्तुञ्चासमर्थाः। एडाः,—श्रुतिहीनाः। जडाः,—मूर्खाः। तदुक्तं,—"कथिता अनेडमूकाः श्रोतुं वक्तुञ्च खलु न ये शक्ताः। एडास्तु श्रुतिहीनाः जडास्तु मूर्खा बुधैः प्रोक्ताः" ॥ इति। ["अनेडमूकाः" इत्यत्र "अनेलमूकाः" इति पाठान्तरं]। रोषेति।—रोषः,—क्रोध एव, दोषः तस्य, निषीदति अस्यां निषद्या—आपणगृहं, तत्सम्बुद्धौ, हे रोषदोषाश्रय! इत्यर्थः, यद्वा—रोष एव दोषः तस्य निषद्या—आवासः यत्र तादृशि। स्वहृदये—निजचित्ते। निग्राह्ये—निग्रहीतुमर्हे सतीत्यर्थः। अनागसं—निरपराधाम्, ("आगः पापापराधयोः" इति कोषः)। आत्मस्खलितेति।—आत्मनः,—स्वस्य, स्खलितानि—प्रमादाः, तैः वैलक्ष्याणि—लज्जितानि, साधुसमाजे मुखानतिविधायकभावविशेषाः. ["आत्मस्खलितवैलक्ष्याणि" इत्यत्र "आत्मप्रमादस्खलितवैलक्ष्याणि" इति पाठान्तरे—आत्मनः प्रमादेन—अनवधानतया, यत् स्खलितम्; प्रमादः एव स्खलितम् इत्यर्थो वा]। याप्यतां—गर्हणीयताम्।

थाति अविदग्धो जनः" इत्युक्त्वा पुनराह,—"वत्से सरस्वति! विषादं मा गाः, एषा त्वामनुयास्यति सावित्री, विनोदयिष्यति अस्मद्विरहिताम्। आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यति" इति। एतावदभिधाय विसर्जितसुरासुरमुनिमनुजमण्डलः ससम्भ्रमोपगतनारदस्कन्धविन्यस्तहस्तः समुचिताह्निककरणाय उदतिष्ठत्। सरस्वत्यपि शप्ता किञ्चिदधोमुखी (१७) धवलकृष्णशारां कृष्णाजिनलेखामिव तपसे दृष्टिमुरसि पातयन्ती सुरभिनिश्वासपरिमललग्नैर्मूर्त्तैः शापाक्षरैरिव षट्चरणचक्रैराकृष्यमाणा शोकशिथिलितहस्ता अधोमुखीभूतेनोपदिश्यमानमर्त्यलोकावतरणमार्गेव नखमयूखजालकेन नूपुररवव्याहारहृतैः भवन-

अविदग्धः,—अज्ञः। पुनराहेति।—वाच्यतानिश्चये एव अन्यान्तेऽपि वाक्यक्रमे पुनरित्युपादानम्। विनोदयिष्यति—आनन्दयिष्यति। ["अस्मद्विरहिताम्" इत्यत्र "अस्मद्विरहदुःखिताम्" इति पाठान्तरम्]। समुचिताह्निककरणाय—समुचितं यत् आह्निकं—दिवसकार्य्यं, तस्य करणं तस्मै। सरस्वतीत्यादिके,—सरस्वत्यपि शप्ता अदूरमगादित्यन्वयसम्बन्धः।

(१७) धवलकृष्णशारां—धवलः,—श्वेतः, कृष्णः,—नीलः, ताभ्यां शारा—शबला, संवलितेत्यर्थः, ताम्, शारशबला धवलकृष्णामिति कथनीये शारग्रहणेन सम्मिश्रवर्णद्वयप्रतीतिः स्फुटा। कृष्णाजिनलेखामिव—कृष्णमृगचर्म्मश्रेणीमिव। तपसे—तपश्चरणाय। षट्चरणचक्रैः,—भ्रमरनिवहैः। ["षट्चरणचक्रैः" इत्यत्र "षट्चरणकदम्बकैः" इति पाठान्तरम्]। शोकेति।—शोकेन—शापजनितेन दुःखेनेत्यर्थः, शिथिलितौ—स्रस्तौ, व ीनौ इत्यर्थः, हस्तौ यस्याः सा। ["शोकशिथिलित—" इत्यत्र "शापशोकशिथिलित—" इति पाठान्तरम्]। अधोमुखीभूतेन—अधोमुखतां गतेन, यः आश्रितोऽपि अन्याय्योपदेशं ददाति, स त्रपयाऽवश्यमधोमुखो जायते इति भावः। नखेति।—नखमयूखानां—नखकिरणानां, जालकं—समूहः, तेन। नूपुरेति।—नूपुरयोः रवाः,—निस्वनाः एव, व्याहा ाः,—वचनानि, ("व्याहार उक्तिर्लपितं भाषितं वचनं व :" इत्यमरः) तैः हृताः,—आकृष्टाः तैः। ["नूपुररवव्याहारहृतैः" इत्यत्र "नूपुरव्याहाराहृतैः" इति पाठान्तरम्]।

कलहंसकुलैः ब्रह्मलोकनिवासिहृदयैरिवानुगम्यमाना सर्म्मं विलया गृहमगात्।

अत्रान्तरे सरस्वत्यवतरणवार्त्तामिव कथयितुं (१८) मध्य-लोकमवततार अंशुमाली। क्रमेण च मन्दायमाने, मुकुलित-बिसिनीविरहव्यसनविषण्णसरसि वासरे, मधुमदमुदित-कामिनीकोपकुटिलकटाक्षक्षिप्यमाणे इव क्षेपीयः क्षितिधर-शिखरमवतरति (१९) तरुणतरकपिलपनलोहिते लोकैक-चक्षुषि भगवति सवितरि, प्रस्नुतमहिषीपयःक्षरत्क्षीरधारा-धवलितेषु आसन्न-चन्द्रोदयोद्दामक्षीरोदक्षालितेषु इव दिव्या-

(१८) अंशुमाली—सूर्य्यः। मध्यलोकं—मर्त्त्यभूमिम। ["मध्यलोकम्" इत्यत्र "मध्यमं लोकम्" इति पाठान्तरम्]। क्रमेणेत्यादिकं;—सावित्री सरस्वती-मवादीत् इत्यन्वयसम्बन्धः। मन्दायमाने—प्राखर्य्यं निजहतीति यावत्। मुकुलितेति। —मुकुलितानां—मुकुलतां गन्तुं प्रवृत्तानामिति यावत्। बिसिनीनां—पद्मिनीनां, विरह एव—कान्तस्य सूर्य्यस्य विच्छेद एव इति यावत्, व्यसनं—दुःखं, तेन विषण्णं —विषाद गतम्; निजकन्यानामिव सोदरवर्त्तिनीनां पद्मिनीनां दर्शनादिति भावः, सरः,—सरोवरं यस्मिन् तथाभूते। ["मुकुलितबिसिनीबिसरव्यसनविषण्णसरसि" इति पाठे—विसरः,—समूहः इत्यर्थः]। मधुमदेति।—मधुमदेन—मद्यपान-जनितमत्ततया, मुदिताः,—हृष्टाः, उद्रिक्तमन्मथाः इति यावत्, सम्भोगार्थिन्य इति भावः, याः कामिन्यः,—शृङ्गारार्थिन्यः प्रमदाः, तासां कोपेन—कथमद्यमिदानीमपि नः सम्भो-गान्तरायी न भवसीति इति कोपेन, कुटिलः,—वक्रः, यः कटाक्षः,—अपाङ्ग-वीक्षणं, तेन क्षिप्यमाणे इव—दूरीक्रियमाणे इव। क्षेपीयः,—अतिक्षिप्रम्, अति-शीघ्रमित्यर्थः। क्षितिधरशिखरम्—अस्ताचलचूडाम्।

(१९) तरुणेति।—तरुणतरः,—अतियुवा, यः कपिः,—वानरः, तस्य लपनं —मुखं, तद्वत् लोहितः,—रक्तः तस्मिन्। लोकैकचक्षुषि—लोकानां—जगताम्, एकम्—अद्वितीयं, चक्षुः तस्मिन्; [लोकेत्यादिना सुरतान्तरायकर्त्तृत्वं सूच्यते]। प्रस्नुतेति।—प्रस्नुतात्—प्रस्रुतात्, महिष्याः ऊधसः,—स्तनात्, क्षरन्ति यानि क्षीराणि—दुग्धानि, तेषां धारावत् धवलितानि—शुभ्राणि तेषु। आसन्नेति।—आसन्नः,—सन्निहितः, यः चन्द्रोदयः, तेन उद्दामः,—उद्वेलः, यः क्षीरोदः,

ग्रामोपशल्यकेषु, अपराह्णप्रचारप्रचलिते,—चामरिणि चामीकर-तटताड़नरटितरदने रदति (२०) सुरस्रवन्तीरोधांसि स्वैरम् ऐरावते, प्रसृतानेकविद्याधराभिसारिकासहस्रचरणालक्तक-रसानुलिप्त इव प्रकटयति च तारापथे पाटलतां, तारापथ-प्रस्थित-सिद्धदत्तदिनकरास्तमयार्घ्यावर्जिते रञ्जितककुभि, कुसुम्भभासि स्रवति पिनाकिप्रणतिमुदितसन्ध्यास्वेदसलिल इव

क्षीरसागरः, तेन क्षालितानि—धौतानि तेषु इव। ["प्रस्नुतमुखमाहेयीयूथचरत्क्षीर-धाराधवलितेषु आसन्नचन्द्रोदयोद्दामक्षीरोदलहरीक्षालितेष्विव" इति पा०—माहेयी—गौः, "माहेयी सौरभेयी गौः" इत्यमरः]। दिव्याग्रामोपशल्यकेषु—दिव्या ग्रामाः तेषाम् उपशल्यकानि—अन्तभागाः तेषु, ("ग्रामान्त उपशल्यं स्यात्" इत्यमरः)। अपराह्णेति।—अपराह्णे—अह्नोऽपरभागे, पश्चिमभागे इत्यर्थः, यः प्रचारः,—प्रकर्षेण चरणं, तस्मै प्रचलितः,—प्रवृत्त इति यावत् तस्मिन्। चामरिणि—चामरशालिनि। चामीकरेति।—अत्र चामीकरशब्देन सुमेरुर्लक्ष्यते; तथा च चामीकरस्य—सुवर्णाद्रेः सुमेरोरित्यर्थः, तटेषु यत् ताडनं—वप्रक्रीडेत्यर्थः, तेन रटिताः,—ध्वनिताः, रदनाः,—दन्ताः यस्य तथाभूते। ["रटितरदने" इत्यत्र "रणितरदने" इति पाठान्तरेऽपि स एवार्थः]। रदति—विलिखति।

(२०) सुरस्रवन्तीरोधांसि—मन्दाकिनीतटानि। स्वैरं—यदृच्छयेत्यर्थः। प्रसृतेति।—प्रसृताना—प्रचलितानां, कान्तं प्रति अभिसरन्तीनामित्यर्थः, अनेकासां—बह्वीनां, विद्याधराभिसारिकाणाम्—अभिसारिणीनां विद्याधरीणामित्यर्थः, ("या दूतिकागमनकालमपाहरन्ती सोढुं अरञ्जरभरार्त्तिपिपासितेव। निर्याति वल्लभजनाधरपानलोभात् सा कथ्यते कविवरैरभिसारिकेति॥" इत्युक्तेः) सहस्रस्य चरणालक्तकरसैः,—चरणनिहितलाक्षाद्रवैः, अनुलिप्त इव—अनुरञ्जित इव। प्रकटयति—प्रकाशयति। पाटलतां—रक्ततां। तारापथे—नक्षत्रमार्गे, गगनवर्त्मनीत्यर्थः। तारापथेति।—तारापथेषु—गगनमार्गेषु, प्रस्थितैः,—प्रचलितैः, सिद्धैः,—देवयोनिविशेषैः, दत्तानि दिनकराय—सूर्याय, यानि अस्तमयार्घ्याणि—अस्तगमनकालदेयानि अर्घ्याणि, तेभ्यः आवर्जितः,—प्रकीर्णः तस्मिन्। रञ्जितककुभि—रक्तीकृतदिशि। कुसुम्भभासि—कुसुम्भं—रक्तपुष्पविशेषः, तद्वत् भाः,—दीप्तिः यस्य तादृशे। स्रवति—क्षरति सति। पिनाकीति।—पिनाकिने—हराय, या प्रणतिः,—प्रणामः, तत्र मुदिता—उल्लासं गता, या सन्ध्या तस्याः स्वेदसलिल इव—घर्मोदक इव।

रक्तचन्दनद्रवे, वन्दारुमुनिवृन्दारकवृन्दवध्यमानसन्ध्याऽञ्जलि-वने, (२१) ब्रह्मोत्पत्तिकमलसेवासमागतसकलकमलाकर इव राजति ब्रह्मलोके, समुच्चारिततृतीयसवनब्रह्मणि ब्रह्मणि, (२२) ज्वलितवैतानज्वलनज्वालाजटालाजिरेषु आरब्धधर्म्म-साधनशिबिरनीराजनेष्विव सप्तर्षिमन्दिरेषु, अघमर्षणमुषित-किल्बिषगदोल्लाघलघुषु यतिषु, सन्ध्योपासनासीनतपस्विपङ्क्ति-पूतपुलिने प्लवमानपद्मयोनियानहंसदन्तुरोर्मिणि मन्दाकिनी-

वन्दारुमुनीति।—वन्दारुभिः,—वन्दनशीलैः, मुनिवृन्दारकाणां—मुनिमुख्यानां, वृन्दैः,—समूहैः, वध्यमानं—संयुज्यमानं, सन्ध्यायाम् अञ्जलिवनम्—अञ्जलिसमूहः यस्मिन् तथाभूते, मुनिभिः सन्ध्यावन्दनार्थं क्रियमाणाञ्जलिपुटे इत्यर्थः।

(२१) ब्रह्मेति।—ब्रह्मणः उत्पत्तिः,—जन्म यस्मात् तत्, कमलं—नारायण-नाभिपङ्कजमित्यर्थः, तस्य सेवायै समागताः सकलाः कमलाकराः,—कमलसमूहाः; यद्वा,—कमलाकराः,—कमलश्रेष्ठाः, उत्कृष्टकमलानि इत्यर्थः यस्मिन् तथाभूते इव, ("आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते" इति मेदिनी)। राजति—दीप्यमाने। समुच्चारितेति।—समुच्चारितं तृतीयं वनं-सायंकालिकस्नानं, प्रातर्मध्याह्ने सायञ्च सोमयागैकदेशो वा, तत्र ब्रह्म—वेदः येन तथाभूते।

(२२) ज्वलितेति।—ज्वलितस्य—प्रदीप्तस्य, वैतानज्वलनस्य—यज्ञीयाग्नेः, ज्वालाभिः,—शिखाभिः, जटालानि—व्याप्तानि, अजिराणि—अङ्गनानि येषां तादृशेषु। आरब्धेति।—आरब्धं-कृतारम्भं, धर्म्मसाधनं—धर्म्मार्जनहेतुः, शिबिरस्य—स्कन्धावारस्य, नीराजनं—शान्तिकर्म्मविशेषः, यद्वा,—आ ब्ध, धर्म्मसाधन-शिबिरे—सत्का पकरणसाधनस्कन्धावारे, नीराजनाख्यं शान्ति र्म येषु तथोक्तेषु, धर्म्मोपकरणसाधना ी दीपाः नीऽन्तरायमुत्पा येयुरिति हेतोः इति भावः। अघमर्षणेति।—अघानि—पापानि, मर्षयति—नाशयतीति अघमर्षणः,—वैदिक-मन्त्रविशेषः, ("शमनं सर्व्वपापानां जप्यं त्रिष्वघमर्षणम्" इति शास्त्रम्) तेन मुषितानि—हृतानि, किल्बिषाणि—पापानि, गदाः,—रोगाश्च, तैः उल्लाघाः,—स्वस्थाः, अत एव लघवः,—सुबहदेहा इत्यर्थः तेषु, ["किल्बिषगदोल्लाघलघुषु" इत्यत्र "किल्बिषविषगदोल्लाघल षु" इति पाठान्तरे—किल्बिषाणि एव विषाणि, गदाः,—रोगाश्च इत्यर्थ]। यतिषु—चतुर्थाश्रमिषु। सन्ध्येति।—सन्ध्योपासनार्थम् आसीनानाम्—उपविष्टानां, तपस्विनां पङ्क्तिभिः पूतानि—पवित्रीकृतानि, पुलिनानि

जले, जलदेवताऽऽतपत्रे पत्ररथकुलकलत्रान्तःपुरसौधे, निज-मधुरसामोदिनि मधुकृतमधुपमुदि मुमुदिषमाणे कुसुदवने दिवसावसानताम्यत्तामरसमधुरससपीतिव्रते, (२३) सुषुप्सति मृदुमृणालकाण्डकण्टककण्डूयनकुण्डलितकन्धरे धुतपक्षराजि-

—सैकतानि, सद्यो नीरपरित्यक्ततटानि इत्यर्थः यस्य तौ । प्लवमानेति।—प्लवमानः,—सन्तरन्, यः पद्मयोनेः,—ब्रह्मणः, यानहंसः,—वाहनमराल, तेन दन्तुरः,—सञ्जातदन्ता इवेत्यर्थः, ऊर्मयः,—तरङ्गाः यस्य तथोक्ते। ["प्लवमाननलिनयोनियानहंसहासदन्तुरितोर्म्मिणि" इति पाठे—प्लवमानः यः नलिन-योनेः,—पद्मयोनेः, यानहंसः, तस्य हासेन—उल्लासेन, प्रभया वा, दन्तुरिताः,—संवलिताः, स्फुटदन्तत्वात्सहासाः दन्तुरा इवालोक्यन्ते इति भावः, ऊर्म्मयः,—तरङ्गाः यस्य तथाभूते इति विग्रहः]। जलदेवतेति।—जलदेवतायाः,—जलाधिष्ठात्र्याः देव्याः, आतपत्रं—छत्रं तस्मिन्, तथाभूते इत्यर्थः। पत्ररथेति।—पत्ररथाना—पक्षिणां, कुलं—समूहः, तस्य कलत्राणि—स्त्रियः, पक्षिण्य इत्यर्थः, तेषाम् अन्तःपुरस्य सौध—हर्म्म्यभूतमित्यर्थः तस्मिन्। निजेति।—निजेन—स्वकीयेन, मधुरसेन—मकरन्देनेत्यर्थः, आमोदते—उल्लसतीति तथोक्ते। मध्विति।—मधुना कृता मधुपाना—भ्रमराणां, मुत्—आनन्दो यत्र तथाभूते। ["निजमधुरसामोदिनि मधुकृतमधुपमुदि" इत्यत्र "निजमधुमधुरामोदिनि कृतमधुपमुदि" इति पाठे,—निज-मधुना—स्वकीयमकरन्देन, स्वीयमद्येन वा, मधुरः,—मनोज्ञः, आमोदः,—उल्लासः यस्य तथोक्ते, कृता मधुपाना—भ्रमराणां मद्यपाना वा मुत् यत्र तथाविधे इति बोध्यम्]। मुमुदिषमाणे—विकाशं जिगमिषतीत्यर्थः, अन्यत्र,—मोदितुमिच्छति, प्रारिप्स्यमान-गा वाद्यादिगोष्ठीव्रजे इति यावत्, "मत्ताः क्रोशन्ति" इत्यादिवत् अर्थोन्नेयः। दिवसेति।—दिवसस्य अवसानेन ताम्यन्ति—क्लिश्यन्ति, यानि तामरसानि—रक्त-पद्मानि, तेषां मधुरसस्य पीतिः,—पानं, तेन सह वर्त्तमाना सपीतिः, [अनेन प्रेमोत्कर्षः सूच्यते] व्रतं—नियमः यस्य तथाभूते, युगपत् ताम्यत्तामरसमधुरसं पीतवतीत्यर्थः। ["दिवसावसानताम्यत्तामरसमधुरसमधुसपीतिपीते" इति पाठे—दिवसावसानेन ताम्यताम्—अचिरं क्लिश्यतां, तामरसानां मधुरस्य मधुनः सपीतिः,—सहपानं यथा तथा, पीतं—पानं येन तथाभूते। "सपीतिप्रीते" इति पाठे—सपीतिः,—सहपानं, तया प्रीतं तथाभूते]।

(२३) सुषुप्सति—निद्रिद्रासति। मृदिति।—मृदुना—कोमलेन, मृणाल-

वीजितराजीवरजसि राजहंसयूथे, तटलताकुसुमधूलिधूसरित-सरिति सिद्धपुर-पुरन्ध्रिधम्मिल्लमल्लिकागन्धग्राहिणि सायन्तने (२४) तनीयसि निशानिश्वासनिभे नभस्वति, सङ्कोचोदञ्चदुच्चकेसरकोटिसङ्कटकुशेशयकोशकुटीकुटिलशायिनि षट्चरणचक्रे, नृत्योद्धृतधूर्जटिजटाऽटवीकुटजकुड्मलनिभे नभस्तलं

---

काण्डस्य—नालदण्डस्य, कण्टकेन यत् काण्डूयनं—कण्डूति, तेन कुण्डलिता—साचीकृतेत्यर्थ, कन्धरा—ग्रीवा येन तादृशे। धुतेति।—धुताभिः,—कम्पिताभिः, पत्त्रराजिभि,—पत्त्रसमूहै, वीजितं—सञ्चालितम्, उत्पातितमित्यर्थः, राजीवानां—श्वेतकमलाना, रज—पराग येन तथोक्ते। [“राजीवरजसि” इत्यत्र “राजीवसरसि” इति पाठान्तरे—राजीवसर,—पद्मसरोवरं येन तथोक्ते] तटेति।—तटेषु या लता, तास कुसुमानि तेषा धूलि,—परागै, धूसरिता,—धूसरता नीता, सरित,—नद्य येन तथोक्ते। सिद्धेति।—सिद्धाना—देवयोनिविशेषाणा, पुरे—नगरे, या पुरन्ध्र,—स्त्रिय, तासा धम्मिल्लेषु—संयतकेशेषु, (“धम्मिल्ला. संयता: कचा” इत्यमर:) या: मल्लिका:,—तदाख्यकुसुमानि, तासां गन्धग्राही—सौरभवानित्यर्थ तस्मिन्।

(२४) तनीयसि—मन्दसञ्चारिणि इत्यर्थ:। निशानिश्वासनिभे—निशा—रजनी, नायिकेति भाव, तस्या निश्वास, तन्निभे—तत्सदृशे। सङ्कोचेति।—सङ्कोचे—निमीलने, उदञ्चताम्—उद्गच्छताम्, उच्चकेसराणाम्—उन्नतकिञ्जल्कानां, (“किञ्जल्क केसरोऽस्त्रियाम्” इत्यमर) कोटिभि,—अग्रभागै:, सङ्कटानि—आकीर्णानि, यानि कुशेशयानि—कमलानि, तेषा कोशा:,—अभ्यन्तरभागा एव, कुट्य,—क्षुद्रगृहाणि, तेषु कुटिलं—कुण्ठितं यथा तथा, शेते इति तथाभूते। [“कुशेशयकोशकुटीकुटिलशायिनि” इत्यत्र “कुशेशयकोशकोटरकुटीरशायिनि” इति पाठे—तादृशा कुशेशयकोशा,—पद्ममुकुलानि, तेषा कोटराण्येव—अभ्यन्तरा एव, कुटीराणि—क्षुद्रगृहाणि, तेषु शेते इति तथोक्ते इत्यर्थ:]। षट्चरणचक्रे—भ्रमरवृन्दे। नृत्येति।—नृत्येषु—नर्त्तनेषु, उद्धृतानि—उत्पतितानि, धूर्जटे,—हरस्य, जटाऽटव्या:,—जटारूपात् अरण्यात् इत्यर्थ:, यानि कुटजकुड्मलानि तन्निभे—तत्सदृशे, नृत्यतो हरस्य जटाजूटात् उत्पतितकुटजकुड्मलसदृशे इत्यर्थ:। [“नृत्योद्धृतधूर्जटिजटाऽटवीकुटजकुड्मलनिभे” इत्यत्र “नृत्योद्भूतधूर्जटिजटाऽटवीकुटजकुड्मलनिकरनिभे” इति पाठान्तरे—नृत्येषु उद्भूतानि—उत्क्षिप्तानि, धूर्जटे: जटाऽटव्या. यानि कुटज-

(२५) स्तवकयति तारागणे, सन्ध्याऽनुबन्धताम्रे परिणमत्तालफलत्विषि कालमेघमेदुरे मेदिनीं निमीलयति नववयसि तमसि तरुणतरतिमिरपटलपाटनपटीयसि समुन्मिषति यामिनीकामिनीकर्णपूरचम्पककलिकाकदम्बके प्रदीपप्रकरे, (२६) प्रतनुतुहिनकिरणालोकपाण्डुनि आश्यान नीलनीरमुच्यमानकालिन्दीकूलबालपुलिनायमाने शातक्रतवे, क्षपयति

कुड्मलनिकराणि—कुटजाना—गिरिमल्लिकाकुसुमाना, कुड्मलनिकराणि—कोरक समूहा तन्निभे ]।

(२५) स्तवकयति—पुष्पस्तबकवदाचरतीत्यर्थ। सन्ध्येति।—सन्ध्याया अनुबन्धेन—अनुसर न, ताम्र—ताम्रवर्णे तस्मिन्, अत एव परिणमदिति।—परिणमत्—परिपक्वता गच्छत्, यत् तालफलं तस्य त्विष इव त्विष',—कान्तय' यस्य तथाभूते। [ "परिणमत्तालफलवल्कत्विषि" इति पाठान्तरे,—तालफलस्य या त्वक्—वल्कलं, तस्या. त्विष इव त्विष. इत्यर्थः ]। कालमेघमेदुरे—कालमेघ,—कृ मेघ., तद्वत् मेदुर.,—स्निग्ध. तस्मिन्। निमीलयति—स्थगयति, आच्छादयतीत्यर्थ [ "निमीलयति" इत्यत्र "मीलयति" इति पाठेऽपि—स एवार्थ. ]। नववयसि—अभिनवजाते इत्यर्थः। तमसि—तिमिरे। तरुणेति।—तरुणतराणाम्—अभिनवजातानां, तिमिरपटलानाम्—अन्धकारसमूहाना, पाटने—निरसने, पटीयान्—अतिशयेन पटुः तस्मिन्। समुन्मिषति—ज्वलति। यामिनीति।—यामिनी एव कामिनी तस्या. कर्णपूरः,—कर्णभूषणम् एव, चम्पककलिकाकदम्बक तस्मिन्, तन्निभे इति भावः। प्रदीपप्रकरे—प्रदीपनिचये।

(२६) प्रतन्विति।—प्रतनुभि.,—अभिनवोदितत्वात् अल्पालै.. तुहिनकिरणस्य—शीतरश्मे. चन्द्रस्य, आलोकै.,—उद्योतैः. ( "आलोकौ दर्शनोद्योतौ" इत्यमर ) पाण्डु तस्मिन्, पाण्डुवर्णे इत्यर्थः। [ "प्रतनुतुहिनकिरणकिरणलावण्यालोकपाण्डुनि" इति पाठे—तुहिनकिरणस्य किरणाना—रश्मीन', लावण्यालोकै,—प्रभाप्रकाशै., पाण्डु तस्मिन्नित्यर्थ. ]। आश्यानेति।—आश्यानम्—ईषच्छुष्कं, नीलनीरं—कृष्णवर्णसलिलै., मुच्यमान—त्यज्यमानं, [ "मुच्यमानम्" इत्यत्र "मुक्त" इति पाठे—मुक्त—त्यक्तम् ] कालिन्दीकूलस्य—यमुनातीरस्य, बालपुलिनं—नवोत्थित सैकत, तद्वदाचरतीति तथोक्ते। शतं क्रतव,—यज्ञा यस्य सः शतक्रतु., इन्द्र, तस्य इदं, यद्वा,—स अधिष्ठाता यस्य तत शातक्रतवम्—ऐन्द्रः

तिमिरम् आशामुखे खमुचि मेचकितविकचितकुवलयसरसि (२७) शशधरकरनिकरकचग्रहाविले विलीयमाने (२८) मानिनीमनसीव शर्वरीचिकुरचये चाषपत्त्रत्विषि तमसि उदिते. भगवति (२९) उदयगिरितटनिकरकुहरहरिखरनख-मुख-निवह-हेतिनिहत-निजहरिणगलगलितरुधिरचयनिचितमिव लोहिते

सित्यर्थ तस्मिन्। क्षपयति—क्षयं कुर्वति, खण्डयतीत्यर्थः। आशामुखे—दिङ्मुखे। खमुचि—खम्—आकाशं मुञ्चतीति तथोक्ते, आकाश त्यक्त्वा भूमण्डलमाक्रामतीति भाव। मेचकितेति।—मेचकितं—श्यामलता नीत विकचितानां—विकसितानां, ["विकच" इति पाठे—विकचानां—विकास गतानाम्] कुवलयानां—नीलोत्पलानां सर:—सरोवरं येन तादृशे।

(२७) शशधरेति।—शशधरस्य—चन्द्रस्य, करनिकरै:—किरणसङ्घै, [हस्तसमूहैरिति ध्वनि.] य: कचग्रह.,—केशाकर्षणं, तेन आविल—मालिन्य नीत तस्मिन्, अत एव विलीयमाने—विलयं गच्छति, अन्योऽपि केशाकर्षणेन विमानितो लज्जया अदर्शन गच्छतीति भाव।

(२८) मानिनीमनसीव—मानिनीनां—मानवतीनां, कान्त प्रति कुपितानां नारीणामिति यावत्, मनसीव—हृदये इव, शर्वरीणा—शर्वराङ्गनानां, चिकुरचये—केशनिचये, ["चिकुर. कुन्तलो वाल. कच केश. शिरोरुह" इत्यमर। "शर्वरीचिकुरचये" इत्यत्र "शर्वरीशवरीचिकुरचये" इति पाठे—शर्वर्या—रात्री, श[...]णामित्यर्थ., अन्यत् समानम्]। विलीयमाने इत्यस्याधिकरणम्। चाषपत्त्रत्विषि - चाषो नाम पक्षिविशेष, तस्य पत्त्रवत् त्विष,—प्रभा यस्य तादृशे।

(२९) उदयगिरीति।—उदयगिरे —उदयाचलस्य, तटनिकरेषु—प्रस्थभागेषु, यानि कुहराणि—गह्वराणि, तेषु ये हरय:,—सिंहा., स्थिता इति भाव, तेषां खरा,—तीक्ष्णा, ये नखा:, तेषां मुखनिवहा. —अग्रसमूहा एव, हेतय.—अस्त्राणि, तै: निहत.—नाशित., यो निजहरिण.,—स्वोत्सङ्गस्थ: मृग इत्यर्थ:, तस्य गलात्—कण्ठात्, गलिते,—निःसृते, रुधिरचये,—रक्तसमूहे:, निचितमिव—व्याप्तमिव ['उदयगिरिशिखरकटककुहरहरिखरनखरनिवहहेतिनिहतनिजहरिणगलितरुधिरनिचयनिचितमिव" इति पाठे—उदयगिरे शिखरेषु क[...],—नितम्बेषु च, यानि कुहराणि तेषु ये हरय,—सिंहा., स्थिता इति भाव, तेषां खरनखरनिवहा,—तीक्ष्णनखसमूहा. एव, हेतय.,—अस्त्राणि, तै. निहतस्य निजहरिणस्य गलितेन रुधिर-

वपुः उदयरागधरमिव विभावरीवध्वा धारयति श्वेतभानौ, (३०) अचलच्युतचन्द्रकान्तजलधाराधौत इव ध्वस्ते ध्वान्ते, (३१) गोलोकगलितदुग्धविसरवाहिनि दन्तमयमकरमुख-महाप्रणाले इव पूरयितुं प्रवृत्ते पयोनिधिमिन्दुमण्डले, स्पष्टे प्रदोषसमये सावित्री शून्यहृदयामिव किमपि ध्यायन्तीं सास्रां सरस्वतीमवादीत्,—"सखि! त्रिभुवनोपदेशदानदक्षायाः तव पुरो जिह्वा जिह्रेति मे जल्पन्ती। जानासि एव या दुर्वश्याः (३२) विसंष्ठुलाः गुणवत्यपि जने दुर्जनवन्निपतन्ति निर्दाक्षिण्याः क्व भङ्गिन्यो नातिक्रमणीया न रमणीया दैवस्य

---

निचयेन निचितमिवेत्यर्थः] अत एव लोहितं—रक्तम्। उदयरागधरम्—उदये यो रागः,—लौहित्यं, तस्य धरतीति धरम्। ["उदयरागधरमिव" इत्यत्र "उदयरागधरमधरमिव" इति पाठान्तरे—उदयरागधरम्—उदयकालिकरक्तप्रकाशम्, अधरमिव—निम्नोष्ठपुटमिव इत्यर्थः]। विभावरीवध्वाः,—विभावरी—रात्रिरेव, वधूः तस्याः। श्वेतभानौ—शुभ्रकिरणे, चन्द्रमसीत्यर्थः।

(३०) अचलेति।—अचलात्—उदयगिरेरित्यर्थः, च्युतानां—निर्गलितानां, चन्द्रकान्तानां—मणिविशेषाणां, (ये चन्द्रोदये प्रस्रवन्तीति प्रसिद्धिः) जलधाराभिः धौतमिव—क्षालितमिव तस्मिन्, अत एव ध्वस्ते—ध्वंसं गते। ध्वान्ते—तमसि।

(३१) गोलोकेति।—गोलोकात्—गवां लोकात्, गोस्थानात्, गोष्ठादित्यर्थः, मयूखनिचयात् वा, ("स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः। घृणिः,—मयूख इत्यर्थः) गलितान्—निःसृतान्, दुग्धविसरान्—क्षीरप्रस्रवान्, वहतीति तथाभूते। दन्तेति।—दन्तमयं—गजदन्तनिर्म्मितमित्यर्थः, यत् मकरमुखं—मकराख्यजलजन्तुवदनं, तदेव महान् प्रणालः,—जलनिःसरण-मार्गः तस्मिन्निव। प्रवृत्ते—प्रस्तुते। पयोनिधिं—सागरम्, ["पयोनिधिम्" इत्यत्र "पयोधिम्" इति पाठान्तरम्] पूरयितुं—भर्त्तुम्, ["पूरयितुम्" इत्यत्र "आपूर-यितुम्" इति पाठान्तरेऽपि स एवार्थः]। सास्राम्—अश्रुमुखीमित्यर्थः। पुरः,—अग्रतः। जिह्रेति—लज्जते। जल्पन्ती—आलपन्ती। दुर्वश्याः,—वश्यताम् आपादयितु-मशक्याः। ["या दुर्वश्याः" इत्यत्र "यादृश्यः" इति पाठान्तरम्]।

(३२) विसंष्ठुलाः,—निर्मर्य्यादाः। निर्दाक्षिण्याः,—निष्ठुराः। दैवस्य—

वामा वृत्तयः। निष्कारणा च निकारकणिकाऽपि उद्वेजयति मनस्विनोऽपि मानसम् असद्वृशजनात् आपतन्ती। अनवरत-नयनजलधारासिच्यमानः तरुरिव विपल्लवोऽपि सहस्रधा प्ररोहति। अतिसुकुमारञ्च जनं सन्तापपरमाणवो मालती-कुसुममिव म्लानिम् आनयन्ति। महताञ्च उपरि निपतन् अणुरपि सृणिरिव करिणां क्लेशः कदर्थनाय अलम्। (३२) सहजस्नेहपाशग्रन्थिबन्धनाश्च बान्धवभूता दुस्त्यजा जन्मभूमयः। दारयति दारुणः क्रकचपात इव हृदयं संस्तुतजनविरहः। सा न अर्हसि एवं भवितुम्। अभूमिः खलु असि दुःखक्ष्वेड़ाङ्कुरप्रभवाणाम्। अपि च पुराकृते कर्म्मणि बलवति शुभेऽशुभे वा फलकृति तिष्ठति अधिष्ठातरि

---

अदृष्टस्य। वामा,—प्रतिकूला, याः क्षणभङ्गिन्य,—क्षणमात्रेण विध्वंसिन्य., नातिक्रमणीया,—अतिक्रमितुमशक्या, [ "नातिक्रमणीया." इत्यत्र "दुरतिक्रमणीया." इति पाठे—दुःखेनातिक्रमितु शक्या. इत्यर्थ. ]। वृत्तयः,—व्यवहारा, ता दुर्जनवत् गुणवत्यपि जने निपतन्तीति जानास्येवेत्यन्वयः। निष्कारणा—अहेतुका, निकारकणिका—परिभवलेश इत्यर्थ.। उद्वेजयति—व्यथयति। [ "उद्वेजयति" इत्यत्र "कलुषयति" इति पाठेऽपि स एवार्थ. ]। अ शजनात्—अयोग्यजनात्। विपल्लव,—विपदो लेश., पल्लवशून्यश्च। सन्तापपरमाणव,—खेदलेशा, ऊष्मबिन्दवश्च। आनयन्ति—प्रापयन्ति। अणुरपि—अत्यल्पोऽपि। सृणिरिव—अङ्कुश इव। कदर्थनाय—व्यथनाय।

(३२) सहजेति।—सहज,—स्वाभाविक, य स्नेहपाश,—स्नेहः,—प्रणय एव, पाश.,—रज्जु, तेन ग्रन्थिबन्धनं यासा तथाभूता.। क्रकचपात.,—क्रकचः—करपत्र, तस्य पात.,—अङ्गेषु पातनं, स इव संस्तुतजनविरह,—संस्तुता.,—परिचिता, प्रणयिन इति यावत्, ( "संस्तवः स्यात् परिचय." इत्यमर ) जनाः तेषा विरह.,—विच्छेद.। एवं भवितुम्—इत्थं स्वजनविरहिणी भवितुमित्यर्थः। अभूमिः,—अयोग्यस्थानमित्यर्थ.। दुःखेति।—दुःखमेव क्ष्वेडः,—विषं, तस्य अङ्कुरा.—प्ररोहा, तेषां प्रभवाः,—पराक्रमाः, वेगा इत्यर्थः तेषाम्, [ "प्रसवाणाम्" इत्यत्र "प्रसवानाम्" इति पाठे—प्रसवाना—फलानामित्यर्थः ]। पुराकृते—प्राक्तने इति यावत्।

श्रेष्ठे पृष्ठतश्च कोऽवसरो विदुषि शुचाम्? इदन्तु ते त्रिभुवनमङ्गलैककमलम् अमङ्गलभूताः कथमिव मुखम् अपवित्रयन्ति अश्रुबिन्दवः? तदलम् अनया कथया; अधुना कथय, कतमं भुवो भागम् अलङ्कर्त्तुम् इच्छसि? कस्मिन् (२४) अवतितीर्षति पुण्यभाजि प्रदेशे ते हृदयम्? कानि वा तीर्थानि अनुग्रहीतुम् अभिलषसि? केषु वा धन्येषु तपोवनधामसु तपस्यन्ती स्थातुमभिवाञ्छसि? सज्जोऽयम् अनुसरणचतुरः सहपांशुक्रीड़ापरिचयपेशलः प्रेयान् सखीजनः। कृतक्षितितलावतरणसङ्कल्पा अनन्यशरणा चाद्यैव प्रभृति प्रपद्यस्व मनसा वाचा क्रियया च सर्वविद्याविधातारं धातारञ्च स्वश्रेयसाय (२५) स्वचरणरजःपवित्रितत्रिदशासुरमौलिं सुधासूतिकलिकाकल्पितावतंसकं

---

फलकृति—शुभाशुभफलदातरि। अधिष्ठातरि—ईश्वरे। श्रेष्ठे—सर्व्वश्रेष्ठे, नियन्तरीत्यर्थः, तिष्ठतीत्यनेनान्वयः। विदुषि—विद्वज्जने, शुचां—शोकानाम्, अवसरः,—स्थानं, कः?—न कोऽपीत्यर्थः; ईश्वरेच्छया शुभाशुभकर्म्मफलानि सर्व्वैरेव भुज्यन्ते, तदत्र विद्वांसो न शोचन्तीति तात्पर्य्यम्। [ "इदन्तु" इत्यत्र "इदञ्च" इति पाठान्तर ] अपवित्रयन्ति—अपवित्रं कुर्व्वन्ति।

(२४) अवतितीर्षति—अवतरितुमिच्छति। तीर्थानि—पुण्यक्षेत्राणि। सज्जः,—प्रस्तुतः, सह गन्तुमिति शेषः। अनुसरणचतुरः,—आनुगत्यनिपुणः। [ "अनुसरणचतुरः" इत्यत्र "उपचरणचतुरः" इति पाठे—सेवाचतुरः इत्यर्थः ]। सहेति।—सहपांशुक्रीडायां—समेत्य धूलिक्रीडने, यः परिचयः,—समासक्तिः, तेन पेशलः,—परवश इत्यर्थः, त्वदधीन इति यावत्। कृतेति।—कृतः,—विहितः, क्षितितले—भूमण्डले, अवतरणसङ्कल्पो यया तथाभूता। ["प्रेयान्......सङ्कल्पा" इत्यत्र "प्रेयान् सखीजनः क्षितितलावतरणाय" इति पाठान्तरम्]। अनन्यशरणा—नास्ति अन्यत् शरणं—रक्षिता यस्याः तथोक्ता, ("शरणं गृहरक्षित्रोः" इत्यमरः)। प्रपद्यस्व—प्राप्नुहि, आश्रयेत्यर्थः, [ "प्रपद्यस्व" इत्यत्र "प्रतिपद्यस्व" इति पाठान्तरम् ]। धातारं—रक्षितारम्। स्वश्रेयसाय—निजमङ्गलाय। [ "धातारञ्च स्वश्रेयसाय" इत्यत्र "दातारं स्वश्रेयसस्य इति पाठे—स्वश्रेयसस्य—मङ्गलस्य, दातारमित्यन्वयः ]।

(२५) स्वचरणेति।—स्वस्य चरणरजसा—पदरेणुना, पवित्रिताः,—पावित्ताः,

देवदेवं त्रिभुवनगुरुं त्र्यम्बकम् अम्बिकापतिम्। अल्पीयसैव कालेन स ते शोकविरतिं करिष्यति" इति।

(३६) मुक्तमुक्ताफलधवललोचनजललवा सरस्वती प्रत्यवादीत्,—"प्रियसखि! त्वया सह विचरन्त्या न मे काञ्चिदपि पीड़ाम् उत्पादयिष्यति ब्रह्मलोकविरहः शापशोको वा, केवलं कमलासनसेवासुखमार्द्रयति मे हृदयम्। अपि च, त्वमेव वेत्सि मे भुवि धर्म्मसाधनानि सर्वयोगयोग्यानि स्थातुम् स्थानानि" इत्येवमभिधाय विरराम। रणरणकोपनीयमानप्रजागरा च उन्मीलितलोचनैव तां निशामनयत्।

---

त्रिदशानां—देवानाम्, असुराणाञ्च मौलयः,—किरीटाः, धम्मिल्ला वा येन तथोक्तम्; ("मौली किरीटधम्मिल्लौ" इत्यमरः)। ["स्वचरणरजःपवित्रितत्रिदशासुरमौलिम्" इत्यत्र "चरणरज.पवित्रितत्रिदशासुरम्" इति पाठान्तरम्]। सुधेति।—सुधा—पीयूषं, सूते अस्मात् इति सुधासूतिः,—चन्द्रः, तस्य कला एव कलिका तया कल्पितः अवतंसकः,—ललाटभूषणमिति यावत् येन तं, ["कल्पितावतंसकाम्" इत्यत्र "कल्पितकर्णावतंसम्" इति पाठे—कर्णावतंसः,—कर्णभूषणमित्यर्थः]। सः,—त्र्यम्बकः, शोकविरतिं—शोकशान्तिं, ["शोकविरतिं करिष्यति" इत्यत्र "शापशोकविरतिं वितरिष्यति" इति पाठान्तरम्]।

(३६) मुक्तेति।—मुक्ताः,—पातिताः, मुक्ताफलवत् धवलाः,—शुभ्राः, लोचनजललवाः,—अश्रुबिन्दवः यया तथाभूता। ["मुक्तमुक्ताफल" इत्यादेः प्राक् "एवमुक्ता" इत्यधिकः पाठः क्वचित् पुस्तके दृश्यते]। आर्द्रयति—स्नेहयति। "धर्म्मसाधनानि" इत्यत्र "धर्म्मधामानि" इति पाठे—धर्म्मधामानि—धर्म्मक्षेत्राणीत्यर्थः। "सर्व्वयोगयोग्यानि" इत्यत्र च "समाधिसाधनानि योगयोग्यानि" इति पाठे—समाधिः,—चित्तैकाग्र्यं, तत्साधनानि, योगः,—जीवात्मनोः ऐक्यचिन्तनं, तद्योग्यानि। उक्तञ्च,—"आदौ समाधिमातिष्ठेत् ततो योगमुपाचरेत्" इति]। रणरणकेति।—रणरणकेन—उत्कण्ठया, उपनीयमानः,—जायमानः, ["उपनीयमान" इत्यत्र "उपनीतः" इति पाठे—जातः] प्रजागरः यस्याः तथोक्ता। ["उन्मीलितलोचनैव" इत्यत्र "अनिमीलितलोचनैव" इति पाठान्तरम्]।

(३७) अन्येद्युः उदिते भगवति त्रिभुवनशेखरे तुरङ्गमुखखणखणायितखरखलीनकर्षणक्षतचरत्क्षतजेनेव पाटलितवपुषि उदयाचलशिखरचूडामणौ जरत्कृकवाकुचूडारुणारुणपुरःसरे विरोचने रोचमाने (३८) नातिदूरवर्त्ती पितामहविमानहंसपालः पर्य्यटन् अपरवक्त्रम् उच्चैः अगायत्,—

"तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते!।
अवतर कलहंसि! वापिकां पुनरपि यास्यसि पङ्कजालयम् ॥२४॥"

---

(३७) अन्येद्युः,—अन्यस्मिन् दिवसे। ["अन्येद्युः" इत्यत्र "अपरेद्युः" इति पाठान्तरे—अपरदिवसे, तत्परदिने इत्यर्थः]। त्रिभुवनशेखरे—त्रिलोकीशिरोभूषणभूते इत्यर्थः। तुरङ्गेति।—तुरङ्गाणाम्—अश्वानां, सप्तानामिति शेषः, (अश्व। सप्तावलादिति भावः) मुखेषु खणखणायिताः,—खणखणशब्दवन्त इति यावत्, खराः,—तीक्ष्णाः, खलीनाः,—कविकाः, तेषां कर्षणेन चरत्—निःसरत्, अश्वानां मुखेभ्य इति भावः, यत् क्षतजं—रक्तं तेनेव। [अत्र "खणखणायमानखलत्खलीनक्षतनिजतुरगमुखविप्तेन क्षतजेनेव" इति पाठे—खणखणायमानाः खलन्तः ये खलीनाः तैः क्षतानि निजानां तुरगाणां मुखानि तेभ्यः विप्तं—विकीर्णं, निर्गतमिति यावत् तेन]। पाटलितवपुषि—रक्तकलेवरे। ["उदयाचलशिखरचूडामणौ" इत्यत्र "उदयाचलचूडामणौ" इति पाठान्तरम्] जरदिति।—जरन्—स्थविरः, यः कृकवाकुः,—ताम्रचूडः, तस्य चूडा—शिखरं, तद्वत् अरुणः,—रक्तवर्णः, अरुणः,—निजसारथिः यस्य तथाभूते। विरोचने—सूर्य्ये। रोचमाने—दीप्यमाने।

(३८) नातिदूरवर्त्ती—अनतिदूरस्थः। पितामहेति।—पितामहस्य—ब्रह्मणः, विमानहंसस्य—वाहनभूतमरालस्य, पालः,—रक्षकः। [अत्र "नातिदूरवर्त्ती विविच्य पितामहवाहनहंसकुलपालः" इति पाठान्तरम्]। अपरवक्त्रं—तदाख्यम् आख्यायिकासु प्रयोज्यं वृत्तम्; तथा चाह भामहः,—"वक्त्रं चापरवक्त्रञ्च काव्ये काव्यार्थशंसिनि" इति।

तरलयसीति।—अकलुषम्—अनाविलं, अतः स्वच्छमित्यर्थः, मानसं—तदाख्यं सर इत्यर्थः, अन्यत्र,—अकलुषं—निर्म्मलं मानसं यस्य सः अकलुषमानसो ब्रह्मा तस्मिन्, अथवा,—अकलुषं मानसं येषां ते अकलुषमानसाः,—विद्वांसः तेषु, वासेन लालिता—विनोदिता, तत्सम्बुद्धिः हे अकलुषमानसवासलालिते! कलहंसि!—हे राजहंसि!

तच्छ्रुत्वा सरस्वती पुनरचिन्तयत्,—(३९) "अहमिवानेन पर्य्यनुयुक्ता। भवतु, मानयामि मुनेर्वचनम्" इत्युक्त्वा उत्थाय कृतमहीतलावतरणसङ्कल्पा परित्यज्य वियोगविक्लवं स्वपरिजनं ज्ञातिवर्गमपरिगणय्य त्रिः प्रदक्षिणीकृत्य चतुर्मुखं कथमप्यनुनयन्ती निवर्त्तितानुयायिव्रतिव्राता ब्रह्मलोकतः सावित्रीद्वितीया निर्जगाम॥

ततः क्रमेण (४०) ध्रुवपदप्रवृत्तां धर्म्मधेनुमिव अधो

---

अन्यत्र—कलहंसीव शुभाङ्गि। कमलवनविहारिणि। सरस्वति। किं—कथम्, उन्मुकाम्—उत्कण्ठाव्यञ्जिकामिति यावत्, कातरामिति भावः, दृशं—दृष्टिं, तरलयसि?—इतस्ततो विक्षिपसि? वापिकां—दीर्घिकाम्, अन्यत्र,—उप्यन्ते कर्म्माणि अस्यामिति वापिका—कर्म्मभूमिरित्यर्थः ता, मर्त्त्यलोकमित्यर्थः, अवतर—अवतीर्णा भव। नचास्या चिरस्थितिरित्याह, पुनरिति।—पुनरपि पङ्कजानां—लक्षणया काञ्चनकमलानाम्, आलयः तं, मानसं सर इत्यर्थः, अन्यत्र—पङ्कजालयं—पद्मयोनिं, प्राप्स्यसि—प्राप्स्यसि। अत्र श्लिष्टविशेषणमहिम्ना कलहंस्या वापिकाऽवतरणरूपात् अप्रस्तुतात् सरस्वत्या भूतलावतरणरूपस्य प्रस्तुतस्यावगमात् अप्रस्तुतप्रशंसा नाम अलङ्कारः। अपरवक्त्राख्यं वृत्तम्॥ २४॥

(३९) अहमिवेति।—अनेन—यानहंसपालेन, अहं पर्य्यनुयुक्तेव—व्यङ्ग्येन बोधितेव। मुनेः,—दुर्वाससः। वचनं—शापवाक्यम्। मानयामि—अङ्गीकरोमि, प्रतिपालयामीत्यर्थः। वियोगविक्लवं—वियोगेन—स्वविच्छेदेन, विक्लवं—विह्वलं, कातरमित्यर्थः, ["वियोगविकलम्" इति पाठान्तरम्], अपरिगणय्य—अगणयित्वा। ["अवगणय्य" इति पाठान्तरम्। "अवगणा" इत्यधिकः पाठः क्वचित्, तत्र—अवगणा—सावित्री विना नान्यपरिजनेत्यर्थः.]। चतुर्मुखं—ब्रह्माणम्। अनुनयन्ती—सान्त्वयन्ती। निवर्त्तितेति।—निवर्त्तिताः,—मया सह मा गच्छतेति निषिद्धाः, अनुयायिनः,—अनुगच्छन्तः, व्रतिनां—तापसानां, व्राताः,—सङ्घाः यया तथोक्ता। ["अनुनयनिवर्त्तितानुयायिव्रतिव्राता" इति पाठान्तरम्]।

(४०) ध्रुवेति।—ध्रुवस्य नित्यस्य वस्तुनः, विष्णोरित्यर्थः, पदात्—चरणात्, यद्वा,—पदात्—तृतीयपदस्थापनस्थानात्, आकाशादिति यावत्, प्रवृत्तां—निःसृतां; ["ध्रुवपदप्रवृत्ताम्" इत्यत्र "ध्रुवप्रवृत्ताम्" इति पाठे—ध्रुवं—नित्यं, वियदित्यर्थः, तस्मात् प्रवृत्ता] धर्म्मधेनुमिव धर्म्मस्य धेनुः धर्म्मधेनुः,—होमधेनुरित्यर्थः तामिव।

धावमानधवलपयोधराम्, उद्धुरध्वनिम्, अन्धकान्तक-मौलिमालतीमालिकाम्, आल मानवालखिल्यरुद्धरोधसम्, (४१ अरुन्धतीधौततारवत्वचं, त्वङ्गत्तुङ्गतरङ्गतरत्तरल-तरतारतारकां, तापसवितीर्णतरलतिलोदकपुलिनाम्, (४२) आप्लवनपूतपितामहपातितपितृपिण्डपाण्डुरितपारां, पर्य्यन्तसुखसुप्त-सप्तर्षिकुशशयनसूचित-सूर्य्यग्रहणसूतकोपवासाम्,

अध इति।—अधो धावमानं—निःसरत्, धवलं—शुभ्रं, पयः,—जलं, धारयति या तादृशीम्, अन्यत्र,—अधो धावमानाः,—अधोमुखाः, धवलाः पयोधराः,—स्तनाः यस्यास्ताम्। उद्धुरध्वनिम्—उद्धुराः,—उत्कटाः, कलकलायमाना इत्यर्थः, ध्वनयः यस्याः ताम्, अन्यत्र,—उद्भटनिनादाम्। अन्धकेति।—अन्धको नाम कश्चिदसुरः, तस्य अन्तयति—नाशयतीति अन्तकः,—विनाशकः, हर इत्यर्थः, तस्य मौलिः,—जटाजूटमिति भावः, तस्य मालतीमालिका—मालतीपुष्पमाला, तत्सदृशीत्यर्थः ताम्। [ "अन्धकान्तक" इत्यत्र "अन्धकमथन" इति पाठेऽपि—स एवार्थः ]। आलीयमानेति।—आलीयमानैः,—अतिक्षुद्रत्वात् विलयं गच्छद्भिरिवेति भावः, वालखिल्यैः,—मुनिविशेषैः, रुद्धं—संश्लिष्टं, रोधः,—तटं यस्याः ताम्।

(४१) अरुन्धतीति।—अरुन्धत्या—वशिष्ठगृहिण्या, धौता—क्षालिता, तरोरियं तारवी—तरुसम्बन्धिनी, त्वक् यस्याः तथोक्ताम्। त्वङ्गत्तुङ्गतरङ्गतरत्तरलतरतारतारकामिति।—त्वङ्गत्सु—चलत्सु, तुङ्गेषु—उन्नतेषु, तरङ्गेषु—ऊर्मिषु, तरन्त्यः,—प्रतिफलन्त्यः, तरलतराः,—अतिचञ्चलाः, ताराः,—महत्यः, तारका यस्यां ताम्। तापसेति।—तापसैः,—मुनिभिः, वितीर्णानि—दत्तानि, तरलानि—तरङ्गसङ्गात् चञ्चलानि, तिलोदकानि—तिलयुक्ततर्पणसलिलानि, पुलिनेषु—सैकतेषु यस्याः ताम्। [ अत्र "तापसवितीर्णतरलतिलोदकपुलकितपुलिनाम्" इति पाठे—तापसैः वितीर्णेन—दत्तेन, तरलेन तिलोदकेन पुलकितानि—उल्लासितानि, उद्भासितानीत्यर्थः, पुलिनानि यस्याः तामित्यर्थः।

(४२) आप्लवनेति।—आप्लवनेन—स्नानेन, पूतः,—पवित्रः, यः पितामहः,—ब्रह्मा, तेन पातितैः,—अर्पितैः, पितृपिण्डैः,—पितृभ्यः,—अग्निष्वात्तादिभ्यः, दत्तैः पिण्डैः, पाण्डुरितः,—पाण्डुवर्णीकृतः, पारः,—तटभूमिर्यस्यास्तथोक्ताम्। पर्य्यन्तेति।—पर्य्यन्तेषु—प्रान्तदेशेषु, सुखेन सुप्ताना—निद्रिताना, सप्तानाम् ऋषीणा—मरीच्यादीना, कुशा एव शयनानि—शय्याः, तैः सूचितः,—अनुमितः, सूर्य्य-

(৪৩) আচমনশুচিশচীপতিমুচ্যমানশিবার্চনকুসুমনিকরশারাং, শিবপুরপতিতনির্মাল্যমন্দারদামকাম্, (৪৪) অনাদরদারিত-মন্দরদরীদৃষদম্, অনেকনাকনায়ককামিনীকুচকলসলুলিত-বিগ্রহাং, গ্রাহগ্রাবগ্রামস্খলিতমুখরবহুস্রোতসং, (৪৫) সুষুম্না-সূতশশিসুধাশীকরস্তবকতারকিততীরাং, ধিষণাগ্নিকার্য্যধূম-

গ্রহণস্য সূতকেন—অশৌচেন, উপবাসঃ,—অনশনং যস্যাঃ তাং, [ "সূর্য্যগ্রহণ" ইত্যত্র "সূর্য্যগ্রহ" ইতি পাঠান্তরেঽপি স এবার্থঃ ]। সূর্য্যগ্রহণজনিতাশৌচে সম্পর্কঃ অনশনেন কৃশশয়নমবিশয়ন্তীতি ভাবঃ। [ "পর্য্যন্তসুখসুপ্ত" ইত্যত্র "পর্য্যন্তসুপ্ত" ইতি পাঠান্তরম্ ]।

(৪৩) আচমনেতি।—আচমনেন শুচিঃ,—পূতঃ, যঃ শচীপতিঃ,—ইন্দ্রঃ, তেন মুচ্যমানৈঃ,—অর্প্যমাণৈঃ, শিবার্চনকুসুমনিকরৈঃ,—শিবপূজাপুষ্পসমূহৈঃ, শারা—বিচিত্রবর্ণা তাম্। [ অত্র "আচমনশুচিশচীপতিমুচ্যমানার্চনকুসুমনিকরশারাম্" ইতি পাঠান্তরম্ ]। শিবেতি।—শিবপুরাত্—কৈলাসাদিত্যর্থঃ, পতিত নির্ম্মাল্যং—নিবেদিত, শিবায়েতি ভাব, মন্দারদামক—মন্দারপুষ্পমাল্যং যস্যা তথোক্তাম্।

(৪৪) অনাদরেতি।—অনাদরেণ—অবহেলয়া, দারিতাঃ,—খণ্ডিতাঃ, মহা-জবেনেতি ভাবঃ, মন্দরদর্য্যাঃ,—মন্দরাচলগুহায়াঃ, দৃষদঃ,—প্রস্তরা যয়া তাম্। অনেকেতি।—অনেকেষা—বহূনা, নাকনায়কানা—দেবানা, যাঃ কামিন্যঃ,—কান্তাঃ, তাসা কুচকলসৈঃ,—স্তনকুম্ভৈঃ, লুলিত,—সঞ্চালিতঃ, বিগ্রহঃ,—কলেবরং, জলমন-মিতি ভাবঃ যস্যাঃ তাম্। [ অত্র "অনেকনাকনায়কনিকায়কামিনীকুচকলস-বিলুলিতবিগ্রহাম্" ইতি পাঠে—অনেকা,—বহবঃ, নাকনায়কানা নিকায়স্য—নিবাসস্য, যাঃ কামিন্যঃ, তাসাং কুচকলসৈর্বিলুলিতঃ বিগ্রহঃ যস্যাস্তামিত্যর্থঃ ]। গ্রাহেতি।—গ্রাহাণা—জলজন্তুভেদানা, গ্রাবগ্রামাণা—প্রস্তরসমূহানাঞ্চ, স্খলিতেন—ইতস্ততঃ পতনেন, মুখরাণি—শব্দিতানি, বহূনি স্রোতাংসি যস্যাঃ তাম্। [ অত্র "গ্রাহগ্রাবগ্রামস্খলনমুখরিতস্রোতসম্" ইতি পাঠান্তরম্ ]।

(৪৫) সুষুম্নেতি।—সুষুম্না—রবিরশ্মিবিশেষ, তস্যাঃ সূত,—উৎপন্নঃ, যঃ শশী—চন্দ্রঃ, তস্য সুধানাম্—অমৃতানাম্, অমৃতময়ময়ূখানামিতি যাবত্, শীকরস্তবকৈঃ,—বিন্দুগুচ্ছৈঃ, তারকিত—তারকারাজিতমিবেতি ভাব, তীরং যস্যাঃ তাম্; [ "সুষুম্নাসুতশশিসুধাশীকরস্তবকতারকিততীরাম্" ইতি পাঠে—সুষুম্নাখ্য-রবিরশ্মেঃ সুতঃ,—নিঃসৃতঃ, যঃ শশী, অন্যত্ সমানম্ ] তদুক্তম্,—"অর্কা-

धूसरितसैकतां, सिद्धविरचितवालुकालिङ्गलङ्घनत्रासविद्रुतविद्याधरां, निर्मोकपट्टिकामिव गगनोरगस्य, (४६) लीलाललाटिकामिव त्रिपिष्टपस्य, विक्रयवीथीमिव पुण्यपण्यसञ्चयस्य, दत्तार्गलामिव नरकनगरस्य, अंशुकोष्णीषपट्टिकाम् इव सुमेरोः, दुकूलकदलिकामिव कैलासकुञ्जरस्य, पद्धतिम् इव अपवर्गस्य, (४७) नेमिमिव कृतयुगचक्रस्य,

विनिःसृतः प्राची यत् यात्युत्तरतः शशी" इति। धिषणेति।—धिषणस्य—बृहस्पतेः, ("बृहस्पतिः सुराचार्य्यो गीष्पतिर्धिषणो गुरुः" इत्यमरः) यत् अग्निकार्य्यम्—अग्निहोत्रव्यापारः, तस्य धूमेन धूसरितानि—मलिनीकृतानि, सैकतानि यस्याः ताम्। सिद्धेति।—सिद्धैः,—देवयोनिविशेषैः, विरचितानि—पूजार्थं विनिर्म्मितानि, यानि वालुकालिङ्गानि—वालुकामयशिवलिङ्गानि, तेषां लङ्घनात् त्रासेन—भयेन, सिद्धदेयशापजनितेनेति भावः, विद्रुताः,—पलायिताः, विद्याधराः,—देवयोनिभेदाः यस्यां ताम्। निर्म्मोकपट्टिकामिव—कञ्चुकपटीमिव। ["निर्म्मोकमुक्तिमिव" इति पाठे—निर्म्मोकस्य—कञ्चुकस्य, मुक्तिः तामिव, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् मुक्तनिर्म्मोकमिवेत्यर्थः]। गगनमेव उरगः,—सर्पः तस्य, [गगनस्य कृष्णवर्णत्वात् निर्म्मोकस्य शुक्लवर्णत्वाच्च तथोक्तिरुच्यते]।

(४६) लीलेति।—लीलाललाटिकामिव—विलासार्थं भालभूषणमिवेत्यर्थः। त्रिपिष्टपस्य—स्वर्गस्य,यद्वा—त्रयाणां पिष्टपानां समाहार इति समासे त्रिपिष्टपं—त्रिलोकी तस्य, ["त्रिविष्टपविटस्य" इति पाठे—त्रिविष्टपमेव विटः,—धूर्त्तलम्पटविशेषः तस्य]। विक्रयवीथीमिव—विक्रयस्थानमिव ; यद्वा,—विक्रयपरम्परामिव। पुण्यानि पण्यानीव —विक्रेयद्रव्याणीव, तेषां सञ्चयः,—समूहः तस्य, [अत्र "पुण्यपण्यस्य" इति पाठान्तरम्]। दत्तार्गलामिव—दत्ताः अर्गलाः,—द्वाररोधकदण्डविशेषाः तामिव। नरकनगरस्य—नरकमेव नगरं तस्य, ["नरकनगरद्वारस्य" इति पाठान्तरम्] अंशुकेति। —अंशुकं—सूक्ष्मवसनं, तेन निर्म्मिता उष्णीषपट्टिका—शिरोवेष्टनपटी तामिव। ["सुमेरोः" इत्यत्र "सुमेरुनृपस्य" इति पाठे—सुमेरुर्नृपः इव तस्य, उपमितिसमासः] दुकूलकदलिकामिव—वस्त्रनिर्मितवैजयन्तीमिव। ["दुकूल" इत्यत्र "दुगूल" इति पाठान्तरे—दुगूलशब्दः दुकूलसमानार्थको बोध्यः]। कैलासकुञ्जरस्य—कैलासः कुञ्जर इव तस्य कैलासाद्रिरूपगजस्य। पद्धतिमिव—सरणिमिव। अपवर्गस्य—कैवल्यस्य।

(४७) नेमिमिव—धारामिव। कृतयुगचक्रस्य—कृतयुगं—सत्ययुगं, चक्रमिव

सप्तसागरराजमहिषीं मन्दाकिनीमनुसरन्ती मर्त्यलोकम् अवातरत्, अपश्यत् च अम्बरतलस्थितैव हारम् इव वरुणस्य, आतपत्रनिकरमिव चन्द्राचलस्य, शशिमणिनिष्यन्दम् इव विन्ध्यस्य, कर्पूरद्रुमद्रवप्रवाहमिव दण्डकारण्यस्य, लावण्यरस-प्रस्रवणमिव दिशां, स्फटिकशिलापट्टशयनमिव अम्बरश्रियः, (४८) स्वच्छशिशिरसुरसवारिपूर्णं भगवतः पितामहस्य अपत्यं हिरण्यबाहुनामानं महानदं, यं जनाः शोण इति कथयन्ति। दृष्ट्वा च तं तदीयरामणीयकहृतहृदया तस्यैव तीरवासम् अरोचयत्, उवाच च सावित्रीं,—"सखि! मधुर-

---

तस्य, पर्य्यायेण परिवर्त्तनशीलत्वादिति भावः; अन्यत्,—कृताः,—निर्म्मिताः,युगाः,—युग-काष्ठानि येषां तथाभूतानि, चक्राणि यस्य तस्य, रथस्येत्यर्थः। [अत्र "कृतयुगस्य" इति पाठान्तरम्]। सप्तेति।—सप्तानां सागराणां समाहारः सप्तसागरं तस्य; यद्वा,—सप्त च ते सागराश्चेति सप्तसागराः, राजान इव,तेषां महिषी—प्रधानपत्नी ताम्; यद्वा,—सप्तसागरराजः,—क्षीरसमुद्रः, तस्य महिषी ताम्। ["अवातरत्" इत्यत्र "अवततार" इति पाठान्तरम्]। अम्बरतलस्थितैव—आकाशस्थितैव। हारमिव—मुक्तामाला-मिव। वरुणस्य—जलाधिपतेः। आतपत्रनिकरमिव—छत्रपरम्परामिव, ["आतपत्र-निकरमिव" इत्यत्र "अरतनिर्झरमिव" इति पाठान्तरम्]। चन्द्राचलस्य—चन्द्राख्यस्य पर्व्वतस्य, शशिमणिनिष्यन्दमिव—चन्द्रकान्तमणिनिसृतजलप्रवाहमिव। कर्पूरेति।—कर्पूरद्रुमस्य—कर्पूरतरोः, द्रवप्रवाहः,—निष्यन्दपरम्परा तमिव। स्फटिकेति।—स्फटिकशिला—स्फटिकमणिः, तस्याः पट्टमेव शयनं—शय्या तदिव। ["स्फटिकशिला" इत्यत्र "स्फाटिकशिला" इति पाठान्तरे—स्फटिकमणिमयमित्यर्थः]। अम्बरश्रियः,—गगनलक्ष्म्याः। ["श्रियः" इत्यत्र "श्रियाः" इति पाठान्तरम्]।

(४८) स्वच्छेति।—स्वच्छानि—निर्म्मलानि, शिशिराणि—शीतलानि, सुरसानि—सुस्वादानि, वारीणि—जलानि, तैः पूर्णः तम्। ["हिरण्यबाहुनामानम्" इत्यत्र "हिरण्यवाहनामानम्" इति पाठान्तरम्]। तदीयेति।—तस्य इदं तदीयं—शोण-सम्बन्धि, यत् रामणीयकं—मनोहारित्वं, तेन हृतम्—आकृष्टं, हृदयं यस्याः तथाभूता। ["तदीयरामणीयकान्तहृदया" इत्यत्र "रामणीयकहृतहृदया" इति पाठान्तरम्।

मयूरविरुतयः (४९) कुसुमपांशुपटलसिकतिलतरुतलाः, पुष्पपरिमलमत्तमधुपश्रेणीवीणारणितरमणीयाः प्रीणयन्ति मां मन्दाकिनीद्युतेरस्य महानदस्योपकण्ठभूमयः, पक्षपाति च मे मनः अत्रैव स्थातुम्" इति। अभिनन्दितवचना च "तथा" इति तया तस्य पश्चिमे तीरे वासमरोचयत्। एकस्मिंश्च शुचौ शिलातलसनाथे तटलतामण्डपे गृहबुद्धिं बबन्ध। विश्रान्ता च नातिचिरादुत्थाय सावित्र्या सार्द्धम् उच्चितार्चनकुसुमा सस्नौ। (५०) पुलिनपृष्ठप्रतिष्ठापितशिवलिङ्गा च भक्त्या परमया पञ्चब्रह्मपुरःसरां सम्यङ्मुद्रां बबन्ध। विहितपरि-

"तीरवासमरोचयत्" इत्यत्र "तीरे वासमरचयत्" इति पाठान्तरम्]। मधुरेति।—मधुराः,—मनोहारिण्यः, मयूराणां विरुतयः,—निनादाः यत्र तथाभूताः।

(४९) कुसुमेति।—कुसुमानां पांशुपटलैः,—परागनिचयैः, सिकतिलाः,—सैकतवन्तः, तरूणां—वृक्षाणां, तलाः,—अधोदेशाः यत्र तथाभूताः। पुष्पेति।—पुष्पाणां परिमलेन—सौरभेण, मत्तानां मधुपानां—भ्रमराणां, श्रेणी—सङ्घः, सैव वीणा, तस्याः रणितेन—निनादेन, रमणीयाः। ["परिमलमत्तमधुपवेणी" इति पाठे—परिमलेन, पुष्पाणामिति भावः, मत्तानां मधुपानां वेणी—श्रेणीत्यर्थः]। मन्दाकिनीद्युतेः,—मन्दाकिन्याः द्युतिरिव द्युतिर्यस्य तथोक्तस्य। ["रमयन्ति मां मन्दीकृतमन्दाकिनीद्यु ." इति पाठे—मन्दीकृता—खर्वीकृता, मन्दाकिन्याः द्युतिः येन तथाभूतस्येत्यर्थः]। पक्षपाति—प्रणयीत्यर्थः, आसक्तमिति यावत्। ["मनः" इत्यत्र "हृदयम्" इति पाठान्तरम्। "वासमरोचयत्" इत्यत्र "समवातरत्" इति पाठान्तरम्]। शिलातलसनाथे—शिलाखण्डसमन्विते। तटलतामण्डपे—तटस्थितलतानिर्मितवासगृहे। बबन्ध—कृतवतीत्यर्थः। सस्नौ—स्नातवती।

(५०) पुलिनेति।—पुलिनस्य—सैकतदेशस्य, पृष्ठे—उपरि, प्रतिष्ठापितं—सस्थापितं, शिवलिङ्गं यया तथोक्ता। ["प्रतिष्ठापितशिवलिङ्गा" इत्यत्र "प्रतिष्ठितसैकतशिवलिङ्गा" इति पाठान्तरे—प्रतिष्ठितं—स्थापितं, सैकतं—बालुकामयं, शिवलिङ्गं यया सा]। पञ्चेति।—पञ्चब्रह्माणि—सद्योजात-वामदेवाघोर-तत्पुरुषेशानरूपाणि, पुरःसराणि—अग्रगण्यानि यस्याः तादृशी, मुद्रा—कराङ्गुलिसंयोगविशेषरूपा, सम्यक्—यथाविधि, बबन्ध—कृतवतीत्यर्थः, प्रथमं सद्योजातपूजाविधा-

करा अविगीताग्रहा अवनिपवनगगनतपनतुहिनकिरणदहनसलिलयजमानमयीर्मूर्त्तीरष्टावपि ध्यायन्ती सुचिरमष्टपुष्पिकामदात्। अयत्नोपनतेन फलमूलादिना अमृतरसमपि (५१) अतिशिशयिषमाणेन तेन च स्वादुना शिशिरेण शोणवारिणा शरीरस्थितिम् अकरोत्। (५२) अतिवाहितदिवसा च तस्मिन् एव लतामण्डपशिलातले कल्पितपल्लवशयना सुष्वाप। अन्येद्युरपि अनेनैव क्रमेण नक्तन्दिनम् अत्यवाहयत्।

---

यिनी, ततः वामदेवपूजासम्पादनी, तत्पश्चात् अघोरपूजासाधनी, तदनन्तरं तत्पुरुषार्चासम्पादनी, अनन्तरम् ईशानपूजाविधायिनीत्येवं पञ्चमुद्राविधानेन पञ्चब्रह्माणि पूजयामास इति भावः। विहितपरिकरा—कृतपूजाविधाना। अविगीताग्रहा—अविगीतः,—अनिन्द्यः, आग्रह,—अभिनिवेश यस्याः तथाभूता, एकाग्रचित्तेत्यर्थः। अवनीति।—अवनिः,—क्षितिः, पवनः,—वायुः, गगनम्—आकाशं, तपनः,—सूर्य्यः, तुहिनकिरणः,—सोमः, दहनः,—अग्निः, सलिल—जलं, यजमानः,—याज्ञिकः, एतन्मय्यः,—अवन्याद्यात्मिकाः ताः, अष्टौ मूर्त्तीः, शिवस्येति भावः। [ "मुद्राबन्धविहितपरिकरा ध्रुवागीतिगर्भामवनिपवनवनगगनदहनतपनतुहिनकिरणयजमानमयीः" इति पाठान्तरे—मुद्राबन्ध,—आवाहनाद्यर्थं विशिष्टः कराङ्गुलिसन्निवेशविशेषः, तेन विहित,—कृतः परिकरः—पूजाविधानं यस्या तथाभूता, ध्रुवागीतिगर्भा—ध्रुवा—ध्रुवाख्या, गीतिः,—गेयविशेषः, छन्दोविशेषो वा, गर्भे—अभ्यन्तरे यस्याः ताम्, अन्तराऽन्तरा गीतिपूर्विकाम् अष्टपुष्पिका दत्तवती र्थः। वनं—जल. जलमयी मूर्त्तिरित्यर्थ ]। ध्यायन्ती—चिन्तयन्ती। अष्टपुष्पिकाम्—अष्टौ पद्मादिपुष्पविशेषान्, यद्वा,—आसनवर्गप्रभृतिषु अष्टसु प्रत्येकम् अष्टपुष्पिकाम्। अदात्—दत्तवती। अयत्नोपनतेन—अनायासोपलब्धेन। [ "फलमूलादिना" इत्यत्र "फलमूलेन" इति पाठान्तरम् ]।

(५१) अतिशिशयिषमाणेन—अतिशयितुमिच्छता। स्वादुना—सुस्वादेन, [ "स्वादिम्ना" इति पाठे—अतिस्वादनतेत्यर्थः ]। शिशिरेण—शीतलेन। शोणवारिणा—शोणनदसलिलेन। शरीरस्थितिमिति—न त्वाटप्तिभोजनम्। अन्येद्युः,—अन्यस्मिन्नहनि।

(५२) अतिवाहितदिवसा—अतिक्रान्तदिना।

एवमतिक्रामत्सु दिवसेषु, गच्छति च काले, (५३) याममात्रमिव गते रवौ इतरस्यां दिशि (५४) प्रतिशब्दपूरितगह्वरं गम्भीरतरं (५५) तुरङ्गमहेषितोद्यमम् अशृणोत्। उपजातकुतूहला च निर्गत्य लतामण्डपाद्विलोकयन्ती (५६) विकचकेतकगर्भपत्रपाण्डुरं रजःसङ्घातं नातिदवीयसि प्रदेशे सम्मुखम् आपतन्तम् अपश्यत्। क्रमेण च (५७) सामीप्योपजायमानाभिव्यक्तिनि तस्मिन् एव महति शफरोदरधूसरे रजसि पयसीव मकरचक्रं प्लवमानं पुरः प्रधावमानेन, (५८) प्रलम्बकुटिलकच-

(५३) याममात्रमिव—प्रहरमात्रमिव, गते—उदिते। [ "याममात्रोद्गते" "याममात्रोद्गते" इति पाठद्वये—प्रहरमात्रोद्गते इत्यर्थः ]। इतरस्याम्—अन्यस्याम। [ "इतरस्याम्" इत्यत्र "उत्तरस्याम्" इति पाठान्तरम्। "दिशि" इत्यत्र "ककुभि" इति पाठान्तरम् ]।

(५४) प्रतिशब्देति।—प्रतिशब्देन—प्रतिध्वनिना, पूरितानि गह्वराणि येन तम्। [ "प्रतिशब्दपूरितवनगह्वरम्" इति पाठान्तरम्। "गम्भीरतरम्" इत्यत्र "गम्भीरतारतरम्" इति पाठे—गम्भीरश्चासौ तारः,—महांश्चेति गम्भीरतारः, अतिशयेन गम्भीरतारः गम्भीरतारतरः तम् ]।

(५५) तुरङ्गमेति।—तुरङ्गमाणां हेषितानि—शब्दविशेषाः, तेषाम् उद्यमः,—उद्योगः तम्। [ "तुरङ्गमहेषितोद्यमम्" इत्यत्र "तुरङ्गहेषितह्रादम्" इति पाठे—तुरङ्गाणां हेषितमिव ह्रादः,—निनादः तम् ]।

(५६) विकचेति।—विकच—विकसितं, यत् केतकगर्भपत्रं, तद्वत् पाण्डुरं—शुभ्रम्। [ "केतक" इत्यत्र "केतकी" इति पाठान्तरम् ]। रजःसङ्घात—धूलिसञ्चयम्। नातिदवीयसि—अनतिदूरवर्त्तिनीत्यर्थः। आपतन्तम्—आगच्छन्तम्।

(५७) सामीप्येति।—सामीप्येन—नैकट्येन, उपजायमाना अभिव्यक्तिः,—स्फुटता यस्य तादृशे। [ "अभिव्यक्तिनि" इत्यत्र "अभिव्यक्ति" इति पाठे—अभिव्यक्तिः यस्य तादृशम् इति अश्ववृन्दम् इत्यस्य विशेषणम् ]। शफरेति।—शफरस्य—मत्स्यविशेषस्य, उदरवत् धूसरे तस्मिन्। मकरेति।—मकरचक्रं—मकराः,—जलजन्तुभेदाः, तेषां चक्रं—समूहं तदिव। प्रधावमानेन—द्रुतगामिनेत्यर्थः।

(५८) प्रलम्बेति।—प्रलम्बेन—प्रकर्षेण लम्बमानेन, कुटिलेन—कुञ्चितेन,

पल्लवघटितललाटतटचूलिकेन, (५९) धवलदन्तपत्रद्युतिहसितकपोलभित्तिना, (६०) पिनद्धकृष्णागुरुपङ्कच्छुरणकषायकञ्चुकेन, (६१) उत्तरीयकृतशिरोवेष्टनेन, (६२) वामप्रकोष्ठनिविष्टहाटककटकेन, (६३) द्विगुणपट्टिकागाढग्रन्थिग्रथितासिधेनुना, सततव्यायामकृशकर्कशशरीरेण, वनहरिणयूथेनेव

---

काच',—केशः, पल्लव इव, कोमलत्वात्, तेन घटिता—बद्धा, ललाटतटे—भालदेशे, चूलिका—चूडा येन तथोक्तेन, [ "ललाटतटचूल्किन" इत्यत्र "ललाटजूटकेन" इति पाठे—स एवार्थः ]।

(५९) धवलेति।—धवलस्य—श्वेतस्य, दन्तपत्रस्य—गजदन्तनिर्मितकर्णाभरणभेदस्य, [ "दन्तपत्र" इत्यत्र "दन्तपत्रिका" इति पाठान्तरम् ] द्युतिः,—प्रभा, तया हसिता—उद्भासिता, कपोलभित्तिः,—गण्डदेशः यस्य तेन।

(६०) पिनद्धेति।—पिनद्धः,—परिहितः, कृष्णागुरुपङ्कस्य—दृष्टगन्धद्रव्यविशेषस्य, छुरणेन—अधिवासनेन, कषायः,—सुरभिः, कञ्चुकः,—वारबाणः येन तेन। [ "पिनद्धकृष्णागुरुपङ्ककल्कच्छुरणकृष्णशबलकषायकञ्चुकेन" इति पाठे—पिनद्धः,—बद्धः, कृष्णागुरुपङ्क एव कल्कः,—चूर्णं, तस्य छुरणात्—सम्श्लेपात्, कृष्णः शबल',—स्वतोऽन्यवर्णत्वात् चित्रितः, कषायः,—सुरभिः, कञ्चुकी येन तथाभूतेन ]।

(६१) उत्तरीयेति।—उत्तरीयेण कृतं शिरोवेष्टनम्—उष्णीषं येन तथोक्तेन।

(६२) वामेति।—वामे प्रकोष्ठे—"प्रकोष्ठमन्तरं विद्यादरत्निमणिबन्धयोः" इत्युक्ते करावयवे, निविष्टः—धृतः, हाटककटकः—स्वर्णवलयः येन तथोक्तेन, [ "हाटककटकेन" इत्यत्र "स्पष्टहाटककटकेन" इति पाठान्तरे—स्पष्टः—सुव्यक्तः, स्थूलमित्यर्थः ]।

(६३) द्विगुणेति।—द्विगुणा—द्विरावृत्ता, या पट्टिका—पट्टवसनखण्डं, तस्याः गाढेन—दृढेन, ग्रन्थिना ग्रथिता—बद्धा, असिधेनुका—छुरिका येन तथोक्तेन, [ "स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका" इत्यमरः ]। [ "द्विगुणपट्टपट्टिका" इति पाठान्तरे—पट्टस्य—पट्टवसनस्य पट्टिका—खण्डमित्यर्थः ]। सततेति।—सततेन—अविरतेन, व्यायामेन—अङ्गचालनविशेषेण, कृशं—क्षीणं, कर्कशं—कठिनञ्च, शरीरं यस्य तेन। [ "सतत" इत्यत्र "अनवरत" इति पाठान्तरम् ]। वनहरिणयूथेनेव—वन्यमृगसमूहेनेव। [ "वातहरिणयूथेनेव" इति पाठे—वातहरिणाः,—ये वाताभि-

मुहुर्मुहुः उड्डीयमानेन, (६४) लङ्घितसमविषमावटविटपेन, कोणधारिणा, कृपाणपाणिना च, (६५) सेवागृहीतविविधवनकुसुमफलमूलपर्णेन, "चल चल, याहि याहि, अपसर्प अपसर्प, पुरः प्रयच्छ पन्थानम्" इति अनवरतकृतकलकलेन युवप्रायेण सहस्रमात्रेण पदातिबलेन सनाथं अश्ववृन्दं ददर्श।

(६६) मध्ये च तस्य सार्द्धचन्द्रेण मुक्ताफलजालिना विविधरत्नखण्डखचितेन शङ्खक्षीरफेनपिण्डपाण्डरेण क्षीरोदेनेव स्वयं

---

मुखं धावन्ति ते इत्यर्थः, तेषां यूथं तेनेत्यर्थः]। उड्डीयमानेन—अतिवेगेन धावतेति भावः। ["खमुड्डीयमानेन" इति पाठे—खम्—आकाशम्, उड्डीयमानेन—उत्पतता, अतिवेगेन धावतेत्यर्थः]।

(६४) लङ्घितेति।—लङ्घितः,—अतिक्रान्तः, समानां विषमाणाम् अवटानां—गर्त्तानाञ्च, समादिप्रदेशानामिति भावः, विटपः,—विस्तारः येन तथाभूतेन। कोणधारिणा—लगुडधरेणेत्य°:, ("कोणो वाद्यप्रभेदे स्यात् वीणादीनाञ्च वादने। एकदेशे गृहादीनामस्रौ च लगुडेऽपि च॥" इति मेदिनी)। कृपाणपाणिना—असिधारिणेत्यर्थः।

(६५) सेवेति।—सेवायै—स्वामिनः स्वाभीष्टदेवस्य वा सेवार्थं, गृहीतानि विविधानि वनस्य कुसुमानि फलानि मूलानि पर्णानि—पत्राणि च येन तथोक्तेन। याहि याहि—गच्छ गच्छ। अपसर्प—अपगच्छ। पुरः,—अग्रतः। प्रयच्छ—देहि। अनवरतकृतकलकलेन—अनवरतं—निरन्तरं, कृतः,—विहितः, कलकलः,—कोलाहलः येन तथोक्तेन। युवप्रायेण—तरुणबहुलेन। सहस्रं मात्रा—परिमाणं यस्य तेन सहस्रसङ्ख्यकेन इत्यर्थः। पदाति ˜ —पदचारिसैन्येन, सनाथं—सहितम्।

(६६) मध्ये इत्यादिके—"तस्य च मध्ये अष्टादशवर्षदेशीयं कञ्चित् युवानमद्राक्षीत्" इत्यन्वयसम्बन्धः। सार्द्धचन्द्रेण—अर्द्धचन्द्रेण समानं सार्द्धचन्द्रं तेन। मुक्ताफलजालिना—मुक्ताफलानां—मौक्तिकानां, जालं—समूहः, मालेति भावः तद्वता। ["मुक्ताफलजालमालिना" इति पाठे—मुक्ताफलानां जालं—समूहः, तस्य माला—स्रक्, तद्वतेत्यर्थः]। विविधेति।—विविधानां रत्नानां खण्डैः खचितं—संयुक्तं, घटितमित्यर्थः तेन। शङ्खेति।—शङ्खः क्षीरं—दुग्धं, फेनपिण्ड—फेनचयः, तद्वत् पाण्डरं—शुभ्रं तेन, ["फेनपिण्डपाण्डरेण" इत्यत्र "फेनपाण्डुरेण" इति

लक्ष्मीं दातुमागतेन गगनगतेन आतपत्रेण क्षतच्छायम्, अच्छाच्छेन आभरणदीधितीनां निवहेन दिशामिव दर्शनानुरागलग्नेन चक्रवालेन अनुगम्यमानम्, आ-नितम्बावलम्बिन्या मालतीशेखरस्रजा (६७) सकलभुवनविजयाय अर्जितया रूपपताकयेव विराजमानं, समुत्सर्पिभिः शिखण्डकपद्मरागमणेः अरुणैः अंशुजालैः (६८) अदृश्यमानवनदेवताविधृतैः बालपल्लवैरिव प्रमृज्यमानमार्गरेणुम्, अरुणवपुषं,

पाठान्तरम्]। क्षीरोदेनेव—क्षीरसागरेणेव, लक्ष्मीजनकेनेति भावः। गगनगतेन—अन्तरीक्षवर्त्तिना। आतपत्रेण—छत्रेण। क्षतच्छाय—क्षता छाया—अनातप, कान्तिश्च यस्य तं, ("छाया सूर्यप्रिया कान्तिः प्रतिविम्बमनातपः" इत्यमरः)। अच्छाच्छेन—स्वच्छेन, अतिशोभनेन इत्यर्थः। ["अच्छेन" इति पाठान्तरम्]। आभरणदीधितीनां—भूषणकिरणाना, ["दीधितीनाम्" इत्यत्र "द्युतीनाम्" इति पाठान्तरे—द्युतीना—प्रभाणाम् इ ः]। निवहेन—समूहेन। दर्शनानुरागलग्नेन—दर्शने—अवलोकने, यः अनुरागः,—आसक्तिः, तेन लग्न—समासक्तं तेन। दिशा चक्रवालेन—मण्डलेन इव। आ-नितम्बावलम्बिन्या—आ-नितम्ब—नितम्बपर्य्यन्तम्, अवलम्बते इति तथोक्तया। ["आ-नितम्बविलम्बिन्या" इति पाठेऽपि स एवार्थः]। मालतीशेखरस्रजा—मालतीकुसुमनिर्म्मितशिरोमालया।

(६७) सकलेति।—सकलाना भुवनाना विजयाय—पराजयार्थम्, अर्जितया—लब्धया। ["विजयार्जितया" इति समस्तो वा पाठः]। रूपपताकयेव—सौन्दर्य्यवैजयन्त्येव। समुत्सर्पिभिः,—समुद्गच्छद्भिः। ["उत्सर्पिभिः" इति पाठान्तरम्]। शिखण्डकपद्मरागमणेः,—शिखण्डकं—शिरोभूषणं, यः पद्मरागमणिः तस्य। अरुणैः,—रक्तैः, अंशुजालैः,—प्रभानिवहैः। ["शिखण्डखण्डिकापद्मरागमणेः" इति पाठे—शिखण्डखण्डिका—चूडाभरणमित्य ः। "अंशुजालैः" इत्यत्र "अंशुकजालैः" इति पाठान्तरे स एवार्थः।

(६८) अदृश्यमानेति।—अदृश्यमानया वनदेवतया—वनाधिदेव्या, विधृताः तैः। बालपल्लवैरिव—नवकिसलयैरिव। प्रमृज्यमानमार्गरेणु—प्रमृज्यमानाः,—अपनीयमानाः, मार्गरेणवः,—अध्वगमनात् अङ्गलग्ना धूलयः यस्य तादृशम्। अरुणवपुषम्—आरक्तदेहम्। ["प्रमृज्यमानमार्गरेणुपरुषवपुषम्" इति पाठे—प्रमृज्य-

(६९) वकुलकुड्मलमण्डलीमुण्डमालामण्डनमनोहारिणा कुटिलकुन्तलस्तवकमालिना मौलिना निमीलितातपम् आपिबन्तमिव दिवसं, (७०) पशुपतिमुकुटमृगाङ्क-द्वितीयशकलघटितस्येव (७१) सहजलक्ष्मीसमालिङ्गितस्य ललाटपट्टस्य मनःशिलापङ्कपिङ्गलेन लावण्येन लिम्पन्तम् इवान्तरिक्षम्, (७२) अभिनवयौवनावष्टम्भप्रगल्भदृष्टिपात-

---

मानं—परिक्रियमाणं, मार्गरेणुभिः,—अध्वरजोभिः, परुषं—रूक्षं, वपुः,—शरीरं यस्य तथाभूतमित्यर्थः ]।

(६९) वकुलेति।—वकुलकुड्मलानां—वकुलमुकुलानां, मण्डली—माला, मुण्डमाला इव, तया मण्डनं—शोभा, तेन मनोहारिणा, [ "मनोहारिणा" इत्यत्र "मनोहरेण" इति पाठान्तरम् ]। कुटिलेति।—कुटिलः,—भङ्गिमान्, यः कुन्तलानां—केशानां, स्तवकः,—गुच्छः, तेषां माला—समूहः तद्वता, मौलिना—किरीटेन, शिरोभूषणेन इत्यर्थः, ("मौली किरीटधम्मिल्लौ" इत्यमरः)। निमीलितातपं—निर्वापितसौरमयूखं, मौलिप्रभातिशय्यादिति भावः; [ "मीलितातपम्" इति पाठेऽपि अभिन्नार्थः ] अत एव दिवसम् आपिबन्तमिव—ग्रसन्तमिव, [ "पिबन्तमिव" इति पाठान्तरम् ]।

(७०) पशुपतीति।—पशुपतेः,—हरस्य, मुकुटं—शिरोभूषणभूतं, यः मृगाङ्कः,—अर्द्धचन्द्र इत्यर्थः, तस्य द्वितीयम्—अपरं, शकलं—खण्डं, तेन घटितस्येव—निर्मितस्येव इत्यर्थः, अर्द्धचन्द्राकृतेरिति भावः। [ "पशुपतिजटामुकुटमृगाङ्क" इति पाठे—पशुपतेर्जटासु यत् मुकुटं—मुकुटभूतः, मृगाङ्कः तस्येति योजना ]।

(७१) सहजेति।—सहजा—स्वाभाविकी, या लक्ष्मीः,—शोभा, यद्वा,—सहजा—सहोत्पन्ना, या लक्ष्मीः,—पद्मालया, अतिसौभाग्यशालित्वात् श्रीः सततमेव सहैव देहेनावावसदित्याशयः, तया समालिङ्गितः,—समन्वितः तस्य। ललाटपट्टस्य—फलकवत्प्रशस्तभालदेशस्य। मनःशिलेति।—मनःशिला—रक्तवर्णः उपधातुविशेषः, तस्य पङ्कः,—घनद्रवः, तद्वत् पिङ्गलं—गौरमित्यर्थः तेन। लावण्येन—"मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तलक्षणेन अङ्गप्रभाविशेषेण। लिम्पन्तं—सचन्तम्।

(७२) अभिनवेति।—अभिनवस्य—अचिरप्रवृत्तस्य, यौवनस्य अवष्टम्भेन—समाश्रयेण, [ "यौवनारम्भावष्टम्भ" इति पाठे—यौवनारम्भेण यः अवष्टम्भः,—गर्व-

तृणीकृतत्रिभुवनस्य चक्षुषः प्रथिम्ना (७३) विकचकुवलयकुमुदकमलसरःसहस्रसञ्छादितदशदिशं शरत्समयसम्पदमिव प्रवर्त्तयन्तम्, (७४) आयतनयनदीर्घसीमान्तसेतुबन्धेन (७५) ललाटपट्टिकाशशिमणिशिलातलगलितेन कान्तिसलिलस्रोतसेव द्राघीयसा घोणावंशेन विराजमानम्, (७६) अतिसुरभिसहकारकालकर्पूरलवङ्गपारिजातपरिमललुब्धमत्तमधुकरकोलाहलमुखरेण मुखेन सनन्दनवनं वसन्त-

---

विशेषः] प्रगल्भ,—प्रतिभाव्यञ्जकः, यो दृष्टिपातः,—अवलोकनविशेषः, तेन तृणीकृतं—तुच्छीकृत, त्रिभुवन येन तथाभूतस्य। प्रथिम्ना—विस्तारेण।

(७३) विकचेति।—विकचाना—विकसितानां, कुवलयानां—नीलोत्पलानां, कुमुदाना कमलानाञ्च सरःसहस्रैः,—सरोवरसङ्घैः, सञ्छादिता दश दिशो यया तथोक्ताम्। शरत्समयसम्पदमिव—शरत्कालिकश्रियमिव। ["शरदमिव" इति पाठान्त—शरत्कालमिव]। प्रवर्त्तयन्त—प्रकटयन्तम्।

(७४) आयतेति।—आयतयोः,—विशालयोः, नयनयोर्यो दीर्घः,—प्रशस्तः, सीमान्ते सेतुबन्धः तेन, तथाभूतेन इत्यर्थः। ["आयतनयननदीसीमान्तसेतुबन्धेन" इति पाठे—आयते नयने एव नद्यौ तयोः सीमान्तेषु सेतुबन्धः तेन, बद्धसेतुभूतेन इत्यर्थः]।

(७५) ललाटेति।—ललाटपट्टिका—ललाटफलकम् एव; शशिमणिशिलातलं—चन्द्रकान्तपाषाणतल; तस्मात् गलितं—निःसृतं तेन। कान्तिसलिलस्रोतसेव—लावण्यजलप्रवाहेणेव। ["ललाटपट्टिका" इत्यत्र "ललाटतट" इति पाठान्तरम्]। द्राघीयसा—अतिदीर्घेण। घोणावंशेन—नासादण्डेन इत्यर्थः। ["विराजमानम्" इत्यत्र "शोभमानम्" इति पाठान्तरम्]।

(७६) अतिसुरभीति।—अतिसुरभि—अतिशयेन सौरभवत्; अत एव सहकारः,—अतिसौरभं चूतफलं तन्मुकुल वा, काल—काकोलकः, कर्पूरं लवङ्गं पारिजातं—पारिजातकुसुममित्यर्थः, तेषा परिमलेषु लुब्धाना—लोलुपानां, मत्ताना मधुकराणा—भ्रमराणा, कोलाहलैः,—झङ्कारैः, मुखर—सशब्द तेन। सहकारादिभ्योऽपि मनोहरसौरभलोभादिति भावः। ["सहकारकालकर्पूर···लुब्ध" इत्यत्र "सहकारकर्पूरकक्कोललवङ्गपारिजातकपरिमलमुचा" इति पाठे—कक्कोल—वनकर्पूर, गन्धद्रव्यभेदः इति यावत्, ततः पूर्ववत् द्वन्द्वसमासः, ततः, तेषामिव परिमलं मुञ्चतीति तथोक्तेन।

मिव वमन्तम्, (७७) आसन्नसुहृत्परिहाससम्भाषणेन उत्तान-मुखमुग्धहसितैः (७८) दशनज्योत्स्नास्नपितदिङ्मुखैः पुनः पुनर्नभसि सञ्चारिणं चन्द्रालोकमिव कल्पयन्तं, (७९) कदम्ब-मुकुलस्थूलमुक्ताफलयुगलमध्याध्यासितमरकतस्य त्रिखण्डकण्ठा-भरणस्य (८०) प्रेङ्खतः प्रभया समुत्सर्पन्त्या सकुसुमहरित-

---

तती "मत्तमधुकरकुलकोलाहलमुखरेण" इति पाठः] सनन्दनवनं—नन्दनवनं—तदाख्यदेवोद्यानं, तेन सह वर्त्तमानम्। वमन्तम्—उद्गिरन्तम्, मुखस्य नन्दनवनवत्त्वं तत्सौरभशालित्वादिति भावः। ["वमन्तम्" इत्यत्र "वसन्तम्" इति पाठे—मुखेन—प्रारम्भेण, सहकारादिपारिजाता ना प्रसूनसङ्घाना समुद्गमेनेत्यर्थः, वसन्तं—तिष्ठन्तं, विराजमानमित्यर्थः, युगपदेव तेषां तेषा समुद्गमादिति भावः, वसन्तं—वसन्तनामकम् ऋतुमिव; यद्वा,—सहकारः,—सुगन्धद्रव्यभेदः सहकारफलेन क्रियते; पारिजातकः,—अनेकद्रव्यसंस्कृतः मुखवासविशेषः; वसन्तस्यैवंविधेनैव मुखेन प्रारम्भेणोपलब्धिती भवति]।

(७७) आसन्नेति।—आसन्नेन—सन्निहितेन, सहचारिणेत्यर्थः, सुहृदा—मित्रेण, सह यत् परिहाससम्भाषणं—नर्मालापः तेन। उत्तानेति।—उत्तानस्य—उन्नमितस्येत्यर्थः, मुखस्य मुग्धानि—मनोज्ञानि, हसितानि—स्मितानि तैः। ["आसन्नसुहृत्परिहासभावनोत्तानितमुखमुग्धहसितैः" इति पाठे—आसन्नेन सुहृदा यः परिहासः तस्य भावना—भावावबोधः, तस्मिन् उत्तानितम्—उन्नमित, यत् मुखं तस्य मुग्धानि हसितानि तैः]।

(७८) दशनेति।—दशनाना—दन्तानां, ज्योत्स्नया—प्रभयेत्यर्थः, स्नपितानि—आप्लावितानि, धौतानीति यावत्, दिङ्मुखानि येषु तथोक्तैः। कल्पयन्त—विस्तारयन्तम्।

(७९) कदम्बेति।—कदम्बमुकुलवत् स्थूलं यत् मुक्ताफलयुगलं—मौक्तिक-युग्मं, तस्य मध्यम् अध्यासितम्—अधिश्रितं, मरकतं—तदाख्यं रत्नं यस्य यत्र वा तथाभूतस्य। त्रिखण्डकण्ठाभरणस्य—त्रिगुणकण्ठहारस्येत्यर्थः, द्वयोर्द्वयोर्मुक्ताफलयो-र्मध्ये मरकतरत्नग्रथितत्रिरावृत्तहारस्येति भावः। ["त्रिकण्टककर्णाभरणस्य" इति पाठे—त्रीणि कण्टकानि—कण्टकसदृश्यः शलाका इत्यर्थः यत्र तादृशं यत् कर्णाभरणं—कर्णभूषणं तस्येत्यर्थः]।

(८०) प्रेङ्खतः,—दीप्यमानस्य, ज्वलत इत्यर्थः, दोलयतो वा। समुत्सर्पन्त्या—समुद्गच्छन्त्या। सकुसुमेति —सकुसुमः—पुष्पसहितः, हरितः,—हरिद्वर्णः

कुन्दपल्लवकर्णावतंसमिवोपलक्ष्यमाणम्, (८१) आमोदिमृगमदपङ्कलिखितमकरमुखपत्रभङ्गभास्वरं भुजयुगलम् उद्दाममकराक्रान्तशिखरमिव मकरकेतुदण्डद्वयं दधानं, धवलब्रह्मसूत्रसीमन्तितं, (८२) सागरमथनसामर्षगङ्गास्रोतःसन्दानितमिव मन्दरं देहमुद्वहन्तं, (८३) कर्पूरक्षोदमुष्टिच्छुरणपांशुलेनेव युवतीजनकुचचक्रवाकमिथुनविपुलपुलिनेन उरःस्थलेन स्थूलभुजायामपुञ्जीकृतं पुरो विस्तारयन्तमिव दिक्-

कुन्दपल्लवः कर्णावतंसः,—कर्णभूषणं यस्य तथाभूतमिव। ["कृतसकुसुमहरितकुन्दपल्लवकर्णावतंसम्" इति पाठे—कृतः सकुसुमः हरितः कुन्दपल्लवः कर्णावतंसः,—कर्णभूषणं येन तथोक्तमित्यर्थः.]।

(८१) आमोदीति।—आमोदी—सौरभवान्, यः मृगमदपङ्कः,—कस्तूरिकायाः घनरसः, तेन लिखितः,—चित्रितः, मकरमुखः,—मकराख्यजलजन्तुभेदवदनरूप इति यावत्, पत्रभङ्गः,—पत्ररचना, तेन भास्वरं—राजमानम्। ["पङ्कलिखितपत्रभङ्गभास्वरम्" इति पाठे—पङ्केन—घनद्रवेण, लिखितः यो पत्रभङ्गः, तेन भास्वरम्] भुजयुगलं—बाहुयुग्मम्। उद्दामेति।—उद्दामेन—उद्भटेन, मकरेण आक्रान्त शिखरम्—अग्रभागः यस्य तादृशम्। मकरकेतुदण्डद्वयं—कामस्य दण्डयुगलम्। ["मकरकेतुकेतुदण्डद्वयम्" इति पाठे— मकरकेतोः केतुदण्डद्वयं—ध्वजयष्टियुगलम्]। धवलेति।—धवलेन—शुभ्रेण, ब्रह्मसूत्रेण—यज्ञोपवीतेन, सीमन्तितं—संयत, सन्नद्धमित्यर्थः.।

(८२) सागरेति।—सागरस्य—क्षीरोदस्य, मथनेन सामर्षा—सक्रोधा, पतिद्रोहादिति भावः, या गङ्गा तस्याः स्रोतसा—प्रवाहेण, सन्दानितमिव—बद्धमिव। मन्दरं—मन्दराचलम्।

(८३) कर्पूरेति।—कर्पूरस्य क्षोदः,—चूर्णं, तस्य मुष्टिः,—मुष्टिभृतकर्पूरचूर्णमित्यर्थः, तस्य छुरणं—लेपनमिति यावत्, तेन पांशुलं—धवलमित्यर्थः तेन। ["कर्पूरक्षोदच्छुरणपांशुलेन" इति पाठान्तरम्]। युवतीति।—युवतीजनस्य कुचावेव—स्तनावेव, चक्रवाकमिथुनं, तस्य विपुलं—बृहत्, पुलिनं—सैकतं तेनेव। ["कान्तोच्चकुचचक्रवाकयुगलविपुलपुलिनेन" इति पाठे—कान्ताया उच्चकुचावेव चक्रवाकयुगलं तस्य विपुलं पुलिनं तेनेत्यर्थः]। उरःस्थलेन—वक्षःस्थलेन। स्थूलेति।—स्थूलयोः,—पीवरयोः, भुजयोः आयामेन—दैर्घ्येण, पुञ्जीकृतं—समा-

चक्रं, पुरस्तात् ईषत् (८४) अधोनाभिनिहितैककोणकमनीयेन पृष्ठतः कच्याधिक्षिप्तपल्लवेनोभयतः संवलनप्रकटितोरुविभागेन हारीतहरिता निविड़निपीड़ितेन अधरवाससा (८५) विभक्ततनुतरमध्यभागम्, अनवरतश्रमोपचितमांसकठिनविकटमकरमुखसंलग्नजानुभ्यां (८६) विशालवक्षःस्थलोपलवेदिकोत्तम्भनशिलास्तम्भाभ्यां चारुचन्दनस्थासक-

---

हृतम्। ["पुञ्जितम्" इति पाठेऽपि स एवा :]। दिक्चक्रं—दिङ्मण्डलं, पुरः विस्तारयन्तमिव—प्रसारयन्तमिव। पुरस्तात्—अग्रतः।

(८४) अधोनाभीति।—नाभेरधः,—अधोनाभि, तत्र निहितः एकः कोणः,—अंशविशेषः, तेन कमनीयं—मनोज्ञं तेन। पृष्ठतः,—पश्चाद्भागे। कच्येति।—कच्यया—काच्या, मेखलया इत्यर्थः, ("कच्या हर्म्यप्रकोष्ठे स्यात् काञ्च्यां मध्येभबन्धने" इति मेदिनी) अधिक्षिप्तः,—न्यस्तः, पल्लवः,—प्रान्तभागो यस्य तेन। ["कच्याधिकक्षिप्त" इति पाठे—कच्यायाम् अधिकं यथा तथा क्षिप्तः,—निहितः, लम्बमान इत्यर्थः, पल्लवः यस्य तेन] उभयतः,—उभयोः भागयोः। संवलनेन—सङ्कोचनेन, प्रकटितः,—प्रकाशितः, ऊर्वोर्विभागः येन तादृशेन, ["विभागेन" इत्यत्र "विभागेन" इति पाठान्तरे—ऊर्वोः,—पादयोः, (ऊरुशब्दोऽत्र पादमात्रोपलक्षणं) विभागः,—तृतीयो भागः, जङ्घाप्रदेश इत्यर्थः येन तादृशेन]। हारीतहरिता—हारीतः,—पक्षिविशेषः, तद्वत् हरित्—नीलवर्णमित्यर्थः तेन। ["हारीतहरितेन" इति पाठेऽपि स एवार्थः]। निबिडनिपीड़ितेन—सुदृढसंयमितेन। अधरवाससा—परिधानवसनेन।

(८५) विभक्तेति।—विभक्तः,—प्रकटितः, तनुतरः,—अतिकृशः, मध्यभागः,—कटिदेशः यस्य तम्। ["विभक्त" इत्यत्र "विभज्यमान" इति पाठान्तरे—विभज्यमानः,—पृथक् क्रियमाणः इत्यर्थः]। अनवरतेति।—अनवरतं—सततं, कृतः यः श्रमः, तेन उपचितं—प्रवृद्धं, यत् मांसं, तेन कठिनं—दृढं, विकटं—बृहत्, यत् मकरमुखं—जानुनोरुपरिभागः, तेन सलग्ने—सम्बद्धे, जानुनी ययोः ताभ्याम्।

(८६) विशालेति।—विशाल—प्रशस्तं, यत् वक्षःस्थलं, तदेव उपलवेदिका—पाषाणनिर्मिता वेदिका, तस्या उत्तम्भनाय—धारणाय, शिलास्तम्भौ—पाषाणनिर्मितौ स्तम्भौ, तत्स्वरूपावित्यर्थः ताभ्याम्। चार्विति।—चारुणा—मनोज्ञेन, चन्दनस्थासकेन—चन्दनचर्च्चया, विन्यस्तचन्दनेनेत्यर्थः, ("चर्च्चा तु चार्च्चिक्यं स्थासकः

स्थूलकान्तिभ्याम् ऊरुदण्डाभ्याम् उपहसन्तमिव ऐरावत करायामम्, (८७) अतिभरभरितोरुभागभारवहनखेदेनेव तनुतरं जङ्घाकाण्डं वहन्तं, (८८) कल्पपादपपल्लवपाटलस्य उभयपार्श्वविलम्बिनः पादद्वय दोलायमानैर्नखमयूखजालकैः (८९) अश्वमण्डनचामरमालामिव रचयन्तम्, अभिमुखमुच्चैरुदञ्चद्भिः अतिचिरमुपरि विश्राम्यद्भिरिव वल्गनविकटं, पतद्भिः खुरैः खण्डितभुवि प्रतिक्षणं (९ ) दशनग्रहविमुक्तिखणखणायितखलीने दीर्घघोणलीननालिके ललाटपट्टिका-

---

इत्यमरः)। स्थूला—अतिशयिता, कान्तिर्ययोः ताभ्याम्। ऐरावतकरायामम्—ऐरावतशुण्डादण्डदैर्घ्यम्।

(८७) अतिभरेति।—अतिभरेण—अतिभारेण, भरितयोः,—पूर्णयोः, ऊरुभागयोः,—ऊर्वोः, भारस्य वहनेन—धारणेन, यः खेदः,—श्रमः तेनेव। [ "अतिभरितोरुभारवहन" इति पाठे—अति—अत्यर्थं, भरितयोः ऊर्वोः भारस्य वहनम् इत्यर्थः ]। तनुतरं—कृशतरम्। जङ्घाकाण्डं—जानुनोः अधोभागरूपं स्तम्भम्। [ "तनुतरं जङ्घाकाण्डं वहन्तम्" इत्यत्र "तनुतरजङ्घाकाण्डम्" इति पाठे—तनुतरः जङ्घा ाण्डो यस्येति समासयोजना ]।

(८८) कल्पपादपेति।—कल्पपादपस्य—कल्पतरोः, पल्लवः,—किसलयः, तद्वत् पाटलं—रक्तं तस्य। [ "कल्पपादपपल्लवद्वयस्येव पाटलस्य" इति पाठान्तरम् ]। उभयपार्श्वविलम्बिनः,—उभयोः पार्श्वयोः विलम्बते इति तथोक्तस्य, [ "उभयपार्श्वावलम्बिनः" इति पाठान्तरम् ]। नखमयूखजालकैः,—नखकिरणसमूहैः। ["नखमयूखैः" इति पाठान्तरम् ]।

(८९) अश्वेति।—अश्वस्य—स्ववाहनस्येति भावः, मण्डनम्—अलङ्कारः, चामरमाला तामिव। रचयन्त—कल्पयन्तम्। उदञ्चद्भिः,—उत्पतद्भिः। विश्राम्यद्भिरिव,—विश्रामं कुर्वद्भिरिवेत्यर्थः। वल्गनविकटं—वल्गनेन—गतिविशेषेण, विकटम्—उद्भटं यथा तथा। [ "वलितविकटम्"इति पाठे—वलित—गतिविशेषः,तेन विकटं—चित्रमिति केचित् व्याचक्षुः ]। खण्डितभुवि—खण्डिता—कुट्टिता, भूः,—क्षितिः येन तथोक्ते।

(९०) दशनेति।—दशनैः,—दन्तैः, ग्रहः,—ग्रहणं, विमुक्तिः —त्यागः. ताभ्यां खणखणायितः,—खणखणशब्दवत् कृतः, खलीनः,—कविका येन तथोक्ते। [ "प्रति-

लुलितचामीकरचक्रे (९१) शिञ्जानशातकौम्भजयनशोभिनि मनोरंहसि गोलाङ्गूलकपोलकान्तिरोमणि नीलसिन्धुवारवर्णे वाजिनि समारूढम्, उभयत्र पर्य्याणपट्टाश्लिष्टहस्ताभ्याम् आसन्नपरिचारकाभ्यां (९२) दोधूयमानधवलचच्चरीकायुगलम्, अग्रतः पठतो वन्दिजनस्य सुभाषितम् उत्कण्टकित-

---

क्षणदशनविमुक्तखणखणायितखरखलीने" इति समस्तपाठे—प्रतिक्षणं दशनैर्विमुक्तः,—अपसारणं कृतः, तेन खणखणायितः खरः,—कर्कशः, खलीनो येन तथोक्ते इत्यर्थः ]। दीर्घेति।—दीर्घायाम्—आयतायां, घोणाया—नासिकाया, लीना—लग्ना, नालिका—कनिका यस्य तादृशे। ललाटेति।—ललाटपट्टिकायां—भालफलके, लुलितं—चञ्चलितं, वेगादिति भावः, चामीकरचक्रं—स्वर्णचक्रं यस्य तथाविधे। [ "दीर्घघ्राणलीननालिकललाटलुलितचारुचामीकरचक्रके" इति पाठान्तरे—दीर्घे घ्राणे—नासाया, लीन, नालिकः,—कनिकाशेखरं यस्य तादृशे, ललाटे—भालदेशे, लुलितं चारु—सुन्दर, चामीकरचक्र यस्य तथाभूते इत्यर्थ. ]।

(९१) शिञ्जानेति।—शिञ्जानं—स्वनत्, यत् शातकौम्भजयनं—स्वर्णनिर्म्मित-तुरङ्गवर्म्मविशेषः, तेन शोभते इति तथोक्ते, ("जयनं स्यात् तुरङ्गादिसन्नाहे" इति मेदिनी)। मनोरंहसि–मनस इव रंह,—रयः यस्य तादृशे, मनोजवे इत्यर्थ.। गोलाङ्गूलेति।—गोलाङ्गूल,—कृष्णमुखो वानरभेद., तस्य कपोलवत् कान्तिर्येषां तादृशानि रोमाणि यस्य तथोक्ते, [ "गोलाङ्गूलकपोलकालकायलोम्नि" इति पाठान्तरे–गोलाङ्गूलकपोलवत् काल—कृष्णवर्ण, कायलोम—शारीररोम यस्य तादृशे ]। नीलेति।—नील यत् सिन्धुवार—निर्गुण्डीकुसुममित्यर्थः, तस्येव वर्णो यस्य तथाभूते। वाजिनि—अश्वे। [ "वाजिनि महति" इत्यधिकपाठे—महति—समुन्नते वाजिनीत्यर्थः ]। उभयत्रेति।—उभयत्र—उभयोः पार्श्वयोरित्यर्थ.। ["उभयत्र" इत्यत्र "उभयत." इति पाठान्तरम् ]। पर्य्याणेति।—पर्य्याणपट्टः,—पर्य्याणम्,—अश्वपृष्ठस्थितासनविशेषः, तदेव पट्टः,—फलकं, तस्मिन् आश्लिष्टः,—संयुक्तः, स्थापित. इत्यर्थः, हस्तः,—वाम इति भाव याभ्यां तथोक्ताभ्याम्। [ "पर्य्याणपट्टाश्लिष्ट" इत्यत्र "पर्य्याणपट्टलिष्ट" इति पाठेऽपि स एवार्थ. ]।

(९२) दोधूयमानेति।—दोधूयमान—वीज्यमान, धवल—श्वेतं, चच्चरीका-युगल—चामरयुगलं यस्य तम्। [ "चच्चरीका" इत्यत्र "चामरिका" इति पाठे स्पष्टम्। वन्दिजनस्य—स्तुतिपाठकस्य, [ "वन्दिनः" इति पाठेऽपि स एवार्थः ]।

कपोलफलकेन लग्नोत्पलकेसरपक्ष्मशकलेनेव मुखशशिना भावयन्तम्, (९३) अनङ्गयुगावतारमिव दर्शयन्तं, चन्द्रमयीमिव सृष्टिम् उत्पादयन्तं, विलासप्रायमिव जीवलोकं जनयन्तम्, (९४) अनुरागमयमिव सर्गान्तरमानयन्तं, शृङ्गारमयमिव दिवसमापादयन्तं, रागराज्यमिव प्रवर्त्तयन्तम्, आकर्षणाञ्जनमिव चक्षुषोः, वशीकरणमन्त्रमिव मनसः, स्वस्थावेशचूर्णमिव इन्द्रियाणां, सन्तोषमिव कौतुकस्य, (९५) सिद्धयोगमिव सौभाग्यस्य, पुनर्जन्मदिवसमिव मन्मथस्य, रसायनमिव यौवनस्य, एकराज्यमिव रामणीयकस्य, कीर्त्तिस्तम्भमिव

---

उत्कण्टकितकपोलफलकेन—उत्कण्टकिते—रोमाञ्चिते इति यावत्, कपोलफलके—गण्डतटे यत्र तथाभूतेन। लग्नेति।—लग्नानि—संसक्तानि, उत्पलस्य—कुमुदस्य, केसरपक्ष्मशकलानि - केशराणि—किञ्जल्कानि, पक्ष्माणीव—नेत्ररोमाणीव, आवरकत्वात् इति भावः, तेषां शकलानि—खण्डानि यस्मिन् तेनेव, ["लग्नोत्पल" इत्यत्र "लग्नक °त्पल" इति पाठे—लग्नस्य कर्णोत्पलस्य—कर्णावतंसीभूतकुमुदस्य इत्यर्थः] भावयन्तं—चिन्तयन्तम्।

(९३) अनङ्गेति।—अनङ्गस्य—कामस्य, युगे—समयविशेषे, अवतारः,—पृथिव्यामवरोहणं तमिव, अवतीर्णमनङ्गमिव जीवलोकं दर्शयन्तमिति भावः।

(९४) अनुरागमयमिव—अनुरागातिशयादिति भावः। एवमुत्तरत्र। सर्गान्तरम्—अन्यां सृष्टिम्। ["मार्गान्त म्" इति पाठे—अन्यविधं मार्गं—पन्थानं, व्यवहारमित्यर्थः]। आपादयन्तं—जनयन्तम्। रागराज्यं—रागः,—विषयेषु अत्यासक्तिः, तस्य राज्यं तत्। आकर्षणाञ्जनं—वशीकरणकज्जलम्। स्वस्थावेशचूर्णमिव—स्वस्थं यथा तथा आवेशयतीति तथाभूतं चूर्णं—वशीकरणार्थं चूर्णद्रव्यविशेषः तदिव। सन्तोषमिव—तृप्तिमिव, यद्दर्शनेन कौतुकस्य निवृत्तिर्जायते इत्यर्थः। ["असन्तोषमिव" इति पाठे—यं दृष्ट्वा द्रष्टुः कौतुकं न निवर्त्तते, दर्शनजनितसन्तोषस्याभावात् पुनः पुनः तद्दर्शनलालसा वर्द्धते इति भावः]।

(९५) सिद्धयोगमिव।—सिद्धाय, कार्य्याणामिति भावः, योगः,—उपायः तमिव। रसायनमिव—स्थिरत्वसम्पादकौषधविशेषमिव, यथा रसायनप्रयोगात् मनुष्यः उपचितसर्वधातुः स्थिरयौवनश्च भवति, तद्वत् एतदाश्रयेण यौवनमपीति भावः। रामणीयकस्य—

रूपस्य, कुलकोषमिव लावण्यस्य, पुण्यकर्म्मपरिणाममिव संसारस्य, (८६) प्रथमाङ्कुरमिव कान्तेः, सर्गाभ्यासफलमिव प्रजापतेः, प्रतापमिव विभ्रमस्य, यशःप्रवाहमिव वैदग्ध्यस्य, अष्टादशवर्षदेशीयं कञ्चित् युवानम् अद्राक्षीत।

पार्श्वे च तस्य द्वितीयं, (८७) संसक्ततुरगं, परं प्रांशुम्, उत्तप्ततपनीयस्तम्भावदातं, परिणतवयसमपि व्यायामबलीयांसं, नीचनखश्मश्रुकेशं, शुक्तिखलतिम्, ईषत्तुन्दिलं,

---

सौन्दर्य्यस्य। एकराज्यमिव—एकम—अद्वितीयं, राज्यमिव। कुलकोषमिव—वंशचैत्रमिव। [ "मूलकोषमिव" इति पाठान्तरे—प्रधानचैत्रमिव इत्यर्थः ]। पुण्येति। —पुण्यानां कर्म्मणां परिणामः,—फलं तमिव।

(८६) प्रथमाङ्कुरमिव—प्रथमः,—मुख्यः, आद्यो वा, अङ्कुरः,—प्ररोहः, तमिव। [ "कान्तेः" इत्यत्र "कान्तिलतायाः" इति पाठे—कान्तिरेव लता तस्याः ]। सर्गाभ्यासफलमिव—सर्गः,—सृष्टिः, त अभ्यासः,—पुनःपुनरनुशीलनं, तस्य फलं तदिव। विभ्रमस्य—विलासस्य। यशःप्रवाहमिव—यशसा प्रस्रवणमिव। वैदग्ध्यस्य —नैपुण्यस्य। अष्टादशवर्षदेशीयम्—ईषदसमाप्ताष्टादशवर्षवयसमिव लक्ष्यमाणमित्यर्थः, [ "ईषदसमाप्तौ कल्पदेश्यदेशीयरः" ( ५।३।६७ पा॰ ) इति सूत्रात् सिद्धम् ]।

(८७) संसक्ततुरग—तुरगेण संसक्तः तं, तुरगारूढमित्यर्थः, [ "अपरससक्ततुरगम्" "अपरसश्लिष्टतुरङ्गम्" इति च पाठान्तरद्वये—अपरेण तुरगेण संसक्तः तम्, अपरेण तुरङ्गेण संश्लिष्टः,—संसक्तः तमिति चार्थः। अत्र समासश्चिन्त्यः ]। परम्—अत्यन्तं, प्रांशुम्—उन्नतदेहमित्यर्थः। उत्तप्तेति।—उत्तप्तम्—अग्निसन्तप्तं, यत् तपनीयं—काञ्चनं, तस्य स्तम्भवत्—स्थूणावत्, अवदातः,—गौरः तम्, [ "अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः" इत्यमरः ) ["उत्तप्ततपनीयस्तम्भाकारम्" इति पाठान्तरम् ]। परिणतवयसं—परिपक्ववयसं, स्थविरमिति यावत्। व्यायामबलीयासं—व्यायामेन—सतताङ्गचालनया, बलीयान्—अतिबलशाली तम्, [ "व्यायामकठिनकायम् इति पाठे स्पष्टम् ]। नीचनखश्मश्रुकेशं—नीचाः,—ह्रस्वाः, क्षौरकर्म्मणा अल्पीभूता इत्यर्थः, नखाः श्मश्रूणि केशाश्च यस्य तथोक्तम्। ["नीचनखश्मश्रुकचम्" इति पाठान्तरे—कचाः,—केशाः, अन्यत् समानम् ]। शुक्तिखलति—शुक्तिवत् खलतिः, —खल्वाटः यस्य त, शुक्लवर्णखल्वाटमित्यर्थः, चिक्कण-मस्तकमिति यावत्। तुन्दिलं

(९८) अनुल्बणोदारवेशतया जरामपि विनयमिव शिक्षयन्तं, गुणानपि गौरवमिव आपादयन्तं, महानुभावतामपि शिष्यतामिव जनयन्तम्, आचार्य्यस्य आचार्य्यकमिव कुर्व्वाणं, धवलवारबाणधारिणं, लसत्तनुदुकूलपट्टिकापरिश्लिष्टमौलिं पुरुषम्।

अथ स युवा (९९) पुरोयायिनां यथादर्शनं प्रतिनिहत्य विस्मयमानमनसां कथयतां पदातीनां सकाशात् उपलभ्य दिव्याकृति तत् कन्यायुगलम् उपजातकुतूहलः प्रतूर्णतुरगो दिदृक्षुः तं लतामण्डपोद्देशम् आजगाम, दूरादेव च तुरगा-

---

—स्थूलोदरमित्यर्थः। ["तुन्दिलम्" इत्यस्मात् पर "रोमशोर स्थलम्" इत्यधिकपाठे—रोमश—बहुलोमयुक्तमित्यर्थः, उर स्थल—वच स्थल यस्य तथोक्तमित्यर्थ ]।

(९८) अनुल्बणेति।—अनुल्बण—सततम्, उदारवेशतया—महार्घ्यपरिच्छदधारितया। ['अनुल्बणोदारवेशतया" इति पाठे—अनुल्बण,—अनुत्कट., सौम्य इत्यर्थः, उदार,—महार्घ्यश्च, वेशो यस्य तस्य भाव. तत्ता तया]। गुणानपि—विनयदाक्षिण्यादीनपि। ["गौरवमिव आपादयन्तम्" इत्यत्र "गरिमाणमिवानयन्तम्" इति पाठान्तरे—गरिमाण—गुरुत्व, प्रशस्ततामिवेति यावत्, आनयन्तं—सम्यक् प्रापयन्तम्]। महानुभावता—महासत्त्वताम्। ["जनयन्तम्" इत्यत्र 'आनयन्तम्' इति पाठान्तरम्]। आचार्य्यस्य—गुरो.। ["आचार्य्यस्य" इत्यत्र "आचारस्य" इति पाठे—आचारस्य—सौजन्यस्येति यावत्, शास्त्रविहिताया नीतेर्वा]। आचार्य्यकमिव—आचार्य्यस्य कर्म्म आचार्य्यक तदिव। धवलवारबाणधारिण—शुभ्रवर्म्मधरम्। लसदिति।—लसन्त्या—शोभमानया, तन्व—सूक्ष्मया, दुकूलपट्टिकया—पट्टवसनखण्डिकया, परिश्लिष्ट,—परिवेष्टित, मौलि,—धम्मिल्ल, मूर्द्धा इति यावत् यस्य तम्। ["लसत् मौलिम्" इत्यत्र "धौतदुकूलपट्टिकापरिवेष्टितमौलिम्" इति पाठान्तरे,—धौतया—विशुद्धया, निर्म्मलया इत्यर्थ, अन्यत् तुल्यम्]।

(९९) पुरोयायिनाम्—अग्रयायिनाम्। यथादर्शन—दर्शनमनतिक्रम्य यथादर्शन, दर्शनानुसारेणेत्यर्थ, दृष्टैवेति यावत्। प्रतिनिहत्य—प्रत्यावृत्य, ["प्रतीत्य" इति पाठान्तरे—निश्चित्य, निर्णीय इत्यर्थः]। विस्मयमानमनसा—विस्मयमानम्—आश्चर्य्यायमान, मन. येषा तथाभूतानाम्। ["विस्मितमनसाम्" इति पाठान्तरम्]। उपलभ्य—विदित्वा। उपजातकुतूहलः,—सञ्जातदर्शनाभिलाष इत्यर्थ.। प्रतूर्णतुरग'

दवततार। निवारितपरिजनश्च तेन द्वितीयेन साधुना सह चरणाभ्यामेव सविनयमुपससर्प। कृतोपसङ्ग्रहणौ तौ सावित्री समं सरस्वत्या किसलयासनदानादिना कुसुमफलार्घ्यावसानेन वनवासोचितेन आतिथ्येन यथाक्रममुपजग्राह। आसीनयोश्च तयोः आसीना नातिचिरमिव स्थित्वा तं द्वितीयं प्रवयसम् उद्दिश्य अब्रवीत्,—"आर्य्य! (१००) सहजलज्जाघनस्य प्रमदाजनस्य प्रथमाभिभाषणम् अशालीनता, विशेषतो वनमृगीमुग्धस्य कुमारीजनस्य। केवलम् (१०१) इयम् आलोकनकृतार्थाय चक्षुषे स्पृहयन्ती प्रेरयति उदन्तश्रवणकुतूहलिनी श्रोत्रवृत्तिः।

—धाविततुरङ्गमः। उपससर्प—उपजगाम; कन्यकालादीदृशव्यवहारो न निन्द्यः। कृतोपसङ्ग्रहणौ—कृतम्—अनुष्ठितम्, उपसङ्ग्रहण—समादरेण ग्रहणम्, अभिवादन वा ययोः तथाभूतौ; ("उपसङ्ग्रहण धीराः कथयन्त्यभिवादनम्" इति स्मरणात्)। किसलयासनदानादिना—पल्लवरचितासनदानादिना। कुसुमफलार्घ्यावसानेन—कुसुमेन फलेन च यत् अर्घ्यं—पूजनविशेषः, तदेव अवसान यस्य तेन। ["सकुसुमफलार्घ्यावसानेन" इति पाठोऽपि स्पष्टः]। यथाक्रम—यथानियमम्। उपजग्राह—समादृतवती। आसीनयोः,—उपविष्टयोः, तयोः,—युव-प्रवयसोरित्यर्थः। आसीना—उपविष्टा। ["अब्रवीत्" इत्यत्र "अवादीत्" इति पाठान्तरम्]।

(१००) सहजेति।—सहजया—स्वाभाविकया, लज्जया घनः,—पूर्ण इत्यर्थः तस्य। ["सहजलज्जाघनस्य" इत्यत्र "सहजलज्जाधनस्य" इति पठे—सहजा—स्वाभाविकी, लज्जा एव धनं यस्य तस्येत्यर्थः]। प्रथमाभिभाषणं—प्रथमं—प्राक्, अपरिचितागन्तोरभिभाषणादिति भावः, अभिभाषणम्—आलपनम्। अशालीनता—धृष्टता, चापल्यमित्यर्थः। [अत्र "अशालीनता" इत्येव पाठः समीचीनः, "शालीनता" इत्यपपाठः, शालीनताशब्दस्य सौजन्यार्थकस्यात्राविवक्षितत्वात्]। वनमृगीमुग्धस्य—वनस्य मृगी—हरिणी, तद्वत् मुग्धः,—सरलः, भीरुर्वा तस्य। ["वनमृगी" इत्यत्र वनशब्देन जनसम्पर्कविरहितत्वं सूचितम्। "कुमारीजनस्य" इत्यत्र "कुलकुमारीजनस्य" इति पाठान्तरम्]।

(१०१) इयं "श्रोत्रवृत्तिः" इत्यनेनान्वयः। श्रोत्रवृत्तिः,—श्रवणेन्द्रियव्यापारः। आलोकनेति।—आलोकनेन—दर्शनेन, युवयोरिति भावः, कृतार्थं—चरितार्थं तस्मै।

(१०२) प्रथमदर्शने च उपायनमिवोपनयति सज्जनः प्रणयम्। अप्रगल्भमपि जनं प्रभवता प्रश्रयेण अर्पित मनो मधु इव वाचालयति। अयत्नेनैव च अतिनम्रे साधौ धनुषीव गुणः परां कोटिमारोपयति विस्रम्भः। जनयन्ति च विस्मयम् अतिधीरधियाम् अपि अदृष्टपूर्वा दृश्यमाना जगति सुष्टु सृष्ट्यतिशयाः; यतस्त्रिभुवनाभिभावि रूपमिदमस्य महानुभावस्य कुमारस्य, (१०३) सौजन्यपरतन्त्रा चेयं देवानां बुधस्यातिभद्रता कारयति कथां, न तु युवतीजनसहोत्था तरलता। तत् कथय, अत्र आगमनेन अपुण्यभाक् कतमो

---

चक्षुषे—नयनाय, स्पृहयन्ती—स्पृहा कुर्वती, नयनवत् स्वयमपि कृतार्थतां गन्तुमभिलषन्तीत्यर्थः। उदन्तेति।—उदन्तस्य—वृत्तान्तस्य, युवयोरिति शेषः, श्रवणे कुतूहलिनी—सञ्जातकुतूहला सती, प्रेरयति—प्रणोदयति, अभिभाषितु मामिति शेषः।

(१०२) प्रथमेति।—प्रथमं—नवमित्यर्थः, दर्शनं तस्मिन्। उपायनमिव—उपहारमिव, प्रणयम् उपनयति—प्रदर्शयति इत्यर्थः। ["उपनयन्ति सज्जनाः" इति बहुवचनान्तं पाठान्तरम्]। प्रभवता—प्रभुणा, महतेति भावः, प्रश्रयेण—विनयेन, सज्जनानामिति भावः, अर्पित—प्रदत्तं, तस्मै इति शेषः, सज्जनायत्तीकृतमित्यर्थः, उद्दीपितमिति भावः, मनः,—चित्तं, मधु इव—मद्यमिव, अप्रगल्भमपि—अधृष्टमपि, अवाग्मिनमपीति यावत्, जनं वाचालयति—वाचाल करोति। गुणः,—विनयादिः, मौर्वी च। परां कोटिं—परमसुत्कर्ष, धनुषः अग्रभागञ्च। विस्रम्भः,—विश्वासः, ("समौ विस्रम्भ-विश्वासौ" इत्यमरः)। अतिधीरधियाम—अतिशयेन धीरा धीः,—बुद्धिर्येषां तथाभूतानामपि। अदृष्टपूर्वाः,—पूर्वमदृष्टाः। सुष्टु सृष्ट्यतिशयाः,—शोभना. निर्माणोत्कर्षा इत्यर्थः। ["स्रष्टुः सृष्ट्यतिशयाः" इति पाठे—स्रष्टुः,—विधातुः. सृष्टिः,—विशिष्टनिर्मितिः इति भावः, तस्या अतिशयाः,—उत्कर्षाः, परमोत्कृष्टसृष्टवस्तूनीति यावत्]।

(१०३) सौजन्येति।—सौजन्यस्य परतन्त्रा—पराधीना, इयं देवानां—पूज्यानां युष्माकमित्यर्थः, अतिभद्रता—अतिशयेन शिष्टाचारः, बुधस्य—विद्वज्जनस्य, भवत इत्यर्थः, समीपे इति शेषः, ["बुधस्य" इत्यत्र "प्रियस्य" इति पाठे—प्रियस्य—प्रियजनस्य समीपे इति भावः] कथां कारयति—कथयितुं प्रवर्त्तयतीत्यर्थः, अस्मानिति शेषः। युवतीजनसहोत्था—युवतीजनानां सहोत्था—स्वाभाविकी, तरलता—चपलता, "न तु कपटी

विक्रमजृम्भितविरहव्यथया शून्यतां नीतो देशः? क्व वा गन्तव्यम्? (१०४) को वा अयम् अपहृतहरहुङ्काराहङ्कारोऽपर इव अनङ्गजो युवा? किन्नाम्नः समृद्धतपसः पितुः अयम् अमृतवर्षी कौस्तुभमणिरिव हरेर्हृदयमाह्लादयति? का वाऽस्य त्रिभुवननमस्या प्रभातसन्ध्येव महतस्तेजसो जननी जननी? कानि वा अस्य पुण्यभाञ्जि भजन्ति अभिख्याम् अक्षराणि? आर्य्यपरिज्ञानेऽप्ययमेव क्रमः कौतुकानुरोधिनो हृदयस्य"।

---

कारयति" इत्यनुषङ्गः। [अत्र "युवतीजन" इत्यत्र "कुमारीजन" इति पाठो युज्यते। "युवतीजन" इत्यत्र "युवतीजने"इति पाठान्तरम्]। अथेदानीं सावित्री ब्रह्मोक्तशापावधिमनुस्मृत्य दधीचस्य सरस्वत्याः भर्तृयोग्यतां मनसि कृत्वा परिचयं पृच्छति, तत् कथयेति।—तत्—तस्मात्, कथय—ब्रूहि। अत्र आगमनेन अपुण्यभाक्—पुण्यवर्जितः, युवयोः पूतपादरजःस्पर्शवञ्चितत्वादिति भावः; कतमो देशः विक्रमजृम्भितविरहव्यथया—विक्रमेण—शौर्य्येण, जृम्भिता—उद्दीपिता, या विरहव्यथा—वियोगपीडा, युवयोरिति भावः, तया शून्यतां नीतः, यस्मात् देशात् भवन्तावागतौ, स देश इदानीं युवयोः विरहेण नितरां दुःखितो जातः, इति तस्य अपुण्यभाक्त्वमिति भावः; कुत्र भवतोर्निवासः इति प्रश्ननिष्कर्षः। [ "विक्रमजृम्भितविरहव्यथया" इत्यत्र "विजृम्भितविरहव्यथः" इति पाठे—विजृम्भिता—उद्दीपिता, विरहव्यथा यस्य तथाभूत इत्यर्थः ]।

(१०४) ["को वा" इत्यत्र "कस्य वा" इति पाठे—कस्य जनस्य अयं युवा इत्यन्वयः]। अपहृतेति।—अपहृतः,—नाशितः, हरस्य हुङ्काराहङ्कारः,—हुङ्कारगर्भः गर्वः येन तथाभूतः, हरकोपाग्निना अदग्ध इति भावः। अनङ्गजः,—आत्मभूः, कामः इत्यर्थः। किन्नाम्नः,—किमाख्यस्य। ["का वाऽस्य" इत्यत्र "का चास्य" इति पाठान्तरम्]। त्रिभुवननमस्या—त्रिलोकीपूज्या। प्रभातसन्ध्येव—प्रातःसन्ध्येव। ["महतस्तेजसो जननी जननी" इत्यत्र "महतस्तेजसो जननी" इति पाठान्तरम्]। पुण्यभाञ्जि—पुण्यवन्तीत्यर्थः। अभिख्यां—संज्ञाम्। अक्षराणि—वर्णाः, किन्नामधेयोऽयमिति भावः। आर्य्यपरिज्ञानेऽपि—साधुज्ञानेऽपि, अयं साधुरिति सामान्यतः परिज्ञानेऽपि इत्यर्थः, यद्वा—आर्य्यस्य—भवतः, परिज्ञानेऽपि—परिचयजिज्ञासायामपीत्यर्थः। कौतुकानुरोधिनः,—विशिष्टज्ञानलालसस्येत्यर्थः, अयमेव क्रमः,—नियमः, प्रश्ने इति शेषः।

इत्युक्तवत्यां तस्यां (१०५) प्रकटितप्रश्रयोऽसौ प्रत्यवादीत्,—"आयुष्मति! सतां हि प्रियंवदता कुलविद्या। न केवलमाननं, हृदयमपि च ते चन्द्रमयमिव सुधाकरकरशीतलैराह्लादयति वचोभिः। (१०६) सौजन्यजन्मभूमयो भूयसा शुभेन कर्म्मणा शिल्पकला इव भवादृशो दृश्यन्ते। (१०७) दूरे तावत् अन्योऽन्यस्यालापाः, अभिजातैः सह दृष्टोऽपि मिश्रीभूता महतीं तुष्टिम् आरोपयन्ति। श्रूयताम्—एष खलु भूषणं भार्गववंशस्य भगवतो भूर्भुवःस्वस्त्रितय-

---

(१०५) प्रकटितप्रश्रयः,—प्रदर्शितविनयः। ["प्रत्यवादीत्" इत्यत्र "प्रतिव्याजहार" इति पाठान्तरे—प्रत्युक्तवानित्यर्थः]। सतामिति।—सतां—साधूनां, प्रियंवदता—प्रियभाषित्वं, कुलविद्या—वंशक्रमानुसारिणी विद्या, सहजा विद्या इत्यर्थः। सुधाकरकरशीतलैः,—चन्द्रकिरणवत् शिशिरैः, ["सुधाकरकरशीतलैः आह्लादयति" इत्यत्र "सुधाशीकरशीतलैः आनन्दयति" इति पाठे—अमृतबिन्दुवत् शिशिरैः प्रीणयति इत्यर्थः]।

(१०६) सौजन्येति।—सौजन्यस्य—सज्जनोचिताचारस्य, जन्मभूमयः,—उत्पत्तिस्थानानि। भूयसा—अतिबहुलेन, शुभेन—पुण्येन, कर्म्मणा—कार्य्येण शिल्पकला इव—शिल्पविद्या इव। ["कर्म्मणा ·· ··इव" इत्यत्र "सज्जननिर्म्माणशिल्पकलाः" इति पाठे—सन्तो जनाः सज्जनाः, तेषां निर्म्माणे शिल्पकला इत्यर्थः। "दृश्यन्ते" इत्यत्र "जायन्ते" इति पाठान्तरम्]।

(१०७) दूरे इति।—अन्योऽन्यस्य—परस्परस्य, सज्जनानामिति शेषः। आलापाः,—भाषणानि, दूरे तावत्, तिष्ठन्त्विति शेषः। ["आलापाः" इत्यत्र "आलापनम्" इति पाठे—आभाषणमित्यर्थः] ते खलु तुष्टिमारोपयन्तीत्यत्र का कथा? इति भावः। अभिजातैः,—सत्कुलजैः, सह मिश्रीभूता दृष्टोऽपि—दृष्टयोऽपि, परस्परदर्शनानि अपीत्यर्थः, महतीं तुष्टिं—प्रीतिम्, आरोपयन्ति—जनयन्ति। ["तुष्टिम्" इत्यत्र "भूमिम्" इति पाठे—महतीं भूमिं—स्थानं, स्वर्गमिति यावत्, आरोपयन्ति—नयन्ति। "एषः" इत्यत्र "अयम्" इति पाठान्तरम्]। भूषणम्—अलङ्कारः। भार्गववंशस्य—भृगोरयं भार्गवः, तस्य वंशः,—कुलं तस्य। भूरिति।—

तिलकस्य, (१०८) अदभ्रप्रभावस्तम्भितजम्भारिभुजस्तम्भस्य, (१०९) सुरासुरमुकुटमणिशिलातलशयनदुर्ललितपादपङ्कजस्य, (११०) निजतेजःप्रसरप्लुष्टपुलोम्नः च्यवनस्य बहिर्वर्त्ति जीवितं दधीचो नाम तनयः। जननी च अस्य जितजगतः (१११) अनेकपार्थिवसहस्रानुयातस्य शर्य्यातस्य सुता राजपुत्री त्रिभुवनकन्यारत्नं सुकन्या नाम। तां खलु देवीं द्विमूर्त्तिं

भूः,—पृथिवी, भुवः,—अन्तरीक्षं, स्वः,—स्वर्गः, तेषां त्रितयं, तस्य तिलकं—ललाटभूषणविशेषः तस्य।

(१०८) अदभ्रेति।—अदभ्रः,—बहुलः, महान् इत्यर्थः. ("अदभ्रं बहुलं बहु" इत्यमरः) प्रभावः,—तपःसामर्थ्यमिति यावत्, तेन स्तम्भितः,—संरुद्धः, जम्भारिः,—इन्द्रस्य, भुज एव स्तम्भः येन तथोक्तः तस्य, (पुरा किल अश्विनीकुमाराभ्याम् "आवां यज्ञभागभुजौ कुरु" इति चिरं प्रार्थितोऽयं तथेति प्रतिपद्य ताभ्यां भागं ददत् इन्द्रेण क्रुद्धेन वज्रधरेण रोषितः, ततश्चास्य सवज्रः हस्तः स्तम्भितोऽभूदिति पुराणवार्त्ता अत्र अनुसन्धेया)।

(१०९) सुरासुरेति।—सुराणाम् असुराणाञ्च मुकुटेषु यानि मणिशिलातलानि—रत्नभूतप्रस्तराः, तेषु शयनेन ["शिलातलशयन" इत्यत्र "शिलाशयन" इति पाठान्तरम्] दुर्ललितं—दुरधिगम्यम्, अत्याहृतमिति यावत्, पादपङ्कजं—चरणसरसिजं यस्य तथाभूतस्य, सुरासुरवन्द्यस्येति भावः। ["पादपङ्केरुहस्य" इति पाठान्तरेऽपि स एवार्थः]।

(११०) निजेति।—निजानां तेजसां प्रसरेण—विस्तारेण, प्रभावेणेत्यर्थः, प्लुष्टः,—दग्धः, पुलोमा—तन्नामा दैत्यः येन तथोक्तस्य। (पुरा भृगोः पत्नी अन्तर्वत्नी पुलोम्ना दैत्येन ह्रियमाणा आसीत्, तदानीं गर्भस्थोऽसौ महामुनिर्गर्भात् चुच्योत; ततश्च अन्वर्थनाम्ना अनेन च्यवनेन दैत्योऽसौ कोपदृष्ट्या दग्ध इति पुराणवार्त्ता)। बहिर्वर्त्ति—बहिर्वर्त्तते इति बहिर्वर्त्ति—बहिःस्थितम्। ["बहिर्वृत्ति" इति पाठान्तरे, —बहिः,—बहिःप्रदेशे, वृत्तिः,—अवस्थानं यस्य तादृशं, बहिरवस्थितमित्यर्थः]। जितजगतः,—जगद्विजयिनः।

(१११) अनेकेति।—अनेकानि—बहूनि, पार्थिवानां—राज्ञां, सहस्राणि तैः अनुयातः,—सेवित इति यावत् तस्य। शर्य्यातस्य—तदाख्यस्य, सम्राज इति शेषः। त्रिभुवनकन्यारत्नं—त्रिभुवने यावत्यः कन्याः तासु रत्न—रत्नभूतेत्यर्थः। द्विमूर्त्ति—

द्विदिलां वैजनने मासि प्रसवाय पिता पत्न्याः पार्श्वात् स्वगृहम् आनाययत्; असूत च सा तत्र देवी दीर्घायुषम् एनम्। अनेहसा अवर्द्धत तत्रैव अयम् आनन्दितज्ञातिवर्गो बालस्तारकराज इव राजीवलोचनो राजगृहे। भर्तृभवनमागच्छन्त्यामपि मातरि न (११२) आसेचनकदर्शनमिमम् अमुञ्चत् मातामहो मनोविनोदनं नप्तारम्; अशिक्षत च अयं तत्रैव सर्वा विद्याः सकलाश्च कलाः।

कालेन च (११३) उपारूढयौवनम् इमम् आलोक्य अहमिव असौ अपि अनुभवतु सुखकमलावलोकनानन्दम् अस्य इति मातामहः कथं-कथमप्येनं पितुरन्तिकम् अधुना व्यसर्जयत्। मामपि तस्य देवस्य सुगृहीतनाम्नः शर्य्यातस्य आज्ञाकारिणं विकुक्षिनामानं भृत्यपरमाणुम् अवधारयतु भवती। पितुः पादमूलम् आयान्तं मया साभिसारम् अकरोत् स्वामी। (११४) तद्धि नः कुलक्रमागतं राजकुलम्।

---

द्वे मूर्त्ती यस्याः तां, स्वतो गर्भजन्मना च मूर्त्तिद्वयवतीमित्यर्थः, गर्भिणीमितिभावः। [ "द्विमूर्त्तिम्" इत्यत्र "अन्तर्वत्नीम्" इति पाठे—अन्तर्वत्नीं—गर्भिणीमित्यर्थः ]। वैजनने मासि—प्रसवमासे। अनेहसा—कालेन। तारकराज इव—चन्द्र इव। राजीवलोचनः,—पद्मनेत्रः। [ "मातरि" इत्यत्र "दुहितरि" इति पाठान्तरम्।

(११२) आसेचनकेति।—आसेचनकं—"तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शने" इत्युक्तलक्षणम्, अतिनेत्रानन्दकरमिति यावत्, दर्शनं यस्य तथाभूतम्। मनोविनोदनं—मनःप्रीतिजननम्। नप्तारं—दौहित्रम्। कलाः,—चतुःषष्टिविधाः सङ्गीतादिविद्याः।

(११३) उपारूढयौवनं—प्राप्तयौवनम्। असौ—च्यवनः। कथं-कथमपि—अतिकृच्छ्रेण। व्यसर्जयत्—प्रेषयामास इत्यर्थः। सुगृहीतेति।—सुगृहीतं नाम यस्य तथोक्तस्य—प्रातःस्मरणीयस्य इत्यर्थः. "स सुगृहीतनामा स्यात् यः प्रातः स्मर्य्यते बुधैः" इत्युक्तेः। भृत्यपरमाणुं—क्षुद्रतरं भृत्यमित्यर्थः। आयान्तम्—आगच्छन्तम्, एनमिति शेषः। मया साभिसारं—ससहायं, मत्सहचरमित्यर्थः। स्वामी—प्रभुः, नृपतिरित्यर्थः

(११४) तद्धि न इति।—तत्—राजकुलं, नः,—अस्माकं, कुलक्रमागतं—

उत्तमानाञ्च चिरन्तनता जनयति अनुजीविनि अपि जने कियन्मात्रमिव मन्दाक्षम्। अक्षीणः खलु दाक्षिण्यकोशो महताम्। इतश्च गव्यूतिमात्रे एव पारेशोणं तस्य भगवतः च्यवनस्य स्वनाम्ना नियमितव्यपदेशं चावनं नाम चैत्ररथ-कल्पं काननं निवासः। तदवधिरेव नौ यात्रा। यदि च (११५) गृहीतक्षणदाक्षिण्यम् अनवहेलं वा हृदयम् अस्माकम् उपरि भूमिर्वा प्रसादानाम्, अयं जनः श्रवणार्हो वा, ततो न विमाननीयोऽयं नः प्रथमः प्रणयः कुतूहलिनो

वंशपरम्परया प्राप्तम्, अस्माभिः सेवितमिति यावत्, हि—अवधारणे। उत्तमानां—सज्जनानां, चिरन्तनता—चिरानुगत्यमिति भावः। अनुजीविनि—अनुजीव्य तिष्ठति, सेवके इति यावत्, कियन्मात्रमिव—अल्पमात्रमिव, [ "कियन्मात्रमपि" इति पाठान्तरम् ] मन्दाक्षं—लज्जां, ( "मन्दाक्षं ह्रीस्त्रपा व्रीड़ा लज्जा" इत्यमरः ) चिरानुगत्येन सम्यक् भृत्यभावे महती लज्जा जायते, इति मामनुजीविनमपि स्वदौहित्रसहचरं कृतवानिति भावः। खलु—यतः, महतां दाक्षिण्यकोशः,—औदार्य्यभाण्डारम्, अक्षीणः,—न क्षयं गच्छतीत्यर्थः, स्वस्य दाक्षिण्यातिशय्यात् तथा कृतवानिति भावः। इतश्च—अस्मात् प्रदेशाच्च, पारेशोणं—शोणस्य नदस्य पारे इति पारेशोणम्। गव्यूतिमात्रे—गव्यूतिः,—क्रोशयुगं, तदेव तन्मात्रं तस्मिन्, ( "गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः ) तदन्ते इत्यर्थः, [ अत्रान्ते गम्यमाने अध्ववाचकात् सप्तमी। "गव्यूतिमात्रमिव" इति पाठान्तरम् ]। स्वनाम्ना—निजाख्यया, नियमितः,—निर्द्दिष्टः, अभिहितः इत्यर्थः, व्यपदेशः,—संज्ञा यस्य तथोक्तम्। [ "निर्मितव्यपदेशम्" इति पाठे,—निर्मितः,—कृतः ]। चैत्ररथकल्पं—चैत्ररथं नाम कुबेरोद्यानं, तस्मादीषदूनम्। नौ—आवयोः। यात्रा—गमनम्। [ "तदवधिरेव" इत्यत्र "तदवधिश्रेयम्" इति पाठान्तरम् ]।

(११५) गृहीतेति।—गृहीतं क्षणदाक्षिण्यं—स्वल्पकालिकसौजन्यं येन तथा-भूतम्। [ "गृहीतक्षणम्" इति पाठे—गृहीतः,—स्वीकृतः, प्राप्त इत्यर्थः, क्षणः,—उत्सवः येन तम्; "क्षण उद्धव उत्सवः" इत्यमरः ]। अनवहेलं—नास्ति अवहेला—अवज्ञा यस्य तादृशम्। प्रसादानाम्—अनुग्रहाणां, भूमिः,—पात्रम्। श्रवणार्हः,—श्रोतुं योग्यः। विमाननीयः,—अनादरणीयः, न उपेक्षणीय इति यावत्, नः,—अस्माकम्, अयं प्रथमः,—आद्यः, प्रणयः,—प्रश्रयः, अकुण्ठितसम्भाषणमित्यर्थः, प्रार्थना वा। [ "कुतूहलिनो

हृदयस्य। वयमपि शुश्रूषवो प्रथमवृत्तान्तम् आयुष्मत्योः। न हि इयम आकृतिर्दिव्यतां व्यभिचरति। गोत्र-नामनी तु श्रोतुम् अभिलषति नौ हृदयम्; तत् कथय, कतमो वंशः स्पृहणीयतां जन्मना नीतः? का च इयम् अत्रभवती भवत्याः समवाय इव विरोधिनां पदार्थानाम्? तथा हि,—सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्च, पुण्डरीकमुखी हरिणलोचना च, (११६) बालातपप्रभाधरा कुमुदहासिनी च, समदहंसस्वना

हृदयस्य" इत्यत्र "कुतूहलस्य" इति पाठे—कौतुकस्य, श्रवणौत्सुक्यस्येत्यर्थ. ]। शुश्रूषवः,—श्रोतुमिच्छवः। [ "प्रथमवृत्तान्तम्" इत्यत्र "वृत्तान्तम" इति पाठान्तरम् ]। व्यभिचरति—अतिक्रामति, दिव्यता बिना ईदृशी आकृतिर्न सम्भवतीति भावः। गोत्र-नामनी—कुल-नामधेये। नौ—आवयोः। स्पृहणीयतां—स्पृहायोग्यताम्। [ जन्मना" इत्यत्र "तत्रभवत्या जन्मना" इति पाठान्तरे,—तत्रभवत्या—माननीयया, पूज्यया वा, भवत्या इति शेषः ]। अत्रभवती—मान्या, पूज्या वा। [ "भवत्या." इत्यत्र "भवत्याः समीपे" इति पाठान्तरम् ]। विरोधिनां—परस्परविरुद्धानां, पदार्थानां—वस्तूनां, समवाय इव—सम्मेलनं इव, दृश्यते इति शेषः। तथा हि—तमेवार्थं जानीहीत्यर्थः। सन्निहितबालान्धकारा—सन्निहिताः,—सङ्गताः, बालाः,—केशाः, अन्धकारा इव यस्याः सा, अन्यत्र,—बालाः,—अभिनवा, अन्धकारा. तथाभूता। भास्वन्मूर्त्तिः,—भास्वती—दीप्यमाना, मूर्त्तिः यस्याः तथोक्ता; अन्यत्र,—भास्वतः,—सूर्य्यस्य, मूर्त्तिः। (अत्र सूर्य्यमूर्त्तिसमीपे अन्धकार इति विरोधः, उपमितिसमासे बहुव्रीहिसमासे च तत्परिहारः)। पुण्डरीकमुखी—पुण्डरीकं—श्वेतपद्मं, तद्वत् मुखं यस्याः तथोक्ता; अन्यत्र,—पुण्डरीकः,—तदाख्यो दिग्गजविशेषः, व्याघ्रो वा, तस्येव मुखं यस्याः तथोक्ता। हरिणलोचना—हरिणे—शुक्लवर्णे, लोचने यस्याः तथोक्ता; अन्यत्र—हरिणस्येव लोचने यस्याः तथोक्ता। (अत्र पक्षान्तरे विरोधः, पूर्व्वपक्षे समाधानम्)।

(११६) बालातपेति।—बालातपः,—अभिनवसूर्य्यालोकः, तस्य प्रभेव प्रभा—दीप्तिः यस्य तथाभूतः अधरो यस्याः तथोक्ता, अन्यत्र,—बालातपस्य प्रभां धरतीति तथोक्ता। कुमुदहासिनी—कुमुदवत् हासो विद्यते यस्याः तथोक्ता, अन्यत्र,—कुमुदैः हसतीति कुमुदहासिनी—कुमुदिनीत्यर्थः। (अत्र पूर्व्वमविरोधः, पश्चाद्विरोधः)। समदहंसस्वना—मदेन सह वर्त्तमानः समदः,—मत्त इत्यर्थः, स चासौ हंसश्चेति

समुन्नतपयोधरा च, (११७) कमलकोमलकरा (११८) हिमगिरि-शिलापृथुनितम्बा च, करभोरुर्विलम्बितगामिनी च, अमुक्त-कुमारभावा स्निग्धतारका च" इति।

सा तु अवादीत्—"आर्य! श्रोष्यसि कालेन; (११९) भूयसो दिवसात् अत्र स्थातुम् अभिलषति नो हृदयम्। अल्पीयांश्चायमध्वा, परिचय एव प्रकटीकरिष्यति।

समदहंस,, तस्येव स्वन,—ध्वनिः यस्या. तथोक्ता, अन्यत्र,—समद,—मत्ततान्यञ्जक इत्यर्थ., हंसस्य स्वनो यस्या तथाभूता। [ "समदहंसस्वना" इत्यत्र "कलहंसस्वना" इति पाठे—कलः,—मधुरः, हंसस्येव स्वनो यस्याः तथोक्ता, अन्यत्र,—कलहंसस्य स्वनो यस्या तथोक्ता ]। समुन्नतपयोधरा—समुन्नतौ—तुङ्गौ, पयोधरौ—कुचौ यस्याः तथोक्ता; अन्यत्र,—समुन्नता,—समुद्गताः, पयोधराः,—मेघाः यस्या तथोक्ता, प्रावृडिति भावः। (पूर्व्वत्र समाधानं, पश्चात् हंसाना मरयेव मत्ततानननं, न प्रावृषीति विरोधः)।

(११७) कमलेति।—कमल—पद्मं, तद्वत् कोमलौ करौ यस्याः तथोक्ता; अन्यत्र,—कमलवत् कोमला,—मृदुलाः, कराः,—किरणा. यस्या. तथोक्ता।

(११८) हिमेति।—हिमगिरे,—हिमालयस्य, शिलावत् पृथु,—विशालः, नितम्ब. यस्याः तथोक्ता, अन्यत्र,—पृथुनितम्बा हिमगिरिशिलेति व्यत्ययेनान्वयः; पृथुः,—महान्, नितम्ब,—कटक यस्या तथाभूता। (प्रागविरोध., पश्चात् तादृश्याः शिलायाः कोमलकरताऽसम्भवाद्विरोधः)। करभोरु.,—करभ.,—मणिबन्धादाकनिष्ठ करस्य बहिर्भागः, ("मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः) तद्वत् ऊरु यस्या. सा, अन्यत्र,—करभस्य—उष्ट्रस्य इव, ऊरू यस्या. सा, तथा विलम्बितं—मृदुमन्द, सविलासमित्यर्थः, गच्छतीति तथोक्ता, अन्यत्र,—विलम्बितम्—अतिमन्दं, गच्छतीति तथोक्ता। [प्रागविरोधः, पश्चात् करभस्य द्रुतगामित्वाद्विरोधः। "विलम्बितगमना" इति पाठान्तरम् ]। अमुक्तकुमारभावा—न मुक्तः,—न त्यक्तः, कुमारभाव,—बाल्यमित्य यया तथोक्ता, अन्यत्र,—न मुक्तः, कुमारे—कार्त्तिकेये, भाव,—भक्तिर्यया तथोक्ता। स्निग्धतारका—स्निग्धा—स्नेहव्यञ्जिका, सुप्रसन्नेत्यर्थः, तारका—अक्ष्णः कनीनिका यस्याः तथोक्ता, अन्यत्र,—स्निग्ध,—स्नेहपात्रमित्यर्थ., तारकः,—तदाख्यदैत्यविशेषः यस्याः तथाभूता। (कुमारभक्तायाः, कुमारशत्रु तारकं प्रति स्नेहो विरुद्ध इति, पूर्वार्थे तत्परिहार.)।

(११९) भूयसः,—बहून्। अल्पीयान्—अत्यल्पः। अध्वा—मार्ग.। परि

आर्य्येण न विस्मरणीयोऽयमनुषङ्गदृष्टो जनः" इत्यभिधाय तूष्णीमभूत्। दधीचस्तु नवाम्भोभारगम्भीराम्भोधरध्वान-निभया भारत्या नर्त्तयन् (१२०) वनलताभवनभाजो भुजग-भुजः सुधीरमुवाच,—"आर्य्ये! करिष्यति प्रसादम् आर्य्या आराध्यमाना। पश्यामः तातम्। उत्तिष्ठ, व्रजामः" इति। "तथा" इति च तेन अभ्यनुज्ञातः शनकैः उत्थाय कृतनम-स्कृतिः उच्चचाल। तुरगारूढ़ञ्च तं प्रयान्तं सरस्वती सुचिरम् उत्तम्भितपक्ष्मणा निश्चलतारकेण लिखितेनेव चक्षुषा व्यलोकयत्। उत्तीर्य्य शोणम् अचिरेणैव कालेन दधीचः पितुः आश्रमपदं जगाम। गते च तस्मिन् सा तामेव दिशं विलोकयन्ती सुचिरमतिष्ठत्, कृच्छ्रादिव च सञ्जहार दृशम्।

अथ मुहूर्त्तमिव स्थित्वा स्मृत्वा च तां तस्य रूपसम्पदं

---

चयः,—संस्तवः। प्रकटीकरिष्यति—प्रकाशयिष्यति, अध्वनी गव्यूतिमात्रपरिमाणत्वात् निकटस्थितयोः आवयोः अन्तराऽन्तरा दर्शनसम्भावनया अचिरात् परिचयं प्राप्स्यसीति भावः। अनुषङ्गदृष्टः,—अनुषङ्गेण—कार्य्यान्तरप्रसङ्गेन, मार्गानुरोधेनेत्यर्थः, दृष्टः, —अवलोकितः। नवाम्भोभारेति।—नवानाम्—अभिनवसञ्चितानामित्यर्थः, अम्भसां —जलानां, भारेण—गौरवेण, ["भार" इत्यत्र "भर" इति पाठान्तरम्] गम्भीरो योऽम्भोधरध्वानः,—मेघस्य नादः, तन्निभया—तदनुरूपया। भारत्या—वाचा। नर्त्तयन्—नृत्यं कारयन्।

(१२०) वनेति।—वनलता एव भवनानि—गृहाणि, भजन्ते इति तयोक्तान्। भुजगान् भुङ्क्ते इति भुजगभुजः,—मयूरान्; मयूरा मेघगर्ज्जनेन नृत्यन्तीति प्रसिद्धिः। प्रसादम्—अनुग्रहम्। आराध्यमाना—सेव्यमाना। ["पश्यामः तातम्" इत्यत्र "पश्यामः तावत्तातम्" इति पाठान्तरम्]। उच्चचाल—प्रतस्थे। उत्तम्भित-पक्ष्मणा—उत्तम्भितानि—उत्क्षिप्तानि, ऊर्द्ध्वे स्थिरीकृतानीत्यर्थः, पक्ष्माणि—नेत्रलोमानि यस्य तेन, निश्चलतारकेण—स्थिरतारेण। पितुः,—जनकस्य च्यवनस्य। विलोकयन्ती —पश्यन्ती। ["आलोकयन्ती" इति पाठान्तरम्]। कृच्छ्रादिव—अतिकष्टेनेव, दृशं —चक्षुः, सञ्जहार—न्यवर्त्तयत्।

पुनः पुनः (१२१) व्यस्मयत अस्याः हृदयम्। भूयोऽपि चक्षुः आचकाङ्क्ष तद्दर्शनम्। अवशेव केनाप्यनीयत तामेव दिशं दृष्टिः। अप्रहितमपि मनस्तेनैव सार्द्धम् अगात्। अजायत च नवपल्लव इव लतायाः कुतोऽपि अनुरागः चेतसि। सालसेव शून्येव सनिद्रेव दिवसम् अनयत्। अस्तमुपयाति च प्रत्यक्-पर्य्यस्तमण्डले, लाङ्गलिकीस्तवकसदृशत्विषि, कमलिनीकामुके, (१२२) कठोरसारसशिरःशोणशोचिषि सावित्रे त्रयीमये तेजसि. (१२३) तरुणतरतमालश्यामले च मलिनयति व्योम व्योमव्यापिनि तिमिरसञ्चये, सञ्चरत्सिद्धसुन्दरीनूपुररवानुसारिणि च मन्दं मन्दं मन्दाकिनीहंस इव समुत्सर्पति शशिनि गगनतलं,

---

(१२१) व्यस्मयत—विस्मयमगच्छत्। अवशेव—पराधीनेव। अप्रहितमपि—अप्रेरितमपि, अनियुक्तमपि इति यावत्। [ "लतायाः" इत्यत्र "बालवनलतायाः" इति पाठान्तरम्। "कुतोऽप्यनुरागः" इत्यत्र "कुतोऽप्यस्या अनुराग." इति पाठान्तरम्। "सालसेव" इत्यत्र च "सालस्येन" इति पाठान्तरम् ]। अनयत्—अत्यवाहयत्, कृच्छ्रेण इति भावः। उपयाति—उपगच्छति। प्रत्यक्पर्य्यस्तमण्डले—प्रत्यक्—प्रतीच्या, पश्चिमायां दिशीत्यर्थः, पर्य्यस्त—पतित, मण्डल यस्य तथाभूते। लाङ्गलिकीति।—लाङ्गलिकी—"ईशलाङ्गला" इति ख्यातः लाङ्गलाकाररक्तवर्णपुष्पविशिष्ट औषधिभेदः, तस्याः स्तवकं—पुष्पगुच्छः, तेन सदृशी त्विट्—प्रभा यस्य तथोक्ते, ईषद्रक्तपिङ्गले इति भावः। [ "लाङ्गलिकीस्तवकताम्र-त्विषि" इति पाठे—लाङ्गलिकीस्तवकवत् ताम्राः,—रक्ताः, त्विषो यस्य तथोक्ते इत्यर्थ. ]।

(१२२) कठोरेति।—कठोर.,—परिणत, स्थविर इत्यर्थः, यः सारसः,—पक्षिभेदः, तस्य शिर इव शोणा—रक्ता, शोचिः,—दीप्तिः यस्य तथाभूते। सावित्रे—सवितुरिदं सावित्रं तस्मिन्। त्रयीमये—ऋग्यजुःसाम्नां त्रितयं त्रयी, "ऋग्यजु.सामनामानः त्रयो वेदास्त्रयी स्मृता" इत्युक्ते, तदात्मके, "त्रय्येव विद्या तपति" इति श्रुतेः।

(१२३) तरुणेति।—तरुणतर,—अभिनवः, तमालः,—तदाख्यवृक्षभेदः, तद्वत् श्यामलः,—नीलः तस्मिन्। व्योम—आकाशं, मलिनयति—मलिनीकुर्व्वति। व्योम-व्यापिनि—गगनाच्छादिनि। सञ्चरदिति।—सञ्चरन्तीनाम्—इतस्ततो गच्छन्तीनां, सिद्धसुन्दरीणा—देवयोनिविशेषाणां स्त्रीणां, नूपुररवम् अनुसरति—अनुगच्छतीति तथोक्ते। मन्दं मन्द—शनैः शनै,। समुत्सर्पति—समुद्गच्छति।

(१२४) कृतसन्ध्याप्रणामा निशामुखे एव निपत्य विमुक्ताङ्गी पल्लवशयने तस्थौ। सावित्री अपि कृत्वा यथाक्रियमाणं सायन्तनं क्रियाकलापम् उचिते शयनकाले किसलयशयनमभजत, जातनिद्रा च सुष्वाप।

इतरा तु मुहुर्मुहुः (१२५) अङ्गवलनैः विलुलितकिसलयशयनतला निमीलितलोचनाऽपि नाभजत निद्राम्, अचिन्तयच्च,—"मर्त्त्यलोकः खलु सर्व्वलोकानाम् उपरि, यस्मिन् एवंविधानि सम्भवन्ति त्रिभुवनभूषणानि सकलगुणग्रामगुरूणि रत्नानि। तथा हि, तस्य (१२६) मुखलावण्यविन्दुः इन्दुः। तस्य च चक्षुषो विक्षेपाः (१२७) कुमुदकुवलयकमलाकराः। तस्य च अधरमणेर्दीधितयो विकसितबन्धूकवनराजयः।

(१२४) कृतेति।—कृत सन्ध्याया सन्ध्यायै वा प्रणामः यया तथाभूता, उपासितसन्ध्येति यावत्। निशामुखे एव—प्रदोषे एव, न पुनः शयनोचिते काले इति भाव। विमुक्ताङ्गी—निहितकलेवरा। "विमुक्ताङ्गी" इत्यनेन निसहाङ्गत्वमस्या दर्श्यते। "यथाक्रियमाणम्" इत्यनेन सरस्वत्या' अस्या. विशेषत्व प्रदर्शयन् सरस्वत्या एव स्मरदशामाह। सायन्तन क्रियाकलापं—सन्ध्याकालिककार्य्यजातम्।

(१२५) अङ्गवलनै.,—अङ्गस्य इतस्ततः चालनै., विलुण्ठनैरिति यावत्। विलुलितेति।—विलुलित—विपर्य्यस्त, किसलयशयनतल—पल्लवशय्या यस्या. तथाभूता। ["किसलयशयनीया" इति पाठान्तरे,—किसलयमेव शयनीयं—शय्या यस्याः सा]। सर्व्वलोकाना—सर्वेषा लोकाना, स्वर्गमर्त्त्यपातालानाम् इत्यर्थ., [निर्द्धारे षष्ठी] उपरि—श्रेष्ठ इत्यर्थः। सकलगुणग्रामगुरूणि—सकला गुणा.,—सौन्दर्य्यविनयादय., तेषा ग्रामः,—समवायः, तेन गुरूणि—महान्ति।

(१२६) मुखेति।—मुखस्य लावण्याना—कान्तिविशेषाणा, विन्दुः,—लेशः, इन्दु',—चन्द्रः। ["मुखलावण्यविन्दुरिन्दुः" इत्यत्र "मुखलावण्यप्रवाहस्य निष्यन्दविन्दुरिन्दुः" इति पाठे,—मुखस्य यत् लावण्य, तदेव प्रवाह,—जलधारा, तस्य निष्यन्दविन्दुः,—स्रावकणः। चक्षुषोः,—नयनयोः, विक्षेपा,—विसरणानि, निपाता इत्यर्थः।

(१२७) कुमुदेति।—कुमुदानि—कैरवाणि, कुवलयानि—नीलोत्पलानि, कमलानि—पद्मानि, तेषाम् आकराः,—निचयाः। ["विकचकुमुद" इत्यादि

तस्य च अङ्गस्य परभागकरणम् अनङ्गः। आः! पुण्यभाञ्जि तानि चक्षूंषि चेतांसि यौवनानि वा स्त्रैणानि, येषाम् असौ अविषयो दर्शनस्य। क्षणं नु दर्शयता च तम् अन्यजन्मजनि-कृतेनेव मे फलितम् अधर्मेण। का प्रतिपत्तिरिदानीम्?" इति चिन्तयन्त्येव कथंकथमपि समुपजातनिद्रा क्षणमशेत। सुप्ता च तम् एव दीर्घलोचनं ददर्श। (१२८) स्वप्नासादित-द्वितीयदर्शना च आकर्णाकृष्टकार्मुकेण मनसि निर्दयमताड्यत मकरकेतुना। प्रतिबुद्धाया मदनशरताडितायाश्च तस्या वार्त्तामिव उपलब्धुम् अरतिः आजगाम। तथा हि, ततः

---

पाठान्तरम्]। दीधितयः,—मयूखाः। परभागकरणं—परभागस्य—उत्कर्षस्य, करणं—साधनम्। ["परभागकरणम्" इत्यत्र "परभागोपकरणम्" इति पाठे—उपक्रियते अनेनेति उपकरणं—साधनसामग्रीत्यर्थः]। आः इति खेदे। पुण्य-भाञ्जि—पुण्यानि भजन्ते इति तानि, पुण्यवन्तीत्यर्थः। स्त्रैणानि—स्त्रीणाम् इमानि, स्त्रीसम्बन्धीनि इत्यर्थः; यद्वा,—स्त्रीणां समूहाः स्त्रैणानि—नारीजातय इत्यर्थः। येषां—चक्षुःप्रभृतीनाम्, असौ—युवा, अविषयः,—अगोचरः, यैः असौ न दृष्टः, तेषां सुखेन अवस्थितिरिति पुण्यभाक्त्वमिति भावः। ["अविषयः" इत्यत्र "विषयः" इति पाठान्तरे,—विषयः,—गोचरः, दृष्टिपथ गत इत्यर्थः]। अन्येति।—अन्यस्मिन् जन्मनि—पूर्व्वजन्मनि, या जनिः,—उत्पत्तिः, गर्हितकर्म्मणामिति भावः, पूर्व्वजन्मानु-ष्ठितगर्हिताचरणमिति फलितं, तत्कृतेनेव—तज्जनितेनेव। ["अन्यजन्मजनितेनेव" इति पाठस्तु सुगमः। "फलितम् अधर्मेण" इत्यत्र "फलितं धर्मेण" इति पाठो न युज्यते]। अधर्म्मवशादेव अस्य दर्शनं जातं, तेनैव मे ईदृशी विकृतिरिति भावः। ["येषाम् असौ विषयः" इति पाठे तु—"फलितं धर्मेण" इति पाठो युज्यते। अस्य क्षणसाक्षात्कारेणैव जन्मसाफल्यमिति पुण्यभाक्त्वमिति भावः]। प्रतिपत्तिः,—इति-कर्त्तव्यता। ["समुपजातनिद्रा क्षणम्" इत्यत्र "उपजातनिद्रा चिरात् क्षणम्" इति पाठान्तरे,—चिरात्—दीर्घकालेन, दीर्घकालानन्तरमित्यर्थः]।

(१२८) स्वप्नेति।—स्वप्ने—निद्रावस्थायाम्, आसादितं—प्राप्तं, द्वितीयं दर्शनं, तस्येति भावः यया तथाभूता। प्रतिबुद्धायाः,—जागरितायाः। अरतिः,—वस्तु-वैराग्यरूपा कामदशा; तथा चोक्तं दर्पणे—"अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशता-

प्रभृति (१२९) कुसुमधूलिधवलिताभिर्वनलताभिः अताड़िताऽपि वेदनाम् अधत्त। मन्दमन्दमारुतविधुतैः कुसुमरजोभिः अदूषितलोचना अपि अश्रुजलं मुमोच। (१३०) हंसपक्ष-तालवृन्त-व्यविधुतैः शोणशीकरैः असिक्ताऽपि आर्द्रतामगात्। (१३१) प्रेङ्खत्कादम्बमिथुनाभिरनूढाऽपि अघूर्णत वनकमलिनी-कल्लोलदोलाभिः। (१३२) विघटमानचक्रवाकयुगलविसृष्टैः अस्पृष्टाऽपि श्यामताम् आततान विरहनिश्वासधूमैः। पुष्प-धूलिधूसरैः अदष्टाऽपि व्यचेष्टत मधुकरकुलैः।

---

ऽरुचिः। अधृतिः स्यात् अनालम्बस्तन्मयोन्मादमूर्च्छनाः। मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह॥" इति। "दुःखासिका" इति केचित्। कामवधूप्रतिपक्षभूतेति तदुपस्थितिप्रसङ्गः।

(१२९) कुसुमेति।—कुसुमानां धूलिभिः,—परागैः, धवलिताः,—व्याप्ततया श्वैत्यमापन्ना इत्यर्थः ताभिः, ["कुसुमधूलिधवलाभिः" इति पाठान्तरम्]। वेदना—व्यथाम्। अधत्त—अनुबभूव। तादृशलतास्पर्शे प्रत्युत सुखमेव भवेत्, अस्यास्तु न तथा, इत्यरतिरिति भावः। एवमुत्तरत्र द्रष्टव्यम्। अदूषितलोचना—अकलुषितनयना।

(१३०) हंसेति।—हंसानां पक्षा एव तालवृन्तचयाः,—व्यजनसङ्घाः, तैः विधुताः,—विक्षिप्ताः तैः। ["हंसपक्षतालवृन्तव्रातवातविततैः" इति पाठे—तालवृन्तानां व्राताः,—समूहाः, तेषां वातैः विततः,—विस्तृताः, विक्षिप्ता इत्यर्थः तैः]। शोणशीकरैः,—शोणस्य—तदाख्यनदस्य, शीकराः,—अम्बुकणाः तैः, ("शीकरोऽम्बुकणः स्मृतः" इत्यमरः)। आर्द्रतां—जाड्यम्।

(१३१) प्रेङ्खदिति।—प्रेङ्खन्ति—सञ्चरन्ति, कादम्बानां—कलहंसानां, मिथुनानि—युगलानि यासु तथाविधाभिः। वनकमलिनीकल्लोलदोलाभिः,—वनेषु—जलेषु, याः कमलिन्यः,—पद्मिन्यः, ता एव कल्लोलदोलाः,—तरङ्गरूपदोलनयन्त्राणि ताभिः, अनूढाऽपि—अनुपवेशिताऽपि, अघूर्णत—अभ्राम्यत्।

(१३२) विघटमानेति।—विघटमानैः,—विच्छेदं गच्छद्भिः इत्यर्थः, चक्रवाकाणां युगलैः,—मिथुनैः, विसृष्टाः,—त्यक्ताः तैः। विरहनिश्वासधूमैः,—विरहे ये निश्वासाः, ते धूमा इव तैः। श्यामतां—मलिनतां, शृङ्गाररसव्यञ्जकवैवर्ण्यमिति यावत्; यदुक्तं,—"शृङ्गारदेवो भगवान् मुरारिः सङ्गीयते श्यामवपुर्मुरारिः। श्यामो

(१३३) अथ गणरात्रापगमे निवर्त्तमानस्तेनैव वर्त्मना तं देशम् आगत्य तत्रैव निवारितपरिजनः कृतधारस्तितीयो विकुक्षिर्ढुढौके। सरस्वती तु तं दूरादेव सम्मुखमापतन्तं दृष्ट्वा ससम्भ्रमम् उत्थाय वनमृगीव उद्ग्रीवा विलोकयन्ती मार्ग-परिश्रान्तम् अस्नपयत् इव धवलितदशदिशा दृशा।

कृतासनपरिग्रहन्तु तं प्रीत्या सावित्री पप्रच्छ,—"आर्य्य! कच्चित् कुशली कुमारः?" इति। सोऽब्रवीत्—"आयुष्मति! कुशली, स्मरति च (१३४) भवत्योः, केवलमस्मीषु दिवसेषु तनीयसीमिव तनुं बिभर्त्ति, अविज्ञायमानाञ्च अनिमित्तां शून्यतामिवाधत्ते। अपि च अन्वक् समागमिष्यति एव मालती इति नाम्ना वरवर्णिनी वार्त्तां वो विज्ञातुम्;

---

मनाक् स्निग्धतरस्य तेन शृङ्गारशंसी मुखरागं उक्तः॥" इति। आततान—प्र म। [ "आततान" इत्यत्र "आससाद" इति पाठान्तरम् ]। पुष्पेति।—पुष्पाणां धूलिभिः,—परागैः, धूसराः,—कपिशाः तैः, मधुकरकुलैः,—भ्रमरसङ्घैः, अदृष्टाऽपि व्यचेष्टत—तेषां झङ्कारैर्व्यथिता भूमौ विलुण्ठितवतीत्यर्थः।

(१३३) अथ—अनन्तरं, गणरात्रापगमे—गणरात्रं—बह्वी निशाः, ("गणरात्रं निशा बह्वाः" इत्यमरः) तस्य अपगमे—अतिक्रमे, बहुनिशासु गतासु इत्यर्थः। ढुढौके—प्राप, उपतस्थे इत्यर्थः। [ "आपतन्तं दृष्ट्वा ससम्भ्रमम् उत्थाय" इत्यत्र "आगच्छन्तं प्रीत्या सम्यक् समुत्थाय" इति पाठान्तरम्। "मार्गपरिश्रान्तम्" इत्यत्र "मार्गोपरि श्रान्तम्" इति पाठान्तरे—श्रान्तं तं मार्गोपरि एव, अस्नपयदिव इति परेणान्वयः। एतेन दधीचवार्त्ताज्ञानार्थमस्या अतीव व्याकुलत्वं सूच्यते ]। अस्नपयत् इव—स्नपयामासेव। धवलितेति।—धवलिताः,—श्वेतीकृताः दश दिशः यया तथाभूतया।

(१३४) भवत्योः,—भवत्यौ इत्यर्थः, [ स्मरणार्थकधातोर्योगे कर्म्मणि षष्ठी ]। तनीयसीम्—अतिशयेन कृशाम्। शून्यतामिव—अभावमिव, आधत्ते—अनुभवतीत्यर्थः। अन्वक्—मत्पश्चात्, अविलम्बेनैवेति भावः। वरवर्णिनी—उत्तमाङ्गना, काचिदिति शेषः। [ "अन्वक् समागमिष्यत्येव मालती इति नाम्ना वरवर्णिनी" इत्यत्र "अन्वक्षमागमिष्यत्येव मालतीति नाम्ना वाणिनी" इति पाठान्तरे,—अन्वक्षम्—अनुपदमेव मत्पश्चादेवेत्यर्थः। वाणिनी—दूती ]। वः,—युष्माकं, तव सरस्वत्याश्च

उच्छ्वसितं हि सा कुमारस्य” इति। तच्छ्रुत्वा पुनरपि सावित्री समभाषत,—“अतिमहानुभावः खलु कुमारः, यत् एवम् अविज्ञायमाने चणदृष्टेऽपि जने परिचितिम् अनुबध्नाति। तस्य हि गच्छतो यदृच्छया कथमपि अंशुकमिव मार्गलतासु मानसम् अस्मासु मुहूर्त्तम् आसक्तम् आसीत्। अमूल्यं हि सौजन्यम् आभिजात्येन वः स्वामिसूनोः। अलसः खलु लोकः, यदेवं (१२५) सुलभसौहार्द्दानि येन केनचिन्न क्रीणाति महतां मनांसि। सोऽयम् औदार्य्यातिशयः कोऽपि महात्मनाम् इतरजनदुर्लभः, येन उपकरणीकुर्व्वन्ति त्रिभुवनम्” इति। विकुक्षिः उच्चावचैः आलापैः सुचिरमिव स्थित्वा यथाऽभिलषितं देशम् अयासीत्।

---

इत्यर्थः। वार्त्ता—प्रवृत्तिम्। सा—मालती। कुमारस्य—दधीचस्य, उच्छ्वसित—जीवनमित्यर्थ, सदैव सहचरीति भावः। (“उच्छ्वसितम्” इत्यनेनास्याः विस्रम्भवत्ता ख्यापिता)। अविज्ञायमाने—अज्ञातकुलशीले इति भाव। परिचितिं—परिचय, प्रणयमिति यावत्। अनुबध्नाति—आदधाति। महानुभावाः स्व-परविवेकरहिताः सर्व्वमेव स्व मन्यन्ते इति भाव.। यदृच्छया—अकस्मादित्यर्थः। अंशुकमिव—वसनमिव। मार्गलतासु—पथि स्थितासु वल्लीषु, अपरिचितासु इति भाव, यश्च यदृच्छया गच्छति, तस्य अनवधानतया कदाचित् अंशुकादि मार्गलतासु यथा लगति, तथा मार्गवशादिहागतस्य कुमारस्यापि मन अस्मासु इति भाव.। अमूल्यं—महामूल्यम्। [अत्र “अमूल्यम्” इति पाठान्तरे,—अमूल्य—न निरर्थकमित्यर्थ., केवल वाचिक सौजन्य न, किन्तु आन्तरमेवेति भावः] आभिजात्येन—सद्वंशप्रसूतत्वेन। स्वामिसूनोः,—प्रभुकुमारस्य। अलसः,—निश्चेष्टः, मूढो वा।

(१२५) सुलभेति।—सुलभानि—सुप्रापाणि, सौहार्द्दानि—मित्रताः येषां तानि, महताम्—उदाराणां, मनांसि—चेतांसि, येन केनचित्—सामान्येन वस्तुनेति भावः न क्रीणाति—क्रेतुं न प्रभवति। औदार्य्यातिशय,—अतिशयेन औदार्य्यम्। कोऽपि—अनिर्वचनीयः। इतरजनदुर्लभः,—क्षुद्रजनदुष्प्राप.। येन—औदार्य्यातिशयेन इत्यर्थ.। उपकरणीकुर्व्वन्ति—वशीकुर्व्वन्तीत्यर्थः। उच्चावचैः—नानाविधैः। (“उच्चावच नैकभेदम्” इत्यमरः)।

(१३६) अथ अपरेद्युः उदिते भगवति द्युमणौ उद्दामद्युतौ अभिद्रुततारके तिरस्कृततमसि तामरसिनीविकासव्यसनिनि सहस्ररश्मौ शोणम् उत्तीर्य्य आयान्ती, तरलदेहप्रभावितानच्छलेन अत्यच्छं सकलं शोणसलिलमिव आनयन्ती, (१३७) स्फुटितातिमुक्तककुसुमस्तवकसमत्विषि सटाले महति मृगपताविव गौरी तुरङ्गमे स्थिता, सलीलम् उरोबध्रारोपितस्य, (१३८) तिर्य्यगुत्कर्णतुरगाकर्ण्यमाननपुरपटुरणितस्य, अतिबहलेन पिण्डालक्तकेन पल्लवितस्य

---

(१३६) अपरेद्युः,—अन्यस्मिन् अहनि। अपरेद्युः इत्यादिके—मालती समदृश्यतेति अन्वयसम्बन्धः। ["उदिते" इत्यत्र "उद्यति" इति पाठे,—उदयं गच्छतीत्यर्थः]। द्युमणौ—दिवो मणिरिव तस्मिन्, गगनरत्ने इत्यर्थः, सूर्य्ये इति यावत्। उद्दामद्युतौ—उद्दामा—उत्कटा, उष्णेति यावत्, द्युतिः,—प्रभा यस्य तस्मिन्। अभिद्रुततारके—अभिद्रुताः,—सन्ताड़िताः, तारकाः,—नक्षत्राणि येन तथोक्ते, नक्षत्रतिरोधानकारिणि इत्यर्थः। तिरस्कृततमसि—दूरीकृतान्धकारे। तामरसिनीविकासव्यसनिनि—तामरसिन्यः,—पद्मिन्यः, तासां विकासे—प्रस्फुटने, व्यसनम्—आसक्तिः विद्यतेऽस्येति तथाभूते। ["ताम···व्यसनिनि" इत्यत्र "तामरसव्यासव्यसनिनि" इति पाठान्तरे,—तामरसस्य—पद्मस्य, व्यासः,—विस्तारः, विकाश इति यावत्, तत्र व्यसनिनि]। आयान्ती—आगच्छन्ती। तरलेति।—तरला—चञ्चला, विकासिनी इत्यर्थः, या देहप्रभा, तासां वितानः,—विस्तारः, स एव छलं, तस्य छलं वा तेन। अत्यच्छम्—अतिनिर्म्मलम्। आनयन्ती—सहचरीकुर्व्वतीत्यर्थः।

(१३७) स्फुटितेति।—स्फुटितः,—विकशितः, योऽतिमुक्तकवुसुमस्तवकः,—माधवीलतापुष्पगुच्छः, तेन समाः त्विषः,—कान्तयः यस्य तथोक्ते। सटाले—केशरवति। मृगपताविव—सिंहे इव। गौरी—गौरवर्णा, पार्व्वती च। उरोबध्रारोपितस्य—उरोबध्रा—अश्वपृष्ठारूढस्य चरणस्थापनार्थं द्रव्यविशेषः, तत्र आरोपितस्य—स्थापितस्य; चरणयुगलपदस्य विशेषणमिदम्।

(१३८) तिर्य्यगिति।—तिर्य्यक्—साचि यथा तथा, उत्कर्णेन—उन्नमितकर्णेन, तुरगेण—अश्वेन, आकर्ण्यमानं—श्रूयमाणं, प्रियमधुरशब्दत्वादिति भावः

(१३९)कुङ्कुमपिञ्जरितपृष्ठस्य चरणयुगलस्य प्रसरद्भिः अतिलोहितैः प्रभाप्रवाहैः उभयतः ताड़नदोहदलोभागतानि किसलयितातिरिक्तरक्ताशोकवनानि इव आकर्षयन्ती, (१४०) सकलजीवलोकहृदयहठहरणघोषणयेव रशनया शिञ्जानजघनस्थला, धौतधवलनेत्रनिर्म्मितेन निर्मोकलघुतरेण आप्रपदीनेन कञ्चुकेन(१४१)तिरोहिततनुलता, तनुकञ्चुकाभ्यन्तरदृश्यमानैः आश्यानचन्दनधवलैः

नूपुरयोः पटु—स्पष्टं, रणितं—शब्दं यस्य तथाभूतस्य। अतिबहलेन—अविप्रभूतेन, पिण्डालक्तकेन—घनलाक्षारसेन, पल्लवितस्य—नवकिसलयवदाचरत इत्यर्थः।

(१३९) कुङ्कुमेति।—कुङ्कुमेन पिञ्जरितं—रञ्जितं, पीतवर्णीकृतम् इत्यर्थः, पृष्ठं यस्य तादृशस्य। उभयतः,—उभयोः पार्श्वयोरित्यर्थः। ताड़नेति।—ताड़नं—प्रहार एव, दोहदः,—गर्भाभिलाषः, तत्र लोभः,—लोलुपता, तेन आगतानि; "पादाहतः प्रमदया विकसत्यशोकः" इति कविसमयप्रसिद्धेः। किसलयितानि—सञ्जातपल्लवानि, अत एव अतिरिक्तानि—विस्तृतानि, रक्ताशोकवनानि तानि; ["किसलयितातिरिक्तरक्ताशोकवनानि" इत्यत्र "किसलयितानि रक्ताशोकवनानि" इति पाठान्तरम्]।

(१४०) सकलेति।—सकलानां जीवलोकानां हृदयानि—चेतांसि, तेषां हठेन—सहसा, हरणं तस्य घोषणा—वाद्यविशेषानुगतानि वचनानीत्यर्थः तयेव; ["हरणघोषणयेव" इत्यत्र "हरणाघोषणयेव" इति पाठान्तरे—आघोषणा—वाद्यविशेषानुगताज्ञेत्यर्थः]। रशनया—मेखलया। शिञ्जानेति।—शिञ्जानं—रणत्, जघनस्थलं यस्याः तथोक्ता। धौतेति।—धौतं—क्षालितम्, अत एव धवलं नेत्रं—वस्त्रविशेषः, ("नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च" इति मेदिनी; तेन निर्म्मितः,—कृतः तेन। निर्मोकः,—सर्पकञ्चुकः, तद्वत् लघुतरः,—अतिशयेन सूक्ष्मः तेन। आप्रपदीनेन—प्रपदं—पादाग्रं, प्रपदात् आ आ-प्रपदं—पादाग्रपर्य्यन्तं, तत् व्याप्नोतीति तथोक्तेन, पादाग्रपर्य्यन्तलम्बितेनेत्यर्थः।

(१४१) तिरोहितेति।—तिरोहिता—आवृता, तनुरेव—अङ्गमेव, लता—वल्ली यया तथोक्ता। तन्विति।—तनोः,—सूक्ष्मस्य, कञ्चुकस्य—वर्म्मणः, गात्रावरणस्येत्यर्थः, अभ्यन्तरेषु दृश्यमानाः तैः। ["तनुकञ्चुकाभ्यन्तर—" इत्यत्र "छातकञ्चुकान्तर—" इति पाठे,—छातः,—तनुः, सूक्ष्म इत्यर्थः]। आश्यानेति।—आश्यानानि—ईषच्छुष्काणि, चन्दनानि, तैः धवलाः तैः।

अवयवैः (१४२) स्वच्छसलिलाभ्यन्तरविभाव्यमानमृणालकाण्डेव सरसी, (१४३) कुसुम्भरागपाटल पुलकबन्धचित्रं चण्डातकम् अन्तःस्फुटं स्फटिकभूमिरिव रत्ननिधानमादधाना, हारेण (१४४) आमलकीफलनिस्तलमुक्ताफलेन स्फुरितस्थूलग्रहगणशारा, शारदीव (१४५) श्वेतविरलजलधरपटलावृता द्यौः, कुचपूर्णकलशयोरुपरि रत्नप्रालम्बमालिकाम् (१४६) अरुणहरितकिरणकिसलयिनीं कस्यापि पुण्यवतो हृदयप्रवेशवनमालिकामिव

---

(१४२) स्वच्छेति —स्वच्छानि—निर्मलानि, सलिलानि—जलानि, तेषाम् अभ्यन्तरेषु विभाव्यमानः,—लक्ष्यमाणः, मृणालकाण्डः,—मृणाललता यस्याः यस्यां वा तथाभूता।

(१४३) कुसुम्भेति।—कुसुम्भरागेण—कुसुम्भः,—"कुसुम" इति ख्यातः पुष्पविशेषः, तस्य रागेण—आरुण्येन, पाटलं—रक्तम्। पुलकबन्धेन—विविधवर्णरचितविन्दुन्यासेन, चित्रं—मनोज्ञमित्यर्थः। चण्डातकम्—अर्द्धोरुकम, शरीरधःपर्य्यन्तपातिवसनविशेषम्, ("अर्द्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम्" इत्यमरः)। अन्तःस्फुटम्—अभ्यन्तरोज्ज्वलमित्यर्थः। रत्ननिधानं—निहितं रत्नमित्यर्थः। आदधाना—धारयन्ती।

(१४४) आमलकीति।—आमलकीफलानीव निस्तलानि—वर्त्तुलानि, मुक्ताफलानि यत्र तादृशेन, तादृशमुक्ताफलग्रथितेनेत्यर्थः। [ "निस्तल" इत्यत्र "निस्तुल" इति पाठे—निस्तुलानि—तुलारहितानि, निरुपमाणीत्यर्थः, मुक्ताफलानि यत्र तादृशेनेत्यर्थः ]। स्फुरितेति।—स्फुरितैः,—दीप्यमानैः, स्थूलैः—सुव्यक्तैरित्यर्थः, ग्रहगणैः,—तारामण्डलैः, शारा—विचित्रा। शारदीव—शरत्कालीनेव।

(१४५) श्वेतेति।—श्वेतैः,—जलापगमात् शुभ्रतां गतैः, विरलैः,—अल्पाल्पैः, जलधराणां—मेघानां, पटलैः,—निचयैः, आवृता—व्याप्ता। द्यौः,—अन्तरीक्षम्। कुचेति।—कुचौ—स्तनौ, पूर्णकलसाविव, तयोरुपरि रत्नप्रालम्बमालिकां—रत्नहारमालाम्।

(१४६) अरुणेति।—अरुणेन—रक्तेन, हरितेन—श्यामलेन, किरणेन—मयूखेन, पद्मराग-मरकतानामिति भावः, किसलयाः,—नवपल्लवाः सन्ति अस्यां तादृशीं, सञ्जातकिसलयामिवेत्यर्थः। हृदयप्रवेशेति।—हृदये प्रवेशः, तस्मै वनमालिका—पत्रपुष्पग्रथिता माला तामिव; (पूर्णकुम्भोपरि वनमालापदानं प्रसिद्धम्) कोऽपि पुण्यवान् अस्या हृदयं प्रवेक्ष्यतीति तन्मङ्गलार्थं पूर्णकुम्भस्थापनमिति भावः।

बद्धां धारयन्ती,(१४७)प्रकोष्ठनिविष्टस्य एकैकस्य हाटककटकस्य मरकतमकरवेदिकासनाथस्य (१४८) हरितीकृतदिगन्ताभिः मयूखसंहतिभिः स्थलकमलिनीभिरिव लक्ष्मीशङ्कया अनुगम्यमाना, (१४९) बहलताम्बूलकृष्णिकान्धकारितेन अधरसम्पुटेन (१५०) मुखशशिपीतं ससन्ध्यारागं तिमिरमिव वमन्ती, (१५१) विकचनयनकुवलयकुतूहलालीनया अलिकुलसंहत्या नीलांशुकजालिकयेव निरुद्धार्द्धवदना, नीलीरागनिहितनीलिम्ना

---

(१४७) प्रकोष्ठेति।—प्रकोष्ठे—कूर्परस्याधोभागस्थे मणिबन्धपर्य्यन्ते हस्तावयवे, निविष्टः,—धृतः तस्य। हाटककटकस्य—स्वर्णवलयस्य। मरकतेति।—मरकतस्य—हरिन्मणिभेदस्य, मकरवेदिका—मकराकारा पीठिका, ग्रन्थिभेद इत्यर्थः, तया सनाथः,—युक्तः तस्य, तदलङ्कृतस्येति भावः।

(१४८) हरितीकृतेति।—हरितीकृताः,—श्यामीकृताः, दिगन्ताः,—दिग्विभागाः याभिः तथोक्ताभिः, मयूखसंहतिभिः,—किरणावलीभिः। [ "मयूखसन्ततिभिः" इति पाठेऽपि स एवार्थः ]। स्थलकमलिनीभिरिव—स्थलपद्मिनीभिरिव, पत्रपुष्पसहिताभिरिति भावः। लक्ष्मीशङ्कया—लक्ष्मीरियं पद्महस्ता, पद्मविलासिनीति भावः, इति बोधेन, अनुगम्यमाना—अनुस्रियमाणा।

(१४९) बहलेति।—बहलेन—पुनः पुनः चर्वितेनेति भावः, ताम्बूलेन या कृष्णिका—कृष्णवर्णता, तया अन्धकारितः,—सञ्जातान्धकारः तेन। अधरसम्पुटेन—अधररूपसमुद्गकेन।

(१५०) मुखेति।—मुखमेव शशी—चन्द्रः, तेन पीतं—ग्रस्तम्। ससन्ध्यारागं—सन्ध्यारागः,—सन्ध्याकालिकलौहित्यं, तेन सह वर्त्तमानम्, [ अधरस्य स्वतो लौहित्यात् ताम्बूलकृष्णिकायोगाच्च तथोत्प्रेक्षितम् ]। वमन्ती—उद्गिरन्ती।

(१५१) विकचेति।—विकचे—विकस्वरे, नयने कुवलये—नीलोत्पले इव, तयोः कुतूहलात्—कुतुकात्, आलीना—संसक्ता तया। नीलांशुकजालिकया—नीला—नीलवर्णा, अंशुकजालिका—जालवत् सच्छिद्रं मुखावरणवसनमित्यर्थः तया। निरुद्धम्—आच्छादितम्, अर्द्धवदनं—वदनार्द्धं यया तथाभूता; अध्वगमने चक्षुषि कीटादिपतनशङ्कयेति भावः। नीलीति।—नीलीरागेण—नीली—"नील" इति ख्यातः क्षुपविशेषः, तस्य रागेण—वर्णेन, निहितः,—अर्पितः, नीलिमा—नीलत्वं यत्र तादृशेन।

(१५२) शितिगलगलशितिना वामश्रवणाश्रयिणा दन्तपत्रेण कालमेघपल्लवेनेव विद्युदिव द्योतमाना, बकुलफलानुकारिणीभिः तिसृभिः मुक्ताभिः कल्पितेन बालिकायुगलेन अधोमुखेन (१५३) आलोकजलवर्षिणा सिञ्चन्तीव अतिकोमले भुजलते, दक्षिणकर्णावतंसितया (१५४) केतकीगर्भपलाशलेखया रजनीकरजिह्वयेव लावण्यलोभेन (१५५) लिह्यमानकपोलतला, तमालश्यामलेन मृगमदामोदनिष्यन्दिना तिलकविन्दुना मुद्रितमिव मनोभवसर्व्वस्वं वदनम् उद्वहन्ती, (१५६) ललाटलासकस्य सीमन्तचुम्बिनः चटुलतिलकमणेः उदञ्चता चटुलेन अंशुजालेन

(१५२) शितिगलेति।—शितिगलः,—नीलकण्ठः, हर इत्यर्थः, तस्य गलः,—कण्ठः, तद्वत् शितिः,—नीलमित्यर्थः तेन। [ "शितिगलशितिना" इति पाठान्तरे, शितिः गलः हरस्य इति भावः, तद्वत् शितिना ]। वामश्रवणाश्रयिणा—वामकर्णधृतेन। दन्तपत्रेण—सूक्ष्मदन्ताकृतिकर्णभूषणविशेषेण। कालमेघपल्लवेन—नीलमेघविस्तारेण ("पल्लवोऽस्त्री किसलये विस्तारे विटपे वने" इति मेदिनी)। बालिकायुगलेन—वलयद्वयेन, ("अङ्गुरीयककर्णविरवलये पुंसि बालिका" इति मेदिनी)।

(१५३) आलोकेति।—आलोकः,—उद्योतः, प्रभेत्यर्थः, ("आलोकौ दर्शनोद्योतौ" इत्यमरः) एव जलं, तं वर्षतीति तेन। दक्षिणेति।—दक्षिणे कर्णे अवतंसिता—अलङ्कारत्वेन धृता तया।

(१५४) केतकीति।—केतक्या गर्भपलाशः,—अभ्यन्तरपत्रं, तस्य लेखया—रेखया, रेखाकारेण विदारितपत्रखण्डेनेत्यर्थः। रजनीकरजिह्वयेव—रजनीकरस्य—चन्द्रस्य, जिह्वा—रसना, अतिशुभ्रत्वात् जोत्स्नेति भावः तयेव [ "रजनीकरजिह्वालतयेव" इति पाठान्तरे—जिह्वा इव लता तयेवेत्यर्थः ]।

(१५५) लिह्यमानेति।—लिह्यमानम्—आस्वाद्यमानं, कपोलतलं—गण्डभागः यस्याः तथोक्ता। तमालश्यामलेन—तमालवत् श्यामलः,—कृष्णः तेन। मृगमदेति।—मृगमदस्य—कस्तूरिकायाः, आमोदः,—सौरभं, तं निष्यन्दते—क्षरतीति तथोक्तेन; तिलकस्य मृगमदद्रवकृतत्वादिति भावः। मुद्रितं—चिह्नितम्। मनोभवसर्व्वस्वम्—अनङ्गसर्वस्वधनम्; मुखस्यैव सर्वोत्कर्षेण कामोद्दीपकत्वादिति भावः।

(१५६) ललाटेति।—ललाटे—भाले लासकः,—नर्त्तकः, स्फुरन्नित्यर्थः; तस्य

रक्तांशुकेनेव कृतशिरोऽवगुण्ठना, ( १५७) पृष्ठप्रेङ्खदनादरसंयमनशिथिलजूटिकाबन्धा, नीलचामरावचूलिनीव, ( १५८ ) चूडामणिमकरिकासनाथा, मकरकेतुकेतुपताका, कुलदेवतेव चन्द्रमसः, पुनः सञ्जीवनौषधिरिव पुष्पधनुषः, वेलेव ( १५९ ) रागसागरस्य, ज्योत्स्नेव यौवनचन्द्रोदयस्य, महानदीव रतिरसामृतस्य, कुसुमोद्गतिरिव सुरततरोः, बालविद्येव वैदग्ध्यस्य,

---

यन्त्—ललाटं लासयति—दीपयतीति तादृशस्य। सीमन्तचुम्बिनः,—सीमन्तः,—केशमध्यवर्त्ति-सूक्ष्मवर्त्माकाररेखाविशेषः,तं चुम्बति—स्पृशतीति सीमन्तचुम्बी तस्य, सीमन्तस्पर्शिनः इत्यर्थः। चटुलः,—तरलः, यः तिलकमणिः,—तिलकाकारपद्मरागमणिविशेषः तस्य तन्मादृा। ["चटुलातिलकमणेः"इति पाठान्तरे,—"सुवर्णशृङ्खलाबद्धो नानारत्नौघमण्डितः। ललाटलम्ब्यलङ्कारश्चटुलातिलकी मतः॥" इत्युक्तलक्षणललाटभूषणविशेषादित्यर्थः ]। उदञ्चता—उद्गच्छता। चटुलेन—इतस्ततः प्रसरता। अंशुजालेन—किरणसमूहेन। रक्तांशुकेनेव—रक्तवसनेनेव। कृतेति।—कृतं शिरसः अवगुण्ठनं यया तथाभूता।

( १५७ ) पृष्ठेति।—पृष्ठे प्रेङ्खन्—लम्बमानः, अनादरसंयमनेन—अयत्नबन्धनेन, शिथिलः,—स्खलितः, जूटिकाबन्धः,—केशपाशः यस्याः तथाविधा। नीलेति।—नीलं चामरमेव अवचूलं—ध्वजाधोवर्त्तिवसनं, चिह्नं वा विद्यतेऽस्या इति तथोक्ता।

( १५८ ) चूडामणीति।—चूडाया या मणिमकरिका—मकराकारमणिः इत्यर्थः, तया सनाथा—सहिता, अत एव मकरकेतोः,—कामस्य, केतुपताका—ध्वजपताका, इव स्थितेति शेषः। कुलदेवतेव—वंशाधिष्ठात्री देवीव। पुनः सञ्जीवनौषधिरिव—पुनः सञ्जीवनं—हरकोपानलदहनानन्तरं सम्यक् जीवनप्राप्तिः, तस्य ओषधिरिव—लताविशेष इव।

(१५९) रागेति।—रागः,—भोगस्पृहा, सागर इव तस्य, वेलेव—तीरभूमिरिव ; यद्वा,—नीरमिव, प्रवाहपरम्परा इवेत्यर्थः, ("वेला स्यात् तीरनीरयोः" इत्यमरः) सागरो यथा वेलां नातिक्रामति तद्वत् एतस्या नयनपथवर्त्तिन्या यूनामनुरागोऽपि एतामुत्क्रम्य नान्यासु स्त्रीषु प्रसरति, एतस्यामेव निश्चलस्तिष्ठति इति भावः। ज्योत्स्नेवेति।—यथा उदितेऽपि चन्द्रे यावत् ज्योत्स्ना न विकसति, तावत् किमपि न विलसति, तथा एतां विना यौवनस्य सुषमा नान्यत्र शोभमाना दृश्यते इति भावः। कुसुमोद्गतिरिव—पुष्पोद्गम इव। सुरततरोः,—सुरत—स्त्रीपुरुषयोरन्योऽन्यस्पर्शविशेषः, तदेव

कौमुदीव कान्तेः, धृतिरिव धैर्य्यस्य, गुरुशालेव गौरवस्य, बीजभूमिरिव विनयस्य, गोष्ठीव गुणानां, मनस्वितेव महानुभावतायाः, तृप्तिरिव तारुण्यस्य, (१६०) कुवलयदलदामदीर्घलोचनया पाटलाधरया (१६१) कुन्दकुड्मलस्फुटदशनया शिरीषमालासुकुमारभुजयुगलया (१६२) कमलकोमलकरया बकुलसुरभिनिश्वसितया चम्पकावदाततया कुसुममय्येव ताम्बूलकरङ्कवाहिन्या (१६३) महाप्रमाणाश्वतरारूढया

---

यत्र. तस्य बालविद्येव—अभिनवा विद्येव, बाल्यकालिकी शिक्षेव वा। वैदग्ध्यस्य—विलासविशेषस्य, बाल्यसंस्कारो यथा कमपि कदाऽपि न त्यजति, तथा वैदग्ध्यमपि एतामिति भावः। कौमुदीव—चन्द्रिकेव, प्रभेवेत्यर्थः। धृतिरिव—सन्तोष इव, उत्कर्ष इवेत्यर्थः। गुरुशालेव—गुरुगृहमिव, यद्वा,—गुर्वी शाला गुरुशाला सेव। बीजभूमिरिव—बीजक्षेत्रमिव। गोष्ठीव—समाज इव समवाय इवेत्यर्थः। मनस्वितेव—प्रशस्तमनःशालित्वमिव। तृप्तिरिव—सन्तोषसीमेवेत्यर्थः। तारुण्यस्य—यौवनस्य, यथा उपभोगेन तृप्तः कश्चित् नान्यत् विषयजातमभिलषति, तद्वत् तारुण्यमपि मालतीमासाद्य इति भावः।

(१६०) कुवलयेति।—कुवलयदलदाम—नीलोत्पलदलमाला, तद्वत् दीर्घे—आयते, लोचने—नयने यस्याः तथोक्तया। पाटलाधरया—रक्ताधरया।

(१६१) कुन्देति।—कुन्दानां—माघ्यकुसुमविशेषाणां, कुड्मलानीव स्फुटाः,—व्यक्ताः, शुभ्रा इत्यर्थः, दशनाः,—दन्ताः यस्याः तथाभूतया। शिरीषेति।—शिरीषाणां—तदाख्यपुष्पविशेषाणां, मालावत् सुकुमारं—सुकोमलं, भुजयुगलं यस्याः तथोक्तया।

(१६२) कमलेति।—कमलं—पद्मं, तद्वत् कोमलौ करौ—पाणी यस्याः तथोक्तया। बकुलेति।—बकुलवत्—तदाख्यपुष्पविशेषवत्, सुरभि—सुगन्धि, निश्वसितं यस्याः तथाविधया। चम्पकावदाततया—चम्पककुसुमवत् गौरवर्णया। अत एव कुसुममय्येव—पुष्पमय्येव कुवलयादिभिर्नयनादीनां विधानादिति भावः। ताम्बूलकरङ्कवाहिन्या—ताम्बूलानां करङ्कः,—भाजनविशेषः, तं वहतीति तथोक्तया।

(१६३) महेति।—महत् प्रमाणं—परिमाणं यस्य तादृशः, अत्युन्नत इत्यर्थः, योऽश्वतरः,—अश्वाया गर्द्दभेन जातः [illegible] पशुविशेषः, यद्वा,—तरुणः अश्वः,

अनुगम्यमाना, (१६४) कतिपयपरिचारकपरिकरा मालती समदृश्यत। दूरादेव च दधीचप्रेम्णा सरस्वत्या लुण्ठितेव मनोरथैः, आकृष्टेव कुतूहलेन, प्रत्युद्गतेवोत्कलिकाभिः, आलिङ्गितेव उत्कण्ठया, अन्तःप्रवेशितेव हृदयेन, स्नपितेव आनन्दाम्बुभिः, विलिप्तेव स्मितेन, वीजितेव उच्छ्वसितैः, आच्छादितेव चक्षुषा, अभ्यर्च्चितेव वदनपुण्डरीकेण, सखीकृतेव आशया सविधम् उपययौ। अवतीर्य्य च तुरगात् दूरादेव अवनतेन मूर्द्ध्ना प्रणामम् अकरोत्, आलिङ्गिता च ताभ्यां सविनयम् उपाविशत्। सप्रश्रयं ताभ्यां सम्भाषिता च पुण्यभाजम् अमन्यत, अकथयच्च दधीचसन्दिष्टं शिरसि विनिहितेन अञ्जलिना नमस्कारम्, अरञ्जयच्च आकारतः प्रभृति अग्राम्यतया तैः तैः अतिपेशलैः आलापैः सावित्रीसरस्वत्योः मनसी।

---

अश्वतर. ["वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वम्" (५।३।९१ पा०) इति तनुत्वे तरप्, ('तनुत्व—द्वितीयवयःप्राप्तिः" इति) तम् आरूढा—अधिष्ठिता तया।

(१६४) कतिपयेति।—कतिपये—नात्यल्पे नातिबहुला इति यावत्, परिचारका',—भृत्या, परिकरा,—परिवारा, सहचरा. इत्यर्थ यस्याः तथोक्ता, ("परिकरः पर्य्यङ्कपरिवारयो" इति मेदिनी) सरस्वत्या, कर्त्तृभूतयेति शेष'। लुण्ठितेव—अपहृतेव। उत्कलिकाभि,—औत्सुक्यै, विलिप्तेव—विशेषेण दत्तलेपनेव। ["विलुप्तेव" इति पाठान्तरे—निमग्नीकृतेव इत्यर्थ]। उच्छ्वसितै,—निश्वासमरुद्भि। सविधम्—अन्तिकम्। [लोकेऽपि य कश्चित् प्रेमास्पदः प्रवासात् सविधमायाति, तस्य लुण्ठनाद्यभ्यर्च्चनान्त सर्वं समादर करोति इति ध्वनि.] सप्रश्रय—सविनयम। ताभ्या—सावित्री-सरस्वतीभ्याम्। पुण्यभाज—पुण्यवन्तम्, आत्मानमिति शेष। ["पुण्यभाजमात्मानम् अमन्यत" इति पाठान्तरम्]। दधीचसन्दिष्ट—दधीचकथित, नमस्कारम् अकथयत् इत्यन्वय। अरञ्जयत्—वशीचकारेत्यर्थ। आकारत' प्रभृति—आकारात्—तथाविधात् पूर्वोक्तात्, सौम्यादिति भावः, प्रभृतीति अव्ययम्। अग्राम्यतया—अनितरजनव्यवहारवत्तयेत्यर्थः। अतिपेशलै,—अतिकोमलै, सौजन्यपूर्णैरिति भाव.। ["अतिपेशलै," इत्यत्र "अपि पेशलै," इति पाठान्तरम्] मनसी अरञ्जयदित्यस्य कर्म्मपदम्।

क्रमेण च अतीते मध्यन्दिनसमये शोणम् अवतीर्णायां सावित्र्यां स्नातुम् (१६५) उत्सारितपरिजना साकूता मालती कुसुमप्रस्तर शायिनीं समुपसृत्य सरस्वतीम् आबभाषे,—"देवि ! विज्ञाप्यं नः किञ्चिदस्ति रहसि ; अतो मुहूर्तम् अवधानदानेन प्रसादं क्रियमाणम् इच्छामि" इति। सरस्वती तु दधीचसन्देशाशङ्किनी, किं वक्ष्यतीति (१६६) स्तनविनिहितवामकरनखकिरणदन्तुरितम् उद्भिद्यमानकुतूहलाङ्कुरनिकरम् इव हृदयम् (१६७) उत्तरीयदुकूलवल्कलैकदेशेन संछादयन्ती, गलता अवतंसपल्लवेन श्रोतुं श्रवणेन इव धावमानेन (१६८) अनवरतश्वाससन्दोहदोलायितं जीविताशामिव समासन्नलताम् अवलम्बमाना, समुत्फुल्लस्य

(१६५) उत्सारितपरिजना—अपसारितसेवकजना। साकूता—साभिप्राया, हृदयनिहितगूढभावेत्यर्थः। कुसुमेति।—कुसुममेव प्रस्तरः,—शयन, [ प्रस्तरो' तेऽसौ इति प्रपूर्व्वात् स्तृतेः कर्म्मणि अल् ] कुसुमैराकृत' प्रस्तरः,—शिलाखण्डः इत्यर्थो वा; तत्र शेते या इति तथोक्ताम्। दधीचेति।—दधीचस्य सन्देश,—वाचिकं, ( "सन्देशवाक् वाचिकं स्यात्" इत्यमरः ) आशङ्कते—तर्कयतीति तथाविधा सती।

(१६६) स्तनेति।—स्तने—पयोधरे, विनिहितस्य—अर्पितस्य, वामकरस्य—वामहस्तस्य, नखानां किरणेन—प्रभया, दन्तुरित—सञ्जातदन्तमिव स्थितमित्यर्थः। उद्भिद्यमानेति।—उद्भिद्यमानाः,—उद्भेदं गच्छन्तः, [ कर्म्मकर्त्तरि शानच्प्रत्यय ] कुतूहलाङ्कुराणा—कौतुकप्ररोहाणां, निकराः, —समूहाः यस्य तथोक्तम्।

(१६७) उत्तरीयेति।—उत्तरीय यत् दुकूलवल्कलं—वल्कलनिर्मितक्षौमाम्बरं, ("क्षौम वल्कलजाशुके। शणजेऽतसीजे" इति मेदिनी) तस्य एकदेशः,—एकांशः तेन। गलता—स्खलता। अवतंसपल्लवेन—कर्णभूषणीकृतकिसलयेन, [ इत्थम्भूतलक्षणे तृतीया ]। श्रवणेन इव—श्रोत्रेन्द्रियेणेव।

(१६८) अनवरतेति।—अनवरतानाम्—अविच्छिन्नानां, श्वासानां सन्दोहः,—समूह एव, दोला ताम् अयिता—प्रापिता दोलायिता ताम्, दोला यथा दोलने स्वस्थानात् निर्गच्छति, तथा पुनः स्वस्थानम् आगच्छति, तद्वत् निश्वासः शरीराभ्यन्तरात् निर्गच्छति, पुनश्च उच्छ्वासरूपेण शरीराभ्यन्तरम् आगच्छतीति दोलायिताभिवेति भावः; यद्वा,—अनवरतश्वाससन्दोहेन दोलायितां, समासन्नलताम् इत्यस्य

सुखशालिनी लावण्यप्रवाहेण शृङ्गाररसेनेव प्लावयन्ती जीवलोकं, (१६९) कुसुमपरिमललग्नैः मधुकरकदम्बकैः मदनानलदाहश्यामलैः मनोरथैरिव निर्गत्य मूर्त्तैः उत्क्षिप्यमाणा, कुसुमशयनीयात् (१७०) स्मरशरसंज्वरिणी मन्दं मन्दम् उदगात्। "उपांशु कथय" इति (१७१) कपोलतल-प्रतिबिम्बितां लज्जयेव कर्णमूलं मालतीं प्रवेशयन्ती मधुरया गिरा सुधीरम् उवाच,—"सखि! मालति! किमर्थम् एवम् अभिदधासि? का अहम् अवधानदानस्य शरीरस्य प्राणानां वा सर्व्वस्य अप्रार्थितोऽपि प्रभवत्येव अतिपेशलः चक्षुष्यो जनः। सा न काचित्, या न भवसि मे स्वसा सखी प्रणयिनी प्राण-

---

विशेषणमेतत्; समासन्नलक्षता—सन्निहिता व्रततिम्। अवलम्बमाना—आश्रयन्ती। लावण्यप्रवाहेण—लावण्यस्रोतसा। शृङ्गाररसेनेव—रतिप्रधानो रसः शृङ्गाररसः तेनेव, तदुक्तं दर्पणे,—"उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते। परोढां वर्ज्जयित्वाऽत्र वेश्याञ्चाननुरागिणीम्॥ आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः। चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्॥ भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः। त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः॥ स्थायिभावो रतिः श्यामवर्णोऽयं विष्णुदैवतः॥" इति।

(१६९) कुसुमेति।—कुसुमानां परिमलेन—सौरभेण, लग्नानि—संसक्तानि, तैः, ["कुसुमपरिमल" इत्यत्र "शयनकुसुमपरिमल" इति पाठे—शयने—शय्यायां, यानि कुसुमानि; शयनानि—शय्याभूतानि, यानि कुसुमानीति वा तेषां परिमलेन]। मधुकरकदम्बकैः,—भृङ्गसङ्घैः। मदनानलेति।—मदनानलेन—कामाग्निना, दाहेन श्यामलाः,—कृष्णवर्णाः तैः। मूर्त्तैः,—मूर्त्तिमद्भिः। उत्क्षिप्यमाणा—उत्थाप्यमाना।

(१७०) स्मरेति।—स्मरस्य शरैः,—शरप्रहारैरिति भावः, यः संज्वरः,—सन्तापः तद्वती। उदगात्—उत्तस्थौ। उपांशु—सुगुप्तं यथा तथा।

(१७१) कपोलेति।—कपोलतले—अत्यच्छे गण्डदेशे इत्यर्थः, प्रतिबिम्बिताम्—प्रतिफलितां ताम्। अतिपेशलः,—अतिकोमलः, अतिप्रिय इति यावत्, ["अतिपेशल" इत्यत्र "अतिवेलम्" इति पाठे—अतिवेलम्—अतिमात्रम्] चक्षुष्यः—नयनरञ्जन इत्यर्थः, ["चक्षुष्यः" इति भङ्ग्या दधीच इति व्यज्यते]। काचित् काऽपि। स्वसा—भगिनी।

समा च। नियुज्यतां यावत् कार्य्यस्य चमं (१७२) चोदीयसो गरीयसो वा शरीरकम् इदम्। अनवस्करम् आश्रवं मे त्वयि हृदयम्। प्रीत्या प्रतिसरा विधेया अस्मि ते। व्याहर वरवर्णिनि! विवक्षितम्" इति।

सा तु अवादीत्,—"देवि! जानासि एव माधुर्य्यं (१७३) विषयाणां, लोलुपताञ्च इन्द्रियग्रामस्य, उन्मादिताञ्च नवयौवनस्य, पारिप्लवताञ्च मनसः। प्रख्याता एव मन्मथस्य दुर्निवारता। अतो न माम् (१७४) उपालम्भेन उपस्थातुम् अर्हसि। न च बालिशता चपलता चारणता वा वाचालतायाः कारणम्। (१७५) न किञ्चित् न कारयति असाधारणा स्वामिभक्तिः। सा त्वं देवि! यदा एव दृष्टाऽसि

(१७२) चोदीयसः,—अतिक्षुद्रस्य, गरीयसः,—अतिगुरुणः, कार्य्यस्य इत्यनेनान्वयः। अनवस्करम्—अवस्करः,—शकृत् पुरीषमित्यर्थः,मलः इति यावत्, ("उच्चारावस्करौ शमलं शकृत्" इत्यमरः) तद्रहितं, विशुद्धमित्यर्थं, अकपटमिति यावत्। आश्रवं—वचने स्थितं, ('वचने स्थित आश्रवः" इत्यमरः) त्वद्वचो मया अकपटं कर्त्तव्यमिति भावः। प्रतिसरा—नियोज्या, अनुकूलवर्त्तिनीत्यर्थः। ("भवेत् प्रतिसरो मन्त्रभेदे …… । आरक्षे कङ्कणे च त्वन्यलिङ्गकः॥" इति मेदिनी) ते तव, नियोज्ये विधेया—विधीयते—क्रियते, आज्ञा इति भावः यया सा, वश्या, आज्ञापालनकारिणीत्यर्थः, अस्मि इत्यन्वयः। व्याहर—प्रकाशय। वरवर्णिनि।—सुन्दरि।

(१७३) विषयाणां—स्रक्चन्दनवानितादीनाम् उपभोग्यानां, माधुर्य्यं—मनोहारित्वम्। लोलुपता—लालसताम्। इन्द्रियग्रामस्य—चक्षुरादीन्द्रियसमूहस्य। उन्मादिताम्—उन्मादकारित्वम्। पारिप्लवता—चापल्यं, ("चञ्चलं तरलञ्चैव पारिप्लव-परिप्लवे" इत्यमरः)। प्रख्याता—प्रसिद्धा। दुर्निवारता—अबाध्यता।

(१७४) उपालम्भेन—तिरस्कारेण, अकथनीयकथनजनितेन इति भावः। उपस्थातुम्—ग्रहीतुम्। बालिशता—अज्ञता। चपलता—धृष्टता। चारणता—राज्ञां कीर्त्तिघोषणशीलता। वाचालतायाः,—बहुभाषितायाः, एताः कारणं न च, तव समीपे यदहं किञ्चित् विवक्षुः, तत्र मम बालिशतादयो नव हेतुरिति निष्कर्षः।

(१७५) किन्तर्हि इत्याह, नेति।—असाधारणा—अनन्यसदृशी, स्वामिभक्तिः,

देवेन, तत एवारभ्य च अस्य कामो गुरुः, चन्द्रमा जीवितेशः, (१७६) मलयमरुत् उच्छ्वासहेतुः, आधयोऽन्तरङ्गस्थानेषु, सन्तापः परमसुहृत्, प्रजागर आप्तः, मनोरथाः सर्व्वगताः, निश्वासा विग्रहाग्रेसराः, मृत्युः (१७७) पार्श्ववर्त्ती, रणरणकः सञ्चारकः, सङ्कल्पाः (१७८) बुद्ध्युपदेशवृद्धाः। किं

—प्रभौ अनुरागः, किञ्चित्—किमपि, न कारयतीति न, अपि तु सर्व्वमेव कारयतीत्यर्थः, प्रभुभक्तिपरतन्त्रा अहं यत्किञ्चित् त्वां कथयामीति भावः। देवेन—दधीचेन। अस्य—कुमारस्य, गुरुः,—आचार्य्यः, कामः यथा आदिशति, तदेव असौ करोति, तद्वशवर्त्तित्वादिति भावः। चन्द्रमाः जीवितेशः,—प्राणेश्वरः, चन्द्रमसो हस्तेऽस्य प्राणाः, शिशिरतया कामानलनिर्वापणहेतुत्वात्, अमृतमयत्वेन च जीवनरक्षणक्षमत्वात् इति भावः; अथ च जीवितेशः,—मृत्युः; ("जीवितेशो यमे पुंसि विषु स्याज्जीवितेश्वरे" इति मेदिनी) चन्द्रादयस्तत्काले एव कामिनां तापं प्रशमयन्ति, निरन्तरमुपास्यमानाः पुनः कामानलवर्द्धकतया मृत्युं दिशन्ति इति वाक्यार्थः।

(१७६) मलयमरुत्—मलयपवनः, उच्छ्वासहेतुः,—उच्छ्वसितस्य कारणं, यदा मलयमरुत् वाति, तदा असौ दीर्घं निश्वसितीति भावः; अथ च श्वासोत्क्रान्तौ कारणम्। आधयः,—मानसव्यथाः, अन्तरङ्गस्थानेषु—स्वजनस्थानवर्त्तिन इति यावत्; स्वजना यथा सर्व्वदा परिचरन्ति, तथा आधय एनं सततम् आश्रयन्तीति भावः। सन्तापः परमसुहृत्—परममित्रं, सततसङ्गीति भावः; अथच परम् असु-हृत्—प्राणहरः ("पुंसि भूम्यसवः प्राणाः" इत्यमरः) प्रजागरः,—निद्राविरतिः, आप्तः,—आत्मीयः, प्राप्तश्च, नैनं त्यजतीति भावः। मनोरथाः,—अभिलाषाः, सर्व्वगताः,—सर्वत्रगामिनः, विप्रतिपत्तिमूढ़तया कर्त्तव्यनिर्णयाक्षमा इति भावः। निश्वासाः,—दीर्घनिश्वासाः, विग्रहाग्रेसराः,—विग्रहस्य—विशिष्टज्ञानस्य, कर्त्तव्यज्ञानस्येति भावः, देहस्य च, अग्रेसराः,—अग्रगामिनः, देहं परित्यज्य गन्तुं प्रवृत्ता इति भावः।

(१७७) पार्श्ववर्त्ती—पार्श्वचरः, त्वदनङ्गीकारेण निश्चितं म्रियते इति भावः। रणरणकः सञ्चारकः, रणरणकः,—उत्कण्ठाविशेषः, अरतिकृतं दुःखमित्यर्थः, सञ्चारकः,—प्रेरकः, मृत्युमुखे इति भावः। ["रणरणक सञ्चारकः" इति पाठे—रणरणकः,—उत्कण्ठा एव सञ्चारयतीति सञ्चारकः, प्रेरकः इत्यर्थः। सङ्कल्पाः,—मनःकल्पनाविशेषाः।

(१७८) बुद्धीति—बुद्धेः,—ज्ञानस्य, उपदेशः,—"इदं कुरु, एवं क्रियताम्"

वा विज्ञापयामि, अनुरूपो देवो देव्याः इति आत्मसम्भावना, शीलवान् इति प्रक्रमविरुद्धं, धीर इत्यवस्थाविपरीतं, (१७९) सुभग इति त्वदायत्तं, स्थिरप्रीतिः इति निपुणोपक्षेपः, जानाति (१८०) सेवितुम् इति अस्वामिभावोचितम्, इच्छति दासभावम् आमरणात् कर्त्तुम् इति धूर्त्तालापः, भवनस्वामिनी भवसि इति उपप्रलोभनं, पुण्यभागिनी भजति भर्त्तारं तादृशम् इति (१८१) स्वामिपक्षपातः, त्वं तस्य मृत्युः इत्यप्रियम्, अगुणज्ञा असि इति अधिक्षेपः, स्वप्नेऽस्य बहुशः कृतप्रसादाऽसि

---

इत्येवंरूपः तस्मिन्, वृद्धाः,—महान्तः स्थविराश्च। दधीचे एवमेवं गुणो विद्यते इति वक्रोक्त्या वैदग्ध्येन मालती आह, अनुरूप इत्यादिना।—अनुरूपः,—सुयोग्यः, देवः,—कुमारो दधीचः, इति, उक्तो इति शेषः। एवमुत्तरत्र। [“अनुरूपो देवो देव्याः” इत्यत्र “अनुरूपो देव्याः” इति पाठान्तरम्]। आत्मसम्भावना—निजसम्मानना; एतदर्थं स्वस्य आगमने त्वत्तः सम्मानना लभ्यते इति भावः। शीलवान्—सुशीलः, अयमिति शेषः। प्रक्रमविरुद्धः,—प्रसङ्गविपरीतम्, ईदृग्व्यापारप्रवृत्तस्य कुतः शीलवत्त्वमिति भावः। धीरः,—धैर्य्यवान्, अयमिति शेषः। अवस्थाविपरीतम्—अवस्था—मदनकृता दशा, तस्या विपरीतं—विरुद्धम्; न हि धीरा एवं विचलन्तीति भावः।

(१७९) सुभगः,—कामिनीरञ्जनः। त्वदायत्तं—त्वदधीनं, त्वयि अनुरक्तायां तत्त्वं सम्भवति, नान्यथा इति भावः। स्थिरप्रीतिः,—अचलप्रेमा। निपुणोपक्षेपः,—निपुणस्य—सुचतुरस्य, यथा-कथञ्चित् कार्य्यसाधने दक्षस्येति यावत्, उपक्षेपः,—उपक्रमः, आलाप इत्यर्थः; स्थायित्वकीर्त्तनं विना न अस्य कार्य्यस्य सिद्धिरिति एवमुक्तिः युज्यते इति भावः।

(१८०) सेवितुं—परिचरितुं, प्रणयेन अनुगन्तुमिति भावः। अस्वामिभावोचितं—स्वामित्वानुपयुक्तमित्यर्थः; न हि स्वामिनः सेवकान् सेवन्ते, प्रत्युत सेवका एव स्वामिनम् इति भावः। धूर्त्तालापः,—प्रतारकवचनम्; धूर्त्ता हि स्वकार्य्यसाधनार्थमेवं ब्रुवन्तीति भावः। भवनस्वामिनी—गृहकर्त्री। उपप्रलोभनं—लोभप्रदर्शनम्। पुण्यभागिनी—धन्या इत्यर्थः।

(१८१) स्वामिपक्षपातः,—स्वामिनि यदर्थम् अहम् आगता तस्मिन् प्रभौ इत्यर्थः, पक्षपातः,—प्रणयातिरेक इत्यर्थः। त्वं तस्य मृत्युः,—त्वां विना स मरिष्यतीति भावः। अप्रियं—निष्ठुरं वच इत्यर्थः। अगुणज्ञा—गुणान् जानातीति गुणज्ञा, तथा

इति ( १८२ ) असाक्षिकं, प्राणरक्षार्थम् अर्थयते इति कातरता, सत्र आगम्यताम् इति आज्ञा, वारितोऽपि ( १८३ ) बलादागच्छतीति परिभवः; तदेवम् अगोचरे गिराम् असि इति श्रुत्वा देवी प्रमाणम्" इति अभिधाय तूष्णीम् अभूत्।

अथ सरस्वती प्रीतिविस्फारितेन चक्षुषा प्रत्यवादीत्,—"अयि! न शक्नोमि बहु भाषितुम्, एषा अस्मि ते ( १८४ ) स्मितवादिनि! वचसि स्थिता; गृह्यन्तामसी प्राणाः" इति। मालती तु,—"यत् आज्ञापयसि अतिप्रसादाय" इति व्याहृत्य प्रहर्षपरवशा प्रणम्य प्रजविना तुरगेण तताट शोणम्, अगाच्च दधीचमानेतुं च्यवनाश्रमपदम्। इतरा तु

---

न भवतीति अगुणज्ञा त्वं कुमारस्य गुणान् न वेत्सीति भावः। अधिक्षेपः—तिरस्कारकरणम्। बहुशः,—पुनः पुनः; कृतप्रसादा—कृतः,—विहितः, प्रसादः,—अनुग्रहः यया तथाभूता; त्वां स्वप्ने दृष्ट्वा असौ महतीं प्रीतिमलभतेति भावः।

( १८२ ) असाक्षिकं—साक्षिवर्जितम् इदं वच इति यावत्; स्वप्नदर्शने साक्षिणाम् अभावादिति भावः। अर्थयते—याचते, त्वत्प्रसादमिति शेषः। कातरता—दैन्यातिशय इत्यर्थः; दीना एव ईदृशम् आलपन्तीति भावः। तत्र—तत्समीपे इत्यर्थः। आज्ञा—आदेशः, प्रभुत्ववचनमिति यावत्; प्रभव एव आज्ञापयन्तीति भावः। वारितः,—निषिद्धः, "मा त्वमागच्छ मत्सकाशम्" इति निवारित इति यावत् त्वयेति शेषः।

( १८३ ) बलात्—बलमाश्रित्य। परिभवः,—अवमानना इति यावत्; तत्प्रयोगस्य शिष्टविरुद्धत्वादिति भावः। तत्—तस्मात्, गिरां—वाचाम्, अगोचरे—अविषये, असि—भवसि; त्वयि न किमपि वक्तुं शक्नोमीति भावः। प्रमाणं—प्रमीयते—निर्द्धार्य्यते अनेनेति प्रमाणम्—इतिकर्त्तव्यविधाने हेतुरित्यर्थः; यदत्र भवत्या अभिमतं, तदादिशेति भावः।

( १८४ ) स्मितवादिनि!—स्मितेन—ईषद्धास्येन सह वदतीति स्मितवादिनी तत्सम्बुद्धौ, हे मधुरभाषिणि इत्यर्थः। अतिप्रसादाय—अत्यनुग्रहाय इत्यर्थः। [ "अतिप्रसादाय" इत्यत्र "अतिप्रसादः" इति पाठे—अत्यनुग्रहः इत्यर्थः, भवत्या इति शेषः ] प्रजविना—द्रुतगामिना। ( प्रजविना इति साभिप्रायवचनम् ) इतरा—सरस्वती।

सखीस्नेहेन सावित्रीम् अपि विदितवृत्तान्ताम् अकरोत्; उत्कण्ठाभारभृता च ताम्यता चेतसा कल्पायितं कथंकथमपि दिवसशेषम् अनैषीत्। अस्तम् उपगतवति भगवति (१८५) गभस्तिमति, स्तिमिततरम् अवतरति च तमसि, प्रहसिताम् इव सितां दिशं पौरन्दरीं दरीम् इव केसरिणि उदञ्चति चन्द्रमसि, सरस्वती (१८६) शुचिनि चीनांशुक-सुकुमारे तरङ्गिणि दुकूलकोमले शयने इव शोणसैकते समुपविष्टा, (१८७) स्वप्नकृतप्रार्थनापादपतनलग्नां दधीचचरण-

सखीस्नेहेन—सख्यां—सावित्र्यां, यः स्नेहः,—प्रणयः तेन। विदितवृत्तान्ताम्—विदितः,—ज्ञातः, वृत्तान्तः,—दधीचे सरस्वत्या अनुरागवार्त्ता यस्याः ता । उत्कण्ठाभारभृता—उत्कण्ठानां भारः,—अतिशयः, तं बिभर्त्तीति तेन। ताम्यता—क्लिश्यता। कल्पायितं—"चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते" इत्युक्तं ब्राह्मं दिनं कल्पः, तद्वदाचरितः तम्, अतिदीर्घमिव मन्यमानमिति भावः। कथं कथमपि—अतिकष्टेण इत्यर्थः।

(१८५) गभस्तिमति—मयूखशालिनि, सूर्ये इत्यर्थः। स्ति ततरं—मन्दं मन्दमित्यर्थः। अवतरति—आविर्भवति। प्रहसितामिव—प्रकर्षेण हस ीमिव। सितां—धवलाम्। पौरन्दरीं दिशं—पुरन्दरस्य—इन्द्रस्य इयम्; यद्वा,—पुरन्दरः अधिष्ठाता यस्याः सा पौरन्दरी तां दिशं, पूर्वां दिशमित्यर्थः। दरीमिव—गुहामिव। केसरिणि—सिंहे, ("सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केसरी हरिः" इत्यमरः)। उदञ्चति—उद्गच्छति, उदयमाने इत्यर्थ, ["उदञ्चति" इत्यत्र "मुञ्चति" इति पाठान्तरम्]।

(१८६) शुचिनि—शुभ्रे। चीनेति।—चीनांशुकं—चीनदेशभवं सूक्ष्मवसनं, तद्वत् सुकुमारः,—अतिकोमलः तस्मिन्। तरङ्गिणि—प्रतिदिनं चीयमाणेन वारिणा स्तरङ्गे इत्यर्थः। ["दुकूलकोमले" इत्यत्र "दुगूलकोमले" इति पाठान्तरम्]। शयने इव—शय्यायामिव, शोणसैकते—शोणनदस्य पुलिने।

(१८७) स्वप्नेति।—स्वप्ने—स्वप्नावस्थायां, कृता या प्रार्थना—"मामनुगृहाण" इति याच्ञा, तस्यां यत् पादयोः, दधीचस्येति भावः, पतनं तेन लग्ना—संसक्ता ताम्। ["समुपविष्टा, स्वप्नकृत" इत्यत्र "समुपविष्टस्वप्नकृत" इति समस्तपाठे—तथाविधे शोणसैकते समुपविष्टस्य—आसीनस्य, दधीचस्य समीपे इति भावः; स्वप्नकृता

नखचन्द्रिकाम् इव ललाटिकां दधाना, (१८८) गण्डस्थलादर्शप्रतिविम्बितेन "चारुहासिनि! अयम् असौ आहृतो हृदयदयितो जनः" इति श्रवणसमीपवर्त्तिना निवेद्यमानमदनसन्देशा इव इन्दुना, विकीर्य्यमाणनखकिरणचक्रवालेन बालव्यजनीकृतचन्द्रकलाकलापेन इव करेण वीजयन्ती स्वेदिनं कपोलपट्टम्, "अत्र दधीचात् ऋते न केनचित् प्रवेष्टव्यम्" इति तिरश्चीनं चित्तभुवा पातितां विलासवेत्रलताम् इव बालमृणालिकाम् अधिस्तनं स्तनयन्तीं कथमपि हृदयेन वहन्ती प्रतिपालयामास। (१८९) आसीच्च अस्या मनसि—"अहमपि नाम

इत्यर्थः]। दधीचेति।—दधीचस्य चरणनखस्य या चन्द्रिका—ज्योत्स्नावत् कान्तिरित्यर्थः तामिव। ललाटिका—ललाटभूषणं, तिलकमित्यर्थः।

(१८८) गण्डेति।—गण्डस्थलं—कपोलतलमेव, आदर्शः,—दर्पणः, अतिस्वच्छत्वादिति भावः, तत्र प्रतिविम्बितः,—प्रतिफलितः तेन। आहृतः,—आनीतः, मयेति शेषः। हृदयदयितः,—मनोरञ्जन इत्यर्थः। श्रवणसमीपवर्त्तिना—श्रुतिमूलागतेनेत्यर्थः। निवेद्यमानेति।—निवेद्यमानः,—विज्ञाप्यमानः, मदनस्य सन्देशः,—वाचिकं यस्यै तथोक्ता। इन्दुना—चन्द्रेण। विकीर्य्यमाणेति।—विकीर्य्यमाणम्—इतस्ततः प्रसार्य्यमाणं, नखकिरणानां चक्रवालं—मण्डलं यस्य तथोक्तेन। बालेति।—अत एव बालव्यजनीकृत,—अभिनवचामरत्वेन धृत इति यावत्, यद्वा,—बालकृतं व्यजनं, चामरं इत्यर्थः, तत्कृतः, चन्द्रकलाकलापः,—चन्द्रकलासमूहः येन तथाभूतेन। करेण—हस्तेन। स्वेदिनं—कामजनितसत्त्वोदयात् उद्भूतघर्माक्तमित्यर्थः, कपोलपट्टं—गण्डतटम्। अत्र—हृदये इत्यर्थः। दधीचात् ऋते—दधीचं विना, केनचित्—केनापि न प्रवेष्टव्यम्। तिरश्चीनं—तिर्य्यक् यथा तथा, चित्तभुवा—मनसिजेन, पातितां विलासवेत्रलतामिव—विलासार्थां वेत्रयष्टिमिव। [द्वाररक्षी अन्येषां प्रवेशनिवारणार्थं वेत्रयष्टिं तिरश्चीनं स्थापयति इति लोकव्यवहारः]। बालमृणालिकाम्—अभिनवमृणाललतां, विरहसन्तापशमनार्थं धृतामिति भावः। अधिस्तनं—स्तने इति अधिस्तनं, स्तनोपरीत्यर्थः, [विभक्त्यर्थेऽव्ययीभावः]। ["स्तनयन्तीम्" इत्यत्र "स्तनयन्ती" इति पाठे,—स्तनयन्ती—नादयन्ती, प्रकाटयन्तीत्यर्थः]।

(१८९) आसीदिति।—अस्याः,—सरस्वत्याः, मनसि आसीच्च "इति" इत्युत्तरेण

सरस्वती, यत्र अमुना मनोजन्मना जघन्या इव परवशीकृता, तत्र का गणना इतरासु तपस्विनीषु अतितरलासु तरुणीषु ?" इति।

(१९०) आजगाम च मधुमास इव सुरभिगन्धवहः, हंस इव (१९१) कृतमृणालधृतिः, शिखण्डीव घनप्रीत्युन्मुखः, मलयानिल इव (१९२) आहितसरसचन्दनधवलतनुलतोत्कम्पः, कृष्यमाण इव कृतकरकचग्रहेण ग्रहपतिना, प्रेर्यमाण इव कन्दर्पोद्दीपनदक्षिणानिलेन, उह्यमान इव

---

अन्वयः। अहमपि—अतिधीरा ज्ञानाधिष्ठात्री देवताऽपीति भावः। नाम—प्राकाश्ये। मनोजन्मना—मनसिजेन, कामेन इति यावत्। जघन्या इव—नीचेव। परवशीकृता—अधीनीकृता। का गणना ?—को विचारः ? इत्यर्थः। इतरासु—अन्यासु, तपस्विनीषु—नराकासु। अतितरलासु—अतिचञ्चलासु।

(१९०) आजगामेति।—उत्तरस्थितेन दधीच इति पदेन अन्वयः। मधुमास इव—वसन्त इवेत्यर्थः। सुरभीति।—सुरभिं—सौरभशालिनं, गन्धं वहतीति तथाभूतः, अन्यत,—सुरभिः,—सौरभवान् गन्धवहः,—वायुर्यत्र तथाभूतः।

(१९१) कृतेति।—कृता—विहिता. मृणालेन—बिसेन,कामसन्तापनिवारणार्थम् अङ्गस्यापि नेति भावः, धृतिः,—सन्तोषः, धैर्य्यं वा येन तथोक्तः, अन्यत्र,—कृता मृणालस्य धृतिः,—धारणं, चञ्चा ग्रहणमित्य येन तथोक्तः, यद्वा,—कृता मृणालेन धृतिः,—प्राणधारणं येन तथोक्तः। शिखण्डीव—मयूर इव। घनेति।—घना—सान्द्रा, प्रीतिः,—हर्षः कान्तासङ्गेति भावः, तस्याम उन्मुखः,—तत्प्राप्तिलोलुप इत्यर्थः; अन्यत्र,—घने—मेघे, तद्दर्शने इति यावत्, या प्रीतिः,—सन्तोषः, तया उन्मुखः,—ऊर्द्धमुखः।

(१९२) आहितः,—जनितः, सरसेन—सान्द्रेण, घृष्टेनेत्यर्थः, चन्दनेन धवलायाः,—श्वेतीकृतायाः, तनुलतायाः,—अङ्गयष्टेः, उत्कम्पः,—कम्पनं, स्मरदशाभेद इत्यर्थः यस्य तथोक्तः, अन्यत्र,—आहितः,—जनितः सरसानां—स्निग्धानां, चन्दनानां; धवाः,—वृक्षभेदाः, ता लान्ति—आश्रयन्तीति तथाविधाः, याः तनुलताः,—सूक्ष्मवल्ल्यः, तासाञ्च उत्कम्पः,—कम्पनं येन तथाविधः। कृष्यमाण इव इत्युद्दीपकत्वात्। कृतेति।—कृतः करेण—किरणेन, हस्तेन च, कचग्रहः,—केशग्रहणं येन तथोक्तेन। ग्रहपतिना—चन्द्रेण। [ "कन्दर्पोद्दीपनदक्षिणानिलेन" इत्यत्र "कन्दर्पोद्दीपन-

उत्कलिकाबहुलेन रतिरसेन, (१९३) परिमलसम्पातिना मधुपपटलेन पटेनेव नीलेन (१९४) आच्छादिताङ्गयष्टिः, अन्तःस्फुरता मत्तमदनकरिकर्णशङ्खायमानेन प्रतिमिन्दुना प्रथमसमागमविलासविलक्षस्मितेनेव धवलीक्रियमाणैककपोलोदरी मालतीद्वितीयो दधीचः। आगत्य च (१९५) हृदयगतदयितानूपुररवमिश्रयेव हंसगद्गदया गिरा कृतसम्भाषणो यथा मन्मथः समाज्ञापयति, यथा यौवनम् उपदिशति, यथा अनुरागः शिक्षयति, यथा विदग्धता अध्यापयति, तथा ताम् अभिरामां रामाम् अरमयत्। उपजातविस्रम्भा च आत्मानम्

---

दक्षेण दक्षिणानिलेन" इति पाठान्तरम्]। उह्यमान इव—नीयमान इव। उत्कलिकाबहुलेन—रणरणकभूयिष्ठेन।

(१९३) परिमलेति।—परिमलेन—गात्रसौरभेण, सम्पततीति तथोक्तेन, मधुपपटलेन—भ्रमरनिचयेन पटेनेव—वसनेन इव।

(१९४) आच्छादितेति।—आच्छादिता—आवृता, अङ्गयष्टिः,—तनुलता यस्य तथोक्त। अन्तःस्फुरता—अन्तर्विराजमानेन। मत्तेति।—मत्तः,—दुर्मद, मदन,—काम एव, करी—हस्ती, तस्य कर्णे य शङ्ख,—शङ्खनिर्मिताभरणविशेष, स इवाचरतीति तेन, प्रतिमिन्दुना—प्रतिबिम्बितचन्द्रेण। प्रथमेति।—प्रथम,—आद्य, समागम—सङ्ग., तस्मिन् यो विलास,—"धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वच." इत्युक्तलक्षण. भावविशेषः, तेन विलक्ष—सलज्ज यत् स्मितं—मन्दहसित तेन इव। धवलीति।—धवलीक्रियमाणम् एकस्य कपोलस्य उदरम्—अभ्यन्तर यस्य तथोक्तः।

(१९५) हृदयेति।—हृदयं गता—प्रविष्टा इत्यर्थ, या दयिता—कान्ता, तस्या नूपुररव,—नूपुरनिक्वन., तेन मिश्रा—सवलिता तयेव, हंसगद्गदया—हंसस्वनमधुरयेत्यर्थ', गिरा—वाचा, कृतसम्भाषण—कृतालाप., "देवि। कुशल ते ?" इत्येवमालपन् इत्यर्थ। यथा मन्मथ इति।-मन्मथस्य प्रभुशक्तिसम्पन्नत्वात् आज्ञादानमुचितम्। एवं सर्वत्र उन्नेयम्। उपदिशति—"एवमेव कुरु" इत्युपदेश। विदग्धता—चतुरता, कामकलासु नैपुण्यमिति यावत्. अध्यापयति—शिक्षयति। अभिरामा—मनोहारिणीं, रामा—कान्ताम्। देवताविषयकसम्भोगशृङ्गारवर्णनस्य अनौचित्यात् विस्तरेण नात्र प्रदर्शितम्। कुमारीत्वेन गान्धर्वविवाहस्य वर्णनोचित्येऽपि नात्र तद्वर्णनं कृत, शापाक-

अकथयत् अस्य सरस्वती। तया तु सार्द्धम् एकं दिवसम् इव अनयत् संवत्सरम् अधिकम्।

अथ दैवयोगात् सरस्वती बभार गर्भम्, असूत च (१९६) अनेहसा सर्व्वलक्षणाभिरामं तनयम्। तस्मै च जातमात्रायैव "सम्यक् (१९७) सरहस्याः सर्वे वेदाः सर्व्वाणि च शास्त्राणि सकलाश्च कलाः मत्प्रसादात् स्वयम् आविर्भविष्यन्ति" इति वरमदात्। (१९८) सद्भर्तृश्लाघया दर्शयितुम् इव हृदयेन आदाय दधीचं पितामहादेशात् समं साविल्या ब्रह्मलोकम् आरुरोह। गतायाञ्च तस्यां दधीचोऽपि हृदये (१९९) ह्लादिन्या इव अभिहतो भार्गववंशसम्भूतस्य भ्रातुः ब्राह्मणस्य जायाम् अक्षमालाऽभिधानां मुनिकन्यकाम् आत्मसूनोः संवर्द्धनाय नियुज्य विरहातुरः तपसे वनम् अगात। यस्मिन् एव अवसरे सरस्वती असूत तनयं, तस्मिन् एव अक्षमालाऽपि सुतं प्रसूतवती। तौ तु (२००) सा निर्विशेषं सामान्यस्तन्या शनैः शनैः शिशू समवर्द्धयत्। एकः तयोः सारस्वताख्य एव अभवत्,

---

स्नानमात्रपरत्वात् आख्यायिकायाः, अन्यथा तया पतिपरित्यागः गर्हणीयोऽपि कथं कृतः इत्यादिरूपकुतर्कोदयप्रसङ्गः स्यात्। उपजातविस्रम्भा—सञ्जातविश्वासा। अस्य—दधीचस्य। आत्मानं—स्वस्वरूपम्; अभिशप्ता वाग्देवी अहमिति भावः।

(१९६) —कालेन। तस्मै—तनयाय। जातमात्राय—उत्पन्नमात्रायेत्यर्थः।

(१९७) सरहस्या—रहस्यम्—उपनिषत्, तेन सह वर्त्तमानाः। कलाः,—चतुःषष्टिसङ्ख्यकाः सङ्गीतादिविद्याः।

(१९८) सद्भर्तृश्लाघया—स —उत्तमः, यो भर्त्ता, तस्मिन् या श्लाघा—गौरवं तया।

(१९९) ह्लादिन्या—वज्रेण इत्यर्थः, ("ह्लादिनी वज्रमस्त्रियाम्" इत्यमरः)।

(२००) सा—अक्षमाला। निर्विशेषम्—स्वपुत्रात् अभिन्नभावेन इति यावत्। सामान्यस्तन्या—सामान्यम्—उभयोः साधारणमित्यर्थः, स्तन्य—स्तनदुग्धं यस्याः तथाभूता सतीत्यर्थः। तयोः,—उक्तयोः तनययोः। एकः,—सरस्वतीतनय इत्यर्थः।

द्वितीयोऽपि वत्सनामा अभवत्; आसीच्च तयोः सोदर्य्ययोः इव स्पृहणीया प्रीतिः।

अथ सारस्वतो मातुः (२०१) महिम्ना यौवनारम्भ इव आविर्भूताशेषविद्यासम्भारः तस्मिन् सवयसि भ्रातरि प्रेयसि प्राणसमे सुहृदि वत्से वाङ्मयं समस्तमेव सञ्चारयामास; चकार च कृतदारपरिग्रहस्य अस्य तस्मिन् एव प्रदेशे प्रीत्या प्रीतिकूटनामानं निवासम्। (२०२) आत्मनाऽपि आषाढ़ी, कृष्णाजिनी, वल्कली, अक्षवलयी, मेखली, जटी च भूत्वा तपस्यतो जनयितुः एव जगाम अन्तिकम्। / अथ तस्मात् (२०३) प्रव ̆ ानादिपुरुषात् (२४) जनितात्मचरणोन्नति-

सारस्वताख्य,—सरस्वत्या अपत्य पुमान् सारस्वत., स एव आख्या यस्य तथाभूतः, मातृनाम्ना सारस्वत इति ख्यात इत्यर्थः।

(२०१) महिम्ना—वरप्रभावेण इत्यर्थः। तस्मिन्—अक्षमालापुत्रे। सवयसि—समानवयस्के। वाङ्मयं—वागात्मकं शास्त्रमित्यर्थः। सञ्चारयामास—प्रेरयामास, सर्वां एव ता विद्या वत्स शिक्षयामासेति निष्कर्षः।

(२०२) आत्मना—स्वयम्। आषाढी—आषाढः,—पालाशो दण्डः, तद्वान्, पालाशदण्डधारी इत्यर्थ,। कृष्णाजिनी—कृष्णसारचर्म्मावरण इत्यर्थः। वल्क ी—वल्कल—वृक्षत्वक् तद्वान्, वल्कलपरिधायी इत्यर्थः, ("आषाढसंज्ञो दण्डः स्यात् पालाशो व्रतचारिणाम्। वृक्षत्वङ्‌निर्म्मितं वस्त्र वल्कल समुदाहृतम्॥" इत्युक्ते)। अक्षवलयी—जपमालाधा ी। मेखली—मेखला—मुञ्जतृणादिरचित कटिसूत्रं तद्वान्, मुञ्जतृणनिर्मितमेखलाधारीत्यर्थः। जटी—जटा—रूक्षसंहतकेशः तद्वान्, जटिल. इत्यर्थ., (विशेषणैरेतै ब्रह्मचर्य्यमसीोक्तम्)। तपस्यत,—तपस्या कुर्व्वतः, जनयितु,—पितुः दधीचस्येत्यर्थ.।

(२०३) प्रवर्द्धमानात्—वृद्धिं गच्छत, आदिपुरुषात्—मूलपुरुषात्, वत्सादित्यर्थः, यद्वा,—प्रवर्द्धमानात्—अपत्यादिना वृद्धि गच्छतः, आदिपुरुषात्—पूर्व्वस्मात् भार्गवादितः, अन्यच्च,—नारायणात्।

(२०४) जनितेति।—जनिता—प्रवर्द्धिता. आत्मचरणेन—आत्मानुशीलनेन,

निर्गतप्रघोषः, (२०५) परमेश्वरशिरोधृतः, (२०६) सकलकलागमगम्भीरः, महामुनिमान्यः, (२०७) विपक्षक्षोभक्षमः, (२०८) क्षितितललब्धायतिः, अस्खलितप्रवृत्तः, भागीरथीप्रवाह इव पावनः प्रावर्त्तत विपुलो वंशः। यस्मात्

---

आत्मज्ञानेन इति यावत्, या उन्नतिः,—अभ्युदयः, तया निर्गतः,—दिगन्तं प्रति धावित इति यावत्, प्रघोषः,—ध्वनिः, कीर्त्तिः इति यावत् यस्य तथोक्तः ; यद्वा,—जनिता—विहिता, आत्मना—स्वेषां, स्ववंशीयानामित्यर्थः, चरणानां—काठादिशाखाऽध्यायिनाम्, उन्नतिः,—उत्कर्षः, तया निर्गतः प्रघोषः,—यशः यस्य तथोक्तः ; अन्यत्र,—जनितस्य—उत्पादितस्य, आत्मचरणस्य—आत्मनः परमात्मनः, वामनरूपिविष्णोरित्यर्थः, चरणस्य—बलिच्छलनकाले तृतीयचरणस्येत्यर्थः, उन्नत्या—ऊर्द्धगत्या, निर्गतः प्रघोषः,—प्रकर्षेण कलकलध्वनिरित्यर्थः यस्य तथाभूतः ; तदानीं तत्पादस्पर्शेन ब्रह्मकटाहभेदादिति भावः, [ ब्रह्मकटाहस्थिता गङ्गा भगवच्चरणस्पर्शात् तद्भङ्गेन महीतले पतिता इत्यस्या विष्णुपादोद्भवेति प्रसिद्धिः। "प्रवर्द्धमानादिपुरुषजनितात्मचरणोन्नतिनिर्गतप्रघोषः" इति पाठे,—प्रवर्द्धमानो य आदिपुरुषः, तेन जनिता या आत्मना चरणानामुन्नतिः, तया निर्गतः प्रघोषो यस्य सः ]।

(२०५) परमेश्वरशिरोधृतः,—परमेश्वरः,—सम्राट्, तेन शिरसा धृतः,—सम्मानित इति यावत् ; अन्यत्र,—परमेश्वरेण—हरेण, शिरसा धृतः,—गृहीतः, हरशिरश्चारीति यावत्।

(१०६) सकलेति।—स :,—समग्राः, कलाः,—विद्याः, तासाम् आगमेन—अधिगमेन, गम्भीरः,—पूर्ण इत्यर्थः ; अन्यत्र,—सकलकलः,—कलकलेन सह, य आगमः,—प्रवहणं, तेन गम्भीरः। महामुनिभिः मान्यः,—आदरणीयः ; यद्वा,—महामुनिवत् मान्यः,—माननीयः ; अन्यत्र,—महामुनिः,—जह्नुः, तेन मान्यः,—सेव्यः, अतिपवित्रबुद्ध्या उदरेण गृहीतत्वात् इति भावः।

(२०७) विपक्षक्षोभक्षमः,—विपक्षाणां—शत्रूणां, विरोधिनामित्यर्थः, क्षोभे—पराजये, क्षमः,—शक्तः ; अन्यत्र,—विपक्षाः,—पक्षरहिताः पर्व्वताः, तेषां क्षोभे—तरङ्गाघातेन खण्डने इति यावत्, क्षमः,—समर्थः।

(२०८) क्षितितलेति।—क्षितितले—पृथिव्यां, लब्धा—प्राप्ता, आयतिः,—प्रतिष्ठा ; अन्यत्र,—आयतिः,—विस्तारः येन तथोक्तः। अस्खलितप्रवृत्तः,—नास्ति स्खलितं—सदाचारभ्रंशः यस्मिन् तद्यथा तथा, प्रवृत्तः,—प्रचलितः ; अन्यत्र,—

अजायन्त (२०९) वात्स्यायना नाम गृहमुनयः, आश्रित-श्रौता अपि (२१०) अ लम्बितालीकवककाकवः, (२११) कृतकुक्कुटव्रता अपि अवैड़ालवृत्तयः, (२१२) विवर्ज्जितजनवृत्तयः, (२१३) परिहृतकपटकौरकुचौकूर्चाकूताः,

अस्खलितम्—अनिरुद्धं यथा तथा, प्रवृत्तः,—प्रवाहित इत्यर्थः। भागीरथीप्रवाह इव—गङ्गाप्रवाह इव। विपुलः,—महान्। यस्मात्—वंशादित्यर्थः।

(२०९) वात्स्यायना नाम—वत्सस्यापत्यानि पुमांसः वात्स्यायनाः, वत्सवंश-प्रसूततया प्रसिद्धा इत्यर्थः। गृहमुनयः,—गृहस्थिता मुनयः, मुनिवदाचारवन्तो गृहस्था इत्यर्थः। आश्रितश्रौता',—आश्रितः,—अवलम्बितः, श्रौतः,—श्रुतिविहितः आचारः यैः तथोक्ताः, पक्षे,—श्रौतं—श्रुतौ—कर्णे एव स्थितं, चिरवृत्तमित्यर्थः।

(२१०) अना म्बितेति।—आलम्बित',—धृतः, अलीकः,—मिथ्याभूतः, वकास्य काकुः,—"भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" इत्युक्तशोकभीत्यादिजन्तिविकृत-कण्ठस्वरविशेषः यैः तथाभूता न भवन्तीति तथोक्ताः, अच्छद्मचारिण इत्यर्थः, अकपटेन वेदविधिमनुसरन्त इति यावत्। "भिन्नकण्ठध्वनिर्धीरैः" इत्यादिनोक्तलक्षणकाकुशब्देन अत्र छद्म लक्ष्यते, व काकुः,—वकछद्म, तथा च, ये चिरवृत्तमाश्रितवन्तः, ते छद्मचारित्वात् आलम्बितवकत्काकवो भवन्ति, अमी तु न तथा इति विरोधः।

(२११) कृतेति।—कृते कुक्कुटव्रत—कुक्कुटाण्डप्रमाणग्रासभोजननियमः यैः तथोक्ताः, कुक्कुटाण्डप्रमाणेन चान्द्रायणादिव्रतम् आचरन्त इत्यर्थः। अवैडालवृत्तयः,—नास्ति वैडाली—विडालसम्बन्धिनी, वृत्तिः,—व्यवहारो येषां तथोक्ताः; विडाली हि हिंसावृत्तिः, कदाचित् स्वाभीष्टसिद्धये आत्मनः स्वभावं गोपयित्वा चरति, तथा-चारिणो न इति भाव। विरोधस्तु—कृत कुक्कुटानां व्रतं—भक्षणं यैः तथाभूताः, ये कुक्कुटभक्षणं कृतवन्तः, ते कथं विडालवृत्तयो न भवन्तीति

(२१२) विवर्जितेति।—विवर्जिता जनानां—दुर्जनानाम्, इतरजनानां वा; यद्वा,—जनैः,—दुराचारपुरुषैः,सह वृत्तिः,—व्यवहारो यैः तथाभूताः; ["विवर्जितजन-पङ्क्तयः" इति पाठे,—विवर्जिता जनाना—साधारणाना, पङ्क्तिः,—श्रेणी, जनता इत्यर्थः यैः तथाभूताः, मुनिवृत्तित्वात् परित्यक्तेतरजनसमाजा इत्यर्थः; "पङ्क्तयः" इत्यत्र "पक्तयः" इति पाठे—पक्तिः, पाकः, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् पक्वद्रव्यम्, अन्नमिति यावत् यैः तथोक्ताः इत्यर्थः]।

(२१३) परिहृतेति।—परिहृतं—परित्यक्तं, कापटकौरस्य—दुष्टयुक्तः चिरा

अगृहीतगह्वराः, (२१४) न्यक्कृतनिकृतयः, प्रसन्नप्रकृतयः, विगत-विकृतयः, परपरिवादपराचीनचेतसः, (२१५) वर्णत्रय-व्यावृत्तिविशुद्धान्धसः, धीरधिषणावधूताध्येषणाः, असङ्कुसुक-स्वभावाः, प्रणतप्रणयिनः, (२१६) शमितसमस्तशाखान्तर-संशीतयः, (२१७) उद्घाटितसमग्रग्रन्थार्थग्रन्थयः, कवयः

कुचीकूर्चाकूतं—"किचिरमिचिर" इति अव्यक्तशब्दः यैः तथोक्ताः; यद्वा—परिहृतं कपटं—व्याजस्तुतिः, तथा कीराणां कुचीकूर्चाः,—शुकपचिवत्। निरर्थक-शब्दालापाश्च, तेषु आकूतम्—अभिप्रायः यैः ते तादृशाः। कीरा हि यथा पाठितं वदन्तः लोकान् सन्तोषयन्ति, न तु तेषां तथा मनोवृत्तिः, एते तु ब्राह्मणा बाह्याभ्यन्तरसमव्यवहारिणः न कापटिकाः, न वा शुकवत् निरर्थकवाक्यप्रयोजकाः इति भावः। अगृहीतगह्वराः,—न गृहीतं गह्वरं—पापं यैः तथोक्ताः। ["परि-हृतकपट चौर-कल्पितकाचकूर्चाकूताः" इति पाठान्तरे,—परिहृतः,—परित्यक्तः, कपट-चौरकल्पितायां—शठतस्कराद्याचरितायां, काचकूर्चायां—केशकुञ्चने, आकूतः,—अभिप्रायः यैः तथोक्ताः, विलासवासनाविरहिताः इत्यर्थः]।

(२१४) न्यक्कृतेति।—न्यक्कृता—तिरस्कृता, निकृतिः,—शाठ्यं यैः तथोक्ताः, ("कुसृतिर्निकृतिः शाठ्यम्" इत्यमरः)। प्रसन्नेति।—प्रसन्ना—निर्मला, प्रकृतिः,—स्वभावो येषां तथोक्ताः, सौम्या इत्यर्थः। विगतेति।—विगता विकृतिः,—विकारो येषां ते, अविकृतचित्ता इत्यर्थः। परीति।—परेषां परिवादे—निन्दायां, पराचीनं—पराङ्मुखं चेतः येषां तथोक्ताः, परनिन्दापराङ्मुखचित्ता इत्यर्थः।

(२१५) वर्णेति।—वर्णत्रयाणां—चत्रियवैश्यशूद्राणामित्यर्थः, व्यावृत्त्या—विवर्ज्जनेन प्रतिग्रहादिवैमुख्येनेति यावत्, विशुद्धानि—पवित्राणि, अन्धांसि—अन्नानि येषां तथोक्ताः; वर्णान्तराप्रतिग्राहिण इत्यर्थः। ("भिस्सा स्त्री भक्तमन्धोऽन्नम्" इत्यमरः) धीरेति।—धीरा या धीषणा—बुद्धिः, ("बुद्धिर्मनीषा धीषणा" इत्यमरः) तया अवधूता—तिरस्कृता, अध्येषणा—अन्वेषणा, धनैषणा इति यावत् यैः तथोक्ताः, परित्यक्तयाच्ञावृत्तय इत्यर्थः। असङ्कुसुकस्वभावाः,—असङ्कुसुकाः,—स्थिरौ मृदुश्च, स्वभावो येषां तथोक्ताः। प्रणतप्रणयिनः,—प्रणतेषु जनेषु अनुरागिण इत्यर्थः।

(२१६) शमितेति।—शमिता—शान्तिं नीता, सिद्धान्तेन निरस्तेत्यर्थः, समस्ता—समग्रा, शाखान्तराणां—काठादिवैदिकशाखाविशेषाणां, संशीति—संशयः यैः तथोक्ताः

(२१७) उद्घाटितेति।—उद्घाटिताः—व्याख्याता इत्यर्थः, समग्राणां—सम

वाग्मिनः, विमत्सराः, सरसभाषित-व्यसनिनः, (२१८) विदग्ध-परिहासवेदिनः, परिचयपेशलाः, नृत्यगीतवादित्रेषु अबाह्याः, ऐतिह्यस्य अवितृष्णाः, सानुक्रोशाः, सत्यशुचयः, साधु-सम्मताः, (२१९) सर्व्वसत्त्वसौहार्द्दद्रवार्द्रहृदयाः, तथा सर्व्व-गुणोपेता राजसेनानभिभूताः, (२२०) क्षमाभाज आश्रित-नन्दनाः, अनिस्त्रिंशा विद्याधराः, अजड़ाः कलावन्तः,

---

स्त्राना, ग्रन्थाना—शास्त्राणाम्, अर्थग्रन्थयः,—कूटार्था इत्यर्थः येः तथाभूताः, शास्त्र-संशयच्छेतार इत्यर्थः। कवयः,—कवयितारः, काव्यप्रणेतार इत्यर्थः। वाग्मिनः,—सुवक्तारः। विमत्सराः,—वि—विगतः, मत्सरः,—अन्यशुभद्वेषः येभ्य ते तथोक्ताः। सरसेति।—सरसं—रसयुक्तं, भाषितं—वचनं, तत्र व्यसनिनः,—तद्भाषणपरा इत्यर्थः।

(२१८) विदग्धेति।—विदग्धः,—चतुरः, परिहासः,—केलिविशेषः, तद्वेदिनः,—तदभिज्ञा इत्यर्थः। परिचयपेशलाः,—परिचयेषु—सस्तवेषु, सज्जनैरिति शेषः, पेशलाः,—निपुणाः। नृत्यगीतवादित्रेषु अबाह्याः,—लास्यादिषु बहिर्भावरहिताः, नृत्यगीतवादित्रज्ञानवन्त इत्यर्थः। ऐतिह्यस्य—इतिहासस्य, अवितृष्णाः,—आसक्ता इत्यर्थः, इतिहासज्ञानलोलुपता इति यावत्। सानुक्रोशाः,—सदयाः। सत्यशुचयः,—सत्येन शुचयः,—पवित्राः। साधुसम्मताः,—सज्जनमान्याः।

(२१९) सर्वेति।—सर्वेषु सत्त्वेषु—प्राणिषु, सौहार्द्दद्रवेण—मैत्रीरसेन, स्निग्ध-भावेनेत्यर्थः, आर्द्रं—स्निग्धं, हृदयं येषां तथोक्ताः। सर्व्वगुणोपेताः,—सर्वैः गुणैः,—शीलदाक्षिण्यादिभिः, उपेताः,—समन्विताः। राजेति।—राज्ञः,—नृपस्य, सेनया—सैन्येन, अनभिभूताः,—अनाक्रान्ताः, अत्र ये सर्वैः गुणैः,—सत्त्वरजस्तमोभिर्गुणत्रयैः, उपेताः, ते कथं राजसेन—रजःसम्बन्धिगुणेन, दम्भाहङ्कारादिना इत्यर्थः, अनभि-भूताः,—अपराजिताः, रजोगुणावर्जिता भवन्ति? इति विरोधः। एवमुत्तरत्र विरोधः उन्नेयः।

(२२०) क्षमाभाजः,—शक्तौ सहिष्णुता क्षमा; तद्भाजः,—तद्वन्त इत्यर्थः; आश्रितनन्दनाः,—आश्रितान्—अनुगतान् जनान्, नन्दयन्तीति तथाभूताः; अथ च, ये क्षमा—पृथिवी, मर्त्त्यलोकमित्यर्थः, भजन्ते, ते कथम् आश्रित नन्दनं—तदाख्यं सुरोद्यान यैः तथाभूता भवन्तीति विरोधः। अनिस्त्रिंशाः,—अनिर्द्दयाः, अक्रूराः इति यावत्, ("खरस्पर्शेऽथ निस्त्रिंशः खड्गे ना निर्द्दये त्रिषु" इति मेदिनी) विद्याधराः—विद्वांसः। अथ च, ये अनिस्त्रिंशाः,—खड्गवर्ज्जिताः ते कथं विद्या-

**(२२१) अदोषाः तारकाः, (२२२) अपरोपतापिनः भास्वन्तः, अनुष्माणः हुतभुजः, (२२३) अकुस्थतयो भोगिनः (२२४) अस्तम्भाः पुण्यालयाः, (२२५) अलुप्तक्रतुक्रिया**

धराः—देवयोनिविशेषाः ? इति विरोधः ; ये तु विद्याधराः देवयोनिविशेषाः, ते सखड्गा एव वर्त्तन्ते, न त्वनिस्त्रिंशाः इति प्रसिद्धिः ; मालाखड्गगुलिकाञ्जनादिभेदेन भिन्नानामपि तेषां खड्गहस्तत्वमव्यभिचरितमेवेति बोध्यम्। अजड़ाः,—अमूर्खाः। कलावन्तः,—नृत्यगीतादिषु विद्यासु निपुणा इत्यर्थः ; अन्यत्र,—अजड़ाः,—अशीताः, कलावन्तः,—चन्द्राः यः अजड़ः,—अशीतः, उष्ण इत्यर्थः, भवति, स कथं तुषार-किरणश्चन्द्रः स्यात् ? इति विरोधः।

(२२१) अदोषाः,—दोषरहिताः, तारकाः,—तारयन्ति—उद्धरन्ति लोका-निति तथोक्ताः, धर्म्मोपदेष्टारः इत्यर्थः ; अन्यत्र,—अदोषाः,—दोषा—रात्रिस्तद्र-हिताः, तारकाः,—नक्षत्राणि, अत्र अरात्रौ तारकोद्गमः इति विरोधः।

(२२२) अपरोपतापिनः,—परान् न उपतापयन्ति—पीड़यन्तीति तथोक्ताः, परपीड़नरहिता इत्यर्थः। भास्वन्तः,—प्रभाशालिनः, लोकसमाजेषु दीप्यमाना इत्यर्थः ; अन्यत्र,—न परान् उपतापयन्ति—सन्तप्तान् कुर्व्वन्ति इति तथोक्ताः, अपरोप-तापिनः, भास्वन्तः,—सूर्य्याः ; ये सूर्य्याः, ते कथं अ-परसन्तापका भवन्ति ? इति विरोधः। अनुष्माणः,—उष्मवर्ज्जिताः, अगर्व्वा इत्यर्थः, हुतभुजः,—हुतं—यज्ञेषु देवेभ्यो निवेदितमित्यर्थः, भुञ्जते इति तथोक्ताः, यज्ञशिष्टाशिन इत्यर्थः ; अन्यत्र,—अनुष्माणः,—शीताः, हुतभुजः,—अग्नयः, ये हुतभुजः, ते कथम् अनुष्माणः,—सन्तापवर्ज्जिता भवन्ति ? इति विरोधः।

(२२३) अकुस्थतयः,—अकुः—अकुत्सिता, स्थितिः,—गतिः, आकार इति यावत् येषां तथोक्ताः, भोगिनः,—संसारसुखभोगवन्तः ; अन्यत्र,—नास्ति कौ—पृथिव्यां, पृथ्वीविवरे इत्यर्थः, स्थितिः,—गतिः स्थितिः वा येषां तथोक्ताः, भोगिनः,—सर्पाः ; ये सर्पाः, तेषां पृथिव्यां पृथिवीविवरे वा अनवस्थानमसम्भवमिति विरोधः।

(२२४) अस्तम्भाः,—स्तम्भः,—कामजनितसात्त्विकभावविशेषः, तद्रहिताः, पुण्याश्रयाः,—पुण्यवन्तः ; अन्यत्र,—अस्तम्भाः,—स्तम्भः,—स्थूणाः, गृहधारणकाष्ठ-मित्यर्थः तद्रहिताः, स्तम्भशून्याः, पुण्यालयाः,—पवित्रगृहाणि, मठादिस्थानानीत्यर्थः ; स्तम्भं विना गृहस्थितेरसम्भवादत्र विरोधः।

(२२५) अलुप्तेति।—न लुप्ता क्रतुक्रिया—यज्ञानुष्ठानं येषां तथाभूताः,

दक्षाः, अव्यालाः कामजितः, (२२६) असाधारणा द्विजातयः।

तेषु च एवम् उत्पद्यमानेषु, (२२७) संसरति संसारे, यात्सु युगेषु, अवतीर्णे कलौ, वहत्सु वत्सरेषु, व्रजत्सु वासरेषु, अतिक्रामति च काले, प्रसवपरम्पराभिः अनवरतम् आपतति विकासिनि वात्स्यायनकुले क्रमेण कुवेरनामा (२२८) वैनतेय इव गुरुपक्षपाती द्विजो जन्म लेभे। तस्य अभवन् अच्युत, ईशानो हरः पाशुपतश्च इति चत्वारो युगारम्भा इव

---

दक्षाः,—निपुणाः ; अन्यत्र,—दक्षः,—प्रजापतिभेदः इति विरोधः, तस्य यज्ञक्रियाया हरकोपेण नाशादलुप्तक्रतुक्रियत्वमसम्भवमिति भावः। अव्यालाः,—अहिंस्राः, कामजितः,—कामजयिनः, निरभिलाषाः वा ; अन्यत्र,—नास्ति व्यालः,—सर्पः येषु तथाभूताः, कामजित्—रुद्रः इति विरोधः ; तस्य अङ्गे व्यालयोगप्रसिद्धेरिति भावः।

(२२६) असाधारणाः,—असामान्याः, द्विजातयः,—द्वे जाती येषां तथोक्ताः, मातृजठरे एकं जन्म, आचार्य्यसमीपे उपनयनात् वेदाधिगमेन द्वितीयं जन्मेति। द्विजातित्वमिति भावः ; "मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने" इति स्मृतेः ; अन्यत्र,—द्विजातिः,—द्वाभ्यां जननम् इत्यर्थः येष तथोक्ताः, अथ च असाधारणाः,—असामान्याः, अनितरा इत्यर्थः, इति कथं युज्यते ? इति विरोधः।

(२२७) संसरति—चलति। यात्सु—गच्छत्सु। वहत्सु—अतिक्रामत्सु। व्रजत्सु—गच्छत्सु। वासरेषु—दिवसेषु। काले इति।—प्रागभिहिते इति भावः, नो चेदेतत् पुनरुक्तं स्यात्। प्रसवपरम्पराभिः,—अपत्यजन्मप्रवाहैः। आपतति—परिवर्द्धमाने। विकासिनि—विराजमाने।

(२२८) वैनतेय इव—विनतायाः अपत्यं पुमान् वैनतेयः,—गरुडः स इव, गुरुपक्षपाती—गुरौ—आचार्य्ये पितरि वा, पक्षपातः,—भक्तिः विद्यते अस्येति तथोक्तः ; अन्यत्र,—गुरुभ्यां—महद्भ्यां, पक्षाभ्यां—गरुद्भ्यां, पतति—उद्गच्छतीति तथोक्तः। द्विजः,—विप्रः, पक्षी च ("दन्तविप्राण्डजा द्विजाः" इत्यमरः)। तस्य—कुवेरस्य। युगारम्भा इव—युगानां—सत्यादीनां चतुर्णाम्, आरम्भाः,—प्रथमप्रवृत्तयः ते इव।

(२२९) ब्राह्मतेजोजन्यमानप्रजाविस्तारा नारायणबाहुदण्डा इव (१३०) सच्चक्रनन्दकाः तनयाः। तत्र पाशुपतस्य एक एव अभवत् भूभार इव (१३१) अचलकुलस्थितिः चतुरुदधिगम्भीरोऽर्थपतिः इति नाम्ना (२३२) समग्राग्रजन्मचक्रचूडामणिः महात्मा सूनुः। सोऽजनयत् भृगुं हंसं शुचिं कविं महीदत्तं धर्म्मं जातवेदसं चित्रभानुं त्र्यक्षम् अहिदत्तं विश्वरूपञ्च इति एकादश रुद्रानिव (२३३) सोमामृतरसशीकर-

(२२९) ब्राह्मेति।—ब्राह्मं—वैदिकं, वेदविहिताचारनिमित्तमित्यर्थः, तेजः तेन जन्यमानः,—उत्पद्यमानः, प्रजानां—सन्ततीनां, विस्तारः येषां तथाभूताः; अन्यत्र,—ब्रह्मणः,—विधातुरिदम् इति ब्राह्मं, यत् तेजः तेन, मनःसङ्कल्पप्रभावेण इत्यर्थः, जन्यमानः प्रजाविस्तारो येषु तथोक्ताः; युगारम्भे प्रथमं ब्रह्मणः सनकसनन्दसनत्कुमारसनातनाख्यानां चतुर्णां पुत्राणां मानससृष्टिः, ततः जन्मक्रमस्य हेतोः सङ्कल्पात् मैथुनाच्च सृष्टिः प्रावर्त्ततेति शास्त्रात्।

(२३०) सच्चक्रनन्दकाः,—सतां—साधूनां, चक्रं—समाजं, नन्दयन्तीति तथोक्ताः; अन्यत्र,—सत्—तिष्ठत्, चक्रं—सुदर्शनाख्यं, नन्दकः,—तदाख्यः खड्गश्च येषु तथोक्ताः। नारायणबाहुदण्डा अपि चत्वारः। तनयाः—पुत्राः। भूभार इव—पृथिवीभार इव।

(२३१) अचलकुलस्थितिः,अचला—स्थिरा, कुलस्य—वंशस्य, स्थितिः यस्य तथोक्तः; अन्यत्र,—अचलानां—पर्व्वतानां, कुलैः,—वृन्दैः, सप्तभिः कुलपर्व्वतैरित्यर्थः, उक्तञ्च,—"महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्व्वताः॥" इति, स्थितिर्यस्य तथोक्तः, शेषाहिशिरःस्थायाः भूमेः नमनोन्नमननिवारणार्थं परितः भूधराणामवस्थापनादित्याशयः। चतुरुदधिगम्भीरः,—चत्वारः उदधयः,—समुद्राः, तद्वत् गम्भीरः,—महाप्रभावशालित्वादविकार्य्यस्वभाव इत्यर्थः; अन्यत्र,—चतुर्भिः उदधिभिः,—सागरैः, गम्भीरः,—वेष्टितः इत्यर्थः।

(२३२) समग्रेति।—समग्राणाम् अग्रजन्मनां—ब्राह्मणानां, चक्रस्य—निचयस्य, चूडामणिः,—शिरोरत्नभूतः। सूनुः,—पुत्रः, अभवत् इत्यनुषङ्गः। सः,—अर्थपतिः।

(२३३) सोमेति।—सोमः,—तदाख्यलताभेदः, तस्य अमृतमिव रसः,—

स्फुरितमुखान् पवित्रान् पुत्रान्। अलभत च चित्रभानुः तेषां मध्ये (२३४) राजदेव्यभिधानायां ब्राह्मण्यां बाणम् आत्मजम्। स बाल एव विधेः बलवतो वशात् उपसम्पन्नया व्ययुज्यत जनन्या। जातस्नेहस्तु नितरां पितैव अस्य मातृताम् अकरोत्। अवर्द्धत (२३५) चेतनाऽधिकतरमेधीयमानधृतिः धाम्नि निजे।

कृतोपनयनादिक्रियाकलापस्य (२३६) समावृत्तस्य चतुर्दशवर्षदेशीयस्य पिता अपि श्रुतिस्मृतिविहितं कृत्वा द्विजजनोचितं निखिलं पुण्यजातं कालेन (२३७) अदशमीस्थ एव

---

यज्ञशिष्ट इति भावः, तस्य शीकरैः,—बिन्दुभिः, छुरितं—पूर्णमित्यर्थः, मुखं येषां तान्, सोमयाजितया यज्ञीयसोमलतारसपायिन इत्यर्थः; अन्यत्र,—सोमस्य—शिरःस्थितचन्द्रस्य, अमृतरसानां—निःसृतमयूखद्रवाणाम् इत्यर्थः, शीकरैः छुरितमुखान्—आवृतवदनान् इत्यर्थः, स्वेषां भगवच्छङ्कराशभूतत्वात् शशाङ्कधृत्वं वेदितव्यम्। पवित्रान्—विशुद्धवृत्तीन्, पुत्रान् अजनयत् इत्यनुषङ्गः।

(२३४) राजदेव्यभिधानाया—राजदेवीसमाख्यायाम्,आत्मजम्, अलभत इत्यनुषङ्गः। सः,—बाणः। विधेः बलवतः,—प्रबलस्य दैवस्य, महादुर्भाग्यस्य इति यावत, वशात्—प्रभावात्। उपसम्पन्नया—मृतया। मातृता—मातृत्वं, तत्कृत्यसाधनात् मातृवद्व्यवहारमित्यर्थः।

(२३५) चेतनेति।—चेतना—प्रज्ञा, तया अधिकतरा या मेधा—स्मृतिशक्तिरित्यर्थः, सैवाचरन्ती धृतिः,—धारणाशक्तिः यस्य तथाभूतः। ["अवर्द्धत······निजे"इत्यत्र"अवर्द्धत च तेनाधिकतरमेधीयमानधृतिर्धाम्नि निजे" इति पाठे,—तेन—पित्रा इत्यर्थः, अधिकतरं यथा तथा, एधीयमाना—एधः,—इध्यते अग्निरनेनेति एधः,—अग्निसन्दीपनं काष्ठं, तद्वदाचर्य्यमाना, उद्दीप्यमाना इत्यर्थः, धृतिः यस्य सः, सहजधृतिमानपि पित्रा उपदेशदानादिना अधिकतरं स्फुरद्धृतिरकारीत्यर्थः। निजे धाम्नि—स्वकीये गृहे, स्वीये तेजसि एव अवस्थितः इति शेषः]।

(२३६) समावृत्तस्य—स्नातकस्य, वेदाध्ययनात् परं समावर्त्तनाख्यसंस्कारसंस्कृतस्य इत्यर्थः। चतुर्दशवर्षदेशीयस्य—ईषदसमाप्तचतुर्दशवर्षस्य। श्रुतिस्मृतिविहितं—"श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः" इत्युक्तश्रुतिस्मृतिभ्यां, विहितं—कर्त्तव्यतया उक्तम्। पुण्यजातं—श्रौतं स्मार्त्तञ्च सत्क्रियाकलापमित्यर्थः।

(२३७) अदशमीस्थः,—"शतायुर्वै पुरुषः" इत्युक्तेः नराणां शतवर्षायुर्नियमात्

अस्तम् अगात्। संस्थिते च पितरि, महता शोकेन आभीलम् अनुप्राप्तो दिवानिशं दह्यमानहृदयः कथंकथमपि कतिपयान् दिवसान् आत्मगृहे एव अनैषीत्। गते च विरलतां शोके शनैः शनैः अविनयनिदानतया स्वातन्त्र्यस्य, कुतूहल-बहुलतया च बालभावस्य, (२३८) धैर्य्यप्रतिपक्षतया च यौवनारम्भस्य, शैशवोचित नि अनेकानि चापलानि आचरन् इत्वरो बभूव। अभवंश्च अस्य वयसा समानाः सुहृदः सहायाश्च। तथा च,—भ्रातरौ पारशवौ चन्द्रसेनमातृषेणौ, (२३९) भाषाकविः ईशानः परं मित्रं, प्रणयिनौ रुद्रनारायणौ, विद्वांसौ वारवाण-वासवाणौ, वर्णकविः वेणीभारतः, प्राकृतकृत् कुलपुत्रो वायुविकारः, वन्दिनौ अनङ्गवाणसूचीवाणौ, (२४०) कात्यायनिका चक्रवाकिका, जाङ्गलिको मयूरकः,

तस्यायुषो दशधा विभागे नवत्यधिकातिवृद्धावस्था दशमी नाम, चरमावस्था, इति यावत्, तत्र तिष्ठति इति दशमीस्थः, ("दशमीस्थौ क्षीणरागवृद्धौ" इत्यमरः) स न भवतीति अदशमीस्थः, पुरुषायुषस्यालाभेन अपूर्णवया एवेत्यर्थः। अस्त—निधनम्। संस्थिते—मृते। आभीलं—कष्टम्। ("स्यात् कष्टं कृच्छ्रमाभीलम्" इत्यमरः) विरलताम्—अल्पताम्। अविनयनिदानतया—अविनयः, दुराचारः, मदौद्धत्यमित्यर्थः, तस्य निदानं—मूलकारणं, तस्य भाव' तत्ता तया। स्वातन्त्र्यस्य—स्वाधीनतायाः।

(२३८) धैर्य्यप्रतिपक्षतया—धैर्य्यविरोधितया इत्यर्थ'। इत्वरः,—यायावरः, अधीरतया नैकत्र स्थितिशील इति यावत्। "अभवंश्च" इत्यादिना आत्मन-स्तादृशसर्व्वविधकलाविशारदसहायवत्त्वात् उत्कर्षं प्रकटयति। पारशवौ—ब्राह्मणात शूद्रकन्यायामूढाया जातौ पारशवौ, तदाह मनु',—"ब्राह्मणाद्द वैश्यकन्यायामम्बष्ठो नाम जायते। निषाद' शूद्रकन्या । य' पारशव उच्यते॥"

(२३९) भाषाकविः,—भाषाया—संस्कृतादिवाक्ये इत्यर्थः, कविः,—काव्यरच-यिता, यद्वा,—भाषाः,—गेयवस्तुवाच तासु कविः, गाथादिषु गीतिप्रणेता इत्यर्थः, वारवाण-वासवाणौ—तदाख्यौ, विद्वांसौ—पण्डितौ। प्राकृतकृत्—प्राकृतभाषा-प्रणेता। वायुविकारः,—तदाख्य'। वन्दिनौ—स्तुतिपाठकौ।

(२४०) कात्यायनिका—"पञ्चाशद्वर्षदेशीया नारी संस्थितभर्तृकाम्। वदन्ति

ताम्बूलदायकः चण्डकः, भिषक्पुत्रो मन्दारकः, पुस्तकवाचकः सुदृष्टिः, कलादश्चामीकरः, (२४१) हैरिकः सिन्धुषेणः, लेखको गोविन्दकः, चित्रकृत् वीरवर्म्मा, पुस्तकृत् कुमारदत्तः, मार्दङ्गिको जीमूतः, गायनौ सोमिलग्रहादित्यौ, (२४२) सैरन्ध्री कुरङ्गिका, वांशिकौ मधुकरपारावतौ, गान्धर्वोपाध्यायो दर्दुरकः, (२४३) सांवाहिका केरलिका, लासकयुवा ताण्डवीकः, आक्षिक आखण्डलः, कितवो भीमकः, शैलालि-

कात्यायनिकां धृतकाषायवाससम्॥" इत्युक्तलक्षणा अर्द्धजरती विधवा नारी; चक्रवाकिका—तन्नाम्नी। लाङ्गलिकः,—विषवैद्यः। [ "जाङ्गलिकः" इत्यत्र "जाङ्गुलिकः" इति पाठेऽपि स एवार्थः। "विषवैद्यो जाङ्गुलिकः" इत्यमरः]। मयूरकः,—तदाख्यः। ताम्बूलदायकः,—पर्णविक्रेता, ताम्बूलिक इत्यर्थः। चण्डकः,—तदाख्यः। भिषक्पुत्रः,—वैद्यसुतः, मन्दारकः,—तन्नामा। पुस्तकवाचकः,—पुस्तकलिखितवक्ता, सुदृष्टिः,—तन्नामा। कलादः,—स्वर्णकारः, चामीकरः,—तदाख्यः।

(२४१) हैरिकः,—हीरकपण्योपजीवी, सिन्धुसेनः,—तदाख्यः। ("स्वर्णकारः कलादः स्यात् तदध्यक्षस्तु हैरिकः" इति कोषः)। लेखकः,—पुस्तकस्य इति शेषः, गोविन्दकः तन्नामा। चित्रकृत्—आलेख्यकर्त्ता, वीरवर्म्मा—तदाख्यः। पुस्तकृत्—ग्रन्थकर्त्ता; यद्वा,—पुस्तं—लेप्यादिशिल्पकर्म्म करोतीति तथोक्तः, ("पुस्तं क्लीवे पुस्तके च लेप्यादिशिल्पकर्म्मणि" इति मेदिनी); यद्वा,—पुस्तं—"मृदा वा दारुणा वाऽपि वस्त्रेणाप्यथ चर्म्मणा। लोहरत्नैः कृतं वाऽपि पुस्तमित्यभिधीयते॥" इत्युक्तलक्षणं लेप्यादिशिल्पकर्म्म करोतीति तथोक्तः। मार्दङ्गिकः,—मृदङ्गवादकः, जीमूतः,—तदाख्यः। गायनौ—गायकौ, सोमिलग्रहादित्यौ,—तन्नामानौ।

(२४२) सैरिन्ध्री—"प्रसाधनोपचारज्ञा सैरिन्ध्री स्ववशा स्मृता" इत्युक्तलक्षणा नारी कुरङ्गिका नाम। वांशिकौ—वंशीवादकौ, मधुकरपारावतौ—तन्नामानौ। गान्धर्वोपाध्यायः,—गान्धर्वं—सङ्गीतशास्त्रं, तस्य उपाध्यायः,—आचार्य्यः, दर्दुरकः,—तदाख्यः।

(२४३) सांवाहिका—सेविका, या पादादिमर्द्दनं करोति, सा, केरलिका—तन्नाम्नी कापि स्त्री। ["सांवाहिका" इत्यत्र "संवाहिका" इति पाठान्तरम्]। लासकः,—नर्त्तकः, स च असौ युवा—तरुणश्चेति, लासकयुवा, ताण्डविकः,—तदाख्यः। युवा इत्यादिना तुल्यवयस्त्वमुच्यते। आक्षिकः,—अक्षैः,—पाशकैर्दीव्यतीति

युवा (२४४) शिखण्डकः, नर्त्तकी हरिणिका, पाराशरी सुमतिः, क्षपणको वीरदेवः, कथको जयसेनः, शैवो वक्रघोणः, (२४५) मन्त्रसाधकः करालः, असुरविवरव्यसनी लोहिताक्षः, (२४६) धातुवादवित् विहङ्गमः, दार्दुरिको दामोदरः, ऐन्द्र-जालिकः चकोराक्षः, मस्करी ताम्रचूडः। स एतैश्च अन्यैश्च अनुगम्यमानो बालतया निघ्नताम् उपगतो (२४७) देशा-न्तरालोकनकौतुकाक्षिप्तहृदयः, सत्स्वपि पितृपितामहोपात्तेषु ब्राह्मणजनोचितेषु विभवेषु, सति च अविच्छिन्ने विद्याप्रसङ्गे

---

आक्षिकः,—द्यूतकरः, आखण्डलः,—तदाख्यः। कितवः—धूर्त्तः, भीमकः,—तन्नामा। शैलाली—स्वयं नर्त्तकः, स च असौ युवा चेति तथोक्तः, तरुणशैलूष इत्यर्थः।

(२४४) शिखण्डकः,—तदाख्यः। हरिणिका नाम नर्त्तकी, सुमतिर्नाम पाराशरी भिक्षुः, ("भिक्षुः परिव्राट् कर्मन्दी पाराशर्य्यपि मस्करी" इत्यमरः)। वीरदेवो नाम क्षपणकः। कथकः,—पुराणव्याख्याता, जयसेनः,—तदाख्यः। शैवः,—शिवभक्तः, वक्रघोणः,—तदाख्यः।

(२४५) मन्त्रसाधकः,—साधितमन्त्र इत्यर्थः, करालः,—तन्नामा। असुरविवर-व्यसनी—असुराणां विवरं—पातालमित्यर्थः; यद्वा,—असुराणां विवरं—रन्ध्रं, दोष इति यावत्, तस्मिन् व्यसनी—तज्ज्ञानानुशीलकः इत्यर्थः, लोहिताक्षः,—तदाख्यः।

(२४६) धातुवादवित्—धातवः,—स्वर्णरजतादयः, तेषाम्। उद्यते अनेनेति वादः,—गुणः, तं वेत्तीति तथोक्तः, रसायनवित् इत्यर्थः विहङ्गमः,—तदाख्यः। दार्दुरिकः,—वाद्यवादकभेदः, यद्वा,—दर्दुराः,—भेकाः, तान् वेत्तीति दार्दुरिकः, भेकगुणागुणवेत्ता इत्यर्थः, दामोदरः,—तदाख्यः। ऐन्द्रजालिकः,—इन्द्रजालविद्यावित्, चकोराक्षः,—तन्नामा। मस्करी—परिव्राट्, सन्न्यासी इत्यर्थः, ("भिक्षुः परिव्राट् कर्मन्दी पाराशर्य्यपि मस्करी" इत्यमरः)। ताम्रचूडः,—तदाख्यः। सः,—बाणः, निघ्नताम्—अधीनतां, वश्यतामित्यर्थः, ("अधीनो निघ्न आयत्त" इत्यमरः)। एतैः पूर्वोक्तैरनुसृतः सन्नपि स्वस्य च यवीयस्त्वात् ज्यायसां तेषां तेषां सहायकानामुपरि भक्त्यैव तथात्वमुपगतवान् इति भावः।

(२४७) देशान्तरेति।—देशान्तराणां—भिन्नदेशानाम्, आलोकने—दर्शने, यत् कौतुकम्—औत्सुक्यं, तेन आक्षिप्तम्—आकृष्टं, न पुनर्धनलिप्सयेति भावः, हृदयं यस्य तथोक्तः। सत्सु अपि—विद्यमानेषु अपि। पितृपितामहोपात्तेषु—पैतृकेषु

गृहात् निरगात्; अगाच्च निरवग्रहो ग्रहवानिव नवयौवनेन स्वैरिणा मनसा महताम् उपहासास्पदताम्।

अथ (२४८) शनैः शनैः अत्युदारव्यवहृतिमनोहृन्ति बृहन्ति राजकुलानि वीक्ष्यमाणः, निरवद्यविद्याविद्योतितानि च गुरुकुलानि सेवमानः, (२४९) महार्हालापगम्भीरगुणवद्गोष्ठीश्च उपतिष्ठमानः, (२५०) स्वभावगम्भीरधीधनानि विदग्धमण्डलानि च गाहमानः, पुनरपि तामेव वैपश्चितीम् आत्मवंशोचितां प्रकृतिम् अभजत्। महतश्च कालात् तामेव भूयो वात्स्यायनवंशाश्रयाम् आत्मनो जन्मभुवं ब्राह्मणाधिवासम्

---

इति यावत्, विभवेषु—सम्पत्सु। विद्याप्रसङ्गे—विद्याऽनुशीलने। अगाच्च—प्रापच्च।

ग्रह,—स्वतन्त्रः, स्वेच्छाचारी इत्यर्थः, ("स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रह." इत्यमरः)। ग्रहवान् इव—भूताविष्ट इवेत्यर्थ.। स्वैरिणा—स्वेच्छाचारवता। उपहासास्पदता—परिहासपात्रताम्, अवज्ञेयतामिति यावत्। [ "उपहासास्पदताम्" इत्यत्र "उपहास्यताम्" इति पाठेऽपि समान एवार्थ. ]।

(२४८) शनै शनै,—क्रमेण। अत्युदारेति।—अत्युदारा—अतिमहती, या व्यवहृति,—व्यवहार, आचार इति यावत्, तया मनो हरन्ति यानि तद्वन्ति। बृहन्ति—महान्ति। वीक्षमाण,—परिपश्यन्। निरवद्येति—निरवद्याभिः,—निर्दोषाभि, अनिन्दनीयाभिरित्यर्थ., विद्याभिः विद्योतितानि—उज्ज्वलता गतानि।

(२४९) महार्हेति।—महार्हा.,—महामूल्याः, मधुरा इत्यर्थ., आलापाः,—वचनानि, तै गम्भीरा.,—प्रदीप्ता, इतरजनदुष्प्रवेशा इत्य ˝ वा, गुणवत्यः,—विविधगुणशालिन्यः, गोष्ठा,—समाजः ता.। उपतिष्ठमानः,—सेवमान., अत उपपूर्व्वत्वात् 'तिष्ठते. स˜करणार्थत्वेनात्मनेपदम्।

(२५०) स्वभावेति।—स्वभावेन—प्रकृत्या, गम्भीराणि—धीराणि, अचञ्चलानीत्यर्थ, धीधनानि—प्रज्ञाधनानि येषा तानि, विदग्धमण्डलानि—विद्वज्जनान्। गाहमानः,—समाश्रयन्। ("गाहमान" इत्यनेन आत्मन तेजस्वित्व प्रकटीकृतम्)। वैपश्चिती—विपश्चित्—विद्वान्, तस्य इय वैपश्चिती ता, विद्वज्जनोचितामित्य ;, ("विद्वान् विपश्चिद् दोषज्ञ. इत्यमर) प्रकृति—स्वभावम्। वात्स्यायनवंशाश्रया—वात्स्यायनवंशसम्भनैः समलङ्कृताम्। ब्राह्मणाधिवास—विप्र˜षितपुरम्।

अगमत्; तत्र च (२५१) चिरदर्शनात् अभिनवीभूतस्नेहसद्भावैः (२५२) ससम्भ्रमप्रकटितज्ञातेयैः आप्तैः उत्सवदिवस इव आनन्दिताभिगमनो बालमित्रमण्डलस्य मध्यगतो मोक्षसुखम् इव अन्वभवत्।

इति श्रीमद् बाणभट्टविरचिते श्रीहर्षचरिते वात्स्यायनवंशवर्णनं नाम प्रथमः उच्छ्वासः॥१॥

(२५१) चिरदर्शनात्—बहुकालानन्तरदर्शनात्। अभिनवीभूतेति।—अभिनवीभूतः,—नूतनतां प्राप्तः, स्नेहसद्भावः,—तस्मिन् प्रणयातिरेक इत्यर्थः येषां तथोक्तैः।

(२५२) ससम्भ्रमेति —ससम्भ्रम—सगौरवं यथा तथा, प्रकटितं ज्ञातेयं—ज्ञातित्व, स्वजनोचितव्यवहारमित्यर्थः यैः तादृशैः। ["ससम्भ्रमप्रकटितज्ञातेयैः" इत्यत्र "ससंस्तवप्रकटितज्ञातेयैः" इति पाठे—ससंस्तवं—सपरिचय, परिचयेन सह इत्यर्थः, परिचय प्राप्येति यावत्, प्रकटित ज्ञातेयं यै तैः। केचित्तु,—"ससंस्तवं—सादरम्" इति व्याख्यानयन्ति]। आप्तैः,—आत्मीयैः; अन्यत्र,—"रजस्तमोभ्यां निर्मुक्ताः तपोज्ञानबलेन ये। येषां त्रैकालममल ज्ञानमव्याहतं सदा॥ आप्ताः शिष्टाः विबुद्धास्ते—" इत्युक्तलक्षणैः विधूतरजस्तमोगुणैः त्रिकालज्ञैः योगिभिरित्यर्थः। बालमित्रमण्डलस्य—शैशवसखसमूहस्य; अन्यत्र,—बाल इव, निस्तेजस्त्वादिति भावः, यो मित्रः,—नवोदितः सूर्य्य इत्यर्थः, तस्य मण्डलं—विम्बं तस्य, उक्तञ्च,—"तपस्यन्तं रविं दृष्ट्वा निस्तेजा जायते रविः। मोक्षमार्गप्रयत्नेऽस्तु तेजो नैवास्य विद्यते॥" इति। मोक्षसुखमिव—निर्व्वाणलाभजनितानन्दसाक्षात्कारः इव, आत्यन्तिकदुःखनिवृत्तिरिव वा, मोक्षसुखमपि अणिमाद्यैश्वर्य्यमहिम्ना योगिभिः सूर्य्यबिम्बगतैरनुभूयते। आख्यायिकासु कविभिर्निजवंशवर्णनं यथा कानने वंशः तथा वर्ण्यते, एतत्तु वात्स्यायनवंशवर्णनं तथैवेति वेदितव्यम्। स्वस्य च सकलकलाऽभिज्ञत्वप्रदर्शनेन वैदग्ध्यातिशय्यं ख्यापितमिति, राज्ञः हर्षस्य चरिते वर्णयितव्ये, को हि नामास्य कविः इति प्रश्ने, तदुपपादकविषयिण्याः जिज्ञासायाः अवतारणात् प्रसङ्गसङ्गत्या एतदपि प्रस्तुत वेदितव्यम्।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोध-विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चामलाख्यायां श्रीहर्षचरितव्याख्यायां प्रथम उच्छ्वासः॥१॥

# द्वितीयः उच्छ्वासः ।

अतिगम्भीरे भूपे कूप इव जनस्य निरवतारस्य ।
दधति समीहितसिद्धिं गुणवन्तः पार्थिवा घटकाः ॥ १ ॥
रागिणि नलिने लक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम् ।
अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ २ ॥

---

अनुकूलं शोभनमुपायमधिगम्य जडप्राया: पुरुषा अपि समीहितं साधयितुमीशते इत्यभिप्रेत्य सुसहायकवलात् अचिरादेव सम्राजः श्रीहर्षात् स्वस्य अभीप्सितलाभमाशंसते, अतिगम्भीरेति ।—अतिगम्भीरे—अतिशयेन गम्भीरे—क्रोधहर्षादिभि: धैर्य्यच्युत्यभाववति इत्यर्थ:, यस्य क्रोधादिजा विकृतिरन्यै: तदाकारेङ्गितादिनाऽपि न ज्ञायते, स गम्भीरः, उक्तञ्च,—“यस्य प्रसादादाकारात् क्रोधहर्षभयादयः। भावस्था नोपलभ्यन्ते तद्गाम्भीर्य्यमुदाहृतम् ॥” इति । अन्यत्र,—दुरवगाहत्व तद्वतीत्यर्थः, भूपे—राजनि, कूपे इव निरवतारस्य—निः,—नास्ति, अवतारः,—अवतरणं, सुसहायकादिप्रवेशोपाय. इत्यर्थ. यस्य तथोक्तस्य, दुरधिगम्यस्येति यावत्, पक्षे,—सोपानादिसहायरहितस्य इत्यर्थः, जनस्य—लोकस्य, गुणवन्तः,—विद्याविनयशालिनः, पक्षे,—रज्जुविशिष्टाश्च, पार्थिवा,—राजान एव, घटका:,—योजका, सहायभूताः सन्तः इति यावत्, अन्यत्र,—पार्थिवा,—पृथिवीविकारा., मृन्मया इति यावत्, घटा एव इति घटका., कलसा:, समीहितसिद्धि—राजसद्मनि आत्मनः प्रवेशरूपमभिलषितसाफल्यमित्यर्थ:, पक्षे,—जलोत्तोलनरूपमिष्टसिद्धिञ्च, दधति—सम्पादयन्ति । अवतरणिकाद्यभावेनातिदुरवगाहात् अतिगभीरादपि कूपात् रज्जुगृहीतेन कुम्भेन जलप्राप्तिरिव, अतिगम्भीरतयाऽतिदुरधिगम्यादपि नृपतेः गुणवत्सहायसाहचर्य्येण जनस्य इष्टसिद्धिर्भवतीति निष्कर्षः । [ अनेन उक्तप्रकारे राजनि गुणवान् कृष्ण एव सहायभूत. वाणस्य समीहितसिद्धिं विधास्यति इति सूचितम् ] । अत्र भू कूपस्य चोभयोस्साम्यप्रतीतेरुपमाऽलङ्कारः, स च अवतारगुणघटकादिशब्दाना श्लिष्टतया श्लेषेणानुप्राणित इत्यवधेयम् । आर्य्या वृत्तम् ॥ १ ॥

परोपकारप्रणयिन. अनुरक्तैकप्रवणा. महीयासः खलु स्वगुणगणगरिम्णा आश्रितगुणदोषान् प्रागविचार्य्यैव तेषु सौभाग्यलक्ष्मीसमाधाने दृढ़व्रता भवन्तीति प्रस्तुतमर्थं

(१) अथ तत्र अनवरताध्ययन-ध्वनि-मुखराणि, भस्मपुण्ड्रक-पाण्डुललाटैः (२) कपिलशिखाजाल-जटिलैः कृशानुभिः इव क्रतुलोभागतैः बटुभिः अध्यास्यमानानि, (३) सेकसुकुमारसोमकेदारिकाहरितायमानप्रघणानि,

---

तारयितुमप्रस्तुत दिवसस्य नलिनेषु दिनकरलक्ष्मीयोगम् उपन्यस्य अर्थान्तरन्यासेन समाधत्ते, रागिणीति।—दिवसः,—दिवाभाग इत्यर्थः, रागिणि—लोहितरागवति, अनुरक्ते च, नलिने—कमले, दिनकरप्रभवां—भास्करप्रभाजनितां, लक्ष्मी—श्रियं, शोभामिति यावत्; पत्ते,—सम्पदं, निदधाति—अर्पयति; तथा हि,—न अपेक्षितौ —न दृष्टौ, न विचारितावित्यर्थः, गुणदोषौ यत्र तथाभूत., परोपकारः,—परहित-साधनमित्यर्थः, सतां— साधूनां, व्यसनं—व्रतमिति यावत्। साधवो गुणदोषान् न विचारयन्ति, केवल परेषाम् उपकारव्रतमेव कर्त्तव्यतया समाश्रयन्ति। [एतेन परोपकारी कृष्णः तथाविधे वाणे राजप्रभवां सम्पदम् आधास्यति इति प्रकटितम्; तथा च श्लोकद्वयेनानेन वाणस्य गुणवत्तया राजसाहाय्यलाभः परेषां साधूनां तत्कृतावनुरागश्च सूचितः]। अत्र पूर्वार्द्धे अप्रस्तुतस्य नलिने दिवसकृतलक्ष्मीनिधानस्योपन्यासेन कवौ वाणभट्टे कृष्णकर्तायाः सम्राजः श्रीहर्षस्य सभापण्डितसौभाग्यलक्ष्म्याः निधान-रूप प्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः; तथा द्वितीयार्द्धगतेन सामान्येन प्रथमार्द्धगतस्य विशेषार्थस्य सोपपत्तिकत्वकरणात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तर-न्यासोऽलङ्कार. इत्यनयोरङ्गाङ्गिभावेन सङ्करः। आर्या वृत्तम्॥ २॥

(१) अथेत्यादि।—तत्र—ब्राह्मणाधिवासे। अनवरतेति।—अनवरतानाम् —अविश्रान्तानाम्, अध्ययनानां ध्वनिभिः मुखराणि—शब्दायमानानि, उत्तरस्थितेन "वान्धवानां भवनानि" इत्यनेनान्वयः। भस्मेति।—भस्मपुण्ड्रकेण—भस्मरचित-तिलकेन, पाण्डूनि—धवलानि, ललाटानि येषां तैः, ["पाण्डुललाटैः" इत्यत्र "पाण्डुरललाटैः" इति पाठान्तरम्]। उत्तरत्र तेन "बटुभिः" इत्यनेनान्वयः।

(२) कपिलेति।—कपिलैः,—पिङ्गलैः, शिखाजालैः,—चूडानिचयैः, अर्चिः-सङ्घैश्च जटिलाः,—जटावन्त., युक्ताश्च, तैः। ["शिखाजाल" इत्यत्र "शिखानाल" इति पाठान्तरन्तु न समीचीनम्]। कृशानुभिः—अग्निभिरिव। क्रतुलोभात्—यज्ञलोभात्, आगतैः—उपस्थितैः। बटुभिः, ब्रह्मचारिभिः, माणवकैर्वा। अध्यास्य-मानानि—अधिष्ठीयमानानि।

(३) सेकेति—सेकेन—जलसेचनेन, सुकुमारा—स्निग्धा, सोमकेदारिका—

( ४ ) कृष्णाजिनविकीर्णशुष्यत्पुरोडाशीयश्यामाकतण्डुलानि, ( ५ ) वालिकाविकीर्य्यमाणनीवारबलीनि, ( ६ ) शुचिशिष्य-शतानीयमानहरितकुशपूलीपलाशसमिन्धि, ( ७ ) इन्धन-गोमयपिण्डकूटसङ्कटानि, ( ८ ) आमिक्षीयक्षीरक्षारिणीनाम् अग्निहोत्र-धेनूनां खुर-वलयैः ( ९ ) विलिखिताजिर-वित-र्दिकानि, ( १० ) कामण्डलव्यमृत्पिण्डमर्दनव्यग्रयतिजनानि.

---

यज्ञार्थं रोपितं सोमलताया: स्वल्पं चैत्र, प्रघणेषु स्वल्पत्वेनस्यैव सम्भवात्; तथा हरि-तायमाना:,—श्यामायमाना प्रघणा:, अलिन्द्रा येषा तानि।

(४) कृष्णाजिनेति।—कृष्णाजिनेषु—कृष्णसारमृगचर्मसु, विकीर्णा,—विक्षिप्ता: शुष्यन्त,—शोष गच्छन्त:, पुरोडाशीया.—हवनीयपिष्टकसाधनभूता:, श्यामाक-तण्डुला:,—श्यामाका:,—तृणविशेषा: तदुत्पन्ना: तण्डुला इत्यर्थ, येषु तानि।

( ५ ) वालिकेति।—वालिकाभि:,—कन्याभि., विकी माणा:,—विक्षिप्य-माणा:, नीवारा.,—तृणधान्यभेदा एव, बलय:,—पूजाद्रव्याणि येषु तानि।

( ६ ) शुचीति।—शुचिभि.,—पवित्रै., शिष्याणा—छात्रणा, शतै: आनीय-माना:,—आक्रियमाणा:, हरिता:,—श्यामा, कुशपूल्य:,—दर्भनिचया:, पलाश-समिध:,—वृक्षविशेषकाष्ठानि च येषु तानि।

( ७ ) इन्धनेति।—इन्धनाना—काष्ठानां, गोमयपिण्डानाञ्च कूटै,—राशिभि: सङ्कटानि - आकीर्णानि।

( ८ ) आमिक्षीयेति।—आमिक्षा—"आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधि-योगत:" इत्युक्तलक्षणं घनीभूतं पय "छाना" इति बङ्गे प्रसिद्धा, तथा च श्रुति.,—"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति" इति, तस्यै हितानि आमि-क्षीयाणि, यानि क्षीराणि, तानि क्षरन्तीति तासाम्। अग्निहोत्रधेनूनाम् अग्निहोत्र-यज्ञार्थं पालिताना गवाम्। खुरवलयै.,—खुरसमूहै।

( ९ ) विलिखितेति।—विलिखिता—कुट्टिता, अजिरेषु—अङ्गनभूमिषु, वितर्दिका:—वेदिका येषा तानि, ( "स्याद्वितर्दिस्तु वेदिका" इत्यमर: )।

( १० ) कामण्डलव्येति।—कमण्डलु—मुनीना जलपात्रभेद:, तस्मै इदं कामण्डलव्य, यत् मृत्पिण्ड—कमण्डलुशोधनार्थं मृत्तिकाचय इत्यर्थ तेन, मर्दने—मार्जने, कमण्डलोरिति भाव, यद्वा,—कामण्डलव्य यत् मृत्पिण्डं—कमण्डलुनिर्माणोप-योगिमृत्तिकाराशि:, तेषां मर्दने—पेषणे, यतीनामभिनिवेशनात्, कमण्डलावादरात्-

(११) वैतानवेदिशङ्क्व्यानाम औडुम्बरीणां शाखानां राशिभिः (१२) पवित्रितपर्य्यन्तानि, वैश्वदेवपिण्डपङ्क्तिपाण्डुरित-प्रदेशानि, (१३) हविर्धूमधूसरिताङ्गनविटपिकिसलयानि, वत्सीयबालकलालितललत्तरलतर्णकानि, (१४) क्रीड़त्कृष्ण-सारच्छागशावकप्रकटितपशुबन्धप्रबन्धनानि (१५) शुक-शारिकारब्धाध्ययनदीयमानोपाध्यायविश्रान्तिसुखानि, साक्षात्

---

शयाच स्वयं निर्म्माणं बोध्यम्; व्यग्रः,—तत्परः, यतिजनः,—सन्न्यासिवर्गः येषु तानि।

(११) वैतानेति।—वितानः,—यज्ञः, तस्मै हिता वैतानी—यज्ञीयाग्निभूः, तथाभूता या वेदिः वैतानवेदिः, तत्र शङ्क्व्याना—शङ्कवः,—कीलकाः, तेभ्यो हिताना शङ्कुसम्पादिनीनामिति यावत्, औडुम्बरीणां——यज्ञफलवृक्षसम्बन्धिनीनां, शाखानां—विटपानाम्।

(१२) पवित्रेति।—पवित्रितानि—पवित्रीकृतानि, पर्य्यन्तानि—प्रान्तभागा येषां तानि। वैश्वदेवेति।—वैश्वदेवानि—विश्वेभ्यो देवेभ्यो देयानि, यानि पिण्डानि—अन्नानि, तेषां पङ्क्तिभिः, राजिभिः, पाण्डुरिताः, धवलिताः, प्रदेशा येषु तानि।

(१३) हविरिति।—हविर्धूमैः—यज्ञधूमैः इत्यर्थः, धूसरिताः,—धूसरवर्णी-कृताः, अङ्गनविटपिनाम्—अजिरतरूणा, किसलयाः,—पल्लवाः येषु तानि। वत्सीयेति।—वत्सीयाः—वत्सेभ्यो हिताः, वत्सपरिचर्य्याकुशला इत्यर्थः, ये बालकाः,—मुनिशिशवः, तैः लालिताः,—यत्नेन पोषिताः, ललन्तः,—लम्फन्तः, तरलाः,—चञ्चलाः, तर्णकाः,—सद्योजाता वत्साः येषु तानि।

(१४) क्रीडदिति।—क्रीडता—चरता, कृष्णसाराणां—तदाख्यमृगाणामिति केचित्, अन्ये तु "कृष्णशार" इति छागविशेषणम्, "लोहितसारङ्गः कृष्णसारङ्गो वा" इत्युक्तेः, अत्र सारङ्गशब्दः शबले वर्त्तते, कृष्णशाराणां—कृष्णवर्णानामित्यर्थः, छागानां शावकैः—शिशुभिः, प्रकटितं—प्रकाशितं, पशुबन्धः,—पशवो बध्यन्ते यत्र तादृशो यज्ञः, तस्य प्रबन्धनं—प्रबन्धः, सातत्यमित्यर्थः, येषु तानि। [ "प्रबन्धनानि" इत्यत्र "प्रबन्धानि" इति पाठोऽपि स एवार्थः ]।

(१५) शुकेति।—शुकशारिकाभिः आरब्धेन—प्रक्रान्तेन, अध्ययनेन—वेदा-दीना पाठेन, दीयमानं—सम्पाद्यमानम्, उपाध्यायानाम्—आचार्य्याणां, विश्रान्ति-

त्रयीतपोवनानि इव चिरदृष्टानां बान्धवानां प्रीयमाणो भ्रमन् भवनानि सुखम् अतिष्ठत्।

ततस्तस्य च (१६) अस्य कदाचित् कुसुमसमययुगम् उपसंहरन् अजृम्भत ग्रीष्माभिधानः (१७) सम्फुल्लमल्लिका-धवलाट्टहासो महाकालः। प्रत्यग्रनिर्जितस्य अस्तम् उपगत-वतो वस ामन्तस्य (१८) बालापत्येषु इव पयःपायिषु नवोद्यानेषु दर्शितस्नेहो मृदुः अभूत्। (१९) अभिनवोदितश्च सर्व्वस्यां पृथिव्यां सकलकुसुमबन्धनमोचम् अकरोत् प्रतपन्

सुखं येषु तानि। साक्षात्—मूर्त्तिमन्तीत्यर्थः, त्रयीतपोवनानीव—त्रयी—ऋग्यजुः-साम्ना वितयं, तस्याः तपोवनानीव।

(१६) अस्य—बाणस्य, कुसुमसमयस्य—वसन्तकालस्य, युगं—युग्मं, मास-द्वयमित्यर्थः, चैत्रवैशाखमासद्वयात्मकं वसन्तकालमिति यावत्, उपसंहरन्—निर-स्यन्। अजृम्भत—प्रादुरभूत्।

(१७) सम्फुल्लेति।—सम्फुल्ला—विकसिता ; मल्लिका एव धवला',—स्वच्छा', अट्टहासा',—हासविशेषा यस्य तथोक्त'। महाकालः,—ग्रीष्म', भैरवश्च। प्रत्यग्र-निर्जितस्य—अभिनवविजितस्य। अस्तम् उपगतवतः,—क्षयं प्राप्तवतः। वसन्त एव सामन्तः,—अधीनस्थनृपविशेष' तस्य वसन्तसामन्तस्य।

(१८) बालापत्येष्विव—शिशुतनयेष्विव। पय पायिषु'—जलपानयोग्येषु, जलैः सेवनार्हेष्विति यावत, अन्यत्र,—दुग्धपायिषु,स्तनन्धयेष्विति यावत्। नवोद्यानेषु नूतनेषु उद्यानेषु ; अन्यत्र,—नवम्—अभिनवम् उदयानम्—उद्गमनं येषा तेषु, प्राधम्येन जगात आगमनप्रवृत्तेषु इत्यर्थः। दर्शितस्नेह',—दर्शितः,—विधापितः, स्नेहः,—आर्द्रता, सरसता इत्यर्थ येन सः, अन्यच,—दर्शित स्नेह',—प्रीतिः येन सः, ("दर्शितस्नेह." इत्यनेन अस्य विजिगीषुव्यवहार आरोपितः, विजितस्य पुन' स्थापनं युक्तम्)। मृदुः,—अतीक्ष्ण' ; अन्यत्र,—सदय'। ग्रीष्मे नवोद्यानानि जलै. सिच्यन्ते इति तेषु ग्रीष्मस्य मृदुत्वमिति भावः।

(१९) अभिनवोदित',—नूतनप्रवृत्तः। सकलेति।—सकलाना कुसुमानां —वासन्तिकानामिति भाव', बन्धनमोचं—वन्तस्खलनम्। नवाभिषिक्तो हि राजा आनन्दातिशयात् कारासु पूर्वनिबद्धानां बन्धनमोचं करोति, उक्तञ्च,—"यौव-राज्याभिषेके वा परचक्रावरोपणे। पुत्रजन्मनि वा मोचो बन्धनस्य विधीयते॥"

उष्णसमयः। स्वयम् (२०) ऋतुराजस्य अभिषेकार्द्राः चामर-कलापा इव अरुद्ध्यन्त कामिनीनां चिकुरचयाः कुसुमायुधेन। हिमदग्धसकलकमलिनीकोपेन इव (२१) हिमालयाभिमुखीं यात्रां अधात् अंशुमाली।

अथ (२२) ललाटन्तपे तपति तपने लिखितललाटिका-पुण्ड्रकैः (२३) अलकचीरचीवरसवीतैः (२४) स्वेदोदविन्दु-मुक्ताक्षवलयवाहिभिः दिनकराराधननियमा इव अरुद्ध्यन्त

---

यति। प्रतपन्—प्रकर्षेण सन्ताप जनयन्; अन्यत्र,—शत्रुहृदयेषु प्रतापमनुसारयन्। स्वयमिति औदरातिशयप्रदर्शनार्थं बोध्यम्।

(२०) ऋतुराजस्य—ग्रीष्मस्य। अभिषेकार्द्राः,—स्नानार्द्राः। चामरपक्षे,—माङ्गलिकोदकसिञ्चनसम्बन्धादार्द्रत्वम्। अरुद्ध्यन्त—धृता इत्यर्थः। चिकुरचयाः,—केशकलापाः, कुसुमायुधेन—कामेन; ग्रीष्मे स्नानार्द्रतया असंयमनात् अति-सुन्दरत्वेन प्रतीयमानाः तथाविधाः कामिनीना केशाः विशेषेण कामम् उद्दीपय-न्तीति भावः। उक्तञ्च कालिदासेन,—"स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायन्तन-मल्लिकेषु। कामी वसन्तात्ययमन्दवी ': केशेषु लेभे रतिसङ्गनानाम्॥" इति।

(२१) हिमालयाभिमुखी—हिमालयः,—उत्तरदिशि स्थितः स्वनामप्रसिद्धः पर्व्वत-विशेषः, तदभिमुखी ता, यात्रां—गतिम्, उत्तरायणम् इत्यर्थः, अधात्—अकरोत् इत्यर्थः। हिमेन निजकान्ताना कमलिनीनां दग्धीभूतत्वात् कोपेन तत्प्रतिकारार्थं हिमालयपदग्रहणं ज्ञेयम्। ["अधात्" इत्यत्र "अकरोत्" "अदात्" इति पाठान्तरद्वयम्]। अंशून्—किरणान्, मलति—धारयति इति अंशुमाली—सूर्य्यः; एतेनास्य हिमपरिभवनशीलत्वं प्रकटीकृतम्।

(२२) ललाट पे—ललाटतापिनि, खरतरे इत्यर्थः, तपने—सूर्य्ये, तपति—ताप वितरति सति। लिखितेति।—लिखितललाटिकापुण्ड्रकैः,—लिखितं—चित्रितं, हरिचन्दनेन इति भावः, [ललाटे अलङ्कारः ललाटिका "कर्णललाटात् कनलङ्कारे" (४।३।६५ पा०) इति कन् ततः स्त्रियामापि कृते कापि परे टस्याकारस्य इत्वम्] ललाटिकापुण्ड्रकं—ललाटभूषण तिलकभेदः येषु तथाविधैः।

(२३) अलकेति।—अलकाः,—चूर्णकुन्तला एव, चीरचीवराणि—वस्त्र-खण्डानि, तैः संवीताः,—आवृताः तैः।

(२४) स्वेदेति।—स्वेदोदविन्दवः,—घर्म्मजलबिन्दव एव, मुक्ताक्षवलयाः,—

ललनाललाटेन्दुभिः। (२५) चन्दनधूसराभिः असूर्य्यम्पश्याभिः कुमुदिनीभिः इव दिवसम् असुप्यत सुन्दरीभिः। (२६) निद्राऽलसा रत्नालोकम् अपि न असहन्त दृशः; किमुत जरठम् आतपम्। (२७) अशिशिरसमयेन चक्रवाकमिथुनाभिनन्दिताः सरित इव तनिमानम् अनीयन्त सोड़पाः शर्व्वर्य्यः। (२८) अभिनवपटुपाटलामोदसुरभिपरिमलं न

मुक्तारचितजपमालिकाः, तान् वहन्तीति तथोक्ताः, ललनानां—कामिनीनां, ललाटा एव इन्दवः—चन्द्राः तैः, दिनकरस्य—सूर्य्यस्य, आराधनम्—उपासनं, तस्य नियमा इव अरच्यन्त। चीवरपरिधानम् अक्षवलयधारणञ्च सूर्य्योपासनव्रताङ्गमिति तथोत्प्रेक्षितम्।

(२५) चन्दनेति।—चन्दनेन धूसराः,—धवलाः, चन्दनाक्तदेहा इत्यर्थः; अन्यच,—चन्दनवत् धूसराः,—धवलकान्तयः ताभिः। असूर्य्येति।—सूर्य्यं न पश्यन्तीति तथोक्ताभि, सूर्य्योत्तापाभिघ्नित्वतया अतिनिभृतस्थानस्थिताभिरिति भावः; अन्यत,—दिनोदये स्वभावत एव मुकुलिताः। असुप्यत—सुप्तं, मुकुलितञ्च, [दिवसमिति अत्यन्तसंयोगे द्वितीया]। सुन्दरीभिः,—कामिनीभिः।

(२६) निद्रेति।—निद्रालसाः,—निद्रया आलस्यपरतन्त्राः, मुकुलीभावमापन्ना इत्यर्थः, दृशः,—चक्षूंषि, रत्नानाम्—अनुग्राणामिति भावः, आलोकम्—उद्योतं, प्रभामित्यर्थः, न असहन्त; जरठं—प्रवृद्धम्, अत्युग्रमित्यर्थः, आतपं—सौरसन्तापं, किमुत इत्यन्वयः।

(२७) अशिशिरसमयेन—ग्रीष्मकालेन चक्रवाकमिथुनाभिनन्दिताः,—चक्रवाकमिथुने अभिनन्दिताः,—समादृताः, सरित इव—नद्य इव, तनिमानं—कृशताम्। ["अनीयन्त" इत्यत्र "आनीयन्त" इति पाठान्तरम्]। सो डुपाः—उडुपः,—तारापतिः, चन्द्र इत्यर्थः, तेन सह वर्त्तमानाः; अन्यत,—उडुपैः,—प्लवैः, भेलैरित्यर्थः, सह वर्त्तमाना इत्यर्थः, शर्व्वर्य्यः,—रजन्यः। ग्रीष्मे रात्रेर्मानम् अल्पताम् एति, तेन च रात्रिविरहितानां चक्रवाकाणाम् आनन्द इति भावः; सरितश्च तेषां जीविकादायिन्य इति तदभिनन्दनम्।

(२८) अभिनवेति।—अभिनवेन—नूतनेन, पटुना—प्रसरता, पाटलामोदेन—पाटलापुष्पगन्धेन, ("पारुल" इति वङ्गभाषा) सुरभिः,—सौरभवान्, परिमलो

केवलं जलं, जनस्य पवनस्य पवनम् अपि पातुम् अभूत् अभिलाषो दिवसकरसन्तापात्।

क्रमेण च (२८) खरखरमयूखे, खण्डिततडिच्छैशवे, शुष्यत्सरसि, (३०) सीदत्स्रोतसि, मन्दनिर्झरे, (३१) झिल्लीका झाङ्कारिणि, (३२) कातरकपोतकूजितानुबन्धवधिरितविश्वे, विश्वसत्पतत्त्रिणि, (३३) करीषङ्कषमरुति, विरलवीरुधि,

---

यस्य तादृशम्। पवनस्य—वायोः, पवनमपि—गन्धवहमपि, तादृशसौरभ वहन्तं पवनमपि इत्यर्थः। ["पवनस्य पवनम्" इत्यत्र "पवनम्" इति पाठान्तरम्। एष च पाठ सुबोधतया समीचीनः प्रतिभाति]। पातुमभिलाषोऽभूत् इत्यनुषङ्गः।

(२९) खरखरमयूखे—खरः,—तीक्ष्णः, खरमयूखः,—उष्णरश्मिः, सूर्य्य इत्यर्थः यस्मिन् तथोक्ते, निदाघकाले इति उत्तरस्थितेनान्वयः। ["खरखरमयूखे" इत्यत्र "खरखगमयूखे" इति पाठे—खे—आकाशे, गच्छति इति खगः,—सूर्य्यः, ("खगः सूर्य्ये ग्रहे देवे मार्गणे च विहङ्गमे" इति मेदिनी) खरः खगस्य—मयूखः यत्र तादृशे]। खण्डितेति।—खण्डितं—निर्जितं, तडिता—विद्युता, शैशवं—बाल्यं, शिशुतानिबन्धनं चापल्यमिति भाः, येन तथाभूते, विद्युदालोकादपि अतितीक्ष्णालोकशालिनीति भावः। ["खण्डिततडिच्छैशवे" इत्यत्र "खण्डितशैशवे" इति पाठे—खण्डितम्—अपगत,—शैशवं—बालभावः, प्रथमावस्था इत्यर्थः, यस्य तथाभूते, प्रवर्द्धमाने इत्यर्थः]। शुष्यदिति।—शुष्यन्ति—शोषं गच्छन्ति—सरांसि यस्मिन् तथोक्ते।

(३०) सीददिति।—सीदन्ति—अवसादं गच्छन्ति, स्रोतांसि यस्मिन् तादृशे। मन्दनिर्झरे—मन्दाः,—स्वल्पाः,—निर्झराः,—प्रस्रवणानि यत्र तथोक्ते।

(३१) झिल्लीकेति।—झिल्लीकाः,—क्षुद्राः कीटविशेषाः, तासां झाङ्कारो विद्यतेऽस्मिन्निति तथोक्ते, तथाविधे समये निभृतस्थिता झिल्लीरवरूपं झाङ्कारं कुर्वन्तीति प्रसिद्धिः।

(३२) कातरेति।—कातराणां ग्रीष्मार्त्तानामिति यावत्, कपोतानां कूजितानुबन्धेन-कूजनसातत्येन, वधिरितं—वधिरीकृतं, विश्वं—जगत्, येन तथोक्ते। कपोता खलु अतीव मेदोमयत्वात् नितान्त ग्रीष्मासहा, अत एव पतत्त्रित्वेऽपि तस्य पृथक्त्वेन ग्रहणम्। पतत्त्रित्वाभिप्रायेण तु श्वासस्यैव औचित्यं बोध्यं, तेषां तादृशपीडाभावात्। वि-श्वसत्पतत्त्रिणि—विशेषेण श्वसन्तः,—क्लान्ततयेति भावः पतत्त्रिणः,—पक्षिणः, कपोतेभ्योऽन्ये इति भावः, यस्मिन् तथोक्ते।

(३३) करीषङ्कषेति।—करीषाणि—गोमयानि, कषन्ति—शोषयन्तीति तादृशाः

( ३४ ) रुधिर-कुतूहल-केशरिकिशोरक-लिह्यमानकठोर-धातकीस्तबके, ( ३५ ) ताम्यत्स्तम्बेरमयूथ-वमथु-तिम्यन्महा-महीधरनितम्बे, ( ३६ ) दूयमानद्विरददीनदानाश्यानश्यामिका-लीन-मूकमधुलिहि, ( ३७ ) लोहितायमान-मन्दार-सिन्दूरित-सीम्नि, ( ३८ ) सलिल-स्यन्दसन्दोह-सन्देह-मुह्यन्महामहिष-विषाणकोटि- विलिख्यमानस्फुटत्स्फटिकदृषदि,

---

मरुतः,—वायवः यस्मिन् तथोक्ते। विरलवीरुधि—विरलाः,—अल्पाः, वीरुधः,—लताः यत्र तादृशे।

( ३४ ) रुधिरेति।—रुधिरेषु, कुतूहलिनः,—लोलुपा इति यावत्, ये केशरिकिशोरकाः,—सिंहशिशवः, तैः। [ किशोरकशब्देन तृष्णासहिष्णुता, मौग्ध्यातिशयश्च द्योत्यते ]; लिह्यमानः,—आस्वाद्यमानः, रक्तधियेति भावः, कठोरः,—परिणतः, धातकीस्तबकः,—धातकीलतायाः पुष्पगुच्छः, ("धाइफुल" इति वङ्गभाषा) रक्तवर्ण इति भावः यस्मिन् तथोक्ते।

( ३५ ) ताम्यदिति।—ताम्यताम्—आतपतापेन क्लिश्यतामित्यर्थः, स्तम्बेरमयूथानाम्—हस्तिसङ्घानां, वमथुभिः,—उद्गारैः करशीकरैरिति यावत्, तिम्यन्तः,—आर्द्रीभवन्तः, महतां महीधराणां नितम्बाः,—कटकदेशाः यस्मिन् तथाभूते।

(३६) दूयमानेति।—दूयमानानाम्—ताम्यतां, द्विरदानां—गजानां, दीनस्य—क्षीणतां गतस्य, दानस्य—मदस्य, आश्याना—अप्रसरणधर्मकत्वात् ... कुम्भा, या श्यामिका—मदलेखासम्बन्धिनी श्यामवर्णरेखा, तस्यां लीनाः,—अतितर्षात् संसक्ताः, मूकाः,—आर्त्ततया निःशब्दाः, गुञ्जितरहिता इत्यर्थः, मधुलिहः,—भ्रमराः यस्मिन् तथोक्ते।

( ३७ ) लोहितायमानेति।—लोहितायमानैः,—अलोहिताः लोहिताः भवन्तः तैः, पुष्पविकासात् रक्तायमानैरित्यर्थः, मन्दारैः,—पारिजाताख्यतरुविशेषैः, ("मन्दारः पारिजातकः" इत्यमरः) सिन्दूरिताः,—सञ्जातसिन्दूराः, दत्तसिन्दूरा इवेत्यर्थः, सीमानः,—प्रान्तभागाः, ग्रामाणामिति शेषः, यस्मिन् तथोक्ते।

( ३८ ) सलिलेति।—सलिलानाम्—जलानां, स्यन्दाः,—स्रवाः, तेषां सन्दोहः,—समूहः, तस्य सन्देहेन—भ्रमेणेति यावत्, मुह्यद्भिः,—चित्तविकृतिं गच्छद्भिः महद्भिः महिषैः विषाणानाम्—शृङ्गाणां, कोटिभिः,—अग्रभागैः विलिख्यमानाः,—सङ्घृष्यमाणाः स्फुरन्त्यः सौरातपेन उद्भासमाना इत्यर्थः, स्फटिकदृषदः,—स्फटिक-

( ३९ ) घर्म्मघर्म्मरितगर्म्मुति, तप्तपांशुकुकूलकातरविकिरे, ( ४० ) विवरशरणशल्याविधि, ( ४१ ) तटार्ज्जुनकुररकूटज्वर-विवर्त्तमानोत्तानशफरशारपङ्कशेषपल्वलाम्भसि, ( ४२ ) दाव-जनितजगन्नीराजने, ( ४३ ) रजनीराजयक्ष्मणि, कठोरी-भवति निदाघकाले प्रतिदिशम् आढौकमाना इव जम्भरेषु

शिलाः यस्मिन् तथोक्ते। ["स्फटिकदृषदि" इत्यत्र "स्फाटिकदृषदि" इति पाठे,—स्फटिकमणिमयशिला यस्मिन् तथोक्ते इत्यर्थ. ]।

( ३९ ) घर्मेति।—घर्म्मेण—उष्मणा, मर्म्मरिताः,—शुष्कत्वेन मर्म्मरध्वनियुक्ताः, गर्म्मुत —लताविशेषा यस्मिन् तादृशे। ("गर्म्मुत् स्त्री स्वर्णनडयोर्गोपतिशिवषण्डयोः। शुपभास्करयोः पुंसि" इति मेदिनी। नडः,—नलाख्य, लताविशेष. )। तप्तेति।—तप्ताः पांशव,—रजांसि एव, कुकूलाः,—तुषानलाः, तैः कातराः विकिराः,—कुक्कुटादिपक्षिभेदा यस्मिन् तादृशे।

( ४० ) विवरेति।—विवराण्येव—गर्त्ता एव, शरणम्—आश्रयः येषां तादृशाः, शाविध,—शल्या, "शजारु" इत्याख्य-जन्तुभेदा इत्यर्थः यस्मिन् तथोक्ते।

( ४१ ) तटेति।—तटेषु—तीरेषु, अर्ज्जुना,—स्वनामख्यातवृक्षभेदा, तेषु ये कुररा,—उत्क्रोशाख्यपक्षिभेदा, स्थिता इति भावः, तेषां कूटाः,—ध्वनिविशेषाः, तैः ज्वरः,—सन्तापः, यद्वा,—कूटा एव ज्वरा, तादृशसमये अतीव श्रुतिकटुरिति भाव, तेन विवर्त्तमानाः,—विलुण्ठन्त, उत्ताना,—ऊर्द्ध्वमुखा इति भावः, ["विवर्त्तमान—" इत्यत्र "निवर्त्तमान—" इति पाठे,—निवर्त्तमानाः,—विरमन्तः, जलमध्ये गमनादिति भाव, अत एव उत्तानाः,—उत्प्लवमाना, तीरस्थाः कुररा यदा कूजन्ति, तदा मत्स्या भीता सन्त उत्प्लवन्ते इति मत्स्यस्वभावः] शफरा,—क्षुद्रमत्स्यभेदा, तैः शारा,—शबलाः, पङ्काः,—कर्दमा, शेषा येषां तादृशानि, पल्वलानां—क्षुद्रसरसाम्, अम्भांसि—जलानि यस्मिन् तथोक्ते।

( ४२ ) दावेति।—दावेन—वनानलेन, ("दवदावौ वनानले" इत्यमरः) जनितं—सम्पादितं, जगतां नीराजनम्—आरात्रिकाख्य-शान्तिकर्म्मविशेष यस्मिन् तथोक्ते।

( ४३ ) रजनीति।—रजन्याः,—रात्रे, राजयक्ष्मा—क्षयरोग तस्मिन्; रात्रेः क्रमेण कार्श्यातिशयसम्पादनात् इति भाव.। कठोरीभवति—प्रवृद्धतां गच्छति। प्रतिदिशं—दिशि दिशि। ("उन्मत्ता,—उद्भ्रामानः, सन्निरुध्यमानः,—वा :, प्रावर्त्तन्त" इति उत्तरेण सम्बन्धः)। तानेव विशिनष्टि, आढौकमाना इत्यादिभिः।

(४४) प्रपावाटकुटीपटलप्रकटलुण्ठकाः, (४५) प्रपक्क-कपिकच्छू-गुच्छच्छटाच्छोटन-चापलैः अकाण्डकण्डूला इव (४६) कर्षन्तः शर्करिलाः कार्करस्थलीः, स्थूलदृषच्चूर्ण-मुचः, (४७) मुचुकुन्दकान्दलदलनदन्तुराः, समन्ततः

---

आटीकमानाः,—भ्रमन्तः, वेगेन वहन्त इति यावत्, ["आटीकमाना" इति पाठे,—उच्चैर्भ्रमन्तः; आङ्पूर्वकस्य भौवादिकस्य टीकते इत्यस्य रूपमेतत्। ग्रीष्मकाले खलु एवंविधाः मरुतः प्रवर्त्तन्ते इति कालस्वभावः] उन्मत्तपक्षेऽपि—एतत् सर्वं विशेषणं यथायोग्यं योजनीयम्। तथा च,—आटीकमानाः,—उद्धतं यथा तथा इतस्ततः भ्रमन्तः; उद्धतभ्रमणादयस्तु उन्मादस्यानुभावाः, तथा चोक्तम्,—"अनिमित्तहसित-रुदितोत्कुष्टासम्बद्धप्रलापशयनोत्थितप्रधावितनृत्यगीतपठितभस्मपांशवधूननिर्माल्यचीरघट-शरावाभरणस्पर्शनोपभोगैरन्यैश्चानवस्थितचेष्टानुकरणादिभिरनुभावैरभिनयेत्" इति। स्थलेषु—सिकताऽऽकीर्णमरुदेशेषु।

(४४) प्रपेति।—प्रपा—पानीयशाला, ("प्रपा पानीयशालिका" इत्यमरः) वाटः,—पन्थाः, कुटी—क्षुद्रगृहभेदः, पटलं—छदिः, एतेषां प्रकटं—स्पष्टं यथा तथा, लुण्ठकाः,—अपहारकाः, ध्वंसकारिण इति यावत्। अत्र वाटलुण्ठनं वाटस्थ-पांशुराशीनां परितः प्रक्षेपणादिति बोध्यम्; यद्वा,—प्रपावाटः,—पानीयशालारूपं स्थानम् इत्यर्थः।

(४५) प्रपक्केति।—प्रपक्काः,—प्रकर्षेण पक्कतां गताः, याः कपिकच्छ्वः,—मर्कट्यः, "आलकुशी" इति ख्याताः कण्डूजनकवृक्षविशेषाः इत्यर्थः, तासां याः गुच्छच्छटाः,—स्तवकराशयः, तासां छोटने—हरणे इति यावत्, यानि चापलानि—चपलकर्माणि तैः, अकाण्डकण्डूला इव—आकस्मिककण्डूरोगग्रस्ता इव।

(४६) शर्करिलाः,—शर्कराः,—पाषाणकणिकाः विद्यन्ते यासु ताः, शर्करा-बहुला इत्यर्थः, [पिच्छादित्वादिलच्] कार्करस्थलीः,—क्षुद्रपाषाणखण्डयुताः भूमीः, "काँकरभूमि" इति भाषा, कर्षन्तः—लिखन्तः, कण्डूतिसद्भावघर्षणार्थम् इति भावः। स्थूलदृषच्चूर्णमुचः,—स्थूलानि दृषदां—शिलानां चूर्णानि—कणिका इत्यर्थः, मुञ्चन्ति—वर्षन्तीति तथोक्ताः।

(४७) मुचुकुन्देति।—मुचुकुन्दानां—पुष्पविशेषाणां, कान्दलानाञ्च—कान्दली-पुष्पाणाञ्च, दलनेन—उच्छेदनेन, दन्तुराः,—सञ्जातदन्ता इव दृश्यमाना इत्यर्थः। कपिकच्छूस्पर्शात् कण्डूला हि कण्डूतीनामुपशमनार्थं तथाविधचूर्णैः गात्रं परुषं

(४८) पतन्मुखरचीरीगणमुखशीकरशीक्यमानतनवः (४९) तरुणतरतरणितापतरले तरन्त इव नरङ्गिणि मृगतृष्णिकातरङ्गिणीनाम् अलीकवारिणि, (५०) शुष्यच्छमीमर्म्मरमारवमार्गलङ्घनलाघवजवजङ्घालाः, (५१) रैणवावर्त्तमण्डली-रेचक-लासक-रसरभसारब्धनर्त्तनारम्भारभटीनटाः,

---

कषन्ति, तज्जायमानसुखानुभूतिचणे दन्तान् स्वकीयान् विकासयन्ति इति लीलाचारः। समन्ततः,—चतुर्दिक्षु।

(४८) पतदिति।—पतन्तः,—उड्डीयमानाः, मुखराः,—शब्दं कुर्व्वन्तः, ये चीरीगणाः—पक्षिभेदाः, ("चिल" इति बङ्गभाषा) तेषां मुखशीकरैः—वदनाम्बुबिन्दुभिः, शीक्यमानाः,—सिच्यमानाः, तनवः,—अङ्गानि येषां तथोक्ताः।

(४९) तरुणेति।—तरुणतरः,—अतिप्रौढः; यः तरणेः,—सूर्य्यस्य, ("तरणिः द्युमणौ पुंसि कुमारी-नौकयोः स्त्रियाम्" इति मेदिनी) तापः, तेन तरलं—चञ्चलमिव राजमानं तस्मिन्; अत एव तरङ्गिणि—सञ्जाततरङ्गे इव भासमाने, मृगतृष्णिकाः,—मरीचिका एव, ("मृगतृष्णा मरीचिका" इत्यमरः। तृष्णार्त्तमृगाणां सूर्य्यकिरणोद्भासितासु वालुकासु जलबुद्धिः प्रसिद्धा एव) तरङ्गिण्यः,—नद्यः तासाम्, अलीकवारिणि—मिथ्यासलिले, तरन्त इव—प्लवमाना इव, वालुकामध्यमिव मरुभूम्या तथा दृश्यमानत्वात्। उन्मत्ता अपि वैचित्र्येण निर्जलदेशं सजलमिव व्यवहरन्ति।

(५०) शुष्यदिति।—शुष्यन्ती—शोषं गच्छन्ती, शमी—अग्निगर्भो वृक्षभेदः, तद्वत् मर्म्मरः,—मर्म्मरध्वनियुक्त इत्यर्थः, मरीरयं मारवः,—मरुदेशीयः, यः मार्गः,—पन्थाः, तस्य लङ्घने—अतिक्रमणे, लाघवं—नैपुण्यं, शीघ्रकारित्वमित्यर्थः यस्य तथाभूतो यो जवः,—वेगः, तेन जङ्घालाः,—जङ्घावन्तः, निरन्तरसञ्चारिण इत्यर्थः।

(५१) रैणवेति।—रैणवी—रेणुमयी, धूलीसम्बन्धिनी इत्यर्थः, या आवर्त्तमण्डली—मण्डलाकारेण घूर्णनपरम्परा, तस्याः रेचकः,—रेचयति—बहिः करोति यः तथाभूतः, अनुकारक इत्यर्थः, यः लासकः,—नर्त्तकः, तस्य रसरभसेन—रागवेगेन, ["लासकरसरभस" इत्यत्र "रासरसरभस" इति पाठे,—रासे—रासाख्यक्रीडाविशेषे, यः रसः,—अनुरागः, तत्र भसः तेन] आरब्धं यत् नर्त्तनं, तस्य आरम्भे—अनुष्ठाने, आरभटीनटाः,—अराव ते भटाश्चे आरभटाः तेषामियम् आरभटी—वीररसप्रधानरचनाविशेषः, तत्प्रधानो नर्त्तनविशेषो वा, तत्र नटाः,—नटा इव इत्यर्थः; ताण्डवावसाने निपुणाः नर्त्तकाः यथा समुद्धतं नृत्यमावेदयितुं भृशं परितः परि

( ४४ ) प्रपावाटकुटीपटलप्रकटलुण्ठकाः, ( ४५ ) प्रपक्क-कपिकच्छू-गुच्छच्छटाच्छोटन-चापलैः अकाण्डकण्डूला इव ( ४६ ) कर्षन्तः शर्करिलाः कर्करस्थलीः, स्थूलदृषच्चूर्णमुचः, ( ४७ ) मुचुकुन्दकन्दलदलनदन्तुराः, समन्ततः

आढौकमानाः,—भ्रमन्तः, वेगेन वहन्त इति यावत्, ["आटीकमाना" इति पाठे,—उच्चैर्भ्रमन्तः, आङ्पूर्व्वकस्य सौवादिकस्य टीकते इत्यस्य रूपमेतत्। ग्रीष्मकाले खलु एवंविधाः मरुतः प्रवर्त्तन्ते इति कालस्वभावः] उन्मत्तपक्षेऽपि—एतत् सर्वं विशेषणं यथायोग्यं योजनीयम्। तथा च,—आढौकमानाः,—उद्धतं यथा तथा इतस्ततः भ्रमन्तः, उद्धतभ्रमणादयस्तु उन्मादस्यानुभावाः, तथा चोक्तम्,—"अनिमित्तहसित-रुदितोत्कुष्टासम्बद्धप्रलापशयनोत्थितप्रधावितनृत्यगीतपठितस्मितपांशुव्यवधूननिर्माल्यचीरघट-पात्रशरावाभरणस्पर्शनोपभोगैरन्यैश्चान्यव्यवस्थितचेष्टानुकरणादिभिरनुभावैरभिनयेत्" इति। ऊषरेषु—सिकताऽऽकीर्णमरुदेशेषु।

( ४४ ) प्रपेति।—प्रपा—पानीयशाला, ("प्रपा पानीयशालिका" इत्यमरः) वाटः,—पन्थाः, कुटी—क्षुद्रगृहभेदः, पटलं—छदिः, एषां प्रकटं—स्पष्टं यथा तथा, लुण्ठकाः,—अपहारकाः, ध्वंसकारिण इति यावत्। अत्र वाटलुण्ठनं वाटस्थ-पांशुराशीनां परितः प्रक्षेपणादिति बोध्यम्, यद्वा,—प्रपावाटः,—पानीयशालारूपं स्थानम् इत्यर्थः।

( ४५ ) प्रपक्केति।—प्रपक्वाः,—प्रकर्षेण पक्वतां गताः, याः कपिकच्छ्वः,—मर्कट्यः, "आलकुशी" इति ख्याता कण्डूजनकवृक्षविशेषाः इत्यर्थः, तासां याः गुच्छच्छटाः,—स्तवकराशयः, तासां छोटने—हरणे इति यावत्, यानि चापलानि—चपलकर्म्माणि तैः, अकाण्डकण्डूला इव—आकस्मिककण्डूरोगग्रस्ता इव।

( ४६ ) शर्करिलाः,—शर्कराः,—पाषाणकणिकाः विद्यन्ते यासु ताः, शर्करा-बहुला इत्यर्थः, [पिच्छादित्वादिलच्] कर्करस्थलीः,—क्षुद्रपाषाणखण्डयुताः भूमीः, 'काङ्करभूमि" इति भाषा, कर्षन्तः—उत्कन्तः, कण्डूतिमत्त्वावघर्षणार्थम् इति भावः। स्थूलदृषच्चूर्णमुचः,—स्थूलानि दृषदां—शिलानां चूर्णानि—कणिका इत्यर्थः, मुञ्चन्ति—त्यजन्तीति तथोक्ताः।

( ४७ ) मुचुकुन्देति।—मुचुकुन्दानां—पुष्पविशेषाणां, कन्दलानाञ्च—कन्दली-पुष्पाणाञ्च, दलनेन—उत्क्षेपणावनेन, दन्तुराः,—सञ्जातदन्ता इव—दृश्यमाना इत्यर्थः। कपिकच्छूस्पर्शात् कण्डूला हि कण्डूतीनामुपशमनार्थं तथाविधचर्व्वणैः गात्रं परुषं

(४८) पतन्मुखरचीरीगणमुखशीकरशीक्यमानतनवः (४९) तरुण-तरतरणितापतरले तरन्त इव तरङ्गिणि मृगतृष्णिका-तरङ्गिणीनाम् अलीकवारिणि, (५०) शुष्यच्छमी-मर्म्मरमारवमार्गलङ्घनलाघवजवजङ्घालाः, (५१) रैणवा-वर्त्तमण्डली रेचक—लासक—रसरभसारब्धनर्त्तनारम्भारभटीनटाः,

कायन्ति, तज्जायमानसुखानुभूतिवशे दन्ताश्च स्वकीयान् विकासयन्ति इति लोकाचारः। समन्तत,—चतुर्दिक्षु।

(४८) पतदिति।—पतन्तः,—उड्डीयमानाः, मुखराः,—शब्दं कुर्वन्तः, ये चीरीगणाः,—पक्षिभेदाः, ("चिल" इति बङ्गभाषा) तेषां मुखशीकरैः,—वदनाम्बुबिन्दुभिः, शीक्यमानाः,—सिच्यमानाः, तनवः,—अङ्गानि येषां तथोक्ताः।

(४९) तरुणेति।—तरुणतरः,—अतिप्रौढः, यः तरणेः,—सूर्य्यस्य, ("तरणिः द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम्" इति मेदिनी) तापः, तेन तरलं—चञ्चलमिव राजमानं तस्मिन् अत एव तरङ्गिणि—सञ्जाततरङ्गे इव भासमाने, मृगतृष्णिकाः,—मरीचिका एव, ("मृगतृष्णा मरीचिका" इत्यमरः। तृष्णार्त्तमृगाणां सूर्य्यकिरणोद्भासितासु बालुकासु जलबुद्धिः प्रसिद्धा एव) तरङ्गिण्यः,—नद्यः तासाम्, अलीकवारिणि—मिथ्यासलिले, तरन्त इव—प्लवमाना इव, वालुकामय्यामिव मरुभूम्या तथा दृश्यमानत्वात्। उन्मत्ता अपि वैचित्त्येन निर्जलदेशं सजलमिव व्यवहरन्ति।

(५०) शुष्यदिति।—शुष्यन्ती—शोषं गच्छन्ती, शमी—अग्निगर्भो वृक्षभेदः, तद्वत् मर्म्मरः,—मर्म्मरध्वनियुक्त इत्यर्थः, मरौरयं मारवः,—मरुदेशीयः, यः मार्गः,—पन्थाः तस्य लङ्घने—अतिक्रमणे, लाघवं—नैपुण्यं, शीघ्रकारित्वमित्यर्थः. यस्य तथाभूतो यो जवः,—वेगः, तेन जङ्घालाः,—जङ्घावन्तः, निरन्तरसञ्चारिणः इत्यर्थः।

(५१) रैणवेति।—रैणवी—रेणुमयी, धूलीसम्बन्धिनी इत्यर्थः, या आवर्त्तमण्डली—मण्डलाकारेण घूर्णनपरम्परा, तस्याः रेचकः,—रेचयति—बहिः करोति यः तथाभूतः, अनुकारक इत्यर्थः, यः लासकः,—नर्त्तकः, तस्य रसरभसेन रागवेगेन, ["लासकरसरभस" इत्यत्र "रासरसरभस" इति पाठे,—रासे—रासाख्यक्रीडाविशेषे, यः रसः,—अनुरागः, तत्र रभसः तेन] आरब्धं यत् नर्त्तनं, तस्य आरम्भे—अनुष्ठाने, आरभटीनटाः,—आराच्च ते भटाश्चेति आरभटाः तेषामियम् आरभटी—वीररसप्रधानरचनाविशेषः, तत्प्रधानो नर्त्तनविशेषो वा, तत्र नटाः,—नटा इव इत्यर्थः; ताण्डवाभ्यासने निपुणाः नर्त्तकाः यथा समुद्धतं नृत्यमावेदयितुं भृशं परितः परि

(५२) दावदग्धस्थलीमसीमिलनमलिनाः (५३) शिक्षित-क्षपणकवृत्तय इव मयूरपिच्छचयान् उद्बिभ्राणाः, सप्रयाणगुञ्जा इव (५४) शिञ्जानजरत्करञ्जमञ्जरीबीजजालकैः, सप्ररोहा इव (५५) आतपातुरवनमहिषनासानिकुञ्जस्थूलनिश्वासैः, सापत्या इव (५६) उड्डीयमानजवनतरहरिणपरिपाटी-

भाजयन्ति, तथैव ये हि वात्यामयी रैणभ्रमी तदा नियतमुत्पादयामासुरिति तात्पर्यम्; तदुक्तं—"प्लुष्टावपातप्लुतगर्ज्जितानि छेद्यानि मायाकृतमिन्द्रजालम्। चित्राणि यूथानि च यत्र नित्यं तां तादृशीम् आरभटीं वदन्ति॥" इति।

(५२) दावेति।—दावेन—वनाग्निना, दग्धा—भस्मीकृता, या स्थली—अकृत्रिमा भूमिः, सैव मसी, तस्या मिलनेन—सङ्गेन, मलिनाः। ["मसीमिलनमलिनाः" इत्यत्र "मसीमलनमलिनाः" इति पाठे,—मसीनां मलनेन—धारणेन, मलिनाः]।

(५३) शिक्षितेति।—शिक्षिता—अभ्यस्ता, क्षपणकानां—जैनसन्न्यासिनां, वृत्तिः,—व्यवहारो यैः तथाभूता इव, जैनानां गात्रमलक्षालननिषेधात् मलिन-कायत्वमिति भावः। ["मयूरपिच्छचयान्" इत्यत्र "वनमयूरपिच्छचयान्" इति पाठान्तरम्]। उद्बिभ्राणाः,—धारयन्तः, क्षपणका अपि मसीमलिनाः पिच्छानि जैनधर्मानुशासनात् धारयन्ति, ["शिखण्डस्तु पिच्छवर्हे नपुंसके" इत्यमरवचनात् पिच्छशब्दस्य मयूरपुच्छार्थकत्वलाभात् मयूरपदमधिकमेव पात्तम]। उन्मत्तपक्षेऽपि,—विवेकराहित्यात् यदृच्छया पिच्छचयान् वहन्ति, अत एव सप्रयाणगुञ्जा इव—प्रयाणे—यात्रायां, गुञ्जन्तीति गुञ्जाः,—ढक्काविशेषाः, तैः सह वर्त्तमाना इव। उन्मत्तानामपि नृत्यकाले दर्शकाः करतलादिकं वादयन्ति।

(५४) शिञ्जानेति।—शिञ्जानाः,—अस्फुटं शब्दायमानाः, जरतां—प्राचीनानां, करञ्जानां—तरुविशेषाणां, या मञ्जर्यः, तासां बीजजालकैः,—बीजनिचयैः, सप्ररोहा इव—साङ्कुरा इव।

(५५) आतपेति।—आतपेन—सन्तापेन, आतुराः,—आर्त्ताः, ये वनमहिषाः तेषां नासाः निकुञ्जा इव—दीर्घरोमावृततया लतादिपिहितोदरा वनभूमय इव, ("निकुञ्ज-कुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः) तेषां स्थूलनिश्वासाः,—सशब्दनिश्वासाः, तेभ्यो निर्गता इति भावः तैः। उन्मत्ता अपि आतपक्लिष्टा दीर्घं निश्वसन्ति। सापत्या इव—सपुत्रा इव, ससन्ताना इवेत्यर्थः। उन्मत्तान् अपि श्वभ्रादिपतनभयात् अपत्यानि न त्यजन्ति।

(५६) उड्डीयमानेति।—उड्डीयमानानाम्—आतपतापासहिष्णुतया उत्पतताम्,

पेटकैः, सभ्रुकुटय इव (५७) दह्यमानखलधानतुष- कूटकुटिलधूमकोटिभिः, सावीचवीचय इव महोष्ममुक्तिभिः, लोमशा इव (५८) शीर्य्यमाण-शाल्मलिफल तूल-तन्तुभिः, दद्रुला इव (५९) शुष्कपत्र-प्रकराकृष्टिभिः, शिराला इव (६०) तृणवेणीविकिरणैः, उच्छ्याश्रव इव

---

जवनतराणाम्—अतिवेगिना, हरिणाना ["जवनतरहरिण" इत्यत्र "जवनवात-हरिण" इति पाठे,—जवनानां—वेगगामिनां, वातहरिणानां—वाताभिमुखं गच्छता हरिणानाम्] परिपाव्यः,—पर्य्यायाः तेषा पेटकाः,—कदम्बकाः, यूथानि इत्यर्थः तैः, ("पेटकः पुस्तकादीनां मञ्जूषाया कदम्बके" इति मेदिनी)। सभ्रुकुटय इव—भ्रूभङ्गसहिता इव। उन्मत्ता अपि क्रोधप्राया एव, भ्रुकुट्यादयस्तु क्रोधस्य अनुभावाः।

(५७) दह्यमानेति।—दह्यमानानाम्—आतपतापेन सन्तप्यमानाना, खल-धानाना—धान्यमर्द्दनस्थानस्थिताना धान्याना, तुसकूटाः,—तुषराशयः, कुटिला,—कुटिलगामिन्यः, (कुटिलपदेन भ्रुकुटीसादृश्य व्यनक्ति) धूमकोटय इव धूसराशय इव तैः, शस्यानां ज्वालाभावात् तेषा धूमलेशोपवर्णनमुचितमेवेति। सावीचिवीचय इव—अवीचिः,—नरकविशेषः; ("तद्भेदास्तपनावीचि-महारौरवरौरवा." इत्यमरः। तद्भेदाः,—नरकभेदा.) तस्य वीचयः,—तरङ्गाः, ज्वाला वा, तैः सह वर्त्तमाना इव। महोष्ममुक्तिभिः,—महान्त उष्माणः तेषां मुक्तिभिः,—त्यागैः, दृष्टिभिरित्यर्थः, यद्वा,—उष्माण,—सन्तापाः, तेषा मुक्तिभिः,—विसर्जनैः, सन्तापवितरणैरित्यर्थः। लोमशा इव—रोमपूर्णा इव। उन्मत्ता अपि खेदादिवशादुपायन्ते।

(५८) शीर्य्यमाणेति।—शी माणानां—विदीर्य्यमाणानां, शाल्मलिफलानां तूलतन्तुभिः,—तूलसूत्रैः। दद्रुला इव—दद्रुरोगग्रस्ता इव। उन्मत्ता अपि अवगाहनाद्यकरणात् दद्रुयुक्ता भवन्ति। ["दद्रुला." इत्यत्र "दद्रुणाः" इति पाठेऽपि स एवार्थः। दद्रुः अस्य अस्तीति दद्रुण, "दद्वा श्रस्वलव्व" इति नः]।

(५९) शुष्केति।—शुष्काणा पत्राणां पकराः,—सङ्घाः, तेषाम् आकृष्टय,—आकर्षणानि ताभिः। शिराला इव—शिरासमूहशालिन इव; सुव्यक्तशिरासमूहा इवेत्यर्थः। उन्मत्ता अपि कार्श्यात् वातबाहुल्याच्च शिराला भवन्ति।

(६०) तृणेति।—तृणाना वेणी—राजि, (शिरासादृश्यप्रदर्शनाय वेणीपदम्) तस्या वि किरणैः,—विक्षेपैः, उच्छ्याणि—उद्गतानि अविरतं पतितानि इत्यर्थ, अश्रुणि नयनजलानि येषां तथाभूता इव। उन्मत्ता अपि रुदन्ति। ["उच्छ्याश्रवः" इत्यत्र

(६१) धूयमानयवशूकशकलशङ्कुभिः, दंष्ट्राला इव (६२) चलितशललसूचीशतैः, जिह्वाला इव वैश्वानरशिखाभिः, उत्सर्पत्सर्पकञ्चुकचूडालाः (६३) ब्रह्मस्तम्भरसाभ्यवहरणाय कवलग्रहमिवोष्णैः कमलमधुभिः अभ्यस्यन्तः, (६४) सकलसलिलोच्छोषघर्मघोषणापटहैः इव शुष्कवेणुवनास्फोटनपटुरवैः,

"उच्छ्मश्रव." इति पाठे,—उत्—उद्गतानि, श्मश्रूणि—कूर्चाः येषां तथाभूता इव। उन्मत्ता अपि चिरं चौरकर्माभावात् दीर्घश्मश्रवो जायन्ते]।

(६१) धूयमानेति।—धूयमानानां—सन्तप्तवातात् कम्पमानानां, यवानां शूकाः,—शृङ्गाः, शिखासूचयः इत्यर्थः, ("शूकोऽस्त्री शृङ्गदययो." इति मेदिनी) तेषां शकलाः,—खण्डाः, शङ्कवः,—कीला इव तैः। [धूयमानयव—" इत्यत्र "धूयमाननवयव—" इति पाठान्तरे,—धूयमानानां नवानाम्—अभिनवोत्पन्नानां, यवानाम्] दंष्ट्राला इव—दीर्घदन्तयुक्ता इवेत्यर्थः। उन्मत्ता अपि दन्तादिविकाशैः सर्वान् भाययन्ति।

(६२) चलितेति।—चलितानां—चलताम्, उड्डीयमानानामिति यावत्, शललानां—श्वाविधां दीर्घकाण्टरूपलोम्नां, ("श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्" इत्यमरः) सूचीशतैः,—सूक्ष्माग्रभागैः। जिह्वाला इव—रसनावन्त इव, बहिर्निर्गतरसना इवेत्यर्थः। उन्मत्ता अपि जिह्वां निष्काश्य भीषयन्ते। वैश्वानरशिखाभि,—अग्निशिखाभिः। उत्सर्पदिति।—उत्सर्पद्भिः,—उष्णतापात् प्रस्खलद्भिः, सर्पाणां कञ्चुकैः,—निर्मोकैः, चूडालाः,—शिखावन्तः। उन्मत्ता अपि स्नानादिना विना उन्मुक्तचूडाः भवन्तीति दृश्यते। ["उत्सर्पत्सर्पकञ्चुकैः चूडाला इव" इति पाठो युज्यते]।

(६३) ब्रह्मेति।—ब्रह्मस्तम्भः,—ब्रह्माण्डं, तस्य रसाभ्यवहरणाय—रसशोषणाय, रसानां मधुरादीनां भोजनाय वा, कवलग्रहं—ग्रासग्रहणम्. "असञ्चार्य्यो मुखे पूर्णे गण्डूषः कवलोऽन्यथा" इति; अभ्यस्यन्तः,—पुनः पुनः कुर्व्वन्तः इवेत्यर्थः, मधुपानात् शरीरस्य रसशोषणं भवतीति प्रसिद्धम्।

(६४) सकलेति।—सकलानां सलिलानां—जलानाम्, उच्छोषः,—अतिशयेन शोषकः, यो घर्म्मः,—उष्मा, तस्य घोषणा—प्रचारः, यस्याः पटहाः,—वादित्रभेदाः तैः इव, शुष्काणां वेणुवनानां—वंशारण्यानाम्, आस्फोटनस्य—सन्तापातिशयात् विदरणस्य, पटुरवाः,—महानिनादाः तैः,

त्रिभुवनविभीषिकाम् उद्भावयन्त', ( ६५ ) च्युतचलचाषपक्ष-श्रेणीशारितस्रुतयः, ( ६६ ) त्विषिमन्मयूखलताऽलातप्लोषकल्माष-वपुष इव ( ६७ ) स्फुटितगुञ्जाफलस्फुलिङ्गाङ्गाराङ्किताङ्गाः, ( ६८ ) गिरिगुहागम्भीरझाङ्कारभीषणभ्रान्तयः, ( ६९ ) भुवन-भस्मीकरणाभिचारचरुपचनचतुरा रुधिराहुतिभिः इव पारिभद्र-द्रुमस्तवकवृष्टिभिः तर्पयन्तः तारवान् वनविभावसून्,

---

त्रिभुवनविभीषिकां—त्रिलोकीभीतिम्, उद्भावयन्त',—जनयन्तः ; ये अहङ्कारेण जगत् भीषयितुमुद्यता', ते अवश्यमेव त्रिभुवनविभीषिका जनयन्ति इति बोध्यम् ।

( ६५ ) च्युतेति ।—च्युता',—गात्रेभ्यः स्खलिता', अत एव चलाः,—उत्पतन्त्यः, याः चाषाणा—नीलकण्ठाख्यपक्षिणा,पक्षश्रेणयः,ताभिः शारिताः,—हिंसिताः,आक्रान्ता इत्यर्थः, व्याप्ता इति यावत्,स्रुतयः,—मार्गा यैः तथाभूताः, ("स्रुति. स्त्री ग मार्गे"इति मेदिनी) ।

( ६६ ) त्विषिमदिति ।—त्विषिमान्—सूर्य्यः, [ सप्तम्यन्तात् "त्विषि" इति पदात् मतुपः असम्भवात् "त्विड्मान्" "त्विषावान्" इति वा पद भवितुं युक्त ] तस्य मयूख-लता—किरणराजिः, अलात इव—ज्वलदङ्गार इव, ( "अङ्गारोऽलातमुल्मुकम्" इत्यमर. ) तेन यः प्लोष ,—दहन, तेन कल्माष—चित्रम्, ईषत्कृष्णरक्तमित्यर्थ', ( "चित्रं किर्म्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः ) वपु',—शरीर येषा तथोक्ता इव ।

( ६७ ) स्फुटितेति ।—स्फुटितानि—आतपतापेन आवरणकोषस्फुटनात् विकसिता-नीत्यर्थ, यानि गुञ्जाफलानि—तदाख्यकृष्णमुखरक्तवर्णफलविशेषाः, ( "कुँच्" इति बङ्गभाषा ) तद्वत् स्फुलिङ्गाः,—अग्निकणाः, तद्रूपा इति यावत्, ये अङ्गाराः, तै. अङ्कितं —संवलित, दग्धमित्यर्थ., अङ्गं येषा तथोक्ता', ( "त्रिषु स्फुलिङ्गोऽग्निकण." इत्यमरः ) । ये च साङ्गारास्ते च नलिनशरीरा भवन्ति ।

( ६८ ) गिरीति ।—गिरिगुहासु—पर्व्वतगह्वरेषु, गभीरेण—घनेन, झाङ्कारेण भीषणा - भयावहा, भ्रान्तिः,—घूर्णन येषा तथाभूताः । उन्मत्ता अपि अग्निग्रस्त-गिरिगुहादिषु निर्भीका भवन्ति ।

( ६९ ) भुवनेति ।—भुवनस्य—जगत., भस्मीकरणं—दहनमेव, अभिचारः,—अथर्व्ववेदोक्तं हिंसात्मक कर्म्म, तत्र चरुपचने—हवनीयद्रव्यविशेषपाके, चतुराः,—पटवः । रुधिराहुतिभिरिव—रक्ताहुतिभिरिव, पारिभद्रो नाम द्रुमः,—वृक्षः, ( लोके "पालिधा मादार" इति प्रसिद्धः , "पारिभद्रस्तु मन्दारे निम्बद्रौ देवदारुणि" इति

( ७० ) अशिशिरसिकतातारकितरंहस:, ( ७१ ) तप्तशैलविलीयमानशिलाजतुरसलवलिप्तदिश:; दावदहन-पच्यमानचटकाण्ड-खण्ड-खचित-तरुकोटर-कीटपटल-पुटपाकगन्धकटव:, प्रावर्त्तन्त उन्मत्ता मातरिश्वान:।

( ७२ ) सर्व्वतश्च भूरिभस्त्रासहस्रसन्धुक्षणक्षुभिता इव जरदजगरगम्भीरगलगुहावाहिवायव:, क्वचित् ( ७३ ) स्वच्छन्दतृण-

---

मेदिनी ) तस्य स्तबका,—रक्तकुसुमगुच्छा:, तेषां वृष्टय:,—पाता: ताभि:, तर्पयन्त:,—प्रीणयन्त:, तारवान्—तरुसम्बन्धिन:, वनविभावसून्—दावाग्नीन्। अभिचारिणस्तु मारणोच्चाटनाद्यर्थं हवनकाले रुधिरेणानलं तर्पयन्ति इति। उन्मत्ता अपि रुधिरास्थिप्रभृतिकमशुचिद्रव्यं स्वैराचारतया अनले निक्षिपन्ति, तेन च अमङ्गलान्युत्पद्यन्ते।

( ७० ) अशिशिरेति।—अशिशिराभि,—उष्णाभि:, सिकताभि,—वालुकाभि:, तारकितं—सञ्जाततारकमिव लक्ष्यमाणम् इत्यर्थ:, रंह:,—वेगो येषां तथोक्ता:।

( ७१ ) तप्तेति।—तप्तेषु शैलेषु—पर्व्वतेषु, विलीयमानाना—गलता, शिलाजतूना—तदाख्यानाम् उपधातुभेदाना, रसलवै,—रसबिन्दुभि:, लिप्ता: दिशो यै, तथोक्ता:। दावेति—दावदहनै,—वनानलै, पच्यमानाना—दह्यमानाना, चटकाण्ड—चटकाख्यपक्षिविशेषाणाम्, अण्डखण्डै,—डिम्बशकलै, खचितेषु—आकीर्णेषु, तरुकोटरेषु—वृक्षगर्त्तेषु, यानि कीटपटलानि—पिपीलिकावृन्दानि, तत्तदण्डभक्षणार्थम् आगतानीति भाव:, तेषां पुटपाकस्य—अभ्यन्तरपाकस्य, गन्धेन कटव:,—उद्वेजका इत्यर्थ:। प्रावर्त्तन्त—प्रावहन्। उन्मत्ता:,—उच्छृङ्खला:, मातरिश्वान:,—वायव। सर्व्वत्र वाक्ये ध्वनिच्छाया अन्वेष्यैवेति।

( ७२ ) सर्वत इति।—"दारुणा दावाग्नय: प्रत्यदृश्यन्त" इति उत्तरेण अन्वय। तानेव दावाग्नीन् विशिनष्टि, भूरीत्यादिभि।—जरता—जीर्य्यता, [ "जरदजगर" इत्यत्र "जरठाजगर" इति पाठे,—जरठाना—परिणताना, वृद्धानामित्यर्थ.] अजगराणा—सर्पाणा, गम्भीरा: गला—गलदेशा एव, गुहा: ताभ्य: वाहिन,—वहि:निंसरन्त:, वायव: येषु तथोक्ता:; अत एव भूरीति।—भूरिभि,—बहुभि, भस्त्राणा—"जाँता" इति प्रसिद्धानाम् अग्निसन्धुक्षणयन्त्रभेदाना, सहस्रै: सन्धुक्षणेन—समुद्दीपनेन, क्षुभिता इव—समुत्तेजिता इव।

( ७३ ) स्वच्छन्देति।—स्वच्छन्द—यथारुचि यथा तथा, तृणेषु—शष्पेषु इति

चारिणो हरिणाः, क्वचित् ( ७४ ) तरुतलविवरवर्त्तिनो बभ्रवः, क्वचित् जटाऽवलम्बिनः कपिलाः, क्वचित् ( ७५ ) शकुनकुलकुलायपातिनः श्येनाः, क्वचित् ( ७६ ) विलीनलाक्षारसलोहितच्छवयोऽधराः, क्वचित् ( ७७ ) आसादितशकुनपक्षकृतपटुगतयो विशिखाः, क्वचित् ( ७८ ) दग्धनिःशेषजन्म-

---

शावः, चरन्ति—प्रसरन्तीति तथोक्ताः, अन्यत्र—तृणानि चरन्ति—भक्षयन्ति इति तथाभूताः, हरिणाः,—पाण्डुवर्णाः, ( "हरिणः पाण्डुरः पाण्डुः" इत्यमरः ) अन्यत्र,—मृगाः ( "हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत्" इति मेदिनी )।

( ७४ ) तरुतलेति।—तरुतलेषु यानि विवराणि—गर्त्तानि, तेषु वर्त्तन्ते इति तथोक्ताः, [ "विवरवर्त्तिनः" इत्यत्र "विवरविवर्त्तिनः" इति पाठान्तरम् ]। बभ्रवः,—पिङ्गलाः ; अन्यत्र,—नकुलाः। ( "बभ्रुर्वैश्वानरे·········। विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्॥" इति मेदिनी )। जटाऽवलम्बिनः,—जटाः,—मूलानि, अवलम्बन्ते—आश्रयन्तीति जटाऽवलम्बिनः, अन्यत्र,—जटाधारिणः, कपिलाः,—पिङ्गलाः, अन्यत्र,—कपिलाख्यमुनिविशेषव्रतधारिणः तापसाः एवाभेदोपचारात् कपिला इति मन्तव्यम् ; एते तु जटावल्कलधारिणो भवन्ति इति।

( ७५ ) शकुनेति।—शकुनकुलानां—पक्षिविशेषसमूहानां, कुलायान्—नीडानि, ( "कुलायो नीडमस्त्रियाम्" इत्यमरः ) पातयन्ति —दग्ध्वा निक्षिपन्तीति यावत् तथोक्ताः, श्येनाः,—शुक्लवर्णाः, अन्यत्र,—पक्षिहन्तृकुलायनिक्षेपकाः पक्षिभेदाः, ( "शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः।" "श्येनः पक्षिणि पाण्डरे" इति च मेदिनी )।

( ७६ ) विलीनेति।—विलीनः,—द्रवीभूतः यो लाक्षारसः,—अलक्तकद्रवः, तद्वत् लोहिताः,—रक्ताः ; अन्यत्र,—तेन लोहिताः,—रक्ताः, छवयः,—कान्तयः येषां तथाभूताः, अधराः,—धर्त्तुमशक्याः, निम्नोष्ठाः वा, अन्यत्र,—धराः,—पर्वताः, ( "अहार्य्यधरपर्वताः" इत्यमरः )।

( ७७ ) आसादितेति।—आसादितेषु—प्राप्तेषु ; यद्वा,—आ—समन्तात्, सादितेषु—अवसादं गतेषु, स्खलितेषु इत्यर्थः, शकुनानां—पक्षिणां [ "शकुनि" इति पाठान्तरम् ] पक्षेषु—गरुत्सु, कृता—लब्धा, पटुगतिः,—सम्यक् प्रसरः यैः, अन्यत्र,—आसादिता—प्राप्ता, शकुनपक्षेण—पक्षिगरुता, कृता जनिता, पटुगतिः,—सत्वरगमनं यैः तथोक्ताः। वि—विविधाः, शिखाः,—ज्वाला येषां तथोक्ताः, अन्यत्र—शराः।

( ७८ ) दग्धेति।—दग्धाः—भस्मीकृताः, निःशेषाः,—समस्ताः, जन्म-

हेतवो निर्वाणाः, क्वचित् (७९) कुसुमवासिताम्बरसुरभयो रागिणः, क्वचित् सधूमोद्गारा अमन्दरुचयः, क्वचित् (८०) सकल-जगद्ग्रासघस्मराः सभस्मभूरिकाः, क्वचित् (८१) वेणुशिखर-लग्नमूर्त्तयोऽत्यन्तदृढाः, क्वचित् (८२) अचलोपयुक्तशिलाजतवः

हेतव,—खोत्पत्तिकारणानि, तृणकाष्ठादीनीति भावः येषां, अन्यत्र,—दग्धाः,—क्षयिता, ज्ञानाग्निनेति भावः, निःशेषाः,—समस्ताः, पूर्व्वपूर्व्वजन्मार्ज्जिता अपीति भावः, जन्महेतवः,—संसारागमनकारणानि पुण्यपापानि येः तथोक्ताः, अत एव निर्वाणाः,—शान्ताः, दाह्याभावादिति भावः, अन्यत्र,—मुक्तिं गता इत्यर्थः।

(७९) कुसुमेति।—कुसुमैः,—धूमैरिति यावत्, अन्यत्र,—पुष्पैः, वासितं—छादितम्; अन्यत्र,—सुरभीकृत, यत् अम्बर—नभः; अन्यत्र,—वस्त्रं, तेन सुरभयः,—कान्ताः, शोभनदर्शनाः इत्यर्थः, अन्यत्र,—सौरभशालिनः, ("सुरभिः शल्लकी-मातृभिन्मुरा…… ……। स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु॥" इति मेदिनी) रागिणः,—रक्तवर्णाः, अनुरागवन्तश्च। सधूमेति।—धूमोद्गारेण—धूमनिर्गमेण सह वर्त्तमानाः, तथाऽपि अमन्दा—अतिप्रवृद्धा, रुचिः,—दीप्तिर्येषां तथोक्ताः; अन्यत्र,—धूमोद्गारेण—धूमगन्ध्युद्गारविशिष्टाजीर्णरोगविशेषेण सह वर्त्तमानाः, अत एव मन्दा रुचिः,—शरीरप्रभा, भोजनाभिलाषो वा येषां तथोक्ताः, ("रुचिः स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः" इति मेदिनी)।

(८०) सकलेति।—सकलं जगदेव ग्रासः,—कवलं, तस्य घस्मराः,—भक्षण-शीलाः, दहनशीला इति यावत्, सभस्मभूरिकाः—भस्मना भूरिभिः,—प्रभूतैः सह वर्त्तमानाः, अन्यत्र,—भस्मभूरिकः,—भस्मकीट इति प्रसिद्धः बहुभोजनरूपव्याधि-विशेषः, तेन सह वर्त्तमानाः, अत्यग्न्याख्यरोगिण इत्यर्थः। ["सभस्मभूरिकाः" इत्यत्र "सभस्मकाः" इति पाठे—भस्म एव भस्मकं तेन, अन्यत्र,—भस्मकेन—तदाख्याऽतितीक्ष्णाग्निरूपव्याधिविशेषेण सह वर्त्तमानाः]।

(८१) वेणिति।—वेणूना—वंशाना, शिखरेषु—अग्रेषु, लग्नाः,—संसक्ताः; अन्यत्र,—वंशदण्डाग्रेषु लग्नाः,—कृतभराः, मूर्त्तयः,—अङ्गानि येषां तथोक्ताः, अत्यन्तदृढाः, —अतिप्रबलाः, अतिस्थविराश्च। अतिस्थविराः वंशदण्डाग्रमवलम्ब्य गच्छन्तीति दृश्यते।

(८२) अचलेति।—अचलेषु—पर्व्वतेषु, उपयुक्तानि,—भक्षितानि, दग्धानीति यावत्, शिलाजतूनि—शिलाजत्वाख्याः उपधातुविशेषाः येः, अन्यत्र,—अचलम्—अविच्छिन्नं यथा तथा, दीर्घकालानुबन्धित्वादिति भावः, उपयुक्तं—सेवितम्, औषध-

क्षयिणः, क्वचित् ( ८३ ) सर्व्वान्नरसभुजः पीवानः, क्वचित् ( ८४ ) दग्धगुग्गुलवो रौद्राः, क्वचित् ( ८५ ) ज्वलित-नेत्रदहनदग्धसकुसुमशरमदनाः ( ८६ ) क्षतस्थाणुस्थितयः, चटुलशिखाः, नर्त्तनारम्भारभटीनटाः ( ८७ ) शुष्क-कासारस्रुतिभिः स्फुटन्नीरसनीवारबीजलाजवर्षिभिः ज्वाला-ऽञ्जलिभिः अर्च्चयन्त इव घर्म्मघृणिम्, अघृणा इव

---

क्षपयेयेति भावः, शिलाजतु यैः तथोक्ताः, क्षयिणः,—नि र्णं गताः, क्षयरोगिणश्च ; उक्तञ्च निदानाचार्य्यैः,—"शिलाधातुप्रयोगाद्वा प्रसादाद्वाऽथ शङ्करात्। अन्नामृत-प्रयोगाद्वा क्षयः क्षीयेत नान्यथा ॥" इति।

( ८३ ) सर्वेति।—सर्वाणि अन्नानि—खाद्यवस्तूनि, रसान्—सलिलादींश्च, भुञ्जते इति तथोक्ताः, अत एव पीवानः,—स्थूलकलेवराः, ये नित्यं मधुरादिषड्रसान् उपभुञ्जते, ते स्थूला एव भवन्ति। [ "सर्व्वान्नरस—" इत्यत्र "सर्व्वरस—" इति पाठान्तरम् ]।

( ८४ ) दग्धेति।—दग्धाः गुग्गुलवः,—गन्धद्रव्यभेदाः यैः तथोक्ताः, रौद्राः,—भीषणाः, रुद्रसेवकाश्च, ते हि रुद्रपूजायां गुग्गुलुदहनेन धू ददति।

( ८५ ) ज्वलितेति।—ज्वलितानां नेत्राणां—मूलानां, ( "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि नद्याञ्च" इति मेदिनी ) दहनेन दग्धाः सकुसुमाः,—सपुष्पाः, शराः,—तृणभेदाः, मदनाः,—तदाख्यवृक्षभेदाश्च यैः तथोक्ताः, अन्यत्र,—ज्वलितेन नेत्रदहनेन—तृतीयनयनाग्निना, दग्धः,—भस्मीकृतः, सकुसुमशरः—पुष्पशरसहितः मदनः—कामः यैः तथोक्ताः।

( ८६ ) क्षतेति—अत एव क्षता. स्थाणुषु—छिन्नशा षु वृक्षेषु, स्थितिः यैः ते ; अन्यत्र,—क्षताः, स्थाणोः,—हरस, स्थितय,—व्यवहाराः यै. ते। चटुलशिखाः,—चटुलाः,—चञ्चला, शिखाः,—ज्वाला येषां तथोक्ताः, अन्यत्र,—चञ्चलचूडा इत्यर्थः।

( ८७ ) शुष्केति।—शुष्केषु कासारेषु—सर सु, नष्टलेषु शुष्कजलजलाशयेषु इति भाव, स्रुतिः—प्रसृती येषां ते.। स्फुटदिति।—स्फुटन्ति—अग्न्युत्तापात् लाजतां प्राप्ना ीति भाव, नीरसानि यानि नीवारबीजानि—धान्यविशेषाः, तेषां लाजान् वर्षन्तीति तथोक्तैः। ज्वालाऽञ्जलिभिः ;—ज्वालाः,—शिखा एव अञ्जलय. तैः। घर्म्मघृणिम्—उष्णरश्मि, सूर्य्यमित्यर्थ। अघृणा इव—घृणा—जुगुप्सा तद्रहिता इव।

(८८) हठह्रियमाणकठोरस्थलकमठवसाविस्रगन्धगृध्नवः, स्वमपि धूमम् (८९) अम्भोदसमुद्गतिभियेव भक्षयन्तः, सलिलाहुतय इव (९०) स्फुटद्बहलबालकीटपटलाः कक्षेषु, श्वित्रिण इव (९१) प्लोषविचटद्वल्कलधवलशम्बूकशुक्तयः शुष्केषु सरःसु, स्वेदिन इव (९२) विलीयमानमधुपटलगोलगलितमधूच्छिष्ट-वृष्टयः काननेषु, खलतय इव (९३) पर्यन्तशीर्य्यमाणशिखा-

(८८)—हठेति।—हठात्—सहसा, ह्रियमाणाः—दह्यमानाः, कठोराणां स्थल-कमठानां—स्थलवर्त्तिनां कच्छपानां, याः वसाः,—मेदांसि, तासां यो विस्रगन्धः,—आमगन्धः, ("विस्रं स्यादामगन्धि यत्" इत्यमरः) तस्य गृध्नवः,—लोलुपाः।

(८९) अम्भोदेति।—अम्भोदानां—मेघानां, स्वविनाशिनामिति भावः, समुद्गतिः,—समुत्पत्तिः, तस्याः भीः, तयैव, धूमं भक्षयन्तः,—संहरन्तः, सम्यगुज्ज्वलने-नेति भावः, उक्तञ्च मेघदूताख्ये काव्ये महाकविना कालिदासेन,—"धूमज्योतिः-सलिलमरुतां सन्निपातः क्व मेघः" इति। सलिलाहुतय इव—जलाहुतय इव, ता हि अग्निं निर्वापयन्तीति भावः।

(९०) स्फुटदिति।—स्फुटन्ति—विशीर्य्यन्ति, अन्यत्र,—निर्गच्छन्ति, बहलानि—भूरीणि, बालानि—क्षुद्राणि, कीटपटलानि—क्षुद्रप्राणिवृन्दानि, अन्यत्र क्रिमिवृन्दानि यत्र तथोक्ताः। कक्षेषु—नूतनतृणेषु, ("कक्षौ तु तृणवीरुधौ" इत्यमरः), अन्यत्र,—गृहप्रकोष्ठविशेषेषु। श्वित्रिण इव—धवलाख्यरोगग्रस्ता इव।

(९१) प्लोषेति।—प्लोषेण—दहनेन, विचटन्ति—चटत् चटदिति शब्दं कुर्व्वन्ति, यानि वल्कलानि—आवरणानि, [वल्कलशब्दोऽत्र त्वगुपलक्षणम्] तैः धवलाः शम्बूकाः,—घोङ्गाख्यजलजन्तुभेदाः शुक्तयश्च—मुक्तास्फोटाख्या जलजन्तुभेदाश्च येषां तथोक्ताः। स्वेदिन इव—घर्म्माक्ता इव।

(९२) विलीयमानेति।—विलीयमानेभ्यः,—विलयं गच्छद्भ्यः, मधुपटल-गोलेभ्यः,—मधुचक्रेभ्यः, गलिता—निःसृता, मधूच्छिष्टानां—सिक्थकानां, वृष्टिः यैः तथोक्ताः। खलतय इव—खल्वाटा इव।

(९३) पर्य्यन्तेति।—पर्य्यन्तेषु—प्रान्तदेशेषु, शिरसो निम्नभागेषु च, शीर्य्य-माणाः—प्रसरन्त्यः, ["पर्य्यन्तशीर्य्यमाण—" इत्यत्र "परिशीर्य्यमाण—" इति पाठे—परि—शेषे, प्रान्तभागे इत्यर्थः,] शिखानां—ज्वालानाम्, अन्यत्र,—चूडानां,

संहतयो मृह्योषरेषु, (८४) गृहीतशिलाकवला इव ज्वलित-सूर्य्यमणिशकलेषु शिलोच्चयेषु, प्रत्यदृश्यन्त दारुणा दावाग्नयः।

तथाभूते च तस्मिन् अत्युग्रे ग्रीष्मसमये कदाचित् अस्य स्वगृहावस्थितस्य भुक्तवतोऽपराह्णसमये भ्राता पारशवः चन्द्र-सेननामा प्रविश्य अकथयत्,—"एष खलु (८५) देवदेवस्य चतुःसमुद्राधिपतेः (८६) सकलराजचक्रचूडामणिश्रेणीशाण-कोणकषणनिर्म्मलीकृतचरणनखमणेः (८७) सर्व्वचक्रवर्त्तिनां धौरेयस्य (८८) महाराजाधिराजपरमेश्वरश्रीहर्षदेवस्य भ्राता कृष्णनाम्ना भवतः अन्तिकं प्रज्ञाततमो दीर्घाध्वगः प्रहितो द्वारम् अध्यास्ते" इति। सोऽब्रवीत्,—"आयुष्मन्! अविलम्बितं प्रवेशय एनम्" इति।

---

संहतिः,—समूहः येषां तथाभूताः। मह्योषरेषु—महत्सु ऊषरेषु, मरुषु इत्यर्थः; एतेषु दाह्यवस्तूनाम् अभावात् प्रान्तदेशेषु अग्निशिखाप्रादुर्भाव इति भावः।

(८४) गृहीतेति।—गृहीतं शिला एव कवलं—ग्रासो यैः तथाभूताः। ज्वलितसूर्य्यमणिशकलेषु—दीप्तसूर्य्यकान्तोपलखण्डेषु। शिलोच्चयेषु—पर्व्वतेषु, दावाग्नयः,—आरण्याग्नयः, ("—दवदावौ तु वनवह्नौ वनेऽप्युभौ" इति मेदिनी)।

(८५) देवदेवस्य—देवानां—राज्ञां, देवः,—राजा, स ाधिपइत्यर्थः तस्य, ["देवदेवस्य" इत्यत्र "देवस्य" इति पाठान्तरम्]।

(८६) सकलेति।—सकलानां राजचक्राणां—नृपमण्डलानां, याः चूडामणि-श्रेण्यः,—शिरोरत्नराजयः, ता एव शाणाः,—निकषपाषाणविशेषाः, तेषां कोणेषु—प्रान्तभागेषु, यत् कषणं—घर्षणं, तेन निर्म्मलीकृताः,—विशदीकृताः, चरणयोर्नखा एव मणयः,—रत्नानि यस्य तथाभूतस्य, राजचक्रनियतवन्द्यस्येति भावः।

(८७) सर्वेति।—सर्वेषां चक्रवर्त्तिनां—सार्व्वभौमानां, धौरेयस्य—अग्रगण्यस्य।

(८८) महेति।—महतां राजाधिराजानां परमेश्वरः,—सर्व्वनियन्तेत्यर्थः, स चासौ श्रीहर्षदेवश्चेति तथोक्तस्य। अन्ति—समीपम्। प्रज्ञाततमः,—अतिप्रतीतः, अतिशयेन विज्ञात इत्यर्थः, अतिविश्वस्त इति यावत्। दीर्घाध्वगः,—दीर्घम् अध्वानं गच्छतीति तथोक्तः, बहुदूरादागत इति भावः। प्रहितः—प्रेषितः। एतेन बाणं प्रति राज्ञः आदरातिशयः सूच्यते।

अथ तेन आनीयमानम्, (९९) अतिदूरगमनगुरुजड़जङ्घं, (१००) कार्द्दमिकचेलचीरिकानियमितोच्चण्डचण्डातकं, (१०१) पृष्ठप्रेङ्खत्पटच्चरकर्पटघटितगलितग्रन्थिम्, (१०२) अतिनिविड़सूत्रबन्धनिम्नितान्तरालकृतव्यवच्छेदया लेखमालिकया (१०३) परिकलितमूर्द्धानं, प्रविशन्तं लेखहारकम् अद्राक्षीत्; अप्राक्षीच्च दूरादेव,—(१०४) "भद्र! भद्रम् अशेषभुवननिष्कारणबन्धोः तत्रभवतः कृष्णस्य?" इति। सः "भद्रम्" इत्युक्त्वा प्रणम्य अतिदूरे समुपाविशत्; विश्रान्तश्च अब्रवीत्,

(९९) अतिदूरेति।—अतिदूरगमनेन गुर्व्वौ—भारवत्यौ, अत एव जडे—गमनाक्षमे, जङ्घे यस्य तथाभूतम्।

(१००) कार्द्दमिकेति।—कार्द्दमिका,—कर्द्दमेन लिप्तं, सकर्द्दमाध्वगमनादिति भावः, यत् चेलं—वस्त्रं, तस्य चीरिका—खण्ड, तया नियमित—संयमितम्, उच्चण्डं—कर्कश, स्थूलमित्यर्थो वा, चण्डातकम्—अर्द्धोरुपर्य्यन्तव्यापक वसनं येन तथोक्तम्। यद्यपि वरस्त्रीणामर्द्धोरुपर्य्यन्तविलम्बिनि वसने एव चण्डातकशब्दो गम्यते, तथाऽपि अत्र सामान्यतः लक्ष येष चण्डातकशब्दो ज्ञेयः।

(१०१) पृष्ठेति।—पृष्ठे—पृष्ठदेशे, प्रेङ्खत्—चलत्, यत् पटच्चर—जीर्णवस्त्रं, ("पटच्चर जीर्णवस्त्रम्" इत्यमरः) कर्पटञ्च—घर्म्मादिमार्ज्जनार्थं वस्त्रखण्डञ्च, ताभ्यां घटितः,—रचित, अथ च गलित,—शिथिलः, ग्रन्थिः,—सन्धिबन्धो यस्य तथोक्तम्।

(१०२) अतिनिविडेति।—अतिनिबिड,—अतिघनः, यः सूत्रबन्धः, तेन निम्नितः,—निम्न इव आचरित, नमितः इत्यर्थः, [ निम्नशब्दादाचारार्थे क्वौ निष्ठाया रूपमेतत् ] अन्तराले—मध्ये, कृतः,—विहित, व्यवच्छेदः,—विभागो यस्याः तथाभूतया, लेखमालिकया—लिपिसञ्चयेन। अन्येषामपि लिपिस्तेनानीता, ततः लेखमालिकया इत्युक्तं, तत्तु उपरिष्टात् व्यक्तीभविष्यति।

(१०३) परिकलितेति।—परिकलितः,—वेष्टितः, [ "परिकरित—" इति पाठेऽपि स एवार्थ. ] मूर्द्धा—मस्तक येन तथोक्त, शिरोधृतलिपिमित्यर्थ.। लेखहारकं—पत्रवाहकम्। अप्राक्षीत्—अपृच्छत्।

(१०४) भद्रेति सम्बोधनं, भद्र।—हे साधो। भद्रं—कुशलम्। अशेषेति।—अशेषाणा—समस्ताना, भुवनाना—जगता, निष्कारणः,—अहेतुक, बन्धुः तस्य। तत्रभवत,—पूज्यस्य। "अतिदूरे" इत्यनेन सर्व्वत्रैव आत्मन. प्रभावातिशय्यं द्योतितम्।

—"एष खलु स्वामिनो माननीय लेखः प्रहितः" इति विमुच्य च अर्पयत्। अथ वाणः सादरं गृहीत्वा स्वयमेव अवाचयत्,—"मेखलकात् सन्दिष्टम् अवधार्य (१०५) फलप्रतिबन्धी धीमद्भिः अपहरणीयः कालातिपात इति (१०६) एतावत् अत्र अर्थजातम्, इतरत् वार्त्तासंवादनमात्रकम्"। अवधृतलेखार्थश्च समुत्सारितपरिजनः सन्देशं पृष्टवान्। मेखलकः तु अवादीत्,—"एवम् आह मेधाविनं स्वामी,—जानाति एव मान्यः यथा (१०७) एकगोत्रता वा, समानजातिता वा, समं संवर्द्धनं वा, एकदेशनिवासो वा, दर्शनाभ्यासो वा, परस्परानुरागश्रवणं वा (१०८) परोक्षोपकारकरणं वा, समानशीलता वा स्नेहस्य हेतवः। त्वयि तु विना कारणेन अदृष्टेऽपि

["अतिदूरे" इत्यत्र "नातिदूरे" इति पाठान्तरम्]। स्वामिन,—अस्मत्प्रभो, [अत्र कर्त्तरि विवक्षया षष्ठी, निष्ठाया तन्निषेधात्; अन्यथं पपर्यमाने शिरोवेष्टनन्यायमनुधावति] माननीयस्य—सम्मानार्हस्य। प्रहित,—प्रेषित, भवत. सकाश इति शेष। अर्पयत्—दत्तवान्, लेखमिति शेषः। मेखलकात्—तदाख्यात् प्रागुक्तात् पत्रवाहकात्। सन्दिष्ट—वाचिकम्।

(१०५) फलेति।—फल—कार्य्य, प्रतिबध्नाति—रुणद्धीति तथोक्तः, कार्य्यव्याघातक इत्यर्थ। कालातिपात,—कालविलम्ब, अपहरणीय,—त्यक्तव्यः, अकरणीय इति यावत्।

(१०६) एतावत्—एतत्पर्य्यन्तम्। अत्र—लेखमालिकायाम्। अर्थजातं—प्रतिपाद्यवस्तु, अभिधेयविषय इत्यर्थ'। इतरत्—अन्यत्, वार्त्तासंवादनमात्रक—वृत्तान्तालोचनमात्रम्। अवधृतलेखार्थ,—विदितलिपिनिबद्धवृत्तान्त। मेधाविनं—प्रकृष्टधीशक्तिसम्पन्नम्। स्वामी—अस्माक प्रभु'। मान्य, भवानिति शेष।

(१०७) एकगोत्रता—एककु[ल]त्पत्ति। अत्र "एकगोत्रता" इत्यादि स्नेहकारणम् उत्तरोत्तर [प्रब]ल ज्ञेयम्। समानजातिता—तुल्यजातित्वम्। समं—सह, संवर्द्धनम्। एकदेशनिवास,—एकस्थानस्थिति। दर्शनाभ्यास,—पुन. पुनः साक्षात्करणम्। परस्परानुरा[ग]श्रवणम्—अन्योऽन्यसद्भावाकर्णनम्।

(१०८) परोक्षोपकारकरणं—साक्षात्काराभावेऽपि उपकारकरणम्। समान-

प्रत्यासन्ने बन्धाविव बद्धपक्षपातं किमपि स्निह्यति मे हृदयं दूरस्थेऽपि इन्दोरिव कुमुदाकरे। (१०९) भवन्तम् अन्तरेण अन्यथा चक्रवर्त्ती दुर्ज्जनैः ग्राहित आसीत्, (११०) न च तत् तथा। (१११) न सन्त्येव ते, येषां सतामपि सतां न विद्यन्ते मित्रोदासीनशत्रवः। (११२) शिशुचापलापराचीनचित्तवृत्तितया च भवतः केनचित्

शीलता—समस्वभावत्वम्। स्नेहस्य—प्रणयबन्धनस्य। प्रत्यासन्ने—निकटवर्त्तिनि। बन्धाविव—सुहृदीव। बद्धपक्षपात—बद्धस्नेहम्। कुमुदाकरे—कैरवोत्पत्तिभुवि, ("आकरो निधहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते" इति मेदिनी)।

(१०९) भवन्तमिति।—भवन्त—त्वाम्, अन्तरेण—विना, तवानुपस्थितेः त्वां लक्ष्यीकृत्येत्यर्थः, दुर्ज्जनैः,—दुष्टैः लोकैः, चक्रवर्त्ती—सम्राट्, अन्यथा—अन्येन प्रकारेण, ["अन्यथा चक्रवर्त्ती" इत्यत्र "अन्यथा चान्यथा चाय चक्रवर्त्ती" इति पाठे,—अयम्—एव, मन्त्राता इति भावः, चक्रवर्त्ती अन्यथा च अन्यथा च—प्रकृतं गोपायित्वा ऽन्येन बहुविधेन अप्रकृतेनेत्यर्थः। एतेन किञ्चिदपि सम्भवतीति प्रकटयति]। ग्राहितः,—अवबोधितः, आसीदित्यन्वयः। राजाधिराजसन्निधौ भवतो दोषोत्कीर्त्तनात् राज्ञः त्वयि मनोभङ्गः कारितः इति भावः। अत्र "आसीत्" इति भूतप्रयोगात् अधुना तु दुर्ज्जना विफलाभिमता जाता इति प्रकटीभूतम्, एतत्तु उपरिष्टात् "तथेति च प्रतिपन्नम्" इत्यादिवचसा व्यक्तीभविष्यति।

(११०) न चेति।—तत्—राज्ञस्त्वयि मनसोऽन्यथात्वमिति भावः, तथा—तादृश, न च—नैवेत्यर्थः। त्वयि राज्ञो मनोविकृतिः न जातेति भावः। अथवा,—तत्—तैः कृतमन्यथा वर्णनं, तथा—तादृक्, न, मिथ्यैवेत्यर्थः। तथात्वे तु बाणस्य दुर्वृत्तता प्रसज्येत, तस्यापि बाणे तथाविधः अनुरागः नृपतिवचनञ्च दोषायैव स्यादिति।

(१११) न सन्त्येव ते इति।—ते—मानवाः, न सन्त्येव—नैव विद्यन्ते इ र्थः। सतामपि सतामित्यादि।—सता—साधूना, सदाचारवतामित्यर्थः, सता—विद्यमानानामपि, मित्रोदासीनशत्रवः,—मित्राणि—सुहृदः, उदासीनाः,—मध्यस्थाः, शत्रव,—विद्वेषिणः, न विद्यन्ते—न तिष्ठन्ति, सर्वेषामेव मानवाना मित्रोदासीनशत्रवो विद्यन्ते इत्यर्थः।

(११२) शिशुचापलेति।—शिशोश्चापलं—शैशवचापल्यं, बाल्यकालिकाचञ्चलतेति यावत्, तत अपराचीना—अपराङ्मुखी, चि त्तवृत्तिर्यस्य तस्य तया,

(११३) असहिष्णुना यत्किञ्चित् असदृशम् उदीरितम्, इतरो लोकः तथैव तत् गृह्णाति, वक्ति च। (११४) सलिलानि इव गतानुगतिकानि लोलानि खलु भवन्ति अविवेकिनां मनांसि। (११५) बहुसुखश्रवणनिश्चलीकृतनिश्चयः किं करोतु पृथिवीपतिः? तत्त्वान्वेषिभिश्च अस्माभिः दूरस्थितोऽपि (११६) प्रत्यक्षीकृतोऽसि। विज्ञतः चक्रवर्त्ती त्वदर्थम्;—यथा प्रायेण प्रथमे वयसि सर्वस्य एव चापलैः शैशवम् अपराधि इति। तथैव च

---

तात्कालिकचित्तवृत्तेः ईषदुन्मार्गप्रवृत्ततया इति भाव.। ["चित्तवृत्तिरियम" इत्यत्र "चेतोवृत्तितया" इति पाठान्तरम्]।

(११३) असहिष्णुना—सोढ़मशक्नुवता, विद्वेषिणा वा। असदृशम्—अयुक्तं, विरुद्धमित्यर्थः, उदीरितम्—उक्तम्। इतरो लोकः,—साधारणो लोको नीचो वा, तत्—असदृशं वाक्य, त्वयि प्रयुक्तमिति भावः, तथा एव—सत्यमेव, गृह्णाति—अवबुध्यते, वक्ति च—कथयति च।

(११४) सलिलानि इवेति।—अविवेकिनां—विवेकशून्यानां जनानां, मनांसि सलिलानि इव—जलानि इव, गतं—गमनम्, अनुगतिं—पश्चाद्गमनं च कुर्व्वन्ति यानि तानि गतानुगतिकानि, ["गतानुगतिकानि" इत्यत्र "गतागतिकानि" इति पाठे,—गमनागमनशीलानि, न तु दृढानि इति भावः] अत एव लोलानि—चपलानि; इतरजनानाम् अयमेव स्वभावः खलु, यत्, ते स्थिरतया कुत्रापि दीर्घकालं स्थातुं न शक्नुवन्तीति भावः।

(११५) बहुसुखेति।—बहूनां सुखानां—भूरीणां श्रवणसन्तर्पणानां यासां वचसां, कर्णेजपानां चाटुवाचामित्यर्थः, श्रवणेन ["बहुसुखश्रवण—" इत्यत्र "बहुमुखश्रवण—" इति पाठे,—बहूनां, जनानामिति शेषः, मुखेभ्यः श्रवणात्] निश्चलीकृतः निश्चयः,—अवधारणा यस्य तथाभूत, दुर्ज्जना. सतत राजानं निकषा बहून् सन्तोषकरान् विषयान् कीर्त्तयन्ति, तेन असौ समाकृष्टचेता: वितथान्यपि तान्येव तथ्यानि तेषां वचनानि इति अवधारयति, नात्र तत्त्वमनुसन्दधातीति भावः।

(११६) प्रत्यक्षीकृत,—साक्षात्कृतः परिचित इति भाव। प्रथमे वयसि—यौवनप्रारम्भे इत्यर्थः। चापलैः,—चपलकर्मभिः, शैशव बाल्यम्, अपराध्यतीति अपराधि—सदोषं भवति इति यावत्।

(११७) प्रतिपन्नं स्वामिना। अतो भवता राजकुलम् अकृत-कालक्षेपम् आगन्तव्यम्। अवकेशीव अदृष्टपरमेश्वरो (११८) बन्धुमध्यम् अधिवसन् नासि मे बहुमतः, न च (११९) सेवावैषम्यविषादिना वा परमेश्वरोपसर्पणभीरुणा भवता भवितव्यम्। यतो यद्यपि,—

स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम्।
मोहात् समुत्क्षिपति जीवनमप्यकाण्डे
कष्टं मनोभव इवेश्वरदुर्विदग्धः॥ ३॥

---

(११७) प्रतिपन्न—विदितं, स्वीकृतमित्यर्थः। स्वामिना—प्रभुणा, राज्ञेत्यर्थः। अकृतकालक्षेप—कालविलम्बमकृत्वेत्यर्थः। अवकेशीव—निष्फलतरुरिव, ("वन्ध्यो फलोऽवकेशी च" इत्यमरः) अदृष्टपरमेश्वरः,—न दृष्टः परमेश्वरः,—अधिराजः, रविश्च येन तथाभूतः। अदृष्टरविस्तरुमध्यपतत्च्छायाप्रधानः अवकेशी अपि न कस्यचित् प्रियः।

(११८) बन्धुमध्यं—बन्धूनां—ज्ञातीनां, ("सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः" इत्यमरः) मध्यम् अधिवसन्—अधितिष्ठन्, मे—मम, [ वर्त्तमाननिष्ठायोगात् कर्त्तरि षष्ठी ] बहुमतः,—बह्वादृतः, न असि—न भवसि, यथा रविकिरणालाभे तरुः निष्फलो भवति, तथा राजानुग्रहं विना भवादृशस्य निष्फला स्थितिरिति भावः।

(११९) सेवेति।—सेवाया—परिचर्य्यायाः, राज्ञ इति भावः, यत् वैषम्य—क्लेशातिशय इति यावत्, तेन विषीदतीति तेन। परमेश्वरोपसर्पणभीरुणा—परमेश्वरस्य—चक्रवर्त्तिनः, उपसर्पणम्—आनुगत्यं, तस्मात् भीरुः तेन, कदाचित् कथमपि अपराद्धे दण्डशङ्का कुर्व्वता इत्यर्थः।

दुष्टात् प्रभोः मर्य्यादाऽभावमाशङ्कमानाय बाणाय सदुपदिशन् कृष्णः स्वकीयस्वामिनं प्रशंसितुं प्रसङ्गात् दुर्विनीतप्रभोः स्वरूपमुपवर्णयन्नाह, स्वेच्छेति।—ईश्वरदुर्विदग्धः,—दुर्विदग्धः,—अपण्डितः, ईश्वरः,—प्रभुः, निग्रहानुग्रहसमर्थः इत्यर्थः, अविवेकी नृपतिरिति यावत्, [ आहिताग्न्यादित्वात् वैकल्पिकः परनिपातः ]; अन्यत्र,—ईश्वरेण—हरेण, दुर्विदग्धः,—दुः,—दुःखं, कष्टकरं यथा तथा इत्यर्थः, वि—विशेषेण, दग्धः,—भस्मीकृतः इत्यर्थः, नेत्रजन्मना वह्निनेति शेषः, मनोभव इव—काम इव,

काष्टं—क्लेशहेतुरित्यर्थः, भवतीति शेषः; अल्पबुद्धेः प्रभोः सेवा अतीव क्लेशकरीति भावः। पादद्वयेण अविवेकिनः प्रभोः सेवायाः कामप्रसरनिरोधस्य च दुःखकत्व-मुपपादयितुमाह, स्वेच्छेति।—दुर्विनीतः मूर्खश्च प्रभुः, स्वेच्छया—निजाभिलाषेण, उपजाताः,—उपस्थिताः, विषयाः,—भोग्यवस्तूनि, स्रक्चन्दनवनितादयः अर्था इति यावत् यस्य तथाभूतः, यथेच्छं व्ययोपभोगयोग्यसम्पदोऽधिगच्छन्नपीत्यर्थः, अन्यत्र,—स्वेच्छया—यथेष्टम्, उपजाताः,—उपगताः, विषयाः,—लक्ष्याणि यस्य तथाभूतः, यथेच्छं कामिजनरूपाणि लक्ष्याणि विध्यन्नपीत्यर्थः, देहीति—प्रयच्छ इति, वक्तुं—कथयितुं, न याति—न ददातीत्यर्थः, [ धातूनामनेकार्थत्वात् अत्र याधातुर्दानार्थः ] याचके किञ्चित् देहीति ज्ञापयति सति विरज्यते इति भावः; अन्यत्र,—देहीति—देहवान् इति, वक्तुं—वचनम्, [ अत्र तुमर्थोऽविवक्षित, धात्वर्थमात्रमेव विवक्षितम् ] न याति न गच्छति, न प्राप्नोति इत्यर्थः, यद्वा,—वक्तुं न याति—शरीरीति उक्ति-योग्यता न प्राप्नोतीत्यर्थः, अनङ्गत्वात् इति भावः; मार्गणशतैः,—याञ्चाशतैः, पुनः पुनः याञ्चाभिरित्यर्थः, कारुण्यपूर्णा महान्तस्तु न तथा, ते तु अकिञ्चनानां दैन्योक्तिं सोढुमशक्नुवन्तः प्रार्थितव्यसमाकर्णनात् प्रागेव तेषाम् अप्रार्थितमपि अकातरं विसृजन्ति इति विशेषः, अन्यत्र,—शरशतैः, ("—मार्गणौ याचके शरे। याञ्चाऽन्वेषणयोः क्लीबम्—" इति मेदिनी) दुःखं ददाति—क्लेशं जनयति, एकत्र,—अनुजीविभ्यः, अन्यत्र,—कामिभ्य इति शेषः। यद्वा—देहीति पदम् अविवेकिप्रभुपक्षे मार्गणशतै-रित्यनेनान्वितं कृत्वा व्याख्यातव्यं, देहीति याचकानां याञ्चाशतैः तेभ्यः नियतं दुःखं ददाति, न तु किञ्चित् तेभ्यः अर्पयति इत्यर्थः, अत्र पक्षे वक्तुमिति पदं धातूनामने-कार्थत्वात् भोक्तुमिति कृत्वा भोगार्थकत्वेन व्याख्यातव्यमिति सङ्क्षेपः; अकाण्डे—सहसा, कारणान्तरे असत्यपीति यावत्, मोहात्—अज्ञानात्, यथायथं दोषादोषयोः अनव-बोधात् इत्यर्थः, स्वस्य विचारशक्तेरभावादिति भावः, अन्यत्र,—मोहात्—स्वविकार-जनितं मोहमुत्पाद्येत्यर्थः, [ ल्यब्लोपे पञ्चमी ] जीवनमपि—प्राणानपि, एकत्र,—अनुजीविनाम्, अन्यत्र,—कामिनामिति शेषः, समुत्क्षिपति—समुत्कर्षति, दण्ड-यति इत्यर्थः, अन्यत्र,—हरतीत्यर्थः। [ "समुत्क्षिपति इत्यत्र "समाक्षिपति" इति पाठे,—समाकर्षति, दण्डयतीत्येवार्थः ] अत्र मूर्खदुर्विनीतेश्वरस्य, मनोभवेन सह वैधर्म्योक्तिविरहितसाम्यकथनादुपमाऽलङ्कारः, स च देहि-मार्गणादिपदानां श्लिष्टतया श्लेषेणानुप्राणित इति बोध्यम्। अयमेव च श्लोकः श्लेषालङ्कारविचारावसरे साहित्य-दर्पणे,—"कष्टं प्रसूनविशिखः प्रभुरल्पबुद्धिः" इति चतुर्थपादमात्रं विपरिवर्त्य उदाहृतो विश्वनाथेन; अस्मिंस्तु पाठे,—प्रसूनविशिखः,—कामः, तथा अल्पबुद्धिः,—अबोधः,

तथाऽपि (१२०) अन्ये ते भूपतयः, अन्य एव अयं न्यक्कृत-नृग-नल-निषध-नहुषाम्बरीष-दशरथ-दिलीप-नाभाग-भरत-भगीर ययातिः अमृतमयः स्वामी। न अस्य (१२१) अहङ्कारकालकूटविषदग्धदुष्टा दृष्टयः, न (१२२) दर्पगदगुरुगर-गलग्रहगद्गदा गिरः, न (१२३) अतिस्मयोष्मापस्मारविस्मृत-स्थैर्य्याणि स्थानकानि, न (१२४) उद्दामदर्पदाहज्वरवेग-

प्रभुः—स्वामी चेत्युभयमपि इत्यर्थः, कष्ट—क्लेशकारणमित्यर्थः, अन्यत् सर्वं पूर्ववत्। अस्मिंस्तु पद्ये प्राकरणिकाप्राकरणिकयोरलब्धिप्रभु-प्रसूनविशिखयोरेकधर्म्माभिसम्बन्धा-द्दीपकमलङ्कारः, सोऽपि श्लेषानुप्राणितः इति बोध्यम्। वसन्ततिलकं वृत्तम् ॥ ३ ॥

(१२०) अन्ये ते भूपतय इति।—ते—तादृशा इत्यर्थः, दुर्विदग्धा इति भावः, भूपतयः,—राजानः, अन्ये—अपरे, अस्मात् राज्ञः पृथगित्यर्थः। अयं—चक्रवर्त्ती इत्यर्थः। न्यक्कृतेति।—न्यक्कृताः,—अधःकृता, नृगादयो येन तथाभूतः, नृगनलादीन् अतिधार्म्मिकान् भूपतीन् निजधर्म्मशीलतया तिरस्करोति इत्यर्थः। अमृतमयः,—अमृतपूर्णः, देवतुल्य इति यावत्। अत्र "अमृतमयः" इति विशेषणं साभिप्रायम्, यत अहङ्कारदर्पादिकं कालकूटगदादिना रूपयति, अतः अहङ्कारादीनामत्यन्ता-भावप्रकटनेच्छया अस्य राज्ञः अमृतमयत्वं प्रदर्शितम्, यः खलु अमृतमयः, तस्य काल-कूटादिसम्बन्धः सम्भावयितुं न शक्यते इति। अस्य—चक्रवर्त्तिनः।

(१२१) अहङ्कारेति।—अहङ्कार एव कालकूटं—विषं, तेन दग्धाः, अत एव दुष्टाः। [ "—विषदिग्धदुष्टा" इति पाठान्तरम् ]। दृष्टयः,—दर्शनानि।

(१२२) दर्पेति।—दर्प एव गदः,—रोगः, [ "दर्पगद—" इत्यत्र "गर्व—" इति पाठान्तरम् ] स एव गुरुः,—महान् गरः—विषं, तेन गलस्य—कण्ठस्य, यः ग्रहः,—ग्रहणम्, अवरोधनमित्यर्थः, तेन गद्गदाः,—अस्पष्टाक्षरा इत्यर्थः। [ "—गल-ग्रहगदगद्गदा" इति पाठान्तरम् ]। गिरः,—वाचः।

(१२३) अतिस्मयेति।—अतिस्मयः,—अतिगर्व्व एव, उष्मा—सन्तापः, स एव अपस्मारः,—वातव्याधिविशेषः, तेन विस्मृतं स्थैर्य्यं—निश्चयः येषां तथाभूतानि, अपस्माररोगस्तु सन्तापजादिति अभेदाध्यासबीजं, तेन च धैर्य्यच्युतिरपि भवतीति। स्थानकानि—स्थितयः।

(१२४) उद्दामेति।—उद्दामेन—उत्कटेन, दर्पेण, उत्पादित इति भावः, यो

विक्लवा विकाराः, न (१२५) अभिमानमहासन्निपातनिर्म्मिताङ्गभङ्गानि गतानि, न (१२६) मदार्दितवक्रीकृतौष्ठनिष्ठ्यूतनिष्ठुराक्षराणि जल्पितानि। तथा च,—(१२७) अस्य विमलेषु साधुषु रत्नबुद्धिः, न शिलाशकलेषु। (१२८) मुक्ताधवलेषु गुणेषु

---

दाहज्वरः, तस्य वेगेन—रयेण, विक्लवाः,—व्याकुलाः। विकाराः,—चित्तविकृतयः, मनसो भावान्तराणि इत्यर्थः।

(१२५) अभिमानेति।—अभिमानः,—अहमेव महान् इत्याकारज्ञानमेव, महान् सन्निपातः,—त्रिदोषजनितो व्याधिभेदः, तेन निर्म्मितः,—जनितः, अङ्गानाम्—एकत्र—स्वजनानां, तेषामहङ्कारदर्शनेन विरागोत्पादात्, अपरत्र—अवयवानां, भङ्गः,—विकृतिविशेषः येषु तथाभूतानि। गतानि—गमनानि।

(१२६) मदेति।—मदः,—सौभाग्ययौवनाद्यवलेपजो विकारविशेषः, तथा चोक्तं दर्पणे,—"मदो विकारः सौभाग्ययौवनाद्यवलेपजः" इति, तेन अर्दितः,—पीडितः, आक्रान्त इत्यर्थः, अत एव वक्रीकृतः; यद्वा,—मद एव अर्द्दितः,—वातव्याधिभेदः, तेन वक्रीकृतः; तथा चोक्तं वैद्यके,—"शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगाः। अर्द्दयत्यनिलो वक्त्रमर्द्दितं जनयत्यथ॥ वक्रीभवति वक्त्रार्द्धम्—" इत्यादि, यः ओष्ठः, तस्मात् निष्ठ्यूतानि—निर्गलितानि, निष्ठुराणि—दारुणानि, कर्कशानि वा; अक्षराणि—वर्णाः, कवर्गादय इत्यर्थः येषु तानि; मदवशात् पुरुषस्य यथेच्छं वाक्प्रयोगाद्यदर्शनात् अयथापरुषभाषित्वाच्च तेन मदेन सह वातव्याधेरपि तथाभूतत्वादभेदाध्यासः। जल्पितानि—वचनानि। तथा च—तमेवाथ जानीहि इत्यर्थः।

(१२७) तस्य—चक्रवर्त्तिनः। विमलेषु—अनघेषु, अपापेषु इत्यर्थः; अन्यत्र—निर्म्मलेषु, भास्वरतया सुच्छायेषु इत्यर्थः, साधुषु—सज्जनेषु, रत्नबुद्धिः,—रत्नानि एते इति बुद्धिः,—ज्ञानमित्यर्थः। शिलाशकलेषु—प्रस्तरखण्डेषु, हीरकादिषु इति यावत्, (अत्र हीरकमरकतादिषु इति वक्तव्ये "शिला" इत्यादि पदं साधुषु आदरातिशय्यप्रकटनार्थमिति बोध्य) न, रत्नबुद्धिरिति शेषः। अत्र अप्रश्नतः विमलत्वरूपसाधारणधर्म्मदर्शनात् साधुषु निरूपितायाः रत्नबुद्धेः तथाविधेषु अन्येषु शिलाशकलेषु व्यपोहनात् परिसङ्ख्याऽलङ्कारः; तदुक्तं दर्पणे,—"प्रश्नादप्रश्नतो वाऽपि कथितात् वस्तुनो भवेत्। तादृगन्यव्यपोहश्चेत् परिसङ्ख्या" इति। एवमुत्तरत्र।

(१२८) मुक्ताधवलेषु—मौक्तिकवत् विशदेषु, गुणेषु—विद्याविनयादिषु;

प्रसाधनधीः, न आभरणभारेषु। (१२९) दानवत्सु कर्म्मसु (१३०) साधनश्रद्धा, न करिकटेषु। सर्व्वाग्रेसरे यशसि महाप्रीतिः, न जीवितजरत्तृणे। (१३१) गृहीतकरासु आशासु प्रसाधनाभियोगः, न (१३२) निजकलत्रचर्म्मपुत्रिकासु। गुणवति धनुषि सहायबुद्धिः, न पिण्डोपजीविनि सेवकजने। अपि च,—अस्य (१३३) मित्रोपकरणम् आत्मा, भृत्योपकरणं प्रभुत्वं, पण्डितोपकरणं वैदग्ध्यं,

---

अन्यत्र,—मुक्ताभि. धवलेषु, गुणेषु—सूत्रेषु, मौक्तिकहारेषु इत्यर्थः, प्रसाधनधीः—अलङ्कारबुद्धिः, यद्वा,—प्रसाधनं—प्रकृष्टम् अर्ज्जनं, गुणार्ज्जनमेव अर्ज्जन, न तु धनार्ज्जनम् इति भावः। आभरणभारेषु—भारभूतेषु आभरणेषु—अलङ्कारेषु, कटककुण्डलादिसमूहेषु इत्यर्थः, न, प्रसाधनधीरिति शेषः।

(१२९) दानवत्सु—दानयुक्तेषु, धनदानप्रायेषु इत्यर्थः; अन्यत्र,—मदयुक्तेषु, ("दान गजमदे त्यागे पालनच्छेदशुद्धिषु" इति मेदिनी)।

(१३०) साधनश्रद्धा—निष्पादनानुरागः; अन्यच,—साध्यते अनेन इति साधनं—सैन्य, सेनाङ्गमित्यर्थः, तद्विषयिणी श्रद्धा, सेनाङ्गत्वेन युद्धादिकर्म्मसम्पादनबुद्धिरित्यर्थः। करिकटेषु—हस्तिगण्डेषु, दानवत्सु—मदजलवर्षिषु इत्यर्थः, साधनश्रद्धा—सम्पादनानुराग., न, मदमुचा हस्तिना सङ्ग्रहानुरागो न इत्यर्थः। जीवितजरत्तृणे—जीवनरूपे जीर्णे—क्षणभङ्गुरे इति भावः, तृणे महाप्रीतिः,—महाननुराग, न इत्यर्थः।

(१३१) गृहीतेति।—गृहीतः करः,—स्वग्राह्यो भागः याभ्यः तथाविधासु; अन्यत्र,—गृहीतः,—धृतः, करः,—पाणिः यासां तासु; आशासु—दिक्षु, चेतसः अनधिगतविषयतृष्णासु वा, प्रसाधनाभियोगः,—वशीकरणप्रयास रञ्जनानुरागो वा। ["प्रसाधनाभियोग." इत्यत्र "प्रसाधनताऽभियोगः" इति पाठान्तरम्]।

(१३२) निजेति।—निजकलत्राणि—स्वीयभार्य्याः, [न तु परकीया इति ध्वनिः] तान्येव चर्म्मपुत्रिकाः,—चर्म्माच्छादितपुत्तलिकाः तासु, न, प्रसाधनाभियोग इति शेष। गुणवति—मौर्व्वीसमन्विते, अन्यत्र,—विद्याविनयादिसम्पन्ने। पिण्डोपजीविनि—अन्नदानेन भरणीये इति भावः।

(१३३) मित्रोपकरण—सुहृद्रूपम् उपकरणम्—उपकारक वस्तु, आत्मा—स्वस्वरूपम्, आत्मप्रभावेण सर्व्वमसौ संसाधयति, न तु सहायान्तरसाहाय्येन इति

बान्धवोपकरणं लक्ष्मीः, (१३४) कृपणोपकरणम् ऐश्वर्य्यं, द्विजोपकरणं सर्व्वस्वं, (१३५) सुकृतसंस्मरणोपकरणं हृदयं (१३६) धर्म्मोपकरणम् आयुः, साहसोपकरणं शरीरं, (१३७) असिलतोपकरणं पृथिवी, विनोदोपकरणं राजकं, प्रतापोपकरणं प्रतिपक्षः। (१३८) न अस्य अल्पपुण्यैः

---

आत्मैवास्य मित्रमासीदित्यर्थः, न परबुद्धिचालित इति भावः। भृत्योपकरणं—भृत्यानाम् उपकारसाधनं, प्रभुत्व—प्रभावः ; अनुचरादीनां उपकारसम्पादनमेवास्य प्रभुत्वफलम् इति भावः। पण्डितोपकरणं—पण्डितानाम् उपकारसा ं, वैदग्ध्य—विद्यावत्त्व, वैचक्षण्य वा। बान्धवोपकरण—बान्धवानाम् उपकारसाधनं, लक्ष्मीः,—सम्पदित्यर्थः, सम्पद्भिः बान्धवा उपक्रियन्ते इति भावः।

(१३४) कृपणोपकरण—कृपणानां—दीनानाम्, उपकरणम्—उपकारसाधनं, पोषणम् इत्यर्थः, ऐश्वर्य्य—सम्पदित्यर्थः, न हि द्विजातिवदेते सर्वस्वमर्हन्ति, किन्तु दारिद्र्यमोचनोपयोगि इति भाव। अस्य ऐश्वर्य्यं दरिद्राणां दारिद्र्यमोचनार्थं, तेषां पोषणस्यैवौचित्यादिति ता र्यम्। द्विजोपकरणं—द्विजानां—ब्राह्मणानाम्, उपकरणम्—उपकारसाधन, सर्वस्व—सर्वं धनम् ; ब्राह्मणानामुपकारसम्पादनार्थं सर्वस्वमपि असौ दातुं शक्नोतीति भावः।

(१३५) सुकृतेति।—सुकृतस्य—कृतोपका स्य, संस्मरण—सम्यक् स्मरणं, तत उपकरणम्—उपकारक, हृदयं—चित्तम्, कृतज्ञोऽयमिति भाव.।

(१३६) धर्म्मोपकरण—धर्म्मोपार्ज्जनसाधनमित्यर्थः, आ ः,—जीवनकाल इत्यर्थः, धर्म्मार्ज्जनार्थमेवायं जीवति इति भावः। साहसोपकरण—सहसा—प्रागविविच्य बलेन क्रियमाणं कर्म्म साहस, तस्य उपकरणम्—उपकारसाधनम्।

(१३७) असीति।—असिलता—खड्गयष्टिः, तस्याः उपकरणम्—उपार्ज्जनवस्त्वित्यर्थः खड्गबलेनैवानेन पृथिवी आयत्तीकृता इति भावः। विनोदोपकरणं—विनोदस्य—प्रीतेः, उपकरणम्—उपकारसाधन, राजकं—राजचक्रं, राज्ञां समूह इत्यर्थं अनुगतानां राज्ञां साहचर्य्येणैव, धर्म्मानुसारेण राज्यपालनेन वा अयं प्रीतिमनुभवति इति भावः। प्रतापोपकरण—प्रतापस्य—"स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्युक्तलक्षणस्य, उपकरणं—ख्यापनसाधनमिति भावः, प्रतिपक्षः,—शत्रुः, शत्रुवि येनैवास्य प्रतापोपलब्धिरिति भाव।

(१३८) नास्येति।—अल्पपुण्यै,—अधन्यैः, अल्पभाग्यैरिति भाव ("अल्पपुण्यैः"

अवाप्यते सर्व्वातिशायिसुखरसप्रसूतिः पादपल्लवच्छाया" इति। श्रुत्वा च तमेव चन्द्रसेनं समादिशत्,—"कृतकशिपुं विश्रान्तसुखिनम् एनं कारय" इति।

अथ गते च तस्मिन्, (१३९) पर्य्यस्ते च वासरे, (१४०) सङ्घट्टमानरक्तपङ्कजसम्पुटपीयमाने इव क्षयिणि क्षामतां व्रजति बालवायसारुणे पराङ्मुखातपे, (१४१) शिथिलितनिजवाजिजवे (१४२) जपाऽऽपीडपाटले अस्ताचलशिखर-

---

इत्यनेन पादयोः कान्पह्रत्वं व्यज्यते, पुण्यवलादेव तत्प्राप्तेः)। अस्य—सम्राजः, सर्व्वातिशायी—सर्वेभ्य उत्कर्षवानित्यर्थः,यः सुखरसः,—सुखमेव रसनधर्म्मितया रसः,तस्य प्रसूतिः,—उत्पादहेतुः, सुभगानाम् आनन्दास्वादजननीत्यर्थः ; यद्वा,—आनन्दास्वादोत्पत्तिर्यस्याः तथाभूता। पादपल्लवच्छाया—पादपल्लवस्य—चरणकिसलयस्य, छाया—अनातपः, आश्रय इत्यर्थः। अत्र पादपल्लवस्य छायावत्त्वं वहूनां जनानामाश्रयणीयत्वात् उपचर्य्यते। कृतकशिपुं—रचितशयनीयम्, यद्वा,—सम्पादितभोजनाच्छादनव्यापारम्, तथा चोक्तं,—"भोजनाच्छादने सह्गिरुभे कशिपुरुच्यते" इति। [ "कृतकशिपुम्" इत्यत्र "कृतसेवम्" इति पाठान्तरम् ]।

(१३९) पर्य्यस्ते—अवसिते।

(१४०) सङ्घट्टमानेति।—सङ्घट्टमानः,—सम्मीलन्,यः रक्तपङ्कजसम्पुटः,—रक्तपद्मरूपसमुद्गकः, तेन पीयमाने इव—ग्रस्यमाने इव,क्षयिणि—क्षयोन्मुखे। क्षामता—क्षीणता, व्रजति—गच्छति,वासरे—दिवसे। बालवायसारुणे—बालः,—सद्योजातः, यो वायसः,—काकः, तद्वत् अरुणः,—रक्तवर्णः तस्मिन्। पराङ्मुखातपे—पराङ्मुखाः,—विमुखतामापद्यमानाः, आतपाः,—मयूखाः यस्य तथोक्ते। [ "बालवायसारुणे पराङ्मुखातपे"इत्यत्र "बालवायसास्यारुणे अपराह्लातपे" इति पाठान्तरे,—बालवायसस्य आस्यवत्—मुखवत् अरुणे इत्यर्थः ]। बालवायसास्यस्य पदरुणिमयोगात् तेन अस्ताचलगमनोन्मुखरवेः सादृश्यस्य सुखावबोधात् बाह्यतश्च विम्लानायमानायाः दिशः साम्यं सुघटमेवेति ज्ञेयम्।

(१४१) शिथिलितेति।—शिथिलितः,—खर्वीकृत इत्यर्थः, [ अशिथिलः शिथिलः कृत इति च्व्यर्थे श्यणादित्वात् क्तौ निष्ठाया रूपमेतत् ] निजानां वाजिनाम्—अश्वानां, सप्तानामिति भावः, जवः,—वेगः येन तथोक्ते।

(१४२) जपेति।—जपा—सूर्य्यप्रियपुष्पभेदः, तस्य आपीडः,—स्तवकः, तद्वत्

स्खलिते खञ्जतीव कमलिनीकण्टकक्षतपादपल्लवे पतङ्गे, (१४३) पुरः परापतति प्रेङ्खदन्धकारलेशलम्बालके शशिविरह-शोकश्यास इव श्यामामुखे, कृतसन्ध्योपासनः शयनीयम् अगात्; अचिन्तयच्च एकाकी,—"किं करोमि? (१४४) अन्यथा सम्भावितोऽस्मि राज्ञा। निर्निमित्तबन्धुना च सन्दिष्टमेवं कृष्णेन। कष्टा च सेवा, विषमञ्च भृत्यत्वम्, अतिगम्भीरं महत् राजकुलम्;

---

पाटले—रक्ते। अस्ताचलशिखरस्खलिते—पश्चिमाचलचूड़ाऽवलम्बिनि इत्यर्थः; अस्तमनोन्मुखस्य रवेः मरीचीनां चयात् गतेर्मान्द्यमनुभूयते इति तस्य शिखरस्खलितत्वं सम्भावितम्; अत एव खञ्जतीव—खञ्ज इव आचरतीव, [ खञ्जशब्दादाचारार्थे क्वौ लटि प्रयोगः ] स्खलतीवेत्यर्थः, अस्ताचलस्य उपलविषमत्वात् बन्धुरभूमौ स्खलनात् तन्नस्य खञ्जप्रायत्वमुत्प्रेक्षितमिति। कमलिनीति।—कमलिन्याः कण्टकैः क्षतः,—विद्धः पादपल्लवः,—चरणकिसलयः, किरणविस्तरश्च यस्य तथाभूते, पतङ्गे—सूर्य्ये। [ "पतङ्गौ पक्षिसूर्य्यौ च" इत्यमरः। नायके नायिकाम् अभिगच्छति नायिकायाः प्रणयकोपजकृतकप्रहारविशेषेण चरणक्षतिसम्भवात् नायकस्य खञ्जत्वमुपपद्यते इति च हठकामुकव्यवहारप्रतीतेः समासोक्तिरलङ्कारोऽत्र ध्वन्यते ]।

(१४३) पुरः,—पूर्वस्यां दिशि इत्यर्थः, परापतति—आगच्छति। प्रेङ्खदिति।—प्रेङ्खन्तः,—आविर्भवन्तः, अन्धकारलेशाः,—तिमिरविन्दवः एव, लम्बाः,—लम्बमानाः, अलकाः,—चूर्णकुन्तला यस्मिन् यस्य वा तथाभूते,यथा पतिवियोगविधुरा हि सती रमणी मुक्तां वेणिं विदधती पतिमेव नियतं मनसि अनुध्यायन्ती तिष्ठति इति दृश्यते, तथैव निशाऽपि पत्युः निशाकरस्य विरहकृशा मुक्तवेणिरिव निशामुखे अदृश्यतेति उत्प्रेक्षितम्; अलकानां मुक्तत्वादेव तेषां मुखाद्यङ्गेषु प्रसृतत्वं वेदितव्यम्। शशीति।—शशिनः,—चन्द्रस्य, पत्युरिति भावः,विरहेण—विच्छेदेन, यः शोकः,—दुःखं,तेन श्यामे इव—मलिने इव। श्यामामुखे—श्यामा—रजनी, ("श्यामा स्यात् शारिवा निशा"इत्यमरः) "शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे च सुखशीतला। तप्तकाञ्चनवर्णाभा सा श्यामा परिगीयते॥" इत्युक्तलक्षणा स्त्री च, तस्याः मुखे—प्रारम्भे, वदने च; अत्र श्यामायां वराङ्गनायां श्यामत्वारोपः अन्धकारस्य अलकत्वारोपे निमित्तमिति श्लिष्टपरम्परितरूपकमलङ्कारः।

(१४४) अन्यथा—विरुद्धप्रकारेण इत्यर्थः। सम्भावितः,—तर्कितः। निर्निमित्तबन्धुना—अकारणमित्रेण। सेवा—परिचर्य्या, राज्ञ इति शेषः, कष्टा—कष्टकरी

(१४५) न च तत्र मे पूर्व्वजप्रवर्त्तिता प्रीतिः, न कुलक्रमागता गतिः, न उपकारस्मरणानुरोधः, न (१४६) बालसेवास्नेहः, न गोत्रगौरवं, न पूर्व्वदर्शनदाक्षिण्यं, न (१४७) प्रज्ञासंविभागोपप्रलोभनं, न (१४८) विद्याऽतिशयकुतूहलं, न आकारसौन्दर्य्यादरः, न सेवाकाकु-कौशलं, (१४९) न विद्वद्गोष्ठीबन्धवैदग्ध्यं, (१५०) न वित्तव्ययवशीकरणं

---

इत्यर्थः। विषमम्—असहनीयं, वोढुमशक्यत्वादतिकठिनमित्यर्थः, भृत्यत्व—भृत्यभावः। अतिगभीरं—दुर्ज्ञेयस्वभावमिति भावः।

(१४५) पूर्वजेति।—पूर्वजैः,—पितृपितामहादिभिः, प्रवर्त्तिता—जनिता, प्रीतिः,—प्रणयः। कुलक्रमागता—वंशपरम्पराप्राप्तेत्यर्थः। गतिः,—गमनागमन-नियमः, स्वीकृतोऽभ्युपायः वा, राजसेवैव मम वंशपरम्पराऽवलम्बिता वृत्तिर्न इत्यर्थः। उपकारस्मरणानुरोधः,—राजकुलेन कदाचित् मम उपकारः कृतः, तस्य स्मरणं, तदनुरोधः,—तद्बाध्यता, न, अस्तीति शेषः, प्रत्युपकारकरणार्थमिति भावः।

(१४६) बालसेवास्नेहः,—बाल्यात्प्रभृति सेवानिमित्त ममत्वम्। गोत्रगौरवं—गोत्रस्य—कुलस्य, मदीयस्य इति भावः, गौरवं—सम्मानन, राजसेवया इति भावः, प्रत्युत अगौरवमेव इति भावः। पूर्वदर्शनदाक्षिण्य—पूर्वं दर्श —साक्षात्कारः, परिचयो वा, राज्ञ इति शेषः, तेन दाक्षिण्य—सारल्यं, रा॰व इति यावत्।

(१४७) प्रज्ञेति।—प्रज्ञायाः,—बुद्धेः, प्रकृष्टज्ञानस्य वा, संविभागः,—समा-लोचन, तस्य उपप्रलोभन—लाभोपायसाधनमित्यर्थः, अनवरतबुद्धिपरिचालनेन तस्या उत्कर्षसाधनाशा इति भावः।

(१४८) विद्याऽतिशयकुतूहलम्—अतिशायिनी विद्या मे भविष्यति इति कुतूहलम्—औत्सुक्यम्। आकारसौन्दर्यादरः,—आकारस्य—अवयवस्य, सौन्दर्य्ये—सौन्दर्य्यवर्द्धने प्रयत्ने, आदरः,—यत्नः। सेवाकाकुकौशल—सेवाया यः काकुः,—शोकाभीत्यादिजनितो ध्वनिविकारः, ["काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः" इत्यमरः। इह तु काकुशब्देन वक्रोक्तिर्लक्ष्यते] तस्य कौशल - पा , न मे अस्तीति भावः।

(१४९) विद्वदिति।—विदुषां गोष्ठी—समाजः, तस्या बन्धे—बन्धने आवर्त्ती-करणे इति यावत् वैदग्ध्य—नैपुण्य, न, आवश्यकमिति शेषः।

(१५०) वित्तेति।—वित्तस्य—धनस्य, व्ययः, तस्य वशीकरण—बाध्यता, न, अस्तीति शेषः, राजसेवाया प्रचुर वित्त लभ्यते, ममापि तस्य व्ययः आवश्यक इत्यपि

(१५१) न राजवल्लभपरिचयः। अवश्यं गन्तव्यम्। सर्व्वथा भगवान् पुरारिः भुवनगुरुः गतस्य मे सर्व्वं साम्प्रतमाचरिष्यति" इति अवधार्य्य गमनाय मतिम् अकरोत्।

(१५२) अथान्यस्मिन् अहनि उत्थाय, प्रातरेव स्नात्वा, धृतधवलदुकूलवासाः, गृहीताक्षमालः, प्रास्थानिकानि सूक्तानि मन्त्रपदानि च बहुशः समावर्त्त्य, देवदेवस्य विरूपाक्षस्य (१५३) क्षीरस्नपनपुरःसरां सुरभिकुसुमधूपगन्ध-ध्वजवलिविलेपनप्रदीपकबहलां विधाय पूजां, परमया भक्त्या

---

हेतुर्न इत्यर्थः, व्ययबाहुल्यहेतुकधनाभावोऽपि मे नास्तीति भावः; यद्वा,—वित्तानां—धनानां, व्ययः, विनियोगः, तेन वशीकरणं—मम वश्यतानयनं, प्रचुरधन-व्ययेनापि निस्पृहस्य मम वश्यतासिद्धिः न हि सम्भवतीति भावः।

(१५१) राजवल्लभपरिचयः,—राज्ञो वल्लभः,—प्रियः, अहमिति भावः, तस्य परिचयः,—प्रकटनं, न, प्रयोजकमिति शेषः। अवश्यमिति।—अत्र "तथाऽपि" इति पदमूहनीयम्, यद्यपि तत्र गमने मम एतेषु कोऽपि हेतुर्नास्ति, तथाऽपि अवश्यमेव गन्तव्यम्, तत्रापि हेतुश्च प्रागुक्तनिर्निमित्तबन्धोः कृष्णस्य सन्देशः, यतः कृष्णेन सन्दिष्टम्, अतः अवश्यमेव गन्तव्यम् इति भावः। पुरारिः,—त्रिपुरारिः, महादेवः इत्यर्थः। ["पुरारिः" इत्यत्र "पुरारातिः" इति पाठान्तरम्]। गतस्य—राजकुलं प्रस्थितस्य इत्यर्थः। साम्प्रतं—समुचितम्।

(१५२) अथेत्यादि।—"अथ अन्यस्मिन्नहनि" इत्यस्य "प्रीतिकूटात् निरगात्" इत्युत्तरेण सम्बन्धः। धृतधवलदुकूलवासाः,—परिहितशुभ्रपट्टवसनः। गृहीताक्षमालः,—जपमालाधारी। प्रास्थानिकानि—प्रस्थानं प्रयोजनं येषां तानि, प्रस्थानकालकर्त्तव्यानि, सूक्तानि—वैदिकमन्त्रान्, मन्त्रपदानि च—अन्यमन्त्रविशेषांश्च, बहुशः,—पुनः पुनः, समावर्त्त्य—समुच्चार्य, पठित्वा इत्यर्थः। विरूपाक्षस्य—त्रिलोचनस्य, हरस्य इति यावत्।

(१५३) क्षीरेति।—क्षीरेण—दुग्धेन, स्नपनम्—अभिषेचनं, पुरःसरं—पूर्वं यस्याः ताम्। सुरभीति।—सुरभीणि—सुगन्धीनि, कुसुमानि—पुष्पाणि, धूपाः, गन्धाः, ध्वजाः,—पताकाः, वलिविलेपनानि—पूजार्थविलेपनद्रव्याणि; यद्वा—बलयः,—उपहाराः, विलेपनानि—कुङ्कुममृगमदाद्यनुलेपनानि, प्रदीपकाश्च, तैः बहला—भूयिष्ठा ताम्। ["बहलाम्" इत्यत्र "आकुलाम्" इति पाठान्तरम्]।

(१५४) प्रथमहुततरलतिलत्वग्विघटनचटुलमुखरशिखाशिखरं, प्राज्याहुतिप्रवर्द्धितदक्षिणार्च्चिषं भगवन्तम् आशुशुक्षणिं हुत्वा दत्त्वा (१५५) द्युम्नं यथाविद्यमानं द्विजेभ्यः, प्रदक्षिणीकृत्य प्राङ्मुखीं नैचिकीं, (१५६) शुक्लाङ्गरागः, शुक्लमाल्यः, शुक्लवासाः, रोचनाञ्चित-दूर्वाग्रपल्लव-ग्रथित-गिरिकर्णिका-कुसुमकृत-कर्णपूरः,

(१५४) प्रथमेति।—प्रथमं—प्राक्, हुतानां – देवोद्देशेन प्रक्षिप्तानां, तरलानां—चपलानाम्, अग्न्युत्तापेन उत्पततामित्यर्थः, तिलानां त्वचः,—आवरणानि, तासां विघटनेन—पृथक्करणेन, उन्मोचनेन इत्यर्थः, [ "—विघटन—"इत्यत्र "—विचटन—" इति पाठान्तरे,—विभेदेन, दग्धीभवनेनेत्यर्थः ] चटुलाः,—चञ्चलाः, अत एव मुखराः,—पटत्पटदिति शब्दं कुर्व्वाणाः, शिखाः,—ज्वालाः, शिखराणि—शिरोभूषणानि यस्य तथोक्तम्। प्राज्येति।—प्र—प्रकृष्टाभिः, आज्याहुतिभिः,—घृताहुतिभिः, यद्वा,—प्राज्याभिः,- प्रभूताभिः,आहुतिभिः ["प्राज्याहुति—"इत्यत्र"प्र ज्याज्याहुति—"इति पाठे,—प्राज्याभिः,—भूरिभिः,आज्याहुतिभिः, अथवा,— प्राज्यैः,— बहुलैः,आज्यैः आहुतिः ;] प्रवर्द्धिताः,—प्रकर्षेण वृद्धिं नीताः, दक्षिणाः,—दक्षिणदिग्वर्त्तिन्यः, सरला वा, अर्च्चिषः,—शिखा यस्य तथोक्तम्, ("अर्च्चिर्मयूखशिखयोर्न ना" इति मेदिनी) आशुशुक्षणिम्—अनलम्। (" पावकोऽनलः। रोहिताश्वो वायुसखा शिखावानाशुशुक्षणिः॥"इत्यमरः)।

(१५५) द्युम्नं—धनम्। ("—द्युम्नं वित्ते बलेऽपि च" इति मेदिनी)। यथाविद्यमानं—[ विद्यमानमनतिक्रम्य इत्यव्ययीभावः ] यावत् धनं स्थितं, तावत् सर्वमेवेत्यर्थः। एतेनास्य दानशौण्डत्वं प्रदर्शितम्। प्राङ्मुखीं—पूर्वमुखीं, नैचिकीम्—उत्तमां धेनुम्, ("उत्तमा गोषु नैचिकी" इत्यमरः); केचित्तु—"धेनुर्वत्सप्रयुक्ता······ द्विजनृपगणिकाः पुष्पमाला पताका" इत्येतेषु यात्रायां माङ्गलिकत्वेनोक्तेषु गणिकाग्रहणदर्शनात् नैचिकी—नीचजातीया स्त्री, गणिकामित्यर्थः इति व्याख्यानयन्ति।

(१५६) शुक्लाङ्गरागः,—श्वेतचन्दनदिग्धदेहः। रोचनेति।—रोचनया—गोरोचनाख्यमाङ्गल्यद्रव्येण, अञ्चिताः,—रञ्जिताः, दूर्वाणाम् अग्रपल्लवाः, तैः ग्रथितं—गुम्फितं, यत् गिरिकर्णिकाकुसुमम्—अश्वखुरी नाम माङ्गलिकी ओषधिः गिरिकर्णिका, यद्वा,—गिरिकर्णिका—अपराजिता, ("आस्फोता गिरिकर्णी स्यात् विष्णुक्रान्ताऽपराजिता" इत्यमरः) तस्याः कुसुमं, तेन कृतः,—रचितः, कर्णपूरः,—कर्णभूषणं येन तथोक्तः। ["रोचनाञ्चितदूर्वा—" इत्यत्र "रो नाञ्चितदूर्वा—" इति

शिखासक्तसिद्धार्थकः, पितुः कनीयस्या (१५७) स्वस्रा माता इव स्नेहार्द्रहृदयया श्वेतवाससा साक्षादिव भगवत्या महाश्वेतया मालत्याख्यया कृतसकलगमनमङ्गलः, दत्ताशीर्वादः बान्धववृद्धाभिः, अभिनन्दितः (१५८) परिजनजरतीभिः, वन्दितचरणैः अभ्यनुज्ञातः गुरुभिः, अभिवादितैः आघ्रातः शिरसि कुलवृद्धैः, वर्द्धितगमनोत्साहः शकुनैः (१५९) मौहूर्त्तिकमतेन कृतनक्षत्रदोहदः, (१६०) शोभने मुहूर्त्ते हरितगोमयोपलिप्ताजिरस्थण्डिलस्थापितम् असितेतरकुसुममालापरिक्षिप्तकण्ठं पिष्टपञ्चाङ्गुलपाण्डरं मुखविनिहित-

पाठे,—रोचनया चित्रा,—विचित्रवर्णाः, दूर्वाग्रपल्लवा.]। शिखेति।—शिखासु—चूडासु, सक्ताः,—स्थिताः इत्यर्थः, सिद्धार्थकाः,—श्वेतसर्षपा यस्य तथाभूतः।

(१५७) स्वस्रा—भगिन्या। माता इव - जनन्या इव। श्वेतवाससा—शुभ्रवसनपरिधायिन्या इत्यर्थः। महाश्वेतया—सरस्वत्या, "रविसुरदेवतया" इति केचित्। मालत्याख्यया—मालतीनाम्न्या। कृतेति।—कृतम्—अनुष्ठितं, सकलं गमनाय मङ्गलं यस्य तथोक्तः।

(१५८) परिजनजरतीभिः,—परिजनेषु मध्ये या जरत्य,—स्थविराः ताभि। आघ्रातः,—कृताघ्राणः। शकुनैः,—सुनिमित्तभूतपक्षिभि, शुभसूचकदक्षिणनेत्रभुजस्पन्दनादिरूपैर्वा।

(१५९) मौहूर्त्तिकेति।—मुहूर्त्तं जानन्तीति मौहूर्त्तिकाः,—गणका इत्यर्थः, ("—दैवज्ञगणकावपि। स्युर्मौहूर्त्तिक—" इत्यमरः) तेषां मतेन—अभिप्रायेण। कृतेति।—कृतं येषु—अश्विन्यादिषु, यात्रिकेषु इति भाव., दोहदम्—अभिलाषः, गमनाभिप्राय इत्यर्थः येन तथोक्तः, शुभे नक्षत्रे कृतयात्र इति भावः।

(१६०) शोभने—शुभे, प्रशस्ते इति भाव, मुहूर्त्ते - क्षणविशेषे। हरितेति।—हरितेन- अशुष्केण इति यावत्, गोमयेन उपलिप्त - प्रलिप्तं, यत् अजिरम्—अङ्गन, तदेव स्थण्डिल—परिष्कृता भूमिः, तत्र स्थापितः तम्। असितेतरेति।—असितेतराभि,—श्वेताभिः, कुसुममालाभि. परिक्षिप्तः,—परिवेष्टित, कण्ठः,—"काना" इति प्रसिद्धः स्कन्धदेश इत्यथः यस्य तथोक्तम्। ["कर्णम्" इत्यत्र "कण्ठम्" इति पाठान्तरम्]। पिष्टेति।—पिष्टाना—"पिटुली" इति प्रसिद्धाना माङ्गलिकद्रव्याणां,

नवचूतपल्लवं पूर्णकलसम् उदीक्षमाणः, प्रणम्य कुलदेवताभ्यः कुसुमफलपाणिभिः (१६१) अप्रतिरथं जपद्भिः निजद्विजैः अनुगम्यमानः, प्रथमचलितदक्षिणचरणः प्रीतिकूटात् निरगात्।

(१६२) प्रथमेऽहनि घर्मकालकष्टं, निरुदकं, निष्पत्र-पादपविषमं, पथिकजननमस्क्रियमाणं, प्रवेशपादपोत्कीर्ण-कात्यायनीप्रतियातनं, शुष्कम् अपि (१६३) पल्लवित-मिव तृषित-श्वापदकुल-लम्बितलोलजिह्वालतासहस्रैः,

पञ्चाङ्गुलं—पञ्चाङ्गुलाकारः प्रसाधनविशेषः, तेन पाण्डुरः,—शुभ्रः, पञ्चाङ्गुलरञ्जितः पिष्टेन चित्रित इति भावः तम्। ["पाण्डुरम्" इत्यत्र "पाण्डुरम्" इति पाठोऽपि उक्त एवार्थः]। मुखेति,—मुखे, कलसस्य इति भावः विनिहितः,—विशेषेण अर्पितः, ["विनिहित—" इत्यत्र "निहित—" इति पाठान्तरम्] नवः चूतपल्लवः,—आम्रपल्लवः यस्य तथोक्तं, पूर्णकलसः—जलपरिपूर्णकुम्भम्, उद्वीक्षमाणः,—पश्यन्।

(१६१) अप्रतिरथ—नास्ति प्रतिरथः—प्रतिस्पर्धी यत्र तत् यथा तथा, यद्वा, —अप्रतिरथ—सामाख्यवेदभेदः, प्रयाणकालिकमन्त्रविशेषमित्यर्थः जपद्भिः, यात्रायां कोऽपि प्र[illegible] मा भूदिति प्रतिपक्षगमनं यथा भवेत् तथा मन्त्रं जपद्भिरिति निष्कर्षः। निजद्विजैः,—आत्मीयैः विप्रैः। "निजद्विजैः" इत्यत्र निजेति विशेषणेन यात्रायाः दाक्ष्यं प्रकटितम्। प्रीतिकूटात्—तदाख्यात् नगरात्।

(१६२) प्रथमेति। "प्रथमेऽहनि" इत्यस्य "चण्डिकाकाननमतिक्रम्य मल्लकूट-नामानं ग्राममगात्" इत्यनेनान्वयः। तदेव काननं विशिनष्टि, घर्मकालेत्यादिभिः।— घर्मकालकष्ट—घर्मकाले—ग्रीष्मकाले, कष्टं यत्र तत् तथोक्तं; निदाघे कष्टजनकम्, यत निरुदकं—निर्जलम्। निष्पत्रेति।—निष्पत्रैः,—पत्ररहितैः पादपैः,—वृक्षैः विषमं —दुरवगाहं, छायाराहित्यात् असुखप्रदमित्यर्थः। पथिकेति।—पथिकैः,—पान्थैः जनैः नमस्क्रियमाणं—प्रणम्यमानम्। प्रवेशेति।—प्रवेशे प्रवेशारम्भे, यः पादपः,—तरुः, तत्र उत्कीर्णा—खोदिता, कात्यायन्याः,—दशभुजायाः, प्रतियातना—प्रतिकृतिः यत्र तथोक्तम्। ["प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया। प्रतिकृतिरर्चा पुंसि प्रतिनिधिः—" इत्यमरः। "नमस्क्रियमा०, प्रवेशपादपोत्कीर्ण—" इत्यत्र "नम-स्क्रियमाणप्रवेशपादपोत्कीर्ण—"इति पाठे,—नमस्क्रियमाणा प्रवेशपादपोत्कीर्णकात्यायनी-प्रतियातना यस्य तथोक्तम्]।

(१६३) तृषितैः,—पिपासुभिः, श्वापदकुलैः,—हिंस्रप्राणिनिवहैः, लम्बितानि

(१६४) पुलकितमिव अच्छभल्लगोलाङ्गूललिह्यमानमधुगोलचलितसरघासङ्घातैः, (१६५) रोमाञ्चितमिव दग्धस्थलीरूढस्थलाभीरुकन्दलशतैः शनैः चण्डिकाकाननमतिक्रम्य मल्लकूटनामानं ग्रामम् अगात्। तत्र च (१६६) हृदयनिर्विशेषेण भ्रात्रा सुहृदा च जगत्पतिनाम्ना सम्पादितसपर्य्यः सुखम् अवसत्। अथ अपरेद्युः उत्तीर्य्य भगवतीं भागीरथीं (१६७) यष्टिग्रहकनाम्नि वनग्रामके निशाम् अनयत्। अन्यस्मिन् दिवसे स्कन्धावारम् उपमणितारम् अन्वजिरवति कृतसन्निवेशम् आससाद, अतिष्ठच्च नातिदूरे राजभवनस्य।

---

—बहिष्कृतानि इत्यर्थः, लोलाना—चञ्चलाना, सतृष्णाना वा, ("लोलश्चलसतृष्णयोः" इत्यमरः) जिह्वालताना—जिह्वा एव लताः तासां, रसनावल्लीनां, सहस्राणि तैः, पल्लवितमिव—सञ्जातकिसलयमिव, [इत्युत्प्रेक्षा] जिह्वाना किसलयसाम्यादिति भावः।

(१६४) अच्छेति।—अच्छभल्लैः,—भल्लुकैः,गोलाङ्गूलैः,—कृष्णवदनकपिविशेषैश्च,लिह्यमानानि—आस्वाद्यमानानि,यानि मधुगोलानि—मधुचक्राणि,तेभ्यः चलितानाम्—उड्डीयमानाना,सरघाणा—मधुमक्षिकाणा,सङ्घातैः,—समूहैः, पुलकितमिव—कण्टकितमिव।

(१६५) दग्धेति।—दग्धासु—दावाग्निना भस्मीभूतासु, स्थलीषु—अकृत्रिमासु भूमिषु, रूढाना—जातानाम्, अभीरूणां—शतावरीनामौषधिविशेषाणा, कन्दलशतैः,—नवाङ्कुरसमूहैः, ("कन्दल त्रिषु कपालेऽप्युपरागे नवाङ्कुरे" इति मेदिनी) रोमाञ्चितमिव—सञ्जातरोमहर्षमिव।

(१६६) हृदयनिर्विशेषेण—हृदयात् निर्विशेषः,—अभिन्न इत्यर्थः तेन, यद्वा,—हृदयेन निर्विशेष तेन, अभिन्नहृदयेन इत्यर्थः। भ्रात्रा—पैतृष्वेय-मातुलेयादिभ्रात्रा इत्यर्थः, सोदरोपमेण वा इति यावत्, सम्पादितसपर्य्यः,—कृतार्हणः, अनुष्ठितसत्कारः इत्यर्थः। ("पूजा नमस्याऽपचितिः सपर्य्याऽर्च्चाऽर्हणाः समाः" इत्यमरः)।

(१६७) यष्टिग्रहकेति।—यष्टिग्रहकम् इति नाम—आख्यानं यस्य तस्मिन्।[ "यष्टिग्रहक—" इत्यत्र "यष्टिग्रहक—" इति पाठान्तरम् ]। स्कन्धावारं—सैनानिवेशार्थं स्थापितपटमण्डपादिरूपम्। उपमणितारं—मणितारात्यपत्तनसमीपे। अन्वजिरवति—अजिरवती नाम नदी, तामनु अन्वजिरवति, [अव्ययीभावः] अजिरवत्याः नद्याः तीरे इत्यर्थः। कृतसन्निवेशं—कृतस्थिति, स्थापितमित्यर्थः। आससाद—प्राप।

( १६८ ) निर्वर्त्तितस्नानाशनव्यतिकरो विश्रान्तश्च मेखलेन सह याममात्रावशेषे दिवसे भुक्तवति भूभुजि प्रख्यातानां क्षितिभुजां बहून् शिविरसन्निवेशान् वीक्षमाणः, शनैः शनैः ( १६९ ) पट्टबन्धार्थमुपस्थापितैश्च, (१७०) डिण्डिमाधिरोहणाय आहूतैश्च, अभिनवबद्धैश्च, विक्षेपोपार्जितैश्च, कौशलिकोपगतैश्च, नागवीथीपालप्रेषितैश्च, ( १७१ ) प्रथमदर्शन-कुतूहलोपनीतैश्च, दूतसम्प्रेषणप्रेषितैश्च, पल्लीपरिवृढढौकितैश्च

( १६८ ) निर्वर्त्तितेति।—निर्वर्त्तित,—सम्पादित, स्नानाशनयोः,—स्नानभोजनयोः, व्यतिकरः, विधिः येन तथोक्तः। [ "मेखलेन" इत्यत्र "मेखलकेन" इति पाठान्तरम् ]। याममात्रावशेषे—प्रहरमात्रावशिष्टे। भूभुजि—राजनि। प्रख्याताना—प्रसिद्धाना, क्षितिभुजा—राज्ञाम्, अधीनानामिति भावः। बहून्—प्रभूतान्, शिविरसन्निवेशान् —स्थापितपटमण्डपान्।

( १६९ ) "पट्टबन्धार्थम्" इत्यादौ "वारणेन्द्रै श्यामायमान राजद्वारम्" इत्युत्तरेण सम्बन्धः। वारणेन्द्रैरित्युत्तरस्थित पद विशिनष्टि, पट्टबन्धार्थमित्यादिभिः।—पट्टबन्धः,—सिंहासनरचन, तदर्थम् उपस्थापितैः,—आनीतैः, सिंहासनस्य अत्युच्चतया गजेन्द्रैरेव तत्समाधान क्रियते इति भावः, पट्टस्य—फलकविशेषस्य,बन्धनार्थं—द्वारोपरि स्थापनार्थ-मित्यर्थो वा।

( १७० ) डिण्डिमाधिरोहणाय—पटहस्थापनाय,गजेन्द्रस्योपरीति भावः। विक्षेपाः,—कराः राजग्राह्यभागा इत्यर्थः, तथालेन; यद्वा—विक्षेपेण—प्रेरणेन, अधीननृपतिवृन्दैः उपायनार्थमिति भावः, उपार्जिताः,—लब्धाः तैः। कौशलिकोपगतैः—कौशलिकेन—पाटवेन,नैपुण्येनेत्यर्थः,उपगताः,—शिक्षिताः तैः, यद्वा,—कौशलिक—पटुत्वम्,उपगतैः,—प्राप्तैः, शिक्षितयुद्धादिकौशलैरित्यर्थः, [ "कौशलिकागतैश्च" इति पाठान्तरम् ] नागवीथीपालप्रेषितैः,—नागवीथी—हस्त्युत्पत्तिभूः तस्याः पालः,—अध्यक्ष इत्यर्थः, तेन प्रेषिताः,—प्रहिताः तैः।

( १७१ ) प्रथमेति।—प्रथमं दर्शनं, तस्मिन् यत् कुतूहलम्—औत्सुक्यं, तेन उपनीताः,—उपस्थापिताः तैः। दूतेति।—दूताना—राजवार्त्तावहाना, सम्प्रेषणेन —प्रेरणेन, राजभिरिति भावः, प्रेषिताः,—प्रेरिताः, दूतैः सहेति भाव तैः। पल्लीपरिवृढढौकितैः,—जनपदाध्यक्षप्रेषितैः, यद्वा,—पल्ली—व्याधाना क्षुद्रग्रामः, तस्याः

(१७२) स्वेच्छायुद्धक्रीडाकौतुकाकारितैश्च,दीयमानैश्च, आच्छिद्यमानैश्च, मुच्यमानैश्च, (१७३) यामस्थापितैश्च, सर्व्वद्वीपजिगीषया गिरिभिरिव सागरसेतुबन्धार्थम् एकीकृतैः (१७४) ध्वजपटपटुपटहशङ्खचामराङ्गरागरमणीयैः, (१७५) पुष्याऽभिषेकदिवसैरिव कल्पितैः (१७६) वारणेन्द्रैः श्यामायमानम्; (१७७) अनवरतचलितखुरपुटप्रहतमृदङ्गैः नर्त्तयद्भिरिव राजलक्ष्मीम्, उपहसद्भिरिव (१७८) सृक्कपुटप्रसृतफेनाट्ट-

---

परिवृढः,—प्रभुः, तेन ढौकितैः, व्याधाना पशुबन्धनादिकर्म्मरतत्वात् तैः सङ्गृहीतैः, पश्चात् तदध्यक्षैः उपायनत्वेन प्रेरितैरिति भावः।

(१७२) स्वेच्छेति।—स्वेच्छया, राज्ञ इति भावः, युद्धक्रीडाया यत् कौतुकं—कुतूहलं, तस्मै तेन वा आकारिताः,—आनीताः, आहूता वा तैः। दीयमानैः,—राजभिः उपढौक्यमानैः इत्यर्थः। आच्छिद्यमानैः,—अपसार्य्यमाणैः। मुच्यमानैः बन्धनादिति शेषः। यामस्थापितैः,—प्रहरकालावस्थितैः।

(१७३) सर्वेति।—सर्वेषां द्वीपानां जिगीषया—विजेतुमिच्छया, गिरिभिरिव—पर्व्वतैरिव। सागरेति।—सागराणां सागरेषु वा सेतुबन्धार्थम् एकीकृतैः,—समवेतीकृतैः।

(१७४) ध्वजेति।—ध्वजपटाः,—पताकाः, पटवः,—गभीरनादाः इत्यर्थः, ये पटहाः,—वाद्यभेदाः, शङ्खाः, चामराणि—वालव्यजनानि, अङ्गरागाः,—विलेपनद्रव्याणि, तैः रमणीयाः,—सुदर्शना इत्यर्थः तैः।

(१७५) पुष्याऽभिषेकदिवसैरिव—यत्र पुष्यानक्षत्रयुक्ते दिवसे राजा मङ्गलाऽलङ्कृतः स्नाति असौ पुष्याऽभिषेकदिवसः, तत्र ध्वजादिरम्यवस्तूनि सज्जीक्रियन्ते इति स्थितिः, तादृशैः दिवसैरिव। कल्पितैः,—सज्जितैः।

(१७६) वारणेन्द्रैः,—गजेन्द्रैः, श्यामायमान—कृतान्धकारमिति भावः; अथ च,—श्यामा—रात्रिः, तद्वदाचरति दिवसः इति भावः, तथोक्तम्।

(१७७) "अनवरत"इत्यादौ"तुरङ्गैः तरङ्गायमाणं राजद्वारम्" इत्युत्तरेण सम्बन्धः। तुरङ्गैरिति पदं विशिनष्टि,अनवरतेति।—अनवरतम्—अनिरतं,चलितेन खुरपुटेन प्रहतानि—कुट्टितानि, मृदः,—मृत्तिकायाः,भूमेरित्यर्थः,अङ्गानि, मृदङ्गाः,—मुरजाख्यवाद्यभेदाश्च यैः तथोक्तैः। नर्त्तयद्भिरिव—नृत्यं कारयद्भिरिव,नर्त्तने च मृदङ्गवाद्यमुपयुज्यते इत्युत्प्रेक्षाबीजम्।

(१७८) सृक्केति।—सृक्कपुटेभ्यः,—ओष्ठप्रान्तेभ्यः, ("सृक्कन्" "सृक्क" इति द्वे

हासेन जवजड़जङ्घां हरिणजातिम्, (१७९) आकारयद्भि-रिव सङ्घट्टहेतोः हर्षहेषितेन उच्चैःश्रवसम्, (१८०) उत्पतद्भि-रिव दिवसकररथतुरगरुषा पक्षायमाणमण्डनचामरमालैः गगनतलं तुरङ्गैः तरङ्गायमाणम्; (१८१) अन्यत्र प्रेषितैश्च, प्रेष्यमाणैश्च, प्रेषितप्रतीपनिवृत्तैश्च, (१८२) बहुयोजनगमन-गणनसङ्ख्याऽक्षरावलीभिः इव वराटिकाऽऽवलीभिः घटितमुख-मण्डनकैः तारकितैरिव सन्ध्याऽऽतपच्छेदैः, (१८३) अरुण-चामरिकारचितकर्णपूरैः सरक्तोत्पलैरिव रक्तशालिशालेयैः,

---

श्लेष्मप्रान्तार्थबोधकशब्दद्वयमपि क्लीबे प्रयुज्यते इति दृश्यते, तस्यैवायं प्रयोगः, अमरस्तु न तथा, तथा हि,—"प्रान्ताबोष्ठस्य सृक्कणी" इति) प्रसृतः,—निःसृतः, यः फेनः, स अट्टहासः,—हास्यविशेष इव तेन। जवजडेति।—जवे – सवेगगतौ, जडा—मन्थरा, अशक्तेत्यर्थः, जङ्घा यस्याः तथाविधां, हरिणजाति—मृगविशेषजातिम्।

(१७९) आकारयद्भिरिव—आह्वयमानैरिव, सङ्घट्टहेतोः,—परस्परसम्मेलनहेतोः, सङ्ग्रामहेतोर्वा।

(१८०) दिवसेति।—दिवसकरस्य—सूर्य्यस्य, रथे ये तुरगाः,—अश्वाः, तेभ्यः रुट्—क्रोधः, ईर्ष्येत्यर्थः तया; अत एव पक्षायमाणेति।—पक्षायमाणा—पक्षवदाचरन्ती, मण्डनचामरमाला—भूषणार्थधृतचामरराजिः येषां तथाभूतैः, गगनतलम्—अन्तरीक्षम्, उत्पतद्भिरिव—उड्डीय गच्छद्भिरिव। तरङ्गायमाणं—तरङ्गवदाचरतीति तथोक्तम्।

(१८१) "अन्यत्र" इत्यादौ "क्रमेलककुलैः कपिलायमान राजद्वारम्" इति उत्तरेण सम्बन्धः। तान्येव क्रमेलककुलानि विशिनष्टि अन्यत्रेत्यादिभिः।—अन्यत्र—अन्यस्मिन् प्रदेशे, प्रेषितैः,—प्रहितैः, प्रेष्यमाणैः,—प्रेर्य्यमाणैः, प्रेषितप्रतीपनिवृत्तैः,—आदौ प्रेषिताः, पश्चात् प्रतीप—प्रतिकूलं, निवृत्ताः,—विरताः, प्रतिनिवृत्ता इत्यर्थः तैः।

(१८२) बह्विति।—बहूनि योजनानि यद्गमनं, तस्य गणनाया सङ्ख्याऽक्षरा-ऽऽवल्यः,—गणनचिह्नभूताङ्कसमूहाः ताभिरिव। वराटिकाऽऽवलीभिः,—कपर्द्दक-निवहैः, घटितं—रचितं, मुखानां मण्डनकं—भूषणं येषां तैः, अत एव तारकितैरिव—प्रस्फुटिततारामण्डलैरिव, सन्ध्याऽऽतपच्छेदैः,—सन्ध्याकालिकाऽऽतपखण्डैः।

(१८३) अरुणेति।—अरुणाभिः,—रक्ताभिः, चामरिकाभिः—क्षुद्रचामरैः, रचितः,—कृतः, कर्णपूरः,—कर्णावतंसः येषां तथोक्तैः, अत एव सरक्तोत्पलैरिव—

(१८४) अनवरतझणझणायमानचारुचामीकरघुरुघुरुका-मालिकैः, जरत्कारञ्जवनैरिव रणितशुष्कवीजकोशीशतैः, (१८५) श्रवणोपान्तप्रेङ्खत्पञ्चरागवर्णोर्णाचित्रसूत्रजूटजटा-जालैः कपिकपोलकपिलैः क्रमेलककुलैः कपिलायमानम्; (१८६) अन्यत्र शरज्जलधरैरिव सद्यःस्नुतपयःपटलधवलतनुभिः,

रक्तोत्पलवद्भिरिव, रक्तानां शालीनां—धान्यानां, शालेयानि—क्षेत्राणि तैः, [ "व्रीहि-शाल्योर्ढक्" (५।२।२ पा०) इति सूत्रेण शालीनां भवनं क्षेत्रम् इत्यर्थे शालिशब्दात् ढक्। "क्षे॰ व्रैहेय-शालेय व्रीहि-शाल्यु ... चितम्" इत्यमरः ]।

(१८४) अनवरतेति।—अनवरतम्—अविरतं, झणझणायमानैः,—झण-झणेति अव्यक्तं शब्दं कुर्वद्भिः, चारुभिः,—शोभनैः, चामीकरैः,—काञ्चनैः, तद्घटितैः क्षुद्रगोलकैरिति भावः, घुरुघुरुका—"घुरुघुरु" इत्यव्यक्तं स्वनन्ती, मालिका येषां तैः, अत एव जरत्कारञ्जवनैरिव—शुष्ककमलवनैरिव, [ कारञ्जशब्दस्य कमलार्थक-त्वाभावात् "जरत्काञ्जवनैरिव" इत्येव साधुतया प्रतीयते, जरत्काञ्जवनैः,—शुष्ककमल-वनैः, ("कञ्जं पीयूषपद्मयोः" इति मेदिनी); यद्वा—करञ्जः,—"नाटाकरञ्ज" इति ख्यातः पूतिकः, शुष्कपूतिकाफलसमूहैरिव। रणितेति।—रणितानि—शब्दितानि, शुष्काणि वीजकोशीशतानि—पद्मबीजपूर्णकोषसमूहाः पूतिकबीजपूर्णकोषसमूहा वा येषु तादृशे, शब्दायमानाः क्षुद्राः या पद्मबीजाधाराः पूतिकाबीजाधारा वा तेषां शतानि वा तैरित्यर्थः, ("वीजकोशी वराटकः" इत्यमरः)।

(१८५) श्रवणेति।—श्रवणयोः,—कर्णयोः, उपान्तेषु—प्रान्तभागेषु, प्रेङ्खन्ति—चलन्ति, पञ्चरागवर्णोर्णाभिः,—पञ्चभिः,—पञ्चविधैः, रागैः,—रञ्जनद्रव्यैः, वर्णाः,—चित्राः, रञ्जिता इत्यर्थः, याः ऊर्णाः—मेषादीनां लोमानि ताभिः, चित्राणि—मनोज्ञानि, सूत्रजूटा इव—सूत्रनिचया इव, जटाजालानि—केशरनिवहाः येषां तैः, अत एव कपीति।—कपीनां—वानराणां, कपोलाः,—गण्डाः तद्वत् कपिलाः,—पिङ्गलाः तैः, क्रमेलककुलैः,—उष्ट्रवृन्दैः, ("उष्ट्रे क्रमेलक-मय-महाङ्गाः" इत्यमरः) कपिलायमानं—पिङ्गलायमानम्।

(१८६) "अन्यत्र" इत्यादौ—"आतपत्रषण्डैः श्वेतद्वीपायमानं राजद्वारम्" इत्युत्तरेण सम्बन्धः। तान्येवातपत्रषण्डानि विशिनष्टि, अन्यत्रेत्यादिभिः।—अन्यत्र—अन्यस्मिन् प्रदेशे। सद्य इति।—सद्यः,—तत्क्षणात्, स्नुतानां—क्षरितानां, पयसां—दुग्धानां, पटलवत्—राशिवत्, धवला—शुभ्रा, तनुः,—आकारः येषां तथाभूतैः, अन्यत्र—

(१८७) कल्पपादपैरिव मुक्ताफलजालकजायमानालोकलुप्तच्छायामण्डलैः, (१८८) नारायणनाभिपुण्डरीकैः इव आश्लिष्टगरुड़पत्रैः, (१८९) क्षीरोदोद्देशैरिव द्योतमानविकटविद्रुमदण्डैः, (१९०) शेषफणाफलकैरिव उपरिस्फुरत्स्फीतमाणिक्यखण्डैः, (१९१) श्वेतगङ्गापुलिनैरिव राजहंसोपसेवितैः,

---

अद्य सुतैः,—अचिरनिर्गलितैः, पयसा—जलाना, पटलैः,—समूहैः, धवलाः,—श्वेताश्च, ते तनवः,—क्षीणाश्च तथाभूतैः, अत एव शरज्जलधरैरिव—शारदीयमेघैरिव। अत्र शरद्ग्रहण सद्य सुतपयस धवलतनुत्वबोधनाभिप्रायेणेति बोध्यम्।

(१८७) मुक्ताफलेति।—मुक्ताफलाना—मौक्तिकाना, जालकैः,—मालाभिः, आतपत्र परितः ग्रथितः इति भाव, यद्वा,—तेषा जालकाना—मालाना, जायमानः,—उत्पद्यमान, य आलोक,—उद्योत, प्रभेति यावत्, तेन लुप्त—नाशितं, छायामण्डलम्—अनातपसमूह यैः तथाभूतैः, अन्यत्,—मुक्ताफलाना जालकैः,—समूहैः, कल्पपादपप्रसूतैरिति भाव, अन्यत् समानम्, अत एव कल्पपादपैरिव—कल्पतरुभिरिव।

(१८८) नारायणनाभिपुण्डरीकैरिव—नारायणस्य नाभिसमुत्पन्नश्वेतपद्मे इव, [पुण्डरीकशब्देन तत्सादृश्यमप्युच्यते] आश्लिष्टाः,—ससक्ता, गरुडपत्राः,—तदाख्यरत्नविशेषा, अन्यत्र,—गरुडपक्षिणः पत्रा यत्र तथाभूतैः।

(१८९) क्षीरोदोद्देशैरिव—क्षीरसागरविभागैरिव, शुक्लत्वादिति भावः, द्योतमाना,—दीप्यमाना, विकटा,—बृहन्तः, विद्रुमदण्डा,—प्रवालघटितनालानि येषा तथोक्तैः, अन्यत्र,—द्योतमाना विकटाः,—विषमाः, ऋजु-वक्र-दीर्घ ह्रस्वादिरूपा इत्यर्थः, सुन्दरा वा, विद्रुमदण्डाः,—प्रवालद्रुमा इत्यर्थः यत्र तैः।

(१९०) शेषेति।—शेषस्य—अनन्तनागस्य, फणाफलकैरिव—फणामण्डलैरिव, तस्य श्वेतवर्णत्वात् [इत्युत्प्रेक्षा], उपरीति।—उपरि—शिखरदेशे, स्फुरत्—दीप्यमान, स्फीत—स्थूल, माणिक्यखण्ड—रत्नविशेषशकलं येषा तैः, अन्यत्र,—उपरि—फणाया उपरिभागे, स्फुरत् स्फीतं माणिक्यखण्ड येषु तैः।

(१९१) श्वेतगङ्गापुलिनैरिव—श्वेतानि गङ्गायाः पुलिनानि—सैकतदेशाः तैरिव। राजहंसेति।—राजहंसैः,—राजानः हंसा इव तैः, नृपोत्तमैः, तदाख्यहंसविशेषैश्च, ("राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे" इति मेदिनी) उपसेवितानि—व्यवहृतानि, आश्रितानि च तैः।

(१९२) अभिभवद्भिरिव निदाघसमयम्, (१९३) उपहसद्भिरिव विवस्वतः प्रतापम्, (१९४) आपिबद्भिरिव आतपं, चन्द्रलोकमयमिव जीवलोकं जनयद्भिः, कुमुदमयम् इव कालं कुर्व्वद्भिः, ज्योत्स्नामयमिव वासरं विरचयद्भिः, फेनमयीमिव दिवं दर्शयद्भिः अकालकौमुदीसहस्राणीव सृजद्भिः, उपहसद्भिरिव शातक्रतवीं श्रियं, (१९५) श्वेतायमानैः आतपत्रषण्डैः श्वेतद्वीपायमानम्;

(१९२) निदाघसमय—ग्रीष्मकालम्, अभिभवद्भिरिव—जयद्भिः इव, निदाघकालिकातपनिवारणात् इति भावः।

(१९३) विवस्वतः—सूर्य्यस्य, प्रतापं—प्रभावम्, उपहसद्भिरिव—तिरस्कुर्वद्भिरिव; छायादानेन सूर्य्यातपस्य वैयर्थ्यजननात् इति तात्पर्य्यम्, अथ च प्रतापपदेन भङ्ग्या विवस्वत आरोपितविजिगीषुव्यवहारत्वात् शत्रुमनःसन्तापकारि यश उच्यते।

(१९४) आपिबद्भिरिव—सम्यक् ग्रसद्भिरिव। आतप—प्रकाश, तस्य सर्व्वत एवादर्शनात्। चन्द्रेति।—आतपत्राणामतिधावल्यात् विशालत्वाच्च तद्दर्शने स्वभावधवलस्य चन्द्रलोकस्य भ्रान्तिरुदीयते, अतः जीवलोकस्य चन्द्रलोकमयत्वमुत्प्रेक्षितम्। कुमुदेति।—कुमुदमयं—शरत्समयमिव, काल—ग्रीष्मसमय, तदानीं तत्कालस्यैव प्रवृत्तत्वात् इति बोध्यं, [कुमुदस्य शुक्लत्वात् सर्व्वत्रातिशुभ्रत्वबोधनायेयमुत्प्रेक्षा]। ज्योत्स्नेति।—वासर—दिनं, [वासरे घर्मातिशय्यसम्भावनासत्त्वेऽपि आतपत्रच्छायया तदभावात् स्निग्धत्वाधिक्यप्रकटनार्थं ज्योत्स्नामयत्वमुत्प्रेक्षितम्]। दिवम्—अन्तरीक्षं, फेनमयीमिव—आतपत्राणामत्युज्ज्वलत्वात सुधाधावल्याच्च फेनिलामिव, [इत्युत्प्रेक्षा]। अकाले—असमये, दिवसे इत्यर्थः, कौमुदीसहस्राणि—चन्द्रिकासमूहान्; यद्वा—अकाले—ग्रीष्मकाले, कौमुदीसहस्राणि—"कौ मोदन्ते जना यस्यां नानाभावैः परस्परम्। हृष्टास्तुष्टाः सुखापन्नास्तेन सा कौमुदी मता॥" इत्युक्तलक्षणकार्त्तिकपौर्णमासीसमूहान्, सृजद्भिः,—उत्पादयद्भिः। शातक्रतवी—शतक्रतु,—इन्द्रः, तस्येयं शातक्रतवी ताम्, ऐन्द्रीमित्यर्थः, श्रिय—सम्पदम्, [अतिधावल्ययोगात् उपहासत्वमुत्प्रेक्षितम्]।

(१९५) श्वेतायमानैः,—श्वेता इव आचरन्तीति श्वेतायमानाः तैः, ननु आतपत्राणि स्वत एव श्वेतत्वात् श्वेतपदेन कथमुपमीयते इति चेदवोच्यते,—श्वेतगुणा इव आचरन्तीति तैः, तेन यथा श्वेतगुणयोगात् अन्यत् किमपि द्रव्यं श्वेतायते, तद्वत् एतद्योगात् सितैरित्यर्थः, ["श्वेतायमानैः" इत्यत्र "श्वेतमानैः" इति पाठान्तरम्]

(१९६) क्षणदृष्टनष्टाष्टदिङ्मुखञ्च मुष्णद्भिरिव त्रिभुवनम्, (१९७) आक्षेपोत्क्षेपदोलायितं दिनं गतागतानीव कारयद्भिः, (१९८) उत्सारयद्भिरिव कुनृपकलङ्ककालीं कालेयीं स्थितिं, (१९९) विकचविशदकाशवनपाण्डुरदिशं शरत्समयमिव उत्पादयद्भिः, (२००) बिसतन्तुमयमिव अन्तरिक्षमाविर्भावयद्भिः,

आतपत्रषण्डैः,—छत्रनिवहैः। ["आतपत्रषण्डैः" इत्यत्र "आतपत्रखण्डैः" इति पाठान्तरम्]। श्वेतद्वीपायमानं—श्वेतद्वीपमिवाचरत्। ["श्वेतद्वीपायमानम्" इत्यत्र "श्वेतायमानम्" इति पाठान्तरम्]।

(१९६) "क्षणे—" इत्यादौ "चामराणां सहस्रैर्दोलायमानम्" इति उत्तरेण सम्बन्धः। चामराणां सहस्राणि विशिनष्टि, क्षणेत्य दिभिः।—क्षणेन दृष्टं नष्टं—छन्नञ्च, मन्दमारुतयोगायोगवशादिति भावः, अष्टानां दिशां मुखानि यस्य तादृशं, मुष्णद्भिरिव—अपहरद्भिरिव। ["त्रिभुवनम्" इत्यत्र "भुवनम्" इति पाठान्तरम्]।

(१९७) आक्षेपेति।—आक्षेपः,—प्रसारणम्,उत्क्षेपः —ऊर्द्ध्वे क्षेपणं,ताभ्यां दोलायितं, दिनं—दिवसं, [प्रयोज्ये कर्त्तरि द्वितीया, करोतेः णिजन्तस्य प्रयोज्यकर्तुः कर्म्मत्वस्य पाक्षिकत्वादिति] गतागतानि—यातायातानि, कारयद्भिरिव, [इति क्रियोत्प्रेक्षा]; प्रसारणक्षणे सूर्य्यकिरणादीनामदर्शनात् तदभावक्षणे च दर्शनादिति भावः।

(१९८) कुनृपेति।—कुनृपाः,—कुत्सिता नृपा एव, कलङ्काः,—अपवादाः, अयशोरूपा इत्यर्थः तैः, ["कलङ्कोऽङ्कापवादयोः" इत्यमरः। "कुनृप—" इत्यत्र "कुनृपति—" इति पाठान्तरम्] कालीं—कृष्णवर्णां, मलिनेत्यर्थः तां, कालेयीं—कलेरियं कालेयी तां, कलिसम्बन्धिनीं, स्थितिं—मर्य्यादाम्, आचारमिति यावत्, उत्सारयद्भिरिव—अपनयद्भिरिव।

(१९९) विकचेति।—विकचैः,—प्रस्फुटैः, अत एव विशदैः,—स्वच्छैः, काशवनैः,—काशाख्यतृणारण्यैः, पाण्डुराः,—धवलाः, दिशो य तथाभूतं, शर मयं—शरत्कालम्, उत्पादयद्भिरिव—जनयद्भिरिव, आक्षेपसमये इति भाव, ["उत्पादयद्भिः" इत्यत्र "उपपादयद्भि" इति पा°—प्रतिपादयद्भिः, अवगमयद्भिरित्यर्थः]।

(२००) बिसतन्तुमय—मृणालतन्तुमयम्, अन्तरिक्षं—गगनतलम्, आविर्भावयद्भिरिव—प्रकाटयद्भिरिव, उत्क्षेपसमये इति भावः; श्वेतवालव्यजनानां प्रत्येकं तन्तुप्रायत्वात्।

(२०१) शशिकरशुचीनां चलतां चामराणां सहस्रैः दोलायमानम्, अपि च (२०२) हंसयूथायमानं करिकर्णशङ्खैः, (२०३) कल्पलतावनायमानं कदलिकाभिः, (२०४) माणिक्यवृक्षकवनायमानं मायूरातपत्रैः, (२०५) मन्दाकिनीप्रवाहायमाणम् अंशुकैः, (२०६) क्षीरोदायमानं क्षौमैः, (२०७) कदलीवनायमानं मरकतमयूखैः, (२०८) जन्यमानान्यदिवसमिव पद्मरागबालातपैः, (२०९) उत्पद्यमानापराम्बरम् इव इन्द्रनीलप्रभापटलैः,

---

(२०१) शशीति।—शशिनः,—चन्द्रस्य, कराः,—किरणाः इव, शुचीनि—धवलानि तेषाम्। दोलायमानं—दोलेव आच रतीति तथोक्तम्।

(२०२) करीति।—करिणां—हस्तिनां, श्वेतानामिति भावः, कर्णानां शङ्खोपमानत्वेनेति बोध्यम्, कर्णाः शङ्खा इव तैः, यद्वा,—करिणां कर्णेषु ये शङ्खाः, भूषार्थं विन्यस्ता इत्यर्थः तैः। हंसयूथायमानं—हंससमूहमिवाचरत्।

(२०३) कदलिकाभिः,—पताकाभिः, ("रम्भाहरिणयोः कदली पताकामृगभेदयोः" इति मेदिनी) कल्पलतावनायमानं—कल्पद्रुमवनमिव आचरत्।

(२०४) मायूरातपत्रैः,—मयूरपुच्छनिर्मितच्छत्रैः, माणिक्यवृक्षकाणां—माणिक्यभूषितक्षुद्रतरूणां, वनमिव आचरतीति तथोक्तम्।

(२०५) अंशुकैः,—वसनपरम्पराभिः, पताकात्मकवस्त्रसमूहैरिति यावत्, मन्दाकिन्याः,—स्वर्गङ्गायाः, प्रवाह इव आचरतीति तथोक्तम्।

(२०६) क्षीरोदायमानं—क्षीरोदः,—क्षीरसागरः, स इव आचरतीति तथोक्तं, क्षौमैः,—श्वेतपट्टवसनैः।

(२०७) मरकतमयूखैः,—मरकतानां—हरिन्मणीनां, मयूखाः,—किरणाः तैः, कदलीवनायमानं—रम्भावनमिव आचरत्।

(२०८) पद्मरागबालातपैः,—पद्मरागाणां—"पोखराज" इत्याख्यरत्नभेदानां, बालातपाः,—अरुणालोका इत्यर्थः तैः, जन्यमानः,—उत्पद्यमानः, अन्यो दिवसः तमिव, प्रकृतस्य दिवसस्य आहा रूपैराच्छादितत्वादित्याशयः।

(२०९) इन्द्रनीलेति।—इन्द्रनीलानां—नीलकान्तमणीनां, प्रभापटलैः,—आलोकनिवहैः, उत्पद्यमानं—जन्यमानम्, अपरम्—अन्यत्, अम्बरमिव—गगनमिव।

(२१०) आरभ्यमाणापूर्व्वनिशमिव महानीलमयूखान्धकारैः, (२११) स्यन्दमानानेककालिन्दीसहस्रमिव गरुड़मणिप्रभाप्रतानैः, (२१२) अङ्गाराङ्कितमिव पुष्परागरश्मिभिः, (२१३) कैश्चित प्रवेशमलभमानैः अधोमुखैः चरणनखपतितवदनप्रतिबिम्बनिभेन लज्जया स्वाङ्गानीव विशद्भिः, कैश्चित् (२१४) अङ्गुलीलिखितायाः क्षितेः विकीर्य्यमाणकरनखकिरणकदम्बकव्याजेन सेवाचामराणीव अर्पयद्भिः,

---

(२१०) महानीलेति।—महानीलाना—महतां नीलमणीना, मयूखाः,—कृष्णवर्णाः किरणाः, अन्धकारा इव तैः, आरभ्यमाणा—प्रक्रम्यमाणा, अपूर्वा—अविदितपूर्वा आश्चर्य्या वा, निश्—निशा तामिव, [ निशाशब्दवत् निश्शब्दोऽपि रात्रिवाची दृश्यते, नि—नितरां, श्यति—तनूकरोति व्यापारान् इति व्युत्पत्त्या निपूर्वात् श्यतेः क्विप्रत्ययेन राद्रिलात् रूपसिद्धिः ]।

(२११) गरुडेति।—गरुडमणीना—मरकतमणीना, प्रभाप्रतानैः,—प्रभाविस्तारैः, स्यन्दमानं—वहमानम्, अनेक—बहु, कालिन्द्याः,—यमुनायाः, सहस्रमिव—प्रवाहसमूहमिव इत्यर्थः।

(२१२) पुष्परागाणा—पद्मरागमणीना, रश्मिभिः,—किरणैः, अङ्गाराङ्कितम् इव—प्रज्वलिताग्निशकलवेष्टितमिव। [ "अङ्गाराङ्कितमिव" इत्यत्र "अङ्गारकितमिव" इति पाठे,—अङ्गारकः,—अग्निस्फुलिङ्गः, लोहिताङ्गमङ्गलग्रहो वा, तस्य रक्तवर्णत्वात्, स इव आचरतीति अङ्गारकशब्दादाचारेऽर्थे क्वौ कृते कर्त्तरि क्ते अङ्गारकितः तम्, अग्निस्फुलिङ्गवत् आचरितमित्यर्थः ]।

(२१३) "कैश्चित्"इत्यादौ"शत्रुमहासामन्तैः समन्तादासेव्यमानम्"इत्युत्तरेण सम्बन्धः तानेव विशिनष्टि, कैश्चिदित्यादिभिः।—कैश्चित्—कतिपयैः, प्रवेशमलभमानैः,—अप्राप्नुवद्भिः, अत एव अधोमुखैः,—अवनतमुखैः, चरणेषु ये नखाः, तेषु पतितानां वदनप्रतिबिम्बानां—निजमुखच्छायानां, निभेन—व्याजेन, लज्जया—पराजयजनितया इति भावः, स्वाङ्गानीव—स्वशरीराणीव, विशद्भिः,—तदन्तर्निलीयमानैः, सङ्कुचितकलेवरैः इति यावत्।

(२१४) अङ्गुलीति।—अङ्गुलीभिः, लिखितायाः,—विदारितायाः इत्यर्थः, क्षितेः,—पृथिव्याः, [ अपादाने पञ्चमी ] विकीर्य्यमाणानाम्—उत्क्षिप्यमाणानां, विक्षमराणामित्यर्थः, करनखकिरणानां—हस्तनखमयूखानां, कदम्बक—समूहः, तस्य व्याजः,—

कैश्चित् (२१५) उरःस्थलदोलायमानेन्द्रनीलतरलप्रभापट्टैः स्वामिप्रकोपप्रशमनाय कण्ठबद्धकृपाणपट्टैरिव, कैश्चित् (२१६) उच्छ्वाससौरभभ्राम्यद्भ्रमरपटलान्धकारितमुखैः अपहृतलक्ष्मीशोकधृतलम्बश्मश्रुभिरिव, अन्यैः (२१७) शेखरोड्डयमानमधुपमण्डलैः प्रणामविडम्बनाभयपलायमानमौलिभिरिव, (२१८) निर्जितैरपि सम्मानितैः इव अनन्यशरणैः, अन्तराऽन्तरा निष्पततां प्रविशताञ्च अन्तरप्रतीहाराणाम्

---

छलं तेन, सेवाचामराणि इव—परिचर्य्यार्थबालव्यजनानि इव, अर्पयद्भिः,—ददद्भिः, "वीरभोग्या वसुन्धरा" इत्युक्तेः चितेः वीरकलत्रत्वेन महावीरोऽयं नृपतिरेव त्वयेदानीं चामरग्रहणेन सेव्यः, न तु वयमिति तद्द्वारेण सेवनेच्छा इति भाव।

(२१५) उरःस्थलेति।—उरःस्थलेषु—वक्षःस्थलेषु, दोलायमानानां—लम्बमानानाम्, इन्द्रनीलानां—नीलकान्तमणीनां, तरलानि—चपलानि, स्फुरन्ति इत्यर्थः, यद्वा, —इन्द्रनीलतरलानां—हारमध्यगतेन्द्रनीलमणीनां, ("हारस्य यो मध्यमणिस्तरलः स प्रकीर्त्तित" इति कोष) प्रभापट्टानि—प्रभाफलकानि येषां तैः, अत एव स्वामिनः,—प्रभोः, विजयिन इत्यर्थः, प्रकोपः,—प्रकृष्टः क्रोधः, तस्य प्रशमनाय—शान्त्यर्थम्। कण्ठेति। —कण्ठेषु बद्धानि कृपाणपट्टानि—असिफलकानि यैः तथाभूतैरिव।

(२१६) उच्छ्वासेति।—उच्छ्वासस्य—निश्वासपवनस्य, सौरभेण—सुगन्धेन, भ्राम्यद्भिः,—समन्तात् सञ्चरद्भिः, भ्रमरपटलैः,—अलिवृन्दैः, अन्धकारितम्—अन्धकार इव आचरितं, समाच्छन्नमिति यावत्, मुखं येषां तैः, अत एव अपहृतायाः,—विजयिनृपेण बलपूर्व्वकं गृहीताया इत्यर्थः, लक्ष्म्याः,—राजश्रियः, शोकेन हेतुना धृतानि—रचितानि इत्यर्थ, लम्बानि—लम्बमानानि, श्मश्रूणि यैः तथाभूतैरिव, शोकोद्विग्नानां चौरकर्म्मणि आस्थाऽभावात् दीर्घश्मश्रुलत्वस्य प्रायिकत्वात्।

(२१७) शेखरेति।—शेखरेभ्यः,—शिरोमालिकाभ्य, उड्डीयमानानि—उत्पतन्ति, मधुपमण्डलानि—भ्रमरसङ्घाः येषां तथोक्तैः, अत एव प्रणामेति।—प्रणामे—प्रणत्यां, या विडम्बना—अवमानना, तस्याः भयेन पलायमानाः मौलयः,—धम्मिल्ला येषां तथाभूतैः इव। ("मौली किरीटधम्मिल्लौ" इत्यमरः)।

(२१८) निर्जितैरपि—पराजितैरपि, सम्मानितैरिव—समादृतैरिव, विजेतुर्नीऽनुग्रहातिशयात् इति भावः। अनन्यशरणैः,—अन्याश्रयरहितैः। अन्तराऽन्तरा—

अनुमार्गप्रधावितानेकार्थिजनसहस्राणाम् अग्रयायिनः पुरुषान् अश्रान्तैः पुनः पुनः पृच्छद्भिः,—"भद्र। अद्य भविष्यति? भुक्त्वा स्थाने दास्यति दर्शनं परमेश्वरः? निष्पतिष्यति वा बाह्यां कक्ष्याम्?" इति दर्शनाशया दिवसं नयद्भिः, भुजनिर्जितैश्च शत्रुमहासामन्तैः समन्तादासेव्यमानम्; अन्यैश्च (२१९) प्रतापानुरागागतैः नानादेशजैः महीपालैः प्रतिपालयद्भिः नरपतिदर्शनकालमध्यास्यमानम्, (२२०) एकान्तोपविष्टैश्च जैनैः आर्हतैः पाशुपतैः पाराशरिभिः वर्णिभिश्च सर्व्वदेशजन्मभिश्च जानपदैः सर्व्वाम्भोधिवेलावनवलयवासिभिश्च

---

मध्ये मध्ये। निष्पतता—निर्गच्छताम्। अन्तरप्रतीहाराणाम्—अन्तरे—मध्ये, पुरमध्ये इत्यर्थ, ये प्रतीहाराः,—द्वाररचिणः तेषाम्।' अनुमार्गेति।—मार्गे मार्गे अनुमार्गं—प्रतिपथमित्यर्थः, [वीप्सार्थे अव्ययीभाव] प्रधावितानि अनेकानि अर्थिजनसहस्राणि—याचकसमूहा. तेषाम्, अग्रयायिनः,—अग्रगामिनः, ["अग्रयायिनः" इत्यत्र "अनुयायिनः" इति पाठे—पश्चाद्गामिनः] पुरुषान्—राजकीयजनान्। अश्रान्तैः,—न श्रान्त—श्रान्तिर्येषा तैः, अविरतैरित्यर्थः, ["अश्रान्तम्" इति पाठे—क्रियाविशेषणम्]। भविष्यति? दर्शनमिति शेषः। भुक्त्वा—आहारं कृत्वा। स्थाने—समुचिते प्रदेशे। परमेश्वर,—महाराजाधिराज। निष्पतिष्यति—आगमिष्यति, कक्ष्या—प्रकोष्ठ, ("कक्ष्या प्रकोष्ठे हर्म्यादेः" इत्यमरः)। दिवस नयद्भि—यापयद्भिः। शत्रुमहासामन्तैः,—शत्रवश्च ते महान्तः सामन्ताश्चेति तैः। आसेव्यमानम्—आकीर्य्यमाणम्, उपास्यमानं वा।

(२१९) प्रतापानुरागागतैः,—प्रतापश्च अनुरागश्च ताभ्या हेतुभूताभ्याम् आगता. ते, भयभक्तिसमन्वितैरिति भावः। प्रतिपालयद्भिः,—प्रतीक्षमाणैः। अध्यास्यमानम्—अधिष्ठीयमानम्।

(२२०) एकान्तोपविष्टैः,—एकदेशासीनैः, जैनै,—शाक्यसिद्धमतवर्त्तिभिः। आर्हतैः,—नग्नक्षपणकैः। पाशुपतैः,—पशुपतिर्देवता येषा तैः, शैवैरित्यर्थ। पाराशरिभिः,—पराशरेण प्रोक्तम् अधीयन्ते यैः तादृशैः, पराशरमुनिमतानुवर्त्तिभिः यतिभिरित्यर्थः। वर्णिभि—ब्रह्मचारिभि। सर्व्वदेशजन्मभि,—सर्व्वदेशीयैः। जानपदैः—जनपदवासिभि। ["जानपदैः" इत्यत्र "जनपदैः" इति पाठेऽपि स एवार्थः]।

म्लेच्छजातिभिः सर्व्वदेशान्तरागतैश्च दूतमण्डलैः उपास्यमानं, (२२१) सर्व्वप्रजानिर्म्माणभूमिमिव प्रजापतीनां, (२२२) लोकत्रयसारोच्चयरचितं चतुर्थमिव लोकं, (२२३) महाभारतशतैरपि अकथनीयसमृद्धिसम्भारं, (२२४) कृतयुगसहस्रैरिव कल्पितसन्निवेशं, (२२५) स्वर्गार्बुदैरिव विहितरामणीयकं, (२२६) राजलक्ष्मीकोटिभिरिव कृतपरिग्रहं राजद्वारम् अगात्।

---

सर्वेति।—सर्वेषाम् अम्भोधीनां—समुद्राणां, वेलावनानि—तीरस्थवनभागाः, तेषां वलयं—मण्डलं, तस्मिन् वसन्तीति तथोक्तैः। दूतमण्डलैः,—वार्त्तावहैः, उपास्यमानम्—आश्रीयमाणम्।

(२२१) अत एव सर्वेति।—सर्वासां प्रजानां निर्म्माणभूमिः,—सृष्टिचेत्रं तामिव। प्रजापतीनां—स्रष्टृणाम्; अत्रैव स्थित्वा प्रजापतयो यदि न सृजेयुः, तदा कथं सर्वे एव पदार्थाः कारणभूता इव तत्र दृश्येरन्? इति भावः।

(२२२) लोकेति।—लोकानां—स्वर्गमर्त्त्यपातालानां, त्रयं, तस्य सारोच्चयः,—स्थिरांशराशिः, तेन रचितम्। लोकं—जगत्।

(२२३) महेति।—महाभारतशतैरपि—असङ्ख्यमहाभारतमहाकाव्यैरपि। अकथनीयेति।—न कथनीयः,—अनिर्वचनीय इति भावः, समृद्धीनां—सम्पदां, सम्भारः,—सञ्चयः यस्य तथोक्तमित्यर्थः. महाभारतशतैरपि अस्य द्रव्यसमूहवर्णना कर्त्तुं न शक्यते, तेषामनन्तत्वादिति तात्पर्य्यम्। अत्र प्रतीयमानोत्प्रेक्षा, तद्व्यञ्जकस्य इवादेरदर्शनात्, परन्तु वाच्योत्प्रेक्षाप्रस्तावे तदुपवर्णनस्यैवोचितत्वेन प्रक्रान्तक्रमस्योल्लङ्घनात् भग्नप्रक्रमतारूपदोषः ऊह्यः।

(२२४) कृतयुगसहस्रैरिव—बहुतरसत्ययुगैरिव इत्यर्थः। कल्पितेति।—कल्पितः,—रचितः, अधिष्ठितः इति यावत्, सन्निवेशः,—स्थानं यस्य तथाभूतम्, अनघमिति भावः।

(२२५) स्वर्गार्बुदैरिव—स्वर्गाणाम् अर्बुदैरिव—दशकोटिभि रिव, दशकोटिसङ्ख्यकैः स्वर्गैरिव इत्यर्थः, विहितम्—अर्पितं, कृतमित्यर्थः, रामणीयकं—रम्यत्वं यस्य तथाभूतम्।

(२२६) राजेति।—राज्ञां लक्ष्मीकोटयः ताभिरिव; यद्वा,—राजलक्ष्मीणां—राजश्रीणां, कोटिभिरिव—लक्षशतेनेव, (इह तु अर्बुद-कोटिशब्दौ बहुसङ्ख्योपलक्षणार्थौ बोद्धव्यौ) कृतपरिग्रहं—कृताश्रयम्। ["अगात्" इत्यत्र "अगमत्" इति पाठान्तरम्]।

(२२७) अभ्यजायत च अस्य जातविस्मयस्य मनसि,—"कथमिव इदमियत्प्रमाणं प्राणिजातं जनयतां प्रजासृजां न आसीत् महाभूतानां वा परिक्षयः? परमाणूनां वा परिच्छेदः? कालस्य वा अन्तः? आयुषो वा व्युपरमः? आकृतीनां वा परिसमाप्तिः?" इति। मेखलकस्तु दूरादेव द्वारपाललोकेन (२२८) प्रत्यभिज्ञायमानः "तिष्ठतु तावत् क्षणमात्रम् अत्रैव पुण्यभाक्" इति तम् अभिधाय अप्रतिहतः पुरं प्राविशत्।

अथ स मुहूर्त्तादिव (२२९) प्रांशुना, कर्णिकारगौरेण, (२३०) वीध्रकञ्चुकच्छन्नवपुषा, (२३१) समुन्मिषन्माणिक्य-

---

(२२७) अभ्यजायत—उदपद्यत, ["अभ्यजायत" इत्यत्र "अभवत्" इति पाठान्तरम्]। अस्य—बाणस्य। प्राणिजा —जीवसङ्घम्। प्रजासृजा—प्रजापतीनाम्। महाभूताना—क्षित्यप्तेजोमरुद्वायूना, सृष्ट्युपादानकारणभूतानामिति भाव.। परिच्छेद,—इयत्तयाऽवधारणम्। व्युपरम.,—शेष.। परिसमाप्ति.,—नि.शेषरूपेण व्यय:।

(२२८) प्रत्यभिज्ञायमान.,—सोऽयमिति अवगम्यमान:। पुण्यभाक्—सौभाग्यवान्, भवानिति शेष। ["पुण्यभाक्" इत्यत्र "पुण्यभागी" इति पाठान्तरम्। विदुर्प अस्मिन् कियदल्पवज्ञाशङ्कापरिहारार्थं पुण्यभागित्युक्तम्]। त—बाणम्। अप्रतिहत:,—अनिवारित:। पुर—राजभवनम्। ["पुरम्" इत्यत्र "पुंर." इति पाठे,—भवनानीत्यर्थ:]।

(२२९) "अथ" इत्यादौ "पुरुषेण अनुगम्यमानो निर्गत्य अवोचत्" इत्युत्तरेणान्वय.। पुरप्रवेशानन्तर विषयान्तरवर्णनाभावात्, मुहूर्त्तादिव इत्यनेन कियत्कालक्षेपसहत्वा समनन्तरमेव सन्देशहरस्य प्रत्यागमनेन, पुरुषानुगतत्वेन चास्य विशिष्ट. समादर एव प्रदर्शित इति प्रतीयते। "प्रांशुना" इत्यादीनि "पुरुषेण" इत्यस्य विशेषणानि। प्रांशुना—उन्नतकायेन। कर्णिकार—तदाख्यकुसुम, तद्वत् गौर.,—हरिद्राभ तेन।

(२३०) वीध्रेति।—वीध्रेण—निर्मलेन, विशदेन इत्यर्थ:, ("वीध्रन्तु विमलात्मकम्" इत्यमर.) कञ्चुकेन—वर्मणा, छन्नम्—आहत, वपु,—शरीर यस्य तथाभूतेन।

(२३१) समुन्मिषदिति।—समुन्मिषत्—सम्यक् दीप्यमान, यत् माणिक्य-

पट्टकबन्धबन्धुरशस्तबन्धक्षशावलग्नेन, (२३२) हिमशैलशिला-विशालवक्षसा, (२३३) हरवृषककुदकूटविकटांसतटेन, (२३४) उरसा चपलहृषीकहरिणकुलसंयमनपाशमिव हारं बिभ्रता, (२३५) "कथयतं यदि सोमवंशसम्भवः सूर्य्यवंशसम्भवो वा भूपतिरभूदेवंविधः" इति प्रष्टुमानीताभ्यां सोम-सूर्य्याभ्यामिव श्रवणगताभ्यां मणिकुण्डलाभ्यां समुद्भासमानेन, (२३६) वहद्‌-वदनलावण्यविसरवेणिकाक्षिप्यमाणैः अधिकारगौरवादीय-

पट्टक—मणिमयं राजाधिकारचिह्नं, तस्य बन्धेन—ग्रहणेन इति यावत्, बन्धुरम्—उन्नतानत, ("बन्धुर तून्नतोनतम्" इत्यमर) यत् शस्तं—स्वर्णपट्टिका, काञ्चननिर्म्मित-कटित्रमिति यावत्, तस्य बन्धेन—स्थापनेन, क्षशं—क्षीणम्, अवलग्नं—मध्यं यस्य तेन, ("मध्यमञ्चावलग्नञ्च मध्योऽस्त्री इत्यमरः)।

(२३२) हिमेति।—हिमशैलः,—हिमाद्रिः, तस्य शिलावत् विशाल—प्रशस्तं, वक्षं यस्य तेन।

(२३३) हरेति।—हरस्य वृषः तस्य ककुदं—स्कन्धपृष्ठस्थमांसपिण्डविशेषः, "झुंट्" इति बङ्गीयैराख्यातः, ("व ककुदोऽस्त्रियाम्" इत्यमरः) तस्य कूटं—शिखर, तद्वत् विकटः,—समुन्नतः इत्यर्थः, अंसतटः,—स्कन्धदेशः यस्य तेन।

(२३४) उरसा—वक्षःस्थलेन। चपलेति।—चपलानि—चञ्चलानि, हृषीकाणि—इन्द्रियाणि, एकादशसङ्ख्याकानीति भाव, ("हृषीकं विषयीन्द्रियम्" इत्यमरः) हरिणकुलानि इव—मृगयूथानि इव, तेषां संयमनाय—बन्धनाय, पाशः,—रज्जुः तमिव, हारं बिभ्रता—दधानेन, [एतेनास्य जितेन्द्रियत्वं गम्यते]।

(२३५) कथयतं—कीर्त्तयतं,युवामिति शेषः। सोमवंशसम्भवः,—चन्द्रवंशोत्पन्नः। एवंविधः,—एतत्सदृशः, श्रीहर्षदेवसदृश इति भावः। आनीताभ्यामिति।—अत्र आनयने तस्य प्रभविष्णुता व्यज्यते। सोम-सूर्य्याभ्यामिव—चन्द्र-रविभ्यामिव। श्रवणगताभ्याम्—कर्णधृताभ्याम्। यत्र प्रष्टुमानीयते स श्रवणान्तिकं गच्छति। समुद्भासमानेन—विराजमानेन।

(२३६) वहदिति।—वहता—प्रसरता, ["बहद्वदन—" इत्यत्र "बृहद्वदन—" इति पाठे,—बृहतां—महताम्, अतुलकान्तिमतामित्यर्थः] वदनलावण्याना—मुख-प्रभाणा, विसरः,—विस्तार एव, वेणिका स्रोत, नदीप्रवाह इति यावत्, तया क्षिप्यमाणाः,—निराक्रियमाणाः, ताड्यमाना इत्यर्थः तैः; किन्तु अधिकारस्य—

ज्ञानमार्गैः इव दिनकृतः किरणैः प्रसादलब्धया विकचपुण्डरीकमुण्डमालिकयेव दीर्घया दृष्ट्या दूरादेव आनन्दयता, (२३७) नैष्ठुर्य्याधिष्ठानेऽपि प्रतिष्ठितेन पदे प्रश्रयमिव दर्शयता अवनम्रेण मौलिना पाण्डुरमुष्णीषमुद्वहता, (२३८) वामेन स्थूलमुक्ताफलच्छुरणदन्तुरत्सरुं करकिसलयेन कलयता कृपाणम्, (२३९) इतरेण अपनीततरलतां ताडनीमिव लतां शातकौम्भीं वेत्रयष्टिमुन्मृष्टां धारयता पुरुषेण अनुगम्य-

---

दिनकरतया आधिपत्यविशेषस्य, गौरवात्—सम्माना, दीयमानी मार्गी येभ्यः तथोक्तैः, दिनकृतः,—सूर्यस्य, किरणैः (कर्तृभूतैः), प्रसादः,—प्रसन्नता, मार्गदानजनिता प्रीतिरित्यर्थः, तेन लब्धा—अधिगता तया, विकचपुण्डरीकमुण्डमालिकयेव—प्रस्फुटश्वेतपद्मस्रजेव, पद्मानां दिनकृत्स्वामिकत्वात् इति भावः, दीर्घया—महत्या, विशालया इत्यर्थः, दृष्ट्या—नयनेन, दृष्टिपातेन वा, आनन्दयता—सन्तोषयता।

(२३७) नैष्ठुर्य्याधिष्ठानेऽपि—निष्ठुरस्य भावः नैष्ठुर्य्यं—निर्दयत्वं, तस्य अधिष्ठानम्—आस्पदं तस्मिन्, पदे—अधिकारे, द्वाररक्षणकर्मणि इति यावत्, प्रतिष्ठितेनापि प्रश्रयमिव—विनयमिव, दर्शयता—प्रकटयता। अवनम्रेण—विनतेन, मौलिना—शिरसा, पाण्डुरं—धवलम्, उष्णीषं—शिरोवेष्टनम्, उद्वहता—धारयता। ["प्रश्रयमिव दर्शयता अवनम्रेण" इत्यत्र "प्रश्रयमिवावनम्रेण" इति पाठान्तरं दृश्यते, तत्रान्वयस्तु,—अवनम्रेण मौलिना प्रश्रयमिव पाण्डुरमुष्णीषमुद्वहतेति, प्रश्रयस्य सद्गुणत्वात् तस्य सर्व्वगुणोत्कर्षद्योतनाय शुभ्रोष्णीषसाम्यं प्रदर्शितमिति वेदितव्यम्)।

(२३८) वामेन—सव्येन, करकिसलयेन—पाणिपल्लवेन, स्थूलानि यानि मुक्ताफलानि—मौक्तिकानि, मौक्तिकमाला इति भावः, तेषां यत् छुरणं—विकाशः, तेन दन्तुरः,—सञ्जातदन्त इव दृश्यमानः, त्सरुः,—खड्गस्य मुष्टिदेशः यस्य तथाभूतं, कृपाणं—तलवारं, कलयता—धारयता; तदा तस्य व्यापाराभावात् वामहस्तेन धारणमिति बोध्यम्।

(२३९) इतरेण—दक्षिणेन इत्यर्थः, करेण इति शेषः। अपनीतेति।—अपनीता—नाशिता, तरलता—चापल्यं, दुर्विनीतानां, प्रवेशोद्यतानां वा जनानामिति भावः यया तथोक्ता, वेत्रयष्टिप्रहारभयात् कोऽपि प्रविशन् चापल्यं न करोतीति भावः। "अपनीत—" इत्यादिना यस्य नियमसंस्थापकत्वं प्रदर्श्यते।

मानो निर्गत्य अवोचत्,—"एष खलु (२४०) महाप्रतीहाराणा-मनन्तरश्चक्षुष्यो देवस्य पारियात्रनामा दौवारिकः। समनु-गच्छतु एनम् अनुरूपया प्रतिपत्त्या कल्याणाभिनिवेशी" इति। दौवारिकः समुपसृत्य कृतप्रणामो मधुरया गिरा सविनयम् अभाषत,—"आगच्छत, प्रविशत दर्शनाय, कृतप्रसादो देवः" इति। वाणस्तु,—"धन्योऽस्मि, यदेवम् अनुग्राह्यं मां देवो मन्यते" इत्युक्त्वा तेन उपदिश्यमानमार्गः प्राविशत् अभ्य-न्तरम्।

(२४१) अथ वनायुजैः, आरट्टजैः, काम्बोजैः, भारद्वाजैः, सिन्धुदेशजैः, पारसीकैश्च, शोणैश्च, श्यामैश्च, श्वेतैश्च, पिञ्जरैश्च,

---

ताडनीं—ताड्यतेऽनयेति ता, लता—वल्लीमिव, ["ताडनीमिव लताम्" इत्यत्र "ताडितीमिव लताम्" इति पाठे,—तडित्—विद्युत्, तस्या इयं ताडिती ता वैद्युतिकी, लतामिव, विद्युल्लतामिवेत्यर्थः] शातकौम्भी—काञ्चनी, स्वर्णमयी-मित्यर्थः, (स्वर्णं सुवर्णं कनक ·······तपनीयं शातकुम्भम्········" इत्यमरः)। उन्मृष्टाम्—अतिशयेन विशोधितामित्यर्थः, ("निर्णिक्तं शोधितं मृष्टम्" इत्यमरः) एतेन यष्टेः भास्वरतैव द्योत्यते। वेत्रयष्टिं—वेतसदण्डम् इत्यर्थः।

(२४०) महाप्रतीहाराणा—प्रधानद्वाररक्षिणाम्, अनन्तरः,—अग्रणीरित्यर्थः। चक्षुष्यः,—प्रियदर्शन इत्यर्थः। एनं—दौवारिकं पारियात्रम्। अनुरूपया—समु-चितया, प्रतिपत्त्या—सम्मानेन। कल्याणाभिनिवेशी—कल्याणे—शुभकर्मणि, अभिनिवेश —अवश्यमिदं कर्त्तव्यम् इत्याग्रहसमन्वितः मनःसंयोगविशेषः, सः अस्य अस्तीति तथाभूत, सततशुभानुष्ठानशीलः इत्यर्थः, भवानिति शेषः। "आगच्छत" "प्रविशत" इति बहुवचननिर्द्देशेन अस्यादरातिशय एव प्रतीयते।

(२४१) "अथ" इत्यादौ "तुरङ्गैः आचिता मन्दुरा विलोकयन्" इति उत्तरेण सम्बन्धः। तान् तुरगान् विशिनष्टि, अथेत्यादिभिः।—वनायुजैः,—वनायुदेशीयैः, आरब्यदेश जातैरित्यर्थः। आरट्टजैः—आरट्टदेशीयैः। काम्बोजैः,—तदाख्यदे :। भारद्वाजैः,—भरद्वाजदेशजैः। सिन्धुदेशजैः,—सिन्धुदेशोद्भवैः। पारसीकैः,—पारस्य-देशभवैः। शोणैः,—रक्तवर्णैः, पद्मारुणवर्णैरिति भावः, ("शोणः पद्मारुणः स्मृतः" इति कोषात्)। श्यामैः,—कृष्णवर्णैः। श्वेतैः,—शुक्लवर्णैः। पिञ्जरैः —

हरिद्भिश्च, तित्तिरिकल्माषैश्च, (२४२) पञ्चभद्रैश्च, मल्लिकाक्षैश्च, कृत्तिकापिञ्जरैश्च, (२४३) आयतनिर्मांसमुखैः, अनुत्कटकर्णकोशैः, सुवृत्तश्लक्ष्णसुघटितघण्टिकाबन्धैः, (२४४) यूपानुपूर्वीवक्रायतोदग्रग्रीवैः, (२४५) उपचयश्वयत्स्कन्धसन्धिभिः,

पिङ्गलैः। हरिद्भि,—हरिद्वर्णैः, घासवर्णैरित्यर्थः। तित्तिरिकल्माषैः,—तित्तिरिः,—पक्षिविशेषः, तद्वत् कल्माषाः,—विचित्रवर्णाः तैः, ("चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः)।

(२४२) पञ्चभद्रैः,—पञ्चसु अङ्गेषु, मुखसहितेषु शफेषु चतुर्षु इति भावः, भद्राः,—श्वेता इति पञ्चभद्राः तैः उक्तञ्च, "सिताश्च यस्य वाजिनः शफाः समस्तकं मुखम्। स पञ्चभद्रनामको नृपस्य राज्यसौख्यदः॥" इति। मल्लिकाक्षैः,—"पृथुः स्निग्धा समा चैव मल्लिकाकुसुमप्रभा। राजी यस्य तु पर्यन्ते परितश्चैव तु लोचने॥ स हयो मल्लिकाक्षस्तु दृष्टिपर्यन्ततारकः॥" इत्युक्तलक्षणैः। कृत्तिकापिञ्जरैः,—"तारकाकदम्बकाकारानेकबिन्दुकल्माषितवक्षः। कृत्तिकापिञ्जराः—" इत्युक्तलक्षणैः।

(२४३) आयतेति।—आयतानि—दीर्घाणि, निर्मांसानि—प्रायेणास्थिमयानीति भावः, मुखानि येषां तथोक्तैः, उक्तञ्च तल्लक्षणम्,—"मुखं तन्वायतनतं चतुरस्रं समाहितम्। ऋजु चैवोपदिष्टञ्च परिपूर्णञ्च गम्यते॥" इति। कण्ठेनाप्युक्तं,"—उच्चा अतुङ्गश्चैव शिरा स्नाहिराणं अयश्रणं—" इति। अनुत्कटकर्णकोशैः,—अनुत्कटः,—खर्व इत्यर्थः, कर्णः,—श्रवणेन्द्रियः, कोशः,—मध्यञ्च, यत्र,—कर्णकोशः,—श्रवणपाशः येषां तैः। सुवृत्तेति।—सुवृत्तः,—सुवर्तुलः, श्लक्ष्णः,—चिक्कणः, सुघटितः,—सुनिर्मितः, घण्टिका—क्षुद्रघण्टा, बध्यतेऽत्रेति घण्टिकाबन्धः,—शिरसो ग्रीवायाश्च मध्यभागः, निगाल इत्यर्थः, येषां तथोक्तैः। तादृशनिगालवत्त्वञ्चाश्वानां शुभसूचकम् उक्तम्, यथा,—"ग्रीवाशिरोऽन्तरश्लिष्टो दीर्घवृत्तः समाहितः। नोन्नतो नाञ्चितो जातिदुर्नाशोऽतिविधानतः॥ सुदिग्धोऽनुपदिग्धश्च निगालो गदितः शुभः॥" इति।

(२४४) यूपेति।—यूपः,—यज्ञीयपशुबन्धनकाष्ठभेदः, तस्येवानुपूर्वीम्—आनुरूप्यमित्यर्थः, तत्र वक्रा आयता—दीर्घा, उदग्रा—उन्नता च, ग्रीवा येषां तैः; तदुक्तं,—"ग्रीवा मूलम्बिनी वृत्ता दीर्घा च सुसमाहिता। गले वक्रा विदीर्घा च तथा शिरसि चोयता॥ निगाले स्याच्च निर्मांसा मृद्वी साकुञ्चिता भृशम्। श्लिष्टमांसाग्रवक्रा च तुरगस्य प्रशस्यते॥" इति।

(२४५) उपचयेति।—उपचयेन श्वयन्—स्फीततां गच्छन्, स्कन्धसन्धिर्येषां

(२४६) निर्भुग्नोरःस्थलैः, (२४७) अस्थूलप्रगुणप्रसृतैः, (२४८) लोहपीठकठिनखुरमण्डलैः, (२४९) अतिजवत्रुटनभयात् अनिर्म्मितान्त्राणीव उदराणि वृत्तानि धारयद्भिः, (२५०) उद्यद्द्रोणीविभज्यमानपृथुजघनैः,(२५१) जगतीदोलायमानवालपल्लवैः, कथमपि (२५२) उभयतो निखातदृढभूरिपाशसंयमननियन्त्रितैः,

---

तै, -उक्त,—"स्कन्ध सुपरिपूर्णं स्यात् व्यक्तम स पृथुलिकः। बहुमासाङ्गसश्लिष्टः स्थिरस्तस्य पूरित॥" इति।

(२४६) निर्भुग्नेति।—निर्भुग्नं—स्थूलतया बहिर्निर्गतम्, अथवा रोगादिना कुटिलीकृत, उर स्थल—वक्ष स्थल येषा तैः, उक्तञ्च,—"स्थूलास्थि महदच्छिद्रं पृथुल यच्च निर्बलि। उर ईदृक् प्रशंसन्ति स्थूलक्रोडं महत्तरम्॥" इति।

(२४७) अस्थूलेति।—अस्थूला—स्वल्पमासेत्यर्थ., प्रगुणा—ऋजु, प्रसृता—जङ्घा येषा ते, ("जङ्घा तु प्रसृता" इत्यमर) उक्तञ्च,—"जङ्घे वृत्ते दीर्घे निर्मासे पूजिते निगूढसिरे" इति।

(२४८) लोहेति।—लोहपीठवत् कठिनं खुरमण्डलं—वृत्ताकारखुरचतुष्टयं येषा ते, तदुक्त,—"खुरास्तुरगे वृत्ताश्च ह्रस्वाश्च सुदृढा घना." इति।

(२४९) अतिजवेति।—अतिजवेन—अतिवेगेन, यत् त्रुटन—छेद, तस्मात् भय तस्मात् हेतो, अनिर्मितानि अन्त्राणि—नाडीविशेषा: येषु तथोक्तानि इव, वृत्तानि—वर्त्तुलानि, उदराणि धारयद्भि, तथा चोक्तम्,—"उदर वृत्तमगुरु स्तगत्योपचित तथा। अच्छिद्रह्रस्वग्रतान्पसमकुक्षि च पूजितम्॥" इति।

(२५०) उद्यदिति।—उद्यती—उदयमधिगच्छन्ती, द्रोणी—वाजिना शोभाविशेष, तया विभज्यमानानि—व्यक्तीक्रियमाणानि, पृथूनि जघनानि—कटिपुरोभागा येषा ते, तदुक्त,—"पृष्ठोर कटिपार्श्वस्य मासोत्क र्णनिर्म्मिता। द्रोणिकेति प्रशंसन्ति शोभा वाजिनि पञ्चमी॥" इति।

(२५१) जगतीति।—जगत्या—भूमौ, दोलायमाना: वाला:,—पुच्छलोमानि, पल्लवा इव येषा ते।

(२५२) उभयत इति।—उभयत,—उभयो. पार्श्वयो, निखातः,—प्रोत, अत्युत्कटवेगवत्त्वादिति भाव., दृढ,—कठिन, भूरि:,—प्रभूत, पाशः—रज्जुः, तेन सयमन—बन्धन तेन नियन्त्रिताः—निरुद्धा. तै.।

(२५३) अनायतैरपि पश्चात् पाशबन्धप्रसारितैः काङ्घ्रिभिः आयततरैरिव उपलक्ष्यमाणैः, (२५४) बहुगुणसूत्रग्रथितग्रीवागण्डकैः, आमीलल्लोचनैः, (२५५) दूर्वारसश्यामलफेनलवशबलान् दशनगृहीतमुक्तान् फरफरितत्वचः कण्डूजुषः प्रतीकान् प्रचालयद्भिः, (२५६) सालसवलितबालधिभिः, (२५७) एकशफविश्रान्तिस्रस्तशिथिलितजघनार्द्धैः, निद्रया प्रध्यायद्भिः, (२५८) खलिनहुङ्कारमन्दमन्दशब्दायमानैश्च, (२५९) ताड़ितखुरधरणिरणित-

---

(२५३) अनायतैरपि—पाशबन्धनियन्त्रणात् अविस्तृतावयवैरपि इत्यर्थः, [ "अनायतैरपि" इत्यत्र "आयतैरपि" इति पाठे,—दीर्घैरपि इत्यर्थः ] पश्चात् पाशबन्धेऽपि प्रसारितः,—विस्तारितः, एकः अङ्घ्रिः,—पादः येषां तैः, अत एव आयततरैरिव—अतिदीर्घकायैरिव, उपलक्ष्यमाणैः,—दृश्यमानैः।

(२५४) बहुगुणेति।—बहुगुणैः,—अनेकावृत्तैः, सूत्रैः ग्रथितः,—गुम्फितः, ग्रीवासु गण्डकः,—भूषणभेदः येषां तैः। आमीलल्लोचनैः,—ईषन्निमीलितनेत्रैः। [ "आमीलल्लोचनैः" इति पाठे,—आमीलि—ईषन्मुद्रिते, लोचने येषां तैः ]।

(२५५) दूर्वेति।—दूर्वारसवत् श्यामलाः ये फेनलवाः,—फेनबिन्दवः, तैः शबलान्—चित्रितान्, दशनैः,—दन्तैः, गृहीताः,—आदौ धृताः, पश्चात् मुक्ताः,—त्यक्ताः तान्, फरफरिताः,—पुनः पुनरीषत्कम्पिताः, त्वचः येषां तान्, कण्डूजुषः,—कण्डूतिशालिनः, प्रतीकान्—अङ्गानि, [ "अङ्गं प्रतीकोऽवयवोऽपघन." इत्यमरः ] प्रचालयद्भिः,—कम्पयद्भिः।

(२५६) सालसेति।—सालसं—लघु यथा तथा, वलिताः,—चालिताः, कम्पिता इत्यर्थः, बालधयः,—पुच्छलोमानि येषां तैः।

(२५७) एकशफेति।—एकेन शफेन—खुरेण, या विश्रान्तिः,—स्थितिरिति यावत्, तया स्रस्तं—पर्य्यस्तं, शिथिलितं—निम्नीभूतमित्यर्थः, जघनार्द्धं येषां तैः। प्रध्यायद्भिः,—प्रकर्षेण चिन्तयद्भिः। [ "प्रध्यायद्भिः" इत्यत्र "प्रध्यायद्भिश्च" इति पाठान्तरम् ]।

(२५८) खलिनेति।—खलिनेन—अर्द्धोच्चरितेनेति यावत्, हुङ्कारेण मन्दमन्दं यथा तथा शब्दायमानैः,—नदद्भिः।

(२५९) ताड़ितेति।—ताड़िता—प्रहता, पादेन इति भावः, या खुरधरणिः,

मुखरशिखर-खुरलिखितक्ष्मातलैः, ग्रासमभिलषद्भिश्च, (२६०) प्रकीर्य्यमाणयवसग्रासरसमत्सरोद्भूतक्षोभैश्च, (२६१) प्रकुपित-चण्डचण्डालहुङ्कारकातरतरतरलतारकैश्च (२६२) कुङ्कुम-प्रमृष्टिपिञ्जराङ्गतया सततसन्निहितनीराजनानलरक्ष्यमाणैरिव उपरि विततवितानैः, (२६३) पुरः पूजिताभिमतदेवतैः, भूपालवल्लभैः तुरङ्गैः आचितां मन्दुरां विलोकयन्, (२६४) कुतूहलाक्षिप्तहृदयः किञ्चित् अन्तरम् अतिक्रान्तो हस्तवामेन

—खुराघातेन उच्छ्वासिता भूः, तस्याः रणितेन—शब्देन, मुखरं—सशब्दमित्यर्थः, शिखरम्—अग्रं येषां तादृशाः, खुराः, तैः लिखितं—कुट्टितं, क्ष्मातलं—भूतलं यैः तथाविधैः।

(२६०) प्रकीर्य्येति।—प्रकीर्य्यमाणः,—प्रक्षिप्यमाणः, यः यवसग्रासः,—घासकवलः; तस्य रसे—स्वादे, यो मत्सरः,—अन्यतुरगान् प्रति विद्वेषः, अन्यः कोऽपि तद्ग्रासं नास्वादयत्विति धियेति भावः, तेन उद्भूतः,—जनितः, क्षोभः,—अधैर्य्यमित्यर्थः येषां तैः।

(२६१) प्रकुपितेति।—प्रकुपितः,—क्रुद्धः, अत एव चण्डः,—उग्रः, यः चण्डालः,—अश्वपाल इति यावत्, तस्य हुङ्कारेण कातरतराः,—अतिदीनाः, तरलाः,—चञ्चलाः, तारकाः,—कनीनिकाः येषां तैः।

(२६२) कुङ्कुमेति।—कुङ्कुमैः प्रमृष्टिः,—प्रमार्ज्जनं, तेन पिञ्जराणि—पिङ्गलानि अङ्गानि येषां तद्भावः तत्ता तया हेतुना। सततेति।—सततं—निरन्तरं; सन्निहितेन—संसक्तेन इत्यर्थः, नीराजनानलेन—"यात्रायां वाजिनां नीराजनां क्रियते" इति शास्त्रात् नीराजनाग्निना, रक्ष्यमाणैः तैरिव। उपरीति।—उपरि—ऊर्द्ध्वं, विततः,—विस्तृतः, वितानः,—उल्लोचः येषां तैः।

(२६३) पुर इति।—पुरः,—अग्रतः, पूजिता—अर्च्चिता, अभिमता—अभीष्टा, देवता येषां तैः। ["देवतैः" इत्यत्र "दैवतैः" इति पाठान्तरम्]। भूपालवल्लभैः,—राजप्रियैः। आचितां—व्याप्ताम्, ["आचिताम्" इत्यत्र "आरचिताम्" इति पाठे,—शोभितामित्यर्थः]। मन्दुराम्—अश्वशाला, ("वाजिशाला तु मन्दुरा" इत्यमरः)। विलोकयन्—पश्यन्।

(२६४) कुतूहलेति।—कुतूहलेन—औत्सुक्येन, आक्षिप्तम्—आकृष्टं, हृदयं यस्य तथाभूतः। अतिक्रान्तः,—गतः। हस्तवामेन—हस्तस्य वामभागेन इत्यर्थः।

अत्युच्चतया निरवकाशमिव आकाशं कुर्वाणं, महता कदलीवने (२६५) परिवृतपर्य्यन्तं, (२६६) सर्व्वतो मधुकरमयीभिः मदस्रुतिभिः नदीभिरिव आपतन्तीभिः आपूर्य्यमाणम्; (२६७) आशामुखविसर्पिणा वकुलवनानामिव विकसताम् आमोदेन लिम्पन्तं घ्राणेन्द्रियं, दूरात् अव्यक्ताम् इभधिष्ण्यागारम् अपश्यत्; अपृच्छच्च, —"अत्र देवः किं करोति?" इति। (२६८) असौ अकथयत्, —"एष खलु देवस्य उपवाह्यः, वाह्यं हृदयं, जात्यन्तरित आत्मा, वहिश्चराः प्राणाः, (२६९) विक्रमक्रीड़ासुहृत्, दर्पशात

---

[हस्तवामशब्दौ आप्यक्तता वामहस्तमार्गे इत्यर्थे]। अत्युच्चतया—अत्युन्नततया, निरवकाशमिव—अवकाशशून्यमिव, अभङ्गमिति भावः।

(२६५) परिवृतप॰न्त—वेष्टितप्रान्तम्।

(२६६) मधुकरमयीभिः,—भृङ्गव्याप्ताभि, मदस्रुतिभिः,—हस्तिनां दानवारिनिःसवैरित्यर्थं। आपतन्तीभिः,—आवहन्तीभिः।

(२६७) आशामुखविसर्पिणा—दिङ्मुखविस्तारिणा, सर्व्वत्र प्रसृतेनेत्यर्थः। बकुलेत्यादिना प्राशस्त्यमेव द्योतयति, तदुक्तं,—"मालतीमुक्तपुन्नागबकुलोपमसौरभम्। दानं पिष्टाम्बुसदृश मुत्तक्रेतं तु श॰तलम्॥" इति श्लैष्मिकदानलक्षणम्; एवञ्च प्रकोपसमयेऽपि तथाविधमदवर्णनेन श्लेष्मप्रकृतित्वं प्रकटयति—"श्लेष्मप्रकृतिक श्रेष्ठ भद्रजातिं तथैव च" इति च शास्त्रकृता दर्शितम्। विकसता—प्रस्फुटताम्। आमोदेन—सौरभेण, लिम्पन्तं—पूरयन्तम्। इभधिष्ण्यागारम् इभाना—हस्तिना, धिष्ण्यागारम्—अवस्थानगृहम्, गजवन्धनशालामित्यर्थः। ("धिष्ण्यं स्थाने गृहे भेऽग्नौ" इत्यमर)।

(२६८) असौ—दौवारिक। उपवाह्य,—क्रीडाहस्ती, ["उपवाह्य" स्थ "औपवाह्य" इति पाठेऽपि स एवार्थः। करिषु केचन सान्नाह्या केचिच्च भद्रजातीया ॰विधस्वभावा भवन्ति। अस्य च यद्यपि वक्ष्यमा॰ "विक्रमक्रीडासुहृत्" इत्यनेन "दर्पशात इति यथार्थनामा वारणपति" इत्यनेन च सान्नाह्यत्वमेवोक्तं, तथाऽपि "उपवाह्य" इति कथनेन अर्थद्वयेऽपि औचित्यात् भद्रजातीयश्चायमिति निश्चीयते। वाह्यं—वहिश्चरम्। जात्यन्तरितः,—अन्या जातिं गत, हस्तिजन्म प्राप्तः इत्यर्थः। वहिश्चराः,—वाह्याः।

(२६९) विक्रमेति।—विक्रम एव क्रीडा, तस्या सुहृत्—सहायः। दर्पशातः,

इति यथार्थनामा वारणपतिः। तस्य अवस्थानमण्डपोऽयं महान् दृश्यते" इति। (२७०) स तम् अवादीत्,—"भद्र! श्रूयते दर्पशातः। यदि एवम् अदोषो वा; पश्यामि तावत् वारणेन्द्रमेव; अतोऽर्हसि माम् अत्र प्रापयितुम्; (२७१) अतिपरवान् अस्मि कुतूहलेन" इति। सोऽभाषत,—"भवतु एवम्, आगच्छतु भवान्। को दोषः? पश्यतु तावत् वारणेन्द्रम्" इति।

(२७२) गत्वा च तं प्रदेशं दूरात् एव गम्भीरगलगर्जितार्जितैः वियति चातककदम्बकैः भुवि च भवननीलकण्ठकुलैः कलककाकलकलमुखरमुखैः क्रियमाणकलकोलाहलं, (२७३) विकचकदम्बसंवादिमदसुरासौरभभरितभुवनं,

—दर्पम्—अहङ्कारं, शत्रूणामिति शेषः, शातयति—नाशयति तथोक्तः। यथार्थनामा—अन्वर्थनामा, शत्रूणां दर्पशातनादिति भाव। वारणपतिः,—गजेन्द्रः। तस्य—वारणपतेः, अवस्थानमण्डपः,—वासगृहम्।

(२७०) सः,—बाण.। तं—दौवारिकम्। यदि एवं—दर्पशात इति यथार्थनामेति भावः, अदोषो वा—दर्शने दोषो न भवेत् वा। अत्र—वारणपतेः स्थाने, प्रापयितुं—नेतुम्।

(२७१) अतिपरवान्—अतिशयेन पराधीनः। कुतूहलेन—वारणपतेर्दर्शनौत्सुक्येन। सः,—दौवारिकः।

(२७२) "गत्वा" इत्यादौ "दर्पशातमपश्यत्" इत्युत्तरेणान्वयः। तमेव विशिनष्टि, गम्भीरेत्यादिभिः।—गम्भीरेण—गभीरेण, गलगर्जितेन—कण्ठनिनादेन, बृंहितेनेति यावत्, अर्जितानि—उपस्थापितानि, मेघगर्जनशङ्कोत्पादनादिति भाव. तैः। [ "गर्जितार्जितैः" इत्यत्र "गर्जितोर्जितैः" इति पाठे,—गर्जितेन—बृंहितेन इत्यर्थः, ऊर्जितानि—प्रबलानि, अनेकसङ्ख्यया समुपस्थितानीत्यर्थः तैः ]। वियति—आकाशे। चातकानां कदम्बकानि—सङ्घाः तैः। भुवि—भूतले, भवननीलकण्ठकुलैः,—गृहमयूरवृन्दैः, कलाः,—मधुरास्फुटाः, केकाः,—मयूरवाचः, तासां कलकलेन—कोलाहलेन, मुखराणि—शब्दायमानानि, मुखानि येषां तैः, क्रियमाणः कलः,—मधुरास्फुट, कोलाहल. यत्र तथोक्तम्।

(२७३) विकचेति।—विकचानां—प्रस्फुटानां, कदम्बानां—नीपकुसुमानां,

( २७४ ) कायवन्तमिव अकालमेघकालम्, ( २७५ ) अविरल-मधुविन्दुपिङ्गलपद्मजालकितां सरसीमिव अभ्यवगाढां दशां चतुर्थीम् उत्सृजन्तम्, ( २७६ ) अनवरतम् अवतंसशङ्खैः आमन्द्रकर्णतालदुन्दुभिध्वनिभिः पञ्चमीप्रवेशमङ्गलारम्भमिव गायन्तम्, ( २७७ ) अविरतचलनचित्रत्रिपदीललितलास्यलयैः

---

स्वादिना—अनुकारिणा, मदः,—दान-वारि, स एव सुरा—मद्य, तस्या सौरभेण—सुगन्धेन, भरित—पूरित, भुवन येन तथोक्तम् ।

( २७४ ) कायवन्तमिव—मूर्त्तिमन्तमिव, अकालमेघकालम्—असमयमेघसमयम् । चातककादम्बक-नीलकण्ठकुल-विकचकदम्बसौरभादियुक्तत्वेन नवजलधरश्यामलत्वेन च तस्य मेघकालत्वेनोत्प्रेक्षा ।

( २७५ ) अविरलेति ।—अविरलाः,—घनाः, ये मधुबिन्दवः,—मदवारिकणाः, तैः, अन्यच;—मधुबिन्दवः,—माक्षिककणाः, तैः पिङ्गल—पिञ्जर, पद्मानां—पद्माकाराणा, पद्मे,—तदाख्यकुसुमानाञ्च, जालक—समूह जातमस्यामिति तथोक्ताम्; [ "इतोऽस्य जाति" ( वा० ) इतीतच्-प्रत्यय ] "पद्मक विन्दुजाल स्यात् गात्रक करिणामिति", यथा,—"पद्मस्तिकसस्थानो बिन्दुभिश्च कचैस्तथा। खड्गिताङ्गस्तुषाराभः गाव शक्तिकर करी ॥" इत्युक्तम्, अत एव सरसीमिव—कमलाकरमिव, अभ्यवगाढा—परिणता, चतुर्थीं दशा—मदावस्था, नियतदान-वारिक्षरणात् परिणतगजानां शरीर सच्छिद्रसारकत्वं भवतीति, अत एव "चतुर्थ्यामवगाढाया लेखाबिन्दुभिराचितः" इत्युक्तम्। उत्सृजन्त—त्यजन्त, मदस्राविणां हस्तिना प्रथम शरीरधैर्यसम्पादकौ मदस्रावारम्भ प्रथमावस्था, ततोऽनवरतस्रावो द्वितीयावस्था, तदनु मदवारिणाम् अङ्गेषु क्रमशो गाढता जायते सा तृतीयावस्था, तदनन्तरम् अङ्गेषु पद्माकाराणि मदबिन्दुजालानि बध्यन्ते सा चतुर्थी अवस्थेति बोध्यम् ।

( २७६ ) अनवरतम्—अविरतम्, आमन्द्राः,—ईषद्गम्भीराः, कर्णतालस्य—नियतसञ्चालितश्रवणस्य, दुन्दुभेरिव ध्वनयः,—शब्दाः तैः, तथा अवतसशङ्खैः,—कर्णभूषणीकृतशङ्खैः, पञ्चमी, दशेति भाव, स्वाम्यदशेति यावत्, तस्या प्रवेशः, तस्मिन् मङ्गलारम्भ,—मङ्गलसूचनारम्भसङ्गीतमित्यर्थः तमिव, गायन्त—सङ्कीर्त्तयन्तम् ।

( २७७ ) अविरतेति ।—अविरतेन—अविश्रान्तेन, चलनेन—चालनेनेत्यर्थ, चित्रा—सुदृश्या, या त्रिपदी—पादबन्धनी, एकपदोत्क्षेपेण पादत्रयावस्थितिर्वा, तस्या ललित—सुन्दर मनोज्ञमित्यर्थः, यत् लास्य—नृत्य, तस्य लयाः,—वाद्याद्येकतानताः

दोलायमानदीर्घदेहाभोगतया मेदिनीविदलनभयेन भारमिव लघयन्तं, (२७ ) दिग्भित्तितटेषु कायमिव कण्डूयमानम्, (२७९) आहवाय उदस्तहस्ततया दिग्वारणानिव आह्वयमानं, (२८०) ब्रह्मस्तम्भमिव स्थूलनिशितदन्तेन करपत्रेण पाटयन्तम्, (२८१) अमान्तं भुवनाभ्यन्तरे वहिः इव निर्गन्तुम् ईहमानं, सर्व्वतः (२८२) सरसकिसलयलतालासिभिः लेशिकैः चिरपरिचयोपचितैः घनैरिव विच्छिप्तसशैवलविसविसरशवलसलिलैः सरोभिरिव च आधोरणैः आधीयमान-

तैः। दोलायमानेति।—दे यमान,—पुरत. पश्चाच्चानिश प्रेङ्खन्,दीर्घ,—महान् देहस्य आभोगः,—विस्तारः यस्य तद्भाव. तत्ता तया हेतुना। मेदिनीति।—मेदिन्याः,—पृथिव्याः, विदलन—विदारणमित्यर्थ.,तस्मात् यत् भव तेन भारमिव लघयन्त—लघूकुर्व्वन्तमित्यर्थ.।

(२७८) दिगिति—दिगेव भित्तिः,—कुड्य, तस्याः तटा.,—आभोगा. तेषु। कायमिव—अङ्गमिव, कण्डूयमान—घर्षन्तमित्यर्थ.।

(२७९) आहवाय—सङ्ग्रामाय। उदस्त,—उत्क्षिप्तः, हस्त.,—शुण्ड: येन, ("हस्त. करे करिकरे सप्रकोष्ठकरेऽपि च" इति मेदिनी) तस्य भाव. तत्ता तया हेतुना, दिग्वारणान्—दिग्गजान्, आह्वयमानमिव—स्पर्द्धया आकारयन्तमिव। [ अत्र ह्वयते. युद्धाय स्पर्द्ध पूर्व्वकाह्वानार्थबोधकत्वेन आत्मनेपदम् ]।

(२८०) ब्रह्मस्तम्भ—ब्रह्माण्ड, स्थूल. निशित.,—तीक्ष्णः, दन्त: तेन, करपत्रेण—क्रकचेन, पाटयन्तमिव—दारयन्तमिव, करपत्रमपि स्थूलनिशितदशनं भवति, स्थाणुस्तम्भञ्च भेदयति।

(२८१) भुवनाभ्यन्तरे अमान्त—पर्य्याप्तमलभमानम्, अतिविशालतया वर्त्तितुमशक्नुवन्तमित्यर्थ, अत एव वहिः,—भुवनाभ्यन्तरात् बाह्यदेशे, निर्गन्तुम् ईहमानमिव—चेष्टमानमिव।

(२८२) सरसाः,—रसयुक्ता., किसलयाः,—पल्लवा यासां, तथाविधा. या लताः,—प्रतत्य., ताभि. लसन्ति—राजन्तीति तथोक्तै, लेशिकै.—घासिकै, चिरपरि येन—चिरानुगत्या, उपचितै.,—समाहृतै., घनैरिव—मेघैरिव। विच्छिप्तेति।—विच्छिप्तानि—अर्पितानि, सशैवलाना विसाना—मृणालाना, विसरैण—विस्तरेण, शवलानि—मिश्राणि, सलिलानि यै, तथाभू । आधोरणै.,—हस्तिपालै. ("आधोरणा: हस्तिपका, हस्त्यारोहा.

निदाघसमयसमुचितोपचारानन्दम्, अपि च (२८३) प्रतिगजदानपवनादानदूरोत्क्षिप्तेन अनेकसमरविजयगणनालेखाभिरिव वलिवलयराजिभिः तनीयसीभिः तरङ्गितोदरेण अतिस्थवीयसा हस्तार्गलदण्डेन अर्गलयन्तमिव सकलं सकुलशैलसमुद्रद्वीपकाननं ककुभां चक्रवालम्, (२८४) एकं करान्तरार्पितेन उत्पलाशिन कदलीदण्डेन अन्तर्गतशीकरसिच्यमानमूलं मुक्तापल्लवमिव अपरं लीलाऽवलम्बिना मृणालजालकेन समर सोच्चरोमाञ्चकण्टकितमिव दन्तकाण्डं वहन्तं, (२८५) विसर्पन्त्या च दन्तकाण्डयुगलकस्य कान्त्या सरःक्रीडास्वादितानीव कुमुद-

निपादिनः" इत्यमर.)। आधीयमान',—उत्पाद्यमानः, निदाघसमयस्य—ग्रीष्मकालस्य, समुचितेन—उपयुक्तेन, उपचारेण—परिचर्य्यया, आनन्द,—सन्तोषः यस्य तम्।

(२८३) प्रतिगजेति।—प्रतिगजानां—प्रतिद्वन्द्विहस्तिनां, दानपवनस्य—मदसौरभवाहिनो मरुत इत्यर्थः, आदानेन—ग्रहणेन, आघ्राणेनेत्यर्थ', दूरं यथा तथा, उत्क्षिप्तः,—उन्नत तेन, तेषां जिगीषयेति भाव। अनेकेति।—अनेकेषां—बहूनां, समराणां—सङ्ग्रामाणां, विजया', तेषां गणना—सङ्ख्यानं, तस्याः लेखाभिरिव—लिपिभिरिव, वलिवलयराजिभि,—वलयाकारवलिश्रेणीभि, तनीयसीभि,—अतिक्षुद्राभिरित्यर्थः। तरङ्गित—भङ्गिमत्, उदरम्—अभ्यन्तरभाग यस्य तथोक्तेन, अतिस्थवीयसा—अतिस्थूलेन, हस्तार्गलदण्डेन - शुण्डरूपार्गलदण्डेन, अर्गलयन्तमिव—निरुन्धन्तमिव। ककुभा चक्रवाल—दिङ्मण्डलम्।

(२८४) एक दन्तकाण्डमित्यन्वयः। करान्तरार्पितेन – करस्य—शुण्डस्य, अन्तरे—मध्ये, अर्पित',—दत्त, आधोरणेनेति भाव तेन, उत्पलाशिन—उद्गतपत्रेण, कदलीदण्डेन—रम्भास्तम्भेन हेतुना अन्तर्गतै शीकरै',—अम्बुकणै, सिच्यमानं मूल यस्य तथोक्तम्। मुक्तापल्लवमिव—मुक्ताफलकिसलयमिव, अपर दन्तकाण्डमित्यनुषङ्ग। ["अपरम्" इत्यत्र "परम्" इति पाठे,—अन्यमित्यर्थ]। लीलाऽवलम्बिना—लीलया अवलम्बते इति तथोक्तेन, मृणालजालकेन—मृणालनिचयेन। समरेति।—समरे—युद्धे, यो रस,—राग, तेन उच्चा,—उद्गता, रोमाञ्चा एव कण्टका, जाता अस्येति तथोक्तमिव, दन्तकाण्ड—दशनस्तम्भ, वहन्त—दधानम्।

(२८५) विसर्पन्त्या—विसरन्त्या, दन्तकाण्डयुगलकस्य कान्त्या—प्रभया। सरः

वनानि बहुधा वमन्तं, (२८६) निजयशोराशिमिव दिशाम् अर्पयन्तं, (२८७) कुकरिकीटपाटनदुर्ललितान् सिंहानिव उपहसन्तं, (२८८) कल्पद्रुमदुकूलमुखपटमिव च आत्मनः कलयन्तं, (२८९) हस्तकाण्डदण्डोद्धरणलीलासु च लक्ष्यमाणेन रक्तांशुकसुकुमारतलेन तालुना कवलितानि रक्तपद्मवनानि इव वर्षन्तम्, अभिनवकिसलयराशीनिव उद्गिरन्तं, (२९०) कमलकवलपीतं मधुरसमिव स्वभावपिङ्गलेन वमन्तं चक्षुषा, (२९१) चूतचम्पकलवलीलवङ्गकक्कोलवन्ति एला-

क्रीडेति।—सरसि या क्रीडा—विहारः, तत्र आस्वादितानि—भुक्तानि तानीव, [इत्युत्प्रेक्षा] कुमुदवनानि—कैरवसङ्घान्, बहुधा—अनेकधा, वमन्तम्—उद्गिरन्तम्।

(२८६) निजयशोराशिमिव—स्वीयकीर्त्तिसमूहमिव, दिशाम् अर्पयन्तं—दिक्षु विक्षिपन्तम्। दन्तयोर्वर्णप्राशस्त्यमाह,—"पयःकुमुदकुन्दाभे केतकीकुमुदद्युती। मृगाङ्ककिरणालोकौ कीर्त्तिकल्याणकारकौ॥" इति।

(२८७) कुकरीति।—कुत्सिताः,—दुर्बला इति यावत्, करिणः,—हस्तिनः, ते एव कीटाः,—क्षुद्रप्राणिभेदाः, तेषां पाटनेन—सहननेन, दुर्ललिताः,—दृप्ताः तान्।

(२८८) कल्पद्रुमेति।—कल्पद्रुमस्य दुकूलं—श्वेतपट्टवसनं, तदेव मुखपटः,—मुखाच्छादनवस्त्रं तमिव, आत्मनः,—स्वस्य, कलयन्तं—धारयन्तमित्यर्थः।

(२८९) हस्तेति।—हस्तः,—शुण्ड एव, काण्डदण्डः,—स्तम्भयष्टिः, तस्य उद्धरणानि—उत्तोलनान्येव, लीलाः तासु, लक्ष्यमाणेन—दृश्यमानेन, रक्तांशुकसुकुमारतलेन—रक्तवस्त्र तु रक्तवर्णसुकोमलतलेन, तालुना—तालुदेशेन हेतुना, उक्तञ्च—"रक्तोष्ठतालुरसनम्" इति। कवलितानि—भक्षितानि। वर्षन्तं—वमन्तम्। अभिनवकिसलयराशीनिव—नवपल्लवनिवहानिव।

(२९०) स्वभावपिङ्गलेन—सहजदीपशिखातुल्यवर्णेन, चक्षुषा, उक्तञ्च,—"अग्निसूर्य्यसमाभासे कालविङ्काक्षसन्निभे। प्रसन्नमधुपिङ्गे च स्थिरे चामीलने तथा॥ अपरिस्राविणी चैव कुशाग्निनिभभास्वरे। नेत्रे शस्ते समे स्निग्धे दीर्घे चाविलपक्ष्मणी॥" इति। कमलानां कवलेन—ग्रासेन, पीतं मधुरसमिव—मकरन्दमिव। वमन्तं—वर्षन्तम्।

(२९१) चूतेत्यादिना प्राशस्त्यमाह, यदुक्तम्,—"उभयर्त्तुतिरप्येष विवर्णो

लतामिश्रितानि ससहकाराणि कर्पूरपूरपूरितानि पारिजातकवनानीव उपभुक्तानि पुरः करटाभ्यां बहलमदामोदव्याजेन विसृजन्तम्, अहर्निशं (२९२) विभ्रमकृतहस्तस्थितिभिः अर्द्धखण्डितपुण्ड्रेक्षुकाण्डकण्डूयनलिखितैः अलिकुलवाचालितैः दानपट्टकैः विलभमानमिव सर्व्वकाननानि करिपतीनाम्;

हर्षवर्जितः। यदि स्यादपगन्धश्च तदाऽसौ न सतां मतः॥" इति। पुरः,—अग्रतः, करटाभ्यां—गण्डाभ्यां, बहलमदामोदव्याजेन—प्रभूतदान-वारिसौरभच्छलेन, चूत-चम्पकलवलीलवङ्गकक्कोलवन्ति—चूतम्—आम्रमुकुलमित्यर्थः, चम्पकं—चम्पकपुष्पमित्यर्थः, लवली—"नोयाड" इति ख्यातः वृक्षविशेषः, तस्याः पुष्पमित्यर्थः, लवङ्ग—लवङ्गकलिका, कक्कोलं—"कॉकला" "वनकर्पूर" इति च ख्यातः वृक्षविशेषः कक्कोलः, तस्य फलमित्यर्थः तद्वन्ति—तद्विशिष्टानि, एलालतामिश्रितानि—सफलैलावल्लीयुक्तानि, ससहकाराणि—अतिसौरभाम्रसहितानि, ("आम्रः चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः)। कर्पूरपूरपूरितानि—कर्पूराख्यवृक्षविशेषस्य सुगन्धिनिर्य्यास-प्रवाहभरेण व्याप्तानि, पारिजातकवनानि—पारिजाताख्यपुष्पविशेषस्य अरण्यानि, विसृजन्तमिव—वमन्तमिव।

(२९२) विभ्रमेति।—विभ्रमेण कृता हस्ते—शुण्डे,स्थितिः यैः तादृशैः। अर्द्धेत्यादिना इक्षुकाण्डस्य लेखनीसाम्यं प्रदर्शयति, अर्द्धेति।—अर्द्धं खण्डितः,—भग्नः,यः पुण्ड्रेक्षुकाण्डः,—इक्षुविशेषस्य काण्डः,तेन यत् कण्डूयनं,तेन लिखितानि—कृतलेखानि तैः, अलिकुलैः,—भ्रमरवृन्दैः, वाचालितानि—मुखरितानि तैः, यद्वा,—लिखितैः,—कृतलेखैः, तथाऽपि अलिकुलवाचालितैः,—अलिकुलेन—भ्रमरवृन्देन, वाचालितैः,—मुखरीभूतैः, [अवाचालं वाचालं भूतः इति अभूततद्भावार्थे क्विप्रत्यये वाचाल इति नामधातोः कर्त्तरि निष्ठायां सिद्धम्, अन्यथा विशेषणपदत्वादेव मत्वर्थीयस्य इतचः अप्रयोगः, विशेष्यपदोत्तरप्रयोगस्य तस्य साधुत्वात्] [एतेन अलिकुलस्य लिपेरक्षररूपता व्यज्यते, अक्षरेषु च विद्यमानेषु अधीयमानेषु वाचालता प्रतीयते]। दानपट्टकैः,—दानसनन्दपत्रैः, हस्तिपक्षे,—दानस्य—मदजलस्य, पट्टकानि—पीठानि तैः, शिरोहस्तकपोलादिप्रदेशैः, तत्र मदसलिलस्य प्राधान्येन क्षरणात् तस्य शिरस तथात्वेनोपवर्णनमिति वेदितव्यम्; करिपतीनां—गजेन्द्राणां, सर्व्वकाननानि विलभमानमिव—स्ववशीक्रियमाणमिव, दान-पट्टकलिखितानुरूपं भूम्यादिकं किमपि लभ्यते, तत्राक्षराणि लिखितानि च वाच्यन्ते।

(२९३) अविरलोदबिन्दुस्यन्दिना हिमशिलाशकलमयेन विभ्रमनक्षत्रमालागुणेन शिशिरीक्रियमाणं, (२९४) सकल-वारणेन्द्राधिपत्यपट्टबन्धबन्धुरम् इव उच्चैस्तरां शिरो दधानं, मुहुर्मुहुः (२९५) स्थगितापावृतदिङ्मुखाभ्यां कर्णतालवृन्ताभ्यां वीजयन्तमिव भर्तृभक्त्या दन्तपर्य्यङ्किकास्थितां राजलक्ष्मीम्,

---

(२९३) अविरलेति।—अविरलम्—अजस्रम्, उदबिन्दुस्यन्दिना—जलकण-स्राविणा, [ "मन्थौदनसक्तुबिन्दु—" (६।३।६० पा०) इति सूत्रेण प्राप्तिकः उदकस्य उदादेशः, तथा च उदकबिन्दुरित्यपि पदान्तरं भवतीति विभाव्यम् ] हिमशिलाशकल-मयेन—वातवशीभूत जलकणरूप हिमं हिमशिला, तच्छकलमयेन—तत्खण्डमयेन। केचित्तु "हिमानि शिलाशकलानि चन्द्रकान्ता" इति प्राहुः। विभ्रमनक्षत्रमालागुणेन —विभ्रमाय—शोभार्थमित्यर्थः, या नक्षत्राणां मालेव इति नक्षत्रमाला—सप्तविंशति-मणिनिर्मिती मौक्तिकाहारविशेष, सा एव गुणः,—पाशः तेन, शिशिरीक्रियमाण —शीतलीक्रियमाणम्, अतिधवलानां वर्त्तुलाकाराणाञ्च मौक्तिकस्रजां गजस्य शिरसि शोभार्थं निहिताना जलबिन्दुरूपत्वेन वर्षोपलरूपत्वेन चोत्प्रेक्षितत्वं सुसङ्गतमेवेति ज्ञेयम्।

(२९४) सकलेति।—सकलानां वारणेन्द्राणां—हस्तीन्द्राणाम्, आधिपत्यं—प्रभुत्वं, तस्य पट्टबन्धः,—तत्सूचकललाटपट्टग्रहणमिति यावत् तेन बन्धुरमिव—रमणीयमिव, शोभमानमिव इत्यर्थः, उन्नतानतमिवेति वा, गजशिरोदेशस्य समतलत्वादर्शनात्, तत्र पट्टबन्धादेव विषमत्वं जातमित्युत्प्रेक्षितम्, ( "बन्धुर मुकुटे पुंसि स्त्रीचिह्नतैलकल्कयोः। बन्धूके बधिरे हंसे त्रिषु स्यादुन्नतनते॥" इति मेदिनी ) उच्चैस्तराम्—अतिशयेन उच्च, शिरः—मस्तकं, दधानं—धारयन्तम्, तच्च करिणः प्राशस्त्यलक्षणं, यथा, —"सम सहज पूर्णञ्च नातिलम्बोच्चमस्तकम्। नासाग्रं नातिपृथुलं स्निग्धाभवर्णं मृदु॥" इति।

(२९५) स्थगितेति।—स्थगितम् आच्छादितं, प्रसारणक्षणे इति भावः, अपावृत प्रकटितञ्च, सङ्कोचनावसरे इति भावः, तस्यातिविशालत्वादेवेत्याशयः दिङ्मुख याभ्यां तथाविधाभ्यां, कर्णतालवृन्ताभ्यां—कर्णाविव तालवृन्ते ताभ्याम्; [ "कर्णतालतालवृन्ताभ्याम्" इति पाठे,—नियतसञ्चालितश्रवणरूपव्यजनाभ्याम् इत्यर्थः ]। दन्तेति।—दन्त एव पर्य्यङ्किका—क्षुद्रपर्य्यङ्क राजलक्ष्म्या अवस्थान स्थानत्वादिति भावः, तत्र स्थिता ता, राजलक्ष्मी—राजश्रियं वीजयन्तमिव इत्यन्वयः।

(२९६) आयतवंशक्रमागतेन गजाधिपत्यचिह्नेन चामरेणेव चलता वालधिना विराजमानं, (२९७) स्वच्छशिशिर-शीकरच्छलेन दिग्विजयपीताः सरित इव पुनः पुनः मुखेन मुञ्चन्तं, क्षणम् (२९८) अवधानदाननिस्पन्दीकृत-सकलावयवानाम् अन्यद्विरदडिण्डिमाकर्णनवलनानाम् अन्ते दीर्घशीत्कारैः परिभवदुःखमिव आवेदयन्तम्, (२९९) अलब्ध-युद्धमिव आत्मानम् अनुशोचन्तम्, (३००) आरोहाधिरूढि-परिभवेण लज्जमानमिव अङ्गुलीलिखितमहीतलं मदं मुञ्च-

(२९६) आयतेति।—आयतः,—दीर्घः, वंशः,—पृष्ठवंश इति यावत्, कुलञ्च तस्य क्रमेण—आनुपूर्व्या, परम्परया च, आगतः,—उचितः प्राप्तश्च तेन। आयतवंशः, वक्रवंशः, शरवंशः वालवंशश्चेति चतुर्षु आयतवंशस्यैव प्राशस्त्यमुक्तं, यथा,—"यावत् पूरितपाशश्च वंशश्चापलताकृति। शुभो ज्ञेयो गजेन्द्राणामायतः कुरुते सुखम्॥" इति। गजाधिपत्यस्य तस्य चिह्नं—लक्षणं तेन। वालधिना—पुच्छेन, विराजमानं—शोभमानम्।

(२९७) स्वच्छेति।—स्वच्छानां—विशदानां, शिशिराणां—शीतलानां, शीकराणाम्—अम्बुकणानां, छलं तेन, दिशां विजये—विजयकाले, पीताः ताः, सरितः,—नदीः। मुञ्चन्तं—त्यजन्तम्।

(२९८) अवधानेति।—अवधानस्य—मनोनिवेशस्य, दानेन—करणेनेत्यर्थः, मनोनिवेशपूर्वकम् अन्यद्विरदडिण्डिमश्रवणेन इति भावः निस्पन्दीकृताः,—निश्चलीकृताः, सकला अवयवा यासां तासाम्; अन्येषां द्विरदानां—गजानां, डिण्डिमाकर्णने—पामुपरि स्थापितानां वाद्यभेदानां श्रवणे, या वलना—चालना, तदसहिष्णुता वा इति भावः तासां, ["डिण्डिमाकर्णनवलनानाम्" इत्यत्र "डिण्डिमाकर्णनाङ्गवलनानाम्" इति पाठे—डिण्डिमाकर्णने या अङ्गवलना—अङ्गचालना तासाम्] अन्ते—अवसाने। दीर्घशीत्कारैः,—दीर्घकालं व्याप्य निर्गतैः शीत् इत्याकारकाव्यक्तशब्दविशेषैः, ["दीर्घशीत्कारैः" इत्यत्र "दीर्घफुत्कारैः" इति पाठान्तरम्]। परिभवदुःखमिव—पराजयव्यलीकमिव, आवेदयन्तं—प्रकटयन्तम्।

(२९९) अलब्धेति।—न लब्धं युद्धं येन तथोक्तमिव।

(३००) आरोहेति।—आरोहस्य—आरोहिणः इत्यर्थः अधिरूढिः,—अधि-

न्तम्, (२०१) अवज्ञागृहीतमुक्तकवलकुपितारोहारटनानुरोधेन मदतन्द्रीनिमीलितनेत्रत्रिभागं कथं-कथमपि मन्दमन्दम् अनादरात् आददानं कवलान्, (२०२) अवजग्धतमालपल्लवस्रुतश्यामलरसेन प्रभूततया मदप्रवाहमिव मुखेनापि उत्सृजन्तं, (२०३) दलन्तमिव दर्पेण, श्वसन्तमिव शौर्य्येण, मूर्च्छन्तमिव मदेन, लुठ्यन्तमिव तारुण्येन, द्रवन्तमिव दानेन, वल्गन्तमिव बलेन, माद्यन्तमिव मानेन, उद्यन्तमिव उत्साहेन, ताम्यन्तमिव तेजसा, लिम्पन्तमिव लावण्येन, सिञ्चन्तमिव

---

रोहण, सैव परिभवः तेन, लज्जमानमिव, अङ्गुलीभिः,—करिकराग्रावयवैः, अन्यत्र,—करशाखाभिश्च, लिखित—खण्डित,महीतलं—भूतलं येन तथोक्तं, लज्जितानां भूलेखन स्वभाव इति भावः, मदं—दान-वारि, गर्व्वञ्च, मुञ्चन्त—त्यजन्तम्, लज्जितस्य गर्व्वत्यागः समुचित एव।

(२०१) अवज्ञेति।—अवज्ञया—अवहेलया, आदौ गृहीताः पश्चात् मुक्ताः,—त्यक्ताः, ये कवलाः, तैः कुपितः,—रुष्टः, यः आरोह,—हस्तिपकः, तस्य आरटनानुरोधेन—निर्बन्धातिशयेन इत्यर्थः; मदेति।—मदेन या तन्द्री—आलस्यं, निद्रा वा, ("तन्द्री निद्रा-प्रमीलयोः" इत्यमरः। आलस्य वा इन्द्रियाणामचेष्टनं वा प्रमीला) तया निमीलितः नेत्रयोः त्रिभागः,—"क्वचित् सङ्ख्यावाचिनामपि पूरणार्थत्वम्" इति न्यायात् तृतीयो भाग इत्यर्थः यस्मिन् तत् यथा तथा, कवलान्—ग्रासान्, आददान—गृह्णन्तम।

(२०२) अवजग्धेति।—अवजग्धानां—खादितानां, तमालपल्लवानां स्रुताः,—निर्गलिताः, श्यामलाः रसा यस्मात् तथोक्तेन, मुखेन—वदनेन, प्रभूततया—प्राचुर्य्येण, मदप्रवाहमिव—दान-वारिस्रोत इव, उत्सृजन्त—मुञ्चन्तम्।

(२०३) दलन्तमिव—खण्ड भिद्यमानमिव। ["दलन्तम्" इत्यत्र "चलन्तम्" इति पाठे,—कम्पमानमित्यर्थः]। श्वसन्तमिव—जीवन्तमिव। लुठ्यन्तमिव—स्खलन्तमिव। द्रवन्तमिव—गलन्तमिव। दानेन—मदेन। वल्गन्तमिव—विचेष्टमानमिव। माद्यन्तमिव—मत्तता प्रकटयन्तमिव। उद्यन्तमिव—उदयमानमिव। ताम्यन्तमिव—क्लिश्यन्तमिव। लिम्पन्तमिव—संयोजयन्तमिव, मज्जयन्तमिव वा। सिञ्चन्तमिव—तर्पयन्तमिव।

सौभाग्येन; (२०४) स्निग्धं नखेषु, परुषं रोमविषये, गुरुं मुखे, सच्छिष्यं विनये, मृदुं शिरसि, दृढं परिचयेषु, ह्रस्वं स्कन्धबन्धे, दीर्घम् आयुषि, दरिद्रम् उदरे, सततप्रवृत्तं दाने, (२०५) बलभद्रं मदलीलासु, कुलकलत्रम् आयत्ततासु, जिनं क्षमासु, वह्निवर्षं क्रोधमोक्षेषु, गरुडं नागोद्धृतिषु, (२०६) नारदं कलहकुतूहलेषु, शुष्काशनिपातम् अवस्कन्देषु, मकरं वाहिनीक्षोभेषु, (२०७) आशीविषं दशनकर्मसु, वरुणं हस्तपाशाकृष्टिषु, यमवागुराम् अरातिसंवेष्टनेषु,

---

(२०४) स्निग्धमिति।—उक्तञ्च,—"नखाः स्निग्धाः सिताः शस्ताः" इति। परुषं—कर्कशं, यो हि स्निग्धः (प्रीतिमान्) स कथं परुषः (प्रीतिशून्यः) भवति? इति विरोधः। गुरुं—महान्तम्, आचार्यञ्च। सच्छिष्यं—सुशीलं शिष्यं, विनये इति।—उक्तञ्च—'विनये मुनिभिस्तुल्याः क्रुद्धा नागाश्च राक्षसाः। निस्त्रिंशस्याधिकत्वाच्च शस्त्रं नाना महीपते ॥" इति। यश्च गुरुः, स कथं शिष्यः? इति विरोधः। मृदुं—कोमलम्। परिचयेषु—अवयवेषु इत्यर्थः। मृदु-दृढयोरेकत्रावस्थानं न युज्यते इति विरोधः। स्कन्धबन्धे—ग्रीवामूले। ह्रस्व-दीर्घयोर्विरोधः उन्नेयः। दरिद्रं—कृशं, दीनञ्च। दाने—मदवारिस्रावे इत्यर्थः, अथ च दाने—त्यागे। अत्र दरिद्र-सततदानप्रवृत्तयोर्विरोधः।

(२०५) बलभद्रं—बलरामम्, मदलीलासु—मदः,—दान-वारि, सुरामत्तता च, तल्लीलासु। कुलकलत्रं—कुलाङ्गना, आयत्ततासु—वश्यतासु। बलभद्र-कुलकलत्रयोः मदमत्तता-वश्यतयोश्च विरोधः। जिनं—बुद्धदेवम्। वह्निवर्षम्—अग्निवृष्टिम्, क्रोधमोक्षेषु—कोपप्रसरेषु। अत्र शमप्रधानजिन-वह्निवर्षयोः क्षमा-क्रोधमोक्षयोश्च विरोधः। नागोद्धृतिषु—नागानां—प्रतिपक्षहस्तिनां, सर्पाणाञ्च, उद्धृतिषु—निपातनेषु।

(२०६) नारदं—स्वनामप्रसिद्धं देवर्षिं, नारं—जलं ददातीति तथोक्तञ्च, कलहकुतूहलेषु—विवादकौतुकेषु, युद्धव्यापारेषु च। शुष्काशनिपातं—वृष्टिं विना वज्रपतनम्, अवस्कन्देषु शत्रूणाम् आक्रमणेषु। मकरं—जलजन्तुभेदं, वाहिनीक्षोभेषु—शत्रुसैन्यदलनेषु, नद्युद्वेलकरणेषु च।

(२०७) आशीविषं—सर्पं, दशनकर्मसु—दन्तव्यापारेषु, दशनक्रियासु इत्यर्थः। वरुणं—जलाधिपतिं, हस्तः,—शुण्ड एव पाशः हस्तपाशः, हस्ते पाशश्च, तेन आकृष्टयः;

(३०८) कालं परिणतिषु, राहुं तीक्ष्णकरग्रहणेषु, लोहिताङ्गं वक्रचारेषु, (३०९) अलातचक्रं मण्डलभ्रान्तिविज्ञानेषु, मनोरथसम्पादकं चिन्तामणिपर्व्वतकं विक्रमस्य, (३१०) दन्तमुक्ताशैलस्तम्भं निवासप्रासादम् अभिमानस्य, (३११) घण्टाचामरमण्डनमनोहरम् (३१२) इच्छासञ्चरणविमानं मनस्वितायाः, (३१३) मदधारादुर्द्दिनान्धकारं

आकर्षणानि तासु। यमवागुरा-यमस्य वागुरा—प्राणिबन्धनजालं ताम्, अरातिसवेषु—शत्रुसमागमेषु।

(३०८) काल—यम, क्षणवर्णञ्च, परिणतिषु—अन्तकार्य्येषु, तिर्य्यक् दन्तप्रहारकर्म्मसु इति वा "तिर्य्यग्दन्तप्रहारस्तु गज परिणतो मत" इति स्मरणात्; केचित्,—परिणतिषु—शुभाशुभादिकर्म्मविपाकेषु, कालम्—अहरादिरूपम् इति पक्षान्तरे व्याख्यानयन्ति। तीक्ष्णकरग्रहणेषु—तीक्ष्णेन—तीव्रेण, प्रचण्डेनेत्यर्थ; यद्वा,—तीक्ष्णं यथा तथा, करेण—शुण्डेन, ग्रहणानि—आक्रमणानि, अन्यत्र,—तीक्ष्णकर,—सूर्य्यः, तस्य ग्रहणानि—ग्रासा तेषु। लोहिताङ्गं—मङ्गलग्रहं, वक्रचारेषु—कुटिलगतिषु।

(३०९) अलातचक्रं—तदाख्यकाष्ठबन्धविशेषम्, उल्मुकमण्डलञ्च; मण्डलभ्रान्तिविज्ञानेषु—मण्डलाकारेण भ्रान्तिः,—भ्रमण, तस्यां विज्ञानानि—विशिष्टानि ज्ञानानि, परिचयाः इत्यर्थ, तेषु। मनोरथसम्पादकम्—अभीष्टनिर्वाहक, [ इति षष्ठीसमास, "कर्म्मण्यण्" (३।२।१ पा०) इत्यणि कृते स्वार्थे क ]। चिन्तामणिपर्व्वतक—चिन्तामणिः,—चिन्तामात्रेण चिन्तितवस्तुदायकामूल्यरत्नविशेष तस्य पर्व्वतकः,—क्षुद्रपर्व्वतः तम्। [ "पर्व्वतकम्" इत्यत्र "पर्व्वतम्" इति पाठान्तरम् ]।

(३१०) दन्तेति।—दन्तावेव मुक्ताशैलस्तम्भौ—मौक्तिकपाषाणस्तम्भौ, दन्तौ मुक्ताशैलस्य स्तम्भौ इव इति वा यस्य तथोक्तम्, दन्तस्य मुक्ताशैलानाञ्च स्तम्भा यत्र तादृशमिति च। निवासप्रासादं—निवासभवनम्। [ "दन्तमुक्ता……प्रासादम्" इत्यत्र "दन्तमुक्ताशैलस्तम्भनिवासप्रासादम्" इति समस्तपाठोऽपि दृश्यते ]।

(३११) घण्टेति।—घण्टाश्च चामराणि च तैः मण्डनेन—अलङ्करणेन, मनोहरः,—रम्यः तम्।

(३१२) इच्छेति।—इच्छया—वाञ्छानुसारेण इत्यर्थ, अप्रतिहत्येति भावः, सञ्चरणे—परिभ्रमण, तत्र विमानं—देवयानं तत्। मनस्वितायाः,—वीरतायाः इति यावत्।

(३१३) मदेति।—मदधाराभिः, दुर्द्दिनं—समाच्छन्नमित्यर्थः, अत एव अन्धं

गन्धोदकधारागृहं क्रोधस्य, (२१४) सकाञ्चनप्रतिमं महानिकेतनम् अहङ्कारस्य, (२१५) सगण्डशैलप्रस्रवणं क्रीडापर्व्वतम् अवलेपस्य, (२१६) सदन्ततोरणं वज्रमन्दिरं दर्पस्य, (२१७) उच्चकुम्भकूटाट्टालकविकटं सञ्चारि गिरिदुर्गं राज्यस्य, (२१८) क्षतानेकबाणविवरसहस्रं लोहप्राकारं पृथिव्याः (२१९) शिलीमुखशतझाङ्कारितं (२२०) पारिजातपादपं भूनन्दनस्य, तथा च सङ्गीतगृहं कर्णतालताण्डवानाम्,

---

करोति इति गन्धकारं तत्, गन्धोदकधारागृहं—सुवासितजलधारागृहं, क्रोधस्य—कोपस्य।

(२१४) सकाञ्चनेति।—काञ्चनप्रतिमा—काञ्चनी—स्वर्णमयी, स्वर्णनिर्मिता इत्यर्थः, प्रतिमा—दन्तबन्धः, देवताकृतिश्च, तत्सहितं—तद्युक्तमित्यर्थः, ("प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि" इति मेदिनी)। महानिकेतन—महामन्दिरम्, अहङ्कारस्य—दर्पस्य।

(२१५) सगण्डेति।—गण्डः,—कपोल एव, शैलः, अन्यत्र—गण्डशैल,—पर्व्वतात् विच्युत स्थूलोपलः, ("गण्डशैलास्तु च्युताः स्थूलोपला गिरेः" इत्यमरः) तत्र प्रस्रवणं—दान-वारिस्राव, निर्झरश्च, तेन सह वर्त्तमानम्, अवलेपस्य—गर्व्वविशेषस्य।

(२१६) सदन्तेति।—दन्तावेव तोरणः,—बहिर्द्वारम्, अन्यत्र,—दन्तनिर्म्मित-तोरण, तेन सह वर्त्तमानम्। वज्रमन्दिरं—वज्रनिर्म्मितगृहम्।

(२१७) उच्चेति।—उच्चौ - उन्नतौ, कुम्भाविव कूटौ—शिखरे यस्य तादृशं, यत् अट्टालकं—हर्म्यं, तद्वत् विकट—भयावहं, सञ्चारि—जङ्गमम्; यदाह कौटिल्यः,—"हस्तिनो हि जङ्गम दुर्गम्" इति। गिरिदुर्गं—पर्वतरूपं शत्रुदुष्प्रवेश स्थानमित्यर्थः।

(२१८) क्षतेति।—क्षतानि अनेकानि बाणविवरसहस्राणि—बाणनिक्षेपार्थं छिद्रसमूहा, प्राकारेषु बाणनिक्षेपार्थं विवरसहस्राणि क्रियन्ते, ये "इन्द्रकोशा" इति चाणक्यादिषु ख्याताः, यद्वा,—बाणैः, शत्रुनिक्षिप्तैरिति भावः, विवरसहस्राणि यत्र तादृश लोहप्राकारं—लौहनिर्म्मितप्राचीरम्।

(२१९) शिलीमुखेति।—शिलीमुखाना—भ्रमराणां, शतैः झाङ्कारितः,—निनादितः, यद्वा,—शिलीमुखशतैः,—बाणसमूहैः, शत्रुप्रक्षिप्तैरिति भावः, झाङ्कारितः,—पतनक्षणे झङ्कारशब्देन विद्धः तम्।

(२२०) पारिजातपादपं—देवतरुविशेषं, भूनन्दनस्य—भूः,—पृथिवी एव,

( ३२१ ) आपानमण्डपं मधुपमण्डलानाम्, अन्तःपुरं शृङ्गाराभरणानां, मदनोत्सवं मदलीलालास्यानाम्, ( ३२२ ) अच्छप्रदोषं नक्षत्रमालामण्डलानाम्, ( ३२३ ) अकालप्रावृट्कालं मदमहानदीपूरप्लवानाम्, अलीकशरत्समयं सप्तच्छदवनपरिमलानाम्, ( ३२४ ) अपूर्वहिमागमं शीकरनीहाराणां, मिथ्याजलधरं गर्ज्जिताडम्बराणां दर्पशातम् अपश्यत्।

आसीच्च अस्य चेतसि—( ३२५ ) "नूनमस्य निर्माणे

---

मन्दनं – देवकाननं तस्य, अन्यत,—भुव—पृथिवीं, नन्दयति—पालनेन प्रीणयतीति ,—राजा तस्य। कर्णतालताण्डवाना—कर्णसञ्चालनरूपनर्त्तनानाम्।

( ३२१ ) आपानमण्डप—पानगृह, मधुपमण्डलाना—भृङ्गसमूहानाम् अन्यत, —विटानां, मद्यपायिनामित्यर्थः। शृङ्गाराभरणाना—शृङ्गारा',—सिन्दूरादिभिः मण्डनविशेषा एव, आभरणानि अन्यत,—शृङ्गार,—रसविशेषः, ( "शृङ्गारः सुरते नाट्यरसे च गजमण्डने", इति मेदिनी ) तस्य आभरणानि—विलासद्रव्याणीत्यर्थः, तेषाम्। मदनोत्सवं—मदयतीति मदनः,—मदकर, उत्सवो यस्य तथोक्तम्, अन्यत,—कामोत्सवम्।

( ३२२ ) अच्छेति।—अच्छः,—पूर्णः, मेघावरणादिशून्य इति भावः, प्रदोषः, —रजनीमुखं, पक्षे, – अच्छः,—पूर्णः, प्रदोः —प्रकृष्टभुज' यस्य तथोक्तं, ( "भुजबाहू प्रवेष्टो दोः" इत्यमरः ) नक्षत्रमालामण्डलाना—नक्षत्रमाला,—तारकाराजय एव, मण्डलानि—चक्राकारवेष्टनानि, परिधयो वा तेषा, पक्षे,—नक्षत्रमालाः,—सप्तविंशतिमौक्तिकहारा एव, मण्डलानि तेषाम्।

( ३२३ ) अकालप्रावृट्कालम्—असमयवर्षासमयम्। मदेति।—मदा एव महानदीना पूरा,—प्रवाहाः, तेषा प्लवा',—गतिविशेषाः तेषाम्। अलीकशरत्समय —मिथ्याशरत्कालं, सप्तच्छदवनपरिमलानां—सप्तपर्णवनस्येव परिमलाः,—सौरभाणि, मदवारीणामिति भाव, तेषाम।

( ३२४ ) अपूर्वहिमागमं—नूतनहेमन्तं, शीकरनीहाराणां—जलकणरूपशिशिराणाम्। मिथ्याजलधरम्—अलीकं पयोधरम्, अन्यं मेघमित्य ., गर्जिताडम्बराणा — गर्ज्जितान्येव आडम्बरा',—चेष्टाविशेषा' तेषाम्।

( ३२५ ) नूनं—मन्ये, [ इत्युत्प्रेक्षावाचकम् ]। अस्य—वारणपते, निर्माणे—

गिरयो ग्राहिताः परमाणुतां, कुतोऽन्यथा (३२६) गौरवम् इदम् ? भाश्चर्यमेतत्, विन्ध्यस्य दन्तौ ! आदिवराहस्य करः ! इति विस्मयमानम् एतं दौवारिकोऽब्रवीत्,—"पश्य,—

मिथ्यैवालिखतां मनोरथशतैर्निःशेषनष्टां श्रियं
चिन्तासाधनकल्पनाकुलधियां भूयो वने विद्विषाम् ।
आयातः कथमप्ययं स्मृतिपथं शून्यीभवच्चेतसां
नागेन्द्रः सहते न मानसगतानाशागजेन्द्रानपि ॥ ४ ॥

---

सृष्टौ, परमाणुतां ग्राहिताः,—नीताः, प्रापिता इत्यर्थः, देहस्य भौतिकपरमाणुसमष्टिमयत्वादिति भावः ।

(३२६) गौरवं—गुरुत्वम् । आश्चर्यं—चमत्कृतिः, यत् विन्ध्यस्य—तदाख्यपर्वतस्य, दन्तौ, एतत् आश्चर्यमित्यर्थः, विन्ध्यपर्वततुल्योऽयं गजेन्द्र इति भावः । आदिवराहस्य—वराहरूपेणावतीर्णस्य भगवतो विष्णोरित्यर्थः, करः,—शुण्डः, इति च आश्चर्यम् ; आदिवराहसदृशोऽयमिति भावः । विस्मयमानं—चमत्कुर्वाणम् । एतं—बाणम् ।

दर्पशातस्य विक्रमातिशय्यप्रदर्शनप्रसङ्गेन राजविद्विषां पुनरभ्युदयसम्भावनाराहित्यं प्रकटयति, मिथ्यैवेति ।—निःशेषेण नष्टा ताम्—सम्यक् नाशं गतामित्यर्थः, श्रियं—राजलक्ष्मीं, निजामिति शेषः, पराजितत्वादिति भावः, मनोरथशतैः,—शतैः शतैः मनोरथैः, एवमेवमस्माभिः सश्रीकैः करिष्यते इत्येवमभिलाषैरित्यर्थः, मिथ्यैव—मृषैव, आलिखताम्—अनुशोचतामिति यावत्, ["आलिखताम्" इत्यत्र "आलिखिताम्" इति पाठे—चित्रिता, मनसि अङ्किताभित्यर्थः श्रियमित्यस्य विशेषणम्, कुर्वतामिति शेषः ] भूयः,—समधिकं यथा तथा, चिन्तया—अहो ! केन दुर्दैवेन अस्माकं मीदृशी दुर्दशा जाता ? का वा उपायं करिष्यामि ? इत्यादिभावनया इत्यर्थः, साधनानां—पुनरुद्धारोपायानां, कल्पनया च आकुला धीर्येषां तथाभूतानाम्, अत एव शून्यीभवच्चेतसां—शून्यीभवत्—निराशीभवदित्यर्थः, चेतो येषां तादृशानां, [ "शून्यीभवच्चेतसाम्" इत्यत्र "शून्यीभवच्चेतसा" इति पाठे तु—शून्यीभवता चेतसा कथमपि 'स्मृतिपथम् आयातः इत्यन्वयः ] वने विद्विषां—वनवासिनां शत्रूणां, कथमपि—अतिकष्टेन, स्मृतिपथम् आयातः,—तेनैव वारणेन्द्रेण वयं नितरां निर्जिता इति स्मरणपद्धतिं गतः, अयं नागेन्द्रः,—वारणपतिः, मानसं—चित्तं, सरोविशेषश्च, गताः तान्, आशाः,—तृष्णाः, अभिलाषा इत्यर्थः, ता एव गजेन्द्राः, आशागजेन्द्राः,—दिग्गजाश्च तान्, न सहते—न क्षमते,

तत् एहि, पुनरपि एनं द्रक्ष्यसि, पश्य तावत् (३२७)देवम्" इत्यभिधीयमानश्च (३२८) तेन (३२९) मद-जलकज्जल-कालकपोलपट्टपतितां मत्तामिव मदपरिमलेन मुकुलितां कथमपि तस्मात् दृष्टिम् आकृष्य, तेनैव दौवारिकेण उपदिश्यमानवर्त्मा, समतिक्रम्य भूपालसहस्रसङ्कुलानि त्रीणि कक्ष्यान्तराणि, चतुर्थे (३३०) सत्यास्थानमण्डपस्य पुरस्तात् (३३१) अजिरे स्थितं, दूरादूर्द्धस्थितेन प्रांशुना कर्णिकार-

---

का कथा विपक्षे भूपाले उपस्थापितानां दन्तिनां प्रतिपक्षाणामिति तात्पर्य्यम्; ए स्व स्मरणे शत्रूणां मनसि पुनः स्वराज्योद्धारस्य आशाऽपि नोदेतीति भावः। अत्र आशासु गजेन्द्राणामभेदारोपात् रूपकमलङ्कारः "मानसगतान्" इति विशेषणश्लेषेण सङ्कीर्य्यते; अन्यत्र श्लेषः शब्दविषय एव। शार्दूलविक्रीडित वृत्त,—"सूर्य्याश्वैर्यदि म. स-जौ स-त-त-गाः शार्दूलविक्रीडितम्" इति लक्षणात्॥ ४॥

(३२७) देवं—श्रीहर्षमित्यर्थ।

(३२८) तेन—दौवारिकेण।

(३२९) मदेति।—मदजलमेव कज्जलम्—अञ्जनं, तेन कालः,—कृष्णवर्णः, यः कपोलपट्टः,—गण्डतटः, हस्तिन इति भावः, तस्मिन् पतिता—निहिता ताम्। ["मदजलकज्जलकालकपोल—" इत्यत्र "मदजलपङ्किलकपोल—" इति पाठे,—मदजलेन पङ्किलः,—मलिन इत्यर्थः]। तस्मात्—वारणेन्द्रात्; मत्तोऽपि पतति, मुकुलितदृष्टिर्जायते, चरणस्खलनादन्यैराकृष्यमाणश्च भवति। समतिक्रम्य—अतीत्य। कक्ष्यान्तराणि—प्रकोष्ठावकाशान्। चतुर्थे, कक्ष्यान्तरे इति शेषः। "चतुर्थे" इत्यादौ "चक्रवर्त्तिनं हर्षम् अद्राक्षीत्" इत्युत्तरेण सम्बन्धः।

(३३०) त विशिनष्टि, सत्येत्यादिभिः। सत्यास्थानेति।—सत्यस्य—सत्यनिरूपणस्य, यत् आस्थानमण्डपं—सभागृहं तस्य, विचारालयस्य इत्यर्थः। ["सत्यास्थानमण्डपस्य" इत्यत्र "भुक्तास्थानमण्डपस्य" इति पाठे,—भुक्त—भोजनं, तस्मिन् सति, भोजनानन्तरमित्यर्थः, यत् आस्थानमण्डप—लोकदर्शनार्थं विश्रामार्थं वा अवस्थितिगृहं तस्येत्यर्थः]। पुरस्तात्—अग्रतः, अग्रवर्त्तिनीत्यर्थ।

(३३१) अजिरे—अङ्गने, स्थितं—तिष्ठन्तम्। दूरात्—ईषद्दूरात् इत्यर्थः,

गौरेण (३३२) व्यायामव्यायतवपुषा शस्त्रिणा मौलेन शरीर-परिचारकलोकेन पङ्क्तिस्थितेन कार्त्तस्वरस्तम्भमण्डलेनेव परिवृतम्, (३३३) आसन्नोपविष्टविशिष्टेष्टलोकं, (३३४) हरिचन्दनरसप्रक्षालिते (३३५) तुषारशीकरशीतलतले दन्त-पाण्डुरपादे शशिमये इव मुक्ताशैलशिलापट्टशयने समुपविष्टं,

---

ऊर्द्धस्थितेन—दण्डायमानेन, प्रांशुना—उन्नतकायेन, अन्यत्र,—प्रकृष्टाः अंशवो यस्य तेन, कर्णिकारगौरेण—आरग्वधपुष्पसदृशगौरकान्तिना।

(३३२) व्यायामेति।—व्यायामेन—अङ्गचालनारूपक्रीड़ाविशेषेण, व्यायतं—विभक्तावयवं, विशेषेण परिपुष्टञ्च, वपुः,—शरीरं यस्य तेन, अन्यत्र—अतिदीर्घ-परिणाह-विशिष्टगात्रेण। शस्त्रिणा—शस्त्रपाणिना; स्तम्भगात्रेऽपि शस्त्राः स्थाप्यन्ते, अतस्तेषामपि शस्त्रित्वं बोध्यम्; मौलेन—मूलायातेन, वंशक्रमानुगतेन इत्यर्थः; परिचारकाश्च मौल-भृतकश्रेणिमित्रामित्राटविकभेदेन षट्प्रकारा भवन्ति, अन्यत्र,—मूले—बुध्ने भवं मौलं तेन सुप्रतिष्ठेन,निखातमूलेनेति भावः, शरीरपरिचारकलोकेन—शरीरसेवकजनेन। पङ्क्ति-स्थितेन—श्रेणीबद्धेन इत्यर्थः। कार्त्तस्वरस्तम्भमण्डलेन इव—काञ्चनमयस्तम्भनिवहेन इव; ("स्वर्णं सुवर्णं......रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्" इत्यमरः)।

(३३३) आसन्नेति।—आसन्ने—सन्निधाने, उपविष्टाः,—अवस्थिताः, विशिष्टाः—सम्भ्रान्ताः, इष्टाः,—प्रियाः, प्रीतिभाजनानि इति यावत् लोकाः यस्य तम्।

(३३४) हरिचन्दनेति।—हरिचन्दनस्य—पीतचन्दनस्य, यस्योद्घृष्यमाणस्य सतः कुङ्कुमस्येव रागः सौगन्ध्यञ्च जायते, तादृशस्य चन्दनविशेषस्य इत्यर्थः, रसेन—द्रवेण, प्रक्षालितम्—अभिषिक्तं विधौतं वा तस्मिन्।

(३३५) शशिमये इति वक्ष्यमाणानुरोधेन तुषारेत्यादिना अस्य शैत्यातिशय्यं प्रकटयति, तुषारेति।—तुषारशीकरवत् शीतलं तलं यस्य तथोक्ते। दन्तेति।—दन्तवत् दन्तमया वा पाण्डुराः,—श्वेताः, पादाः,—चरणानि, मयूखाश्च यस्य तथाविधे, ("पादौ बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते। चरणे च मयूखे च" इति मेदिनी)। शशिमये इव—चन्द्रमये इव, मुक्ताशैलस्य—मौक्तिकपर्वतस्य, शिलापट्ट एव शयनं—शय्या तस्मिन्। "मुक्ताशैल" इत्यनेन शुभ्रतयाऽपि शशिमये इव इत्येतावदेव द्योतयति।

(२३६) शयनीयपर्य्यन्तविन्यस्ते समर्पितसकलविग्रहभारं भुजे, (२३७) दिङ्मुखविसर्पिणि देहप्रभावितान[1] विततमणि-मयूखे घर्म्मसमयसुभगे सरसीव (२३८) मृदुमृणालजाल-जटिलजले सराजकं रममाणं, तेजसः परमाणुभिरिव केवलैः निर्म्मितम्, आनच्छन्तं बलात् आरोपयितुमिव सिंहासनं (२३९) सर्व्वावयवेषु सर्व्वलक्षणैः गृहीतं, गृहीतब्रह्मचर्य्यम् आलिङ्गितं राजलक्ष्म्या, (२४०) प्रतिपन्नासिधाराधारणव्रतम्,

(२३६) शयनीयेति।—शयनीयस्य—शय्यातलस्य, पर्य्यन्ते—प्रान्तभागे, विन्यस्ते,—निहिते तस्मिन्, भुजे—हस्ते, समर्पितेति।—समर्पितः,—निहितः, सकलस्य विग्रहस्य—शरीरस्य, युद्धस्य च, भारः येन तथोक्तम्।

(२३७) दिङ्मुखेति।—दिशा मुखानि विसर्पति—व्याप्नोतीति तथाभूते, देहप्रभाविताने—अङ्गकान्तिविस्तारे, विततेति।—वितता—विस्तृता, मणीनां—रत्नानां, मयूखा यत्र तादृशे, घर्म्मसमयसुभगे—ग्रीष्मकालरमणीये; मणीनां सहजशैत्यात् तदीया मयूखा अपि तर्पयन्तीति घर्म्मसमयसुभगत्वं बोध्यम्।

(२३८) मृदिति।—मृदुभिः,—कोमलैः, मृणालजालैः,—बिससञ्चयैः, जटिलानि जलानि यस्य तथोक्ते। सराजकं—राजगणसहितं यथा तथा, रममाणं—विहरन्तम्। केवलैः,—निरवच्छिन्नैः, तेजसः,—प्रतापस्य, परमाणुभिरिव निर्म्मित—सृष्टं, तेजोराशिमिव स्थितमिति यावत्।

(२३९) सर्व्वावयवेषु—हस्तपदादिषु सर्व्वाङ्गेषु, सर्व्वलक्षणैः,—समस्तशुभचिह्नैः, गृहीतं—युक्तम्, लोकोऽपि कश्चित् कमपि अङ्कमारोपयितुं सर्व्वाङ्गेष्वेव गृह्णाति। गृहीतब्रह्मचर्य्यं—गृहीतम्—अवलम्बितं, ब्रह्मचर्य्यं—दारग्रहणादि-वर्ज्जनेन केवलं गुरुकुले वेदाध्ययनादिव्रतचर्य्या येन तथोक्तम्, अथ च राजलक्ष्म्या आलिङ्गितमिति विरोधः; "स्वदारसन्तुष्ट ऋतुकालगामी गृहस्थोचितव्यापारवान् ब्रह्मचारी एव भवति" इति श्रुतेः तथाविधं गृहस्थमिति तत्परिहारः। किञ्च, "यावन्मया सकला मही न जिता, तावत् ब्रह्मचर्य्यं चरामि" इति प्रतिज्ञाय श्रीहर्षः षड्भिः वर्षैः जित्वा तां महीं सर्व्वां महिषीमब्रवीत्,—"प्रतिज्ञा मया निर्व्यूढा" इत्यनुश्रुतिरत्र अनुशीलनीया।

(२४०) प्रतिपन्नेति।—प्रतिपन्नम्—अवलम्बितम्, असिधाराधारणव्रतम्—असिधारा—खड्गधारा,व्रतविशेषश्च,असिधारायां स्थितिरिव दुष्करं व्रतमित्यर्थः,तस्य धारणं

अविसंवादिनं राजर्षिं, (३४१) विषमराजमार्गविनिहितपदस्खलनभियेव सुलग्नं धर्मे, (३४२) सकलभूपालपरित्यक्तेन भीतेनेव लब्धवाचा सर्व्वात्मना सत्येन सेव्यमानम्, (३४३) आसन्नवारविलासिनीप्रतियातनाभिः चरणनखपातिनीभिः दिग्भिरिव दशभिः प्रणम्यमानं, (३४४) दीर्घैः दिगन्तपातिभिः दृष्टिपातैः लोकपालानां कृताकृतमिव प्रत्यवेक्षमाणं,

—पालनमेव, व्रतम्; असिधारायां स्थितो मनाक् स्खलने यथा नाशः, एवं मनाक् स्खलने यथानिष्टं, तादृशं व्रतमिति यावत् येन तथोक्तम्, तच्च यादवेन दर्शितं यथा,—"युवा युवत्या सार्द्धं यत् मुग्धाभर्तृवदाचरेत्। अन्तर्निवृत्तसङ्गः स्यादसिधाराव्रतं हि तत्॥" यत्र स्त्रीपुंसौ अकपटौ ब्रह्मचर्य्येण तिष्ठत इति भावः; अविसंवादिनं—विसंवादः,—विरुद्धभावः अस्यास्तीति विसंवादी, स न भवतीति तथोक्तः तम्, पक्षे,—प्रतिपन्नेषु—विश्वसितेषु, आश्रितेषु इत्यर्थः, असिधाराधारणमेव—खड्गधाराग्रहणमेव, व्रतं यस्येति तथोक्तम्, अथ च अविसंवादिनं, यस्तु प्रतिपन्नेषु खड्गधारां पातयति, स कथं न विसंवादी, कथं वा राजर्षिः इति विरोधः। राजर्षिं—राजा ऋषिरिव राजर्षिः तम्; यः खलु राजर्षिः प्रतिपन्नासिधारः ब्रह्मचारी च, स राजर्षिर्न्या आलिङ्ग्येत।

(३४१) विषमेति।—विषमे दारुणे, नतोन्नतरूपे च, राजमार्गे—राजनीतौ, राजपथे च, विनिहितस्य—अर्पितस्य, पदस्य स्खलनभियेव—च्युतिभयेनेव, धर्मे सुलग्नं—कृतावलम्बनं, धृतधर्मदृष्टिमिति भावः।

(३४२) सकलेति।—सकलैः भूपालैः परित्यक्तः तेन, अत एव भीतेनेव—अयमपि यदि मां न गृह्णाति, तदाऽहमशरणः इति त्रस्तेन इव इत्यर्थः, लब्धवाचा—लब्धा—गृहीता, वाक् यस्य तेन। सर्व्वात्मना—सर्व्वस्वरूपेण, सत्येन सेव्यमानं—परिचर्य्यमाणम्।

(३४३) आसन्नेति।—आसन्नानां—सन्निहितानां, परिचर्य्यार्थमिति भावः, वारविलासिनीनां—वेश्यानां, प्रतियातनाभिः,—प्रतिच्छायाभिः, ("प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया। प्रतिकृतिरर्च्चा पुंसि प्रतिनिधिः" इत्यमरः), चरणनखपातिनीभिः,—पदनखपतिताभिः; दशभिर्दिग्भिरिव; पदनखानां दशसङ्ख्याकत्वादिति भावः, प्रणम्यमानम्—अभिवन्द्यमानम्।

(३४४) दीर्घैः,—आयतैः, दिगन्तपातिभिः,—दिगन्तगामिभिः। लोकपालानाम्—इन्द्रादीनां, कृताकृतमिव—कार्य्याकार्य्यमिव, प्रत्यवेक्षमाणं—परिपश्यन्तम्।

( ३४५ ) मणिपादपीठपृष्ठप्रतिष्ठितकरेण उपरिगमनाभ्यनुज्ञां मृग्यमाणमिव दिवसकरेण, ( ३४६ ) भूषणप्रभासमुत्सारण-बद्धपर्य्यन्तमण्डलेन प्रदक्षिणीक्रियमाणमिव दिवसेन, ( ३४७ ) अप्रणमद्भिः गिरिभिरपि दूयमानं,( ३४८ ) शौर्य्योष्मणा फेनायमानमिव चन्दनधवलं लावण्यजलधिम् उद्वहन्तम् ऐकराज्योर्जितेन,[१] ( ३४९ ) निजप्रतिबिम्बान्यपि नृपतिचक्रचूडा-मणिधृतानि असहमानमिव, ( ३५० ) दर्पदुःखासिकया चामरा-

( ३४५ ) मणिसम्बन्धप्रतिष्ठानमिव प्रीषयति, म णीति।—मणिपादपीठस्य—रत्नमयचरणासनस्य, पृष्ठे—उपरि, प्रतिष्ठिता,—पतिता. रचिताश्च, करा,—किरणा हस्ताश्च यस्य तेन, दिवसकरेण—सूर्य्येण, उपरीति।—उपरिगमने—ऊर्द्ध्वगमने, या अभ्यनुज्ञा—अनुमति, ता, मृग्यमाणमिव—प्रार्थ्यमानमिव।

( ३४६ ) भूषणेति।—भूषणानाम्—अलङ्काराणा, प्रभाभिः,—किरणैः, समुत्सारणेन—सन्ताडनेन, बद्ध—धृत, लब्धमिति यावत्, पर्य्यन्तेषु—प्रान्तेषु, मण्डलं—मण्डलाकारेण अवस्थान येन तथोक्तेन। प्रदक्षिणीक्रियमाण—परिवेष्ट्यमानमित्यर्थ।

( ३४७ ) अप्रणमद्भि,—प्रणतिमकुर्व्वद्भि,स्वभावोन्नतत्वादिति भाव., गिरिभि.,—पर्व्वतैरपि, दूयमान—गम्यमानमिव, प्रसादनार्थमिवेति भाव। "दु गतौ" इत्यस्य रूपम्।

( ३४८ ) ऐकराज्योर्जितेन—ऐकराज्यम्—एकाधिपत्यं, तेन ऊर्जित.,—प्रवृद्धि गत तेन, [ "ऐकराज्योर्जितेन' इत्यत्र "एकराज्योर्जित्येन" इति पाठे—एकराज्येन ऊर्जितः, तस्य भाव. एकराज्योर्जित्यं तेन ] शौर्य्योष्मणा—वीर्य्यप्रतापेन, फेनायमानमिव—फेनमुद्वमन्तमिव, उष्मणा जलमपि सफेन भवतीति लोके दृश्यते। चन्दनधवल लावण्यजलधि—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिह स्मृतम्॥" इत्युक्तलक्षणाना लावण्याना जलधि.,—समुद्र. तम्, उद्वहन्तम्।

( ३४९ ) नृपतिचक्रै,—राजमण्डलै., [ "नृपतिचक्र—" इत्यत्र "नृपचक्र—" इति पाठान्तरम् ] चूडामणिभि.,—शिरोरत्नै., धृतानि—गृहीतानि, निजप्रतिबिम्बानि—स्वकीयप्रतिच्छाया अपि, असहमानमिव—कायं सामान्येन मत्स्पर्श इति धियेति भाव.।

( ३५० ) दर्पदु.खासिकया अहङ्कारसमुत्थक्लेशरूपखड्गेन हेतुना, चामरा

निलनिभेन बहुधेव श्वसन्तीं राजलक्ष्मीं दधानं (३५१) सकल-मिव चतुःसमुद्रलावण्यम् आदाय उत्थितया श्रिया समुपश्लिष्टम्, (३५२) आभरणप्रभाजालजायमानानि इन्द्र-धनुःसहस्राणि इन्द्रप्राभृतप्रहितानि विलभमानमिव, राज्ञां (३५३) सम्भाषणेषु परित्यक्तमपि मधु वर्षन्तं, काव्यकथासु (३५४) अपीतमपि अमृतम् उद्वमन्तं, (३५५) विस्रम्भभाषितेषु अनाकृष्टमपि हृदयं दर्शयन्तं, (३५६) प्रसादेषु निश्चलामपि श्रियं स्थाने स्थाने स्थापयन्तं, वीरगोष्ठीषु पुलकितेन कपोल-

---

निलनिभेन—चामरमारुतव्याजेन, बहुधा श्वसन्तीं—पुनः पुनः सुदीर्घं श्वासमारुतं निक्षिपन्तीं, राजलक्ष्मीं—राजश्रियं, दधानमिव—धारयन्तमिव।

(३५१) सकल—समग्रम्। चतुरिति।—चतुर्णां समुद्राणां समाहारः चतुः-समुद्र, तस्य लावण्यं तत्, आदाय—गृहीत्वा, उत्थितया—आविर्भूतया, श्रिया—लक्ष्म्या, समुपश्लिष्टमिव—समालिङ्गितमिव।

(३५२) आभरणेति।—आभरणानां प्रभाजालेन—दीप्तिसमूहेन, जायमानानि—उत्पद्यमानानि, इन्द्रप्राभृतप्रहितानि—इन्द्रेण प्राभृतेन—उपढौकनत्वेन इत्यर्थः, प्रहितानि—प्रेषितानीत्यर्थः, इन्द्रधनुषां—शक्रचापानां, सहस्राणि विलभमानमिव—विशेषेण आददानमिव। राज्ञां—सामन्तनृपाणां, निर्जितानामिति भावः।

(३५३) सम्भाषणेषु—समालपनेषु, परित्यक्तमपि मधु—मद्यं, मधुररसञ्चेत्यर्थः, वर्षन्तं—वमन्तम्। काव्यकथासु—काव्यालोचनासु, कविभिः काव्यानुशीलने इति भावः।

(३५४) अपीतमपि—अभुक्तमपि, अमृतं—पीयूषम्, उद्वमन्तम्—उद्गिरन्तम्; [ "अपीतमपि अमृतम्" इत्यत्र "अपीतममृतम्" इति पाठान्तरम् ]।

(३५५) विस्रम्भभाषितेषु—विश्वस्तालापेषु। अनाकृष्टमपि—प्रसादकैः अनु-जीविभिः अगृहीतमपि इत्यर्थः, हृदयं—चित्तं, मनोऽभिप्रेतं वस्त्वित्यर्थः, दर्शयन्तं—प्रकटयन्तम्।

(३५६) प्रसादेषु—प्रसन्नता सत्सु इत्यर्थः। निश्चलामपि—स्थिरामपि, श्रियं—लक्ष्मीं, सम्पदमिति यावत्, स्थाने—योग्ये पात्रे इत्यर्थः, स्थापयन्तम्—अर्पयन्तम्। वीरगोष्ठीषु—वीरसमाजेषु, पुलकितेन—रोमाञ्चितेन, उत्साहातिशया-

स्थलेन अनुरागसन्देशमिव उपांशु रणश्रियः शृण्वन्तम्, (२५७) अतिक्रान्तसुभटकलहालापेषु स्नेहवृष्टिमिव दृष्टिम् इष्टे कृपाणे पातयन्तं, परिहासस्मितेषु गुरुप्रतापभीतस्य राजकस्य स्वच्छम् आशयमिव दशनांशुभिः कथयन्तं, (२५८) सकललोकहृदयस्थितमपि न्याये तिष्ठन्तम्, अगोचरं गुणानाम्, अभूमौ सौभाग्यानाम्, अविषये वरप्रदानानाम्, अशक्ये आशिषाम्, अमार्गे मनोरथानाम्, अतिदूरे दैवस्य, अदिशि उपमानानाम्, (२५९) असाध्ये धर्मस्य, अदृष्टपूर्वे लक्ष्म्या महत्त्वे

---

दिति भावः, कपोलस्थलेन—गण्डदेशेन, उपांशु—रहसि, रणश्रियः,—सङ्ग्रामलक्ष्म्याः, अनुरागसन्देशमिव—प्रेमव्यञ्जकवाचिकमिव, शृण्वन्तम्—आकर्णयन्तम्।

(२५७) अतिक्रान्तेति।—अतिक्रान्ताः,—अतीताः, सुभटानां—सुयोद्धृणां, ये कलहाः,—सङ्ग्रामाः, तेषाम् आलापाः,—कथा तेषु। इष्टे—अभिलषिते, प्रिये इत्यर्थः, कृपाणे—खड्गे; सङ्ग्रमशेषे रुधिरादिक्षालनसलिलकलङ्कनिवारणाय शस्त्रेषु स्नेहो दीयते इति व्यवहारः। परिहासस्मितेषु—नर्महास्येषु, गुरुणा—महता, प्रतापेन—तेजसा, भीतस्य—त्रस्तस्य, राजकस्य—राजचक्रस्य, समीपे इति शेषः, दशनांशुभिः,—दन्तकिरणैः, तद्व्याजेन इति भावः, स्वच्छं—निर्मलं, प्रसन्नमित्यर्थः, आशयं—भावं, कथयन्तं—प्रकाशयन्तम्। प्रकृष्टतापभीतस्य च स्वच्छं—निर्मलम्, आशयं—जलाशयमिति भावः, दर्शयन्ति लोकाः, अत्र "प्रताप" "स्वच्छ" इत्यादिशब्दप्रयोगवशात् जलशब्दाभावेऽपि आशयशब्देन जलाशयः प्रत्येतव्यः।

(२५८) सकलेति।—सकलानां लोकानां—जनानां, हृदयेषु स्थितमपि न्याये—नीतिमार्गे, तिष्ठन्तं—वर्त्तमानं, न्यायमनुचरन्तमित्यर्थः, यः सकललोकहृदयस्थितः, स कथमेकस्मिन्नेव तिष्ठतीति विरोधः। गुणानां—विद्याविनयादीनाम्, अगोचरे—अविषये सौभाग्यानाम् अभूमौ—अस्थाने, वरप्रदानानाम् अविषये—अगोचरे, आशिषामशक्ये—असाध्ये मनोरथानाम् अमार्गे, दैवस्य अतिदूरे, उपमानानां—सादृश्यबोधकानाम्, अदिशि—अविषये इत्यर्थः, अतीते इति भावः।

(२५९) असाध्ये—साधयितुमशक्ये, धर्मस्य [इति कर्त्तरि षष्ठी]। अदृष्टपूर्वे—पूर्वमदृष्टे, लक्ष्म्याः महत्त्वे—उत्कर्षे, स्थितं, महालक्ष्मीनिवासमित्यर्थः; यः गुणादीनाम् अगोचरादिषु वर्त्तते, स कथम् अदृष्टपूर्वे लक्ष्म्याः महत्त्वे तिष्ठतीति

स्थितम्; (३६०) अरुणपादपल्लवेन (३६१) सुगत-मन्थरोरुणा (३६२) वज्रायधनिष्ठुरप्रकोष्ठपृष्ठेन (३६३) वृष-स्कन्धेन भास्वद्बिम्बाधरेण (३६४) प्रसन्नावलोकितेन सुखचन्द्रेण कृष्णकेशेन वपुषा (३६५) सर्व्वदेवताऽवतारमिव एकत्र दर्श-यन्तम्; अपि च मांसलमयूखमालामलिनितमहीतले महति

विरोध, यत्र गुणसौभाग्यादयो न गण्यन्ते, तादृश वक्षोमहत्त्वमनुसरन्तमित्यर्थः, एतेन अस्य विरोधस्य परिहारः।

(३६०) अरुणेति।—अरुणः,—लोहित, पादपल्लवः,—चरणकिसलय' यस्य यत्र वा तेन, अन्यत्र,—अरुणस्य—अनूरो', सूर्य्यसारथेरित्यर्थः, पादपल्लवः तेन।

(३६१) सुगतेति।—सुष्ठु गत—गमनं ययो' तथाभूतौ, मन्थरौ—मृदगामिनौ, ऊरू यस्य यत्र वा तेन, अन्यत्र,—सुगतः,—बुद्धदेवः, तस्य मन्थरः,—मन्दगामी, ऊरू तेन।

(३६२) वज्रेति।—वज्रायुधं—कुलिशनामास्त्र, तद्वत् निष्ठुर,—कठिन', प्रको :, —आमणिबन्ध कूर्परसन्धेरधोभागः, ("प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी) पृष्ठञ्च यस्य यत्र वा तेन, अन्यत्र,—वज्रायुध,—इन्द्र, तस्य निष्ठुरं प्रकोष्टपृष्ठ तेन।

(३६३) वृषस्कन्धेन—वृषस्येव स्कन्धो यस्य यत्र वा तेन, अन्यत्र,—वृषस्य —धर्म्मस्य स्कन्ध' तेन ("वृषो धर्म्मे बलीवर्द्दे शृङ्ग्या पुराशिभेदयो" इति मेदिनी)। भास्वदिति। भास्वान्—दीप्यमानः, बिम्बमिवाधरो यस्य यत्र वा तेन, अन्यत्र,—भास्वत,—सूर्य्यस्य, बिम्बमिवाधर' तेन।

(३६४) प्रसन्नेति।—प्रसन्न—निर्म्मलम्, अवलोकितं—दर्शन यस्य यत्र वा तेन; अन्यत्र,—प्रसन्न,—कश्चिद्देवविशेष', आशुतोष इति यावत्, तस्य अवलोकित—दर्शन तेन, यद्वा —प्रसन्नेन अवलोकितेन—बुद्धभेदेन इत्यर्थ। सुखचन्द्रेण—सुखं चन्द्र इव यस्य यत्र वा तेन, अन्यत्र,—सुखे चन्द्र तेन। ["सुखचन्द्रेण" इत्यत्र 'चन्द्र-मुखेण" इति पाठान्तरम्]। कृष्ण,—कृष्णवर्ण, केशो यस्य यत्र वा तेन, अन्यत्र,—कृष्णस्य—श्रीहरे, केश तेन। वपुषा—अङ्गेन उक्तप्रकारेण अवयवेनेत्यर्थ।

(३६५) सर्व्वेति।—सर्व्वासा देवतानामवतारः तमिव। मांसलेति।—मांस-लाभि,—महतीभिरित्यर्थः, मयूखाना—किरणाना, मालाभि, समूहै, मलिनितं —विवर्णीकृत, नीलवर्णता नीतमित्यर्थ, महीतलं येन तथोक्ते। महति—

महार्हे माणिक्यमालामण्डितमेखले महानीलमये पादपीठे कलिकालशिरसि इव सलीलं (३६६) विन्यस्तवामचरणम्, (३६७) आक्रान्तकालियफणाचक्रवालं बालम् इव पुण्डरीकाक्षं, क्षौमपाण्डुरेण चरणनखदीधितिप्रतानेन प्रसरता महीं (३६८) महादेवीपट्टबन्धन इव महिमानम् आरोपयन्तम्, (३६९) अप्रणतलोकपालकोपेनेव अतिलोहितौ सकलनृपतिमौलिमालासु अतिपीतं पद्मरागरत्नातपमिव वमन्तौ (३७०) सर्व्वतेजस्विमण्डलास्तमयसन्ध्यामिव धारयन्तौ,

---

प्रशस्ते, महार्हे—महामूल्ये। माणिक्येति।—माणिक्यमालया मण्डिता—अलङ्कृता, मेखला—नितम्बभागः, मध्यभाग इत्यर्थः यस्य तादृशे, महानीलमये—महानीलमणिनिर्म्मिते। कलिकालशिरसि इव—कलियुगस्य मूर्द्धनि इव, कलिकालस्य मलिनत्वादेव मुत्प्रेक्षा। सलील—सविलास, सहेल वा।

(३६६) विन्यस्तेति।—विन्यस्त.,—निहितः, वामचरण. येन त मिताम्; वामचरणन्यासेन तस्य तिरस्कारणीयत्वमेव व्यज्यते।

(३६७) आक्रान्तेति।—आक्रान्तम्—अध्यासित, कालियस्य—नागविशेषस्य, फणाचक्रवाल—फणमण्डल येन तथोक्त, बाल—शिशु, पुण्डरीकाक्षमिव—श्रीकृष्णमिव, पक्षे,—पुण्डरीके—श्वेतपद्मे इव, अक्षिणी यस्य तथोक्तम्। क्षौमपाण्डुरेण—क्षौम—श्वेतपट्टवसन, तद्वत् पाण्डुर.,—धवल' तेन। मही—पृथिवी, प्रसरता—व्याप्नुवता, चरणेति।—चरणनखाना दीधितिप्रतानेन—मयूखजालेन।

(३६८) महादेवीति।—महादेवी—महती देवी, प्रधाना महिषीत्यर्थः, पृथिवीति भाव, तस्या. पट्टबन्ध,—गौरवसूचक अतिशुभचिह्नविशेषः तेनेव, महिमान—महत्त्व, पृथिव्या एकेश्वरत्वमित्यर्थ., आरोपयन्तम्, आत्मानमिति शेष.।

(३६९) अप्रणतेति।—न प्रणता.,—अप्रणता., ते च ते लोकपालाश्चेति अप्रणतलोकपाला., तेषु कोप.,—क्रोध तेनेव, अतिलोहितौ—अतिरक्तौ, अत एव सकलेति।—सकलाना—समग्राणा, नृपतीना—राज्ञा, मौलिमालासु—मुकुटराजिषु, स्थितानिति शेष, अत एव अतिपीतम्—अतिशयेन गृहीत, प्रणामकाले पादयो. प्रतिफलितत्वादिति भाव.,पद्मरागरत्नाना—तदा मणीनाम्,आतपमिव—आलोकमिव,वमन्तौ—उद्गिरन्तौ।

(३७०) सर्व्वेति।—सर्व्वेषा तेजस्विमण्डलाना—वीरसमूहाना, सूर्य्यादीनाञ्चेति

अशेषराजककुसुमशेखरमधुरसस्रोतांसीव स्रवन्तौ, (३७१) समस्त-सामन्तसीमन्तोत्तंसस्रक्सौरभभ्रान्तैः (३७२) भ्रमरमण्डलैः अमित्रोत्तमाङ्गैः इव मुहूर्त्तमपि अविरहितौ, संवाहनतत्पराया: श्रियो (३७३) विकचरक्तपङ्कजवनवासभवनानीव कल्पयन्तौ, (३७४) जलजशङ्खमीनमकरसनाथतलतया कथितचतु-रम्भोधिभोगचिह्नौ इव चरणौ दधानम्; (३७५) दिङ्नाग-

---

भाव, अस्तमयसन्ध्यामिव—नाशप्राप्तिरूपसायङ्कालम्‌इव, अस्तगमनसन्ध्याकालमिव च, धारयन्तौ—दधानौ। अशेषेति।—अशेषाणां—समस्तानां, राजकानां—सामन्त-नृपाणां, कुसुमानि—पुष्परचितानीति यावत्, यानि शेखराणि—शिरोभूषणानि, [ "अशेषराजककुसुमशेखर—" इत्यत्र "अशेषरा कशेखरकुसुम—" इति पाठे,—अशेषराजकानां शेखराणि—शिरोभूषणमाल्यरूपाणि, यानि कुसुमानि ] तेषां मधुरसाः,—मकरन्दरसाः, तेषां स्रोतांसीव—प्रवाहानिव, स्रवन्तौ—वर्षन्तौ।

(३७१) समस्तेति।—समस्तानां सामन्तानाम्—अधीश्वराणां, ("सामन्तः स्यादधीश्वरः" इत्यमरः) सीमन्ताः,—केशविन्यासाः, ("सीमन्तः केशविन्यासः" इत्यमरटीका) तेषाम् उत्तंसाः,—मण्डनानि, याः स्रजः,—माल्यानि, तासां सौरभेण—सद्गन्धेन, भ्रान्तानि—घूर्णमानानि तैः।

(३७२) भ्रमरमण्डलैः,—भृङ्गसङ्घैः, अमित्रोत्तमाङ्गैरिव—शत्रूणां शिरोभिरिव, अविरहितौ—अमुक्तौ। संवाहनेति।—संवाहनम्—अङ्गादिमर्द्दनरूपा सेवा, तस्मिन् तत्परा—रता तस्याः, श्रियः,—राजलक्ष्म्याः।

(३७३) विकचेति।—विकचानि—प्रस्फुटानि, रक्तपङ्कजवनानि—रक्तकमल-काननानि एव, वासभवनानि—वासगृहाणि तानि इव, कल्पयन्तौ—रचयन्तौ।

(३७४) जलजेति।—जलजं—पद्मं, शङ्खः,—कम्बुः, मीनः,—मत्स्यः, मकरः,—जलजन्तुभेदः, तैः सनाथं—युक्तं, तलं ययोः, तयोर्भावः तत्ता तया हेतुना। जलजेत्यादिलक्षणानि राजचक्रवर्त्तित्वज्ञापकानि बोध्यानि। कथितेति।—कथितं—प्रकटितं, चतुर्णाम् अम्भोधीनां—सागराणां, चतुरम्भोधिवेष्टितायाः भुवः इति यावत्, भोगचिह्नं—भोगलक्षणं याभ्यां तथाभूताविव, चरणौ—पादौ, दधानं—धारयन्तम्।

(३७५) दिङ्नागेति।—दिङ्नागस्य—"ऐरावतः पुण्डरीकः वामनः कुमुदो-

दन्तमुसलाभ्यामिव (३७६) विकटमकरमुखप्रतिबन्धबन्धुराभ्याम्, (३७७) उद्वेललावण्यपयोनिधिप्रवाहाभ्यामिव (३७८) फेनाहितशोभाभ्यां, कल्पचन्दनद्रुमाभ्यामिव (३७९) भोगिमण्डलशिरोरत्नरश्मिरज्यमानमूलाभ्यां, हृदयारोपितभूभारधारणमाणिक्यस्तम्भाभ्याम् ऊरुदण्डाभ्यां विराजमानम्; (३८०) अमृतफेनपिण्डपाण्डुना

ऽञ्जन'। पुष्पदन्त' सार्व्वभौमः सुप्रतीकश्च दिग्गजाः॥" इत्युक्तेषु अष्टसु दिग्गजेषु प्राधान्येनोक्तत्वात् ऐरावतस्य इत्यर्थः, दन्ताविव मुसलौ ताभ्यामिव।

(३७६) विकटेति।—विकटः,—उत्कटः, यो मकरस्य—जलजन्तुभेदस्य, मुखमिव प्रतिबन्धः,—जानसन्धिरित्यर्थः तेन बन्धुरौ—उन्नतानतौ ताभ्यां, ("बन्धुरन्तून्नतानतम्" इत्यमरः) अन्यत्र,—विकटं यो मकरमुखः,—मकरमुखाकृतिभूषणविशेषः स एव प्रतिबन्धः,—समन्तप्रतिरोधकः इत्यर्थः तेन बन्धुरौ रम्यौ ("बन्धुरं मुकुटे पुंसि ······। ······त्रिषु स्याद्रम्यनम्रयो'॥" इति मेदिनी) ताभ्याम्।

(३७७) उद्वेलेति।—उद्वेल,—उच्छलन्, (उद्वेलतया लावण्यस्य समुच्छलद्रूपत्वमवगन्तव्य) वेलामतिक्रान्तश्च, यः, लावण्यपयोधिः,—लावण्यसागरः, लवणसमुद्रश्च, तस्य प्रवाहाविव—स्रोतसी इव ताभ्याम्।

(३७८) फेनेति।—फेनैः,—ओषधिविशेषाणां रसालोडनोत्थफेनसमूहैरित्य सततमश्वगजाद्यारोहणात् तद्घर्षणजनितोरुवैवर्ण्यापनोदनाय अर्पितैरिति भावः, अन्यत्र,—हिण्डीरैः ("हिण्डीरोऽब्धिकफः फेनः" इत्यमरः) आहिता—जनिता, शोभा ययोः ताभ्याम्। कल्पचन्दनद्रुमाभ्यामिव—वाञ्छितफलप्रदचन्दनतरुभ्यामिव। ["कल्पचन्दनद्रुमाभ्यामिव" इत्यत्र "चन्दनद्रुमाभ्यामिव" इति पाठान्तरम्]।

(३७९) भोगीति।—भोगिनां—सुखभोगरतानां, सांसारिकाणामित्यर्थः; यद्वा,—भोगिनां—नृपाणां, ("भोगी भुजङ्गमेऽपि स्यात् ग्रामपाले नृपे पुमान्" इति मेदिनी) अन्यत्र,—भोगिनां—सर्पाणां, मण्डलस्य—सङ्घस्य, शिरोरत्नानि, तेषां रश्मिभिः,—मयूखैः, रज्यमाने—अलङ्क्रियमाणे, मूले—पादमूले, वृक्षमूले इत्यर्थः ययोः ताभ्याम्। हृदयेति।—हृदयं—चित्तम्, आरोपितः यो भूभारः तस्य धारणे माणिक्यस्तम्भौ ताभ्याम्, इवेति शेषः।

(३८०) अमृतेति।—अमृतस्य फेनपिण्डः,—राशिः तद्वत्, अन्यत्र,—फेनपिण्डैः, पाण्डुः,—धवलः तेन।

(३८१) मेखलामणिमयूखखचितेन, नितम्बबिम्बव्यासङ्गिना, (३८२) विमलपयोधौतेन, (३८३) नेत्रसूत्रनिवेशशोभिना, अधरवाससा वासुकिनिर्मोकेणेव (३८४) मन्दरं द्योतमानम्; अघनेन, सतारागणेन, उपरिकृतेन, (३८५) द्वितीयाम्बरेण भुवनाऽऽभोगमिव भासमानम्; (३८६) इभपतिदशनमुसलसहस्रोल्लेखकठिनमसृणेन, (३८७) अपर्य्याप्ताम्बरप्रथिम्ना,

---

(३८१) मेखलेति।—मेखला—काञ्ची, काञ्चननिर्म्मितं कटिबन्धनसूत्रमिति यावत्, तत्र ये मणयः,—रत्नानि, अन्यत्,—मेखलासु—नितम्बेषु, मन्दरस्य इति भावः, ये मणयः, तेषां मयूखैः,—किरणैः, खचितं—रञ्जितं तेन। नितम्बबिम्बव्यासङ्गिना—नितम्बमण्डलसंसक्तेन, अन्यत्,—कटकतटव्यापिना।

(३८२) विमलेति।—विमलैः,—स्वच्छैः, पयोभिः,—जलैः, अन्यत्,—दुग्धैः, धौतेन—क्षालितेन, क्षीरोदस्य मन्थनकाले इति भावः।

(३८३) नेत्रेति।—नेत्रस्य—वस्त्रविशेषस्येत्यर्थः, ("नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च" इति मेदिनी) सूत्राणां—तन्तूनां, निवेशेन—रचनया, अन्यत्,—नेत्रं—मन्थनरज्जुः, तस्य सूत्राणां—तन्तूनां, निवेशेन—आधानेन, शोभते इति तथोक्तेन। अधरवाससा—परिधानवस्त्रेण। वासुकिनिर्मोकेणेव—वासुकेः,—नागराजस्य, निर्मोकेणेव—कञ्चुकेनेव।

(३८४) मन्दरं—तदाख्यं पर्वतम्। द्योतमानं—राजमानम्। अघनेन—सूक्ष्मेण, घनः,—मेघः तद्रहितेन च। सतारागणेन—ताराः—सूक्ष्मस्वर्णसूत्रनिर्मितनक्षत्राकारविन्दवः, नक्षत्राणि च, तेषां गणः,—समूहः, तत्सहितेन। उपरिकृतेन—उपरिधृतेन, देहोर्द्ध्वभागस्थेनेत्यर्थः, अन्यत्,—ऊर्द्ध्ववर्त्तिना।

(३८५) द्वितीयाम्बरेण—द्वितीयेन वसनेन, उत्तरीयेणेत्यर्थः, अन्यत्,—अम्बरेण—नभसा। भुवनाऽऽभोगमिव—भुवनाऽऽयाममिव, भासमानं—विराजमानम्।

(३८६) इभपतीति।—इभपतेः,—गजेन्द्रस्य, दशना एव मुसलानि, तेषां सहस्राणाम् उल्लेखेन—आघातेन, घर्षणेन च, कठिनं—दृढं, मसृणं—कोमलञ्च, अन्यत्,—चिक्कणं तेन।

(३८७) अपर्य्याप्तेति।—अपर्य्याप्तम्—असीमेत्यर्थः, यत् अम्बरम्—आकाशं, तस्येव प्रथिमा तेन, अन्यत्,—अपर्य्याप्ते अम्बरे प्रथिमा—विस्तारो यस्य तेन।

(३८८) विविधवाहिनीसङ्क्षोभकलकलसम्मर्दसहिष्णुना, कैलासम् इव महता स्फटिकतटेन उरुणा उरःकपाटेन राजमानम्; (३८९) श्री-सरस्वत्योः उरोवदनोपभोग-विभागसूत्रेणेव पातितेन, (३९०) शेषेणेव तद्भुज-स्तम्भविन्यस्तसमस्तभूभारलब्धविश्रान्तिसुखप्रसुप्तेन, हारदण्डेन परिवेष्टितकन्धरम्; (३९१) जीवितावधिगृहीतसर्व्वस्व-महादानदीक्षाचीरेणेव हारमुक्ताफलानां किरणनिकरेण

(३८८) विविधेति।—विविधाना—बहुविधाना, वाहिनीना—चमूना, सङ्क्षोभे—समवाये, य कलकल,—कोलाहल, तेन सम्मर्दः,—सङ्घर्षः, अन्यत्र,—वाहिनीना—नदीना, सङ्क्षोभे यः कलकल', तेन सम्मर्दं, तं सोढु शीलमस्येति तेन। उरुणा—महता, उर.कपाटेन—वक्ष.स्थलरूपेण कपाटेन। पर्व्वतान्तर-सामान्येऽपि शुभताऽऽधिक्यद्योतनार्थं कैलासमित्युक्तम्।

(३८९) श्री-सरस्वत्योरिति।—श्री-सरस्वत्यो.,—लक्ष्मी-वाग्देव्योः, सपत्न्योरिति भाव, उरो-वदनयो',—यथाक्रमेण लक्ष्म्या उरसः वाग्देव्या वदनस्येति यावत्, उपभोगः,—सम्भोग, लक्ष्म्या उरसि स्थितिः सरस्वत्या मुखे स्थितिरिति भाव, तस्य विभागसूत्रं—सीमाबन्धनसूत्रमित्यर्थः तेनेव, पातितेन—स्थापितेन, सीमानिर्देशार्थमिति भाव.।

(३९०) तद्भुजेति।—तस्य—हर्षस्य, भुजौ एव स्तम्भौ, तयो. विन्यस्त यः समस्त,—सम्पूर्ण', भूभार,—पृथिवीभार, तेन लब्धा—प्राप्ता, या विश्रान्तिः,—विश्राम., तया सुखम्—आनन्द यथा तथा, प्रसुप्तः,—निद्रितः तेन, शेषेण—अनन्त-नागेनेव, ["शेषेणेव" इत्यनन्तरं क्वचित् "च" इत्यधिक पाठ दृश्यते] हा दण्डेन—हारयष्टिना, कण्ठनिहितेनेति भावः, परिवेष्टिता—आलिङ्गिता, ["परिवेष्टित—" इत्यत्र "परिवलित—" इति पाठेऽपि स एवार्थः] कन्धरा—ग्रीवा यस्य तम्।

(३९१) जीवितेति।—जीवित—जीवनम्, अवधि,—शेषो येषा तानि, गृहीतानि—उपार्जितानि, यानि सर्वाणि स्वानि—धनानि, तेषा महादान—याचितो जीवनमपि ददाति किमु बाह्यानि धनानीति भावः, यद्वा,—जीवितं—जीवनमपीति भाव, अवधि,—शेषो यस्य तत् यथा तथा, गृहीत—स्वीकृतम्, अङ्गीकृतमित्यर्थं', सर्व्वस्वाना—सर्व्व-धनाना, महादान, तस्मिन् या दीक्षा—व्रतधारणनियमविशेषः, तस्याः चीरं—कौपीनरूपं वसनखण्ड, वल्कल वा तेनेव, दीक्षाग्रहणे चीरवसनं भूयते इति भाव.।

( ३९२ ) प्रावृतवक्षःस्थलम्; अजजिगीषया बालैः भुजैरिव अपरैः प्ररोहद्भिः, ( ३९३ ) बाहूपधानशायिन्याः श्रियः ( ३९४ ) कर्णोत्पलमधुरसधारासन्तानैरिव गलद्भिः, भुजजन्मनः प्रतापस्य निर्गमनमार्गैरिव आविर्भवद्भिः, अरुणैः केयूररत्नकिरणदण्डैः च यतः ( ३९५ ) प्रसारितमणिमयपक्षवितानमिव माणिक्यमहीधरम्; ( ३९६ ) सकललोकालोकमार्गार्गलेन ( ३९७ ) चतुरुदधिपरिक्षेपखातशिलाप्राकारेण,

---

( ३९२ ) प्रावृतेति।—प्रावृतम्—आच्छादितं, वक्षःस्थलं येन यस्य वा तथोक्तम्। अजजिगीषया—न जायते इति अजः,—विष्णुः तस्य जिगीषा—जयेच्छा तया, ("अजा विष्णुहरच्छागाः" इत्यमरः)। बालैः,—नवैः। प्ररोहद्भिः,—उत्पद्यमानैः, भुजैः।

( ३९३ ) बाहूपधानेति।—बाहुरेव उपधानम्—उपबर्हः, "बालिश" इति वङ्गभाषा, तस्मिन् शेते इति तथोक्तायाः, श्रियः,—राजलक्ष्म्याः। ["श्रियः" इत्यत्र "श्रिया" इति पाठान्तरम्]।

( ३९४ ) कर्णोत्पलेति।—कर्णोत्पलस्य—कर्णभूषणीभूतोत्पलस्य, मधुरसधाराणां—मकरन्दप्रवाहाणां, सन्तानैरिव—समूहैरिव गलद्भिः,—क्षरद्भिः। भुजजन्मनः,—बाहुजनितस्य, एतेन सैनादिकृतः नीत्यादिकृतश्च प्रतापः व्यवच्छिन्नः। आविर्भवद्भिः,—प्रकटीभवद्भिः। अरुणैः,—रक्तैः, केयूररत्नकिरणदण्डैः,—केयूररत्नानाम्—अङ्गदस्थमणीनां, किरणा एव दण्डाः तैः।

( ३९५ ) प्रसारितेति।—प्रसारितौ मणिमयौ पक्षवितानौ—विस्तृतपक्षौ इत्यर्थः यस्य तथोक्तमिव। माणिक्यमहीधरं—माणिक्यरत्ननिर्मितपर्वतं, माणिक्यपर्वतं वा।

( ३९६ ) सकलेति।—सकलानां लोकानाम् आलोकः—उद्योतः, प्रसिद्धिरित्यर्थः, तस्य मार्गः,—पन्थाः, तस्य अर्गलः,—कवाटरोधककाष्ठादिदण्डविशेषः तेन; अस्य बाहुदण्डप्रभावात् सर्वेषामेव भुजवीर्य्यशालिनां प्रभावजनितालोको विनाशं गतः इति भावः।

( ३९७ ) चतुरिति।—चतुर्णाम् उदधीनां—समुद्राणां सम्बन्धी, परिक्षेपः,—परिवेष्टनमेव चतुर्दिग्वर्त्तिसमुद्रा एवेत्यर्थः, खातानि—परिखाः, पृथिव्या इति भावः तेषां शिलाप्राकारः,—पाषाणनिर्मितः प्राचीरमित्यर्थः तेन, शिलाबद्धेन इति भावः नगरस्य समन्तात् प्राकारं दत्त्वा परितः परिखा क्रियते इति लोकव्यवहारः,

(३९८) सर्व्वराजहंसबन्धवज्रपञ्जरेण, (३९९) भुवनलक्ष्मीप्रवेश-मङ्गलमहामणितोरणेन, (४००) अतिदीर्घदोर्दण्डयुगलेन दिशां दिक्पालानाञ्च युगपदायतिमपहरन्तम्; (४०१) सौदर्य्य-लक्ष्मीचुम्बनलोभेन कौस्तुभमणेरिव मुखावयवतां गतस्य अध-रस्य गलता रागेण पारिजातपल्लवरसेनेव सिञ्चन्तं दिङ्मुखानि; (४०२) अन्तराऽन्तरा सुहृत्परिहासस्मितैः प्रकीर्य्यमाणविमल-दशनकिरणशिखाप्रतानैः (४०३) प्रकृतिमूढाया राजश्रियः प्रज्ञाऽऽलोकमिव दर्शयन्तम्; सुखजनितेन्दुसन्देहागतानि कुमु-

---

(३९८) सर्वेति।—सर्वेषां राज्ञां हंसानामिव, यद्वा,—राजहंसानां—राजश्रेष्ठानां, तदाख्यहंसविशेषाणाञ्च, बन्धे—बन्धने, निरोधने इत्यर्थः, वज्रपञ्जरं—वज्रनिर्म्मितं पञ्जरमित्यर्थः तेन।

(३९९) भुवनेति।—भुवनानां लक्ष्म्याः प्रवेशस्य मङ्गलं—माङ्गलिकमित्यर्थः, महामणितोरणं—महारत्ननिर्म्मितं बहिर्द्वारं तेन।

(४००) अतिदीर्घेति।—अतिदीर्घम्—अत्यायतं, दोर्दण्डयुगलं—भुजदण्ड-द्वयं तेन। युगपत्—समकालम्, आयतिं—दैर्घ्यं, प्रभावञ्च, ("आयतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः" इति मेदिनी) अपहरन्तं—नाशयन्तं, सङ्कोचयन्तम् इत्य र्थः।

(४०१) सौदर्य्येति।—सौदर्य्या—सहोदरा, एकगर्भजेत्यर्थः, भगिनीति यावत्, या लक्ष्मीः—श्रीः, मुखसम्बन्धिनीति भावः, तस्याः चुम्बनाय लोभः तेन हेतुना, कौस्तुभमणेरिव—विष्णुवक्षःस्थलस्थप्रसिद्धरत्नस्येव, क्षीरसागरोत्पन्नतया सहोदरस्येव इति भाव, मुखावयवतां—वदनैकदेशतां, गतस्य—प्राप्तस्य, तादृप्येण अवतीर्णस्येति भावः, अधरस्य गलता—स्रवता, रागेण—लौहित्येन, पारिजातपल्लवरसेनेव—पारिजात-किसलयद्रवेणेव, दिङ्मुखानि सिञ्चन्तं—क्षालयन्तम्।

(४०२) अन्तराऽन्तरा—मध्ये मध्ये। सुहृदेति।—सुहृद्भिः सह ये परिहासाः, तेषु स्मितानि—मन्दहासाः तैः। प्रकीर्य्यमाणेति।—प्रकीर्य्यमाणाः,—विक्षिप्यमाणाः, विमलाः दशनकिरणानां—दन्तमयूखानां, शिखाप्रतानाः,—प्रभानिचया यैषु तथोक्तैः, [ "दशनकिरणशिखाप्रतानैः" इत्यत्र "दशनशिखाप्रतानैः" इति पाठान्तरम् ]।

(४०३) प्रकृतिमूढायाः,—स्वभावमुग्धायाः, गुणदोषविचारानभिज्ञायाः इति

दिनीवनानीव प्रेषयन्तम्; स्फुटधवलदशनपङ्क्तिकृतकुमुद-वनशङ्काप्रविष्टां शरज्ज्योत्स्नामिव विसर्जयन्तम्; (४०४) मदिरा-ऽमृतपारिजातगन्धगर्भेण भरितसकलककुभा मुखामोदेन अमृतमथनदिवसमिव सृजन्तम्; (४०५) विकचमुखकमल-कर्णिकाकोशेन अनवरतमापीयमानश्वाससौरभमिवाधोमुखेन नासावंशेन, (४०६) चक्षुषः क्षीरस्निग्धस्य धवलिम्ना दिङ्मुखानि अपूर्व-वदनचन्द्रोदयोद्वेल-क्षीरोद-प्लावितानीव कुर्वाणम्; (४०७) विमलकपोलफलकप्रतिबिम्बितां चामरग्राहिणीं ग्राहिणीमिव मुखनिवासिनीं सरस्वतीं दधानम्; अरुणेन

---

भावः। प्रज्ञाऽऽलोकमिव—प्रकृष्टज्ञानरूपमालोकमिव, दर्शयन्तम्। मुखेति।—मुखे जनितः य इन्दुसन्देहः,—चन्द्रोऽयमिति संशयः, तेन आगतानि कुमुदिनीवनानीव प्रेषयन्तम्—इन्दुरयं नेति कृत्वा विसर्जयन्तम्। स्फुटेति।—स्फुटधवला या दशन-पङ्क्तिः तया कृता—जनिता, या कुमुदवनशङ्का, तया हेतुना प्रविष्टा, मुखाभ्यन्तर-मिति भावः, शरज्ज्योत्स्ना—शरत्कालिककौमुदीमिव, विसर्जयन्त—नैतानि कुमुद-वनानीति कृत्वा त्यजन्तम्।

(४०४) मदिरेति।—मदिराऽमृतवत् यः पारिजातगन्धः, स गर्भे यस्य तेन, भरितसकलककुभा—सर्वदिक्प्रसारिणेति यावत्, मुखामोदेन—वदनसौरभेण, अमृत-मथनदिवसमिव—पीयूषमन्थनदिनमिव, सृजन्त—जनयन्तम्।

(४०५) विकचेति।—विकच—प्रस्फुटं, मुखं कमलमिव, तस्य 'कर्णिका-कोशः,—अब्जवराटः, बीजकोशः इत्यर्थः तेन, तत्सदृशेनेति भावः, ("कर्णिका करिहस्ताग्रे ··। ··· ··ऽब्जवराटे कर्णभूषणे॥" इति मेदिनी)। अधोमुखेन—नतमुखावयवेन, "अधोमुखेन" इत्यनेन सौरभस्य सुघ्रेयत्वं तथा आपीयमानानुमितिश्च प्रकटयति। नासावंशेन—नासिकादण्डेनेत्यर्थः, अनवरतं—नियतम, आपीयमानम् —आघ्रायमाणं, श्वासस्य सौरभं येन तथोक्तमिव।

(४०६) क्षीरस्निग्धस्य—क्षीरवत् स्निग्धं तस्य, चक्षुषः धवलिम्ना—श्वैत्येन, दिङ्मुखानि अपूर्वः वदनं चन्द्रः, तस्य उदयेन उद्वेलः,—वेलायामुच्छलितः, यः क्षीरोदः, तेन प्लावितानीव—आप्लावितानीव।

(४०७) विमलेति।—विमले कपोलफलके—गण्डतटे, प्रतिबिम्बिता—प्रति-

चूडामणिशोचिषा (४०८) सरस्वतीर्ष्याकुपितलक्ष्मीप्रसादन-लग्नेन चरणालक्तकेनेव लोहितायितललाटतटम्; (४०९) आपाटलांशुतन्त्रीसन्तानवलयिनीं (४१०) कुण्डलमणिकुटिल-कोटिबालवीणाम्, (४११) अनवरतचलितचरणानां वादयताम् उपवीणयतामिव (४१२) स्वरव्याकरणविवेकविशारदं (४१३) श्रवणावतंसमधुकरकुलानां कलक्वणितमाकर्णयन्तम्; (४१४) उत्फुल्लमालतीमयेन राजलक्ष्म्याः कचग्रहलीला-

---

फलिता ताम्। विग्रहिणीमिव—मूर्त्तिमतीं व। सरस्वती—वाग्देवीम्। अरुणेन—रक्तेन, चूडामणिशोचिषा—चूडामणेः,—शिरोरत्नस्य, शोचिषा—प्रभया।

(४०८) सरस्वतीति।—सरस्वत्या या ईर्ष्या—द्वेषः, तया कुपिता या लक्ष्मी, तस्या प्रसादन—चरणप्रणिपातेन सान्त्वन, तेन लग्न—ससक्तं तेन, चरणालक्तकेनेव—चरणस्य लाचारसेनेवेत्यर्थ.। लोहितेति।—लोहितायित,—अरुणित, ललाट-तट' यस्य तथोक्तम्। [ "लोहितायितललाटतटम्" इत्यत्र "लोहितायतललाटतटम्" इति पाठे—लोहित आयत,—विशाल', ललाटतट' यस्य तमित्यर्थ।

(४०९) आपाटलेति।—आपाटला,—ईषद्रक्ता', अंशव,—मयूखा एव, तन्त्रीसन्ताना',—तन्त्रीसङ्घा, तेषा वलयं—मण्डल विद्यतेऽस्या इति तथोक्ता ताम्।

(४१०) कुण्डलेति।—कुण्डलयो,—कर्णभूषणयोः ये मणय', तेषा कुटिला—भङ्गिमती, कोटि,—शिखा इत्यर्थ, सा एव बालवीणा—सप्ततन्त्री विपञ्ची ताम्।

(४११) अनवरतेति।—अनवरतं—निरन्तर, चलिता चरणा येषा तथोक्तानाम्। उपवीणयता—वीणया उपगायतां, वीणया स्तुतिं कुर्वतामित्यर्थ तेषामिव। एतेन गानस्यैव प्राधान्य प्रकटयति।

(४१२) स्वरेति।—स्वरा,—निषादादय, व्याक्रियन्ते—प्रकाश्यन्ते अनेनेति स्वरव्याकरण, स चासौ विवेकश्चेति स्वरव्याकरणविवेकः, तेन विशारद—चतुर यथा तथा [ क्रियाविशेषणम् ]।

(४१३) श्रवणेति।—श्रवणयो,—कर्णयोः, यौ अवतंसौ—अलङ्कारविशेषौ, तयो मधुकरकुलानि भृङ्गसमूहा, स्थितानीति भाव, तेषा कलक्वणितं—मधुरा-स्फुट रणितम् आकर्णयन्त—शृण्वन्तम्। [ "कलक्वणितकम्" इति पाठान्तरम् ]।

(४१४) उत्फुल्ले ।—उत्फुल्लमालतीमयेन—विकसितमालतीगुम्फेन, राजलक्ष्म्याः

ऽऽलग्नेन नखज्योत्स्नावलयेनेव मुखशशिपरिवेशमण्डलेन मुण्डमालागुणेन परिकलितकेशान्तम्; (४१५) शिखण्डाभरणभुवा मुक्ताफलालोकेन मरकतमणिकिरणकलापेन च अन्योऽन्यसंवलनवृजिनेन प्रयागप्रवाहवेणिकावारिणेव आगत्य स्वयम् अभिषिच्यमानम्; (४१६) श्रमजलविलीनबहलकृष्णागुरुपङ्कतिलककलङ्ककल्पितेन कालिम्ना (४१७) प्रार्थनाचाटुचतुरचरणपतनशतश्यामिकाकिणेनेव

[ कचभूताया. ] कचग्रह,—केशाकर्षणं,तत्र या लीला—विलासः, तया आलग्न—ससक्तं । नखेति ।—नखाना, राजलक्ष्म्या इति भाव, ज्योत्स्नाः,—प्रभा इति यावत्, तासा वलय—मण्डलं तेनेव । मुखेति ।—मुखं शशीव—चन्द्र इव, तस्य परिवेशमण्डल—परिधिमण्डल तेन। मुण्डमालागुणेन—शिरोमालयेत्यर्थ,परिकलितः,—परिणद्ध.,केशान्तः,—केशप्रान्तः यस्य तथोक्तम्, यद्वा,—परिकलिता ये केशा, तैरन्तः,—मनोहर. तम्।

(४१५) शिखण्डेति।—शिखण्डाभरण—चूडाऽलङ्कारः, तस्मात् भवतीति तथोक्तेन। मुक्तेति।—मुक्ताफलानाम् आलोकेन—प्रभया। मरकतमणीना किरण-कलापेन—प्रभाजालेन, अन्योऽन्यस्य सवलनं—मिश्रणं, तत्र वृजिन—कलुषम्, आविलमित्यर्थ तेन। ("कलुष वृजिनैनोऽघम्" इत्यमर.)। प्रयागेति।—प्रयागे—गङ्गाया सरस्वत्याः यमुनायाश्च सङ्गमक्षेत्रे, या प्रवाहवेणिका—तिसृणा नदीना स्रोतोरूपा वेणी, तस्या वारि तेनेव। अभिषिच्यमान—क्रियमाणाभिषेकमित्यर्थ.।

(४१६) श्रमेति।—"श्रमजल—" इत्यादौ "वारविलासिनीभिः विलुप्यमान-सौभाग्यमिव सर्वत." इत्युत्तरेणान्वयः। श्रमजलेन—चामरादिसञ्चालननिमित्तकपरि-श्रमजनितेन जलेन, घर्म्मेणेत्यर्थः, विलीन—द्रवता गत, बहल—प्रशस्तम्, यद्वा,—बहल—घन, घनसन्निविष्टमिति यावत् कृष्णागुरुपङ्कतिलक—घृष्टकालागुरुद्रवरचितं तिलक, तस्य कलङ्क.,—चिह्न, ("कलङ्काङ्कौ लाञ्छनञ्च चिह्न लक्ष्म च लक्षणम्" इत्यमर.) तेन कल्पितः,—कृत तेन। कालिम्ना—श्यामलत्वेन।

(४१७) प्रार्थनेति।—"प्रार्थना" इत्यादौ प्रार्थनादीनि समस्तानि श्रीहर्षगतानि बोध्यानि प्रार्थनाया—मामनुगृहाणेति याञ्चाया, य. चाटु,—दैन्य, प्रियवचन वा, तेन चतुर—सविलास यथा तथा, यानि चरणपतनानि, तेषा शतेन—बाहुल्येनेति यावत्, या श्यामिका—कालिमा, तस्या. किण.,—चिह्नविशेषः तेनेव।

(४१८) नीलायमानललाटलेखाभिः, (४१९) क्षुभितमानसोद्गतैः उत्कलिकाकलापैरिव हारैः उल्लसद्भिः अवष्टभ्यमानाभिः, (४२०) विलासवल्गनचटुलैः भ्रूलताकल्पैः ईर्ष्यया श्रियमिव तर्ज्जयन्तीभिः, (४२१) आयामिभिः श्वसितैः अविरलपरिमलैः मलयमारुतमयैः पाशैरिव आकर्षन्तीभिः, (४२२) विकटबकुलावलीवराटकवेष्टितमुखैः दृहद्भिः स्तनकलसैः (४२३) स्वदारसन्तोषरसमिवाशेषमुद्धरन्तीभिः,

(४१८) नीलेति।—नीलायमाना—नीलेवाचरन्ती, ललाटलेखा—भालरेखा यासां ताभिः।

(४१९) क्षुभितेति।—क्षुभितानि—इष्टलाभविरहात् क्षोभं गतानि, यानि मानसानि—चेतांसि, तेभ्यः उद्गताः,—उत्थिताः तैः; क्षुभितं—वात्यावशात् चञ्चलं, यत् मानस—तदाख्यं सरः, त स्मात् उद्गतैः इति च। उत्कलिकाकलापैरिव—रणरणिकासमूहैरिव, वीचिसमूहैरिव च, ("कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषु" इति मेदिनी) उल्लसद्भिः,—राजमानैः, हारैः अवष्टभ्यमानाभिः,—स्तब्धीक्रियमाणाभिः।

(४२०) विलासेति।—विलासेन—विभ्रमेण, यत् वल्गनं—चलनं, तत्र चटुलाः,—पटवः तैः। भ्रूलताकल्पैः,—लतासदृशीभिः भ्रूभिः त्यर्थः। श्रियमिव—राजलक्ष्मीमिव, सपत्नीधियेति भावः।

(४२१) आयामिभिः,—दीर्घैः, श्वसितैः,—निश्वासैः, इष्टलाभविरहदुःखादिति भावः, अविरलः,—घनः, परिमलः,—सौरभं येषां तैः। पाशैरिव—रज्जुभिरिव, आकर्षन्तीभिः,—वशीकुर्व्वतीभिः, समीपमानयन्तीभिश्च, प्रियं हर्षमिति भ वः।

(४२२) विकटेति।—"विकट—" इत्यादिना उद्दीपनभावमेव व्यञ्जयति। विकटा—स्थूला, या बकुलावली—बकुलमाला, सैव वराटकः,—रज्जुः, ("वराटकः पद्मबीजकोषे रज्जौ कपर्द्दके" इति मेदिनी) तेन वेष्टितं मुखं येषां तैः। बृहद्भिः,—उत्तुङ्गैः, बृहत्त्वादेव हार्य्यमेषां द्योतयति, स्तनकलसैः,—स्तनाः कलसा इव तैः।

(४२३) स्वदारेति।—स्वस्य दाराः,—पत्नी, तेषु सन्तोषः,—प्रीतिरेव, रसः,—रागः, हर्षस्येत भावः, जलञ्च तमिव। बृहत्त्वेनैव च वक्ष्यति, अशेषम् इति।—अशेषं—समग्रं यथा तथा, उद्धरन्तीभिः,—उत्तोलयन्तीभिः, रिक्तीकुर्व्वतीभिरिति यावत्; कलसैः किल रज्जुवेष्टितमुखैः रसं (जलम्) उद्ध्रियते इति लोकव्यवहारः; तादृशस्तनप्रदर्शनेन हर्षस्य स्वदारसन्तोषो प न्यते, स्वसन्तोषश्च जन्यते इति भावः।

( ४२४ ) कुचोत्कम्पिकाविकारप्रेङ्खितानां हारतरलमणीनां रश्मिभिः आकृष्य हृदयमिव हठात् प्रवेशयन्तीभिः, प्रभामुचाम् आभरणमणीनां मयूखैः प्रसारितैः बहुभिरिव बाहुभिः आलिङ्गन्तीभिः, ( ४२५ ) जृम्भाऽनुबन्धबन्धुरवदनारविन्दावरणीकृतैः उत्तानैः करकिसलयैः सरभसप्रधावितानि मानसानीव निरुन्धतीभिः, (४२६) मदान्धमधुकरकुलकीर्य्यमाणकर्णकुसुमरजःकणकूणितकोणानि कुसुमशर-शरनिकरप्रहारमूर्च्छामुकुलितानीव लोचनानि चतुरं सञ्चारयन्तीभिः,अन्योऽन्यमत्सरात् (४२७) आविर्भवद्भङ्गुरभ्रुकुटिविभ्रमक्षिप्तैः कटाक्षैः कर्णेन्दीवराणीव ताड़-

( ४२४ ) कुचेति।—कुचानां—स्तनानाम्, उत्कम्पिका—कम्पविशेष एव, विकार,—सात्त्विकभावविशेष., तेन प्रेङ्खिता.,—चालिता. तेष, हारतरलमणीना—हारेषु तरला',—भास्वरा., ये मणयः,—रत्नानि तेषाम् ; हारस्य मध्यमणीनामिति वा, ("तरल चञ्चले भिङ्गे भास्वरेऽपि विलिङ्गकम्। हारमध्यमणौ पुंसि" इति मेदिनी ) रश्मिभि,—मयूखै., आकृष्य, हर्षमिति शेषः। प्रभामुचा—प्रभावर्षिणाम्, आभरणमणीनाम्—अलङ्काररत्ना , मयूखैः,—किरणै। आलिङ्गन्तीभिः,—आश्लिष्यन्तीभिः।

( ४२५ ) जृम्भेति।—जृम्भाणा—कामजनितानुभावविशेषाणाम्, अनुबन्धेन—सातत्येन, बन्धुराणि—भङ्गिमन्ति, रम्याणि वा, यानि वदनानि—मुखानि, अरविन्दानीव—पद्मानीव, तेषाम् आवरणीकृता,—आवरकत्वेन कल्पिताः तै.। उत्तानै.,—ऊर्द्ध्वीकृततलैरित्यर्थ., करकिसलयैः सरभसप्रधावितानि—सवेगप्रचलितानि, हर्षं प्रतीति भावः। निरुन्धतीभिः,—निरुद्धं कुर्व्वतीभि.।

( ४२६ ) मदान्धेति।—मदेन अन्धानि—मत्तानीति यावत्, ["मदान्ध—" इत्यत्र "मदनान्ध—" इति पाठान्तरम् ] यानि मधुकरकुलानि, तैः की माणानि—क्षिप्यमाणानि, यानि कर्णकुसुमाना रजांसि—परागा, तेषा कणै,—लेशैः, कूणिताः.—सङ्कुचिताः, कोणा.,—प्रान्तदेशाः येषा तानि। अत एव कुसुमेति।—कुसुमशरस्य—कामस्य, शरनिकरैः,—शरसमूहैः, प्रहारेण या मूर्च्छा—मोहः, तया मुकुलितानीव—निमीलितानीव, लोचनानि—नयनानि, चतुरं—सविलासं यथा तथा, सञ्चारयन्तीभि,—प्रेरयन्तीभिः। अन्योऽन्यमत्सरात्—परस्परेर्ष्यावशात्।

( ४२७ ) आविर्भवदिति।—आविर्भवन्तः,—प्रकटयन्त., भङ्गुराः,—कुटिलाः,

यन्तीभिः, (४२८) अनिमेषदर्शनसुखरसराशिं (४२९) मन्थरितपक्ष्मणा चक्षुषा पीतमिव (४३०) कोमलकपोलपालीप्रतिविम्बितं वहन्तीभिः, (४३१) अभिलाषलीलानिर्निमित्तस्मितैः चन्द्रोदयान् इव मदनसाहाय्यकाय सम्पादयन्तीभिः, (४३२) अङ्गभङ्गवलनान्योऽन्यघटितोत्तानकरवेणिकाभिः (४३३) स्फुटनमुखराङ्गुलीकाण्डकुण्डलीक्रियमाणनखदीधितिनिवहनिभेन अकिञ्चित्करकामकार्मुकाणीव रुषा भञ्जतीभिः वारविलासिनीभिः

ये भ्रुकुटिविभ्रमाः, तैः चिह्ना. तैः। कर्णेन्दीवराणीव—श्रवणनीलोत्पलानीव, ताडयन्तीभिः, स्वसाम्येर्ष्ययेति भावः।

(४२८) अनिमेषेति।—अनिमेषं—निर्निमेषं, दर्शनम्—अवलोकनं, तेन सुखरसाना—सुखास्वादाना, रस,—जलं तेषाञ्च, राशिर्यस्मिन् तं, हर्म्यमिति शेषः।

(४२९) मन्थरितेति।—मन्थरितानि—निश्चलानि, पक्ष्माणि—लोमानि यस्य तेन, चक्षुषा—नेत्रेण, पीतमिव।

(४३०) कोमलेति।—कोमलायां कपोलपाल्या—गण्डतटे, प्रतिबिम्बितं—प्रतिफलितम्, निर्म्मले स्फटिकभाजनादौ अन्तर्वर्त्तिद्रव्यमपि प्रतिबिम्बितं दृश्यते। वहन्तीभिः,—धारयन्तीभिः।

(४३१) अभिलाषेति।—अभिलाषस्य—कामतृष्णायाः, लीलया—विलासेन, निर्निमित्तानि—अहेतुकानि, स्मितानि—मृदुहसितानि तैः। मदनसाहाय्यकाय—कामसाहाय्याय। सम्पादयन्तीभि,—कारयन्तीभिः।

(४३२) अङ्गेति।—अङ्गाना भङ्गवलनेन—जृम्भादिजनितमोटनविशेषेण, अन्योऽन्येन—परस्परेण, घटिताः,—संयुक्ताः, उत्तानाः याः करवेणिकाः,—परस्परानुबन्धेन स्थितयोः करयोः अङ्गुलिविन्यासविशेषा. ताभिः।

(४३३) स्फुटनेन-मोटनेनेत्यर्थ., मुखरा,—सशब्दाः, अङ्गुलय एव काण्डाः,—शाखाविशेषाः, तैः कुण्डलीक्रियमाणाना नखाना दीधितिनिवहाः,—मयूखनिचयाः, तेषा निभः,—छल तेन। अकिञ्चित्कराणि—अक्षमाणि इति यावत् कैंचित्ताकर्षणाशक्तानीति भाव., कामस्य कार्मुकाणि—धनूंषि तानीव, रुषा—कोपेन, भञ्जतीभि,—खण्डयन्तीभिः।

(४३४) विलुप्यमानसौभाग्यमिव सर्व्वतः (४३५) सघर्म-स्विन्नवेपमानकरकिसलयगलितचरणारविन्दां चरणग्राहिणीं विहस्य कोणेन लीलाऽलसं शिरसि ताड़यन्तम्; (४३६) अनवरतकरकलितकोणतया च आत्मनः प्रियां वीणामिव श्रियमपि शिक्षयन्तम्; निःस्नेह इति धनैः, (४३७) अनाश्रयणीय इति दोषैः, निग्रहरुचिः इति इन्द्रियैः, दुरुपसर्प इति कलिना, नीरस इति व्यसनैः, (४३८) भीरुः इति अयशसा,

---

(४३४) विलुप्यमानेति।—विलुप्यमानं—क्रियमाणं, सौभाग्यं—बाहुल्यं यस्य तथोक्तमिव।

(४३५) सघर्मेति।—सघर्मेन स्विन्नः,—घर्माक्तः, वेपमानः,—कम्पमानश्च, सात्त्विकभावातिशयादिति भावः, यः करकिसलयः, तस्मात् गलितं—च्युत, चरणारविन्द —पादपद्मं, हर्षस्येति भावः यस्याः तथोक्ताम्। चरणग्राहिणीं—चरणसेविनीमित्यर्थः। कोणेन—वीणावादनदण्डेन, ("कोणो वीणादिवादनम्" इत्यमरः) लीलाऽलसं —विलासमन्थरम्। ताडयन्तं—प्रहरन्तम्।

(४३६) अनवरतेति।—अनवरतम्—अविरतं, करकलितः,—करधृतः, कोणो येन तथोक्तः, तस्य भावः तत्ता तया हेतुना, प्रियां—प्रीतिजननीम्। ["प्रियाम्" इति वीणायाः श्रियाश्च विशेषणम्]। शिक्षयन्तम्—अभ्यसन्तं, पर्य्यालोचयन्तमिति यावत्। निःस्नेहः,—स्नेहरहितः, सततव्ययशीलत्वादिति भावः। "निःस्नेह" इत्यादौ "एकमप्यनेकधा गृह्यमाणम्" इत्युत्तरेण सम्बन्धः, एवं सर्व्वत्र।

(४३७) अनाश्रयणीयः,—असेवनीय। निग्रहरुचिः,—निग्रहे—वशीकरणे, रुचिः,—अभिलाषो यस्य तथाभूतः। दुरुपसर्पः,—दुर्द्धर्षः। कलिना—चतुर्थयुगेन। नीरसः,—निरनुरागः। व्यसनैः,—मृगयादिभिरष्टादशभिः,तदुक्तं मनुना,—"दश कामसमुत्थानि तथाऽष्टौ क्रोधजानि च। व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत्॥ कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु॥ मृगयाऽक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाऽट्या च कामजो दशको गणः॥ पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः॥" इति।

(४३८) भीरु,—भयशील। अयशसा—अकीर्त्या, अकीर्त्तिकरेण दुश्चेष्टितेनेति भावः।

(४३९) दुर्ग्रहचित्तवृत्तिरिति चित्तभुवा, स्त्रीपर इति सरस्वत्या, शठः इति परकलत्रैः, काष्ठामुनिरिति यतिभिः, धूर्त्त इति वेश्याभिः, नेय इति सुहृद्भिः, कर्म्मकर इति विप्रैः, सुसहाय इति (४४०) शत्रुयोधैः एकमपि अनेकधा गृह्यमाणम्; (४४१) शन्तनोः महावाहिनीपतिं, भीष्मात् जितकाशिनं, (४४२) द्रोणात् चापलालसं,

(४३९) दुर्ग्रहेति।—दुर्ग्रहा—दुरा र्श, चित्तवृत्तिर्यस्य तथोक्तः। चित्त-भुवा—का । स्त्रीपरः,—स्त्रैणः। शठः,—धूर्त्तः, वञ्चक इत्यर्थः। [ "शठ." इत्यत्र "षण्ढ." इति पाठे—षण्ढ,—प्रजननाक्षमः, क्लीब इत्यर्थः।] काष्ठामुनि,—उत्कर्ष-वान् तापसः, ("काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः)। नेयः,—वशंवदः, परवशः इत्यर्थः। कर्म्मकरः,—भृत्यः। सुसहाय,—सुष्ठु सहायसम्पन्नः, कथमन्यथा एकेन वयं पराजिता इति भाव।

(४४०) शत्रुयोधै,—शत्रुवीरैः। अनेकधा—वहुधा। गृह्यमाण—ज्ञाय-मानम। अत्रोल्लेखालङ्कारः, तथा च दर्पणः,—"क्वचिद्भेदाद्ग्रहीतृणां विषयाणां तथा क्वचित्। एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते॥" इति।

(४४१) शन्तनोः,—तदाख्यात् कुरुवंशीयात् राज्ञः, [ल्यब्लोपे पञ्चमी] शन्तनुमपेक्ष्येत्य ः, एवमुत्तरत्र। महेति।—महत्यः वाहिन्यः सेना, तास पतिः तम्; पक्षे,—शन्तनुस्तु एकैव महती वाहिनी—महानदी, गङ्गा इत्यर्थ, तस्या. पतिरिति व्यतिरेकः। भीष्मात्—भीष्ममपेक्ष्य, जितकाशी—जितेन—जयेन, काशते—राजते इति तथोक्तः तम्; तथा च परशुरामः भीष्मेण पराजित, काशिराजदुहितृस्वयंवरे च समागतं सकाशिराजं नृपचक्रम् एका ी एव स विजित्य भ्रातुर्विचित्रवीर्य्यस्य दारार्थम् अम्बाऽम्बिकाऽम्बालिकानामकन्यात्रयम आ ीतवान, त्वम्स्तु ततोऽपि जितकाशी, जितेन्द्रियो वा तम्। तथा हि, यदा त्वयि त्वत्पुत्रे वा विद्यमाने कुतो मद्दौहित्राणां राज्यप्राप्तिः? इति पितु शन्तनोर्निमित्त मत्स्यगन्धानाम्नीं दासराजकन्यामर्थयते भीष्माय दासराजेन सा न दत्ता, तदा "नाहं राज्यं विवाहं वा करिष्यामि" इति भीष्मेण प्रतिज्ञात, तत एव चिरकुमारेणानेनाभावि, अतः भीष्मस्तु पितृगुरोर्वेन जितेन्द्रियः, अयन्तु स्वभाव इति व्यतिरेकः।

(४४२) द्रोणात्—धनुर्वेदाचार्य्यात्, चापे—धनुषि, लालसा यस्य तम्; अथ च, च—समुच्चये, अपगता लालसा यस्य तथोक्तः तं, निर्लोभमित्यर्थः; यद्वा,

( ४४३ ) गुरुपुत्रात् अमोघमार्गणं, ( ४४४ ) कर्णात् मित्रप्रियं ( ४४५ ) युधिष्ठिरात् बहुक्षमं, ( ४४६ ) भीमात् अनेकनागायुतबलं, ( ४४७ ) धनञ्जयात् महाभारतरणयोग्यं,

---

चापले—चपलकर्मणि, अलस,—मन्दव्यापारः, अपटुरित्यर्थः तम्; द्रोणस्तु धनलालसया द्रुपदेन सह विरोध कृतवान्, अयन्तु न तथेति व्यतिरेकः।

( ४४३ ) गुरुपुत्रात्—गुरुः,—द्रोणाचार्य्यः, तस्य पुत्रः,—अश्वत्थामा तस्मात्, अमोघाः,—अव्यर्थाः, मार्गणाः,—शराः यस्य तथोक्तः तम् अव्यर्थशरवर्षिणमित्यर्थः, तथा च "अद्यैव पाण्डवान् हनिष्यामि" इति प्रतिज्ञाय अश्वत्थामा ब्रह्मास्त्रे निक्षेपिते, तत्तेजसा सचराचर जगदपि सन्तप्यमान विलोक्य समागतेन सामरसङ्घेन विरिञ्चिना जगदनुकम्पया तदस्त्रोपसंहाराय याचितः स. "शरोऽयं मे अमोघ, शत्रुपक्षीयं कमप्येकं न हत्वा न निवर्त्तिष्यते" इत्युक्तवान्, ततः उत्तरायाः गर्भस्थ परीक्षितं विनाश्य स तमुपसंहृतवान; ततश्च भगवान् श्रीकृष्णः अङ्गुष्ठमात्रो भूत्वा उत्तरागर्भे प्रविश्य त पुनरुज्जीवितवानिति पौराणिकी वार्त्ता। अथ च, अमोघाः,—सफलाः, मार्गणाः,—याञ्चाः यत्र तथोक्तः, अर्थिप्रार्थितपूरक इति यावत। द्रौणि विधातुरपि याञ्चा न सम्यक् सफलामकरोत्, अयन्तु अर्थिमात्रस्यैव प्रार्थितप्रदाता अत एव व्यतिरेक।

( ४४४ ) कर्णात्—राधेयात्, मित्रप्रिय—मित्रस्य—सूर्य्यस्य, मित्राणाम्—सुहृदाञ्च, प्रिय तम्। ("—मित्रं सुहृदि न द्वयोः। सूर्य्ये पुंसि—" इति मेदिनी) सूर्य्यनन्दनतया सूर्य्यप्रियो हि कर्ण, अयन्तु सूर्य्योपासकतया तत्प्रिय। कर्णस्तु मित्रस्य एकस्य दुर्य्योधनस्य प्रिय, अयन्तु मित्राणां बहूनां प्रिय इति व्यतिरेक।

( ४४५ ) युधिष्ठिरात्—धर्मराजात्, बहुक्षम—क्षमागुणबहुलम्, अथ च बह्वी क्षमा—पृथिवी, राज्यमित्यर्थः यस्य तथोक्तम्।

( ४४६ ) भीमात्—अर्ज्जुनाग्रजपाण्डवात्। अनेकेति।—अनेकनागायुतवत्—नास्ति एकः,—श्रेष्ठ ("एकः सङ्ख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु" इति मेदिनी) येभ्य, ते च ते नागाः,—हस्तिनः, तेषाम् अयुतवत् महाबलहस्तिसमूहवदित्यर्थः, बलं—सामर्थ्यम्, अन्यत्र,—अनेकानि—बहूनि, नागानां—हस्तिनाम्, अयुतानि—दशसहस्राणि, बलानि—सैन्यानि यस्य तथोक्तः तम्।

( ४४७ ) धनञ्जयात्—अर्ज्जुनात्, महाभारते यो रण,—सङ्ग्राम, कुरुक्षेत्रादियुद्धमिति यावत्; अन्यत्र,—महान् भारः, पृथिव्या इति भावः तस्य तरण—

(४४८) कारणमिव कृतयुगस्य, बीजमिव विबुधसर्गस्य, उत्पत्तिद्वीपमिव दर्पस्य, एकागारमिव करुणायाः, प्रातिवेशिकमिव पुरुषोत्तमस्य, (४४९) खनिपर्व्वतमिव पराक्रमस्य, सर्व्वविद्यासङ्गीतगृहमिव सरस्वत्याः, द्वितीयामृतमथनदिवसमिव लक्ष्मीसमुत्थानस्य, (४५०) बलदर्शनमिव वैदग्ध्यस्य, एकस्थानमिव स्थितीनां, सर्व्वस्वकथनमिव कान्तेः, अपवर्गमिव रूपपरमाणुसर्गस्य, सकलदुश्चरितप्रायश्चित्तमिव राज्यस्य, (४५१) सर्व्वबलसन्दोहावस्कन्दमिव कन्दर्पस्य, उपायमिव पुरन्दरदर्शनस्य, आवर्त्तनमिव धर्म्मस्य, कन्याऽन्तःपुरमिव (४५२) कलानां, (४५३) परमप्राणमिव सौभाग्यस्य, राज-

---

वहनम्; यद्वा,—महतः,—प्रकृष्टस्य, भारस्य—कार्य्यधुरायाः, तरणं—सम्पादनमित्यर्थः, तस्य योग्यः तम्।

(४४८) कारणमिव—हेतुभूतमिव, कृतयुगस्य—सत्ययुगस्य। बीजमिव—अङ्कुरोत्पादकक्षुद्रवस्तुविशेष इव, विबुधसर्गस्य—देवसृष्टेः। उत्पत्तिद्वीपमिव—प्रभवस्थानमिव। एकागारमिव—अद्वितीय गृहमिव। प्रातिवेशिकं—प्रतिबिम्बमिव, प्रतिवेशिनमिव वा।

(४४९) खनिपर्व्वतमिव—आकरगिरिमिव। सर्व्वविद्यासङ्गीतगृहमिव—अशेषशास्त्रसङ्गीतालयमिव। द्वितीयामृतमथनदिवसमिव—अपरपीयूषोत्तलनवासरमिव।

(४५०) बलदर्शनमिव—शक्त्युत्कर्षप्रदर्शनमिव। एकस्थानमिव—अद्वितीयं निकेतनमिव। स्थितीनां—मर्य्यादानां, शिष्टाचाराणामित्यर्थः। सर्व्वस्वकथनमिव—निधिभूतत्वविज्ञापनमिव। अपवर्गमिव—साफल्यमिव, अथवा कृत्यावसानमिव, परमोत्कर्षमिवेत्यर्थः, ("स्यादपवर्गस्त्यागे मोक्षे कार्य्यावसाने साफल्ये" इति मेदिनी)। सकलदुश्चरितप्रायश्चित्तमिव—अखिलपापक्षयमात्रसाधनीभूतकर्म्मविशेषमिव।

(४५१) सर्व्वेति।—सर्व्वेषां बलानां—सैन्यानां, सामर्थ्यानां वा, सन्दोहः,—सङ्घः, तस्य अवस्कन्दः,—समावेशः तमिव। पुरन्दरदर्शनस्य—इन्द्रसाक्षात्कारस्य। आवर्त्तनमिव—आवर्त्तमिव, प्रत्यानयनकारणमिवेत्यर्थः।

(४५२) कलानां—नृत्यगीतादीनां चतुःषष्टिविधानां कलाविद्यानाम्।

(४५३) परमप्राणमिव—परमं बलमिव। ["परमप्राणमिव" इत्यत्र "परम-

सर्गसमाप्त्यवभृथस्नानदिवसमिव सर्व्वप्रजापतीनां, गम्भीरञ्च प्रसन्नञ्च, त्रासजननञ्च, रमणीयञ्च, कौतुकजननञ्च, पुण्यञ्च, चक्रवर्त्तिनं हर्षम् अद्राक्षीत्।

दृष्ट्वा च (४५४) अनुगृहीत इव, निगृहीत इव, साभिलाष इव, तृप्त इव, रोमाञ्चमुचा मुखेन मुञ्चन् आनन्दबाष्पवारिबिन्दून् दूरादेव विस्मयस्मेरः समचिन्तयत्,—"सोऽयं सुजन्मा, सुगृहीतनामा, तेजसां राशिः, (४५५) चतुरुदधिकेदारकुटुम्बी, भोक्ता

---

प्रमाणमिव" इति पाठे,—परमम्—उत्कृष्ट, प्रमाणं—दृष्टान्तस्थानमित्यर्थः तदिव]। राजसर्गेति।—राज्ञा सर्ग,—सृष्टिः, तस्य समाप्ति',—अवसान, सैव अवभृथस्नान—दीक्षान्तस्नानं, तस्य दिवस. तमिव। सर्वप्रजापतीना—सर्वेषा स्रष्टृणाम्। गम्भीरेत्यादि।—गम्भीरञ्च प्रसन्नञ्च इत्यादि अन्योऽन्यसापेक्षं बोद्धव्य, तेन गम्भीरत्वेऽपि प्रसन्नत्वं—प्रसादगुणसम्पन्नत्वम्, नो चेत् तथाविधत्व, तदा कुटिलप्रकृतित्व प्रसज्येत। किञ्च गम्भीरं—गभीरं, निम्नमित्यर्थः, सान्धकारमिति भाव', अथ च प्रसन्नं—नि ́लम्, इति विरोधोऽपि अत्र उद्भावनीय.। त्रासेत्यादि।—त्रासजननत्वेऽपि रमणीयत्व—रम्यदर्शनत्वम्, तथा च रघुवंशे कालिदासः,—"भीमकान्तैर्नृपगुणै. स बभूवोपजीविनाम्। अधृष्यश्चाधिगम्यश्च यादोरत्नैरिवार्णव.॥" तादृक्त्व नो चेत्, तस्य भीमाकृतित्व प्रसज्येत; तथा त्रासजननम् अथ च रमणीयमिति विरोधः। एव कौतुकजननत्वेऽपि पुण्य—पवित्रस्वभावम्; तथाभूतत्व नो चेत् तस्य पापकारित्वमेव सम्भाव्येत, यतः कौतुकजननत्वन्तु अपुण्यत्वादेव सम्पद्येत; तथा कौतुकजननम् अथ च पुण्य—सभक्तिदर्शनार्हं पवित्रमिति विरोधः। चक्रवर्त्तिन—सार्वभौमम्।

(४५४) अनुगृहीत इव—अनुकम्पित इव, प्रसन्नया दृष्ट्येति भाव.। निगृहीत इव—अभिभूत इव, तेजसेत्याशयः। साभिलाष इव—समुत्सुक इव, पुनः पुनः दर्शनाशयेति भावः। तृप्त इव—चरितार्थ इव, द्रष्टव्यवस्तुदर्शनेन इति हृदयम् अथ च, यः अनुगृहीत, स एव कथं निगृहीत.? य. साभिलाष, स कथं तृप्तः? इति विरोधोऽपि अत्र प्रकट.। रोमाञ्चमुचा—पुलकि ́नेत्यर्थ.। मुञ्चन्—त्यजन्। विस्मयस्मेर',—विस्मयेन—आश्चर्य्येण, अलौकिकज्ञानजनितेन इति तात्पर्य्यं, स्मेरः,—उत्फुल्लचित्त इत्यर्थ.।

(४५५) चतुरुदधीति।—चतुर्णाम् उदधीना—सागराणा, यत् केदारं—

ब्रह्मस्तम्भफलस्य, (४५६) सकलादिराजचरितजयज्येष्ठमल्लो देवः परमेश्वरो हर्षः। एतेन च खलु राजन्वती पृथ्वी। न (४५७) अस्य हरेरिव वृषविरोधीनि बालचरितानि, न (४५८) पशुपतेरिव दक्षोद्वेगकारीणि ऐश्वर्य्यविलसितानि, न (४५९) शतक्रतोरिव गोत्रविनाशपिशुनाः प्रवादाः, न (४६०) यमस्येव अतिवल्लभानि दण्डग्रहणानि, न वरुणस्येव

---

चेत्रम्, अन्तःपातीति यावत्, चतुरर्णवावृता महीति भावः, तदेव कुटुम्ब—पोष्य-वर्गः अस्येति तथोक्तः। भोक्ता – अधिकारी। ब्रह्मस्तम्भफलस्य—ब्रह्माण्डवर्त्ति-सर्व्वरत्नजातस्येत्यर्थः, वेदप्रतिपादितयज्ञफलसमूहस्य वा।

(४५६) सकलेति।—सकलाः,—समस्ताः, आदिराजाः,—मन्वादयः, तेषां चरितानि—आचाराः, तेषां जये—पराभवविषये, अतिक्रमणे इत्यर्थः, ज्येष्ठमल्लः,—प्रधानवीरः। परमेश्वरः,—सम्राट्। एतेन—हर्षेण। राजन्वती – प्रशस्तराजशालिनी इत्यर्थः, ["राजन्वान् सौराज्ये" (५।२।१४ पा०)' इति मतुपि रूपम् ]।

(४५७) अस्य—हर्षस्य। हरेरिव—कृष्णस्येव। वृषविरोधीनि—वृष,—धर्म्मः; अन्यत्र,—वृषरूपी,रिष्टासुरः, तस्य विरोधीनि—विध्वंसकानीत्यर्थः। बालचरितानि—शैशवक्रीडितानि। कृष्णो बाल्यलीलायां वृषं हतवान्, अयन्तु सदसद्विवेकसम्भावना-विरहितबालावस्थायामपि तत्पालक इति व्यतिरेकः।

(४५८) पशुपतेरिव—हरस्येव। दक्षेति।—दक्षाणां—कुशलानां, ज्ञानिना-मिति भावः; अन्यत्र,—दक्षस्य—तदाख्यप्रजापतेः, श्वशुरस्येति भावः, उद्वेगकारीणि—भीषणानि, ऐश्वर्य्यविलसितानि—आधिपत्यचेष्टितानि; अत्र तु ऐश्वर्य्यशब्दस्य गौण-वृत्तित्वं ज्ञातव्यम्, अन्यत्र,—ऐश्वर्य्याणि—ईश्वरधर्म्मा अणिमादय इत्यर्थः, अस्मिन् पक्षे तु ऐश्वर्य्यशब्दः मुख्यवृत्तिको बोध्यः; तेषां विलसितानि—विजृम्भितानि, वीरभद्रादिसृष्टिव्यापारा इत्यर्थः।

(४५९) शतक्रतोरिव—इन्द्रस्येव। गोत्रविनाशपिशुनाः,—गोत्राणां—वंशा-नाम्, अन्यत्र,—शैलानां, पर्व्वतानामित्यर्थः, ("गोत्रः शैले गोत्रं कुलाख्ययोः" इति मेदिनी) विनाशपिशुनाः,—विध्वंससूचकाः। प्रवादाः,—जनश्रुतयः दुष्कीर्त्तय इत्यर्थः।

(४६०) यमस्येव—अन्तकस्येव। अतिवल्लभानि—अतिप्रियाणि, अत्र अतिशब्देन श्रीहर्षस्य युक्तदण्डत्वं प्रतिपादयति, दण्डग्रहणानि—दण्ड,—कर, तस्य ग्रहणानि; अन्यत्र,—दण्डस्य—शासनयष्टेः, यमायुधस्येति यावत्, ग्रहणानि।

(४६१) निस्त्रिंशग्राहसहस्ररक्षिता रत्नालयाः,(४६२) न धनदस्येव निष्फलाः सन्निधिलाभाः, (४६३) ~ जिनस्येव अर्थवादशून्यानि दर्शनानि, (४६४)न चन्द्रमस इव बहुलदोषोपहताः श्रियः। चित्र-मिदम् अत्यमरं राजत्वम्। अपि च अस्य (४६५) त्यागस्य अर्थिनः,

(४६१) निस्त्रिंशेति।—निस्त्रिंशग्राहाणां—खड्गधारिणां, सहस्रैः; अन्यत्र,—निस्त्रिंशाः,—निर्दयाः, ("निस्त्रिंशः खड्गे ना निर्दये त्रिषु" इति मेदिनी) ग्राहाः,—अवहाराः, जलजन्तुभेदाः मकरा इति यावत्, ("ग्राहो ग्रहेऽवहारे च" इति मेदिनी। अवहारः,—मकर इत्यर्थः) तेषां सहस्रैः, रक्षिताः,—पालिताः। रत्नालयाः,—रत्नभाण्डागाराणि, अन्यत्र,—रत्नाकराः, समुद्रा इत्यर्थः।

(४६२) धनदस्येव—कुबेरस्येव, न निष्फलाः,—न अर्थादिफलप्राप्तिविरहिताः इत्यर्थः, यः कश्चित् अर्थितया अस्य समीपं गच्छति, स न विफलाभिलाषो भवतीति भावः, यद्वा,—न निष्फलाः,—सफलाः, ज्ञानोपदेशलाभादिति भावः, अन्यत्र,—दानादिव्ययाभावात् निष्प्रयोजना इत्यर्थः। सन्निधिलाभाः,—सन्निधिः,—सन्निधानं, समीपोपस्थितिरित्यर्थः; यद्वा,—सन्तः,—साधव एव, निधयः,—अमूल्यानि रत्नानि; अन्यत्र,—सन्तः,—उत्कृष्टाः, निधयः,—पद्मशङ्खादयः ("निधिर्ना शेवधिर्भेदाः पद्म-शङ्खादयो निधेः" इत्यमरः) तेषां लाभाः,—प्राप्तयः।

(४६३) जिनस्येव—बुद्धदेवस्येव। अर्थवादेति।—अर्थानां—धनानां, वादः,—मया इदं लब्धम्, अनेन एतत् प्राप्तमित्यादिरूपं वचनं, तेन शून्यानि—रहितानि, दर्शनानि—अवलोकनानि, अस्य राज्ञः साक्षात्कारे प्रभूता अर्था लभ्यन्ते इति भावः; अन्यत्र,—अर्थवादः,—स्तुतिवादः, तेन शून्यानि, सारवन्तीत्यर्थः। दर्शनानि—महा-यानादीनि तदीयशास्त्राणीति भावः।

(४६४) बहुलेति।—बहुलाः,—अनेके, दोषाः,—रागादय इत्यर्थः, तैरुपहताः,—आक्रान्ताः, मलिनीकृता इत्यर्थः, अन्यत्र,—बहुलस्य—कृष्णपक्षस्य, दोषाभिः,—रजनीभिः, ("बहुला नीलिकायां स्यात्……। पक्षयोः कृष्णपक्षे च वाच्यवत् प्राज्यकृष्णयोः॥" "दोषः स्यात् दूषणे पापे दोषा रात्रौ भुजेऽपि च" इति च मेदिनी) उपहताः,—विनष्टाः। श्रियः,—समृद्धयः; अन्यत्र,—शोभाः। अत्यमरम्—अतीवाविनश्वरम्, यद्वा—अमरमतिक्रान्तं, न्यक्कृतामरसमूहमित्यर्थः।

(४६५) त्यागस्य—दानस्य, अर्थिनः,—याचकाः, पर्य्याप्तौ विषयः न इत्युत्तरेणान्वयः, अर्थिनामपर्य्याप्तत्वात् अस्य त्यागाकाङ्क्षा न तृप्तिमायातीति भावः।

(४६६) प्रज्ञायाः शास्त्राणि, कवित्वस्य वाचः, (४६७) सत्त्वस्य साहसस्थानानि, उत्साहस्य व्यापाराः, (४६८) कीर्त्तेः दिङ्मुखानि, अनुरागस्य लोकहृदयानि, (४६९) गुणगणस्य सङ्ख्याः, कौशलस्य कलाः न पर्य्याप्तो विषयः। अस्मिंश्च राजनि (४७०) यतीनां योगपट्टकाः, (४७१) पुस्तक॰णां पार्थिव-

(४६६) प्रज्ञायाः,—प्रकृष्टाया बुद्धेः, शास्त्राणि, पर्य्याप्तो विषयः न इति अन्वयः; सर्व्वाणि शास्त्राणि अतीत्य बुद्धिः प्रवर्त्तते इति भावः। कवित्वस्य—काव्यरचयितृत्वस्य, वाचः, पर्य्याप्तो विषयः न इति अन्वयः, वाग्देवीमतिशायिनी कवित्वशक्तिरिति भावः।

(४६७) सत्त्वस्य—बलस्य, साहसस्थानानि, पर्य्याप्तो विषयः न इति अन्वयः; एतावदधिकं बलं, यत् तत्प्रकाशस्थानानि न लभ्यन्ते इति भावः। उत्साहस्य—बलप्रकटनस्येत्यर्थः, व्यापाराः पर्य्याप्तो विषयः न इति अन्वयः; उत्साहोपयोगि व्यापारस्थानं नास्तीति भावः।

(४६८) कीर्त्तेः,—यशसः, दिङ्मुखानि, पर्य्याप्तो विषयो न इति अन्वयः; एतावदधिकाः कीर्त्तयः, यत् दिगन्तेषु न मान्तीति भावः। अनुरागस्य—प्रीतेः, लोकहृदयानि—जनमानसानि, पर्य्याप्तो विषयो न इति अन्वयः, एतावाननुरागः, यल्लोकहृदयेषु न मातीति भावः।

(४६९) सङ्ख्याः,—एकादिपरार्द्धपर्य्यन्ता इति यावत्, गुणगणस्य—विद्यादि-गुणराशेः, पर्य्याप्तो विषयः न इति अन्वयः, एतावन्तो गुणाः, यत् न सङ्ख्यातुं शक्यन्ते इति भावः। कलाः,—चतुःषष्टिविधा शिल्पादिविद्याः, कौशलस्य—वैदग्ध्यस्य, पर्य्याप्तो विषयः,—प्रचुरं स्थानं, न, एतावत् वैदग्ध्यं, यत् कलाविज्ञानमतिशेते इति भावः।

(४७०) यतीनां—योगिनां, चतुर्थाश्रमिणामिति भावः, एवेति शेषः, योगपट्टकाः,—पर्य्यङ्कबन्धनार्थम् उपवीतभेदाः, न पुनः योगेन—विस्रम्भघातनेन, विश्वस्तवञ्चनेनेति यावत्, ("योगोऽपूर्व्वार्थसम्प्राप्तौ···। विश्रम्भघातके द्रव्योपायसन्नहनेष्वपि" इति मेदिनी) पट्टकाः,—कूटलेख्यानीत्यर्थः, नेति अन्यव्यवच्छेदः अर्थः, इति परिसङ्ख्याऽलङ्कारः।

(४७१) पुस्तकर्म्मणां—पुस्तं—लेप्यादिकर्म्म, कर्म्म—कार्य्यं येषां तेषां, पुत्तलिकादिनिर्म्माणकारकाणामित्यर्थः, ("पुस्तं लेप्यादिकर्म्मणि" इत्यमरः)

विग्रहाः, (४७२) षट्पदानां दानग्रहणकलहाः, (४७३) वृत्तानां पादच्छेदाः, (४७४) अष्टापदानां चतुरङ्गकल्पनाः, (४७५) पन्नगानां द्विजगुरुद्वेषाः, (४७६) वाक्यविदाम् अधिकरणविचाराः" इति (४७७) समुपसृत्य चोपवीती स्वस्तिशब्दम् अकरोत्।

---

पार्थिवविग्रहाः,—मन्मयशरीराणि, न तु राजगणविरोधाः, इति व्यवच्छेदस्य आर्थत्वात् परिसङ्ख्या। एवमुत्तरत्र।

(४७२) षट्पदानां—भ्रमराणां, दान—मद-वारि, तस्य ग्रहणे—आदाने, कलहाः,—विरोधाः, कलरवा इति भावः, न तु दानस्य—दत्तधनस्य, ग्रहणे कलहाः,—अहमग्रे अहमग्रे इत्यादिरूपेण विरोधा इति भाव ; यद्वा,—दाने—शुद्धौ, ऋणादिरूपेण दत्तस्य धनस्य परिशोधकाले इत्यर्थः, ("दानं गजमदे त्यागे पालनच्छेदशुद्धिषु" इति मेदिनी) यत् ग्रहणम्—आदान, तत्र कलहाः न।

(४७३) वृत्तानां—छन्दसां, पादच्छेदाः,—चरणविरामाः ; न तु पापविशेषे पदच्छेदनानि इति भावः।

(४७४) अष्टापदानां—शारिफलकानां, चतुरङ्गकल्पनाः,—चत्वारि अङ्गानि —हस्त्यश्वनौपादातरूपा अवयवा इत्यर्थः, तेषां कल्पनाः,—रचनाः ; चतुरङ्गक्रीडायां तत्तदाख्यशारिविन्यासा इत्यर्थः, न तु चतुरङ्गाणां—युद्धार्थं हस्त्यश्वरथपादातरूपाणां, कल्पनाः,—रचनाः, प्रयोजनाभावादिति भावः।

(४७५) पन्नगानां - सर्पाणां, द्विजगुरुद्वेषाः,— द्विजानां—पक्षिणां, गुरुः,—श्रेष्ठः द्विजगुरुः,—गरुडः इत्यर्थः, तस्मिन् द्वेषाः ; न तु द्विजेषु—ब्राह्मणेषु, गुरुषु च ; यद्वा,—द्विजगुरुषु—ब्राह्मणश्रेष्ठेषु, द्वेषा इति भावः।

(४७६) वाक्यविदां—वाक्यज्ञानां, मीमांसकानामित्यर्थः, अधिकरणविचाराः, —अधिकरणानां—"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥" इत्युक्तपञ्चलक्षणानां, विचाराः,—समालोचनानि, न तु अधिकरणे—धर्माधिकरणे, प्रजानां परस्परविरोधे तथ्यनिर्णयस्थाने इत्यर्थः, विचारा ; प्रजाः परस्परं न कलहायन्ते स्मेति भावः।

(४७७) समुपसृत्य—उपगम्य, उपवीती—उद्धृतदक्षिणकर इत्यर्थः, "उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः" इति वचनात्।

अथ (४७८) उत्तरेण नातिदूरे राजधिष्ण्यस्य गजपरिचारको मधुरम् अपरवक्त्रम् उच्चैः अग यत्,—

"करिकलभ ! विमुञ्च लोलतां चर विनयव्रतमानताननः।
मृगपतिनखकोटिभङ्गुरो गुरुरुपरि क्षमते न तेऽङ्कुशः" ॥ ५ ॥

राजा तु (४७९) तच्छ्रुत्वा दृष्ट्वा च तं गिरिगुहागतसिंहबृंहितगम्भीरेण स्वरेण पूरयन्निव नभोभागम् अपृच्छत्,—"एष स बाणः ?" इति। "यथा आज्ञापयति देवः, सोऽयम्" इति विज्ञापितो दौवारिकेण, "न तावदेनम् अकृतप्रसादः पश्यामि" इति तिर्य्यक् (४८०) नीलधवलांशुकशारां तिर-

(४७८) उत्तरेण—उत्तरस्यां दिशि। राजधिष्ण्यस्य—राजसदनस्य। गजपरिचारक—हस्तिपाल इत्यर्थः। अपरवक्त्र—तदाख्यं जातिविशेषम्।

गजान्तरपरिचारकः कश्चित् स्वपरिचरणीयं वयोधर्म्मेणाविनीतं करिशावकम् अनुशासितुमाह, करिकलभेति।—करिकलभ।—हे हस्तिशावक। लोलता—चापल्यं, विमुञ्च—त्यज, आनतम् आननं यस्य तथाभूतः सन्, विनयव्रत—शिष्टाचारमित्यर्थः, चर—कुरु, मृगपतेः,—सिंहस्य, नखकोटिः,—नखराग्रं, तद्वत् भङ्गुरः,—कुटिलः, गुरुः,—महान, शासिता च, अङ्कुशः,—हस्तिताडनायुधविशेष इत्यर्थः, ते—तव, उपरि न क्षमते—तव दौर्म्मं न सहते इत्यर्थः। अनेन अशिष्टानां दण्डयिता राजा, अस्य सन्निधौ बाणेन तथा उपचरितव्यमिति द्योत्यते। अत्र गजान्तरपरिचारकस्य कस्यचित् निजपरिचर्य्यमविनीतगजमुद्दिश्य प्रयुक्तः हस्तिपकोचितो विषय पुरस्थं बाणं प्रति राज्ञो हर्षस्य भूतवृत्तान्तस्मारकः सञ्जातः। तत्र "विमुञ्च लोलताम्" इति श्रवणेन करिणा स्वाभाविकरागिलस्य स्मरणोदयात् बाणस्यापि पूर्वश्रुतरागवत्त्वात् भुजङ्गतास्मृतिः सञ्जाता इति बोध्यम्। अत्राप्रस्तुतकलभवर्णनया प्रस्तुतस्य कवेः बाणस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः। अपरवक्त्रं वृत्तम् ॥ ५ ॥

(४७९) अत एवाह—तच्छ्रुत्वेत्यादि। गिरीति।—गिरिगुहां गतः सिंहः, तस्य बृंहितं—गर्जनं, तद्वत् गम्भीरः तेन। नभोभाग—गगनम्। अकृतप्रसाद,—न कृतः प्रसादः,—प्रसन्नता येन स, अप्रसन्न इत्यर्थः, भावबोधार्थमिति भाव। तिर्य्यक्—तिरश्चीनं, कुटिलं यथा तथेत्यर्थ।

(४८०) नीलेति।—नीला, धवलाश्च अशव एव अंशुकाः ; [ स्वार्थे कन्प्रत्ययः ]

स्करिणीम् इव (४८१) भ्रमयन् अपाङ्गनीयमानतरलतार-कस्य आयामिनीं चक्षुषः प्रभां परिवृत्य (४८२) प्रेष्ठस्य पृष्ठतो निषण्णस्य मालवराजसूनोः अकथयत्,—"महानयं भुजङ्गः" इति। (४८३) तूष्णीम्भावेन तु अगमितनरेन्द्र-वचसि तस्मिन् मूके च राजलोके, मुहूर्त्तमिव तूष्णीं स्थित्वा बाणो व्यज्ञापयत्,—"देव! (४८४) अविज्ञाततत्त्व इव, अश्रद्दधान इव, नेय इव, अविदितलोकवृत्तान्त इव च कस्मात् एवम् आज्ञापयसि? (४८५) स्वैरिणो विचित्राश्च लोकस्य स्वभावाः प्रवादाश्च। महद्भिस्तु यथार्थदर्शिभिः भवितव्यम्। न अर्हसि माम् अन्यथा सम्भावयितुम् अविशिष्टमिव। ब्राह्मणो-

---

अन्यत्र,—तथाविधानि अंशुकानि—वस्त्राणि, तैः शारा—शबला ताम्। तिरस्करिणी-मिव—जवनिकामिव।

(४८१) अपाङ्गेति।—अपाङ्गं—नेत्रप्रान्तं, नीयमाना—चाल्यमाना, तरला—चञ्चला, तारका—कनीनिका यस्य तथाभूतस्य, चक्षुषः आयामिनीं—प्रसारिणीं, प्रभां—कान्तिं, भ्रमयन्—सञ्चारयन्। परिवृत्य—पराङ्मुखीभूयेत्यर्थः।

(४८२) प्रेष्ठस्य—अतिप्रियस्य, पृष्ठतः,—पश्चाद्भागे, निषण्णस्य—उपविष्टस्य, मालवराजसूनोः,—मालवेन्द्रपुत्रस्य। ["अकथयत्" इत्यत्र "अकथयत" इति पाठे,—अस्योभयपदित्वादात्मनेपदत्वं ज्ञेयम्]। भुजङ्गः,—विटः, धूर्त्तः लम्पटो वा इत्यर्थः, ("भुजङ्गो विट-सर्पयोः" इत्यमरः)।

(४८३) तूष्णीम्भावेन—मौनभावेन, अगमितनरेन्द्रवचसि—अगमितम्—अबुद्धं, नरेन्द्रस्य—हर्षस्य, वचः येन तथाभूते, नरेन्द्रवचसो भावमविजानतीत्यर्थः, तस्मिन्—मालवराजसूनौ। मूके—वाग्व्यापाररहिते, मौनावलम्बिनीत्यर्थः, राजलोके—अन्यस्मिन् राज्ञां समवाये इत्यर्थः।

(४८४) अविज्ञाततत्त्व इव—अविदितयाथार्थ्य इव। अश्रद्दधान इव—अविश्वसन्निव। नेय इव—परवश इव, परो यथा बोधयति, तथैव धारणावान् इवेति भाव। अविदितलोकवृत्तान्त इव—अज्ञातजनचरित इव, असमीक्षितभुवनव्यापार इव वेत्यर्थ।

(४८५) स्वैरिणः,—स्वेच्छाऽनुवर्त्तिनः। अविशिष्टमिव—अविलक्षणमिव

ऽस्मि जातः सोमपायिनां वंशे वात्स्यायनानाम्। यथाकालम् (४८६) उपनयनादयः कृताः संस्काराः। सम्यक् पठितः साङ्गो वेदः। श्रुतानि यथाशक्ति शास्त्राणि। दारपरिग्रहात् अभ्यागारिकोऽस्मि। का मे भुजङ्गता? (४८७) लोकद्वयाविरोधिभिस्तु चापलैः शैशवम् अशून्यम् आसीत्। अत्र अनपलापोऽस्मि। (४८८) अनेन एव च गृहीतविप्रतीसारमिव मे हृदयम्। इदानीन्तु सुगत इव शान्तमनसि, मनाविव

---

साधारणमिवेत्यर्थः, अनार्य्यमिवेति भाव। सोमपायिनां—सोमयागं कृत्वा तच्छेष-सोमरसपानरतानां, वात्स्यायनानां—वत्समुनिसन्तानानाम्।

(४८६) उपनयनादयः,—उपनयनम् आदि—मुख्यं येषां ते, संस्काराः,—गर्भाधानादयः। साङ्गः,—"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः। ज्योतिषञ्चेति विज्ञेयं षडङ्गं कविसत्तमैः॥" इत्युक्तैः षड्भिरङ्गैः सह वर्त्तमानः। अभ्यागारिकः,—कुटुम्बव्यापृतः गृहस्थः इत्यर्थः, स्ववृत्तौ स्थित इत्यर्थो वा। ("कुटुम्बव्यापृतस्तु यः। स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम्" इत्यमरः)। भुजङ्गता—धूर्त्तता, लम्पटता वा। [केचित्तु "का मे" इत्यत्र "कामे" इति समस्तपा परिकल्प्य—"कामे भुजङ्गतेति कामभुजङ्गता, शृङ्गारित्वम्। कामे—मदने भुजङ्गता ज्ञेया, न मादृशेषु। न हि मे काचित् भुज—बाहुं, गता—प्राप्तेत्यर्थः" एवं व्याख्यानयन्ति; तत्तु न मनोरमं, प्रस्तुतप्रसङ्गसङ्गत्यभावात्]।

(४८७) लोकेति।—लोकयोः,—स्वर्ग-मर्त्त्ययोः, द्वयं, तस्य अविरोधीनि—अविरोधकराणि तैः, "लोकद्वयाविरोधिभिः" इत्यनेन त्रिवर्गस्यानुपघातं प्रकटयति; "शतायुर्वै पुरुषः कालमन्योऽन्यानुबद्धं परस्परस्यानुपघातेन त्रिवर्गं सेवेत" इत्यादि दर्शनात् शैशवेऽपि धर्म्मविरोधि किञ्चिन्नाचरितमिति भावः; चापलैः,—चपलकर्म्मभिः, यानि लोकगर्हितानि नरकजननानि च अतादृशैः कर्म्मभिरित्यर्थः, शैशवं—बाल्यम्, अशून्यम्—अविरहितम्। "शैशवमशून्यम्" इत्यनेन तदेकासक्ततां परिहरति आत्मनः। अनपलापः,—निरपह्नवः, अकृतनिजदोषगोपन इति यावत्।

(४८८) अनेनैव—बाल्यचापल्येनैवेत्यर्थः। गृहीतेति।—गृहीतः विप्रतीसारः,—अनुतापो येन तथाभूतमिव। ("पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि" इत्यमरः)। इदानीम्—अस्मिन् काले। सुगते इव—बुद्धदेवे इव। मनाविव—

कर्त्तरि वर्णाश्रमव्यवस्थानां, समवर्त्तिनीव च साक्षात् दण्ड-भृति देवे शासति (४८९) सप्ताम्बुराशिरशनाम् अशेषद्वीप-मालिनीं मही. क इव अविशङ्कः सर्वव्यसनबन्धोः अविनयस्य मनसाऽपि अभिनयं कल्पयिष्यति ? (४९०) आसतां तावत् मानुष्यकोपेताः, त्वत्प्रभावात् अलयोऽपि भीता इव मधु पिबन्ति। रथाङ्गनामानोऽपि लज्जन्त इव अभ्यनुवृत्ति-व्यसनैः प्रियाणाम्। (४९१) कपयोऽपि चकिता इव चपलायन्ते। शरारवोऽपि सानुक्रोशा इव श्वापदगणाः पिशि-तानि भुञ्जते। सर्वथा कालेन मां ज्ञास्यति स्वामी स्वयमेव।

---

वैवस्वते आदिराजे इव। वर्णेति।—वर्णाः,—ब्राह्मणक्षत्रियवैश्यशूद्राः, आश्रमाः,—ब्रह्मचर्य्यगृहस्थवानप्रस्थभिक्षुकाः, तेषां व्यवस्थाः,—स्थितयः तासां, कर्त्तरि—नियन्तरि। समेति।—समं वर्त्तते इति समवर्त्ती—यमः तस्मिन्निव। ("धर्मराजः पितृपतिः समवर्त्ती परेतराट्। कृतान्तो यमुनाभ्राता शमनो यमराड्-यमः॥" इत्यमरः) दण्डभृति—दण्डं बिभर्त्तीति दण्डभृत् तस्मिन्, दण्डधरे इत्यर्थः।

(४८९) सप्ताम्बुराशिरशना—सप्त अम्बुराशयः,—सागराः, रशनाः,—मेखला यस्याः ताम्। अशेषद्वीपमालिनी—बहुद्वीपशालिनी, सप्तद्वीपवतीमिति यावत्, मही—पृथ्वी, शासति—पालयति सति। अविशङ्कः,—निर्भीकः। सर्वेति।—सर्वेषां व्यसनानां—कामज-कोपजदोषाणां, बन्धुः,—मित्रं, सहचर इति यावत् तस्य। अविनयस्य—चापल्यस्य। अभिनयं—चेष्टाविशेषमिति यावत्, कल्पयिष्यति—करिष्यतीत्यर्थः।

(४९०) आसतां—तिष्ठन्तु। मानुष्यकोपेताः,—मानुष्यकं—मनुष्यस्य भावः, तेन उपेताः,—युक्ताः, मनुष्यधर्मिण इत्यर्थः। अलयः,—भ्रमराः। रथाङ्गनामानः,—चक्रवाकाः। अभ्यनुवृत्तिव्यसनैः,—अतिशयासक्तिभिः इत्यर्थः। प्रियाणां—चक्रवाकीणामिति भावः।

(४९१) कपयः,—वानराः, चकिता इव—शङ्किता इव, चपलायन्ते—चपला इवाचरन्ति, ["कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति क्यङि रूपम्]। शरारवः,—हिंस्राः, श्वापदगणाः,—व्याघ्रादिपशुसमूहाः, सानुक्रोशाः,—सदयाः, दुर्वृत्तताजनितानुतापशालिनः सन्त इत्यर्थः, पिशितानि—मांसानि, भुञ्जते—खादन्ति कालेन—समयेन।

(४८२) अनपाचीनचित्तवृत्तिग्राहिण्यो हि भवन्ति प्रज्ञावतां प्रकृतयः" इत्यभिधाय तूष्णीम् अभूत्।

भूपतिरपि—"एवम् अस्माभिः श्रुतम्" इत्यभिधाय तूष्णीमेव अभवत्। (४८३) सम्भाषणासनदानादिना तु प्रसादेन एनम् अन्वग्रहीत्, केवलम् अमृतवृष्टिभिः स्नपयन्निव स्नेहगर्भेण दृष्टिपातमात्रेण अन्तर्गतां प्रीतिम् अकथयत्। (४८४) अस्ताभिलाषिणि च लम्बमाने सवितरि विसर्जितराजलोकोऽभ्यन्तरं प्राविशत्। (४८५) बाणोऽपि निर्गत्य धौतारकूटकोमलातपत्विषि निर्वाति वासरे, (४८६) अस्ताचलकूटकिरीटे निचुलमञ्जरीभासि तेजांसि मुञ्चति वियन्मुचि मरीचिमति,

(४८२) अनपाचीनेति।—अनपाचीनाम्—अविपरीता, प्रमृष्टामित्यर्थः, विशुद्धामिति यावत्, ("अपाचीनोऽवागर्थे विपर्यस्ते च वाच्यवत्" इति मेदिनी) चित्तवृत्तिं गृह्णन्तीति तथाभूता।

(४८३) सम्भाषणेति।—सम्भाषण—संलाप, आसनदानञ्च आदि यस्य तथोक्तेन, प्रसादेन—अनुग्रहेण, प्रीतिज्ञापकेनेति यावत्, एनं—बाणं, न अन्वग्रहीत् —न अनुचकम्पे। स्नपयन्निव—अभिषिञ्चन्निव।

(४८४) अस्ताभिलाषिणि—अस्ताचलगमनो ते। लम्बमाने—पश्चिमां दिशमवतरतीत्यर्थः। विसर्जितराजलोकः,—स्वस्थानगमनाय राजन्यान् अनुमन्यमान इत्यर्थः।

(४८५) "बाणोऽपि" इत्यस्य "निजावस्थानमगात्" इत्यु-रेणान्वय। धौतेति। —धौत—प्रमृष्टमिति यावत्, यत् आरकूटं—पित्तलं, ("रीतिः स्त्रियामारकूटम्" इति पित्तलपर्य्यायेष्वमरः) तद्वत् कोमला आतपस्य त्विषः,—प्रभाः यस्य तादृशे। निर्वाति—निर्वाणं गच्छति, अवसानं प्राप्ते इत्यर्थः।

(४८६) अस्ताचलेति।—अस्ताचलस्य—अस्तगिरेः, कूटं—शृङ्ग, ("कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः) तस्य किरीट—मुकुटं, मुकुटस्वरूपमित्यर्थः तस्मिन्। निचुलेति। —निचुलस्य—स्थलवेतसस्य, इज्जलाख्यवृक्षस्य वा, ("निचुलोऽम्बुज इज्जलः" इत्यमर) मञ्जरी—नववल्लरी, तस्या भास इव भास,—दीप्तयः येषां तथाभूतानि, तेजांसि—किरणान्, मुञ्चति—विकिरति। वियन्मुचि—गगनपरित्यागिनि। मरीचिमति—सूर्य्ये [ "मरीचिमति" इत्यत्र "मरीचिमालिनि" इति पाठेऽपि स एवार्थः ]।

( ४९७ ) रोमन्थमन्थरकुरङ्गकुटुम्बाध्यास्यमानम्रदिष्ठगौष्ठीनपृष्ठासु अरण्यस्थलीषु, ( ४९८ ) शोकाकुल-कोककामिनी-कूजितकरुणासु तरङ्गिणीतटीषु, ( ४९९ ) वासविटपोपविष्ट-वाचाटचटकचक्रवालेषु, ( ५०० ) आलवालावर्जितसेकजल-कुटेषु निष्कुटेषु, ( ५०१ ) दिवसविहृतिप्रत्यागतं प्रस्नुतस्तनं

---

( ४९७ ) रोमन्थेति।—रोमन्थेन—उद्गीर्य्य चर्व्वणेन, मन्थराः,—अलसाः, कुरङ्गाणां—हरिणानां, कुटुम्बाः,—वर्गाः, [ "रोमन्थमन्थरकुरङ्गकुटुम्ब—" इत्यत्र "अतिरोमन्थमन्थरकुरङ्गकुटुम्बक—" इति पाठे,—अति—अतिमात्र, पुनः पुनरित्यर्थः, यः रोमन्थ, तेन मन्थरा कुरङ्गाणां कुटुम्बा एव इति कुटुम्बकाः ] तैः अध्यास्यमानम् —अधिष्ठीयमानम्, अत एव म्रदिष्ठम्—अतिमृदु, कोमलमित्यर्थः, गौष्ठीन—भूतपूर्व्व-गोष्ठ, [ "गोष्ठात् खञ् भूतपूर्वे" ( ५ । २ । १८ पा० ) इति मत्वर्थीये खञि रूपम्। "गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्व्वकम्" इत्यमरः। अत्र "गोष्ठीनम्" इति पाठस्तु अपाणिनीय एव, तत्र खञि उपधाहृद्धेस्तदसिद्धेः। अत्र मुग्धबोधटीकायां रामतर्कवागीशपादाः,—"गोष्ठाद्भूतपूर्वे ष्णीनः" इति सूत्रेण प्रथमान्तात् भूतपूर्व्वार्थे वर्त्तमानात् गोष्ठशब्दात् स्वार्थे ष्णीनो वा स्यात्, तथा च, भूतपूर्वं गोष्ठं गोष्ठीनम्, भूतपूर्वे इति किम्? गोष्ठी वर्त्तते इत्याहुः" तथा चैतन्मते गोष्ठीनमिति पदमपि सिध्यति इति बोध्यम् ] पृष्ठम्—उपरिभागो यासां तासु। अरण्यस्थलीषु—वनभूमिषु।

( ४९८ ) शोकेति।—शोकाकुलानां, कान्तविरहादिति भावः, कोककामिनीनां—चक्रवाकीणां, कूजितैः,—विलपितैरित्यर्थः, करुणाः,—कारुण्यजनन्यः, तासु। तरङ्गिणीतटीषु—नदीतीरेषु।

( ४९९ ) वासेति।—वासविटपेषु—आश्रयभूतवृक्षशाखासु, उपविष्टं वाचाटानां —रुवतामित्यर्थः, चटकानां—क्षुद्रपक्षिविशेषाणां, चक्रवालं—मण्डलं येषु तथाविधेषु।

( ५०० ) आलेति।—आलवालानि—तरुतलेषु मण्डलाकारेण रचिता जला-धारविशेषाः तेषु, ( "—अम्भसां यत्र धारणम्। स्यादालवालमावालम् ·· ·" इत्यमरः ) आवर्जितानि—रचितानि, सेकजलकुटानि—सेचनार्थं जलघटाः [ "सेकजलकुटेषु" इत्यत्र "सेकजलकूटेषु" इति पाठे,—"सेकजलकूटानि—सेचनजलसमूहाः" ] येषु तथाभूतेषु। निष्कुटेषु—गृहारामेषु, ( "गृहारामास्तु निष्कुटाः" इत्यमरः )।

( ५०१ ) दिवसेति।—दिवसे विहृतिः—विहारः, विचरणमित्यर्थः, तस्याः

स्तनन्धये धयति धेनुवर्गम् उद्गतचीरक्षुभिततर्णकव्राते, क्रमेण च (५०२) अस्तधराधरधातुधुनीपूरप्लावित इव लोहितायमानमहसि मज्जति (५०३) सन्ध्यासिन्धुपानपात्रे पातङ्गे मण्डले, (५०४) कामण्डलुजलशुचिशयचरणेषु (५०५) चैत्यप्रणतिपरेषु पाराशरिषु, (५०६) यज्ञपात्रपवित्रपाणौ प्रकीर्णवर्हिषि उत्तेजसि जातवेदसि हवींषि वषट्कुर्व्वति यायजकजने,

प्रत्यागत—प्रतिनिवृत्तं, प्रस्नुतस्तनं—प्रस्नुता,—प्रचरिताः, स्तना यस्य तथोक्त, धेनुवर्गं—गोयूथं, स्तनन्धये—स्तनपायिनि, उद्गतेति।—उद्गतेन—उच्छलितेन, चीरेण—दुग्धेन, क्षुभितैः—क्षुब्धैः तर्णकाना—वत्साना, ("सद्योजातस्तु तर्णकः" इति गोप्रकरणे अमर.) व्रातः—समूहः तस्मिन, ["उद्गतचीरक्षुभिततर्णकव्राते" इत्यत्र "उद्गतचीरं क्षुभिततर्णकव्राते" इति पाठे,—उद्गतम्—उच्छलित, चीरं यस्य तं, धेनुवर्गमित्यस्य विशेषण, तथा क्षुधित तर्णकानां व्रात तस्मिन्] धयति—पिबति।

(५०२) अस्तेति।—अस्तधराधरः,—अस्ताचलः, तत्र ये धातव',—गैरिकमनःशिलादयः, ("……धातुर्नेन्द्रियेषु च। मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिकेऽस्थि च॥" इति मेदिनी) तेषु या धुन्यः,—तत्संसृष्टाः निर्झरिण्यः इत्यर्थ', तासा पूरै,—प्रवाहै., प्लाविते इव—सिक्ते इव। लोहितेति।—लोहितायमानानि—रक्तायमानानि, महांसि—तेजांसि यस्य तथोक्ते। मज्जति—तिरोभवतीत्यर्थः।

(५०३) सन्ध्येति।—सन्ध्या एव सिन्धुः,—नदी, समुद्रो वा, ("सिन्धुर्वमथुदेशाब्धिनदे ना सरिति स्त्रियाम्"इति मेदिनी) तस्या. पानपात्र—जलपात्रं, मद्यपानपात्रं वा तस्मिन्। पातङ्गे—पतङ्गः,—सूर्य्य., तस्य इदं पातङ्गं तस्मिन्। ("पतङ्गः शलभे शालिप्रभेदे पक्षि- [illegible]र्यो." इति मेदिनी)।

(५०४) कामण्डल्विति।—कमण्डलु,—यतीना जलपात्रभेदः, तस्य जलेन शुचय.—पवित्रा, शया,—पाणय., हस्ताः इत्यर्थः, ("पञ्चशाखः शय. पाणि." इत्यमरः) चरणाश्च येषा तेषु, कमण्डलुजलक्षालितपाणिपादेषु इत्यर्थ.।

(५०५) चैत्येति।—चैत्यम्—आयतनभेदः, पादपादिर्वा, ("चैत्यमायतने बुद्धबिम्बे नोद्देशपादपे"इति मेदिनी) तस्य तत्र वा प्रणति.,—अभिवन्दनं, देवताऽ[illegible]ष्ठितत्वेति भाव', तत्र परा:,—प्रवणा, तेषु। पाराशरिषु—भिक्षुषु, यतिषु इति यावत, ("भिक्षुः परिव्राट् कर्मन्दी पाराश[illegible]पि मस्करी" इत्यमर.) पराशरमतानुवर्त्तिषु [illegible]षु वा।

(५०६) यज्ञेति।—यज्ञपात्रैः,—स्रुक्स्रुवादिभिः, पवित्रः पाणि यस्य तथोक्ते।

( ५०७ ) निद्राविद्राणद्रोणकुलकलिलकुलायेषु ( ५०८ ) कापेयविकलकपिकुलेषु आरामतरुषु, ( ५०९ ) निर्जिगमिषति जरत्तरुकोटरकुटीकुटुम्बिनि कौशिककुले, ( ५१० ) मुनिकरसहस्रप्रकीर्णसन्ध्यावन्दनोदबिन्दुनिकरे इव दन्तुरयति तारापथस्थलीं स्थवीयसि तारकानिकुरम्बे, ( ५११ ) अम्बराश्रयिणि शर्वरीशबरीशिखण्डे खण्डपरशुकण्ठकाले कवलयति बाले

---

प्रकीर्णबर्हिषि—प्रकीर्णाः,—विकीर्णा, बर्हिषः,—कुशाः येन तस्मिन्, ( "बर्हिस् पुंसि हुताशने। न स्त्री कुशे" इति मेदिनी )। उत्तेजसि—प्रज्वलतीत्यर्थः, जातवेदसि—अग्नौ, हवींषि—हवनीयद्रव्याणि, वषट्कुर्वति—वषडिति मन्त्रेण प्रक्षिपति, यायजूकजने—अत्यर्थं यजनशीललोके। [ "यज-जप-दशां यङः" ( ३।२।१६६ पा० ) इति ऊकप्रत्यये रूपम् ]।

( ५०७ ) निद्रेति।—निद्रया—स्वप्नेन, विद्राणानि—आकुलानि,यानि द्रोणकुलानि—काकवृन्दानि, ( "अथ द्रोणः काकेऽपि ··" इत्यमरः ) तैः कलिलाः,—व्याप्ताः, कुलायाः,—नीडाः येषां तेषु।

( ५०८ ) कापेयेति।—कपीनामिदं कापेयं—कपिशिशुचापल्यमिति भावः, तेन विकलानि कपिकुलानि येषु तादृशेषु। आरामतरुषु—उपवनवृक्षेषु।

( ५०९ ) निर्जिगमिषति—निर्गन्तुमिच्छति, रात्रिचरत्वादिति भावः। जरदिति।—जरन्तः,—जीर्णा इत्यर्थः, ये तरवः,—वृक्षाः, तेषां कं कोटराणि एव—गह्वराणि एव, कुट्यः,—क्षुद्रगृहाणि, तत्र कुटुम्बी—परिवारवान् तस्मिन्। कौशिककुले—पेचकवर्गे।

( ५१० ) मुनीति।—मुनीनां करसहस्रैः,—बहुभिः हस्तैरित्यर्थः, प्रकीर्णाः,—प्रक्षिप्ताः, सन्ध्यावन्दनस्य ये उदबिन्दवः,—जलबिन्दवः, तेषां निकरे इव, दन्तुरयति—दन्तुरां कुर्वति। तारापथस्थली—तारापथम्—अन्तरीक्षमेव, स्थली ताम्। स्थवीयसि—स्थूलतरे। तारकानिकुरम्बे—तारागणे।

( ५११ ) अम्बराश्रयिणि—आकाशसञ्चारिणि। शर्वरीति।—शर्वरी—रात्रिरेव, शबरी—शबरनारी, तस्याः शिखण्डः,—चूडा, जूटकः इत्यर्थः तस्मिन्। ( "शिखण्डो बर्ह-चूडयोः" इति मेदिनी ) खण्डेति।—खण्डपरशुः—शिवः, तस्य कण्ठ इव कालः,—श्यामः तस्मिन्। कवलयति—ग्रसति। बाले—अभिनवे।

ज्योतिःशेषं सान्ध्यम् अन्धकारावतारे, (५१२) तिमिरतर्ज्जन-निर्गतासु (५१३) दहनप्रविष्टदिनकरकरशाखास्विव स्फुरन्तीषु दीपलेखासु, (५१४) अररसम्पटसङ्घीड़नकथिताऽऽवृत्ति-ष्विव गोपुरेषु, (५१५) शयनोपजोषजुषि (५१६) जरती-कथितकथे शिशयिषमाणे शिशुजने, (५१७) जरन्महिषमसी-मलीमसतमसि (५१८) जनितपुण्यजनप्रजागरे विजृम्भमाणे भीषणतमे तमीमुखे, (५१९) मुखरितविततज्यधनुषि वर्षति

ज्योतिःशेषम्—ज्योतिषा शेषः तम्, अवशिष्टालोकमित्यर्थः। सान्ध्य—सन्ध्याकालीनम्। अन्धकारावतारे—तिमिरोद्गमे।

(५१२) तिमिरेति।—तिमिराणां—तमसां, तर्जनाय—अपसारणाय, निर्गताः,—प्रसृताः तासु।

(५१३) दहनेति।—दहनम्—अग्निं, प्रविष्टाः,—गताः, दिनकरस्य—सूर्य्यस्य, करशाखाः,—कराः,—किरणा एव, शाखाः, तदाकारत्वादिति भावः, कराङ्गुलयश्च तास्विव। स्फुरन्तीषु—ज्वलन्तीषु। दीपलेखासु—दीपराजिषु।

(५१४) अररेति।—अरराणां—कवाटानां, ("कवाटमररं तुल्ये" इत्यमरः) सम्पुटस्य—युगलस्य, सङ्घीडनेन—शब्देन, अवरोधकालिकनिनादेनेत्यर्थः, कथिता—सूचिता, आवृत्तिः,—आवर्त्तनम्, अवरोधनमित्यर्थः येषां तथाभूतेषु। गोपुरेषु—पुरद्वारेषु, ("पुरद्वारन्तु गोपुरम्" इत्यमरः)।

(५१५) शयनेति।—शयने य उपजोषः,—मौनभावः, तज्जुषि—तच्छालिनि।

(५१६) जरतीति।—जरतीभिः,—वृद्धाभिः,कथिता—उक्ता, कथा—उपकथेति यावत् यस्य यस्मै वा तस्मिन्, शिशयिषमाणे—शयितुमिच्छतीत्यर्थः।

(५१७) जरदिति।—जरन्तः महिषा एव मस्यः,—लेखनसाधनानि द्रवद्रव्याणि, तद्वत् मलीमसानि—मलिनानि, तमांसि—तिमिराणि यस्मिन् तथोक्ते।

(५१८) जनितेति।—जनितः,—उत्पादितः पुण्यजनानां—राक्षसानां, निशाचराणामित्यर्थः, ("अथ पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च" इति मेदिनी) प्रजागरः,—प्रकृष्टजागरणं यस्मिन् तथाभूते। विजृम्भमाणे—आविर्भवति। तमीमुखे—रजनीमुखे, ("रजनी यामिनी तमी" इत्यमरः)।

(५१९) मुखरितेति।—मुखरिता—शब्दिता, टङ्कारध्वनियुता इति यावत्, वितता—विस्तृता, ज्या यस्य तादृशं धनुः यस्य तथाभूते। वर्षति—मुञ्चति।

शरनिकरम् अनवरतम् अशेषसंसारशेमुषीमुषि मकरध्वजे (५२०) रताकल्पारम्भशोभिनि शम्भलीभाषितभाजि भजति भूषां भुजिष्याजने, (५२१) सैरिन्ध्रीबध्यमानरशनाजालजल्पाक-जघनासु जनीषु, (५२२) वशिकविशिखाविहारिणीषु (५२३) अनन्यजानुप्लवासु प्रचलितासु अभिसारिकासु, विरलीभवति (५२४) वरटानां वेशन्तशायिनीनां मञ्जुनि

शरनिकरं—शरसङ्घातम्। अशेषेति।—अशेषाणां—समस्तानां, संसाराणां—सृष्टीनां, शेमुषी—बुद्धिः, ("बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः" इत्यमरः) तां मुष्णाति—अपहरति तस्मिन्। मकरध्वजे—कामे।

(५२०) रतेति।—रतस्य—निधुवनस्य, आकल्पाः,—वेशरचनाः, तेषाम् आरम्भेण—समुद्योगेन, शोभते इति तथोक्ते। शम्भलीति।—शम्भल्याः,—कुट्टिन्याः, ("कुट्टिनी शम्भली समे" इत्यमरः) भाषितं—वचनं, भजत—शृणोतीति तथा-भूते। भूषाम्—अलङ्कारं, शोभां वा, भजति—सेवमाने, परिदधाने इत्यर्थः, गच्छति वा, भुजिष्याजने—दासीजने, गणिकाजने वा, ("भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रक-दासयोः। स्त्रियां दासी-गणिकयोः" इति मेदिनी)।

(५२१) सैरिन्ध्रीति।—सैरिन्ध्रीभिः,—प्रसाधनशिल्पकारिकाभिः परवेश्मस्थ-स्ववशाभिः नारीभिः, ["सैरिन्ध्री" इत्यत्र "सैरन्ध्री" इति पाठेऽपि स एवार्थः। "सैरिन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका" इत्यमरः] बध्यमानानां—परिधाप्यमानानां, रशनानां—काञ्चीनां. जालैः,—सङ्घैः, जल्पाकं—मुखरं सशब्दमित्यर्थः जघनं—कटिपुरोभागो यासां तथाविधासु, जनीषु—वधूषु, नायिकासु इत्यर्थः, ("जनी सीमन्तिनी-बध्वोः" इति मेदिनी)।

(५२२) वशिकेति।—वशिका—शून्या, जनविरहितेति यावत्, ("शून्यन्तु वशिकं तुच्छरिक्तके" इत्यमरः) या विशिखा—रथ्या, तासु विहरन्ति—सञ्चरन्तीति तथोक्तासु।

(५२३) अनन्यजेति।—अनन्यजः,—अनङ्गः, अनुप्लवः,—अनुचरः, सहाय इत्यर्थः यासां तथाविधासु। ("अनुप्लवः सहायश्चानुचरोऽभिसरः समाः" इत्यमरः) प्रचलितासु—प्रस्थितासु, सङ्केतस्थानमिति शेषः। अभिसारिकासु—"कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका" इत्युक्तलक्षणासु नारीषु। विरलीभवति—अल्पी-भवतीत्यर्थः।

(५२४) वरटानां—हंसीनां, ("हंसस्य योषित् वरटा" इत्यमरः)। वेशन्त-

(५२५) मञ्जीरशिञ्जितजड़े जल्पिते, (५२६) निद्राविद्राण-द्राघीयसि द्रावयतीव च विरहिहृदयानि (५२७) सारसरसिते, (५२८) भाविवासरबीजाङ्कुरनिकर इव च विकीर्य्यमाणे जगति प्रदीपप्रकरे निवासस्थानम् अगात्। अकरोच्च चेतसि,— "अतिदक्षिणः खलु देवो हर्षः, यदेवम् (५२९) अनेकबाल-चरितचापलोचितकौलीनकोपितोऽपि मनसा स्निह्यत्येव मयि। यदि अहम् अक्षिगतः स्यां, न मे दर्शनेन प्रसादं कुर्य्यात्। इच्छति तु मां गुणवन्तम्। (५३०) उपदिशन्ति हि विनयम् अनुरूपप्रतिपत्त्युपपादनेन वाचं विनाऽपि भर्त्तव्यानां स्वामिनः।

---

शायिनीनां—पल्वलशायिनीनां, ("वेशन्तः पल्वलञ्चाल्पसरः" इत्यमरः)। मञ्जुनि—मनोज्ञे।

(५२५ मञ्जीरेति।—मञ्जीरस्य—नूपुरस्य, शिञ्जितं—रणितं, तद्वत् जड़ं—गम्भीरं मन्थरं वा तस्मिन्, जल्पिते—रवे।

(५२६) निद्रेति।—निद्रया—स्वप्नेन, विद्राणम्—अलसं, जडमित्यर्थः, द्राघीयः,—अतिदीर्घञ्च तस्मिन्। द्रावयतीव –द्रवीकुर्व्वतीव, अभिभवतीव क्लेशयतीवेत्यर्थो वा, कामाविष्टत्वादिति भावः।

(५२७) सारसरसिते—सारसानां—पक्षिविशेषाणां, रसितं—रुतं तस्मिन्।

(५२८) भावीति।—भाविनः,—भविष्यतः, वासरस्य—दिवसस्य, बीजाङ्कुराणां निकर इव—समूह इव। विकीर्य्यमाणे—समन्ततः प्रसार्य्यमाणे, प्रज्वाल्यमाने इत्यर्थः। अतिदक्षिणः,—अत्युदारः।

(५२९) अनेकेति।—अनेकं—बहुविधं, बालचरितं—शैशवकाले आचरितं, यत् चापलं तस्य उचितं यत् कौलीनं—लोकापवादः, ("स्यात् कौलीनं लोकवादे" इत्यमरः) तेन कोपितोऽपि। अक्षिगतः,—द्वेष्यः, ("द्विष्ये त्वक्षिगतः" इत्यमरः)।

(५३०) उपदिशन्ति—शिक्षयन्ति। विनयं—शिष्टाचारम्। अनुरूपेति।—अनुरूपा—योग्या, प्रतिपत्तिः,—सम्भावना, तस्याः उपपादनं—योजनं तेन। वाचं विनाऽपि—किमप्यकथयित्वाऽपीत्यर्थः, ["वाचम्" इत्यत्र "वाचा" इति पाठेऽपि स एवार्थः]। भर्त्तव्यानां—प्रतिपाल्यानाम्। स्वामिनः,—प्रभवः।

अपि च धिक् मां (५३१) स्वदोषान्धमानसम् अनादर-पीड़ितम् एवम् अतिगुणवति राजनि अन्यथा च अन्यथा च चिन्तयन्तम्। सर्वथा करोमि तथा, यथा यथाऽवस्थितं जानाति माम् अयं कालेन" इत्येवम् अवधार्य्य च अपरेद्युः (५३२) निष्क्रम्य कटकात् सुहृदां बान्धवानाञ्च भवनेषु तावत् अतिष्ठत्, यावत् अस्य स्वयमेव (५३३) गृहीतस्वभावः पृथिवी-पतिः प्रसादवान् अभूत्; अविशच्च पुनरपि नरपतिभवनम्। स्वल्पैरेव च अहोभिः परमप्रीतेन प्रसादजन्मनो मानस्य, प्रेम्णः, विस्रम्भस्य, द्रविणस्य, नर्म्मणः, प्रभावस्य च परां कोटिम् अनीयत नरेन्द्रेणेति।

इति श्रीबाणभट्टकृते हर्षचरिते राजदर्शनं नाम द्वितीय उच्छ्वास ॥ २ ॥

(५३१) स्वदोषेति।—स्वदोषेण अन्धं मानसं यस्य तथोक्तम्। अनादरपीडितम्—अनादरेण—अवज्ञया, पीडितं—व्यथितम्। राजनि—नृपविषये इत्यर्थः।

(५३२) निष्क्रम्य—निर्गत्य। कटकात्—शिविरात्।

(५३३) गृहीतस्वभाव,—विदितस्वरूप। पृथिवीपति,—हर्ष इत्यर्थ। अहोभि,—दिवसै। प्रसादजन्मन,—प्रसादजस्य। विस्रम्भस्य—विश्वासस्य। द्रविणस्य—धनस्य। नर्म्मण,—परिहासस्य। प्रभावस्य—प्रतिष्ठायाः। परां कोटिं—परमोत्कर्षम्।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध-विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चामलाख्यायां श्रीहर्षचरितव्याख्यायां द्वितीय उच्छ्वास. ॥ २ ॥

# तृतीय उच्छ्वासः।

निजवर्षाहितस्नेहा बहुभक्तजनान्विताः।
सुकाला इव जायन्ते प्रजापुण्येन भूभुजः ॥ १ ॥
साधूनामुपकर्तुं लक्ष्मीं धर्तुं विहायसा गन्तुम्।
न कुतूहलि कस्य मनश्चरितञ्च महात्मनां श्रोतुम् ? ॥ २ ॥

---

इदानीं श्रीहर्षचरितवर्णनोपक्रमे तत्पूर्व्वजस्य वंशप्रवर्त्तकस्य पुष्पभूतिनाम्नो राज्ञश्चरित वर्णयितुं तस्य प्रजारञ्जकत्वं सूचयन्नाह, निजेति।—निजम्—आत्मीयं, वर्ष—जम्बुद्वीप, वृष्टिश्च, ("वर्षोऽस्त्री भारतादौ च जम्बुद्वीपाब्दवृष्टिषु। प्रावृट्काले स्त्रिया भूम्नि" इति मेदिनी) तस्मिन् तेन च आहितः,—निहितः जनितश्च, स्नेहः,—प्रीतिः आर्द्रता च यैः तथाविधाः, बहुभिः,—अनेकैः, भक्तजनैः,—अनुजीविगणैः, अन्विताः,—युक्ताः; अन्यत्र,—बहूनाम्—अनेकेषां, भक्तानाम्—अन्नाना, जनेन—जननेन, अन्विताः,—युक्ताः, बहुधान्यादिजननयोग्या इत्यर्थः, भूभुजः,—पृथिवीपालाः, सुकाला इव—सुसमया इव, प्रजाना—प्रकृतीना, पुण्येन—सुकृतेन, जायन्ते—उत्पद्यन्ते; सौराज्यस्य सुसमयस्य च प्रजापुण्यमेव हेतुरिति निष्कर्षः। अनेन महाप्रभावस्य पुष्पभूतेः वर्णना सूचिता। अत्र सुकालैः सार्द्धं भूभुजामवैधर्म्यसाम्यप्रतिपादनादुपमाऽलङ्कारः, उपात्तविशेषणैश्चानेकार्थभावणात् श्लेषेणासौ सङ्कीर्य्यते। पथ्यावक्त्रं वृत्तम् ॥ १ ॥

उपरिष्टात् वर्णयिष्यमाणं साधूत्तमस्य भैरवाचार्य्यस्य चरितं सर्व्वेषामवश्यमेव श्रोतव्यम् इति सूचयितुमाह, साधूनामिति।—कस्य, जनस्य इति शेषः, मनः,—चेतः, साधूनां—सज्जनानाम्, उपकर्तुम्—अनुकूलयितुं, [सम्बन्धविवक्षया षष्ठी] लक्ष्मी—श्रियं, धर्तुं—ग्रहीतुं, लब्धुमिति यावत्, ["धर्त्तुम्" इत्यत्र "द्रष्टुम्" इति पाठे,—द्रष्टुं—साक्षात्कर्तुं, प्राप्तुमित्यर्थः] विहायसा—आकाशमार्गेण, गन्तु—यातुं, खेचरतां लब्धुमिति यावत्, महात्मना—महाऽनुभावाना, चरितम्—आचरणं, कीर्त्तिमिति यावत्, श्रोतुम्—आकर्णयितुञ्च, न कुतूहलि ?—न उत्सुकम् ? भवतीति शेषः, अपि तु सर्व्वस्यैव भवति इत्यर्थः। अनेन श्लोकेन भैरवाचार्य्यस्य उपकारकरणात् पुष्पभूतेः स्वयं लक्ष्मीदर्शनं भैरवाचार्य्यस्य विहायसा गमनञ्च सूचितम्। अत्र एकस्यैव कर्तृकारकस्य

श्री—२०

(१) अथ कदाचित् विरलितबलाहके, (२) चातकातङ्कारिणि, (३) क्वणत्कादम्बे, (४) दर्दुरद्विषि, मयूरमदमुषि, (५) हंसपथिकसार्थसर्वातिथौ, (६) धौतासिनिभनभसि, (७) भास्वरभास्वति, शुचिशशिनि, तरुणतारागणे, (८) गलत्सुनासीरशरासने, (९) सीदत्सौदामनीदाम्नि,

---

मनसः अनेकाभिः उपकरण धारण-[-दर्शन-]-गमन-श्रवणरूपाभिः क्रियाभिः सम्बन्धात् दीपकालङ्कारः, अपि च "कस्य न मनः कुतूहलि ?" इत्यत्र कैमुतिकन्यायेन "अपि तु सर्व्वस्यैव" इति अर्थान्तरस्य उपस्थितेरर्थापत्तिरपि, इति तयोः सापेक्षतया सङ्करः। आर्य्या वृत्तम् ॥ २ ॥

(१) अथेत्यादि।—अथेत्यस्य "बाणो ··ब्राह्मणाधिवासमगात्" इत्युत्तरेणान्वयः। विरलितेति।—विरलिताः,—विरलीभूताः, स्वल्पीभूता इत्यर्थः, बलाहकाः,—मेघाः यस्मिन् तथोक्ते।

(२) चातकेति।—चातकानाम् आतङ्कः,—सन्तापः, भयं वा, तं करोति—जनयति इति तथाभूते।

(३) क्वणदिति।—क्वणन्तः,—रुवन्तः, कादम्बाः,—कलहंसा यस्मिन् तथोक्ते।

(४) दर्दुरेति।—दर्दुरान्—भेकान्, द्वेष्टीति तथोक्ते। मयूरेति।—मयूराणां मदं—हर्षं, गर्वं वा, मुष्णाति—हरतीति तथाभूते।

(५) हंसेति।—हंसा एव पथिकसार्थः,—पान्थसमूहाः, (-) सर्वे अतिथयः यस्य तथाभूते, निर्मलजलदानेन तेषां तृप्तिजननादिति भावः।

(६) धौतेति।—धौतः,—क्षालितः, शाणदानादिना निर्मलीभूत इति भावः, यः असिः,—खड्गः, तन्निभं—तत्सदृशं, नभः,—अन्तरीक्षं यस्मिन् तथोक्ते।

(७) भास्वरेति।—भास्वरः,—अत्युज्ज्वल इत्यर्थः, [ "स्थेशभास—" (३।२।१७५ पा॰) इति वरचि रूपम् ] भास्वान्—सूर्य्यः यस्मिन् तथोक्ते। शुचिशशिनि—निर्मलचन्द्रमसि। तरुणतारागणे—नवसमुज्ज्वलनक्षत्रनिवहे।

(८) गलदिति।—गलत्—भ्रश्यत्, नश्यदिति यावत्, सुनासीरस्य—इन्द्रस्य, ("इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः। वृद्धश्रवाः सुनासीरः—इत्यमरः) शरासनं—धनुः यस्मात् तथोक्ते।

(९) सीददिति।—सीदत्—अवसादं गच्छत्, विनश्यदित्यर्थः, सौदामनी तडिदेव, दाम—माला यस्मिन् तथोक्ते।

(१०) दामोदरनिद्राद्रुहि, (११) द्रुतवैदूर्य्यवर्णार्णसि, (१२) घूर्णमानमिहिकालघुमेघमोघमघवति, (१३) निमीलन्नीपे, (१४) निष्कुसुमकुटजे, (१५) निर्मुकुलकन्दले, कोमलकमले, (१६) मधुस्यन्दीन्दीवरे, कह्लाराह्लादिनि, (१७) शेफालिकाशीतलीकृतनिशे, यूथिकाऽऽमोदिनि,

---

(१०) दामोदरेति।—दामोदरस्य—भगवतो विष्णोः, निद्रां द्रुह्यति—अपनयतीति तथोक्ते, वर्षाशेषे स्य विष्णोः प्रबोधादिति भावः, "शेते विष्णुः सदाऽऽषाढे कार्त्तिके च विबुध्यते" इति स्मरणात्।

(११) द्रुतेति।—द्रुतं—गलितं, यत् वैदूर्य्यं—रत्नविशेषः, तस्य वर्ण इव वर्णो यस्य तादृशं, निर्म्मलमिति भावः, अर्णः,—जलं यस्मिन् तथोक्ते। ("अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्" इत्यमरः)।

(१२) घूर्णमानेति।—घूर्णमाना—इतस्ततः सञ्चरन्ती, या मिहिका—नीहारः, ("अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्। प्रालेयं मिहिका" इत्यमरः) तद्वत् लघवः, निर्ज्जलत्वादिति भावः, ये मेघाः, तैः मोघः,—विफलः, निरर्थक इति भावः, मघवा—इन्द्रः यस्मिन् तथोक्ते, वर्षणाभावात् मेघाधिपस्य मघवतो मोघत्वं बोद्धव्यम्, इन्द्रादेशेन हि मेघा वर्षन्ति इति प्रसिद्धिः।

(१३) निमीलदिति।—निमीलन्तः,—सङ्कुचन्तः, वर्षावसानात् विकासाभावादिति भावः, नीपाः,—कदम्बा यस्मिन् तथोक्ते।

(१४) निष्कुसुमेति।—निष्कुसुमाः,—पुष्पवर्जिताः, कुटजाः,—गिरिमल्लिकाख्यवृक्षभेदाः यस्मिन् तथाविधे।

(१५) निर्मुकुलेति।—निर्मुकुलाः,—कुड्मलविरहिताः, कन्दलाः,—वृक्षविशेषा यस्मिन् तथोक्ते। कोमलकमले—मृदुलपद्मे, पद्मविकासिनि इत्यर्थः।

(१६) मध्विति।—मधुस्यन्दीनि—मकरन्दवर्षीणि, इन्दीवराणि—नीलोत्पलानि यस्मिन् तथोक्ते। कह्लाराह्लादिनि—सौगन्धिकापराख्यश्वेतोत्पलविकासिनि, ("सौगन्धिकन्तु कह्लारम्" इत्यमरः)।

(१७) शेफालिकेति।—शेफालिकाभिः,—तदाख्यपुष्पविशेषैः, शीतलीकृता—शिशिरीकृता, निशा—रात्रिर्यस्मिन् तथोक्ते; सा तु रजन्यामेव विकसति इति। [अत्र बहुव्रीहिसमासेन गुणीभूततया निशाशब्दस्य "गोस्त्रियोरुपसर्ज्जनस्य"

(१८) मोदमानकुमुदावदातदशदिशि, (१९) सप्तच्छद-धूलिधूसरितसमीरे, स्तवकितबन्धुरबन्धूकबध्यमानाकाण्डसन्ध्ये, (२०) नीराजितवाजिनि, (२१) उद्दामदन्तिनि, (२२) दर्प-क्षीबोक्षके, (२३) क्षीयमाणपङ्कचक्रवाले, बालपुलिनपल्लवित-

(१।२।४८ पा०) इति सूत्रेण ह्रस्वत्वम्। नितरां श्यति व्यापारानिति व्युत्पत्त्या दैवादिक-श्यतेः कर्त्तरि कप्रत्यये स्त्रियां टापि चास्य सिद्धिः]। यूथिकाऽऽमोदिनि—यूथिकापुष्पोद्भेदेन आनन्दकारिणि इत्यर्थः; यद्वा,—यूथिकायाः,—तदाख्यपुष्पस्य, आमोदः,—अतिनिर्हारी परिमलः, सुदूरपाती सौरभः इत्यर्थः यत्र तस्मिन्, ("आमोदः सोऽतिनिर्हारी" इत्यमरः)।

(१८) मोदमानेति।—मोदमानैः,—विकसद्भिः, कुमुदैः,—कैरवैः, अवदाताः,—सिताः, दश दिशो यस्मिन् तथोक्ते।

(१९) सप्तच्छदेति।—सप्तच्छदानां—सप्तपर्णाख्यपुष्पतरुविशेषाणां, धूलिभिः,—परागैः, धूसरिताः,—ईषत्पाण्डुरीकृताः, तद्वत्प्रतीयमाना इति भावः, समीराः,—वायवः यस्मिन् तथोक्ते। स्तवकिताः,—सञ्जातस्तवकाः, अत एव बन्धुराः,—रम्याः, ("बन्धुरं मुकुटे पुंसि ···। ···त्रिषु स्यान्नम्र-नम्रयोः॥" इति मेदिनी) ये बन्धूकाः,—बन्धुजीवाख्यपुष्पतरुविशेषाः, तैः बध्यमाना—क्रियमाणा इत्यर्थः, ["बन्धूकबध्य-माना—" इत्यत्र "बन्धूकाबध्यमाना" इति पाठेऽपि स एवार्थः] अकाण्डे—अनव-सरे, असमये इत्यर्थः, ("काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसर-नीरयोः" इति मेदिनी) सन्ध्या यस्मिन् तथाविधे।

(२०) नीराजितेति।—नीराजिताः,—युद्धयात्रायां कृतनीराजनाख्यशान्ति-कर्माणः, वाजिनः,—अश्वा यस्मिन् तथोक्ते।

(२१) उद्दामेति।—उद्दामाः,—मदोद्धता इत्यर्थः, दन्तिनः,—हस्तिनो यस्मिन् तथोक्ते।

(२२) दर्पेति।—दर्पेण—गर्वेण, क्षीबाणि—मत्तानि, औक्षकाणि—उक्षा—णाणां समूहाः यस्मिन् तथोक्ते।

(२३) क्षीयमाणेति।—क्षीयमाणं—शुष्यमाणं, पङ्कानां—कर्दमानां, चक्रवालं—समूहः यस्मिन् तथोक्ते। बालेति।—बालम्—अभिनवं, सद्यः अपसृतजलमिति भावः, यत् पुलिनं—सैकतं, तस्मिन् पल्लवितानि—समन्तात् व्याप्तानि, प्रवाहरेखाङ्किताः

सिन्धुरोधसि, ( २४ ) परिणामश्यानश्यामाके, ( २५ ) जनितप्रियङ्गुमञ्जरीरजसि, ( २६ ) कठोरत्रपुषत्वचि, ( २७ ) कुसुमस्मेरशरे शरत्समयारम्भे राज्ञः समीपात् बाणो बन्धून् द्रष्टुं पुनरपि तं ब्राह्मणाधिवासम् अगात्।

( २८ ) समुपलब्धभूपालसम्मानातिशयपरितुष्टाः तस्य ज्ञातयः श्लाघमाना निर्ययुः। क्रमेण च कांश्चित् अभिवादयमानः, कैश्चित् अभिवाद्यमानः, कैश्चित् शिरसि चुम्ब्यमानः, कांश्चित् मूर्ध्नि समाजिघ्रन्, कैश्चित् आलिङ्ग्यमानः, कांश्चित् आलिङ्गन्, अन्यैः आशिषा अनुगृह्यमाणः, परान् अनुगृह्णन्, बहुबन्धुमध्यवर्त्ती परं मुमुदे। ( २९ ) सम्भ्रान्तपरिजनोपनीतञ्च आसनमासीनेषु गुरुषु भेजे। भजमानश्च अर्घादिसत्कारं नितरां

---

नीति यावत्, सिन्धूनां,—नदीनां, ( "सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः ) रोधांसि—तटानि यस्मिन् तथोक्ते।

( २४ ) परिणामेति।—परिणामेन—परिपाकेण, श्यानाः,—ईषच्छुष्काः, श्यामाकाः,—तृणधान्यविशेषाः यस्मिन् तथाभूते।

( २५ ) जनितेति।—जनितानि—उत्पादितानि, प्रियङ्गोः,—कङ्गुपर्य्यायान्तरतृणधान्यभेदस्य, वृक्षविशेषस्य वा, मञ्जरीणां—वल्लरीणां, रजांसि—परागा येन तथोक्ते।

( २६ ) कठोरेति।—कठोराः,—कठिनाः, त्रपुषाणां—कर्कटीत्याख्यफलानां, "शशा" इत्याख्यफलानां वा, त्वचः,—वल्कलानि यस्मिन् तथोक्ते। [ "कठोरत्रपुषत्वचि" इत्यत्र 'कठोरितत्रपुषत्वचि" इति पाठे,—कठोरिताः,—कठोरीभूताः इत्यर्थः ]।

( २७ ) कुसुमेति।—कुसुमैः,—पुष्पैः, स्मेराः,—विकस्वराः, शराः,—तदाख्यतृणभेदा यस्मिन् तथाविधे।

( २८ ) समिति।—सम्—सम्यक्, उपलब्धः,—प्राप्तः, भूपालात्—राज्ञः, इत्यादिति भावः, सम्माननातिशयः,—आदरातिशयः, तेन परितुष्टाः,—प्रीताः। श्लाघमानाः,—प्रशंसन्तः। अभिवादयमानः,—वन्दमानः। अभिवाद्यमानः,—वन्द्यमानः। परान्—अन्यान्। परम्—अत्यन्तं, मुमुदे—पिप्रिये।

( २९ ) सम्भ्रान्तेति।—सम्भ्रान्तेन—सत्वरेण, परिजनेन उपनीतम्—आहृतम्।

ननन्द। प्रीयमाणेन च मनसा सर्वांस्तान् पर्य्यपृच्छत्,—(३०) "कच्चित् एतावतो दिवसान् सुखिनो यूयम्? अप्रत्यूहा वा सम्यक्करणपरितोषितद्विजचक्रा क्रातवी क्रियते क्रिया? (३१) यथावदविकलमन्त्रभाञ्जि भुञ्जते हवींषि हुतभुजः? यथाकालम् अधीयते वा बटवः? प्रतिदिनम् अविच्छिन्नो वा वेदाभ्यासः? कच्चित् स एव चिरन्तनो यज्ञविद्याकर्म्मणि अभियोगः? तानि एव व्याकरणे (३२) परस्परस्पर्द्धानुबन्धावन्ध्यदिवसदर्शितानि व्याख्यानमण्डलानि? सैव वा पुरातनी परित्यक्तान्यकर्त्तव्या प्रमाणगोष्ठी? स एव वा (३३) मन्दीकृतेतरशास्त्ररसो मीमांसायाम् अतिरसः?

आसीनेषु—उपविष्टेषु। भेजे—सिषेवे, अध्यतिष्ठदित्यर्थः। भजमानः,—लभमानः। अर्चादिसत्कार—पूजादिरूपसंवर्द्धनामित्यर्थः।

(३०) कच्चित् इति इष्टप्रश्ने, ("कच्चित् कामप्रवेदने" इत्यमरः)। अप्रत्यूहाः,—निर्विघ्ना। सम्यगिति।—सम्यक्करणेन—शोभनानुष्ठानेन, यथाशास्त्रसम्पादनेनेत्यर्थः, परितोषितानि—प्रीणितानि, द्विजचक्राणि—विप्रवृन्दानि यस्या यस्या वा सा। क्रतुः,—यज्ञः, तस्य इयं क्रातवी—यज्ञसम्बन्धिनी इत्यर्थः।

(३१) यथावत्—यथाविधि। अविकलेति।—अविकलान्—विशुद्धानिति यावत्, मन्त्रान् भजन्ते इति तथोक्तानि। हवींषि—हवनीयानि, घृतादीनीति यावत्। हुतभुजः,—अग्नयः। बटवः,—बालकाः, ब्रह्मचारिणो वा। अविच्छिन्नः,—विच्छेदरहितः। चिरन्तनः,—धारावाही। अभियोगः,—आग्रहः, यत्नविशेषो वा।

(३२) परस्परेति।—परस्परस्य स्पर्द्धा—जिगीषा, तस्या अनुबन्धेन—सातत्येन, अवन्ध्याः,—फलवन्तः, सदा शास्त्रालोचनेन अनलसा इति भावः, दिवसाः,—वासराः, तेषु दर्शितानि—प्रकटितानि, ["दर्शितानि" इत्यत्र "दर्शितादराणि" इति पाठः,—दर्शितः,—प्रकटितः, आदरो येषु तानि]। पुरातनी—चिरन्तनी, चिरप्रसिद्धेति भावः। परित्यक्तेति।—परित्यक्तानि—परिवर्ज्जितानि, उपेक्षितानीत्यर्थः, अन्यानि—अपराणि, कर्त्तव्यानि—अवश्यानुष्ठेयानि यस्याः तथाभूता। प्रमाणगोष्ठी—तर्कशास्त्रसमालोचना, प्रमाणसंसत् वा।

(३३) मन्दीकृतेति।—मन्दीकृतः,—प्रायेण निवर्त्तित इति यावत्, इतरेषु—

कच्चित् ते एव वा अभिनवसुभाषितसुधावर्षिणः काव्यालापाः?" इति।

अथ ते तम् ऊचुः,—(३४) "तात! सन्तोषजुषां सततसन्निहितविद्याविनोदानां (३५) वैतानवह्निमात्रसहायानां कियन्मात्रं नः कृत्यं सुखितया, (३६) सकलभुवनभुजि भुजङ्गराजदेहदीर्घे रक्षति क्षितिं क्षितिभुजो भुजे सर्व्वथा सुखिन एव वयम्; विशेषेण तु त्वयि (३७) विमुक्तकौसीद्ये परमेश्वरपार्श्ववर्त्तिनि वेत्रासनम् अधितिष्ठति। सर्व्वे च यथाशक्ति यथाविभवं यथाकालञ्च सम्पाद्यन्ते विप्रजनोचिताः क्रियाकलापाः" इत्येवमादिभिः आलापैः स्कन्धावारवार्त्ताभिश्च शैशवातिक्रान्तक्रीड़ानुस्मरणैः (३८) पूर्व्वजकथाभिश्च विनोदितमनाः तैः

---

अन्येषु, शास्त्रेषु रसः,—रागो येन तथाविधः, मीमांसायाम्—जैमिनिप्रोक्तक्रतुविषयकशास्त्रे, ब्रह्मविद्यायां वा, अतिरसः,—अत्यासक्तिः।

(३४) तात इति पूज्यत्वसूचकं सम्बोधनम्। सततेति।—सततसन्निहितः,—निरन्तरोपस्थितः, विद्यया—विद्याऽनुशीलनेनेत्यर्थः, विनोदः,—प्रीतिः येषां तथाभूतानाम्, अत एव सन्तोषजुषाम्—सन्तोषशालिनाम्।

(३५) वैतानेति।—वितानः,—यज्ञः, तस्य अयं वैतानः,—यज्ञीय इत्यर्थः, स चासौ वह्निश्चेति तथोक्तः, तन्मात्रः,—तदेव इत्यर्थः, न त्वन्य इति भावः, सहायो येषां तथाविधानां, नः,—अस्माकं, सुखितया—सुखभोगेन, कृत्यं—प्रयोजनं, कियन्मात्रं—स्वल्पमात्रमित्यर्थः।

(३६) सकलभुवनभुजि—सर्व्वां क्षितिं पालयतीत्यर्थः। भुजङ्गेति।—भुजङ्गराजः,—वासुकिः, तस्य देहवत् दीर्घः,—आयतः तस्मिन्, क्षितिभुजः,—राज्ञः, भुजे—बाहौ, क्षितिं—पृथ्वीं, रक्षति सति।

(३७) विमुक्तेति।—विमुक्तं—त्यक्तं, कौसीद्यम्—आलस्यं, निष्क्रियतेत्यर्थः येन तथाभूते, अनलसे इत्यर्थः। परमेति।—परमेश्वरस्य—सार्व्वभौमस्य श्रीहर्षस्य, पार्श्ववर्त्तिनि—पार्श्वचरसभासदीत्यर्थः। वेत्रासनं—वेत्रनिर्म्मितमासनं, राजदत्तमिति शेषः।

(३८) पूर्व्वजकथाभिः,—पूर्व्वकालिककथाभिः। विनोदितमनाः,—आनन्दित-

सह सुचिरम् अतिष्ठत्, उत्थाय च मध्यन्दिने यथाक्रियमाणाः स्थितीः अकरोत्। भुक्तवन्तञ्च तं सर्वे ज्ञातयः पर्य्यवारयन्।

(३९) अत्रान्तरे दुकूलपट्टप्रभवे शिखण्ड्यपाङ्गपाण्डुनी पौण्ड्रे वाससी वसानः, स्नानावसानसमये वन्दितया तीर्थमृदा गोरोचनया च रचिततिलकः, तैलामलकमसृणितमौलिः, (४०) अनुच्चचूड़ाचुम्बिना निविड़ेन कुसुमापीड़केन समुद्भासमानः, (४१) असकृदुपयुक्तताम्बूलविमलाधरकान्तिः, (४२) एकशलाकाऽञ्जनजनितलोचनरुचिः, (४३) अचिरभुक्तः, विनीतम्

चेताः, सदुदारचरितामृतानगाहनादिति भावः। यथाक्रियमाणाः,—यादृश्यः सर्वैः क्रियन्ते तादृशीरित्यर्थः, स्थितीः,—आचारानिति यावत्।

(३९) "अत्रान्तरे" इत्यस्य "पुस्तकवाचकः सुदृष्टिः आजगाम" इत्युत्तरेणान्वय। तमेव विशिनष्टि, दुकूलेति।—दुकूलपट्टप्रभवे—चौमतन्तुजाते, [ "दुकूल" इत्यत्र "दुगूल" इति पाठेऽपि स एवार्थः ] शिखण्डिनः,—मयूरस्य, अपाङ्गवत्—नेत्रप्रान्तवत्, पाण्डुनी—धवले, [ शिखण्ड्यपाङ्गपाण्डुत्वेन पारुष्य गम्यते ] पौण्ड्रे—पुण्ड्रदेशभवे, वाससी—वसने, वसानः,—परिदधानः। स्नानावसानसमये—स्नानानन्तर, वन्दितया—मन्त्रपूतीकृतयेत्यर्थः, तीर्थमृदा—पुण्यचेत्रमृत्तिकया, गोरोचनया—स्वनामख्यातसारजवर्गीयमाङ्गल्यद्रव्यविशेषेणेत्यर्थः, रचिततिलकः,—कृततिलकः। तैलेन, आमलकेन—आमलकपिष्टेन चेत्यर्थः, मसृणितः,—चिक्कणीकृतः, मौलिः,—संयतकेश, केशचयः इति यावत् येन यस्य वा तथोक्तः।

(४०) अनुच्चेति।—अनुच्चा—अवनतेत्यर्थः, पृष्ठदेशे इति भावः, या चूडा—शिखा, ता चुम्बति—स्पृशतीति तथोक्तेन, निबिडेन—घनेन, घनसन्निविष्टपुष्पेणेत्यर्थ, कुसुमापीडकेन—पुष्पमाल्येन, समुद्भासमानः,—शोभमानः।

(४१) असकृदिति।—असकृत्—पुनः पुनः, उपयुक्तेन—सेवितेन, चर्वितेन इत्यर्थः, ताम्बूलेन—पर्णेन, विमला—रमणीया इत्यर्थः, अधरस्य कान्तिर्यस्य तथोक्तः।

(४२) एकेति।—एकेन शलाकाऽञ्जनेन—शलाकाधृतकज्जलरेखया इत्यर्थः, जनिता—उत्पादिता, लोचनयोः,—नयनयोः, रुचिः,—शोभा येन तथोक्तः।

(४३) अचिरभुक्तः,—अचिरं—सद्य, भुक्तं—भोजनं यस्य तथाभूतः, अल्प-

आर्य्यञ्च वेषं दधानः, (४४) पुस्तकवाचकः सुदृष्टिः आजगाम, नातिदूरवर्त्तिन्याञ्च आसन्द्यां निषसाद। (४५) स्थित्वा च मुहूर्त्तमिव तत्कालापनीतसूत्रवेष्टनमपि नखकिरणैः मृदु-मृणालसूत्रैरिव आवेष्टितं पुस्तकं पुरोनिहितशरशलाकायन्त्रके निधाय, पृष्ठतः सनीड़सन्निविष्टाभ्यां मधुकर-पारावताभ्यां दत्ते स्थानके (४६) प्राभातिकप्रपाठकच्छेदचिह्नीकृतम् अन्तर-पत्रम् उत्क्षिप्य, गृहीत्वा च कतिपयपत्रलघ्वीं कपाटिकां,

समयपूर्वं कृतभोजन इत्यर्थ.। विनीतम्—अनुद्धतम्, आर्य्यं—सौम्यं, वेषं—परिच्छदम्। [ "वेषम्" इत्यत्र "वेशम्" इति पाठेऽपि स एवार्थः ]।

(४४) पुस्तकवाचकः,—ग्रन्थपाठकः, पवित्रसन्दर्भव्याख्याता वा। आसन्द्यां —वेत्रासने।

(४५) "स्थित्वा च" इत्यस्य "पुराणं पपाठ" इत्युत्तरेणान्वयः। तत्कालेति। —तत्काले—तस्मिन् काले, पाठकाले इत्यर्थः, अपनीतम्—उन्मोचितं, सूत्रेण वेष्टनं यस्य तथोक्तमपि, सूत्रवेष्टनरहितमपीत्यर्थः, मृदूनि—कोमलानि, मृणालसूत्राणि—बिसतन्तवः तैरिव, नखकिरणैः,—नखमयूखैः, आवेष्टितं—जड़ितम्। [ "आवेष्टितम्" इत्यत्र "वेष्टितम्" इति पाठान्तरम् ]। पुर इति।—पुरः,—अग्रतः, निहिते—स्थापिते, शरशलाकायन्त्रके—शरतृणनिबद्धनिर्म्मिते यन्त्रविशेषे। निधाय—संस्थाप्य। सनीडसन्निविष्टाभ्यां—समीपस्थिताभ्या, ("समीपे निकटासन्नसन्निकृष्टसनीडवत्" इत्यमरः) मधुकर-पारावताभ्यां—भ्रमर-कपोताभ्यां, स्थानके—अवकाशे, दत्ते सति, मधुकराः पारावताश्च निजनिस्वनेन श्रोतॄन् सुखयन्ति, अस्मिंस्तु पाठके पठति तैरपि तच्छ्रवणात् तूष्णीं स्थीयते इति भावः।

(४६) प्राभातिकेति।—प्रभातस्य अयं प्राभातिकः,—प्रभातकालिक इत्यर्थः, यः प्रपाठकः,—प्रपठनमित्यर्थः, तस्य छेदः,—विरामः, तस्य अचिह्नं चिह्नं कृतं चिह्नीकृतम्—इयन्मात्रं पठितं, नान्यदिति स्मरणार्थं लक्ष्यीकृतमित्यर्थः तत्; कश्चित् पाठकः प्रभाते कियत् पठित्वा परपाठकाले पूर्व्वपठितस्मरणार्थं केनापि पत्रेण चिह्नीकरोति, ततश्च मध्याह्नात् परमयं तस्यैव पुस्तकस्य तदनन्तरपठनाय तत् अन्तरपत्र-मपनीय पठतीति व्यवहारः। अन्तरपत्र—मध्यस्थितविच्छेदचिह्नस्वरूपपत्रम्। उत्क्षिप्य—अपनीय। कतिपयेति।—कतिपयैः पत्रैः लघ्वी—स्वल्पभारा इत्यर्थः तां, कपाटिकां—पुस्तकावरणपट्टकम्।

क्षालयन्निव (४७) मसीमलिनानि अक्षराणि दन्तकान्तिभिः, अर्च्चयन्निव (४८) सितकुसुममुक्तिभिः ग्रन्थं, (४९) मुखसन्निहितसरस्वतीनूपुररवैरिव गमकैः मधुरैः आक्षिपन् मनांसि श्रोतॄणां गीत्या पवनप्रोक्तं पुराणं पपाठ।

तस्मिंश्च तथा श्रुतिसुभगगीतिगर्भं पठति सुदृष्टौ नातिदूरवर्त्ती (५०) वन्दी सूचीवाणः तारमधुरेण गीतिध्वनिम् अनुवर्त्तमानः स्वरेण इदम् आर्य्यायुगलम् अपठत्,—

"तदपि मुनिगीतमतिपृथु तदपि जगद्व्यापि पावनं तदपि।
हर्षचरितादभिन्नं प्रतिभाति हि मे पुराणमिदम्॥ ३॥

---

(४७) मसीमलिनानि—मसी—लेखनसाधनद्रवविशेषः, तया मलिनानि—कृष्णवर्णानि।

(४८) सितेति।—सितानां—शुक्लानां, कुसुमानां—पुष्पाणां, मुक्तयः,—मोचनानि, वृष्टयः इत्यर्थः ताभिः। ग्रन्थं—पुस्तकलिखितसन्दर्भम्।

(४९) मुखेति।—मुखे सन्निहिता—समासीना, या सरस्वती, तस्या नूपुररवाः,—मञ्जीरनिनादाः तैरिव, गमयन्ति—बोधयन्ति, अर्थानिति शेषः गमकाः,—स्वरविशेषा इत्यर्थः तैः। पवनप्रोक्तं—वायुप्रोक्तम्। ["पवन" इत्यत्र "पवमान" इति पाठेऽपि स एवार्थः]।

(५०) वन्दी—स्तुतिपाठकः, सूचीवाणः,—तदाख्यः। गीतिध्वनिं—सुदृष्टिना गीतश्लोकनिनादम्, अनुवर्त्तमानः,—अनुसरन्। आर्य्यायुगलम्—आर्य्यया जात्या निबद्धं श्लोकद्वयम्।

पुराणश्रवणेन तत्तोक्तवस्तुना राज्ञो हर्षस्य साम्यं धारयन्नाह, तदपीति।—तत् मुनिना—द्वैपायनेन, गीतं—कीर्त्तितमपि, तत् अतिपृथु—अतिविस्तृतमपि, पृथुः,—आदिराजो वेणपुत्र, तमतिक्रान्तमपि, तदतिशायीत्यर्थश्च, तत् जगद्व्यापि—जगत्प्रसिद्धं. पावनं—पुण्यजनमपि, इदं पुराणं, वायव्यमिति शेषः, हि—निश्चितं, हर्षचरितात् अभिन्नं—अभेदवर्त्ति, मे—मम, प्रतिभाति—प्रतीतिविषयीभवतीत्यर्थः। अत्र तादृशपुराणात् हर्षचरितस्य भेदेऽपि अभेदकथनात् भेदेऽप्यभेदप्रतिपत्तिरूपा अतिशयोक्तिरलङ्कारः। आर्य्या वृत्तम्॥ ३॥

वंशानुगमविवादि स्फुटकरणं भरतमार्गभजनगुरु।
श्रीकण्ठविनिर्यातं गीतमिदं हर्षराज्यमिव" ॥ ४ ॥

(५१) तत् श्रुत्वा बाणस्य चत्वारः पितामहमुखपद्मा इव (५२) वेदाभ्यासपवित्रितमूर्त्तयः, (५३) उपाया इव साम-

---

गीतेन सह हर्षराज्यस्य साम्य वर्णयन्नाह वंशेति।—वंशं—वेणुवाद्यम्; अन्यत्र,—कुलम्, अनुगच्छतीति तथोक्तं, वंशवाद्यानुगत वंशपरम्परागतञ्चेत्यर्थः, अविवादि—न स्तः विवादिनौ स्वरौ गान्धार-निषादाविति भावः यस्मिन्; अन्यत्र,—न सन्ति विवादिनः,—विरोधिनो यत्र तत्, सौराज्यमित्यर्थः, तत्र केषाञ्चिदपि विवादाभावादिति भावः, स्फुटकरण—स्फुटानि—स्पष्टानि, करणानि—तानलयादीनि यस्मिन्; [केचित्तु गीतपक्षे एवं व्याख्यानयन्ति—"वंशेन—वेणुना, अनुगमः ययोः तौ, विवादिनौ स्वरौ—विश्रुत्यन्तरौ गान्धार-निषादौ स्वरौ यत्र तत्। करणम्—अपदः, सताल आविद्धः स्वरसन्निवेशः, उच्चारणस्थान वा] अन्यत्र,—स्फुटानि—प्रसिद्धानि, करणानि—धर्मविचारस्थानानि, विद्यापरीक्षास्थानानि वा यस्मिन् तत्। भरतेति।—भरतः,—भरतो नाम सङ्गीतशास्त्रसूत्रकारो मुनिविशेषः, आदिराजविशेषश्च, तस्य मार्गः,—पन्थाः, नीतिरिति यावत्, तस्य भजनेन—अनुसरणेन, गुरु—महदित्यर्थः। श्रीकण्ठेति।—श्रीयुक्तः,—मधुर इत्यर्थः, वैस्वर्य्यादिदोषविरहादिति भावः, कण्ठः श्रीकण्ठः; यद्वा,—श्रीकण्ठ,—हरः, सर्व्वविद्याऽऽधारत्वादिति भावः, अन्यत्र,—देशभेदः, तस्मात् विनिर्यात—विशेषेण निःसृतम्, इदं गीतं हर्षस्य—राज्ञः प्रमोदस्य च, राज्यमिव, प्रतिभाति इति शेषः। अत्र श्लिष्टविशेषणवशेन गीतस्य हर्षराज्येन सह अवैधर्म्यसाम्यकथनात् उपमानामालङ्कारः, स च श्लेषेणानुप्राणित इति बोध्यम्। आर्य्या वृत्तम् ॥ ४ ॥

(५१) तदित्यादि।—"तत्" इत्यस्य "मुखानि व्यलोकयन्" इत्युत्तरेणान्वयः। पितामहमुखपद्मा इव—पितामहः,—ब्रह्मा, तस्य मुखानि, चत्वारीति भाव, पद्मा इव पितामहमुखपद्माः ते इव। ("वा पुंसि पद्मम्" इत्यभिधानात् पुंलिङ्गता)।

(५२) वेदेति।—वेदानाम् अभ्यासेन—पुनः पुनः अनुशीलनेन, पवित्रिता मूर्त्तिः येषां तथोक्ताः।

(५३) उपाया इव—सामादय इव, ("सामदानभेददण्डमित्युपायचतुष्टयम्"

प्रयोगललितमुखाः, गणपतिः, अधिपतिः, तारापतिः, श्यामलः इति पितृव्यपुत्रा भ्रातरः, (५४) प्रसन्नवृत्तयः, (५५) गृहीतवाक्याः, (५६) कृतगुरुपदन्यासाः, (५७) न्यायवादिनः, सुकृतसङ्ग्रहाभ्यासगुरवः (५८) लब्धसाधुशब्दाः, लोक इव व्याकरणेऽपि, (५९) सकलपुराणराजर्षिचरिताभिज्ञाः,

---

इत्यमरः)। सामेति।—साम्ना—सामवेदानां, सान्त्ववादानाञ्च, ("साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च" इति मेदिनी) प्रयोगेण ललितानि—सुन्दराणि, सर्व्वमज्ञ्जनानीति भावः, ("ललितं त्रिषु सुन्दरम्" इत्यमरः) मुखानि—वक्त्राणि, वदनानि इत्यर्थः, आरम्भाश्च येषा ते, ("मुख निःसरणे वक्त्रे प्रारम्भोपाययोरपि" इति मेदिनी)।

(५४) प्रसन्नेति।—प्रसन्ना—विशुद्धा सुबोधा च, वृत्तिः,—जीविका सूत्रविवरणञ्च येषा ते, ("वृत्तिर्विवरणाऽऽजीवकौशिक्यादिप्रवर्त्तने" इति मेदिनी)।

(५५) गृहीतेति।—गृहीतम्—आदृतं विदितार्थञ्च, वाक्य—वचनं, विवरणमिति यावत्, वार्त्तिकञ्च यै तथोक्ताः।

(५६) कृतेति।—कृतः,—विहितः, गुरूणा—पित्रादीना, पदे—चरणे, न्य :,—आत्मार्पण यैः; यद्वा,—कृतः,—अभ्यस्तः, गुरुपदे—दुर्बोधशब्दे, न्यास,—वृत्तिः, विवरणमिति यावत् यैः ते; अन्यत्र,—कृता गुरवः,—बहव इत्यर्थः, पदाना—सुप्तिङन्ताना, न्यासाः,—प्रयोगा यैः; यद्वा,—कृतो गुरुणि पदे न्यासः,—स्थितिः यैः तथोक्ताः, महती प्रतिष्ठा गता इति यावत्, यद्वा,—कृतः गुरूणाम्—उपदेष्टॄणा सम्बन्धिनि, पदे—स्थाने, न्यासः,—स्थितिः येषा ते, सर्व्वेऽप्युपदेष्टृपदे ते वृता इत्यर्थः।

(५७) न्यायेति।—न्यायम्—उपपत्तियुक्तं वचनम्, उपपत्त्यनुपपत्तिविचारञ्च, वदन्तीति तथाविधाः। सुकृतेति।—सुकृताना—पुण्यकर्म्मणा, सङ्ग्रहस्य—सञ्चयस्य, अभ्यासेन—पुनःपुनरावृत्त्या, गुरवः,—महान्तः, अन्यत्र,—सुकृतस्य—सुष्ठु कृतस्य, सङ्ग्रहस्य—व्याडिकृतस्य व्याकरणसन्दर्भस्य, अभ्यासेन गुरवः,—उपाध्यायाः।

(५८) लब्धेति।—लब्धः,—अधिकृतः, साधुशब्दः,—साधुरयमिति शब्दः, साधुवादो वा, व्युत्पन्नशब्दश्च यैः तथोक्ताः।

(५९) सकलपुराणेति।—सकलेत्यादि विशेषणत्रयेण वक्ष्यमाणद्विजराजादिवृत्तान्ते अभिज्ञता प्रदर्श्यते। सकलाना पुराणाना—पूर्व्वकालिकाना, राजर्षीणा—मान्धादीना, चरितेषु अभिज्ञाः,—विशिष्टज्ञानशालिनः।

( ६० ) महाभारतभावितात्मानः, विदितसकलेतिहासाः, महाविद्वांसः, महाकवयः, ( ६१ ) महापुरुषवृत्तान्तकुतूहलिनः, सुभाषितश्रवणरसरसायनाः, वितृष्णाः, ( ६२ ) वयसि वचसि यशसि तपसि सदसि महसि वपुषि यजुषि च प्रथमाः, पूर्व्वमेव कृतसङ्गराः, विवक्षवः, ( ६३ ) स्मितसुधाधवलितकपोलोदराः परस्परस्य मुखानि व्यलोकयन्।

( ६४ ) अथ तेषां कनीयान् कमलदलदीर्घलोचनः श्यामलो नाम बाणस्य प्रेयान् प्राणानामपि वशयिता दत्तसंज्ञः तैः

---

( ६० ) महेति।—महाभारते—तदाख्यव्यासप्रणीतलक्षश्लोकात्मके ग्रन्थभेदे, भावितः,—अनुशीलितः, आत्मा यैः तथोक्ताः, महाभारतसारविद इति यावत्, विपुलभारतवर्षविख्यातचरित्रा वा।

( ६१ ) महापुरुषेति।—महान् पुरुषः,—नारायणः हर्षराजो वा, तस्य वृत्तान्ते —विवरणे, चरितश्रवणे इत्यर्थः, कुतूहलिनः,—कौतुकशालिनः। सुभाषितेति।—सुभाषितानां—शोभनानां काव्यानाम् आलापानाञ्च, श्रवणे—आकर्णने, यो रसः,—रागः, तस्य रसायनाः,—औषधविशेषाः; सुभाषितश्रावणेन लोकानां श्रुतिसुखदायका इति भावः। "सुभाषित" इत्यनेन स्वकृतकाव्यस्य प्रशंसा व्यज्यते। वितृष्णाः,—विगतविषयानुरागा इत्यर्थः।

( ६२ ) वयसि—यौवने। वचसि—वाक्यविन्यासे। सदसि—सभायाम्। महसि—तेजसि। वपुषि—शरीरे। यजुषि—यजुर्वेदे। प्रथमाः,—अग्रगण्याः। कृतसङ्गराः,—वयं सर्वे ऐकमत्येन हर्षचरितं वक्तुं बाणमनुरुन्धः इति अन्योऽन्यं कृताङ्गीकाराः, अहम्पूर्व्विकया हर्षचरितकथनाय बाणमनुरोद्धुं कृतविवादा वा, ("सङ्गरो युधि चापदि। क्रियाकारे विषे चाङ्गीकारे" इति मेदिनी)।

( ६३ ) स्मितेति।—स्मितं—मृदुहसितमेव, सुधा—अमृतं, तया धवलितं—विशदीकृतं, कपोलस्य—गण्डस्य, उदरम्—अभ्यन्तरभागः येषां तथाविधाः। व्यलोकयन्—अपश्यन्।

( ६४ ) अथेत्यादि।—तेषां—भ्रातॄणामित्यर्थः, कनीयान्—कनिष्ठः, ["द्विवचन—" (५।३।५७ पा०) इति ईयसुनि "युवाल्पयोः—" (५।३।६४ पा०) इति अल्पस्य कनादेशे रूपम्]। "कनीयान्" इत्यनेनास्य प्रियवादित्वं प्रकटीकृतम्। प्रेयान्—

( ६५ ) सप्रणयं दशनज्योत्स्नास्नपितककुभा मुखेन्दुना बभाषे,— ( ६६ ) "तात ! बाण ! द्विजानां राजा गुरुदारग्रहणम् अकार्षीत्। ( ६७ ) पुरूरवा ब्राह्मणधनतृष्णया दयितेन आयुषा व्ययुज्यत। (६८) नहुषः परकलत्राभिलाषी महाभुजङ्ग आसीत्।

---

अतिशयेन प्रिय.। वशयिता—लोकवशीकरणक्षम इति यावत्। दत्तसञ्ज्ञ,—ब्रूहीति कृतसङ्केत इत्यर्थः। तैः,—भ्रातृभिः।

( ६५ ) सप्रणयं—सप्रश्रय, सस्मितप्रार्थनापूर्वकम् इत्यर्थः। दशनेति।—दशनानां —दन्ताना, ज्योत्स्नया—प्रभया, स्नपिता',—अभिषिक्ता', ककुभः,—दिशो येन तादृशेन।

( ६६ ) तात !—वत्स !। प्रथम तावत् पूर्वेषा रा ज्ञा दोषानुद्भाव्य हर्षदेवस्य नितरा निर्दोषता ख्यापयति—द्विजानामित्यादिना। तेषा दोषाश्च क्वचित् शब्देन क्वचित् वा अर्थेन यथायोग्यमुद्भावनीया। द्विजाना राजा—चन्द्रः, ("द्विजराज शशधरो नक्षत्रेशः क्षपाकरः" इति चन्द्रपर्य्यायेष्वमरः)। चन्द्रादिशब्दकथनेन राजत्वप्रतीतेरभावात् "द्विजाना राजा" इत्युक्तम्। गुर्विति।—गुरो.,—बृहस्पते', (बृहस्पतिः सुराचार्य्यो गीष्पतिर्धिषणो गुरु" इत्यमर') आचार्य्यस्य च, दाराणा—पत्न्या, ताराया इत्यर्थः, ग्रहण—धर्षणमित्यर्थः। पुरा तारानाम गुरुभार्य्या पूर्णचन्द्रस्य परमसुन्दरं समुदित कामयमाना गर्भवती आसीत्, तदपलक्ष्य बहुयुगं गुरु-चन्द्रयोः विरोधः आसीत्; तेन यदा बृहस्पतिः तारानयनाय इन्द्रादीन् देवान् प्रोत्साहितवान्, तदा चन्द्रः शुक्रं शरणमगात्। तत्र गुरुपक्षीया देवा शुक्रप्रेरिता. चन्द्रपक्षीया असुराश्च अन्योऽन्यं महासमराय आजुहुवु, दिव्यमा न वर्षसहस्रञ्च युद्धमकार्षु, तत् दृष्ट्वा भगवान् नारद प्रथममात्मबोधिता तारा गुरवे, तद्गर्भजं पुत्रं बुधनामान चन्द्राय च समर्प्य उभयोर्विरोध बभञ्जेति पौराणिकी वार्त्ता अत्रानुसन्धेया।

( ६७ ) ब्राह्मणेति।—ब्राह्मणस्य धनानि, तेषु तृष्णा—लोभः तया। दयितेन, —प्रियेण, आयुषा—जीवितेन, आयुर्नाम्ना पुत्रेण च, व्ययुज्यत—वियुक्त'. विप्रशापात् विगतजीवन पर पुत्रजननात् चिरं पुत्रवियुक्त इत्यर्थ। पुरा राजर्षि. पुरूरवा' दिशो जिगीषुरेकदा पथिकेनापि प्रभूतधनशालिना विप्रेण यज्ञे निमन्त्रित. लोभात् तद्धन जिहीर्षुस्तच्छापात् विनाश गत। विप्रः तस्मिन्मृते नरेन्द्रमन्तरा लोका निवर्त्तन्ते इति आयुर्नामान राजर्षि तदायुषा उदपादयत इति पौराणिकी कथा अत्र अनुसन्धेया।

( ६८ ) नहुष,—आयुस्तनय., परस्य कलत्रं—भार्य्या, तदभिलाषी, महाभुजङ्ग', —अजगरः, अतिलम्पटश्च इत्यर्थः। पुरा दुर्वाससः शापात् इन्द्रे अदर्शन गते त्रिलोकीं

(६९) ययातिः आहितब्राह्मणीपाणिग्रहणः पपात। (७०) सुद्युम्नः स्त्रीमय एव अभवत्। (७१) सोमकस्य प्रख्याता जन्तुवधनिर्घृणता।

नष्टश्रियं दृष्ट्वा देवा नहुषं शतक्रतुम् ऐन्द्रे पदे अभ्यषिञ्चन्, ततश्चासौ ऐश्वर्य्यमत्त, शचीं साध्वीं गुरुगृहेषु प्रच्छन्नवर्त्तिनीं कामयमान, गुरूपदेशात् तया भीतया "अपूर्व्वयानेन आगच्छन् मां नय" इत्यभिहितो यदा ऋषियानेन तत्सकाशं गन्तुमैच्छत्, गच्छन् तदैव सुष्ठु चलितुमक्षमम् अगस्त्यं वाहकं "सर्प सर्प" इत्युक्त्वा पदा प्राहरत्। ततश्च "स‌र्‌प भव" इति सहसा तच्छापात् अजगरतां प्राप इति पौराणिकी वार्त्ता अत्र अनुसन्धेया।

(६९) आहितेति।—आहित,—कृत, ब्राह्मण्याः,—ब्राह्मणकन्यायाः, पाणि-ग्रहण—परिणयः येन तथोक्तः। पपात—जराग्रस्तोऽभवदित्यर्थ.। क्षत्रियोऽपि ब्राह्मण-कन्याया पाणि न शास्त्रमर्य्यादालङ्घनात् पतितोऽभूदिति भाव.। पुरा मृगयाविहारी राजर्षिर्ययाति, एकस्मिन् कूपे वृषपर्व्वणोऽसुरपतेर्दुहित्रा बहुशतदासीसमेतया क्रीडन-कलहकुपितया पितृगुरो, शुक्रस्य कन्या देवयानी निपातिताम् उच्चै, रुदतीं दृष्ट्वा निजकरेण तत्करं गृह्णन् उद्दधार। तत, "पाणिग्राहिणा भवता कथमहं त्याज्या" इति तया प्रार्थित: ब्राह्मणीत्वात् अस्वीकुर्व्वन् शोकाकुलेन तत्पित्रा शुक्रेण अनुमतः तां पत्नीत्वेन जग्राह। तद्ग्रहणाच्चान्ते जराग्रस्तः अभवदिति पौराणिकी वार्त्ता अत्र अनुसन्धातव्या।

(७०) सुष्ठु द्युम्नं—बलं धनञ्च यस्य सः सुद्युम्न,—तदाख्यो नरपतिः, स्त्रीमय,—स्त्रीरूपः, सततकान्ताऽनुरतश्च। पुरा कस्मिंश्चित् सरसि पार्व्वत्या विहरन् हरः राजर्षिणा सुद्युम्नेन मृगयाविहारिणा अवलोकित, ततश्च लज्जितया गौर्य्या अभ्यर्थितो हरः "योऽत्रागत्य यत्किमप्युपवीक्ष्य स स्त्रीत्वमवाप्स्यति" इति सामान्येन त शशाप। स च शप्तः सरोवरनीरं पीत्वा सद्य एव स्त्रीरूपोऽभवत् इति पुराणाख्यानम्।

(७१) सोमकस्य—राजर्षिविशेषस्य। जन्त्विति।—जन्तु,—जन्तुर्नाम तस्य पुत्रः, जन्तवः,—प्राणिनश्च, तस्य तेषाञ्च वधेन—हत्यया, निर्घृणता—निष्ठुरता। पुरा जन्तुर्नाम सोमकस्य राज्ञ एक एव पुत्र आसीत्, राजा तु एकपुत्रोऽपुत्र एव इति मन्वान: बहुपुत्रतामिच्छन् पुरोधसा अभ्यधायि "यदि बहून् पुत्रान् कामयसे, तदा अस्य सुतस्य जन्तोर्वपया होमः क्रियतां, तद्धोमधमानं यावत्यो महिष्यः ते समाजिघ्रेयु', ताः सर्वा एव पुत्रान् प्रसविष्यन्ते" इति श्रुत्वा राज्ञा सोमकेन तथैव आचरितमिति पौराणिकी वार्त्ता अत्रानुसन्धेया।

( ७२ ) मान्धाता मार्गणव्यसनेन सपुत्रपौत्रो रसातलम् अगात्। ( ७३ ) पुरुकुत्सः कुत्सितं कर्म्म तपस्यन्नपि मेकलकन्यकायाम् अकरोत्। ( ७४ ) कुवलयाश्वो भुजङ्गलोकपरिग्रहात् अश्वतर-कन्याम् अपि न परिजहार। (७५) पृथुः प्रथमपुरुषकः परिभूत-वान् पृथिवीम्। (७६) नृगस्य कृकलासभावे वर्णसङ्करः समदृश्यत।

---

( ७२ ) मार्गणेति।—मार्गणेषु—शरेषु, व्यसनं—समासक्तिः, युद्धासक्तिरिति यावत्, यात्रासातत्यञ्च तेन, रसातलं—पातालम् अधस्ताच्च, ( "अधो-भुवनपाताल-बलिसद्म-रसातलम्" इत्यमरः ) अगात्—गतवान्, विनष्ट इति भावः। पुरा मान्धाता पृथिवीं निर्जित्य स्वर्गजयार्थं गतः शतक्रतुना अभ्यधायि,—"राजन्। पातालं तावदग्रे जय, पश्चात् स्वर्गजयिनः तव दास्यं ग्रहीष्यामि" इति। स च तद्वचनात् अवि-चार्य्यैव रसातलं गतः तत्रत्येन शङ्करप्रसादलब्धत्रिशूलेन लवणनाम्ना दानवेन सपुत्रपौत्रो निधनतां नीत इति किंवदन्ती।

( ७३ ) मेकलकन्यकायां—नर्म्मदायाम्। ( "रेवा तु नर्म्मदा सोमोद्भवा मेकल-कन्यका" इत्यमरः )। पुरा पुरुकुत्सः तपस्यन् मेकलकन्यकायां विहरन्तीं कामपि कामिनीं दृष्ट्वा कामार्त्तः तां धर्षयामासेति पुराणप्रसिद्धा वार्त्ता।

( ७४ ) भुजङ्गलोकपरिग्रहात्—पातालगमनात्, भुजङ्गो विटश्च। अश्वतर-कन्याम्—अश्वतरो नाम कश्चित् नागः, तस्य कन्या तां, वडवाञ्च, न परिजहार—न तत्याज, ऊढवानित्यर्थः। पुरा कुवलयाश्वः मृगयाप्रसङ्गेन श्रमार्त्तो मज्जनेच्छया सरसीमवगाहमान एव रसातलं गतः तत्र अश्वतरकन्यां गतवानिति वार्त्ता।

( ७५ ) पृथुः,—आदिराज. वेणतनयः। प्रथमेति।—प्रथमः,—आद्यः, मुख्यश्च, पुरुष एव—पुरुषकः, कदर्य्यपुरुषश्च। पुरा पृथुः भूधराक्रान्तां पृथ्वीं विलोक्य चापकोट्या भुवः पर्य्यन्तेषु तान् प्रचिक्षेप, ततश्च स्वधरणनिमित्तभूतभूभृतां परिभवात् अस्य कदर्य्य-पुरुषत्वम्, एतद्योगात् स्वस्याः अपि परिभवञ्च विचार्य्य तस्मात् रुष्टा भूः "देहि मे प्रजाभरणोपायान्" इति तेन आकृष्टकार्म्मुकेण अनुरुद्धा त्रिभुवनानि बभ्राम, ततः कमपि शरणम् अलभमाना अस्य सर्व्वाः शस्यसम्पदो जनयामासेति कथितम्; अतः एतस्मात् परिभूता भूः इति वार्त्ता अनुसन्धेया।

( ७६ ) कृकलासभावे—कृकलासः,—सरटः, सरीसृपभेद इत्यर्थः, तद्भावे—तद्रूपदशायाम्, अपीति शेषः, किं पुनः राजभावे इति निन्द्यता। वर्णेति।—वर्णानां

(७७) सौदासेन न रक्षिता पर्य्याकुलीकृता क्षितिः।
(७८) नलम् अवशाक्षहृदयं कलिः अभिभूतवान्।
(७९) संवरणो मित्रदुहितरि विक्लवताम् अगात्।
(८०) दशरथ इष्टरामोन्मादेन मृत्युम् अवाप।

—शुक्लकृष्णादीनां, ब्राह्मणक्षत्रियवैश्यशूद्राणाञ्च, सङ्करः,—सम्मिश्रणम्। नृगो राजर्षिः कदाचित् कस्यापि विप्रस्य सम्बन्धिनीं गाम् अविदित्वा अन्यस्मै द्विजाय दत्तवान्, ततश्च गोस्वामी तां गां स्वीयां विदित्वा तं विप्रं ययाचे। स च तां नास्मै ददौ। ततस्तौ विवदमानौ राजद्वारं गत्वा राजानं विजातीयस्त्रीषु आसक्तम् अलभमानौ क्रोधात् "कृकलासो भव" इति तं शप्त्वा यथाऽऽगतं प्रतिजग्मतुरिति पौराणिकी वार्त्ता।

(७७) न रक्षिता—न पालिता, नरान् क्षिणोतीति नरक्षिता—नरक्षय-शालिनीत्यर्थश्च, यद्वा,—नरक्षिता—मानवहन्त्रा, सौदासेन इत्यस्य विशेषणम्, अत एव पर्य्याकुलिता—समन्तात् आकुलतां प्राप्ता। सौदासो नाम राजा मृगयार्त्तः पथि कदाचित् स्थितं कमपि शक्त्राभिधं मुनिम् "अपसर्प" इति अवदत्, स तु "पन्था देयो ब्राह्मणाय" इति शास्त्रात् नीतिमनुसरन् तद्वचनम् अनाकर्णयन् मार्गात् न चलित.। ततश्च राज्ञा क्रोधाभिभूतेन कशयाऽभिहतो स मुनिः "मनुष्यभक्षको राक्षसो भव" इति तं शशाप। ततश्च तस्मिन् राक्षसे जाते भुवः पर्य्याकुलता जातेति पौराणिकी वार्त्ता।

(७८) अवशाक्षहृदयं—न वशम्—अनायत्तमित्यर्थः, अक्षहृदयम्—अक्षज्ञानम्, अक्षाणि—इन्द्रियाणि चक्षुरादीनि, हृदयं—मनश्च यस्य तथाभूतम्। पुरा नलो राजा द्यूतव्यसनासक्तः तत्राकुशलश्च कलिना परिभूत इति प्रसिद्धिः।

(७९) मित्रेति।—मित्रः,—सूर्य्यः, मित्रं—सुहृच्च, तस्य दुहिता—कन्या, तपतीति यावत् तस्यां, विक्लवता—विह्वलता, समासक्तिमित्यर्थः। पुरा तपतीं रवि-कन्यां दृष्ट्वा संवरणः तस्यामासक्तो बभूव इति वार्त्ता।

(८०) इष्टेति।—इष्टा—प्रिया, रामा—कान्ता, कैकेयीति भावः, तस्याम् उन्मादः,—अत्यासक्तिरिति यावत्; यद्वा,—इष्टः,—प्रियः, रामः,—स्वसुत, तदर्थम् उन्मादः,—कैकेयीप्रार्थनया तन्निर्वासनेन या उन्मत्तता तेन। मृगयाव्यसनी राजा दशरथः वनमध्ये दूरात् कुम्भपूरणरवे हस्तिना जलपानमाशङ्क्य शब्दवेधिना बाणेन सिन्धुनामानमन्धतापसतनयं विव्याध। ततश्च तदार्त्तनादमनुसरन् तत्र गत्वा बुद्ध्वा च स्वकार्य्यं भृशमनुतप्तः शरविद्धेन तेन विज्ञापितवृत्तान्तः पित्रोरन्धयोः समीपं तं

(८१) कार्त्तवीर्यो गोब्राह्मणातिपीड़नेन निधनमयासीत्।
(८२) मरुत्तः इष्टबहुसुवर्णकोऽपि देवद्विजबहुमतो न बभूव।
(८३) शन्तनुरपि व्यसनात् एकाकी वियुक्तो वाहिन्या विपिने

प्रापयामास। तत्पितृवाक्येन शल्यमुद्धरति राजनि बालो मृतः। ततश्च सस्त्रीकः तापसः "त्वमप्यहमिव पुत्रशोकेन प्राप्स्यसि विनाशम्" इति दशरथं शप्त्वा अग्नौ प्राणांस्तत्याज। एवं शप्तो राजा दशरथः स्त्रीवाक्येन प्रियं पुत्रं रामं वनं प्रेषयन् मुनिशापात् तच्छोकेन ममारेति रामायणी वार्त्ता।

(८१) गोब्राह्मणेति।—गवे—गोनिमित्तमित्यर्थः, ब्राह्मणस्य—जमदग्नेरिति भावः, गवां ब्राह्मणानाञ्च, अतिपीड़नेन—वधेन। पुरा कार्त्तवीर्य्यः कदाचित् गवां कोटिरप्यतीवाधिकां जमदग्नेः धेनुम् अहरत्, तञ्च व्यापादितवान्; ततश्च क्रोधाभिभूतेन तत्पुत्रेण परशुरामेण परशुच्छिन्नभुजसहस्रः ससर्व्वक्षत्रियसङ्घः निहत इति वार्त्ता।

(८२) इष्टेति।—इष्टः,—अनुष्ठितः, बहूनि सुवर्णानि—सौवर्णद्रव्याणि यस्मिन् तथाभूतः यज्ञः बहुसुवर्णकः येन तथाभूतः। इष्टः,—प्रियः, अभिमत इत्यर्थः, बहु—अतिशयेन, सु—शोभनं, वर्णः,—गौरस्वरूपः यस्य तथाभूतोऽपि इति च। यद्वा,—इष्टानि—दत्तानि, बहूनि—प्रभूतानि, सुवर्णकानि येन तथाभूतः। देवेति।—देवद्विज,—वृहस्पतिः; देवा द्विजाः,—विप्राश्च, तेषां बहुमतः,—समादृतश्च। पुरा बहुसुवर्णकाख्येन यागेन यियक्षुः मरुत्तः वृहस्पतिं याज्यकर्म्मणि अनुरुरोध। "मनुष्यस्य तव यज्ञं न करिष्यामि" इति तेनावमतश्च नारदवचनात् तद्भ्रातरं वाराणसीषु ग्रहगृहीतच्छद्मना स्थितं संवर्त्तकं विविदिषुः गत्वा तेनैवोक्तचिह्नैः भगवन्तं नत्वा प्रयान्तं तं विज्ञाय बहुशस्तिरस्कुर्व्वन्तमपि अविरज्यमानः कथमपि पौरोहित्ये न्ययोजयत्। ततश्च वृहस्पतिस्तद्यज्ञे भ्रातुः समृद्धिं दृष्ट्वा विद्वेषमकरोदिति वार्त्ताऽनुसन्धेया।

(८३) व्यसनात्—अत्यासङ्गात्। ["शन्तनुरपि व्यसनात्" इत्यत्र "शन्तनुरतिव्यसनात्" इति पाठे,—अतिव्यसनात्—अत्यन्तासक्तेरित्यर्थः] वाहिन्या—नद्या, गङ्गादेव्या इत्यर्थः, सैनया च, ("वाहिनी स्यात् तरङ्गिण्यां सेना-सैन्यप्रभेदयोः" इति मेदिनी)। पुरा महाभिषो नाम राजा ब्रह्मसभायां गङ्गां चामरग्राहिणीं कदाचित् अङ्गविक्षेपात् चलितवाससं दृष्ट्वा भृशं कामार्त्तस्तां प्रेमवचसा जल्पन् ब्रह्मणा "पतित्वा क्षत्रियगृहे शन्तनुर्नाम भव" इति शप्तः सद्यः एव गां गतः शन्तनुः नाम राजा अभूत्। गङ्गाऽपि मत्कृतेऽस्येदृशी दशा इति सखेदं भुवम् अवतरति स्म। तदानीञ्च धेनुहरणकुपितेन वशिष्ठेन "भुवं गच्छत" इति शप्तैः वसुभिः विदितैतद्वृत्तान्तैः गङ्गा

विललाप। (८४) पाण्डुः वनमध्यगतो मत्स्य इव मदनरसाविष्टः प्राणान् मुमोच। (८५) युधिष्ठिरो गुरुभय-विषण्णहृदयः समरशिरसि सत्यम् उत्सृष्टवान्। (८६) इत्थं नास्ति राजत्वम् अपकलङ्कम् ऋते देवदेवात् अमुतः सर्वद्वीप-भुजो हर्षात्। अस्य हि बहूनि आश्चर्य्याणि श्रूयन्ते; तथा हि,—

अभ्यधायि—"यदि तव नृपेऽस्मिन् समासक्तिः जाता, तदा वयमपि तव गर्भे उत्पत्स्यामहे, जातमात्राश्च त्वया स्वसलिले मोक्तव्याः" इति। सा तु तथा अङ्गीकृत्य मृगयाया विहरन्तं शन्तनुं प्रार्थयमानम् अवोचत्—"राजन्। यदहं करोमि, तत्र त्वया न निरोद्धव्यं, न च मदीयं जन्म प्रष्टव्या" इति। राजाऽपि नितरां तदासक्तः तथैवाङ्गीकृत्य बहूनब्दान् तया अरमत। कालक्रमेण यः कश्चित् सुत उत्पद्यते स्म, स तया जले क्षिप्तः, एवं सप्तसु सुतेषु जले क्षिप्तेषु गङ्गा सेवमान. निःसन्तानोऽयं मा भूत्, इति सप्तभिर्वसुभिः कृताशसङ्गः भीष्मो भूत, ततः तमपि क्षिपन्ती, तां राजा नितरां पुत्रशोकार्त्तः "इदानीं त्वया मत्पुत्रः क्षेप्तव्यः" इति सतिरस्कारम् अभिहितवान्। साऽपि "भ्रष्टप्रतिज्ञो भवान्" इत्युक्त्वा अष्टमं पुत्रं राज्ञे दत्त्वा पुनः ब्रह्मलोकम् अगात्। राजा च तद्वियोगार्त्तो बहुधा विललाप इति वार्त्ता अत्र अनुसन्धेया।

(८४) वनम्—अरण्यं जलञ्च, ("वने सलिल-कानने" इत्यमरः)। मदन,—कामः, मदन—तदाख्यवृक्षविशेषः, तस्य फलमिति यावत्, ("मदनः स्मरवसन्तद्रुमेदधस्तूर-सिक्थके" इति मेदिनी), सलिलान्तरालचारी मत्स्यो यथा मदनाख्यफलरसकषायित-सलिलसम्पर्कात् प्राणान् विजहाति, तथा अरण्यविहारी पाण्डुः शृङ्गाररसाविष्टमानसः प्राणानत्यजदिति निष्कृष्टार्थः। एकदा पाण्डुः मृगयार्थं वनविहारी कर्दमाख्यं मृगरूपिणं कञ्चिन्मुनितनयं मृगीरूपया ब्राह्मण्या सह रममाणमालोक्य अकृतार्थता-दशायामेव तं वाणेनैकेन जघान, तेन च शरार्त्तेन प्राणान् मुमुचता "त्वमपि अहमिव स्त्रिया विहरन् अकृतार्थ एव प्राणांस्त्यक्ष्यसि" इति शप्त असौ कदाचित् कामार्त्तः माद्र्या सह विजने विहरन् मृत्युवशं नीत. इति भारती वार्त्ता।

(८५) गुर्विति।—गुरुभय—गुरो,—द्रोणात्, भयं, महद्भयञ्च, तेन विषण्णं हृदयं यस्य तथोक्तः। कुरु-पाण्डवसमरे स्ववलानि विनाशयन्तं साक्षात् धनुर्वेदं द्रोणम् "अश्वत्थामा हत" इति अलीकवचसा शोकाकुलं कृत्वा युधिष्ठिर. कृतशस्त्रत्यागं तं घातितवान् इति भारती वार्त्ता।

(८६) इत्थम्—एवम्प्रकारं, सत्ययुगमारभ्य कलिप्रवृत्तिं यावदित्यर्थः। अप-

( ८७ ) अत्र बलजिता निश्चलीकृताः चलन्तः कृतपक्षाः क्षितिभृतः। ( ८८ ) अत्र प्रजापतिना शेषभोगिमण्डलस्य उपरि क्षमा कृता। अत्र ( ८९ ) पुरुषोत्तमेन सिन्धुराजं प्रमथ्य लक्ष्मीः आत्मीकृता। ( ९० ) अत्र बलिना मोचितभूभृद्वेष्टनो मुक्तो महानागः। ( ९१ ) अत्र देवेन अभिषिक्तः कुमारः।

---

कलङ्कं—निर्दोषम्। देवदेवात्—राजाधिराजात्। आश्चर्य्याणि—विस्मयकराणि, चरितानीति शेषः।

( ८७ ) अत्रेत्यादि।—अत्र "बलजिता" इत्यादयः शब्दाः श्रीहर्षे अन्वर्थाः ज्ञातव्याः। अत्र—जगति। बलं—शत्रुसैन्य, बलाख्यम् असुरञ्च, जितवान् इति बलजित् तेन, श्रीहर्षेणेति शेषः। चलन्तः,—विरोधितया व्यवहरन्त इत्यर्थः, पक्षशालितया उड्डीयमानाश्च, कृताः,—अवलम्बिताः, पक्षाः,—सहायाः; अन्यच,—कृताः,—धृताः इत्यर्थः, पक्षाः,—पतत्राणि यैः तथोक्ताः, क्षितिभृतः,—राजानः, पर्व्वताश्च, निश्चलीकृताः,—निर्जितत्वात् वशीकृताः, पक्षच्छेदनात् स्थावरता नीताश्च।

( ८८ ) प्रजापतिना—नरपतिना, ब्रह्मणा च। शेषेति।—शेषस्य—निहतावशिष्टस्य, भोगिना—सुखभोगरतानां, राज्ञामिति भावः, मण्डलस्य—चक्रस्य, अन्यत्र,—शेषस्य—अनन्तस्य, भोगिनः,—नागस्य, मण्डलस्य—फणस्य, उपरि क्षमा—क्षान्तिः, पृथिवी च, कृता—विहिता, निर्मिता च।

( ८९ ) पुरुषेति।—पुरुषेषु उत्तमः,—श्रेष्ठः तेन, नरनाथेन नारायणेन च, सिन्धुराज—सिन्धुदेशाधिपतिं क्षीरनिधिञ्च, प्रमथ्य—निर्जित्य विलोड्य च, लक्ष्मीः,—राजश्रीः कमला च, आत्मीकृता—स्वीकृता।

( ९० ) बलिना—बलवता असुरराजेन च, महानागः,—महान् रणहस्ती, स्वीयदर्पशातात्त्व्यः इति भावः, वासुकिश्च। मोचितेति।—मोचितम्—अपनीतं, भूभृद्भिः,—शत्रुराजभिः इत्यर्थः, वेष्टनम्—अवरोधनम्; यद्वा,—मोचितं भूभृतः,—श्रीकुमाराख्यस्य राज्ञः, वेष्टनं—शुण्डेन रोधनं यस्य तथाभूतः, श्रीकुमाराख्य. नृपतिः किल महागजेन दर्पशातेन उपजातमर्दनावरुद्धः, दृष्टा च तत् हर्षेण राज्ञा खड्गं गृहीत्वा मोचितः सः, दुष्टहस्ती चायमिति कोपात् परित्यक्तः विपिने इति वार्त्ता; अन्यत्र,—भूभृतः,—मन्दरस्य, वेष्टनं यस्य तथाभूतः, मुक्तः,—परित्रातः, सागरमन्थनात् पर परित्यक्तश्च।

( ९१ ) देवेन—राज्ञा, देवराजेन च, कुमारः,—निजतनयः गुहश्च, अभिषिक्तः,

(९२) अत्र स्वामिना एकप्रहारपातितारातिना प्रख्यापिता शक्तिः। अत्र (९३) नरसिंहेन स्वहस्तविशसितारातिना प्रकटीकृतो विक्रमः। अत्र (९४) परमेश्वरेण तुषारशैलभुवो दुर्गाया गृहीतः करः। अत्र (९५) लोकनाथेन दिशां मुखेषु परिकल्पिताः लोकपालाः सकलभुवनकोशश्चाग्रजन्मनां विभक्तः। (९६) इत्येवमादयः प्रथमकृतयुगस्येव दृश्यन्ते महासमारम्भाः। अतोऽस्य सुगृहीतनाम्नः पुण्यराशेः पूर्वपुरुषवंशानुक्रमेण आदितः प्रभृति चरितमिच्छामः श्रोतुम्।

---

—प्रतिष्ठापितः, यौवराज्ये सैनापत्ये च इति शेषः। यद्यप्यत्र देवपदं देवतासामान्यार्थकं, तथाऽप्यत्र लक्षणया देवराजपरत्वमवगन्तव्यम्; तेनैव कुमारस्य सेनानीत्वेन वृतत्वादिति।

(९२) स्वामिना—प्रभुणा, सेनापतिना गुहेन च। एकेति।—एकेन—एकमात्रेण, उभयत्रापि तुल्यम्, प्रहारेण—शराघातेन,उभयत्र तुल्यम्; पातिताः अरातयः,—शत्रुभूता राजानः, तारकादयोऽसुराश्च येन तथाभूतेन। शक्तिः—सामर्थ्यं, तदाख्यमस्त्रञ्च।

(९३) नरसिंहेन—नरः सिंह इव तेन, नरश्चासौ सिंहश्चेति तथोक्तेन च, नृसिंहेनेत्यर्थः। स्वहस्तेति।—स्वहस्तेन, न तु सैन्यसहायेन, चक्रादिनिजास्त्रेण च, विशसिताः,—निहताः, विदारिताश्च, अरातयः,—शत्रवः, विरोधिनो नृपाः, हिरण्यकशिपुप्रभृतयश्च इति यावत् येन तथोक्तेन।

(९४) परमेश्वरेण—परमश्चासौ ईश्वरश्चेति परमेश्वरः,—सार्वभौमः, हरश्च तेन, तुषारशैलभुवः,—हिमालयप्रदेशभूमेः, हिमगिरिजातायाश्च, दुर्गायाः,—दुर्गमायाः, गौर्य्याश्च, करः,—बलिः, पाणिश्च।

(९५) लोकनाथेन—नरपतिना, विधात्रा च, दिशां मुखेषु—निःसरणमार्गेषु, सीमान्तप्रदेशेषु इति यावत्, अन्यत्र,—दिशां मुखेषु—दिशि दिशि इति यावत्, परिकल्पिताः,—नियोजिताः, लोकपालाः,—प्रजापालाः, इन्द्रादयश्च। सकलभुवनकोशः,—सर्वजगतां धनं, सकलभुवनमेव कोशः,—धनभाण्डारञ्च, अग्रजन्मनां—ब्राह्मणानाम् आदिसृष्टानां श्रमणानाञ्च, विभक्तः,—विभज्य दत्तः।

(९६) इत्येवमादयः इति।—अत्र आदिपदेन न त्वेतावन्त एव, अन्येऽपि एवंविधा बहव इति व्यज्यते। प्रथमकृतयुगस्येव—प्रथम सृष्टस्य सत्ययुगस्येव, महासमारम्भाः,—महान्ति कार्य्याणि, अचलपक्षच्छेदनादयो व्यापारा इति यावत्।

(९७) सुमहान् कालो नः शुश्रूषमाणानाम्। (९८) अयस्कान्त-मणय इव लोहानि नीरसनिष्ठुराणि क्षुल्लकानामपि आकर्षन्ति मनांसि महतां गुणाः, किमुत स्वभावसरसमृदूनि इतरेषाम्? कस्य न (९९) द्वितीयमहाभारते भवेत् अस्य चरिते कुतूहलम्? आचष्टां भवान्। (१००) भवतु भार्गवोऽयं वंशः शुचिना अनेन राजर्षिचरितश्रवणेन सुतरां शुचितरः" इत्येवम् अभिधाय तूष्णीम् अभूत्।

बाणस्तु विहस्य अब्रवीत्,—(१०१)"आर्य्य! न युक्त्यनुरूपम् अभिहितम्। (१०२) अघटमानमनोरथमिव भवतां कुतूहलम् अवकल्पयामि। (१०३)शक्याशक्यपरिसङ्ख्यानशून्याः प्रायेण स्वार्थ-तृषः। परगुणानुरागिणी (१०४) प्रियजनकथाश्रवणरसरभस-मोहिता च सन्ध्ये महतामपि मतिः अपहरति प्रविवेकम्।

---

(९७) सुमहान् कालः, गत इति शेषः। शुश्रूषमाणाना—श्रोतुमिच्छताम्।

(९८) अयस्कान्तमणय इवेति।—मणिशब्देन उपमेयाना गुणानामपि रत्नत्वं प्रदर्शितम्। नीरसनिष्ठुराणि—नीरसानि—आर्द्रभावरहितानि, निष्ठुराणि—कठिनानि। क्षुल्लकाना,—नीचाना, क्षुद्राणा वा, ("क्षुल्लकस्त्रिषु नीचेऽल्पे" इति मेदिनी) महतां गुणाः मनांसि आकर्षन्ति इति अन्वयः। इतरेषा—साधूनां, महता वा।

(९९) द्वितीयमहाभारते—द्वितीयमहाभारतसदृशे, अस्य—हर्षस्य, चरिते—वृत्ते, कुतूहलम्—औत्सुक्यम्। आचष्टा—कथयतु।

(१००) भार्गव,—भृगुवंशोद्भूतः। सुतराम्—अतिशयेन, शुचितर,—पूततरः।

(१०१) आर्य्य।—पूज्य। युक्त्यनुरूप—युक्तियुक्तम्।

(१०२) अघटमानेति।—अघटमान,—असम्पन्नता गच्छन्, मनोरथः यस्य तथाभूतम्, अतृप्तिकरमिति भाव.। अवकल्पयामि—अवधारयामि।

(१०३) शक्येति।—शक्य—साध्यम्, अशक्यम्—असाध्यं, तयोः परिसङ्ख्यान—परिगणनं, तेन शून्याः,—रहिताः। स्वार्थतृषः,—स्वकार्य्यतृष्णा., स्वार्थसाधनेच्छा शक्याशक्यविवेका न गणयतीत्यर्थः।

(१०४) प्रियेति।—प्रियजनस्य कथाश्रवणे यो रसः,—रागः, तस्य रभसेन

पश्यतु आर्य्यः, क्क (१०५) परमाणुपरिमाणं वटुहृदयम्? क्क (१०६) समस्तब्रह्मस्तम्भव्यापि देवस्य चरितम्? (१०७) क्क परिमितवर्णवृत्तयः कतिपये शब्दाः क्क (१०८) सङ्ख्यातिगाः तद्गुणाः? सर्व्वज्ञस्यापि (१०९) अयम् अविषयः, वाचस्पतेरपि अगोचरः, रखत्या अप्यतिभारः, किमुत अस्मद्विधस्य? कः खलु पुरुषायुषशतेनापि शक्नुयात् अविकलम् अस्य चरितं वर्णयितुम्? एकदेशे तु यदि कुतूहलं वः, सज्जा वयम्। इयम् (११०) अधिगतकतिपयाक्षरलवल घीयसी जिह्वा क्क

—वेगेन, आतिशय्येनेत्यर्थः, ("रभसो वेग-हर्षयो" इत्यमरः) मीढ़िता—जडा इत्यर्थः। प्रविवेकं—प्रकृष्टं विवेकम्।

(१०५) परमाणुपरिमाणम्—अतिक्षुद्रमिति भावः। वटुहृदयं—द्विज-शिशुमानसम्।

(१०६) समस्तेति।—समस्तः,—सकलः, ब्रह्मस्तम्भः,—ब्रह्माण्ड, तद्व्यापि। देवस्य—हर्षस्य।

(१०७) परिमितेति।—परिमिताना—परिगणितानाम्, अल्पसङ्ख्याकानामित्यर्थः, वर्णानाम्—अक्षराणाम्, अकारादि-हकारान्तानामिति यावत्, वृत्तयः,—रचनानि यत्र तथाभूता। कतिपये—अल्पका इति भाव।

(१०८) सङ्ख्यातिगाः,—सङ्ख्याः,—एकादिपरार्द्धपर्य्यन्ताः, ता अतिगच्छन्ति—अतिशेरते इति तथोक्ताः। तद्गुणाः,—तस्य—देवस्य हर्षस्य, गुणाः।

(१०९) अयं—हर्षचरितरूपः, अविषयः,—अगोचरः। वाचस्पतेः,—बृहस्पतेः। पुरुषायुषशतेन—पुरुषस्य आयुः,—जीवितकालः, ["अचतुर—" (५।४।७७, पा०) इत्यादि सूत्रेण अच्प्रत्ययान्तो निपातः] शत वर्षाणीत्यर्थः, "शतायुर्वै पुरुषः" इति श्रुतेः, तेषां शतं तेन। अविकलं—सम्यक्। पुरुषेत्यादिना योग्येऽपि वर्णयितरि, मयि वर्णनीयस्य बाहुल्यात् जीवनकालस्य चाल्पीयस्त्वा कार्त्स्न्येन वर्णनं न सम्भवतीति व्यञ्जितम्; अत एवाह, एकदेशे इति।—एकदेशे—कियदंशे इत्यर्थः। सज्जाः,—प्रस्तुताः, वर्णयितुमिति भावः।

(११०) अधिगतेति।—अधिगतः,—ज्ञातः, कतिपयानाम् अक्षराणां लवः,—लेशः यया तथाभूता, अत एव लघीयसी—अल्पा, यत्किञ्चित् वर्णयितुं क्षमा इति भावः।

उपयोगं गमिष्यति ? (१११) भवन्तः श्रोतारः,वर्ण्यते हर्षचरितं, किम् अन्यत् ? अद्य तु परिणतप्रायो दिवसः। (११२) पश्चात् लम्बमानकपिलकिरणजटाभारभास्वरो भगवान् भार्गवो राम इव समन्तपञ्चकरुधिरमहाह्रदे निमज्जति सन्ध्यारागपटले पूषा। श्वो निवेदयितास्मि" इति। सर्वे च ते "तथा" इति प्रत्यपद्यन्त। नातिचिरात् उत्थाय सन्ध्याम् उपासितुं शोणम् अयासीत्।

(११३) अथ मधुमदपल्लवितमालवीकपोलकोमलातपे

---

उपयोगम्—उपकारिता, गमिष्यति ?—प्राप्स्यति ? न कुत्रापि इत्यर्थः ; यद्यपि समाजः गुणावली असङ्ख्याता मादृशैः अत्यल्पवर्णावलीभिः वर्णयितुमशक्या च, तथाऽपि भवतां गुणग्राहिणा प्राप्तैः कथञ्चित् वक्तुमुत्सहते इति भावः।

(१११) भवन्तः—भवद्विधाः विबुधाः इत्यर्थः, न तु ये केचित् प्राकृता इति भावः। हर्षचरितं—हर्षस्य—महाप्रभावस्येति भावः, चरितं—वृत्तं, महनीयमलौकिकञ्चेत्याशयः, न तु तुच्छं यत्किञ्चिदिति भावः, भवद्विधेषु श्रोतृषु अलौकिकं हर्षचरितं वर्णयितुं तादृशी लघीयसी जिह्वा नैवोपयोगिनीति निष्कर्षः। किमन्यत् ?—इतोऽन्यत् किं कथयामि ? इत्यर्थः। परिणतप्रायः—प्रायेण परिणतः, अवसित इत्यर्थः।

(११२) पश्चादिति।—पश्चात्—पश्चिमायां दिशि, पृष्ठदेशे च। लम्बमानेति।—लम्बमानः,—पतन्, कपिलः,—पिङ्गलः, किरणः,—मरीचिः, जटाभार इव—जटासमूह इव, तेन भास्वरः,—दीप्यमानः। राम इव—परशुराम इव। समन्तेति।—समन्तपञ्चकं—कुरुक्षेत्रं, तत्र यत् रुधिरं—निहतनिखिलक्षत्राणां कण्ठादिनिःसृतं रक्तमिति यावत्, तेन यः महान् ह्रदः तस्मिन्, रुधिरमेव महान् ह्रदः तस्मिन् इति वा। सन्ध्येति।—सन्ध्यायाः रागाः,—लौहित्यानि, तेषां पटलं—समूहः तस्मिन्। पूषा—("विकर्त्तनार्कमार्त्तण्डमिहिरारुणपूषणः" इत्यमरः)। पुरा भार्गवो रामः पितृनिधनेन कुपितः एकविंशतिकृत्वः क्षत्रान् निहत्य, तदीयेन रुधिरेण कुरुक्षेत्रस्य समन्तात् पञ्च ह्रदान् कल्पयित्वा तेषु पितॄन् तर्पयामास, ततश्च तत्स्थानम् अद्यापि समन्तपञ्चकमिति प्रसिद्धम्। प्रत्यपद्यन्त—स्वीकृतवन्तः।

(११३) अथेत्यादि।—"अथ" इत्यस्य "तथैव गोष्ठ्या तस्थौ" इत्युत्तरेणान्वयः। मधिवति।—मधुमदेन—मद्यपानजनितेन उल्लासेन, पल्लवितः,—प्रफुल्ल इत्यर्थः, यो मालव्याः,—मालवदेशीयमहिलायाः कपोलः,—गण्डः, तद्वत् कोमलः, आतपः,—

मुकुलितेऽह्नि कमलिनीमलनादिव लोहिततमे तमोलिहि रवौ लम्बमाने, रविरथतुरगमार्गानुसारेण यममहिष इव धावति (११४) नभसि तमसि, क्रमेण च (११५) गृहतापसकुटीरकपटलावलम्बिषु रक्तातपच्छेदैः सह संहृतेषु वल्कलेषु, (११६) कलिकल्मषमुषि पुष्णाति गगनम् अग्निहोत्रधामधूमे, (११७) सनियमे यजमानजने मौनव्रतिनि, (११८) विहारवेलाविलोले पर्य्यटति पल्लीजने, (११९) विकीर्य्यमाणहरितश्यामाकशालिपूलिकासु दुग्धासु होमकपिलासु, ह्रयमाने वैतानतनून-

प्रभा यस्य तथाभूते। मुकुलिते—मुकुलभावं गते, निमीलितप्राये इत्यर्थ.। कमलिनीमलनादिव—पद्मिनीमालिन्यदर्शनादिव इत्यर्थः। ["कमलिनीमलनादिव"इत्यत्र"कमलिनीमीलनादिव" इति पाठे,—पद्मिनीसङ्कोचादिवेत्यर्थ.]। लोहिततमे—अतिलोहिते, आगामिन तिमिरस्य रिपोः कमलिनी स्वा प्रिया प्रति भाविधर्षणजनितक्रोधादिति भावः, तमोलिहि—तिमिरविध्वंसिनि, रवौ—सूर्य्ये, लम्बमाने—पश्चिमाशा पततीत्यर्थः।

(११४) नभसि—आकाशे। तमसि—अन्धकारे।

(११५) गृहेति।—गृहतापसानां—गृहस्थतपस्विनां, कुटीरकाणां—क्षुद्रगृहभेदाना, पटलानि—छदींषि, गृहाच्छादनानि तृणानीत्यर्थ'। ("अथ पटलं छदिः" इत्यमरः) अवलम्बन्ते इति तथोक्तेषु, रक्तातपच्छेदैः,—रक्तवर्णसूर्य्यमयूखखण्डैः, सह संहृतेषु—आकृष्य नीतेषु, वल्कलेषु—तरुत्वक्षु, तापसाना वस्त्रभूतेषु इति यावत्।

(११६) कलिकल्मषमुषि—कलिकालजनितपापहारिणि, पुष्णाति—व्याप्नुवति। अग्निहोत्रधामधूमे—होमगृहाग्निःसृतधूमे।

(११७) सनियमे—सुसयते, यजमानजने—याज्ञिकवर्गे, मौनव्रतिनि—मौनव्रतधारिणि।

(११८) विहारेति।—विहारः,—गोष्ठात् गवानयनेन तद्दोहनम्, अग्निहोत्रार्थं वह्निसन्धुक्षणमिति वा, तस्य वेला—समयः, तेन विलोले—चञ्चले, व्यस्ते इति भावः। पर्य्यटति—परितो भ्रमति।

(११९) विकीर्य्यमाणेति।—विकीर्य्यमाणा,—प्रक्षिप्यमाणा प्रदीयमाना इत्यर्थः, हरिता,—श्यामला, श्यामाकशालीना— श्यामाकाख्यव्रीहिभेदाना, पूलिकाः,—गुच्छा याभ्यः तथाभूतासु, दोहनकाले तादृग्ग्रासदानात् अनायासेन दोहन दुग्धवृद्धिश्च भवतीति

पाति, (१२०) पूतविष्टरोपविष्टे कृष्णाजिनजटिले जटिनि जपति वटुजने, (१२१) ब्रह्मासनाध्यासिनि ध्यायति योगिगणे (१२२) तालध्वनिधावमानानन्तान्तेवासिनि, अलसवृद्धश्रोत्रियानुमतेन गलद्ग्रन्थदण्डकोद्गारिणि सन्ध्यां समवधारयति वठरविटवटुसमाजे, (१२३) समुन्मज्जति च ज्योतिषि तारकाख्ये खे, प्राप्ते प्रदोषारम्भे भवनम् आगत्य उपविष्टः स्निग्धैः बन्धुभिश्च साद्धं तयैव गोष्ठ्या तस्थौ। (१२४) नीतप्रथमयामश्च गणपतेः

भावः। होमकपिलासु—होमधेनुषु। दुग्धासु—कृतदोहासु। हूयमाने—हविषा सन्तर्प्यमाणे। वैतानतनूनपाति—यज्ञीयाग्नौ। ("अग्निर्वैश्वानरो···। ···जातवेदास्तनूनपात्" इत्यमर)।

(१२०) पूतेति।—पूते—पवित्रे, विष्टरे—आसने, उपविष्टे तस्मिन्। कृष्णाजिनजटिले—कृष्णमृगचर्मावृते, जटिनि—जटाधारिणि, जपति, इष्टमन्त्रमिति शेषः, वटुजने—द्विजजने।

(१२१) ब्रह्मेति।—ब्रह्मासनम्—आसनविशेषः, तत् अध्यास्ते इति तथोक्ते। ध्यायति—चिन्तयति, स्वेष्टदेवमिति शेष।

(१२२) तालेति।—तालध्वनिः,—सङ्केतार्थमङ्गुलिशब्दविशेषः, तेन धावमानाः,—सत्वरमापतन्तः, अनन्ताः,—अशेषाः, बहव इत्यर्थ, अन्तेवासिनः,—छात्रा यस्य तथाभूते। अलसेति।—अलसः,—मन्थरः, वृद्धः,—स्थविरः, श्रोत्रियः—छान्दसः, वेदोपाध्याय इत्यर्थः, तस्य अनुमतं—"कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् अनुमतिरित्यर्थः तेन, अनुज्ञया इत्यर्थः। गलदिति।—गलतः,—स्खलतः, विस्मरत इत्यर्थः, ग्रन्थदण्डकान्—ऋग्विशेषान्, उद्गिरति—उच्चारयतीति तथोक्ते। सन्ध्यां—सन्ध्याकालिकोपासनाविशेषं, समवधारयति—समालोचयति। वठरेति।—वठराः,—अबोधाः, मूर्खा इत्ययः, विटाः,—दुर्वृत्ताः, ये वटवः,—द्विजशिशवः, तेषां समाजः,—सङ्घः तस्मिन्; वृद्धगृहश्रोत्रियैः मूर्खाः दुर्वृत्ताश्च शिशवः सन्ध्योपासनायै नियुज्यन्ते इति समुदितार्थः।

(१०३) समुन्मज्जति—समुन्मीलति, तारकाख्ये—नक्षत्रनाम्नि, ज्योतिषि—तेजःपदार्थे। खे—आकाशे। प्राप्ते—उपस्थिते, प्रदोषारम्भे—रजनीमुखे इत्यर्थः। गोष्ठ्या—संलापेन, प्रक्रान्तविषयालोचनेनेत्यर्थः, ("गोष्ठी सभा संलापयोः स्त्रियाम्" इति मेदिनी) तस्थौ—स्थितः।

भवने परिकल्पितं शयनीयम् असेवत; इतरेषान्तु सर्वेषां निमीलितदृशामपि अनुपजातनिद्राणां कमलवनानामिव सूर्य्योदयं प्रतिपालयतां कुतूहलेन कथमपि सा क्षपा क्षयम् अगच्छत्।

अथ यामिन्याः (१२५) तुर्य्ये यामे प्रतिबुद्धः स एव वन्दी श्लोकद्वयम् अगायत्,—

"पश्चादङ्घ्रिं प्रसार्य्य त्रिकननिविततं द्राघयित्वाऽङ्गमुच्चैः
आसज्याभुग्नकण्ठो मुखमुरसि सटा धूलिधूम्रा विधूय।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥५॥

---

(१२४) नीतप्रथमयाम,—अतिक्रान्ते प्रथमप्रहरे इत्यर्थः, गणप,—प्रागुक्त-पितृव्यपुत्रस्य। परिकल्पित—रचितम्। कुतूहलेन—प्रभाते बाणवर्ण्यमानहर्षचरित-श्रवणौत्सुक्येन इत्यर्थः। क्षपा—रात्रिः।

(१२५) तुर्य्ये—चतुर्थे, यामे—प्रहरे। वन्दी—स्तुतिपाठकः।

अश्वाना चेष्टावर्णनमुखेन उषागमनं द्वाभ्या सूचयन्नाह, पश्चादिति।—शयनादुत्थित,—प्रबुद्ध इत्यर्थः, तुरङ्ग,—अश्व, पश्चादङ्घ्रि—पश्चाद्भागस्थितपदद्वयमित्यर्थ, त्रिकस्य—पृष्ठवंशाधरस्य, ("पृष्ठवंशाधरे त्रिकम्" इत्यमर) नत्या वितत—विस्तृतं यथा तथा, प्रसार्य्य—विस्तार्य्य, अङ्गम्—अवयवम्, उच्चै द्राघयित्वा - दीर्घीकृत्य, आभुग्नकण्ठ,—नमितगलः सन्, मुखम् उरसि - वक्षसि, आसज्य—लग्नं कृत्वा, संयम्य इत्यर्थः, धूलिभि धूम्राः,—धूसरा इत्यर्थः, सटा,—जटा, विधूय—कम्पयित्वा, घासाना—शष्पाणा, ग्रासे—कवलने, अभिलाषः तस्मात् अनवरतं चलत्—स्फुरत्, प्रोथं—नासिका यस्य तादृश, ("प्रोथोऽस्त्री हयघोणायाम्" इति मेदिनी। "घोणा नासा च नासिका" इत्यमर) तुण्डं—मुखं यस्य तथोक्त, ("तुण्डमाननं लपनं मुखम्" इत्यमरः) मन्दं शब्दायमान,—शब्दं कुर्व्वन्, खुरेण क्ष्मा—भुवं, विलिखति—कुट्टयति। अत्र प्रातः शयनादचिरोत्थितस्य अश्वस्य कविप्रौढोक्तिसिद्ध-क्रियाया यथावद्वर्णनात् स्वभावोक्तिरलङ्कारः। स्रग्धरा वृत्त,—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणम् ॥ ५ ॥

कुर्व्वन्नाभुग्नपृष्ठो मुखनिकटकटिः कन्धरामातिरश्चीं
लोलेनाहन्यमानं तुहिनकणमुचा चञ्चता केसरेण ।
निद्राकण्डूकषायं कषति निविडितश्रोत्रशुक्तिस्तुरङ्गः
त्वङ्गत्पक्ष्माग्रलग्नप्रतनुबुसकणं कोणमक्ष्णः खुरेण ॥ ६ ॥

बाणस्तु तत् श्रुत्वा समुत्सृज्य निद्राम् उत्थाय प्रक्षाल्य वदनम् उपास्य भगवतीं सन्ध्याम् उदिते भगवति सवितरि गृहीतताम्बूलः तत्रैव अतिष्ठत्। अत्रान्तरे सर्वे अस्य ज्ञातयः समाजग्मुः, परिवार्य्य च आसाञ्चक्रुः। असौ अपि (१२६) पूर्वोद्घातेन विदिताभिप्रायः तेषां पुरो हर्षचरितं कथयितुम् आरेभे।

"श्रूयताम्,—

(१२७) अस्ति पुण्यकृताम् अधिवासो वासवावास इव

---

कुर्वन्निति।—तुरङ्गः,—अश्वः, निविडिते—घनीभूते, परिपुष्टे इत्यर्थः, श्रोत्रे—कर्णौ, शुक्ती इव—मुक्तास्फोटाविव यस्य तथोक्तः, तथा आभुग्नम्—आकुञ्चितं, पृष्ठं येन तथोक्त, मुखस्य निकटे—सन्निधौ, कटिः,—मध्यभागः यस्य तथाभूत., कन्धरा—ग्रीवाम्, आतिरश्चीम्—आभङ्गुरा, कुर्व्वन् लोलेन—चपलेन, तुहिनकणमुचा—शिशिरबिन्दुवर्षिणा, चञ्चता—स्फुरता, केसरेण—जटाजालेन, आहन्यमान—सन्ताड्यमानं, निद्राकण्डू —निद्राऽऽवेगावशेष, तया कषायः,—लोहितः तम्, अक्ष्णः,—नेत्रस्य, कोणं—प्रान्त, त्वङ्गत्सु—प्रस्फुरत्सु, पक्ष्माग्रेषु चक्षुष एव लोमाग्रेषु, लग्नाः,—ससक्ताः, प्रतनवः,—स्वल्पाः, बुसकणाः,—कडङ्गराशाः, सारहीनक्षुद्रधान्यानि इत्यर्थ. यत्र तत् यथा तथा, खुरेण कषति—घर्षयति। अत्रालङ्कारस्तु पूर्व्ववत्। स्रग्धरा वृत्तम् ॥ ६ ॥

(१२६) पूर्वोद्घातेन—प्राक्सूचितारम्भेण, पूर्व्वकृतप्रस्तावेन इत्य :, ("प्रक्रमः स्यादुपक्रमः। स्यादभ्यादानमुद्घात आरम्भ…"इत्यमरः) विदिताभिप्रायः,—विज्ञाताशयः।

(१२७) "अस्ति" इत्यस्य "श्रीकण्ठो नाम जनपद." इत्युत्तरेण अन्वयः। तमेव विशिनष्टि, पुण्येत्यादिभि.।—पुण्यकृतां—पुण्यशालिना, देवानाञ्च, अधिवासः,

वसुधाम् अवतीर्णः, सततम् (१२८) असङ्कीर्णवर्णव्यवहार-स्थितिः, (१२९) कृतयुगव्यवस्थः, (१३०) स्थलकमल-बहलतया पोत्रोन्मूल्यमानमृणालैः उद्गीतमेदिनीसारगुणैरिव कृतमधुकरकोलाहलैः हलैः उल्लिख्यमानक्षेत्रः, (१३१) क्षीरोद-पयःपायिपयोदसिक्ताभिरिव पुण्ड्रेक्षुवाटसन्ततिभिः निरन्तरः, प्रतिदिशम् (१३२) अपूर्वपर्वतकैरिव खलधानधामभिः

---

—आवासक्षेत्रम्। वासवावास इव—इन्द्रालय इव, स्वर्ग इव इत्यर्थः, वसुधा—पृथ्वीम्।

(१२८) असङ्कीर्णेति।—न सङ्कीर्णाः,—सङ्करदोषैः अस्पृष्टा इत्यर्थः, वर्णानां—ब्राह्मणादीनां, व्यवहाराः,—आचाराः, स्थितयः,—मर्यादाश्च यत्र तथोक्तः।

(१२९) कृतेति।—कृतयुगस्येव—सत्ययुगस्येव,व्यवस्था—नियमः यत्र तथाभूतः।

(१३०) स्थलकमलबहलतया—स्थलपद्मप्राचुर्य्येण। पोत्रेति।—पोत्रेण—मुखाग्रेण, हलानामिति भावः, [ "हल-सूकरयोः पुवः" (३।२।१८३ पा०) इति पूधातोः ष्ट्रनि रूपम्। "पोत्रं वक्त्रे मुखाग्रे च शूकरस्य हलस्य च" इति मेदिनी ] उन्मूल्यमानानि—उद्ध्रियमाणानि, मृणालानि यैः तथोक्तैः, अत एव उद्गीताः,—उच्चैः कीर्त्तिताः, मेदिन्याः साराः,—उत्कृष्टाः, गुणा यैः तथाभूतैः। कृतेति।—कृता मधुकराणां कोलाहलाः यैः तादृशैः। हलैः,—लाङ्गलैः, उल्लिख्यमानानि—उत्खन्यमानानि, क्षेत्राणि यस्य तथोक्तः।

(१३१) क्षीरोदेति।—क्षीरोदस्य—क्षीरसागरस्य, पयांसि पिबन्ति इति तथोक्ताः, ये पयोदाः,—मेघाः, तैः सिक्ता ताभिरिव, माधुर्य्यातिशय्यात् क्षीरोद-पयःपायीत्युत्प्रेक्षा; पुण्ड्रेक्षुवाटसन्ततिभिः,—पुण्ड्रेक्षूणाम्—इक्षुविशेषाणां, वाट-सन्ततयः,—वृतिनिचयाः, वेष्टनसमूहा इत्यर्थः ताभिः, ("वाटो मार्गे वृतिस्थाने स्यात् कुटी-वास्तुनोः स्त्रियाम्" इति मेदिनी) निरन्तरः,—अविच्छिन्नः, नीरन्ध्र इत्यर्थः।

(१३२) अपूर्व्वपर्व्वतकैरिव—अभिनवक्षुद्रगिरिभिरिव, अपूर्बत्वन्तु सद्य एव तथा कल्पनादिति बोध्यम्। खलधानधामभिः,—खलेषु—शस्यसमाहर भूमिषु, धानाय—स्थापनाय, रक्षणाय इत्यर्थः, धाम—स्थानं येषां तैः. यद्वा,—खलधानं

विभज्यमानैः शस्यकूटैः सङ्कटसीमान्तः, समन्तात् (१३३) उद्घातघटीसिच्यमानैः जीरकजूटैः जटिलितभूमिः, (१३४) उर्व्वरावरीयोभिः शालीयैः अलङ्कृतः, (१३५) पाकविशरारुराजमाषनिकरकिर्म्मीरितैश्च (१३६) स्फुटितमुद्गफलकोशीकपिशितैः गोधूमधामभिः स्थलीपृष्ठैः अधिष्ठितः, (१३७) महिषपृष्ठप्रतिष्ठितगायद्गोपालपालितैश्च (१३८) कीटपटललम्पटचटकानुसृतैः (१३९) अवटुघटितघण्टाघटीर रमणीयैः

—शस्यमर्द्दनस्थानमेव, धाम येषां तैः खलरचकैरित्यर्थः। विभज्यमानैः,—विभागेन स्थाप्यमानैः, पृथक् पृथक् रच्यमाणैः इत्यर्थः, शस्यकूटैः,—धान्यादिशस्यराशिभिः, सङ्कटसीमान्तः,—आकीर्णसीमाभागः।

(१३३) उद्घातेति।—उद्घातघटीभिः,—यन्त्रकलसैः इत्यर्थः, सिच्यमानानि—आर्द्रीक्रियमाणानि तैः। जीरकजूटैः,—जीरकसमूहैः, जटिलिता—समाकीर्णा, भूमिः यत्र तः।

(१३४) उर्व्वरेति।—उर्व्वरा—सर्वशस्याढ्या भूः, तया वरीयांसि—श्रेष्ठानि, अत्युत्कृष्टानि इत्यर्थः तैः, शालीयैः,—धान्यविशेषसमूहैः शालिचितैः वा, अलङ्कृतः,—परिशोभितः।

(१३५) पाकेति।—पाकेन विशरारूणां—स्फुरतां, विशरारुत्वं युगपत्पाकसम्भवात्, राजमाषाणां—तदाख्यकलायविशेषाणां, निकरैः,—सङ्घैः, किर्म्मीरितानि—शवलानि तैः।

(१३६) स्फुटितेति।—स्फुटितानां—पाकेन विदीर्णानां, मुद्गफलानां—तदाख्यकलायभेदानां, कोशीभिः,—शिम्बिकाभिः, कपिशितानि—पिङ्गलानि तैः। गोधूमधामभिः,—गोधूमशालिभिः इत्यर्थः, स्थलीपृष्ठैः,—अकृत्रिमभूतलैः, अधिष्ठितः,—समन्वितः।

(१३७) महिषेति।—महिषाणां पृष्ठेषु प्रतिष्ठिताः,—आरूढाः इत्यर्थः, गायन्तः गोपालाः, तैः पालितानि—रक्षितानि तैः।

(१३८) कीटेति।—कीटानां—क्षुद्रप्राणिभेदानां, पटलेषु—वृन्देषु, गोधनानाम् अङ्गलग्नेषु इति भावः, लम्पटाः,—लुब्धाः, ये चटकाः,—क्षुद्रपक्षिभेदाः, तैः अनुसृतानि—अनुगतानि तैः।

(१३९) अवटिति।—अवटुः,—घाटा, ग्रीवापश्चाद्भागः इत्यर्थः, ("अवटु

अटद्भिः अटवीं (१४०) हरवृषभपीतम् आमयशङ्कया बहुविभक्तं क्षीरोदमिव क्षीरं क्षरद्भिः (१४१) वाष्पच्छेद्यतृणतृप्तैः गोधनैः धवलितविपिनः, (१४२) विविधमखहोमधूमान्धशतमन्युमुक्तैः लोचनैरिव सहस्रसङ्ख्यैः कृष्णसारैः शारीकृतोद्देशः, (१४३) धवलधूलीमुचां केतकीवनानां रजोभिः पाण्डुरीकृतैः प्रमथोद्धूलनधूसरैः शिवपुरस्येव प्रवेशैः प्रदेशैः उपशोभितः,

---

घोंटा कृकाटिका" इत्यमरः) तत्र घटिता—योजिता, या घण्टाघटी—घण्टारूपः क्षुद्रघटः, ["कादल्पाख्यायाम्" (४।१।५१ पा०) इति अल्पार्थे ङीषि रूपम्] तस्या रटितेन—निनादेन, रमणीयानि—चारूणि, मनोज्ञानि इत्यर्थः तैः। अटद्भिः,—चरद्भि।

(१४०) हरेति।—हरस्य—शिवस्य, वृषभेण पीतम्, आमयशङ्कया—अजीर्णरोगसम्भावनया, बहुतरदुग्धपानेन अजीर्णं सम्भवति इति भाव.। ["आमयशङ्कया" इत्यत्र "आमयाशङ्कया" इति पाठान्तरम्]। क्षीरोदमिव—क्षीरसागर समग्रमिव बहुविभक्तं—बहुधा विभज्य स्थापितम् इत्यर्थः।

(१४१) वाष्पेति।—वाष्पेण—लौहनिर्मितेन अस्त्रविशेषेण, "कास्ते" इति बङ्गभाषाप्रसिद्धेन, छेद्यानि, यद्वा,—वाष्पेण—उष्मणा, ईषदातपेनैवेत्यर्थः, छेद्यानि—नाश्यानि इत्याशयः, अतिकोमलतया ईषदातपेनापि शुष्कता गन्तुमर्हाणि इति भाव., यानि तृणानि, तै. तृप्तानि—सन्तुष्टानि तैः। गोधनैः,—गाव एव धनानि तैः। धवलितानि - श्वेतीकृतानि, विपिनानि—वनानि यस्य तथोक्त.।

(१४२) विविधेति।—विविधाना—बहुप्रकाराणा, मखाना—यज्ञाना, होमधूमैः अन्धानि—दर्शनव्यापाररहितानि, अत एव शतमन्युना—इन्द्रेण, मखाहूतेन इति भावः, मुक्तानि—परित्यक्तानि तैः, लोचनैः,—नयनैरिव, सहस्रसङ्ख्यैः कृष्णशारैश्च इति भाव.; अन्यत्र,—सहस्रसङ्ख्यै.,—प्रभूतैरित्यर्थः, कृष्णशारै.,—तदाख्यै. मृगै, शारीकृतोद्देशः,—चित्रितप्रदेश.।

(१४३) धवलधूलीमुचा—श्वेतरजोमुचा, केतकीवनाना रजोभि.,—परागैः, पाण्डुरीकृतै.,—पाण्डुता नीतैः, अत एव प्रमथाना—शिवपारिषदाना भूतवर्गाणाम्, उद्धूलनेन—लुण्ठनेन, धूसराः,—ईषत्पाण्डुवर्णाः, उद्धृतरजस्त्वादिति भावः तैः, ("ईषत्पाण्डुस्तु धूसरः" इत्यमरः)। शिवपुरस्येव—शिवालयस्येव, प्रविश्यते एभिरिति प्रवेशाः,—मार्गाः, तैः।

( १४४ ) शाककन्दलश्यामलितग्रामोपकण्ठकाश्यपीपृष्ठः, पदे पदे ( १४५ ) करभपालीभिः पीलुपल्लवप्रस्फोटितैः करपुटपीड़ितमातुलुङ्गीदलरसोपलिप्तैः ( १४६ ) स्वेच्छाविचितकुङ्कुमकेसरकृतपुष्पप्रकरैः ( १४७ ) प्रत्यग्रफलरसपानसुखसुप्तपथिकैः ( १४८ ) वनदेवतादीयमानामृतरसप्रपागृहैरिव द्राक्षामण्डपैः ( १४९ ) स्फुरत्फलानाञ्च बीजलग्नशुकचञ्चुरागाणामिव ( १५० ) समारूढकपिकुलकपोलसन्दिह्यमानकुसुमानां दाडि-

( १४४ ) शाकेति।—शाकाना—"सेगुन" इत्याख्यवृक्षविशेषाणां, कन्दलेन—अभिनवेन अङ्कुरेण, ("कन्दलं विषु कपालेऽप्युपरागे नवाङ्कुरे" इति मेदिनी) श्यामलिता ग्रामाणाम् उपकण्ठाः,—प्रान्तभागा यस्य तथोक्त, काश्यपीपृष्ठ—भूतलं यस्य तथाभूत.। ("भूर्भूमि···।···काश्यपी क्षिति" इत्यमर.)।

( १४५ ) करभपालीभि.,—करभा.—उष्ट्रशिशवः, तेषा पाल्य,—वृन्दानि ताभि। [ "इत्थम्भूतलक्षणे" ( २।३।२१ पा० ) इति तृतीया ] पीलुपल्लवाना—पीलूनाम्—"आखरोट्" इति प्रसिद्धाना वृक्षभेदाना, पल्लवा,—किसलयाः, करभभक्ष्या इति भाव., तेषा प्रस्फोटित—प्रस्फोटन, भञ्जनमित्यर्थ. यत्र तादृशैः। करपुटेति।—करपुटैः पीडिताना—मर्दितानाम् इत्यर्थ., मातुलुङ्गीदलाना—मातुलुङ्गी नाम जम्बीरवृक्षभेदः, "मधुकुक्कुटी" वा "कोलङ्ग" इति वङ्गभाषया प्रसिद्धा, तस्या दलानि—पल्लवा, तेषा रसै—द्रवैः, उपलिप्तानि—प्रलिप्तानि तैः।

( १४६ ) स्वेच्छेति।—स्वेच्छया विचिता,—उच्चिता, कुङ्कुमाना केसरा.,—किञ्जल्का, तैः कृत,—रचित., पुष्पाणा प्रकरः,—माल्यं येषु तथोक्तै.।

( १४७ ) प्रत्यग्रेति।—प्रत्यग्राणि—अभिनवानि, फलानि, तेषा रसपानेन सुखसुप्ताः पथिकाः,—अध्वगा. येषु तथोक्तै.।

( १४८ ) वनेति।—वनदेवताभि दीयमानानि अमृतरसाना प्रपागृहाणि—पानीयशाला. तैरिव. ("प्रपा पानीयशालिका' इत्यमर.)। द्राक्षामण्डपैः,—द्राक्षालतावेष्टितगृहै।

( १४९ ) स्फुरन्ति—विकसन्ति, फलानि यासा तासाम्। बीजेति।—बीजेषु लग्नाः,—सक्ता, शुकाना—तदाख्यपक्षिभेदाना, चञ्चुरागा.,—चञ्चुलौहित्यानि येषा तथाभूतानामिव।

( १५० ) समारूढेति।—समारूढाना कपिकुलाना—वानरवृन्दाना, कपोलैः

मीनां वनैः विलोभनीयोपनिर्गमः, (१५१) वनपालपीयमान-नारिकेलरसासवैश्च (१५२) पथिकलोकलुप्यमानपिण्डखर्जूरैः (१५३) गोलाङ्गूललिह्यमानमधुरामोदपिण्डीरसैः (१५४) चकोर-चञ्चुजर्जरितारुकैः उपवनैः अभिरामः, (१५५) तुङ्गार्ज्जुनपाली-परिवृतैश्च (१५६) गोकुलावतारकलुषितकूलकीलालैः अध्वग-शतशरण्यैः अरण्यधरावन्धैः अवन्ध्यवनरन्ध्रः, (१५७) करभीय-

—गण्डदेशैः, ["कपिगडि—" (उ० १ पा० ६७ सू०) इत्यादिना श्रीलचि रूपम्] सन्दिह्यमानानि—संशय्यमानानि, सदृशानीति भावः, कुसुमानि यासां तथो—ानाम्। विलोभनीयोपनिर्गमः,—विलोभनीयाः,—विशेषेण दर्शनीयाः, उपनिर्गमाः,—निर्गमन-मार्गाः, "उद्यानानि" इति केचित्, यस्य तथाभूतः।

(१५१) वनेति।—वनपालैः,—उद्यानरक्षिभिः, पीयमानाः,—आस्वाद्यमानाः, नारिकेलानां रसाः,—जलान्येव, आसवाः,—मद्यानि येषु तथोक्तैः।

(१५२) पथिकेति।—पथिकलोकैः,—पान्थनिवहैः, लुप्यमानानि—गृह्यमाणानि, भक्षणेन अदृश्यतां नीयमानानीत्यर्थः, पिण्डखर्जूराणि येभ्यः तथोक्तैः।

(१५३) गोलाङ्गूलेति।—गोलाङ्गूलैः,—कृष्णमुखकपिभेदैः, लिह्यमानः,—आस्वाद्यमानः, मधुरः,—स्वादुः, आमोदपिण्डीरसः,—सुरभिपिण्डीखर्जूरविशेषरसः येषु तैः।

(१५४) चकोरेति।—चकोराणां—पक्षिभेदानां, चञ्चुभिः जर्जरितानि आरुकाणि—"आलुबोखारा" इत्याख्यवृक्षफलानि येषु तथोक्तैः, उपवनैः,—उद्यानैः, अभिरामः,—मनोहरः।

(१५५) तुङ्गेति।—तुङ्गाभिः,—उन्नताभिः, अर्जुनपालीभिः,—ककुभाख्यवृक्ष-श्रेणीभिः, परिवृताः,—वेष्टिताः तैः।

(१५६) गोकुलेति।—गोकुलानां—गोवृन्दानाम्, अवतारेण—अवतरणेन, कलुषितानि—आविलीभूतानि, कूलकीलालानि—तीरस्थितजलानि ˆ तैः। ("…सलिलं कमलं जलम्। पयः कीलालम्…" इत्यमरः)। अध्वगशतशरण्यैः,—पथिकशतपरित्रायिभिः, अरण्यधरावन्धैः,—वन्यजलाशयैः। अवन्ध्यानि—सफलानि, अशून्यीभूतानीति यावत्, वनरन्ध्राणि—वनाभ्यन्तरभागाः यस्य तथाभूतः।

(१५७) करभीयेति।—करभेभ्यः,—उष्ट्रशावकेभ्यः हिताः करभीयाः, यैः

कुमारकपाल्यमानैः औष्ट्रकैः औरभ्रैश्च कृतसम्बाधः, दिशि दिशि (१५८) रविरथतुरगविलोभनायेव (१५९) विलोडनक्षुदितकुङ्कुमस्थलीरससमालब्धानाम् उत्प्रोथपुटैः उन्मुखैः (१६०) उदरशायिकिशोरकजवजननाय प्रभञ्जनमिव च आपिबन्तीनां वातहरिणीनामिव स्वच्छन्दचारिणीनां बडवानां वृन्दैः विचरद्भिः आचितः, (१६१) अनवरतक्रतुधूमान्धकारप्रवृत्तैः हंसयूथैरिव बाणैः धवलितभुवनः,

---

कुमारकाः—पशुपालकशिशव इत्यर्थः, तैः पाल्यमानाः,—रक्ष्यमाणाः तैः। औष्ट्रकैः,—उष्ट्राणां समूहैः। औरभ्रैः,—मेषनिचयैः, [ "गोत्रोक्षोष्ट्रोरभ्र—" (४।२।३९ पा०) इत्यादिना वुञि रूपम्। "मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडकाः" इत्यमरः। "औरभ्रैः" इत्यत्र "औरभ्रकैः" इति पाठेऽपि स एवार्थः ]। कृतसम्बाधः,—समाकीर्णः।

(१५८) रवीति।—रवेः,—सूर्यस्य, रथे ये तुरगाः,—अश्वाः, तेषां विलोभनम्—अनुरागप्रकटनेन लोभप्रदर्शनं तस्मै इव।

(१५९) विलोडनेति।—विलोडनेन—विदलनेन, [ "विलोडन—" इत्यत्र "विलोठन—" इति पाठे,—विलोठनेन—भूमौ इतस्ततः शरीरपरिचालनेन इत्यर्थः ] क्षुदिता—मर्दनं नीता, या कुङ्कुमस्थली—कुङ्कुमोत्पत्तिभूमिः, तस्याः रसेन—द्रवेण, समालब्धाः,—अनुलिप्ताः तासाम्। उत्प्रोथपुटैः,—उत्—उन्नतानि, प्रोथपुटानि—नासापुटानि येषां तादृशानि तैः। उन्मुखैः,—ऊर्द्धमुखैः।

(१६०) उदरशायीति।—उदरशायिना—गर्भस्थितानां, किशोरकाणां—शावकानां, [ "बालः किशोरः" इति अश्वप्रकरणे अमरः। बालः,—अश्वशिशुरित्यर्थः ] जवजननाय—वेगवर्द्धनाय इत्यर्थः, प्रभञ्जनमिव—वायुमिव। आपिबन्तीनां—भक्षयन्तीनां, सम्पीतवतीनामिति यावत्, वातहरिणीनामिव—वातमृगीणामिव, समीरणाभिमुखधाविनीनां मृगीणामिवेति यावत्, स्वच्छन्दचारिणीनां—स्वेच्छया चरन्तीनां, बडवानाम्—अश्वानाम्। ("वामश्वा बडवा" इत्यमरः) आचितः,—आकीर्णः, [ आङ्पूर्व्वक-चिञः "निष्ठा" (३।२।१०२ पा०) इति कर्म्मणि क्तः ]।

(१६१) अनवरतेति।—अनवरताः,—अविरताः, क्रतूनां—यज्ञानां, धूमा एव अन्धकाराः, तेषु प्रवृत्ताः,—जाताः तैः, हंसपक्षे,—धूमेन अन्धकारः, तस्मात् प्रवृत्तैः,—पलायितैः, इतस्ततः धावमानैरित्यर्थः, बाणैः,—शरास्फलत्पविशेषैः,

(१६२) सङ्गीतगतमुरजरवमत्तैः मयूरैरिव विभवैः मुखरितजीव-लोकः, शशिकरावदातवृत्तैः मुक्ताफलैरिव गुणिभिः प्रसाधितः, (१६३) पथिकशतविलुप्यमानस्फीतफलैः महातरुभिरिव सर्व्वातिथिभिः अभिगमनीयः, (१६४) मृगमदपरिमलवाहिमृगरोमाच्छादितैः हिमवत्पादैरिव महत्तरैः स्थिरीकृतः, (१६५) प्रोद्दण्ड-

---

धवलितेति।—धवलितानि—श्वेतीकृतानि, भुवनानि—प्रदेशा यस्य तथोक्तः। [ "भुवनः" इत्यत्र "भवनः" इति पाठे,—भवनानि—गृहाणि इत्यर्थः ] "धूमान्धकार-प्रवृत्तैः वाष्पैः धवलितभुवनः" इति विरोधप्रतीतिः। हंसानामन्धकारप्रवृत्तत्वन्तु तमसि प्रचारात् ज्ञेयम्।

(१६२) सङ्गीतेति।—सङ्गीतेषु—यथास्थं निषादादिसप्तस्वरालापने इत्यर्थः, गतानां—स्थितानां, मुरजानां—मृदङ्गानां, रवेण—ध्वनिना, मत्ताः,—मादकजनकाः; इति यावत्, उल्लासिताश्च तैः। विभवैः,—सम्पद्भिः। मुखरितः,—सततव्यापृत इति भावः, नादितश्च, जीवलोकः,—प्राणिवर्गः, जनलोकावकाशश्च यस्य तथोक्तः। ( "लोकस्तु भुवने जने" इत्यमरः ) शशिकरेति।—शशिनः,—चन्द्रस्य, कराः,—किरणाः, तद्वत् अवदातानि—विशदानि, निर्म्मलानि इति यावत्, वृत्तानि—चरितानि येषाम्; अन्यत्र,—शशिकरवत् अवदातानि—स्वच्छानि, वृत्तानि—वर्त्तुलानि तैः। गुणिभिः,—विद्याविनयशालिभिः, सूत्रवद्भिश्च। प्रसाधितः,—अलङ्कृतः।

(१६३) पथिकेति।—पथिकशतैः,—पान्थैः, तस्करशतैः इत्यर्थः, विलुप्यमानानि—चौर्य्यमाणानि, स्फीतानि—प्रभूतानि, फलानि—धनानि येषां तथाभूतैः, अन्यत्र,—पथिकानाम्—अध्वगानां, शतैः विलुप्यमानानि—गृह्यमाणानि, भक्षणेन अदृश्यतां नीयमानानि इत्यर्थः, स्फीतानि—प्रभूतानि, फलानि येषां तैः। अभिगमनीयः,—आश्रयणीयः।

(१६४) मृगेति।—मृगमदस्य—कस्तूरिकायाः, परिमलवाहिभिः,—सौरभ्यशालिभिः, मृगरोमभिः,—राङ्कवेति संज्ञान्तरैः कस्तूरीमृगरोमनिर्म्मितैः वस्त्रैः इति यावत्, ( "राङ्कवं मृगरोमजम्" इत्यमरोक्तेः ) आच्छादितैः,—कृतगात्रावरणैः, अन्यत्र,—तथाविधमृगरोमावृतैः, हिमवत्पादैरिव—हिमाद्रेः प्रत्यन्तपर्वतैरिव, ( "पादाः प्रत्यन्तपर्वताः" इत्यमरः ) महत्तरैः,—अतिमहद्भिः लोकैः, वृद्धैर्वा; अन्यत्र,—प्रकाण्डैः, स्थिरीकृतः,—आवासितः।

(१६५) प्रोद्दण्डेति।—प्रकर्षेण उद्गता दण्डाः,—नाला येषां तानि,

सहस्रपत्रोपविष्टद्विजोत्तमैः नारायणनाभिमण्डलैरिव तोयाशयैः मण्डितः, (१६६) मथितपयःप्रवाहप्रक्षालितक्षितिभिः क्षीरोदमथनारम्भैरिव महाघोषैः पूरिताशः श्रीकण्ठो नाम जनपदः।

(१६७) यत्र त्रेताग्निधूमाश्रुपातजलक्षालिता इव अक्षीयन्त कुदृष्टयः। (१६८) पच्यमानचयनेष्टकादहनदग्धानीव न अदृश्यन्त दुरितानि। (१६९) छिद्यमानयूपदारु-

सहस्रपत्राणि—कमलानि, बहूनि कमलपत्राणि च, तेषु उपविष्टा द्विजोत्तमाः,—उत्कृष्टाः पक्षिणः, ब्राह्मणाश्च येषु तथाभूतैः, तोयाशयैः,—जलाशयैः, सरोभिरित्यर्थः; अन्यत्र,—तोयमेव आशयः,—आधारः, स्थानमित्यर्थः येषां तैः, नारायणस्य समुद्रशायित्वात्, मण्डितः,—सुशोभितः।

(१६६) मथितेति।—मथितानां—निर्जलतक्राणां, ("मथितं पुनः। क्लीब निर्जलघोले स्यात् विभ्रालोडित-दृष्टयोः" इति मेदिनी) पयसां—दुग्धानाञ्च, प्रवाहेण—धारया, अन्यत्र,—मथितेन—विलोडितेन, पयसा—दुग्धानां, प्रवाहेण—स्रोतसा, प्रक्षालिता—धौता, क्षितिः,—भूभागो यैः तथोक्तैः। महाघोषैः,—महद्भिः घोषैः,—आभीरपल्लीभिः, ("घोष आभीरपल्ली स्यात्" इत्यमरः) अन्यत्र,—महाऽऽघोषैः,—महाऽऽरावैश्च, पूरिता—व्याप्ता, आशा—आकाङ्क्षा, आशाः,—दिशश्च यत्र त[थो]क्तः, ("आशा तृष्णा-दिशोः स्त्रियाम्" इति मेदिनी)।

(१६७) यत्रेत्यादि।—त्रेता—"दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नय.। अग्नित्रयमिद त्रेता" इत्युक्तस्त्रिविधः अग्नि. त्रेत ग्निः; अत्र प्रचण्डाग्निबोधनाय त्रेतेति पद बोद्धव्य, त्रेताग्नितुल्योऽग्निरित्यर्थः, तस्य धूमेन योऽश्रुपात,—पतितम् अश्रु इत्यर्थः, स एव जल—सलिलं, तेन क्षालिता इव—धौता इव, शमिता इव इति भावः, कुदृष्टयः,—कुत्सिता दृष्टयः,—वेदविरुद्धानि ज्ञानानि, दृष्टिदोषाश्च, अक्षीयन्त—क्षयम् अगच्छन्।

(१६८) पच्यमानेति।—पच्यमानं—दह्यमानं, चयन—चित्या, "पाँजा" इति वङ्गभाषा, यासां तथाभूतानाम्, इष्टकानां—दह्यमानानामिति भावः, दहनेन—सन्तापेन, दग्धानि इव—भस्मीकृतानि इव। दुरितानि—पापानि। एतेन बहुलेष्टकानिर्मितहर्म्यवासिविलासिसङ्गावेऽपि न पापे प्रवृत्तिरिति भाव'।

(१६९) छिद्यमानेति।—छिद्यमानानि—कृत्यमानानि, यूपाय दारुणि यैः

प्रशुपाटित इव व्यदीर्य्यत अधर्म्मः। (१७०) मखशिखिधूम-जलधरधाराधौत इव ननाश वर्णसङ्करः। (१७१) दीयमानानेकगोसहस्रशृङ्गखण्ड्यमान इव अपलायत कलिः। (१७२) सुरालयशिलाघट्टनटङ्कनिकरनिकृत्ता इव व्यदीर्य्यन्त विपदः। (१७३) महादानविधानकलकलाभिद्रुता इव प्राद्रवन् उपद्रवाः। (१७४) दीप्यमानसत्रमहानससहस्रसन्तापिता इव व्यलीयन्त व्याधयः।

तथाभूतैः, परशुभिः,—कुठारैः, पाटित इव—कर्त्तित इव, अधर्म्मः,—पाप, व्यदीर्य्यत—विदीर्णः अभूत्।

(१७०) मखेति।—मखाना—यज्ञानां, शिखिनः,—अग्नयः, तेषां धूमाः, तैः ये जलधरा,—मेघाः, उत्पन्ना इति भावः; उक्तञ्च महाकविना कालिदासेन,—"धूमज्योतिः-सलिलमरुतां सन्निपातः क्व मेघः." इति, तेषां धाराभि,—वृष्टिभिः, धौत इव—क्षालित इव। वर्णसङ्करः,—वर्णाना—ब्राह्मणक्षत्रियवैश्यशूद्राणां, सङ्करः,—प्रातिलोम्येन सन्तानोत्पादनम्; अन्यत्र,—सङ्कीर्णवर्णः, शुक्लकृष्णादीनां मिश्रणेनोत्पन्नः श्यावादिवर्ण इति भाव., तादृशो हि वर्ण. मेघधाराधौतः अवश्यमेव नश्यति।

(१७१) दीयमानेति।—दीयमानानाम् अनेकेषां—प्रभूताना, गोसहस्राणां शृङ्गैः खण्ड्यमान इव—छिद्यमान इव, ताड्यमान इवेति यावत्, कलि.,—चतुर्थं युगम्, अपलायत—अदर्शनं गतवान्।

(१७२) सुरेति।—सुरालयेषु—देवमन्दिरेषु, याः शिला,—प्रस्तराः, तासां घट्टने—योजने, ये टङ्कनिकरा,—पाषाणदारणास्त्रनिवहाः, ("टङ्कः पाषाणदारणः" इत्यमर) तैः निकृत्ता इव—खण्डिता इव, व्यदीर्य्यन्त—व्यचूर्णन्त।

(१७३) महादानेति।—महादानाना—भूम्यादिदानानामित्यर्थः, विधाने—अनुष्ठाने, य. कलकलः,—कोलाहल., तेन अभिद्रुता इव—ताडिता इव। उपद्रवाः,—अनिष्टपाताः, प्राद्रवन्—अपलायन्त, दानेन च ग्रहाद्युपद्रवशान्ति भवति इति भावः।

(१७४) दीप्यमानेति।—दीप्यमानाना—प्रज्वलतां, सत्राणां—सदा दानानां, तदर्थं निकेतनानामिति भावः, सत्रेषु वा ("सत्रमाच्छादने यज्ञे सदा दाने वनेऽपि च" इत्यमरः) महानसाना—रन्धनशालाना, महानसस्थचुल्लीनामिति यावत् ("रसवत्यान्तु

(१७५) वृषविवाहप्रहतपुण्यपटहपटुरवत्रासिता इव न उपासर्पन् अपमृत्यवः। (१७६) सन्ततब्रह्मघोषबधिरीकृता इव अपजग्मुः ईतयः। (१७७) धर्म्माधिकारपरिभूतमिव न प्राभवत् दुर्दैवम्।

(१७८) तत्र चैवंविधे नानारामाभिरामकुसुमगन्धपरिमला-भोगसुभगो यौवनारम्भ इव भुवनस्य, कुङ्कुममलनपिञ्जरितबहु-

---

पाकस्थान-महानसे" इत्यमरः) सहस्रैः,—प्रचुरसद्भावै इति यावत्, सन्तापिता इव—दग्धा इव, अभिभूता इव इत्यर्थ, व्याधय,—रोगा।

(१७५) वृषेति।—वृषस्य विवाहः,—वृषोत्सर्गे, यत्र चतसृभि वत्सतरीभिः समुत्सृष्टो वृष स्वैरविहारी भवति, तत्र प्रहतस्य—ताडितस्य, पुण्यपटहस्य—धर्म्मान-कस्य, पटुना—तारेण रवेण—नादेन, त्रासिता इव—भीषिता इव। न उपासर्पन्—नापतन्। केचित्तु "वृषोऽत्र नीलवृष, 'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डर.। श्वेत: खुर-विषाणाभ्या स नीलो वृष उच्यते॥' इत्युक्तलक्षण, तस्य विवाहः,—तदुत्सर्ग इत्यर्थ।" तादृशवृषोत्सर्गस्य अपमृत्युनिवारकत्वम् अपि इति आचक्षते।

(१७६) सन्ततेति।—सन्ततेन—अविरतेन, ब्रह्मघोषेण—वेदध्वनिना, बधिरी-कृता इव—श्रवणशक्तिरहितीकृता इव, ईतय,—शस्योपघातका, "अतिवृष्टिरनावृष्टि. शलभा मूषिका खगा। अत्यासन्नाश्च राजान षडेता ईतय स्मृता॥" इत्युक्ता षट्। ब्रह्मघोषेणासा तथा बधिरत्व जायते, यथा शस्योत्पत्तिकथाम् अपि न श्रोतु शक्नुवन्तीति भाव।

(१७७) धर्म्मेति।—धर्म्माधिकार,—विचारालय, तेन परिभूतम् इव—निराकृतम् इव, दुर्दैवस्य विपद्धेतुत्वेऽपि धर्म्माधर्म्मविचारेण लोकाना तदपगमादिति भाव.।

(१७८) "तत्र" इत्यस्य "स्थाण्वीश्वराख्यो जननिवेश" इत्युत्तरेणान्वय'। तत्र—जनपदे। नानेति।—नानाऽऽरामाणा—बहूनाम् उपवनानाम्, अभिरामाणि—मनोहराणि, कुसुमानि, अन्यत्र,—नाना रामा,—बह्वो महिला, अभिराम-कुसुमानि इव, पा गन्धस्य—सौरभस्य. परिमल,—सम्मर्दनामोद, तस्य आभोग,—अनुभव., तेन सुभग,—रम्य, यद्वा,—नानारामाभिरामकुसुमाना गन्धाना—घृष्टचन्दनकुङ्कुमादीनाञ्च,परिमलेन—जनमनोहरेण सौरभेण, यः आभोग.,—संस्कारः, तेन सुभग.,—रमणीय.। कुङ्कुमेति।—कुङ्कुमाना मलनेन—कर्द्दमेन, पिष्ट-

महिषीसहस्रशोभितोऽन्तःपुरनिवेश इव धर्मस्य, (१७९) मरुदुद्धूयमानचमरीबालव्यजनधवलितप्रान्तः एकदेश इव सुरराज्यस्य, (१८०) ज्वलन्मखशिखिसहस्रदीप्यमानदशदिगन्तः शिविरसन्निवेश इव कृतयुगस्य, (१८१) पद्मासनस्थितब्रह्मर्षिध्यानाधीयमानसकलाकुशलप्रशमः प्रथमोऽवतार इव ब्रह्मलोकस्य, (१८२) कलकलमुखरमहावाहिनीशतसङ्कुलो विक्षेप इव उत्तरकुरूणाम्, (१८३) ईश्वरमार्गणसन्तापानभिज्ञसकलजनो विजिगीषुरिव त्रिपुरस्य,

---

कुङ्कुमानुलेपनेन इत्यर्थः, ("मेलन पटवासे ना कटसे तु नपुंसकम्" इति मेदिनी) पिञ्जरिताः,—पिङ्गलिताः, रञ्जिता इत्यर्थः, वह्वाः महिष्यः,—कृताभिषेकाः राजभार्याः, उत्तमा महिलाश्च, तासां सहस्रेण शोभितः,—अलङ्कृतः।

(१७९) मरुदिति।—मरुतः,—वायवः, देवाश्च, ("मरुतौ पवनामरौ" इत्यमरः) तैः उद्धूयमानाः —सञ्चाल्यमानाः, चमरीणां वालाः,—पुच्छलोमान्येव, व्यजनानि, तैः धवलिताः,—श्वेतीकृताः, प्रान्ताः,—पर्यन्तभागा यस्य तथोक्तः।

(१८०) ज्वलदिति।—ज्वलतां मखशिखिनाम्—यज्ञाग्नीनां, सहस्रैः दीप्यमानाः दशानां दिशामन्ता यस्य तथाभूतः। शिविरसन्निवेश इव—कटकबन्ध इव। कृतयुगस्य—सत्ययुगस्य।

(१८१) पद्मेति।—पद्मासनेषु स्थिताः ये ब्रह्मर्षयः, यद्वा,—पद्मम् एव आसनं पद्मासनं, तत्र स्थितौ ब्रह्मा एव ऋषिः, यद्वा,—ब्रह्मा च ऋषयश्च, तेषां ध्यानेन—समाधिना, आधीयमानः,—क्रियमाणः, सकलानां—समग्राणाम्, अकुशलानाम्—अमङ्गलानां, प्रशमः,—शान्तिः यस्मिन् तथाभूतः।

(१८२) कलकलेति।—कलकलैः,—शब्दविशेषैः, मुखराः,—नदन्त्यः, महत्यः वाहिन्यः,—नद्यः, सेनाश्च, तासां शतेन सङ्कुलः,—आकीर्णः, उत्तरकुरूणाम्—उत्तराः कुरवः,—मेरुसन्निहितदेशवासिनः तेषां, विक्षेप इव—"कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायेन विक्षिप्तोत्तरकुरुप्रदेश इवेत्यर्थः। ["विक्षेप इव" इत्यत्र "विपक्ष इव" इति पाठे,—प्रतिद्वन्द्वी इव, उत्तरकुरुप्रदेशानामिति भावः।

(१८३) ईश्वरेति।—ईश्वरस्य—हरस्य, राज्ञश्च, मार्गणैः,—शरैः, बहुधा कृतैनार्थप्रार्थनैश्च, यः सन्तापः,—क्लेशः, तस्य अनभिज्ञाः सकला जना यस्मिन् तथा-

(१८४) सुधारससिक्तधवलगृहपङ्क्तिपाण्डुरः प्रतिनिधिरिव चन्द्रलोकस्य, (१८५) मधुमत्त-मत्तकाशिनीभूषणरवभरितभुवनो नामाभिहार इव कुबेरनगरस्य स्थाण्वीश्वराख्यो जननिवेशः।

(१८६) यः तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः, सङ्गीतशालेति लासकैः, यमनगरमिति शत्रुभिः, (१८७) चिन्तामणिभूमिरिति अर्थिभिः, वीरक्षेत्रमिति शस्त्रोपजीविभिः, गुरुकुलमिति विद्यार्थिभिः, (१८८) गन्धर्व-नगरमिति गायनैः, विश्वकर्ममन्दिरमिति विज्ञानिभिः,

---

भूत। त्रिपुरस्य—तिसृणां पुरां समाहारः त्रिपुरं—मयदानवनिर्म्मितम् अन्तरीक्ष-स्थितं पुरत्रयमित्यर्थः तस्य। पुरा ईश्वरेण सम्मोगण त्रिपुरमस्त्रज्वालया दग्धमिति पुराणम्।

(१८४) सुधेति।—सुधारसैः,—लेपनद्रवैः, चूर्णद्रवैरित्यर्थः, अमृतैश्च, ("सुधा लेपोऽमृतं स्नुही" इत्यमरः) सिक्तानां—लिप्तानामित्यर्थः, धवलगृहाणां पङ्क्तिभिः,—राजिभिः, पाण्डुरः,—धवलः। प्रतिनिधिरिव—प्रतिकृतिरिव।

(१८५) मध्विति।—मधुना—मद्यपानेन, मत्ताः—हृष्टाः, याः मत्तकाशिन्यः—उत्तमाङ्गनाः युवतयश्च, तासां भूषणरवैः,—अलङ्कारनिनदैः, भरितम्—आपूरितं, भुवनं यत्र तथाभूतः। नामाभिहार इव—पर्य्यायान्तरमिव इत्यर्थः। स्थाण्वीश्व-राख्यः—स्थाण्वीश्वरस्य आख्या यत्र तथाभूतः, स्थाण्वीश्वर इति आख्या यस्य तथाभूत इति वा। ["जननिवेशः" इत्यत्र "जनपदविशेषः" इति पाठान्तरम्]।

(१८६) यः इत्यादि।—तपोवनं—निरन्तरधर्म्मानुशीलनादिति भावः। कामायतनं—विलासप्राचुर्य्यादिति भावः। सङ्गीतशाला—गान्धर्व्वविद्याऽनुशीलनाति-शय्यादिति भावः। लासकैः,—नटैः। यमनगरं—भयजनकत्वादिति भावः।

(१८७) चिन्तामणिभूमिः,—वाञ्छितार्थप्राप्तिक्षेत्रम्, अनवरतदानधर्म्मप्रचारात् इति भावः, ["भुवः कित्" (उ० ४ पा० ४५ सू०) इति मिप्रत्यये रूपम्]। वीर-क्षेत्रं—वीरोत्पत्तिभूमिरित्यर्थः, साहसिपुरुषभूयस्त्वात् इति भावः। गुरुकुलम्—आचार्य्यगृहं, सततविद्याऽनुशीलनात् इति भावः।

(१८८) गन्धर्व्वनगरं—सततसङ्गीतप्रचारादिति भावः। गायनैः,—गायकैः। विश्वकर्म्ममन्दिरं—शिल्पविद्याप्राचुर्य्यात् इति भावः।

( १८९ ) लाभभूमिरिति वैदेहकैः, द्यूतस्थानमिति भागार्थिभिः, साधुसमागम इति सद्भिः, ( १९० ) वज्रपञ्जरमिति शरणागतैः, विटगोष्ठीति विदग्धैः, सुकृतपरिणाम इति पथिकैः, ( १९१ ) असुरविवरमिति वातिकैः, शाक्याश्रम इति श्रमिभिः, ( १९२ ) अप्सरःपुरमिति कामिभिः, महोत्सवसमाज इति चारणैः, वसुधारेति विप्रैः अगृह्यत।

( १९३ ) यत्र च मातङ्गगामिन्यः शीलवत्यश्च, गौर्यो

---

( १८९ ) लाभभूमिः,—उपार्ज्जनस्थानं, बहुविधवस्तूनां व्यवहारात् इति भाव। वैदेहकैः,—वणिग्भि., ("वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्" इत्यमर )। द्यूतस्थान—द्यूत—देवनम्, अक्षक्रीडेति यावत्, तस्य स्थानम्। भागार्थिभि.,—भाग',—भाग्यं, तदर्थिभि',—तदभिलाषिभिः, अक्षदेवनेन सौभाग्यलिप्सुभिः इति यावत्। [ "भागार्थिभि" इत्यत्र "बन्दिभि" इति पाठं परिकल्प्य केचित् "द्यूतस्थानमिति साधुभागो दीयते तत्र बन्दिभ्यः" इति व्याचख्यु ]।

( १९० ) वज्रपञ्जर—वज्रनिर्म्मित पञ्जर, तत्र स्थितानां शत्रुदर्द्धर्षत्वादिति भाव.। विटगोष्ठी—विलासिसमाज'। विदग्धै,—विलासिभि'। सुकृतपरिणाम,—पुण्यपरिणतिः, सुखेन स्थानलाभादिति भाव.। पथिकैः,—पान्थै, [ "पथ. ष्कन्" ( ५।१।७५ पा० ) इति ष्कनि रूपम् ]।

( १९१ ) असुरविवर—पातालम्। वातिकैः,—वा रोगिभिः, भीमाकारयोद्धृपुरुषाणां सततसञ्चारादिति भाव', यद्वा,—वातिकै.,—खनिविद्याव्यसनिभिराचार्य्यै., विविधविचित्ररत्नानां सन्निवेशादिति भाव.। शाक्याश्रम,—बौद्धसन्न्यासिमठ.। श्रमिभिः,—शाक्यश्रमणकैः, बौद्धधर्म्माणामपि प्रचारादिति भाव.।

( १९२ ) अप्सरःपुरम्—अप्सरसां नगर, सुन्दरीबाहुल्यादिति भावः। चारणैः,—कुशीलवै.। ( "चारणास्तु कुशीलवाः" इत्यमरः )। चारणा हि उत्सवसदि राज्ञा गुणादिकं कीर्त्तयित्वा अभिलषितं प्राप्नुवन्ति। वसुधारा—धनप्रवाहः, दातृभ्यो बहुधनलाभादिति भाव.। सर्व्वत्रोक्तेषु उल्लेखालङ्कार'।

( १९३ ) यत्रेत्यादि।—मातङ्गगामिन्यः,—श्वपचगामिन्यः, चाण्डालगामिन्य' इति यावत्, ( "मातङ्ग श्वपचे गजे" इति मेदिनी ) अथ च शीलवत्यः,—सुचरित्रा.;

विभवरताश्च, (१८४) श्यामाः पद्मरागिण्यश्च, (१८५) धवलद्विज-शुचिवदनाः मदिरामोदिश्वसनाश्च, (१८६) चन्द्रकान्तवपुषः शिरीषकोमलाङ्ग्यश्च, (१८७) अभुजङ्गगम्याः कञ्चुकिन्यश्च,

या. चाण्डालानपि उपगच्छन्ति, ताः कथ शीलवत्यः भवन्ति ? इति विरोध., गज-गामिन्य इति तत्परिहार., एवम् उत्तरत्र। गौ :,—पार्वत्य.. अथ च विभवरता.—वि—विगत, भवे—हरे, रत—रागो यासा ताः, या गौरी, सा कथ भवादन्यत्र अनुरागिणी ? इति विरोध., गौ ,—गौराङ्ग्यः, विभवेषु—सम्पत्सु, रता इति परिहार ।

(१८४) श्यामा,—रजन्यः, अथ च पद्मरागिण्य,—पद्मेषु रागो विद्यते यासा ता, पद्मविकाशिन्य इति यावत्, रात्रौ पद्माना निमीलनात् तासा पद्मरागित्व न सम्भवति इति विरोध., श्यामा,—श्यामलाङ्ग्य, यद्वा,—"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतला। तप्तकाञ्चनवर्णाभा सा श्यामा परिकीर्तिता ॥" इत्युक्तलक्षणा नार्य्य, पद्मरागिण्य,—पद्मरागरत्नालङ्कृता इति परिहार ।

(१८५) धवलेति।—धवलानि—विशदानि, द्विजस्येव शुचीनि—पवित्राणि, वदनानि यासा ता, अथ च, मदिरेति।—मदिरया—सुरया, तत्पानेन इत्यर्थ, आमोदिन,—सौरभवन्त, श्वसना,—निश्वासमरुत यासा तथोक्ता, या हि पवित्रब्राह्मणवत् पवित्रवदना., तासा मद्यपाने कथ मुखस्य पवित्रता ? इति विरोध, धवले,—शुभ्रे, द्विज,—दन्तै, शुचीनि—उज्ज्वलानि, धवलानीत्यर्थ, वदनानि यासा ता इति परिहार, ("शुचिर्ग्रीष्माग्नि···।···धवले शुद्धे,नुपहते त्रिषु॥' इति मेदिनी )।

(१८६) चन्द्रकान्तेति।—चन्द्रकान्त,—मणिशिलाविशेष, तद्वत् वपु,—शरीर यासा ता, अथ च शिरीषकोमलाङ्ग्य.- शिरीषपुष्पवत् कोमल—सुकुमारम्, अङ्ग यासा ता, चन्द्रकान्तस्य प्रस्तरविशेषत्वेन काठिन्यात् या तद्वत् कठिनाङ्ग्य, ता कथ शिरीषकोमला ? इति विरोध, चन्द्रवत् कान्त—रमणीय, वपुर्यासामिति तत्परिहार ।

(१८७) अभुजङ्गेति।—अभुजङ्गगम्या.,—भुजङ्गै,—सर्पै., न गम्या, अथ च कञ्चुकिन्य,—भुजङ्ग्य, याः खलु भुजङ्ग्य., ता कथ भुजङ्गैरनभिगमनीया. ? इति विरोध., भुजङ्गै,—विटै, ("भुजङ्गौ विट-सर्पयो." इति हलायुध. ) न गम्या., कञ्चुकिन्य.,—कञ्चुक—स्तनावरणवस्त्रविशेष., तद्वत्य इति परिहार., ("कञ्चुका

( १९८ ) पृथुकलत्रश्रियः दरिद्रमध्यकलिताश्च, (१९९) लावण्यवत्यो मधुरभाषिण्यश्च, ( २०० ) अप्रमत्ताः प्रसन्नोज्ज्वलरागाश्च, ( २०१ ) अकौतुकाः प्रौढ़ाश्च प्रमदाः।

वारवाणे स्यान्निर्मोके कवचेऽपि च। ......चोलके॥" इति मेदिनी। चोलक,—"काँचुली" इति ख्यात. कुर्पासकापरपर्य्यायः स्त्रीणां स्तनावरणवस्त्रभेदः )।

( १९८) पृथ्विति।—पृथु,—आदिराजो वेणतनय, तस्य कलत्राणा—महिषीणा, [गडधातो. प्रनि "गडेरादेश्च क." ( उ० ३ पा० १०६ सू० ) इत्यादिः ककारादेशे रूपम् ] श्रिय. इव-सम्पद. इव, श्रियो यासा ता, अथ च दरिद्रमध्यकलिता.,—दरिद्राणा—निर्धनाना, मध्ये कलिता.,—सङ्ख्याता, गणिता इत्यर्थ, या खलु राजमहिष्य इव सम्पच्छालिन्य, ता. कथ दरिद्रमध्ये गणिता.? इति तदसम्भवाद्विरोधः, पृथ्वी—महती, कलत्रस्य—श्रोणे, जघनस्य इत्यर्थ., ("कलत्रं श्रोणि-भार्य्ययो." इत्यमर ) श्री,—शोभा यासा ता.; दरिद्र.,—क्षीण., मध्य.,—कटिदेश, तेन कलिता.,—शोभिता इति यावत्, इति परिहार.।

( १९९ ) लावण्यवत्य,—लवणरसशालिन्यः, अथ च मधुरभाषिण्यः,—मधुरा—स्वादी, इति भाषा—उक्तिः विद्यते यासा ता, या हि लवणरसबहुला. ता. मधुराः इत्युक्ति न सम्भाव्यते इति विरोधः, लावण्यवत्यः,—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तसौन्दर्य्यविशेषवत्य इत्यर्थ, मधुरभाषिण्य.,—मधुर—प्रिय, भाषितु शीलमासाम् इति तथाविधाः, प्रियवादिन्य इति परिहार., ( "स्वादु-प्रियौ तु मधुरौ" इत्यमर. )।

( २०० ) प्रसन्ना—सुराभेद, तया उज्ज्वल.,—शृङ्गाररसावेशयुक्ताः इति यावत्, ( "शृङ्गार शुचिरुज्ज्वल." इत्यमर. ) राग.,—अनुराग. मुखरागो वा यासा ता', अथ च अप्रमत्ता,—अक्षीबा., या मद्यपायिन्य., ता. कथमप्रमत्ता.? इति विरोध., अप्रमत्ता,—प्रमादशून्या., प्रसन्नः,—स्वच्छ., नेत्रतर्पण. इत्यर्थ., उज्ज्वल,—विशद, राग,—वर्णो यासा ता. इति परिहार., ("प्रसन्ना स्त्री सुरायां स्यात् स्वच्छ-सन्तुष्टयोस्त्रिषु" इति मेदिनी )।

( २०१ ) अकौतुका:,—कौतुकं—विवाहकालिकहस्तसूत्र, तद्रहिता, विवाहकालपरिहितस्य कौतुकस्य समनन्तरमेव मुक्तत्वादिति भाव, विवाहिताना हि करसूत्र बध्यते, अत्र तद्राहित्यात् अविवाहिता इति भावः, अथ च प्रौढा.,—पूर्णयौवना इत्यर्थ., या; हि पूर्णयौवना., ता; कथम् अविवाहिता.? इति विरोधः;

(२०२) यत्र च प्रमदानां चक्षुरेव सहज मुण्डमाल-मण्डनं, भारः कुवलयदलदामानि। (२०३) अलक-प्रतिबिम्बान्येव कपोलतलगतानि अक्लिष्टाः श्रवणावतंसाः, पुनरुक्तानि तमालकिशलयानि। (२०४) प्रियजनकथा एव सुभगाः कर्णालङ्काराः, आड़म्बरः कुण्डलादिः। कपोला एव सततम् आलोककारकाः, विभवो निशासु मणिप्रदीपाः। (२०५) निश्वासाकृष्टमधुकरकुलान्येव रमणीयं मुखावरणं, कुलस्त्रीजनाचारो जालिका। वाणी एव मधुरा वीणा, वाद्य-

कौतुकम्—अभिलाष, प्रियसमागमार्थम् औत्सुक्यमिति यावत्, कान्तदौर्लभ्यादिति भाव, तद्रहिता, स्वाधीनभर्तृकत्वादिति भाव, इति परिहारः। ("कौतुकन्त्वभिलापे···। विवाहसूत्रगीतादिभोगयोरपि न द्वयो" इति मेदिनी)।

(२०२) यत्रेत्यादि।—सहजम्—अकृत्रिमम्। मुण्डमालामण्डन—मुण्डमाला—नीलोत्पलमाला एव, मण्डन—भूषणम्। कुवलयदलदामानि—नीलोत्पलपत्र-मालिकाः, भार,—भारभूत, अनावश्यकवस्तुमात्रम् इत्यर्थः, चक्षुषामेव स्त्रीणां नीलोत्पलरूपत्वादिति भाव।

(२०३) अलकेति।—अलकाना—चूर्णकुन्तलाना, प्रतिबिम्बानि—छाया एव। अक्लिष्टाः,—हस्तावमर्षजनितक्लिष्टताशून्या इत्यर्थ, श्रवणावतसा,—श्रोत्रभूषणानि। तमालकिशलयानि—तदाख्यवृक्षविशेषस्य पल्लवानि, पुनरुक्तानि—अधिकानि, निरर्थ-कानि इति भाव.।

(२०४) प्रियजनकथा,—कान्तसम्बन्धालापा, ["प्रियजनकथाः" इत्यत्र "प्रियकथा." इति पाठेऽपि—अभिप्रायं एव] सुभगा,—रमणीया श्रुतिसुखा इत्यर्थ, आडम्बरः,—सरम्भ, आधिक्यम् इत्यर्थ, ("आडम्बरस्तूर्य्यप सरम्भे गजगर्ज्जि ' इति मेदिनी)। आलोककारका,—प्रकाशकाः, स्फटिकवत् स्वच्छत्वात् इति भाव.। विभव,—ऐश्वर्य्यं, सम्पदिति यावत्।

(२०५) निश्वासेति।—निश्वासेन—अतिसुरभिणा इति भावः, आकृष्टानाम्—आक्षिप्ताना, मधुकराणा—भ्रमराणा, कमलधिया आपततामिति भाव, कुलानि—सङ्घाः। मुखावरणं—वदनाच्छादनम्। जालिका—अवगुण्ठनवसनम्, ("······स्त्रियान्तु वसनान्तरे। भटानामङ्गरचिताङ्गरक्षिण्याञ्च जालिका" इति

विज्ञानं तन्त्रीताडनम्। हासा एव अतिशयसुरभयः (२०६) पटवासाः, निरर्थकाः कर्पूरपांशवः। (२०७) अधरकान्तिविसर एवोज्ज्वलतरोऽङ्गरागः, निर्गुणो लावण्यकलङ्कः कुङ्कुमपङ्कः। बाहव एव कोमलतमाः परिहासप्रहारवेत्रलताः, निष्प्रयोजनानि मृणालानि। (२०८) यौवनोष्मस्वेदबिन्दव एव विदग्धाः कुचालङ्कृतयः, हारास्तु भाराः। (२०९) श्रोण्य एव विशालस्फाटिकशिलातलचतुरस्रा रागिणां विश्रामकारणम्, अनिमित्तं भवनमणिवेदिकाः।

---

मेदिनी) तन्त्रीताडनं—तन्त्री—वीणागुण, तस्याः ताडनम्—आघातः, वीणावादनमित्यर्थः, बाह्यविज्ञानं—बाह्यं—बहिर्गत, विज्ञान—विशेषेण वादित्रवादनबोधः।

(२०६) पटवासाः,—सुगन्धचूर्णविशेषाः। निरर्थका,—निष्प्रयोजनाः। कर्पूरपांशवः,—कर्पूररजांसि।

(२०७) अधरकान्तिविसरः,—अधरस्य लावण्यविस्तारः। निर्गुण,—निष्फलः, लावण्यकलङ्कः,—लावण्यस्य मालिन्यापादक इत्यर्थः, कुङ्कुमपङ्क,—पिष्टकुङ्कुमद्रवः। कोमलतमा,—अतिकोमला.। परिहासेति।—परिहासे—क्रीडाकाले, यः प्रहार,—ताडन, तदर्थं वेत्रलता,—वेत्राणि, वेत्रयष्टय इत्यर्थ.।

(२०८) यौवनेति।—यौवनेन—तारुण्येन, य उष्मा—उत्तापः, तेन ये स्वेदबिन्दवः,—घर्मजलकणाः। विदग्धा,—मनोज्ञा.।

(२०९) श्रोण्यः,—नितम्बाः। विशालेति।—विशाल—बृहत्, यत् स्फाटिकशिलातल—स्फटिकमणिमयशिलापट्ट, (नितम्बानाम् अतिशुभ्रत्वात् श्लक्ष्णत्वात् विशालत्वाच्च तथात्व बोध्यम्) तद्वत् चतुरस्राः,—चतुष्कोणाः, रागिणा—विलासिना, विश्रामकारण—विश्रान्तिस्थान, नितम्बाना विशालत्वादिति भावः। [विश्राम इति त्वपाणिनीय, विपूर्व्वकस्य श्राम्यते. घञि "नोदात्तोपदेशस्य—" (७।३।३४ पा०) इत्युपधावृद्धिनिषेधात्, "विश्रामकारणम्" इत्यत्र "विश्रमकारणम्" इति पाठो मनोरमः। तत्त्वबोधिनीकारास्तु—"यदि तु 'धुर्य्यान् विश्रामय' इत्यादिवत्क्वचि वृद्धिमाश्रित्य णिजन्तादेरच् क्रियते, तदा रूप सिध्यति" इत्याहु.। "विश्रामशब्दस्त्वसाधुरेवोद्यमोपरमौ सञ्ज्ञापूर्व्वकौ विधिरनित्य इति वृद्ध्यभावात्" इति तु कैयट। "सूर्य्यविश्रामा भूमिरित्येवमादिक प्रयोगमसाध्यमेव मन्यन्ते" इति तु काशिका] अनिमित्तम्—अकारणम्।

(२१०) कमललोभनिलीनानि अलिकुलानि एव मुखराणि पदाभरणकानि, निष्फलानि इन्द्रनीलनूपुराणि। नूपुररवाहूता भवन हंसा एव समुचिताः सञ्चरणसहायाः, ऐश्वर्य्यप्रपञ्चाः परिजनाः।

(२११) तत्र च साक्षात् सहस्राक्ष इ— सर्ववर्णधरं धनुर्दधानः, मेरुमय इव कल्याणप्रकृतित्वे, (२१२) मन्दरमय इव लक्ष्मीसमाकर्षणे, जलनिधिमय इव मर्य्यादायाम्, आकाशमय इव (२१३) शब्दप्रादुर्भावे, (२१४) शशिमय इव कलासङ्ग्रहे, वेदमय इव अकृत्रिमालापत्वे, धर णिमय इव

(२१०) कमलेति।—कमललोभेन—पद्म कमलमिति धिया यो लोभः,—आसङ्गाभिलाषः, तेन निलीनानि—सलग्नानि। मुखराणि—निस्वनन्ति। इन्द्रनीलनूपुराणि—नीलकान्तमणिनिर्मितानि मञ्जीराणि। सञ्चरणसहायाः,—भ्रमणसङ्गिनः। ऐश्वर्य्यप्रपञ्चाः,—विभवविस्तारा, ऐश्व र्य प्रदर्शनार्थमिति भावः।

(२११) तत्रेति।—"तत्र" इत्यस्य "पुष्पभूतिरिति नाम्ना बभूव" इत्युत्तरेणान्वय। सर्वेति।—सर्वे वर्णाः,—ब्राह्मणादय, शुक्लादयश्च, तान् धरति—धारयति पालयति वा इति तथोक्तं, धनुः,—कार्मुक, दधानः,—धारयन्, शक्रधनु. विविधवर्णरञ्जित दृश्यते इति शाब्दी उत्प्रेक्षा। कल्याणप्रकृ तत्वे—कल्य —मङ्गलं, हेम च, सुवर्णञ्चेत्यर्थः, ("कल्याण हेम्नि मङ्गले" इति हैम.) प्रकृतिः यस्य तथात्वे।

(२१२) मन्दरमयः,—तदा पर्व्वतात्मक। क्षीरोदमन्थने मन्दराचलस्य मन्थनदण्डरूपतया तेनैव तत्र स्थिताया लक्ष्म्याः समुद्धारणम्; अस्यापि शत्रुराजलक्ष्मीसमाकर्षकत्वमिति भावः। मर्य्यादाया—स्थितौ, सदाचारत्व इत्यर्थ, सीमायाञ्च, सीमाऽनतिक्रमणे इत्यर्थः, ("मर्य्यादा सीमनि स्थितौ" इति मेदिनी); जलनिधि यथा वेलारूपसीमालङ्घन न करोति, तथा अयमपि अविचलितसदाचार इति भावः।

(२१३) शब्दप्रादुर्भावे—शब्दानां—यशोविनयादिरूपाणां, ध्वनीनाञ्च, प्रादुर्भावः,—प्रकाशन तस्मिन्, आकाशात् यथा शब्दाना प्रादुर्भावः, "शब्दगुणमाकाशम्" इति श्रुतेः, तथा अस्मात् यशोविनयादीनां समुद्भूतिः इति भावः।

(२१४) शशिमय,—चन्द्रमयः। कलासङ्ग्रहे—कलाः,—चतुःषष्टिप्रकारा विद्या, षोडशभागाश्च, तासा सङ्ग्रह. तस्मिन्। अकृत्रिमालापत्वे—अकृत्रिम,—अकपटः,

(२१५) लोकधृतिकरणे, पवनमय इव (२१६) सर्वपार्थिवरजोविकारहरणे, गुरुर्वचसि, (२१७) पृथुः उरसि, विशालो मनसि, जनकः तपसि, (२१८) सुयात्रः तेजसि, सुमन्त्रो रहसि, (२१९) बुधः सदसि, अर्जुनो यशसि, भीष्मो धनुषि, निषधो वपुषि, शत्रुघ्नः समरे, (२२०) शूरः शूरसेनाऽऽक्रमणे,

---

सत्यमित्यर्थः, अपौरुषेयश्च, आलापः,—वचनं यस्य तथाले; वेदवाक्यमिव अस्य वाक्यं सत्यमिति भावः।

(२१५) लोकधृतिकरणे—लोकानां—प्रजानां, जगताञ्च, धृतिः,—धैर्य्यं, धारणञ्च, तस्याः करणं—सम्पादनं तस्मिन्।

(२१६) सर्वेति।—सर्वेषां पार्थिवानां—राज्ञां, रजोविकारस्य—रजोगुणजन्यविकृतेः, दम्भाहङ्कारादेः इत्यर्थः, अन्यत्र,—पार्थिवानां—पृथिवीसम्बन्धिनां, रजसां—धूलीनां, विकारस्य हरणे—अपनयने। वचसि गुरुः,—महान्, अतिसुवक्ता इति भावः, वृहस्पतिश्च।

(२१७) उरसि—वक्षसि, पृथुः,—विशालः, आदिराजविशेषश्च। मनसि विशालः,—विस्तीर्णः, उदारमना इत्यर्थः, तदाख्यो राजा च, यद्वा,—विशालो नाम बोधिसत्त्वः, स इव शान्तमनाः। जनकः,—उत्पादकः, तदाख्यो राजा च; यथा राजा जनकस्तपसि निरतः, तथाऽयम् इति भावः।

(२१८) सुयात्रः,—सु—शोभना, यात्रा—युद्धार्थप्रयाणं यस्य तथोक्तः, तदाख्यो नृपश्च। सुमन्त्रः,—सु—शोभनः, मन्त्रः,—कर्त्तव्यावधारणवचनं यस्य तथोक्तः, तदाख्यो दशरथमन्त्री च। रहसि—निर्जने।

(२१९) बुधः,—पण्डितः, चतुर्थग्रहश्च। सदसि—सभायाम्। अर्ज्जुनः,—धवलः, कार्त्तवीर्य्यः, यद्वा,—पार्थश्च। भीष्मः,—भयङ्करः, शान्तनवश्च। [ "भीमादयोऽपादाने" (३।४।७४ पा०) इति विहितेः मक्षि सुगागमे रूपम्] धनुषि—धनुर्वेदे इत्यर्थः। निषधः,—कठिनः, तदाख्यदेशविशेषस्य राजा च, नल इत्यर्थः तदाख्यः पर्वतो वा, नल इव रूपवान्, पर्वत इव स्थिरशरीरो वा इति भावः, ("निषधः कठिने देशे तद्राज्ञि पर्वतान्तरे" इति मेदिनी)। शत्रुघ्नः,—शत्रुघाती, रामानुजश्च।

(२२०) शूरः,—वीरः, यदुवंशीयराजविशेषश्च। शूरेति।—शूराणां—शौर्य्यशालिनीनां, सेनानां—वाहिनीनां, शूरसेनस्य—देशविशेषस्य च, आक्रमणे तस्मिन्।

दक्षः प्रजाकर्म्मणि, स दिराजतेजःपुञ्जनिर्म्मित इव राजा पुष्पभूतिरिति नाम्ना बभूव।

(२२१) पृथुना गौरियं कृतेति यः स्पर्द्धमान इव महीं महिषीं चकार। (२२२) निसर्गस्वैरिणी स्वरुच्यनुरोधिनी च भवति हि महतां मतिः; यतः तस्य केनचित् अनुपदिष्टा सहजैव शैशवादारभ्य अन्यदेवताविमुखी भगवति, भक्तिसुलभे, भुवनभृति, भूतभावने, भवच्छिदि भवे भूयसी भक्तिः अभूत्। अकृतवृषभध्वजपूजाविधिः न स्वप्नेऽपि आहारम् अकरोत्। अजम्, अजरम्, अमरगुरुम्, असुरपुररिपुम्, अपरिमितगणपतिम्, अचलदुहितृपतिम्, अखिलभुवनकृतचरणनतिं पशुपतिं प्रपन्नोऽन्यदेवताशून्यम् अमन्यत त्रैलोक्यम्। भर्त्तृ-

---

दक्ष,—निपुणः, प्रजापतिभेदश्च। प्रजाकर्म्मणि—प्रजापालने, प्रजोत्पादनव्यापारे च।

(२२१) पृथुनेत्यादि।—इय—मही, गौः—गोरूपधरा इत्यर्थः, कृतेति स्पर्द्धमान इव—त जिगीषन् इव इत्यर्थ., महिषी—"कृताभिषेका महिषी" इति अमरोक्ता राज्ञ प्रधानपत्नी ता, महिषस्त्रीरूपाञ्च।

(२२२) निसर्गस्वैरिणी—स्वभावत स्वेच्छाचारिणी। स्वरुच्यनुरोधिनी—स्वाभिमतानुवर्त्तिनी। अनुपदिष्टा—अशिक्षिता। सहजा—स्वाभाविकीत्यर्थ। भुवनभृति—भुवनानि—जगन्ति, बिभर्त्ति—धारयति पालयति, इत्यर्थ तस्मिन्, त्रिभुवनरक्षितरि इत्यर्थ। भूतभावने—भूतान्—प्राणिनः, भावयति—हृदिस्थितत्वेन विषयेषु प्रवर्त्तयति, यद्वा,—भावयति—चिन्तयति, शुभाशुभमिति भाव. यः तस्मिन्। भवच्छिदि—ससारविध्वंसिनि। भवे—हरे। अज—जन्मरहितम्। अजर—जराशून्यम्। अमरगुरु—देवदेवम्। असुरपुररिपु—त्रिपुरारिम्। अपरिमितगणपतिम्—अपरिमितानाम्—असङ्ख्याना, गणाना—प्रमथाना, पतिः,—प्रभु तम्। अचलेति।—अचलस्य—नगस्य, हिमवत इत्यर्थ, दुहितुः,—तनयायाः, पार्वत्या इत्यर्थः, पतिः,—स्वामी तम्। अखिलेति।—अखिलैः,—समग्रैः, भुवनैः,—त्रैलोक्यवर्त्तिभिरित्यर्थः, कृता चरणयोः नतिः,—प्रणामः यस्य तम्। पशुपतिं—पशूना—सर्वत्र अविशेषेण पश्यन्ति ये ते पशवः,—देवाः, सर्वत्र समदर्शिनः इति

चित्तानुवर्त्तिन्यश्च अनुजीविनां प्रकृतयः। तथा हि,—गृहे गृहे भगवान् अपूज्यत खण्डपरशुः। (२२३) ववुः अस्य होमानलज्वालाविलीयमानबहलगुग्गुलुगन्धगर्भाः स्नपनक्षीरशीकरक्षोदक्षारिणः (२२४) विल्वपल्लवदामदलोद्वाहिनः पुण्यालयेषु वायवः। (२२५) शिवसपर्य्यासमुचितैः उपायनैः प्राभृतकैश्च पौराः, पादोपजीविनः सचिवाः, भुजबलं जिताश्च करदीकृता महासामन्ताः तं सिषेविरे। तथा हि,—

---

भाव', ("पशुर्मृगादिदेवाजे नाऽव्यय पशु दर्शने" इति मेदिनी) तेषा पतिः तं, हरमित्यर्थः। प्रपन्न',—आश्रित'। खण्डपरशु,—शिव'। ("शम्भुरीशः पशुपतिः शिव शूली महेश्वरः। ····· भूतेश' खण्डपरश' ·····॥" इत्यमर)।

(२२३) ववु,—वहन्ति स्म। होमेति।—हे ानलज्वालाया—होमकुण्डाग्निशिखाया, ["हे मानलज्वाला—" इत्यत्र "होमालबाल—" इति पाठे,—होमार्थम् आलबालम्—आलबालाकृतिकुण्डमित्यर्थ तस्मिन्] विलीयमानाना—द्रवता. वहलाना—वहना, गुग्गुलूना गन्धो गर्भे—मध्ये येषा तथाभूताः, होमार्थ प्रज्वलदग्नौ विक्षिप्यमाणाना नानाविधाना गन्धद्रव्याणा सौरभोद्वासिता इत्यर्थ ; एतेन वायौ सौगन्ध्यं वर्णितम्। स्नपनेति।—स्नपनं—स्नानोपकरणं, यत् क्षीर—दुग्ध तस्य शीकरक्षोदान्—कणचूर्णानि, यद्वा,—शीकराः,—बिन्दव एव, क्षोदा',—चूर्णसदृशा इति यावत, तान् क्षरन्तीति तथोक्ता' ; एतेन वायौ शैत्यं वर्णितम्।

(२२४) विल्वेति।—विल्वपल्लवाना—विल्वपत्राणामित्यर्थ दामानि—माल्यानि, तेषां दलानि—निचयान्, उद्वहन्तीति तथाविधाः, एतेन वायौ मान्द्य दर्शितम्। पुण्यालयेषु—पुण्यस्थानेषु, पूजास्थानेषु इति यावत्। ["पुण्यालयेषु" इत्यत्र "पुण्यविषयेषु" इति पाठे,—पवित्रजनपदेषु इत्यर्थः, "विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी]।

(२२५) शिवेति।—शिवस्य सपर्य्या—पूजा, ("पूजा नमस्याऽपचितिः सपर्य्या ·····" इत्यमरः) तत्समुचितानि—तदुपयोगीनि इत्यर्थ तैः, उपायनै',—उपढौकनै', यानि स्वयमानीयन्ते प्रभुप्रीतिकराणि द्रव्याणि तै इत्यर्थ। प्राभृतकै,—सुहृत्प्रेषितैर्द्रव्यै' इत्यर्थः। ["प्राभृतकै" इत्यत्र "प्राभृतै" इति पाठेऽपि अभिन्नार्थ एव]। करदीकृताः,—करप्रदानार्थम् अधीनीकृता। महासामन्ता,—श्रेष्ठनृपतयः।

(२२६) कैलासकूटधवलैः (२२७) कनकपत्रलताऽलङ्कृत-विषाणकोटिभिः (२२८) महाप्रमाणैः सन्ध्यावलिवृषैः, सौवर्णैश्च स्नपनकलसैः, अर्घ्यभाजनैश्च, धूपपात्रैश्च, पुष्पपटैश्च, (२२९) मणियष्टिप्रदीपैश्च, ब्रह्मसूत्रैश्च, महाऽर्हमाणिक्यखण्ड-खचितैश्च मुखकोषैः परितोषम् अस्य मनसि चक्रुः। (२३०) अन्तःपुराणि अपि स्वयम् आरब्धवालेयतण्डलकण्ड-नानि, (२३१) देवगृहोपलेपनलोहिततरकरकिसलयानि, (२३२) कुसुमग्रथनव्यग्रसमस्तपरिजनानि तस्य अभि॰षितम् अन्ववर्त्तन्त।

---

(२२६) कैलासेति।—कैलासस्य—रजतगिरेः, [ केलीना समूहः इति "तस्य समूहः" (४।२।३७ पा०) इति अणि कैलं, तेनास्यतेऽत्र इत्यासधातो "अकर्त्तरि च—" (३।३।१९ पा०) इति घञि रूपम् ] कूटानि—शृङ्गाणि, तद्वत् धवलाः तैः।

(२२७) कनकेति।—कनकपत्रलताभिः,—स्वर्णनिर्मितपत्रभङ्गैः, अलङ्कृताः विषाणकोटयः,—शृङ्गाग्राणि येषां ते।

(२२८) महाप्रमाणैः,—बृहदाकारैः, सन्ध्यावलिवृषैः,—सन्ध्याकालिकपूजार्थ-वृषभैः। सौवर्णैः,—काञ्चननिर्मितैः, स्नपनकलसैः,—स्नानसाधनकुम्भैः। अर्घ्य-भाजनैः,—अर्घ्यपात्रैः। पुष्पपटैः,—येषु वसनेषु सूत्रैः पुष्पाणामाकृतयो विरच्यन्ते ते पुष्पपटाः तैः। [ "पुष्पपटैः" इत्यत्र "पुष्पपट्टैः" इति पाठोऽपि अविशेष एव ]।

(२२९) मणियष्टिप्रदीपाः,—ज्वलन्मणिशिखाः सौवर्णयष्टयः तैः। ब्रह्मसूत्रैः,—यज्ञोप-वीतैः। महाऽर्हेति।—महाऽर्हेण—महामूल्येन, माणिक्यखण्डेन—रत्नशकलेन, खचितैः,—निबद्धैः, मुखकोषैः,—मुखयुक्ताः कोषाः तैः, शिवलिङ्गाच्छादनैः। अस्य—पुष्पभूतेः।

(२३०) अन्तःपुराणि—अवरोधवर्गाः। आरब्धेति।—आरब्धानि वालेयानि—बलिः,—पूजा तस्मै हितानि, [ "छदिरुपधिबलेर्ढञ्" (५।१।१३ पा०) इति ढञि रूपम् ] तण्डुलानां कण्डनानि—शोधनविशेषाः यैः तथाभूतानि; यद्वा,—वालेयानां तण्डुलानां कण्डनानि यैः तथाभूतानि।

(२३१) देवेति।—देवगृहस्य—शिवमन्दिरस्य, उपलेपनेन—गोमयादिना मार्जनेन, लोहिततराः,—अतिलोहिताः, करकिसलयाः येषां तथोक्तानि।

(२३२) कुसुमेति।—कुसुमानां ग्रथने—गुम्फने, अत्र ग्रथनशब्दप्रयोगश्चिन्त्यः;

तथा च.—(२३३) परममाहेश्वरः स भूपालो लोकतः शुश्राव; भुवि भगवन्तम् अपरमिव साक्षात् दक्षमखमथनं दाक्षिणात्यं बहुविधविद्याप्रभावप्रख्यातैः गुणैः शिष्यैरिव अनेकसहस्रसङ्ख्यैः व्याप्तमर्त्यलोकं भैरवाचार्य्यनामानं महाशैवम्। (२३४) उपनयन्ति हि हृदयम् अदृष्टमपि जनं शीलसंवादाः; यतः स राजा श्रवणसमकालमेव तस्मिन् भैरवाचार्य्ये भगवति द्वितीय इव कपर्दिनि दूरगतेऽपि गरीयसीं बबन्ध भक्तिम्, आचकाङ्क्ष च मनोरथैरपि अस्य सर्व्वदा दर्शनम्।

(२३५) अथ कदाचित् पर्य्यस्ते अस्ताचलचुम्बिनि वासरे अन्तःपुरवर्त्तिनं राजानम् उपसृत्य प्रतीहारी विज्ञापितवती,—"देव! द्वारि परिव्राट आस्ते, कथयति च भैरवाचार्य्यवचनात् देवम् अनुप्राप्तोऽस्मि" इति। राजा तु तत् श्रुत्वा सादरं—"क्व असौ? आनय अत्रैव, प्रवेशय एनम्" इति च अब्रवीत्। तथा च अकरोत् प्रतीहारी। (२३६) न चिरात् च प्रविशन्तं, प्रांशुम्, आजानुलम्बभुजं, भैक्ष्यक्षाममपि स्थूलास्थिभिः अवयवैः पीवान-

---

ग्रन्थनशब्दस्यैव युक्तत्वात्; व्यग्राः,—आसक्ताः, समस्ताः परिजनाः,—परिवारा येषां तानि। अन्ववर्त्तन्त—अन्वसरन्। "अभिलषितमन्ववर्त्तन्त" इत्यनेन अन्तःपुरिकाणामस्य चित्तानुवर्त्तनं प्रदर्शितम्।

(२३३) परममाहेश्वरः,—महेश्वरस्य परमभक्त इत्यर्थः। भुवि—वसुधायाम्, एतेनास्य पृथिवीस्थलेऽपि दुर्लभदर्शनत्वमुक्तम्। दक्षमखमथनं—दक्षप्रजापतेः यज्ञनिध्वंसिनमित्यर्थः। दाक्षिणात्यं—दक्षिणदेशभवम्।

(२३४) उपनयन्ति—उपस्थापयन्ति। शीलसंवादाः,—चारित्रसादृश्यानि, चरित्रालोचनं वा। कपर्दिनि—शिवे। गरीयसी—गुरुतराम्। मनोरथैरपि, किं पुनश्चक्षुषा इति भावः। ["सर्व्वदा" इत्यत्र "सर्व्वथा" इति पाठान्तरम्]।

(२३५) अथेत्यादि।—पर्य्यस्ते—अवसिते। वासरे—दिवसे, दिवसमाप्ते इति भावः। परिव्राट्—संन्यासी। अनुप्राप्तः,—समागत इत्यर्थः।

(२३६) "न चिरात्" इत्यस्य "मस्करिणमद्राक्षीत्" इत्युत्तरेण सम्बन्धः।

मिव उपलक्ष्यमाणं, पृथुतमोत्तमाङ्गम्, (२३७) उत्तुङ्गवलि-भङ्गस्थपुटललाटं, (२३८) निर्मांसगण्डकूपं, (२३९) मधु-विन्दुपिङ्गलपरिमण्डलाक्षम्, (२४०) ईषदावक्रघोणम्, (२४१) अतिप्रलम्बैककर्णपाशम्, (२४२) अलाबूवीज-

प्रांशुम्—उन्नतकायमित्यर्थः। आजानुलम्बभुजम्—आजानु—ऊरुपर्वपर्यन्तं, लम्बौ—लम्बायमानौ, भुजौ—बाहू यस्य तं, [“जानूरुपर्वाऽष्ठीवदस्त्रियाम्” इत्यमरः। “आजानुलम्बभुजम्” इत्यत्र “आजानुभुजम्” इति पाठान्तरम्]। भैक्षक्षाम—भिक्षा एव भैक्ष, तेन क्षाम—क्षीणम्। पीवानमिव—स्थूलम् इव। [“प्याय्यो: सम्प्रसारणञ्च” (उ० ४ पा० ११४ सू०) इति प्यैधातोः क्वनिपि सम्प्रसारणे रूपम्। “पीवानम्” इत्यत्र “पीवरम्” इति पाठेऽपि स एवार्थः। “पीन-पीव्नी तु स्थूल-पीवरे” इत्यमर]। पृथुतमोत्तमाङ्ग—बृहन्मस्तकम्। [“पृथुतमोत्तमाङ्गम्” इत्यत्र “पृथूत्तमाङ्गम्” इति पाठेऽपि स एवार्थः]।

(२३७) उत्तुङ्गेति।—उत्तुङ्गा—दीर्घा, बलिभङ्गा यत्र तादृशं, स्थपुटं—निम्नोन्नत, ललाटं—भालदेशः यस्य तथोक्तम्।

(२३८) निर्मांसेति।—निर्मांसौ—मांसशून्यौ, अस्थिमयावित्यर्थः: गण्डौ—कपोलौ, कूपाविव यस्य तथोक्तम्। [“निर्मांसगण्डकूपम्” इत्यत्र “निर्मांसगण्डकूपकम्” इति पाठेऽपि स एवार्थः। कूप एवेति कूपकम्]।

(२३९) मध्विति।—मधुबिन्दुवत् पिङ्गलं परिमण्डलं—गोलकं ययोः तथाभूते, अक्षिणी—नेत्रे यस्य त, रक्तपिङ्गलाक्षमित्यर्थः। ["बहुव्रीहौ—" (५।४।११३ पा०) इत्यादिना षचि रूपसिद्धिः]।

(२४०) ईषदिति।—ईषत् आवक्रा घोणा—नासिका यस्य तम्। (“घोणा नासा च नासिका” इत्यमरः)।

(२४१) अतीति।—अति—अतिशयेन, प्रलम्बः,—लम्बमानः, एकः कर्णपाशः,—कुत्सितकर्ण इत्यर्थः यस्य तथोक्तम्, अतिशयेन लम्बमानत्वादशोभनदर्शन इति भावः। “पाशः केशादिपूर्वः स्यात् तत्सङ्घे कर्णपूर्वकः। सुकर्णे च……॥” इति मेदिनीवचनमनुसृत्य “कर्णपाशः शोभनकर्णः” इति केषाञ्चिद्व्याख्यान न मनोरम, अतिलम्बमानस्यैकस्यैव कर्णस्य शोभनदर्शनत्वासम्भवात्।

(२४२) अलाब्विति।—अलाबूबीजवत्—तुम्बीबीज इ, (“तुम्ब्यलाबूरुभे

विकटोन्नतदन्तपङ्क्तिं, (२४३) तुरगानूकश्लथाधरलेखं, (२४४) लम्बचिबुकायततरलपनम्, (२४५) अंसावलम्बिना काषायेण योगपट्टकेन विरचितवैकक्षकं, (२४६) हृदयमध्य-निबद्धग्रन्थिना च रागिणेव खण्डशः कृतेन धातुरसारुणेन कर्प-टेन कृतोत्तरासङ्गं, (२४७) पुनरुक्तबालप्रग्रहवेष्टननिश्चलमूलेन (२४८) बद्धमृत्परिशोधनवंशत्वकृततितउना (२४९) कौपीन-

समे' इत्यमरः) विकटा—कराला, उन्नता च, दन्तपङ्क्तिः,—दशनावली यस्य तम्।

(२४३) तुरगेति।—तुरगानूका—अश्वानुकारिणी इत्यर्थः, श्लथा—शिथिला लम्बमाना इत्यर्थः, अधरलेखा यस्य तम्।

(२४४) लम्बेति।—लम्बेन चिबुकेन—अधराधोभागेन, आयततरम्; यद्वा,—लम्बं चिबुकं यस्य तथाभूतम्, आयततरम्—अतिदीर्घं, लपनं—मुखं यस्य तथोक्तम्।

(२४५) अंसावलम्बिना—स्कन्धविलम्बिना, काषायेण—कषायरञ्जितेन, योग-पट्टकेन—उपनीतकाकाण्ड योगसाधनेन पट्टवसनखण्डेन इत्यर्थः, विरचित वैकक्षकं—तिर्य्यक् वक्षोलम्बी हारविशेषो येन तम्। ("...वैकक्षकन्तु तत्। यत् तिर्य्यक् क्षिप्त-मुरसि..." इत्यमरः)।

(२४६) हृदयेति।—हृदयस्य—उरसः, मध्ये निबद्धः,—रचितः, ग्रन्थिः,—बन्धनविशेषः यस्य तथोक्तेन। रागिणेव—विषयानुरागिणेव। धातुरसारुणेन—गैरिकरक्तेन इत्यर्थः, कर्पटेन—नक्तकेन, छिन्नवस्त्रेणेत्यर्थः, ("समौ नक्तक-कर्पटौ" इत्यमरः) कृतोत्तरासङ्गं—कृतः,—विहितः, धृत इत्यर्थः, उत्तरासङ्गः,—उत्तरीयं येन तथोक्तम्।

(२४७) पुनरुक्तेति।—पुनरुक्तेन—पुनः पुनः आवर्त्तितेन इत्यर्थः, बालेन—नूतनेन, अश्ववालघटितेन वा इत्यर्थः, प्रग्रहेण—रज्ज्वा, यद्वेष्टनं, तेन निश्चलं—स्थिरं, मूलं यस्य तेन।

(२४८) बद्धेति।—बद्धः,—रचितः इत्यर्थः, मृदां—मृत्तिकानां, शिवलिङ्गादि-निर्म्माणसाधनानाम् इति भावः, परिशोधनाय—परिमार्ज्जनाय, वंशत्वचा—वेणु-वल्कलेन, कृतः इति शेषः, तितउः,—चालनी यत्र तेन, ("चालनी तितउः पुमान्" इत्यमरः)।

(२४९) कौपीनेति।—कौपीनेन—चीरवस्त्रेण, गुह्यप्रदेशावरणेनेत्यर्थः,

सनाथशिखरेण (२५०) खर्जूरपुटसमुद्गकगर्भीकृतभिक्षा-कपालकेन (२५१) दारवफलकत्रयत्रिकोणत्रियष्टिनिविष्ट-कमण्डलुना (२५२) वहिरुपपादितपादुकाऽवस्थानेन (२५३) स्थूलदशासूत्रनियन्त्रितपुस्तिकापूलकेन (२५४) वाम-करधृतेन योगभारकेण अध्यासितस्कन्धम्, (२५५) इतरकर-गृहीतवेत्रासनं मस्करिणम् अद्राक्षीत्।

("कौपीनं स्यादकार्य्येऽपि चीर-गुह्यप्रदेशयोः" इति मेदिनी) सनाथं—युक्तं, शिखरम् —अग्रभागः यस्य तेन।

(२५०) खर्जूरेति।—खर्जूरस्य—वृक्षभेदस्य, पुटैः,—श्लिष्टैः पत्रैरित्यर्थः, रचितः इति भावः, समुद्गकः,—सम्पुटकः, पात्रविशेष इत्यर्थः, ("समुद्गकः सम्पुटकः" इत्यमरः) तस्य गर्भीकृतं—गर्भे स्थापितम् इत्यर्थः, भिक्षाकपालकं—भिक्षा-पात्रमित्यर्थः यस्य तथोक्तेन।

(२५१) दारवेति।—दारुण इदं दारवं—काष्ठसम्बन्धीत्यर्थः, यत् फलकत्रयं —पट्टकत्रयं, तस्मिन् ये त्रयः कोणाः,—कोणत्रयं, तेषु याः तिस्रो यष्टयः,—दण्डाः, तासु निविष्टः कमण्डलुर्यस्य तेन।

(२५२) वहिरिति।—वहिः,—वाह्यदेशे, उपपादितं—सम्पादितं, पादु-कयोः,—उपानहोः, अवस्थानं—स्थापनमित्यर्थः यस्य तेन।

(२५३) स्थूलेति।—स्थूलैः,—दृढैः, पीवरैर्वा, दशासूत्रैः,—वसनाञ्चल-तन्तुभिः, नियन्त्रितं—निबद्धं, पुस्तिकापूलकं—क्षुद्रपुस्तकसमूहः यत्र तेन। ["पुस्तिका-पूलकेन" इत्यत्र "पुस्तिकापूलिकेन" इति पाठेऽपि स एवार्थः]।

(२५४) वामकरधृतेन—वामहस्तगृहीतेन, योगभारकेण—योगसाधनद्रव्यसञ्चय-स्थल्या, मात्राभारिकया वा; अध्यासितः,—सन्निवेशितः,स्कन्धः,—अंसः यस्य तम्।

(२५५) इतरेति।—इतरेण—दक्षिणेनेत्यर्थः, करेण गृहीतं वेत्रासनं येन तम्; स्थाने स्थाने विश्रामार्थम् इति भावः। मस्करिणं—परिव्राजकम्। ["भिक्षुः परिव्राट कर्म्मन्दी पाराशर्य्यपि मस्करी" इत्यमरः। "मस्कर-मस्करिणौ—" (६।१।१५४ पा०) इति मकरशब्दस्य सुड़िनौ निपात्येते इति दीक्षितः। "मस्करिग्रहणं शक्यमकर्त्तुम् इति मत्वर्थीयेन इनिना एतत सिद्धम्"; "अयं मा कृत अयं मा कृत, इत्यपक्रम्य शान्तितः काम्यकर्म्मपरिहाणिर्युष्माकं श्रेयसीत्यपदेष्टा मस्करीत्युच्यते" इति भाष्य-कैयटयोर्विरोधे, मस्करी ज्ञानमस्यास्तीति, मा कर्त्तुं शीलमस्य इति वा विग्रहः]

क्षितिपतिरपि (२५६) उपगतम् उचितेन च एनम् आदरेण अन्वग्रहीत्; आसीनञ्च पप्रच्छ,—"क्व भैरवाचार्य्यः?" इति। सादरनरपतिवचनमुदितमनास्तु परिव्राट् तम् (२५७) उपनगरं सरस्वतीतटवनावलम्बिनि शून्यायतने स्थितम् आचचक्षे। भूयश्च आवभाषे,—"अर्च्चयति हि (२५८) महाभागं भगवान् आशीर्वचसा" इत्युक्त्वा च उपनिन्ये योगभारकात् आकृष्य भैरवाचार्य्यप्रहितानि रत्नवन्ति बहलालोकलिप्तान्तःपुराणि पञ्च राजतानि पुण्डरीकाणि।

(२५९) नरपतिस्तु प्रियजनप्रणयभङ्गकातरो दाक्षिण्यम् अनुरुध्यमानो ग्रहणलाघवञ्च लङ्घयितुम् असमर्थो दोलायमानेन मनसा स्थित्वा कथंकथमपि अतिसौजन्यनिघ्नः तानि जग्राह; जगाद च,—"सर्वफलप्रसवहेतुः शिवभक्तिरियं नः,

(२५६) उपगतम्—उपस्थितम्। उचितेन—अनुरूपेण। एनं—मस्करिणम्। तं—भैरवाचा र्यम्।

(२५७) उपनगरं—नगरसमीपे। सरस्वतीति।—सरस्वत्याः,—तदाख्यायाः नद्याः, तटे—तीरदेशे, यत् वनं, तदवलम्बते इति तथोक्ते, सरस्वतीतीरस्थवनमध्ये इति भावः। शून्यायतने—शून्यदेवालये इत्यर्थः।

(२५८) महाभागं—भाग्यवन्तं, महाप्रभावं वा। उपनिन्ये—अर्पितवान्। बहलेति।—बहलेन—प्रभूतेन, आलोकेन,—उद्योतेन, लिप्तम्—उद्भासितम्, अन्तःपुरं—गुह्यान्तं यैः येषां वा तानि, रत्नवन्ति—मणिखचितानि, राजतानि—रौप्यमयाणि, पुण्डरीकाणि—पद्मानि।

(२५९) नरपतिरित्यादि। प्रियेति।—प्रियजनस्य—प्रीतिभाजनस्य, भैरवाचार्य्यस्येत्यर्थः, प्रणयभङ्गः,—अग्रहणे प्रार्थनाभङ्गः. तेन कातरः,—कथं तादृशस्य प्रणयभङ्गं करोमि? इति व्याकुल इत्यर्थः। दाक्षिण्यम्—औदार्य्यम्, अनुरुध्यमानः,—अनुसरन्, ग्रहणलाघवं—ग्रहणे लाघवं—लघुताम्; दत्तवस्तुग्रहणं स्वयं वलात् निघृक्षूणां शूराणां लज्जाकरत्वादिति भावः, लङ्घयितुम्—अतिक्रमितुं, स्वीकर्तुमिति भावः। दोलायमानेन—किंकर्त्तव्यविमूढतया गृह्णामि न वेति संशयितेनेत्यर्थः। कथंकथमपि—अतिक्लेशेनेत्यर्थः। अतिसौजन्यनिघ्नः,—अतिसौजन्यवशंवदः। नः,—

यया अनोरथदुर्लभानि फलन्ति फलानि, यया च अस्मासु प्रीयते भगवान् भुवनगुरुर्भैरवाचार्य्यः। श्वो द्रष्टास्मि भगवन्तम्” इत्युक्त्वा च सत्कारिणं व्यसर्जयत्; अनया च वार्त्तया परां मुदम् अवाप।

(२६०) अपरेद्युश्च प्रातरेव उत्थाय वाजिनम् अधिरुह्य, (२६१) समुच्छ्रितश्वेतातपत्रः (२६२) समुद्धूयमानधवल-चामरयुगलः कतिपयैरेव राजपुत्रैः परिवृतो भैरवाचार्य्यं सवितारमिव शशी द्रष्टुं प्रतस्थे। गत्वा च किञ्चित् अन्तरं (२६३) तदीयमेव अभिमुखम् आपतन्तम् अन्यतमं शिष्यम् अद्राक्षीत्; अप्राक्षीच्च,—“क्व भगवान् आस्ते?” इति।

अस्माकम्। यया—शिवभक्त्या इत्यर्थः। [“नः, यया मनोरथ—” इत्यत्र “नः मनोरथ—” इति पाठान्तरम्]। मनोरथदुर्लभानि—मनोरथेनापि दुर्लभानि—दुष्प्रापाणि। फलन्ति—प्रसवन्ति, भवन्ति इत्यर्थः। यया—शिवभक्त्या इत्यर्थः। [“यया च” इत्यत्र “येनैवम्” इति पाठे,—येन—फलेनेत्यर्थः] श्वः,—परदिने। द्रष्टास्मि—अवलोकिताहे, [दृशधातोर्लुटि उत्तमपुरुषैकवचनस्य रूपमिदम्]। वार्त्तया—वृत्तान्तेन, भैरवाचार्य्यप्रसादरूपयेति भावः।

(२६०) अपरेद्युरित्यादि।—अपरेद्युः,—अपरस्मिन् दिवसे, [“सद्य-परुत्-परार्य्यैषम—” (५।३।२२ पा०) इति निपातनात् सिद्धम्] वाजिनम्—अश्वम्।

(२६१) समुच्छ्रितेति।—समुच्छ्रितं—समुद्धृत, समुन्नत वा, श्वेतं—शुभ्रम्, आतपत्रं—छत्र यस्य तथाभूत.।

(२६२) समुद्धूयमानेति।—समुद्धूयमान—सवीज्यमानं, धवलं—श्वेतं, चामर-युगल यस्य तथोक्तः। सवितारमिव—सूर्य्यमिव। शशी—चन्द्रः। “सवितारमिव शशी” इत्यनेन भैरवाचार्य्यस्य अतीव तेजस्वित्व राज्ञश्च लोकरञ्जकत्वं ख्यापितम्। किञ्च, शशी यथा सूर्य्यप्रभयैव पुष्टः प्रभाऽन्वितो जायते, राजाऽपि तथा भैरवाचा`प्रसादेन बहुधन लब्ध्वा प्रभाववान् सञ्जातः।

(२६३) तदीयमेव—भैरवाचार्य्यसम्बन्धिनमेवेत्यर्थ.। अभिमुखं—स्वसम्मुखम्। आपतन्तम्—आगच्छन्तम्। अन्यतमम्—अपरम्। शिष्यम्—अन्तेवासिनम्। अद्राक्षीत्—ददर्श, [दृशेर्लुङि प्रथमपुरुषैकवचनरूपम्]।

सोऽकथयत्,—"अस्य ( २६४ ) जीर्णमातृगृहस्य उत्तरेण विल्व-वाटिकाम् अध्यास्ते" इति। गत्वा च तं प्रदेशम् ( २६५ ) अव-ततार तुरङ्गमात्, प्रविवेश च विल्ववाटिकाम्।

( २६६ ) अथ सहृतः कार्पटिकवृन्दस्य मध्ये प्रातरेव स्नातं, (२६७) दत्ताष्टपुष्पिकाम्, अनुष्ठिताग्निकार्य्यं, (२६८) कृतभस्मचय-परिहारपरिकरे ( २६९ ) हरितगोमयोपलिप्तक्षितितलवितते

( २६४ ) जीर्णमातृगृहस्य—पुरातनदेवीमन्दिरस्येत्यर्थः, ["एन। द्वितीया" ( २।३।३१ पा० ) इति एनपेति योगविभागात् षष्ठी ] उत्तरेण—उत्तरस्यां दिशि। बिल्ववाटिकां—विल्ववृक्षशोभितवाटीमित्यर्थः।

( २६५ ) अवततार - अवरुरोह। ["अवततार तुरङ्गमात्" इत्यत्र "अवततार" इति मात्रपाठो दृश्यते क्वचित् ]।

( २६६ ) अथेत्यादि।—"अथ" इत्यस्य "भैरवाचार्य्यं ददर्श" इत्युत्तरेणान्वयः। कार्पटिकवृन्दस्य—कर्पट—चीरवस्त्रं परिदधति इति कार्पटिकाः,—कौपीनधारिणः, तेषां वृन्दस्य—समूहस्य, व्रतिसमूहस्य इत्य :।

( २६७ ) दत्ताष्टपुष्पिकं—दत्ताः, इष्टदेवायेति भावः, अष्टौ पुष्पिकाः,—पद्मादयः येन तम्, यद्वा,—अष्टौ पुष्पाख्येव अष्टपुष्पिकाः, अष्टानां पुष्पिकाणां समाहारः इति अष्टपुष्पिकं समाहारद्विगुसमासाश्रयणादध्यवसेयम्; तत्र पुष्पप्रभृति गन्धप्रधानं पार्थिवम्, अर्घ्यस्नानादिकं रसप्रधानमाप्यं, प्रदीपाभरणप्रभादिरूपप्रधानं तैजसम्, अनुलेपनप्रभृति-स्पर्शप्रधानं वायवीयं, सुषिरातोद्यगीतादिकं शब्दप्रधान-माकाशीयम्, अनुध्यानं मानसम्, अस्ति सर्व्वत्रैवेश्वर इति निश्चयो बौद्धम्, अहमेवेश्वर इत्याहङ्कारिकम्; अथवा,—आसनवर्गप्रभृतिषु अष्टसु प्रत्येकमष्टपुष्पिकाः। अनु-ष्ठिताग्निकार्य्यं—कृतहोमविधानम्।

( २६८ ) कृतेति।—कृतः भस्मचयपरिहारस्य—भूतिसमूहसम्मार्ज्जनस्य, परि-करः,—प्रक्रिया यस्य तस्मिन्. भस्मराशिरहिते इति भावः। ["कृतभस्मचय—" इत्यत्र "कृतभस्मरेखा—" इति पाठे,—कृतः भस्मरेखायाः,—भस्मबिन्दोरपि, परिहारस्य परिकरो यस्य; यद्वा,—कृतः भस्मना रेखायाः,—दण्डाकारचिह्नविशेषस्य, परिहारः,—त्यागः, विन्यास इत्यर्थः, व्याघ्रचर्म्मस्थापनस्य सीमानिर्द्देशार्थमिति भावः, तस्य परिकरः यस्य तस्मिन् ]।

( २६९ ) हरितेति।—हरितेन—श्यामलेन, सरसेनेति भावः, गोमयेन

व्याघ्रचर्म्मणि उपविष्टं, (२७०) कृष्णकाम्वलप्रावरणनिभेन (२७१) असुरविवरप्रवेशाशङ्कया पातालान्धकारावासमिव अभ्यस्यन्तम्, उन्मिषता विद्युत्कपिलेन आत्मतेजसा (२७२) महामांसविक्रयक्रीतेन मनःशिलापङ्केनेव शिष्यलोकं लिम्पन्तं, (२७३) जटीकृतैकदेशलम्बमानरुद्राक्षशङ्खगुटिकेन ऊर्द्धबद्धेन शिखापाशेन बध्नन्तमिव (२७४) विद्याऽवलेपदुर्विदग्धान् उपरि

---

उपलिप्तं—मृष्ट, शोधितम् इति भावः, चितितलं—भूतलं, तस्मिन् विततं—विस्तृतं तस्मिन्।

(२७०) कृष्णकाम्वलेति।—कृष्णवर्णः काम्वलम् एव प्रावरणं—गात्राच्छादनं, तस्य निभः,—छल, तदेव निभः,—छल वा तेन। ("निभस्तु कथितो व्याजे पुलिङ्गः सदृशे त्रिषु" इति मेदिनी)।

(२७१) असुरेति।—असुरविवर—पातालं, तस्मिन् प्रवेशः, तस्य आशङ्का—वितर्कः, सम्भावना इत्यर्थः तया। पाता ति।—पाताले यः अन्धकारः, तत्र आवास—स्थितिमित्यर्थः। अभ्यस्यन्तं—शिक्षमाणम्। उन्मिषता—स्फुरता, विद्युत्कपिलेन—तडित्पिङ्गलेन, आत्मतेजसा—निजज्योतिषा।

(२७२) महामांसेति।—महामांसं—नरमांसं, तस्य विक्रयः,—विक्रयलब्धं धनम् इत्यर्थः, तेन क्रीतः तेन, यद्वा,—विक्रयः,—विनिमयः, तेन क्रीतः तेन। मनःशिलापङ्केन—मनःशिला—उपधातुविशेषः, तस्याः पङ्कः,—कर्दमः, घृष्टमनःशिलायाः घनद्रव इत्यर्थः तेन। शिष्यलोकम्—अन्तेवासिजनम्।

(२७३) जटीति।—अजटा जटा सम्पाद्यमानः कृतः जटीकृतः, एकदेशः,—एकांशः, तस्मिन् लम्बमानाः रुद्राक्षाः,—जपमाल्यविशेषाः, शङ्खगुटि ाः,—शङ्खनिर्म्मितगुटिकाश्च, जपसाधना इति भावः; यद्वा,—रुद्राक्षवत् शङ्खगुटिका यस्मिन् तथोक्तेन; यद्वा,—शङ्खगुटिकाः,—शङ्खः,—ललाटास्थि, ("शङ्खो निधौ ललाटास्थ्नि" इत्यमरः) तत्कृता गुटिकाः; शैवाः ललाटास्थ्ना जपमालां कुर्व्वन्ति इति व्यवहारः। ऊर्द्धबद्धेन—उन्नम्य संयमितेन, शिखापाशेन—शिखारूपरज्ज्वा। ["प्रशस्ता शिखा शिखापाशः" इति केनचित् व्याख्यातं, तन्न समीचीनं, "पाशः कुत्सायाम्" इति पाणिनीयसूत्रेण कुत्सार्थे एव पाशप्रत्ययस्य विधानात्]।

(२७४) विद्येति।—विद्यया योऽवलेपः,—अहङ्कारः, तेन दुर्विदग्धाः,

सञ्चरतः सिद्धान्, (२७५) धवलकतिपयशिरोरुहेण शिरसा पञ्च-पञ्चाशतं वर्षाण्यतिक्रामन्तं, (२७६) खालित्यक्षीयमाणशङ्ख-लोमलेखं, (२७७) लोमशकर्णशष्कुलीप्रदेशं, पृथुललाटतटं, तिरश्च्या भस्मललाटिकया बहुशः (२७८) शिरोर्द्धृतदग्ध-गुग्गुलुसन्तापस्फुटितकपालास्थिपाण्डुरराजिशङ्कामिव जनयन्तं, (२७९) सहजललाटवलिभङ्गसङ्कोचितकूर्चभागं, बभ्रुभासं,

—दुर्विनीता' ताम्। उपरि—आकाशे इत्यर्थः। सञ्चरतः,—परिभ्रमतः, सिद्धान्—देवयोनिविशेषान्।

(२७५) धवलेति।—धवलाः,—श्वेताः, कतिपये शिरोरुहाः,—केशा यस्मिन् तथोक्तेन, शिरसा—मस्तकेन, [ "शिरसा" इत्यत्र "वयसा" इति पाठे,—वयसा—जीवनकालेन, जरयेति भावः।

(२७६) खालित्येति।—खलितिः,—खल्वाटः, तस्य भावः खालित्यम्—इन्द्रलुप्तमित्यर्थः, तेन क्षीयमाणा शङ्खस्य—ललाटास्थ्नः, लोमलेखा—केशनिचयः यस्य तथोक्तम्।

(२७७) लोमशेति।—लोमशः,—लोमाकीर्णः, [ "लोमादि—" (५।२।१०० पा०) इत्यादिना शप्रत्यये रूपम् ] कर्णशष्कुली—कर्णकुहर, तस्याः प्रदेशः,—एकदेशः यस्य तम्। पृथुललाटतट—प्रशस्तभालदेशम्। तिरश्च्या—तिर्य्यग्वर्त्तिन्या, भस्म-ललाटिकया—भस्माकृत-ललाटभूषणेन, भस्मत्रिपुण्ड्रकेण इत्यर्थः।

(२७८) शिर इति।—शिरस ऊर्द्धं शिरोर्द्ध, [ निपातनात् सकारलोपः ] तस्मिन् धृतानां दग्धानां गुग्गुलूनां—गन्धद्रव्यभेदानां, सन्तापेन—ऊष्मणा, स्फुटितानि—विदीर्णानि, यानि कपालास्थीनि—कपालान्येव अस्थीनि, मस्तकास्थीनि इत्यर्थः, ( "कपालोऽस्त्री शिरोऽस्थ्नि स्यात् घटादेः शकले व्रजे" इति मेदिनी ) तेषां पाण्डुरा—धवला, राजिः,—आवलिः, तस्याः शङ्का ताम् इव।

(२७९) सहजेति।—सहजः—स्वाभाविकः, ललाटे यः वलिभङ्गः,—तरङ्गित-चर्म्मरेखाविशेषः, तेन सङ्कोचितः,—ह्रस्वतां प्रापितः इत्यर्थः, कूर्चभागः,—भ्रूमध्य-देशः यस्य तथोक्तम्। [ "कूर्चमस्त्री भ्रुवोर्मध्यम्" इत्यमरः। "कूर्चभागम्" इत्यत्र "कूर्चभागाम्" इति पाठे,—सङ्कोचितः कूर्चभागः यस्याः यत्र वा ताम्; अस्मिंस्तु पक्षे,—"भ्रूलेखाम्" इत्यस्य विशेषणमेतत् ]। बभ्रुभास—पिङ्गलकान्तिम्।

( २८० ) भ्रूसङ्गत्या निरन्तराम् आयामिनीम् एकामिव भ्रूलेखां बिभ्राणम्, ईषत्काचरकनीनिकेन ( २८१ ) रक्तापाङ्गेन निर्गतांशुप्रतानेन मध्यधवलभासा इन्द्रायुधेनेव अतिदीर्घेण लोचनयुगलेन परितो महामण्डलमिव अनेकवर्णरागम् आलिखन्तं, ( २८२ ) सितपीतलोहितपताकावलीशबलं, शिववलिमिव दिक्षु विक्षिपन्तं, ( २८३ ) तार्क्ष्यतुण्डकोटिकुटिलाग्रघोणं, ( २८४ ) दूरविदीर्णसृक्कसङ्क्षिप्तकपोलं, किञ्चित् दन्तुरतया सदा हृदयसन्निहितहरमौलिचन्द्रातपेनेव निर्गच्छता दन्ता-

---

( २८० ) भ्रूसङ्गत्येति।—भ्रुवो. सङ्गतिः,—सम्मेलन तया, निरन्तराम्—अविच्छिन्नाम्, आयामिनीम्—आ ताम्। भ्रूलेखा—भ्रुवोः रेखाम्। ईषदिति।—ई त् काचरा—पीतवर्णा, कनीनिका—मध्यतारा यस्य तेन। [ "ईषत्काचर—" इत्यत्र "ईषत्काचकाचर—" इति पाठे,— ˚ काचेन—नेत्ररोगविशेषेण, काचरा इत्यर्थ. ]।

( २८१ ) रक्तापाङ्गेन—शोणप्रान्तदेशेन। निर्गतेति।—निर्गता अंशुना—किरणाना, प्रताना,—प्रसरा' यस्मात् तेन। [ "रक्तापाङ्गेन निर्गतांशुप्रतानेन" इत्यत्र "रक्तापाङ्गनिर्गतांशुप्रतानेन" इति समस्तपाठे,—रक्तात्—रक्तवर्णात्, अपाङ्गात्—प्रान्तदेशात्, निर्गताः अंशुप्रतानाः यस्य तेन ]। मध्येति।—मध्ये धवला भा,—प्रभा यस्य तेन। इन्द्रायुधेनेव—शक्रधनुषा इव। अतिदीर्घेण—आकर्णविस्तृतेनेति भाव। परित,—समन्तात्, महामण्डल—सर्वतोभद्रादिरूप यन्त्रमिवेत्यर्थ.। अनेकेति।—अनेकै,—विविधै, वर्णै राग',—रञ्जन यत्र तम्।

( २८२ ) सितेति।—सिता,—श्वेताः, पीता,—हरिद्राभाः, लोहिता',—रक्ताश्च याः पताका,—वैजयन्त्य, तासाम् आवल्य,—श्रेण्यः, ताभिः शबल—विविधवर्णरञ्जितमित्यर्थ', नेत्रयुगलस्य प्रागुक्तविविधवर्णशालित्वात् इति भावः। शिववलि—शिवपूजाविधिम्।

( २८३ ) तार्क्ष्येति।—तार्क्ष्य',—गरुड', ( "गरुत्मान् गरुडस्तार्क्ष्य" इत्यमरः ) तस्य तुण्डकोटि,—मुखाग्र, चञ्चुग्रम् इत्यर्थ', तद्वत् कुटिलम्—उन्नतपृष्ठमित्यर्थः, अग्रघोण—घोणा—नासिका, तस्या अग्र यस्य तथोक्तम्।

( २८४ ) दूरेति।—दूरम्—अत्यन्त, विदीर्णाभ्या—विस्तृताभ्या, सृक्कभ्याम्—ओष्ठप्रान्ताभ्या, ( "प्रान्तावोष्ठस्य सृक्कणी" इत्यमर. ) सङ्क्षिप्तौ—सङ्कोचितौ, कपोलौ

लोकेन धवलयन्तं दिशां चक्रवालं, (२८५) जिह्वाग्रस्थितसर्वशैव-संहिताऽतिभारेणेव मनाक् प्रलम्बितोष्ठं, (२८६) प्रलम्बश्रवण-पालिप्रेङ्खिताभ्यां स्फाटिककुण्डलाभ्यां शुक्र-बृहस्पतिभ्यामिव सुरासुरविजयविद्यासिद्धिश्रद्धया अनुबध्यमानं, (२८७) बद्ध-विविधौषधिमन्त्रसूत्रपङ्क्तिना सलोहवलयेन एकप्रकोष्ठेन शङ्खखण्डं (२८८) पूष्णो दन्तमिव भगवता भवेन भग्नं भक्त्या

---

—गण्डौ यस्य तम्। किञ्चिद्दन्तुरतया—ईषदुन्नतदन्तत्वेन, सदा हृदये सन्निहितस्य—अवस्थितस्य, हरस्य मौलौ—शिरसि, यः चन्द्रः, तस्य आतपः,—आलोकः तेन इव। निर्गच्छता—बहिर्निःसरता, दन्तालोकेन—दशनप्रभया, दिशां चक्रवालं—मण्डलं, ["चक्रवालम्" इत्यत्र "जालकम्" इति पाठे,—समूहमित्यर्थः] धवलयन्त—श्वेतयन्तम्।

(२८५) जिह्वेति।—जिह्वायाः,—रसनायाः, ["शेव-यह्व-जिह्वा-ग्रीवाऽऽप्वा-मीवाः" (उ॰ १ पा॰ १५४ सू॰) इति लिहधातोः वन्प्रत्यये निपातनात् सिद्धम्] अग्रे स्थिताः याः सर्वाः शैवसंहिताः,—शिवचरितगाथाः, तासाम् अतिभारेणेव मनाक्—ईषत, प्रलम्बितः ओष्ठः यस्य तथोक्तम्।

(२८६) प्रलम्बेति।—प्रलम्बयोः,—प्रकर्षेण लम्बमानयोः, श्रवणपाल्योः,—कर्णलताग्रयोः, प्रेङ्खिते—आन्दोलिते ताभ्याम्। स्फाटिककुण्डलाभ्या—स्फटिकमणि-निर्मितकर्णभूषणाभ्याम्। शुक्र-बृहस्पतिभ्यां—भार्गव-जीवाभ्याम् इव सुरेति।—सुराणा—देवाना, शुक्रेणेति भावः, असुराणा—दैत्याना, बृहस्पतिनेति भावः, विजयाय—पराजयार्थं, विजयसाधनीत्यर्थः, या विद्या—मन्त्रादिरूपा इत्यर्थः, तस्याः सिद्धिः,—साधनं, प्राप्तीच्छा इति यावत्, तया या श्रद्धा—आदरः तया। अनुबध्य-मानम्—अनुगम्यमानम।

(२८७) बद्धेति।—बद्धा विविधानाम् ओषधीनां मन्त्राणाञ्च सूत्रपङ्क्तिः यस्मिन् तथोक्तेन, सलोहवलयेन—लोहवलयालङ्कृतेन, एकप्रकोष्ठेन—एकेन कूर्पर-मणिबन्धयोः अन्तरदेशेन, ("प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी)। शङ्खखण्डं—कम्बुशकलम्।

(२८८) पूष्णः,—पूषानामदेवविशेषस्य। दन्तमिव—रदम् इव। भवेन—हरेण। भग्न—खण्डितम्। भक्त्या—श्रद्धाविशेषेणेत्यर्थः, हरकरस्पर्शेन दन्तस्य पावित्र्यात् तत्र भक्तिर्ज्ञातव्या। पुरा दक्षस्य प्रजापतेः यज्ञे हरनिन्दाश्रवणे पूषा जहास, तेन

भूषणीकृतं कलयन्तम्, (२८९) अखिलरसकूपोदञ्चनघटीयन्त्रमालाम् इव रुद्राक्षमालां दक्षिणेन पाणिना भ्रमयन्तम्, उरसि दोलायमानेन आपिङ्गलाग्रेण कूर्चकलापेन सम्मार्ज्जयन्तमिव अन्तर्गतं निजरजोनिकरम्, (२९०) अतिनिविडनीललोमसमण्डलनिचितञ्च ध्यानलब्धेन ज्योतिषा दग्धमिव हृदयदेशं दधानम्, (२९१) ईषत्प्रशिथिलबलिवलयबध्यमानतुन्दम्, (२९२) उपचीयमानस्फिङ्मांसपिण्डकं, (२९३)पाण्डुरपवित्रक्षौमावृतकौपीनं, (२९४) सावष्टम्भपर्य्यङ्कबन्ध-

पतिकुपितो हर तस्य दन्तपाटीं चपेटप्रहारेण बभञ्जेति पुराणवार्त्ता। कलयन्त— धारयन्तम्।

(२८९) अखिलेति।—अखिलस्य—समग्रस्य, रसस्य—जलस्य, अनुरागस्य च, रूप प्रति इति भाव, कूपात्—जलाधारविशेषात्, संसारकूपाच्चेति भाव, उदञ्चनाय—उद्धरणाय, घटीयन्त्रमालाम् इव—घटीयन्त्रराजिम् इव, कूपात् जलं हरणार्थं घटीयन्त्र भ्राम्यते इति लोकव्यवहार.। उरसि—वक्षसि। आपिङ्गलाग्रेण—ईषत्कपिशाग्रेण, कूर्चकलापेन—श्मश्रुनिचयेन इत्यर्थ, कलापग्रहण सम्मार्ज्जनीसाम्यार्थम्। सम्मार्ज्जयन्त—सशोधयन्तम्। अन्तर्गत—हृदिस्थमित्यर्थ। निजरजोनिकर—स्व रजोगुणविकार, धूलिसञ्चयञ्च।

(२९०) अतीति।—अतिनिविडेन—अतिघनेन, नीलेन—कृष्णेन, लोममण्डलेन—रोमनिवहेन, निचित—व्याप्तम्। ["निचितम्" इत्यत्र "विचितम्" इति पाठेऽपि स एवार्थ]। ज्योतिषा अन्तर्ज्योतिषा, ज्ञानरूपेणेति भाव.।

(२९१) ईषदिति।—ईषत् प्रशिथिलेन—प्रश्लथेन, वलिवलयेन—वलित्रयेण इत्यर्थ., बध्यमान—वेष्ट्यमान, तुन्दम्—उदर यस्य तथोक्तम्। ("पिचिण्डकुक्षिजठर उदर तुन्दम्" इत्यमर: )।

(२९२) उपचीयमानेति।—उपचीयमानम्—आप्याय्यमानं, स्फिची,—नितम्बयो., ("स्त्रिया स्फिचौ कटिप्रोथौ" इत्यमर। कटिप्रोथौ—कट्यध नितम्बस्थमांसपिण्डयो) मांसपिण्डका यस्य तम्।

(२९३) पाण्डुरेति।—पाण्डुरेण—धवलेन, पवित्रेण—विशुद्धेन, क्षौमेण—पट्टवसनेन, आवृतम्—आच्छादित, कौपीनम्—अन्तवस्त्र यस्य तथाभूतम्।

(२९४) सावष्टम्भेति।—सावष्टम्भं—सगर्वं, सवेगम् इत्यर्थ., सदृढम् इति

मण्डलितेन अमृतफेनश्वेतरुचा योगपट्टकेन वासुकिना इव (२९५) अप्रतिहतानेकमन्त्रप्रभावाविर्भूतेन प्रदक्षिणीक्रियमाणम्, (२९६) अरुणतामरससुकुमारतलस्य पादयुगलस्य निर्मलैः नखमयूखजालकैः जर्ज्जरयन्तमिव (२९७) महानिधानोद्धरणरसेन रसातलं, (२९८) तोयक्षालितशुचिना धौतपादुकायुगलेन हंसमिथुनेन इव (२९९) भागीरथीतीर्थयात्रापरिचयागतेन (३००) आमुच्यमानचरणान्तिकं, (३०१) शिखरनिखातकुब्जकालायसकण्टकेन वैणवेन

---

यावत्, यः पर्य्यङ्कबन्धः,—आसनविशेषः, तेन मण्डलितं—वलयीकृतं तेन। अमृतेति।—अमृतस्य फेनवत्, अन्यत्,—अमृतस्य—समुद्रमन्थनोद्भूतस्य इति भावः, फेनैः, श्वेता—शुभ्रा, रुक्—कान्तिः यस्य तेन, योगपट्टकेन—प्रागुक्तेन योगिधार्य्यपट्टसूत्रविशेषेण।

(२९५) अप्रतिहतेति।—अप्रतिहताना—प्रतिहन्तुम् अशक्तानाम्, अमोघानामित्यर्थः, अनेकेषां मन्त्राणां प्रभावेण - सामर्थ्येन, आविर्भूतः,—उपस्थितः, वशीकृत इति भावः तेन। प्रदक्षिणीक्रियमाणं—समन्तात् वेष्ट्यमानम् इत्यर्थः।

(२९६) अरुणेति।—अरुणं—रक्तं, यत् तामरसं पद्मं, तद्वत् सुकुमारं—सुकोमलं, तलं यस्य तथाभूतस्य। जर्ज्जरयन्तम् इव—विदारयन्तमिव।

(२९७) महानिधानेति।—महानिधानस्य—महतो निधेः, महार्घरत्नविशेषस्य इत्यर्थः उद्धरणम्—उत्तोलनं, तस्मिन् यो रसः,—रागः तेन। रसातलं—पातालम्।

(२९८) तोयेति।—तोयेन—जलेन, क्षालितं—धौतम्, अत एव शुचि—पवित्रं तेन, अन्यत्,—तोये क्षालितं—सर्व्वदा जलेऽवस्थानात् धौतमिवेत्यर्थः, अत एव शुचि—शुभ्रं तेन।

(२९९) भागीरथीति।—भागीरथी—गङ्गा एव, ["तेन निर्वृत्तम्" (४।२।६८ पा०) इत्यणि "टिड्ढाणञ्—" (४।१।१५ पा०) इत्यादिना ङीपि रूपम्] तीर्थं—पुण्यक्षेत्रं, तस्मिन् यात्रा—गमनं, तत्र यः परिचयः,—सङ्गतिः, तेन आगतं तेन।

(३००) आमुच्यमानेति।—आमुच्यमानं—सेव्यमानं, चरणान्तिकं—चरणसन्निधिः यस्य तथोक्तम्।

(३०१) शिखरेति।—शिखरे—शृङ्गे, अग्रे वा, निखातः,—प्रोथितः, कुब्जः,—कुञ्चित इत्यर्थः, कालायसकण्टकः,—कृष्णलौहकण्टकः यस्य तेन; [एतेन विशाखिका-

विशाखिकादण्डेन (३०२) सर्वविद्यासिद्धिविघ्नविनायकापनयनाङ्कुशेन इव सततपार्श्ववर्त्तिना विराजमानम्, अबहुभाषिणं, मन्दहासिनं, सर्वोपकारिणं, कुमारब्रह्मचारिणम्, अतितपस्विनं, महामनस्विनं, (३०३) कृशक्रोधम्, अकृशानुरोधं, महानगरमिव (३०४) अदीनप्रकृतिशोभितं, मेरुमिव (३०५) कल्पतरुपल्लवराशिसुकुमारच्छायं, कैलासमिव (३०६) पशुपतिचरणरजःपवित्रितशिरस्कं, शिवलोकमिव (३०७) माहेश्वरगणानुयातं, जलनिधिमिव

---

दण्डस्य अङ्कुशसाम्यं प्रदर्शितम्] वैणवेन—वेणुः,—वंशदण्डः, तस्यायं वैणवः, —वेणुनिर्म्मित इत्यर्थ तेन, विशाखिकादण्डेन—खनित्रलगुडेनेत्यर्थः।

(३०२) सर्वेति।—सर्वासां विद्यानां सिद्धौ विघ्नः,—अन्तरायः, यो विनायकः, —विघ्नराजः, तस्य अपनयनाय—अपसारणाय, अङ्कुशः,—अस्त्रविशेषः तेन इव। सर्वोपकारिणं—सर्वेषाम् उपकारपरायणम्। कुमारब्रह्मचारिणं—नैष्ठिकब्रह्मचारिणम् इत्यर्थ। महामनस्विनं—प्रशस्तचित्तम्।

(३०३) कृशक्रोधम्—अल्पक्रोध, प्रायेण क्रोधवर्जितम् इत्यर्थः। अकृशानुरोधम्—अकृशः,—अनल्पः, अनुरोधः,—अनुवर्त्तनं, चित्ताराधनम् इत्यर्थः यस्य तथोक्तं, बहुजनसमादृतमिति यावत्।

(३०४) अदीनेति।—अदीना—दैन्यवर्ज्जिता, या प्रकृतिः,—स्वभावः, तया शोभितः तम्, उदारप्रकृतिमित्यर्थः, अन्यत्र,—अदीनाभिः,—दारिद्र्यविहीनाभिः, प्रकृतिभिः,—प्रजाभिः, प्रधानपुरुषैः वा, शोभितम्।

(३०५) कल्पेति।—कल्पतरूणां—कल्पवृक्षाणां, पल्लवराशयः,—किसलयनिचयाः, तद्वत्, तैश्च सुकुमारा—सुकोमला, सुखप्रदा च, छाया—कान्तिः, अनातपश्च यस्य तथोक्तः तम्। ("छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः)।

(३०६) पशुपतीति।—पशुपतेः,—हरस्य, चरणरजोभिः पवित्रितं—पावितं, शिरः,—मस्तकम्, अन्यत्र,—पवित्रितानि शिरांसि—शृङ्गाणि यस्य तथोक्तः तम्।

(३०७) माहेश्वरेति।—महेश्वरो देवता येषां ते माहेश्वराः,—शैवा इत्यर्थः

(३०८) अनेकनदनदीसहस्रप्रक्षालितशरीरं, जाह्नवीप्रवाहमिव (३०९) बहुपुण्यतीर्थस्थानशुचिं, धाम धर्मस्य, तीर्थं तथ्यस्य, कोशं कुशलस्य, पत्तनं पूततायाः, (३१०) शालां शीलस्य, क्षेत्रं क्षमायाः, शालेयं शालीनतायाः, स्थानं स्थितेः, आधारं धृतेः, आकरं करुणायाः, निकेतनं कौतुकस्य, आरामं रामणीयकस्य, प्रासादं प्रसादस्य, आगारं गौरवस्य, समाजं सौजन्यस्य, सम्भवं सद्भावस्य, कालं कलेः, भगवन्तं साक्षात् इव विरूपाक्षं भैरवाचार्यं ददर्श।

---

[ "साऽस्य—" (४।२।२४ पा॰) इत्यादिना अणि रूपम् ] तेषां गणाः,—समूहाः ; अन्यत्र,—महेश्वरस्य इमे माहेश्वराः, [ "तस्येदम्" (४।३।१२० पा॰) इत्यणि रूपम् ] ये गणाः,—प्रमथवर्गाः, ("गणः प्रमथसङ्ख्यौघे" इति मेदिनी) तैः अनुयातः,—अनुगतः तम्।

(३०८) अनेकेति।—अनेकेषु नदनदीनां सहस्रेषु प्रक्षालितं—स्नातम् इत्यर्थः, शरीरं यस्य, अन्यत्र,—अनेकैर्नदनदीसहस्रैः प्रक्षालितं शरीरं यत्र तथोक्तः तम् ; सर्वासामेव नदनदीनां सागरे सङ्गतत्वादिति भावः।

(३०९) बह्विति।—बहुषु पुण्येषु तीर्थेषु—हरिद्वारादिपवित्रक्षेत्रेषु इत्यर्थः, स्थानेन—स्थित्या, शुचिः,—पवित्रः तम्। विशेषणमिदम् उभयत्रापि तुल्यार्थकम्। धाम—आश्रयम्। तीर्थं—क्षेत्रम्। तथ्यस्य—सत्यस्य। कोशं—भाण्डागारम्। कुशलस्य—मङ्गलस्य। पत्तनं—नगरम्। पूततायाः,—पवित्रतायाः।

(३१०) शालां—गृहम्। शीलस्य—सुचरितस्य। क्षेत्रं—भूमिम्। क्षमायाः,—क्षान्तेः। शालेयं—शाला एव शालेयं—गृहम् इत्यर्थः। शालीनतायाः,—विनयितायाः। स्थितेः,—मर्य्यादायाः शिष्टाचारस्य इत्यर्थः। स्थानम्—आवासः। धृतेः,—धैर्य्यस्य। आधारम्—आश्रयः। आकरम्—उत्पत्तिक्षेत्रम्। निकेतनम्—आलयम्। कौतुकस्य—कौतूहलस्य ; तद्दर्शनाय सर्वेषामेव कौतूहलान्युत्पद्यन्ते इति भावः। आरामम्—उपवनम्। रामणीयकस्य—रमणीयतायाः। प्रासादं—हर्म्यम्। प्रसादस्य—प्रसन्नतायाः। समाजं—गोष्ठीम्। सौजन्यस्य—सुजनतायाः, सद्व्यवहारस्य वा। सम्भवम्—उत्पत्तिस्थानम्। सद्भावस्य—साध्वभिप्रायस्य। कालम्—अन्तकम्। कलेः,—कलियुगस्य। विरूपाक्षं—त्रिलोचनम्।

(३११) भैरवाचार्य्यस्तु दूरात् एव राजानं दृष्ट्वा शशिन-मिव जलनिधिः चचाल। प्रथमतरोत्थितशिष्यलोकश्च ससम्भ्रमं प्रत्युज्जगाम; समर्पितश्रीफलोपायनश्च (३१२) जह्नुकर्ण-समुद्गीर्य्यमाणगङ्गाप्रवाहह्रादगम्भीरया गिरा स्वस्तिशब्दम् अकरोत्।

नरपतिरपि (३१३) प्रीतिविस्तार्य्यमाणधवलिम्ना चक्षुषा प्रत्यर्पयन्निव बहुतराणि पुण्डरीकवनानि,

(३११) जलनिधिः,—समुद्रः, भैरवाचार्य्यस्य गम्भीरसत्त्वत्वात् जलनिधिरित्युक्तम्। चचाल—चञ्चलो बभूव, गाम्भीर्य्यादभ्रश्यदिति भावः। जलनिधिः चन्द्रं शशिनं दूरादेव दृष्ट्वा उद्वेलितो भवति इति प्रसिद्धिः। प्रथमेति।—प्रथमतरः,—अयमनयोरतिशयेन प्रथमः प्रथमतरः, उत्थितः,—उद्गतः, शिष्यलोको यस्य तथाभूतः, आचार्य्यशिष्ययोर्मध्ये शिष्यजना एव आदौ उत्थितवन्तः, पश्चात् आचार्य्यः उत्थित-वानिति भावः, यद्वा,—प्रथमतरः उत्थितः शिष्यलोकात् यः तथाभूतः, शिष्येभ्य आगेव उत्थितवानिति भावः। समर्पितेति।—समर्पितानि—प्रदत्तानि, श्रीफलान्येव,—बिल्वफलान्येव, उपायनानि—उपहाराः येन तथोक्तः, श्रीफलानि उपायनी-कृत्य इत्यर्थः।

(३१२) जह्नुकर्णेति।—जह्नुः नाम राजर्षिः, तस्य कर्णात् समुद्गीर्य्यमाणा—समुद्वाम्यमाना, या गङ्गा, तस्याः प्रवाहः,—स्रोतः, तस्य ह्रादवत्—नादवत्, गम्भीरा तया, गङ्गाप्रवाह इत्यनेन तद्वाक्यस्य पवित्रत्वं प्रदर्शितम्। पुरा भगीरथेन आनीय-माना गङ्गा पथि तपस्यतो राजर्षेः जह्नोः तपोभूमिं तदुपकरणानि च प्लावयन्ती वहति स्म, तद्दृष्ट्वा असौ क्रोधात् तां गङ्गां गण्डूषेण पपौ। अथ भगीरथेन पश्चात् आयाता, गङ्गाम् अदृष्ट्वा, क्व गता मे गङ्गा? इति अनुसन्दधता जह्नुः पृष्टः तत् सर्व्वमाचख्यौ। ततः तदनुरोधेन स्वात् कर्णरन्ध्रात् ताम् उद्गीर्णवान् इति पुराणवार्त्ता।

(३१३) प्रीतीति।—प्रीत्या विस्तार्य्यमाणः,—प्रसार्य्यमाणः, धवलिमा—धावल्यं यस्य तथाभूतेन। प्रत्यर्पयन्निव—प्रतिददन्निव, पुण्डरीकवनानि—श्वेतकमल-वनानि, ("पुण्डरीकं सिताम्भोजम्" इत्यमरः) प्राक् भैरवाचार्य्येण पञ्च राजतपद्मानि राज्ञे उपायनीकृतानि; राज्ञा तु तद्विनिमयेन राजतधवलानि बहूनि पुण्डरीकाणि प्रत्युपायनीकृतानीति भावः।

(२१४) ललाटपट्टपर्य्यस्तेन च उदंशुना शिखामणिना महेश्वरप्रसादमिव तृतीयनयनोद्गमेन प्रकाशयन्, (२१५) आवर्ज्जितकर्णपल्लवपलायमानमधुकरः शिवसेवासमुन्मूलिताशेषपापलवमुच्यमान इव दूरावनतः प्रणामम् अभिनवं चकार। आचार्य्योऽपि,—"आगच्छ, अत्रोपविश" इति शार्दूलचर्म्म आत्मीयम् अदर्शयत्। (२१६) उपदर्शितप्रश्रयस्तु राजा मत्तहंसकलगद्गदस्वरसुभगां मधुरसमयीं महानदीमिव प्रवर्त्तयन् वाचं व्याजहार,—"भगवन्! न अर्हसि माम् (२१७) अन्यनृपस्खलितैः खलीकर्त्तुम्। (२१८) अशेषराजकोपेक्षितायाः राजलक्ष्म्याः खलु अयं

---

(२१४) ललाटेति।—ललाटपट्टे—भालफलके, पर्य्यस्त,—पतितः तेन, उदंशुना—उन्नतकिरणेन, शिखामणिना—चूडारत्नेन। महेश्वरप्रसादमिव—शङ्करानुग्रहम् इव, तृतीयनयनोद्गमेन—उद्गतेन तृतीयनयनेन इत्यर्थः।

(२१५) आवर्ज्जितेति।—आवर्ज्जितेन—आन्दोलितेन, प्रणामव्यापारे इति भावः, कर्णपल्लवेन—कर्णधृतबिल्वादिकिसलयेन इति यावत्, पलायमानाः मधुकराः,—भ्रमरा यस्मात् सः, अत एव शिवेति।—शिवस्य सेवया समुन्मूलितानाम्—समुत्पाटितानाम्, अशेषाणां—समग्राणां,पापानां—दुष्कृतानां, लवैः,—बिन्दुभिः, मुच्यमान इव—हीयमान इव। दूरावनतः,—दूरादेव आनत सन्। अभिनवं—सद्य एवेत्यर्थः, दर्शनक्षणमेवेति यावत्। शार्दूलचर्म्म—व्याघ्रचर्म्म। आत्मीयं—स्वकीयम्।

(२१६) उपदर्शितप्रश्रयः,—प्रदर्शितविनयः। मत्तेति।—मत्तस्य—हृष्टस्य, हंसस्य कलः,—मधुरास्फुटः, गद्गदस्वरः,—अर्द्धोच्चरितस्वरविशेष, तद्वत् स्वर इति भावः, तेन सुभगा—मनोज्ञा, मधुरसमयीम्—इक्षुरसात्मिकाम्, अतीव सुमधुरामित्यर्थः।

(२१७) अन्येति।—अन्येषां नृपाणां स्खलितानि—दोषाः, भवता सह एकासने उपवेशनस्पर्द्धा इति भावः तैः, खलीकर्त्तुम्—अखलं खलं कर्त्तुं, सदोषं सम्भावयितुम् इत्यर्थः, अन्ये गर्वान्धा नृपतयः बहुभिः दोषैः कलुषीक्रियन्ते, न अहं तथेति भावः।

(२१८) अशेषेति।—अशेषाणां राज्ञां कोपेन ईक्षितायाः,—दृष्टायाः, बहवो राजानो निर्ज्जिताः, तेषां विजितलक्ष्म्याः कोपदृष्टिः सम्भवति एवेति भावः, यद्वा,—अशेषैः—समग्रैः, राजभिः कोपेन—क्रोधेन, तान् विजित्य तेषां लक्ष्म्याः

(३१९) शीलापराधो द्रविणदौरात्म्यं वा, यदेवम् आचरति मयि गुरुः। अभूमिरयम् उपचाराणाम्। अलम् (३२०) अतियन्त्रणया; दूरस्थितोऽपि मनोरथशिष्यः अयं जनो भवताम्। (३२१) माननीयश्च गुरुवत् न उल्लङ्घनम् अर्हति गुरोः आसनम्। आसताञ्च भवन्त एव अत्र" इति व्याहृत्य परिजनोपनीते वाससि निषसाद। भैरवाचार्य्योऽपि प्रीत्या अनतिक्रमणीयं नृपवचनम् अनुवर्त्तमानः पूर्ववत् तदेव व्याघ्राजिनम् अभजत।

---

स्वायत्तीकरणादिति भावः, ईर्ष्यिताया,—दृष्टाया., राजलक्ष्म्याः,—राजश्रिया, मदीयाया इति भावः, यद्वा,—अशेषराजकैः,—समग्रराजसमूहैः, उपेक्षिताया,—परित्यक्ताया, रक्षितुमसामर्थ्यादिति भावः, राजलक्ष्म्या, विजितनृपाणामिति भावः, लक्ष्मीर्हि चला, बहुभोग्या च, सर्व्वान् राज्ञो विजित्य तल्लक्ष्म्याः एकभोग्यत्वसम्पादनात् चलायास्तस्याः अचलत्वविधानाच्च लक्ष्म्याः मां प्रति कोप इति मन्तव्यम्। [ "राजलक्ष्म्या." इत्यत्र "हतलक्ष्म्या." इति पाठे,—दुर्हताया लक्ष्म्या इत्यर्थः ]।

(३१९) शीलापराध,—चरित्रदोषः। द्रविणदौरात्म्यं—धनदुर्वृत्तता, धनमत्तता इति यावत्। गुरु.,—पूज्य. भवान्, मयि विषये, एवम्—इत्थं, राजा अयमिति कृत्वा विशिष्टसम्मानादिकमित्यर्थः, आचरति - व्यवहरति, अयं राजलक्ष्म्याः शीलापराध. द्रविणदौरात्म्य वा इति अन्वयः। अभूमि,—अस्थानम्, अपात्रमित्यर्थः, अयोग्य इति भावः। अयमिति आत्मनिर्द्देशः। उपचाराणा—सेवानां, विशिष्टसमादराणामित्यर्थ, राजोचितव्यवहाराणामिति भाव।

(३२०) अतियन्त्रणया—अतिक्लेशेन, प्रत्युत्थानादिक्लेशस्वीकारेण इति यावत्, [ "गम्यमानाऽपि क्रिया विभक्तौ प्रयोजिका" इति कृत्वा अलंयोगे तृतीया ] मदर्थमिति भाव.। मनोरथशिष्य.,—मनोरथेनैव शिष्यता गत इत्यर्थः, कदाचिददृष्टस्यापि ते प्रभावादिक श्रुत्वा मनसैव शिष्यत्वं स्वीकृतवानिति भावः; यद्वा,—अहं भवता मनसा स्मृतः समुपस्थास्ये, आज्ञाकर इति भावः।

(३२१) माननीयं—सम्मानार्हम्। उल्लङ्घनं—पादेनाक्रमणं, मर्य्यादाऽतिक्रमणं वा। आसता तिष्ठतु। अनुवर्त्तमानः,—अनुमोदमानः।

आसीने च सराजके (२२२) परिजने शिष्यजने च समुचितम् अर्घ्यादिकं चक्रे। क्रमेण च नृपमाधुर्य्यहृतान्तःकरणः (२२३) शशिकरनिकरविमला दशनदीधितीः स्फुरन्तीः शिवभक्तीरिव साक्षात् दर्शयन् उवाच,—"तात! अतिनम्रता एव ते कथयति गुणानां गौरवम्। (२२४) सकलसम्पत्पात्रमसि। विभवानुरूपास्तु प्रतिपत्तयः। जन्मनः प्रभृति अदत्तदृष्टिः अस्मि स्वापतेयेषु, यतः (२२५) सकलदोषकलापानलेन्धनैः धनैः अविक्रीतं क्वचित् शरीरकमस्ति।

(२२२) परिजने—राजाऽनुयायिनि जने इत्यर्थः। अर्घ्यादिकं—पूजाविधानं, चक्रे—कृतवान्, भैरवाचार्य्य इति शेषः। नृपेति।—नृपस्य माधुर्य्येण—रमणीयतागुणेन, "सर्व्वावस्थाविशेषेषु माधुर्य्यं रमणीयता" इति दर्पणः, हृतम्—आकृष्टम्, अन्तःकरणं—मनः यस्य तथाभूतः।

(२२३) शशीति।—शशिनः,—चन्द्रस्य, कराणां—मयूखानां, निकरवत्—समूह इव, विमलाः,—विशदाः। दशनदीधितीः,—दन्तमयूखान्। स्फुरन्तीः,—द्योतमानाः। गुणानां—विद्याविनयादीनां, रज्जूनाञ्च। गौरवम्—उत्कर्षं, भारवत्त्वञ्च; यत्र भारातिशयस्तदंश एव नमतीति ध्वन्यते।

(२२४) सकलेति।—सकलाना सम्पदाम्—ऐश्वर्य्याणां, पात्रं—भाजनम्, असि—भवसि। प्रतिपत्तयः,—प्रवृत्तयः, चित्तवृत्तय इति यावत्, विभवानां—सम्पदाम्, अनुरूपास्तु—सदृश्य एव; यथा त्वं सर्व्वसम्पत्पूर्णः, तथा सर्व्वसद्गुणपूर्णोऽपि इति भावः। स्वापतेयेषु—धनेषु, [ "पथ्यतिथि—" (४।४।१०४ पा०) इत्यादिना स्वपतेर्ढञि रूपम् ] ( "द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमरः ) अदत्तदृष्टिरस्मि—धनेषु मम दृष्टिः नासीत्यर्थः, नाहं धनलालस इति भावः।

(२२५) सकलेति।—सकलाः,—समग्राः, दोषकलापाः,—दोषनिवहा एव, अनलाः,—अग्नयः, तेषाम् इन्धनानि—काष्ठानि तैः, यथा काष्ठैः एव अग्नय उद्दीप्यन्ते, तथा धनैरेव दोषाः प्रवर्द्धन्ते इति भावः। शरीरकं—तुच्छदेहमित्यर्थः, क्वचित्—कुत्रापि, अविक्रीतमस्ति—विक्रीतं नास्ति, यद्वा,—धनैः अविक्रीतं—न विक्रीतम्, ईदृक् शरीरकं क्वचित्—कुत्रापि अस्ति?—नैवास्तीत्यर्थः; अत एव अदत्तदृष्टिरस्मि इति योजना।

(३२६) भैक्षरक्षिताः सन्ति प्राणाः। दुर्गृहीतानि कतिचित् विद्यन्ते विद्याऽक्षराणि। (३२७) भगवच्छिवभट्टारक पादसेवया समुपार्ज्जिता कियत्यपि सन्निहिता पुण्यकणिका। स्वीक्रियतां यत् अत्र उपयोगार्हम्। (३२८) प्रतनुगुणग्राह्याणि कुसुमानि इव हि भवन्ति सतां मनांसि। अपि च, (३२९) विद्वत्सम्मताः श्रूयमाणा अपि साधवः शब्दा इव सुधीरेऽपि हि मनसि यशांसि कुर्वन्ति। विवरं विशतः कुतूहलस्य फेनधवलैः स्रोतोभिरिव अपक्रियमाणो गुणगणैः आनीतोऽस्मि कल्याणिना" इति।

---

(३२६) भैक्षेति।—भिक्षया लब्धं भैक्षं—भिक्षालब्धम् अन्नादि इत्यर्थः, तेन रक्षिताः,—पालिताः। "रक्षिताः" इत्यनेन एभिः प्राणैः यदि कस्यचित् कदाचित् कोऽप्युपकारो भवेत, तदा प्राणत्यागेनापि स कर्त्तव्यः इति सूचितम्। दुर्गृहीतानि—दुःखेन गृहीतानि।

(३२७) भगवदिति।—भगवतः,—"ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशस श्रियः। ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीङ्गना॥" इत्युक्तषड्गुणशालिनः, शिवभट्टारकस्य—प्रभोः शिवस्य पादसेवया—चरणशुश्रूषया। पुण्यकणिका—पुण्यलेशः। यत् - पुण्यकणिकारूपं वस्तु, अत्र—जगति, यद्वा—अत्र—विद्याक्षर-पुण्यकणिकयोर्मध्ये इत्यर्थः, यत्—वस्तु, उपयोगार्हम्—उपयोगम् अर्हतीति तथोक्तं, क्वचित् कदाचित् उपकारिता व्रजतीति यावत्, तत् स्वीक्रियताम्—आत्मीक्रियता, गृह्यतामित्यर्थ।

(३२८) प्रतन्विति।—प्रतनुना—स्वल्पेनेत्यर्थः, सूक्ष्मेण च, गुणेन—उपकारादिना, तन्तुना च, ग्राह्याणि—ग्रहीतुं शक्यानि। कुसुमानि इव इत्यनेन सतां मनसामतीव कोमलत्वं सूचितम्।

(३२९) विद्वदिति।—विद्वद्भिः सम्मताः,—अभिमताः, स्वीकृताश्च। साधवः,—सन्तः, विशुद्धाश्च, शब्दा इव, यशांसि कुर्व्वन्ति—प्रतिपत्तिं विस्तारयन्तीत्यर्थः; विशुद्धाः शब्दा यथा प्रतिपत्ति विस्तारयन्ति, सन्तोऽपि तथा इति भावः। विवरं—छिद्रं, गह्वरम् इत्यर्थः, अन्तःकरणमिति भावः, पातालं वा, विशत,—गच्छतः। फेनधवलैः,—फेनवत् धवलैः,—निर्म्मलै, फेनेन धवलै,—शुभ्रैश्च। कल्याणिना—कल्याणभाजनेन, भवता इति शेषः।

राजा तु तं प्रत्यवादीत्,—"भगवन्! (२३०) अनुरक्तेष्वपि शरीरादिषु इव साधूनां स्वामिन एव प्रणयिनः। युष्मद्दर्शनात् उपार्ज्जितमेव च अपरिमितं (२३१) कुशलजातम्। अनेनैव आगमनेन स्पृहणीयं पदम् आरोपितोऽस्मि गुरुणा" इति विविधाभिश्च कथाभिः चिरं स्थित्वा गृहम् अगात्।

अन्यस्मिन् दिवसे भैरवाचार्य्योऽपि राजानं द्रष्टुं ययौ। तस्मै च राजा सान्तःपुरं सपरिजनं (२३२) सकोषम् आत्मानं निवेदितवान्। स च विहस्य उवाच,—"तात! क्व विभवाः? क्व च वयं वनवर्ड्डिताः? धनोष्मणा म्लायति अलं लता इव मनस्विता। खद्योतानामिव अस्माकमियम् अपरोपतापिनी राजते तेजस्विता। भवादृशा एव भाजनं भूतेः" इति स्थित्वा च कञ्चित् कालं जगाम।

(२३३) परिव्राट् तेनैव क्रमेण पञ्च पञ्च राजतानि पुण्डरीकाणि उपायनीचकार। एकदा तु श्वेतकर्पटावृतं किमपि

(२३०) अनुरक्तेषु—अनुरागभाजनेषु, शरीरादिषु इव साधूना ["शरीरादिषु इव साधूनाम्" इत्यत्र "शरीरादिषु साधूनाम्" इति पाठान्तरम्] स्वामिनः,—प्रभवः, भवादृशा इति शेषः, प्रणयिनः,—प्रणयवन्तः, अनुरागिणो भवन्तीत्यर्थः; प्रभवः सेवकेषु शरीरेषु इव अनुरक्ता भवन्तीति भावः।

(२३१) कुशलजातं—मङ्गलसमूहः। स्पृहणीयम्—प्भिलषणीयम्। पदं—स्थानम्। गुरुणा—पूज्येन, भवता इति भावः।

(२३२) सकोष—सधनभाण्डारम्। निवेदितवान्—अर्पयामास। धनोष्मणा—धनदर्पेणेति यावत्। म्लायति—म्लानि प्राप्नोति। अलम्—अत्यर्थम्। मनस्विता—प्रशस्तमनस्कता। खद्योतानामिव—ज्योतिरिङ्गणानामिव, कीटमणिविशेषाणामिव इत्यर्थः। अपरोपतापिनी—न परान् उपतापयतीति तथोक्ता; धनिनान्तु तेजस्विता परोपतापिनी इति भावः। भूतेः,—सम्पदः। एवशब्दोऽन्ययोगव्यवच्छेदकः, तथा च, न मादृशा इति भावः।

(२३३) परिव्राट्—भैरवाचार्य्येण प्राक् प्रेषितः स भिक्षुः। तेनैव क्रमेण—प्राक् प्रदर्शितप्रकारेण। उपायनीचकार—उपहारीकृतवान्। श्वेतकर्पटावृत—शुभ्र-

आदाय प्राविशत्। उपविश्य च पूर्ववत् स्थित्वा मुहूर्त्तम् अब्रवीत्,—"महाभाग ! भवन्तम् आह भगवान्, यथा अस्मच्छिष्यः पातालस्वामिनामा ब्राह्मणः। तेन ब्रह्मराक्षसहस्तात् अपहृतो महाऽसिः अट्टहासनामा। सोऽयं भवद्भुजयोग्यो गृह्यताम्" इत्यभिधाय अपहृतकर्पटाच्छादनात् परिजनात् आचकर्ष शरद्गगनमिव पिण्डतां नीतं, (२३४) कालिन्दीप्रवाहमिव स्तम्भितजलं, नन्दकजिगीषया कृष्णकोपितं कालियमिव कृपाणतां गतं, लोकविनाशाय प्रकाशितधारासारं प्रलयकालमेघ-

---

वसनाच्छादितं, किमपि, वस्त्विति शेषः। "महाभाग" इति सम्बोधनं प्रकृतोपयोगि इति मन्तव्यं, भाग्यदेवताप्रसादलाभस्य आशुभावित्वात्। भगवान्—भैरवाचार्य्यः, भवन्तमाह, किमिति ? तदेवाह, यथेति—अस्मच्छिष्यः पातालस्वामिनामा ब्राह्मणः, कश्चिदस्तीति शेषः। तेन—पातालस्वामिनेत्यर्थः। महाऽसिः,—महान् तरवारिः। अपहृतेति।—अपहृतम्—अपनीतं, कर्पटाच्छादनं—वस्त्रावरणं येन तथोक्तात्, परिजनात्—अनुचरजनादित्यर्थः, ["कर्पटाच्छादनात् परिजनात्" इत्यत्र "कर्पटावच्छादनात् परिवारात्" इति पाठे,—वस्त्रावृतात् खड्गकोषात् इत्यर्थः। "आचकर्ष" इत्यस्य "कृपाणम्" इत्युत्तरेण सम्बन्धः। प्राक्—"श्वेतकर्पटावृतं किमपि आदाय प्राविशत्" इत्यनेन स्वयमेव आदाय प्राविशत् इति गम्यते, न तु अन्यस्य कस्यचित् प्रवेशः, अत्र तु "परिजनादाचकर्ष" इत्युक्तं चिन्त्यमेतत्, पूर्वोक्तवाक्यविरोधसम्बन्धात्। "परिवारात्" इति पाठे न काऽप्यनुपपत्तिः, तत्र आकर्षणे विरोधासम्बन्धात्]। शरद्गगनमिव—शरत्कालिकाकाशमिव, पिण्डतां नीतं—घनत्वं प्रापितं, नैर्म्मल्यादिति भावः, न तु शोभात्, असेः कृष्णतायाः वक्ष्यमाणत्वात्; यद्वा,—पिण्डतां नीतं—लोहत्वं गमितं, ("लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी" इत्यमरः)।

(२३४) कालिन्दीप्रवाहमिव—यमुनास्रोत इव, स्तम्भितजलं—स्थिरीकृततोयम्, कृष्णवर्णत्वात् कालिन्दीप्रवाहमिव इत्युक्तं, तथा सूर्य्यकिरणप्रतिबिम्बितः प्रवाहो यथा चाकचक्यमयो दृश्यते, असेरपि चलत्व-भासुरत्वात् तथात्वं बोद्धव्यम्। नन्दकजिगीषया—नन्दकस्य—विष्णोः खड्गविशेषस्य, जिगीषया—विजयेच्छया, कृष्णकोपितं—कृष्णेन कोपितं, दमनादिति भावः, कालियमिव—तदाख्यं यमुनावासिनं नागविशेषम् इव। लोकविनाशाय—जगत्संहाराय, प्रकाशितः,—व्यक्तीकृतः, धारासारः,—धारा-

खण्डमिव नभस्तलात् पतितं, (३३५) दृश्यमानविकटदन्तमण्डलं हासमिव हिंसायाः, हरिबाहुदण्डमिव कृतदृढमुष्टिग्रहं, सकलभुवनजीवितापहरणक्षमेण कालकूटेन इव निर्मितं, (३३६) कृतान्तकोपानलतप्तेन इव अयसा घटितम्, अतितीक्ष्णतया पवनस्पर्शेन अपि रुषेव क्वणन्तं, (३३७) मणिसभाकुट्टिमपतत्प्रतिबिम्बच्छद्मना आत्मानम् अपि द्विधेव पाटयन्तम्, (३३८) अरिशिरश्छेदलग्नैः कचैरिव किरणैः करालितधारं, मुहुर्मुहुः (३३९) तड़िदुन्मेषतरलैः प्रभाचक्रच्छुरितैः जर्ज्जरितातपं

---

सम्पातः, धारायाः,—निशितायस्य, सारः,—औत्कर्ष्यं यस्य तथोक्तञ्च। प्रलयकालमेघखण्डमिव—कल्पान्तकालिकजलदांशमिव, महानीलोज्ज्वलाभासत्वात्।

(३३५) दृश्यमानेति।—दृश्यमानानि विकटानि—करालानि, दन्तखण्डानि—दशनराजयः यस्मिन् तथाभूतम्; कृष्णवर्णस्य असेरतीवौज्ज्वल्यात् कृष्णवर्णाया हिंसायाः शुभ्रं हासमिवेत्युत्प्रेक्षा। कृतेति।—कृतः,—रचितः, दृढ़ः,—कठिनः, मुष्टिग्रहः,—मुष्टिबन्धः यस्मिन् तम्; अन्यत्र,—कृतः दृढं यथा तथा मुष्टेः,—मुष्टिकनामासुरस्य, ग्रहः,—ग्रहणं येन तथाभूतम्।

(३३६) कृतान्तेति।—कृतान्तस्य—यमस्य, कोपानलः,—क्रोधाग्निः, तेन तप्तम्—उष्णम्, अत एव गलितमिति भावः तेन, अयसा—लौहेन। अतितीक्ष्णतया—अतिनिशितत्वेन; तैक्ष्ण्यञ्च तनुत्वाज्जायते, तनु च अन्योऽन्यसङ्घर्षेण क्वणति इति हृदयम्। रुषेव—कोपेनेव, क्वणन्तं—रणन्तम्; अतितीक्ष्णप्रकृतिकोऽपि स्वल्पेनापि कोपकारणेन हुङ्करोति इति लोकः।

(३३७) मणीति।—मणिसभाकुट्टिमेषु—मणिमयसभातलेषु, पतत् यत् प्रतिबिम्बं, तस्य छद्म—छलम्; तदेव छद्म वा तेन। पाटयन्तं—विदारयन्तम्, अतितैक्ष्ण्यादिति भावः।

(३३८) अरीति।—अरीणां—शत्रूणां, शिरांसि, तेषां छेदेन लग्नाः,—संसक्ताः तैः, कचैरिव—केशैरिव; कृष्णवर्णस्य तस्य किरणानामपि कृष्णत्वात् कचैरिवेत्युत्प्रेक्षा; करालितधारं—करालिता—व्याप्ता, धारा यस्य तथोक्तम्।

(३३९) तड़िदिति।—तड़ितां—विद्युताम्, उन्मेषाः,—विकासाः, तद्वत् तरलानि—चपलानि तैः। प्रभाचक्राणां—किरणमण्डलानां, छुरितैः,—क्षुरणैः,

खण्डशश्छिन्दन्तमिव दिवसं, कटाक्षमिव कालरात्रेः, कर्णोत्पल-मिव कालस्य, (२४०) ओङ्कारमिव क्रौर्य्यस्य, अलङ्कारम् अहङ्कारस्य,कुलमित्रं कोपस्य,देहं दर्पस्य,सुसहायं साहसस्य,अपत्यं मृत्योः, आगमनमार्गं लक्ष्म्याः, निर्गमनमार्गं कीर्त्तेः कृपाणम्।

अवनिपतिस्तु तं गृहीत्वा करेण (२४१) आयुधप्रीत्या प्रतिमानिभेन आलिङ्गन्निव सुचिरं ददर्श; सन्दिदेश च,—"वक्तव्यो भगवान्, (२४२) परद्रव्यग्रहणावज्ञादुर्विदग्धम् अपि हि मे मनो युष्मद्विषये न शक्नोति वचनव्यतिक्रमव्यभिचार-माचरितुम्" इति। परिव्राट् तु गृहीते तस्मिन् परितुष्टः "स्वस्ति भवते, साधयामि" इत्युक्त्वा निरयासीत्। नृपस्य प्रकृत्या वीररसानुरागो तेन कृपाणेन अमन्यत करतलवर्त्तिनीं मेदिनीम्।

---

उन्मेषैरित्यर्थः, जर्ज्जरितः,—खण्डखण्डीकृतः, मन्दीकृत इति यावत्, आतपः,—सूर्य्यालोकः येन तथोक्तम्; अत एव दिवसं खण्डशः,—खण्डखण्डं कृत्वा इत्यर्थः छिन्दन्तमिव—पाटयन्तमिव।

(२४०) ओङ्कारमिव—उपक्रममिव, प्रारम्भमिवेति भावः; यद्वा—अभ्युपगममिव, स्वीकारमिवेत्यर्थः, ("ओमुपक्रमे। प्रणवे चाभ्युपगमे" इति मेदिनी)। क्रौर्य्यस्य—निष्ठुर-तायाः। कुलमित्रं—कुलेन—वंशपरम्परया, मित्रं—सुहृदम्। अपत्यं मृत्योरिति।—असेर्मरणसाधनत्वात् पैतृकगुणस्य पुत्रे सद्भावसम्भावनत्वाच्च मृत्योरपत्यत्वं तस्य बोद्धव्यम्। कृपाणम्—असिम्।

(२४१) आयुधप्रीत्या—आयुधे—अस्त्रे, या प्रीतिः,—अनुरागः, वीरसुलभा-सक्तिरिति भावः तया। प्रतिमानिभेन—प्रतिबिम्बच्छलेन, स्वस्येति शेषः, दर्पणस्वच्छे तत्र आत्मप्रतिबिम्बसङ्क्रमणादिति भावः। सन्दिदेश—वाचिकं कथयामास। भगवान्—भैरवाचार्य्य इति भावः।

(२४२) परेति।—परेषां द्रव्याणि—धनानि, तेषां ग्रहणं, तस्मिन् अवज्ञा—अनादरः, तया दुर्विदग्धं—दुर्विनीतं, दृप्तम् इति यावत्। वचनेति।—वचनस्य—आज्ञावाक्यस्य, व्यतिक्रमः,—लङ्घनमेव, व्यभिचारः,—दोषः तम्। साधयामि—गच्छामि, "प्रायेण ण्यन्तकः साधिः गमेः स्थाने प्रयुज्यते" इति दर्पणात्। ["साध-यामि" इत्यत्र "साधयामः" इति पाठे —गच्छामः इत्यर्थः]

अथ व्रजत्सु दिवसेषु एकदा भैरवाचार्य्यो राजानम् (३४३) उपह्वरे सोपग्रहम् अवादीत्,—"तात! स्वार्थालसाः परोपकारदक्षाश्च प्रकृतयो भवन्ति भव्यानाम्। भवादृशाञ्च अर्थिदर्शनं महोत्सवः, प्रयाचनम् आराधनम्, अर्थग्रहणम् उपकारः। भूमिरसि सर्व्वलोकमनोरथानाम्; येन अभिधीये, श्रूयताम्;—(३४४) भगवतो महाकालहृदयनाम्नो महामन्त्रस्य कृष्णस्रगम्बरानुलेपेन आकल्पेन कल्पकथितेन महाश्मशाने जपकोट्या (३४५) कृतपूर्व्वसेवोऽस्मि।

---

(३४३) उपह्वरे—एकान्ते, रहसि इति यावत्, ("उपह्वरं समीपे स्यादेकान्ते च नपुंसकम्" इति मेदिनी) सोपग्रह—सानुकूलं, साभ्यर्थनमिति भावः, ("उपग्रहः पुमान् बन्द्यामुपयोगेऽनुकूलने" इति मेदिनी)। स्वार्थालसाः,—स्वकार्य्यपराङ्मुखा इत्यर्थः। भव्याना—सज्जनानाम्। अर्थिदर्शनं—याचकदर्शनं, महोत्सवः,—आनन्दजननम्; भवादृशा अर्थिनो दृष्ट्वा महान्तम् आनन्दम् अनुभवन्ति इत्यर्थः। प्रयाचन—याञ्चा, [आ]राधनं—पूजनम्, अर्थिषु याचमा[ने]षु आत्मानम् आराधित मन्यन्ते इति भावः। ["प्रयाचनम्" इत्यत्र "प्रणय[न]म्" इति पाठेऽपि स एवार्थः] अर्थग्रहणम् उपकारः,—अर्थिषु अर्थान् गृह्णत्सु आत्मा[न]म् उपकृतं मन्यन्ते इत्याशयः। भूमिः,—पात्रम्। सर्वेति।—सर्व्वलोकाना—सर्वेषां प्राणिनां, मनोरथानाम्—अभिलाषाणाम्, सर्व्वे एव त्वां सदैव मनसा स्मरन्ति इति भावः, यद्वा,—मनोरथानां—मनोऽभीष्टपूरणानामि[त्य]र्थः। रथा अपि भूमौ गच्छन्ति इत्यपि व्यज्यते। अभिधीयसे—कथ्यसे, त्वम् एवमिति शेषः।

(३४४) भगवतः,—ईश्वरस्य, हरस्य इत्यर्थः। महाकालेति।—महाकालस्य—हरस्य, हृदयं—हृदयनिहितं वस्त्विति महाकालहृदय, तत् नाम यस्य तथोक्तस्य। "जपकोट्या" इत्युत्तरेणान्वयः, जपकोट्या—कोटिसङ्ख्याकजपेन इत्यर्थः। कृष्णेति।—कृष्णाः,—कृष्णवर्णाः, स्रजः,—माल्यानि, अम्बराणि—वसनानि, अनुलेपाः,—अनुलेपनानि, गन्धद्रव्याणि इत्यर्थः यस्मिन् तथाभूतेन, आकल्पेन—वेशेन, परिच्छदेनेत्यर्थः, ("आकल्पवेशौ नेपथ्यं प्रतिकर्म्म प्रसाधनम्" इत्यमरः)। कल्पकथितेन—कल्पः,—शास्त्रम्, इतिकर्त्तव्यतासमू[हो]पदेशकः ग्रन्थः इत्यर्थः, ("कल्पः शास्त्रे विधौ न्याये—" इति मेदिनी) तत्कथितेन—एतन्महामन्त्रविधानग्रन्थोक्तेन।

(३४५) कृतेति।—कृता पूर्व्वं सेवा येन तथाभूतः।

(३४६) तस्य वेतालसाधनावसाना सिद्धिः। असहायैश्च सा दुरवापा, त्वञ्च अलम् अस्मै कर्म्मणे। त्वयि च गृहीतभरे भविष्यन्ति अपरे सहायाः त्रयः। एकः स एव अस्माकं टीटिभ-नामा (३४७) बालमित्रं मस्करी, यो भवन्तम् उपतिष्ठते, द्वितीयः स पातालस्वामी, अपरो मच्छिष्य एव कर्णतालनामा द्राविड़ः। यदि साधु मन्यसे, ततो नीयताम् अयं दिङ्नागहस्त-दीर्घो गृहीताट्टहासो निशामेकाम् एकदिङ्मुखार्गलतां बाहुः"।

इति कृतवचसि च तस्मिन्, (३४८) अन्धकारं प्रविष्ट इव दृष्टदीपप्रकाशः (३४९) प्राप्तोपकारावकाशः प्रमुदितेन अन्तरात्मना नरेन्द्रः समभाषत,—"भगवन्! परम् अनुगृहीतो-ऽस्मि, अनेन शिष्यजनसामान्येन निदेशेन कृतपरिग्रहमिव

(३४६) तस्य—तादृशमन्त्रजपस्येत्यर्थः। वेतालेति।—वेतालस्य—शिवानु-चरभेदस्य, भूताधिष्ठितशवविशेषस्य वा, साधनं—वशीकरणम्, अवसानं यस्याः तथाभूता, सिद्धिः,—साफल्यम्; वेतालसाधनमृते सा सिद्धिः न लभ्यते इति भावः। सा—सिद्धिः, असहायैः,—सहायशून्यैः, दुरवापा—दुर्लभा। अलं—समर्थः, ("अलं व्यर्थ-समर्थयोः" इत्यमरः)। अस्मै कर्म्मणे—मत्साहाय्यायेत्यर्थः, ["नमः-स्वस्ति—" (२।३।१६ पा०) इति अलंशब्दयोगे चतुर्थी]। गृहीतभरे—भारं गृह्णतीत्यर्थः।

(३४७) बालमित्रं—शैशवसुहृत्। मस्करी—परिव्राट्। उपतिष्ठते—उपास्ते, ["उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" (वा०) इति सङ्गति-करणार्थे तङ्]। द्राविड़, द्राविड़देशीयः। साधु—समीचीनम्। दिङ्नागहस्त-दीर्घः—ऐरावतशुण्डवदायतः। एकदिङ्मुखार्गलताम्—एका दिक्, तस्या मुखस्य अर्गलताम्—अवरोधकदण्डताम्। बाहुः, तवेति शेषः, सशस्त्रः सन् एकस्यां रात्रौ मम वेतालसाधनविषये साहाय्यं कुरु इति भाव।

(३४८) अन्धकारं प्रविष्ट इव—तिमिरं गत इवेत्यर्थः। दृष्टदीपप्रकाशः,—अवलोकितदीपालोकः। ["दृष्टदीपप्रकाशः" इत्यत्र "दृष्टप्रकाशः" इति पाठे,—दृष्टः प्रकाशः,—आलोकः येन तथाभूतः]।

(३४९) प्राप्तेति।—प्राप्तः उपकाराय—प्रत्युपकाराय इत्यर्थः, अवकाशः,—समयः;

आत्मानम् अवैमि" इति। ननन्द च तेन नरेन्द्रव्याहृतेन भैरवाचार्य्यः; चकार च सङ्केतम्—"आगामिन्याम् एव असितपक्षचतुर्दशीक्षपायाम् इयत्यां वेलाया अमुष्मिन् महाश्मशानसमीपभाजि शून्यायतने शस्त्रद्वितीयेन आयुष्मता द्रष्टव्या वयम्" इति।

(२५०) अथ अतिक्रान्तेषु अहःसु, प्राप्तायाञ्च कृष्णपक्षचतुर्दश्यां, शैवेन विधिना दीक्षितः क्षितिपालो नियमवान् अभूत्। (२५१) कृताधिवासश्च सम्पादितगन्धपुष्पधूपमाल्यादिपूजं खड्गम् अट्टहासं सहायम् अकरोत्। ततः परि-

---

भैरवाचार्य्यकृतोपकारपरिशोधार्थम् इति भावः येन तथाभूत। प्रमुदितेन—प्रहृष्टेन। अन्तरात्मना—मनसा। शिष्येति।—शिष्यजनेन—अन्तेवासिलोकेन सह, सामान्य—समानस्य भावः, तुल्यता इत्यर्थः तेन, शिष्यजनोचितेनेत्यर्थः। निर्देशेन—आज्ञया। कृतेति।—कृतः परिग्रहः,—ग्रहणम्, आश्रयदानम् इति भावः यस्य तथोक्तमिव, मवत्परिजनमिवेत्यर्थः। अवैमि—वेद्मि, मन्ये इत्यर्थः। नरेन्द्रव्याहृतेन—राजवचनेन। सङ्केतम्—इङ्गितम्। ["आगामिन्यामेव" इत्यत्र "अस्यामेवागामिन्याम्" इति पाठान्तरम्]। असितपक्षचतुर्दशीक्षपाया—कृष्णपक्षीयचतुर्दशीरात्रौ। इयत्या वेलायाम्—एतत्परिमिते समये। महाश्मशानसमीपभाजि—महाश्मशानस्य समीपं भजते इति तथोक्ते, महाश्मशाननिकटवर्त्तिनि इत्यर्थः, शून्यायतने—निर्जने स्थाने, शून्यदेवालये वा।

(२५०) अथेति।—अतिक्रान्तेषु—अतीतेषु, अहःसु—दिवसेषु। ["प्राप्तायाञ्च कृष्णपक्षचतुर्दश्याम्" इत्यत्र "प्राप्तायाञ्च तस्यामेव कृष्णचतुर्दश्याम्" इति पाठान्तरम्]। शैवेन विधिना—शिवोपासनाविधानेन, दीक्षितः,—संयतः, कृतनियम इत्यर्थः। [दीक्षधातोः "निष्ठा" (३।२।१०२ पा०) इति कर्म्मणि निष्ठायां रूपम्। "क्षितिपाल" इत्यत्र "क्षितिपः" इति पाठान्तरम्]। नियमवान्—व्रतनिष्ठः।

(२५१) कृताधिवास—कृतः अधिवासः,—व्रतदिनात् पूर्व्वदिने गन्धादिना संस्कारः यस्य तं, ("संस्कारो गन्धमाल्याद्यैः यः स्यात् तत् अधिवासनम्" इत्यमरोक्तेः)। सम्पादितेति।—सम्पादिता—कारिता, गन्धपुष्पधूपमाल्यादिभिः पूजा यस्य तथोक्तम्। ["गन्धपुष्पधूप—" इत्यत्र "गन्धधूप—" इति पाठान्तरम्। "अट्टहासं सहायमकरोत्" इत्यत्र "अट्टहासमकरोत्" इति पाठान्तरम्]। "ततः" इत्यस्य

गते दिवसे केनापि कर्म्मसाधनाय क्षतरुधिरबलिविधानासु इव लोहितायमानासु दिक्षु, रुधिरबलिलम्पटासु च वेतालजिह्वासु इव लम्बमानासु च रविदीधितिषु. ( ३५२ ) नरेन्द्रानुरागेण इव गृहीतापरदिशि स्वयमेव दिक्पालतां चिकीर्षति सवितरि, यातुधानीषु इव वर्द्धमानासु तरुच्छायासु, पातालतलवासिषु विघ्नाय दानवेषु इव उत्तिष्ठत्सु तमोमण्डलेषु, नभसि पुञ्जीभवति रौद्रं कर्म्म दिदृक्षमाणे इव नक्षत्रगणे, विगाढ़ायां शर्व्वर्य्यां, ( ३५३ ) सुप्तजननिःशब्दे स्तिमिते

---

"राजा नगरात् निरगात" इत्युत्तरेणान्वयः। परिणते—अवसानं गते। [ अत "परिणते दिवसे" इत्यादिषु सर्व्वत्र "यस्य च भावेन—" ( २।३।३७ पा० ) इत्यादिना भावे सप्तमी ज्ञेया ]। केनापि, जनेनेति शेषः। क्षतेति।—क्षतम्—अनुष्ठितं, रुधिरेण—रक्तेन, बलिविधान—पूजाविधिः यासां तथोक्तासु इव, लोहितायमानासु—सन्ध्यारागरञ्जितासु इति भावः। रुधिरेति।—रुधिरबलिषु—रक्तोपहारप्राप्तिषु इत्यर्थ, लम्पटाः,—लुब्धाः तासु, वेतालजिह्वासु इव—भूतरसनासु इव, रविदीधितिषु—सूर्य्यकिरणेषु।

( ३५२ ) नरेन्द्रानुरागेण—राजानुरक्त्या। [ "नरेन्द्रानुरागेण इव' इत्यत्र "नरेन्द्रानुरागिण" इति पाठान्तरम् ]। गृहीतेति।—गृहीता अपरा—पश्चिमा, दिक् येन तथोक्ते। [ "स्वयमेव' इत्यत्र "स्वयमिव" इति पाठान्तरम् ]। सवितरि—सूर्य्ये। यातुधानीषु—राक्षसीषु इव, ( "राक्षस कौणपः क्रव्यात्······। यातुधानः पुण्यजन ····॥" इत्यमर ) वर्द्धमानासु—वृद्धिं गच्छन्तीषु, लम्बमानासु इत्यर्थः। पातालतलवासिषु—रसातलाभ्यन्तरस्थितेषु। [ "पातालतलवासिषु" इत्यत्र "पातालवासिषु" इति पाठान्तरम् ]। विघ्नाय—कार्य्यव्याघाताय, राज्ञः इति भावः। तमोमण्डलेषु—तिमिरनिचयेषु। नभसि—आकाशे, पुञ्जीभवति—बहुलीभवति, क्षपाप्रचरजन्या नक्षत्राणि बहुलानि दृश्यन्ते इति भावः। रौद्रं—दारुणम्। दिदृक्षमाणे इव—द्रष्टुमिच्छति इव, [ "ज्ञाश्रु—" ( १।३।५७ पा० ) इत्यादिना सन्नन्तस्य दृशेः तङि "लटः—" ( ३।२।२४ पा० ) इत्यादिना शानचि रूपम् ]। दिदृक्षवोऽपि एकतः पुञ्जीभवन्ति इति दृश्यते लोके। विगाढ़ायां—घनीभूतायां, शर्व्वर्य्यां—रजन्याम्।

( ३५३ ) सुप्तेति।—सुप्ताः,—निद्रिताः, जना यस्मिन् तथोक्तः, अत एव

निशीथे राजा (३५४) सान्तःपुरं परिजनं वञ्चयित्वा, (३५५) वामकरस्फुरत्त्सरुः दक्षिणकरेण उत्खातं खड्गम् अट्टहासम् आदाय, विसर्पता च खड्गप्रभापटलेन नीलांशुक-पटेन इव दर्शनभयात् (३५६) अवगुण्ठितनिखिलगात्रयष्टिः, अनादिष्टयाऽपि अनुगम्यमानो राजलक्ष्म्या पृष्ठतः, (३५७) परिमललग्नमधुकरवेणिव्याजेन केशेषु इव कर्म्मसिद्धिम् आकर्षन्, एकाकी नगरात् निरगात्, अगाच्च तं देशम्।

---

निःशब्दः,—शब्दरहितः तस्मिन्। स्तिमिते—तूष्णीम्भूते इति भावः। [ "निःशब्दे स्तिमिते" इत्यत्र "निःशब्दस्तिमिते" इति समस्तपाठान्तरम् ]। निशीथे—अर्द्धरात्रे, ("अर्द्धरात्र-निशीथौ द्वौ" इत्यमरः)।

(३५४) सान्तःपुरम्—अन्तःपुरम्—अन्तःपुरवर्त्तिन्यः स्त्रियः इत्यर्थः, तत्सहितं, परिजनं—स्वजनम् इत्यर्थः, वञ्चयित्वा—प्रतार्य्य, गोपायित्वा इत्यर्थः।

(३५५) वामेति।—वामे—सव्ये, करे—हस्ते, स्फुरन्—दीप्यमानः, रत्नखचितत्वादिति भावः, त्सरुः,—खड्गमुष्टिः यस्य तथाभूतः, ("त्सरुः खड्गादिमुष्टौ स्यात्" इत्यमरः)। उत्खातं—निष्कोषितम् इत्यर्थः। विसर्पता—प्रसरता, खड्गप्रभापटलेन—असिच्छटासमूहेन, नीलांशुकपटेन इव—नीलांशुकं—कृष्णवसनमेव, पटः,—तिरस्करिणी तेन इव। अत्र उपमेयोपमानयोः खड्गप्रभापटल-नीलांशुकपटयोः अवैधर्म्य-वाच्यसाम्यनिबन्धनोपमाऽलङ्कृतिः। सहोपमा इति केचित्।

(३५६) अवगुण्ठितेति।—अवगुण्ठिता—आच्छादिता, निखिला—समग्रा, गात्रयष्टिः,—शरीरदण्डः येन यस्य वा तथोक्तः, खड्गस्य नीलवर्णप्रभया रञ्जितसर्व्व-देह इत्यर्थः; शाणसमुज्ज्वलात् खड्गात् निःसृतनीलप्रभया विच्छुरितविग्रहतया नीलांशुकावृतवत् परिलक्ष्यते इति भावः। अनादिष्टयाऽपि—अनाज्ञप्तयाऽपि, राजलक्ष्म्या—राजश्रिया, अनुगम्यमानः,—अनुस्रियमाणः; एतेन प्रभूतलक्ष्मीलाभः सूचितः।

(३५७) परिमलेति।—परिमलेन—अतिमनोहरगात्रसौरभेण, ("स्यात् परिमलोऽतिमर्द्दातिमनोहरगन्धयोश्चापि" इति मेदिनी) लग्नानां—संसक्तानां, मधुकराणां—भ्रमराणां, वेणिः—राजिः, तस्याः सैव वा व्याजः,—छलं तेन। कर्म्मसिद्धिं—कार्य्यसाफल्यम्। एकाकी—असहायः। देशं—स्थानम्। [ "तं देशम्" इत्यत्र "तमुद्देशम्" इति पाठेऽपि स एवार्थः ]।

(३५८) अथ प्रत्युज्जग्मुः ते त्रयोऽपि (३५९) द्रौणि-कृप-कृतवर्म्माण इव सौप्तिके (३६०) सन्नद्धाः, स्नाताः, स्रग्विणः, गृहीतविकटवेशाः, (३६१) कुसुमशेखरसञ्चारिभिः क्रियमाणसन्त्रशिखाबन्धा इव गुञ्जद्भिः षट्चरणैः, (३६२) उष्णीषपट्टकान् ललाटमध्यघटितविकटस्वस्तिकाग्रन्थीन् महामुद्राबन्धान् इव धारयन्तः मूर्द्धभिः, (३६३) एक-श्रवण-विवर-विततविमलदन्तपत्रप्रभालेपधवलितकपोलैः मुखैः आपिबन्त

(३५८) अथेत्यादि।—प्रत्युज्जग्मुः,—प्रत्युद्गतवन्तः, राजानं दृष्ट्वा तत्सम्मानार्थं मुत्तस्थुः इत्यर्थः। त्रयः,—टीटिभ-कर्णताल-पातालस्वामिनः इत्यर्थः। [ "त्रयोऽपि" इत्यत्र "त्रय." इति पाठान्तरम् ]।

(३५९) द्रौणीति।—द्रोणस्यापत्यं द्रौणिः,—अश्वत्थामा, कृपः,—कृपाचार्य्यः, कृतवर्म्मा—यादववीरविशेषः ते इव। सौप्तिके—सुप्तेषु भवं सौप्तिकं तस्मिन्,महाभारतीय-सौप्तिकाख्ये पर्व्वणि इत्यर्थः। [ "तत्र भव." (४।३।५३ पा०) इति ठञि रूपम् ] पुरा दुर्य्योधने भग्नोरौ समरपतिते अश्वत्थामादयस्त्रयः प्रभोः प्रीतिसम्पादनाय पाण्डव-शिबिरे धृष्टद्युम्नाधिष्ठिते सुप्तेषु सर्वेषु अवशिष्टेषु सैनिकवीरेषु कथमपि प्रविश्य सर्वाणि सैनिकानि व्यनाशयन्निति भारती वार्त्ता।

(३६०) सन्नद्धाः,—वर्म्मिताः, परिहितवर्म्माण इत्यर्थः, ( "सन्नद्धः वर्म्मितः सज्जो दंशितो व्यूढकङ्कटः." इत्यमरः )। स्नाताः,—कृतस्नानाः। स्रग्विणः,—मालाधारिणः।

(३६१) कुसुमेति।—कुसुमशेखरेषु—शिरोभूषणभूतपुष्पमालासु इत्यर्थः, सञ्चरन्तीति तैः। षट्चरणैः,—मधुकरैः, क्रियमाणाः मन्त्रेण शिखाबन्धाः,—कायबन्धाः प्रसिद्धाः येषां ते इव।

(३६२) उष्णीषपट्टकान्—शीर्षावरणकर्पटान्। ललाटेति।—ललाटस्य—भालस्य, मध्ये घटितः,—रचितः, विकटः,—दृढः, स्वस्तिकाग्रन्थिः,—स्वस्ति—शुभं, तस्मै हिता स्वस्तिका—स्वस्तिकाकार इत्यर्थः, ग्रन्थिः,—बन्धविशेषः येषु तान्। महामुद्राबन्धानिव—महान्तः मुद्राबन्धाः,—वीराचारानुष्ठेयबन्धनविशेषाः तानिव। मूर्द्धभिः,—शिरोभिः।

(३६३) एकेति।—एकस्मिन् श्रवणविवरे—श्रोत्ररन्ध्रे, वितता—विस्तृता, विमलस्य—विशदस्य, दन्तपत्रस्य—गजदन्तनिर्म्मितपत्राकारस्य कर्णभूषणविशेषस्य इत्यर्थः, या प्रभा—दीप्तिः, तस्याः लेपः,—आलेपनम्; यद्वा,—प्रभा—दीप्तिः,

इव (२६४) निशाचरापचयचिकीर्षया शार्वरम् अन्धकारम्, (२६५) इतरकर्णावलम्बिनां रत्नकुण्डलानाम् अच्छाच्छया रुचा गोरोचनयेव मन्त्रपरिजप्तया समालब्धाः, स्वप्रतिबिम्बगर्भान् कर्म्मसिद्धये (२६६) दत्तपुरुषोपहारान् इव उल्लासयन्तः निशितान् निस्त्रिंशान्, (२६७) निशितनिस्त्रिंशांशुसन्तानसीमन्तिततिमिराम् (२६८) आत्मीयदिग्भागसंरक्षणाय त्रिधेव नियामां

सा एव लेपः,—आलेपनसुधा तेन, ["प्रभालेप—" इत्यत्र "प्रभाऽऽलोकलेप—" इति पाठे,—प्रभा, तस्याः आलोकः,—उद्योतः, तेन लेपः, प्रभाया आलोक एव लेपः इति वा तेन] धवलिताः,—सितीकृताः, कपोलाः,—गण्डदेशाः येषां तैः। आपिवन्त इव—ग्रसन्त इव।

(२६४) निशाचरेति।—निशाचराणां—राक्षसानाम्, अपचयचिकीर्षा—अपकारेच्छा, हानिकरणेच्छा इत्यर्थः तया। शार्वरं—शर्वरी—रात्रिः, तत्र भवः शार्वरः तं—रात्रिकालिकम्, निशाचराः निशासु अन्धकारे एव प्रभवन्ति, अन्धकारापगमे तेषां प्रभावाभावेन अपकारसाधनस्य सौकर्य्यादिति भावः।

(२६५) इतरकर्णावलम्बिनाम्—अपरकर्णलम्बमानानाम्। अच्छाच्छया—अतिनिर्म्मलया, रुचा—प्रभया, गोरोचनयेव—गोरोचना—माङ्गलिकद्रव्यभेदः, तया, पीतप्रभयेति भावः। मन्त्रपरिजप्तया—मन्त्रेण परिजप्ता—विशोधिता तया। समालब्धाः,—अनुलिप्ताः। स्वप्रतिबिम्बगर्भान्—स्वस्य प्रतिबिम्बः—प्रतिच्छाया, गर्भे—अभ्यन्तरे येषां तान्। कर्म्मसिद्धये—कार्य्यसिद्ध्यर्थम्।

(२६६) दत्तेति।—दत्तः,—अनुष्ठितः, पुरुषोपहारः,—नरबलिः येभ्यः तानिव, निशितान्—तीक्ष्णान्, निस्त्रिंशान्—खड्गान्, ("खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः" इत्यमरः) उल्लासयन्तः,—सञ्चालयन्तः।

(२६७) निशितनिस्त्रिंशेति।—निशितनिस्त्रिंशानां—शाणितखड्गानां, ["निशितनिस्त्रिंशांशु—" इत्यत्र "निस्त्रिंशांशु—" इति पाठान्तरम्] अंशुसन्तानैः,—प्रभानिवहैः, सीमन्तितानि—विभक्तानि इति यावत्, तिमिराणि—तमांसि यस्याः ताम्, तथा। तेषां खड्गत्रयप्रभया तत्रत्यान्धकारनिरसनात् अन्यत्र चान्धकारस्य सत्त्वात् सीमन्तिततिमिरामिव प्रतीयमानामिति भावः।

(२६८) आत्मी[illegible]ति।—आत्मीयः,—स्वीयः, ["आत्मीय—" इत्यत्र "आत्मीयात्मीय—" इति पा[illegible]—स्वीयस्वीय इत्यर्थः] दिशां भागः,—दिगंशः, रक्षणीया दिक् इत्यर्थः

पाटयन्तः, (२६९) सार्द्धचन्द्रैः कलधौतबुद्बुदावलितरलतारागणैः निशाया इव (२७०) परुषासिधारानिकृत्तैः खण्डैः गृहीतैः चर्म्मफलकैः अकाण्डशर्वरीम् अपरां घटयन्तः, (२७१) काञ्चन-शृङ्खलाकलापनियमितनिबिडनिष्प्रवाणयः, बद्धासिधेनवः,टीटिभ-कर्णताल-पातालस्वामिनो निवेदितवन्तश्च आत्मानम्।

अवनिपतिस्तु—(२७२) "कोऽत्र कः?" इति त्रीन् अपृच्छत्। आचचक्षिरे च स्वं स्वं नाम त्रयोऽपि ते। तैरेव च अनुगम्यमानो जगाम तां बलिदीपालोकजर्ज्जरितगुग्गुलुधूप-

तस्य सरचणं—सम्यक् पालनं, शवीराक्रमणप्रतिरोधार्थमितस्ततः सन्दर्शनम् इति भावः तस्मै। त्रियामा—रजनी, पाटयन्तः,—खण्डयन्तः।

(२६९) सार्द्धचन्द्रैः,—अर्द्धचन्द्रालङ्कृतै इत्यर्थः, निशाया चर्मफलकेषु च अर्द्ध-चन्द्रस्य सम्भाव्यमानत्वात् एवमुक्त, न तु वास्तवत्वेन कृष्णचतुर्द्दशीरात्रौ चन्द्रः सम्भवतीति। कलधौतेति।—कलधौत—रौप्य, ("कलधौत रूप्य-हेम्नो." इत्यमरः) तस्य बुद्बुदावलिः,—बुद्बुदा,—जलस्फोटा, तदाकारबिन्दुविशेषाः इत्यर्थः, तेषामावलिः,—श्रेणी, तद्वत् तरल,—स्फुरन् इति भाव, तारागण,—तारकाकारचिह्नसमूह इत्यर्थ. येषु तै।

(२७०) परुषेति।—परुषाभि,—निशिताभि., असिधाराभि. निकृत्ता,—छिन्ना. तैः। चर्मफलके —"ढाल" इति बङ्गभाषाप्रसिद्धे., अपरा—द्वितीयाम्, अकाण्डशर्व्वरीम्—असमयरजनीम्, (एकस्या वर्त्तमानत्वात् अपरामिति पद बोद्धव्यम्) घटयन्त,—जनयन्त.।

(२७१) काञ्चनेति।—काञ्चनशृङ्खलाकलापेन—पुंसा कटीबन्धनसाधनस्वर्णमय-काञ्चीसमूहेन, ("शृङ्खलं पुंस्कटीकाञ्च्याम्" इति हैमः) नियमित—निबद्ध, निबिड—घनं, निष्प्रवाणि—नव वस्त्र यै. ते, ("अनाहत निष्प्रवाणि तन्त्रकञ्च नवाम्बरे" इत्यमरः)। बद्धेति।—बद्धा—गृहीता, असिधेनुः,—छुरिका यै. तथोक्ताः, ("स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका" इत्यमरः)। निवेदितवन्तः,—भैरवाचार्य्यनिर्देशेन भवन्तं प्रतीक्षामहे इति कथितवन्त इत्यर्थः।

(२७२) "कोऽत्र क.?" इति वाक्यैकाशीतिः, अत्र कः कः वर्त्तते? इत्याशयः; यद्वा—अत्र—युष्मासु त्रिषु मध्ये,कः,—को जनः,कः,—किन्नामधेयः? इत्यर्थः। बलिदीपेति।—बलिदीपस्य—पूजाप्रदीपस्य, आलोकेन—प्रभया, जर्ज्जरितानां—विनष्टप्रायाणां,

धूमग्रस्यमाणदिग्भागतया विक्षिप्यमाणरक्षासर्षपार्द्धदग्धान्ध-कारपलायमाननिशामिव समुपकल्पितसर्वोपकरणां निःशब्दाञ्च गम्भीराञ्च भीषणाञ्च साधनभूमिम्।

( ३७३ ) तस्याञ्च कुमुदधूलिधवलेन भस्मना लिखितस्य महतो मण्डलस्य मध्ये स्थितं, ( ३७४ ) दीप्त-तरतेजःप्रसरं, पृथुपरिवेशपरिच्छिन्नमिव शरत्सवितारं, ( ३७५ ) मथ्यमानक्षीरोदावर्त्तमध्यवर्त्तिनम् इव मन्दरं,

मन्दीभूतप्रभाणामिति भावः, गुग्गुलुधूपानां—गुग्गुलुधूपदानार्थरचिताग्नीनामिति भावः, धूमैः ग्रस्यमाणः,—छाद्यमानः,दिग्भागो यस्याः तस्या भावः तत्ता तया। विक्षिप्यमाणेति। —विक्षिप्यमाणैः,—प्रकीर्य्यमाणैः, विघ्नापनयनार्थमिति भावः, रक्षासर्षपैः,—रक्षार्थं—विघ्नेभ्यो पूजाद्यनुष्ठानरक्षणार्थं, सर्षपाः,—गौरसिद्धार्थाः, मन्त्रपूता इति भावः तैः, अर्द्धदग्धम् अन्धकारं यस्याः तथाभूता, अत एव पलायमाना निशा यस्याः यस्यां वा तथोक्ताम्। "बलिदीप" इत्यनेन अर्द्धदग्धत्वमेव सम्भाव्यते, अर्द्धदग्धस्य च पलायनमपि सङ्गच्छते, न तु बहुदग्धस्य; पलायमानश्च कश्चित् दिग्भागमाश्रयतीति विभावनीयम्। समुपकल्पितेति।—समुपकल्पितानि—समायोजितानि, सर्वाणि उपकरणानि—साधन-द्रव्याणि यस्यां ताम्। साधनभूमिं—मन्त्रसाधनक्षेत्रम्।

( ३७३ ) "तस्याञ्च" इत्यस्य "भैरवाचार्य्यमपश्यत्" इत्युत्तरेणान्वयः। कुमुदेति। —कुमुदानां—सितोत्पलानां, धूलिः,—परागः, तद्वत् धवलः तेन। लिखितस्य—रचितस्य। मण्डलस्य—मण्डलाकाररेखायाः।

( ३७४ ) दीप्तेति।—दीप्ततरः,—अतिशयेन भास्वान्, तेजसां प्रसरः,—विस्तारः यस्य तथोक्तम्, अत एव पृथ्विति।—पृथुना—विशालेन, परिवेशेन—परिधिना, मण्डलविशेषेण इत्यर्थः, ( "परिवेशस्तु परिधिरुपसूर्य्यकमण्डले" इत्यमरः ) परिच्छिन्नः,—वेष्टितः तं, शरत्सवितारं—शारदं सूर्य्यमिव, स्थितमिति शेषः; शारदसूर्य्यस्य सुतीक्ष्ण-किरणत्वात् तद्ग्रहणं; तेन च भीषणदर्शनत्वमस्योक्तमिति ज्ञातव्यम्।

( ३७५ ) मथ्यमानेति।—मथ्यमानस्य—विलोड्यमानस्य, क्षीरोदस्य—क्षीर-सागरस्य, आवर्त्तमध्ये—जलभ्रमिमध्ये, ( "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः ) वर्त्तते इति तथोक्तं, [ "क्षीरोदावर्त्तमध्यवर्त्तिनम्" इत्यत्र "क्षीरोदावर्त्तवर्त्तिनम्" इति पाठे, आवर्त्ते—आवर्त्तमध्ये इत्यर्थः ]। मन्दरं—मन्दराद्रिम्।

(३७६) रक्तचन्दनानुलेपिनो (३७७) रक्तस्रगम्बराभरणस्य उत्तान-शयस्य शवस्य उरसि उपविश्य (३७८) जात-जातवेदसि मुख-कुहरे (३७९) प्रारब्धाग्निकार्य्यं, (३८०) कृष्णोष्णीषं,कृष्णाङ्गरागं, कृष्णप्रतिसरं, कृष्णवाससं, (३८१) कृष्णतिलाहुतिनिभेन विद्याधरत्वतृष्णया (३८२) मानुषनिर्माणकारणकालुष्य-परमाणूनिव क्षयम् उपनयन्तम्, आहुतिदानपर्य्यस्ताभिः प्रेतमुख-स्पर्शदूषितं प्रक्षालयन्तमिव आशुशुक्षणिं करनखदीधितिभिः,

(३७६) रक्तेति।—रक्तचन्दनम् एव अनुलेपः रक्तचन्दनानुलेपः, स विद्यते-ऽस्येति तथोक्तस्य, रक्तचन्दनानुलिप्तस्येत्यर्थः।

(३७७) रक्तेति।—रक्ते—रक्तवर्णे, स्रगम्बरे—माल्य-वसने, आभरणे यस्य तथाभूतस्य। उत्तानशयस्य—उत्तानशायिनः, ऊर्द्धमुखशायिन इत्यर्थः। [“उत्तानादिषु कर्त्तृषु” (वा०) इति शीङ्धातोः अचि रूपम्] शवस्य—मृतदेहस्य।

(३७८) जातेति।—जातः,—उत्पन्नः, उत्थित इत्यर्थः, मन्त्रबलेनेति भावः, जातवेदाः,—अग्निर्यस्मात् तथाभूते, (“अग्निर्वैश्वानरो वह्निः······। ······जातवेदा-स्तनूनपात्॥” इत्यमरः) मुखकुहरे—वदनगह्वरे।

(३७९) प्रारब्धेति।—प्रारब्धं—प्रक्रान्तम्, अग्निकार्य्यं—होमः येन तथोक्तम्।

(३८०) कृष्णेति।—कृष्णं—कृष्णवर्णम्, उष्णीषं—शिरोवेष्टनवसनं यस्य तथाभूतम्। कृष्णाङ्गरागं—कृष्णवर्णविलेपनम्। कृष्णप्रतिसरं—कृष्णवर्णहस्तसूत्रम्; (“ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्” इत्यमरः)। कृष्णवाससं—कृष्ण-वसनपरिधायिनम्।

(३८१) कृष्णेति।—कृष्णतिलानाम् आहुतिनिभेन—आहुतिच्छलेन, विद्याधरत्व-तृष्णया—विद्यां धरतीति विद्याधरः,—देवयोनिविशेषः, तस्य भावः तत्त्वं, तस्य तृष्णा—स्पृहा तया, आत्मनो विद्याधरत्वलाभेच्छया इत्यर्थः।

(३८२) मानुषेति।—मानुषस्य—मानवस्य,स्वस्येति भावः,निर्म्माणं—सृष्टिः, तस्य कारणानि—उपादानसामग्र्यः, कालुष्यपरमाणवः,—मालिन्यपरमाणवः तानिव; तिलानां कृष्णत्वादेव परमाणूनामपि कालुष्योत्प्रेक्षा; क्षयं—नाशम्, उपनयन्तं—प्रापयन्तम्। आहुतीति।—आहुतिदाने—अग्नौ हवनीयद्रव्यनिक्षेपकाले, पर्य्यस्ताः,—पतिताः ताभिः, करनखदीधितिभिः,—हस्तनखमयूखैः। प्रेतेति।—प्रेतस्य—शवस्य, मुखस्पर्शेन —वदनसंयोगेन, तन्मुखे ज्वलनादिति भावः; दूषितम्—अपवित्रम्, आशुशुक्षणिम्

(३८३) धूमालोहितेन चक्षुषा क्षतजाहुतिमिव हुतभुजि पातयन्तम्, (३८४) ईषद्विवृताधरपुटप्रकटितसितदशनशिखरेण दृश्यमानमूर्त्तमन्त्राक्षरपङ्क्तिनेव मुखेन किमपि जपन्तं, (३८५) होमश्रमस्वेदसलिलप्रतिबिम्बिताभिः आसन्नदीपिकाभिः दहन्तमिव सिद्धये सर्वावयवान्, (३८६) अंसावलम्बिना बहुगुणेन विद्याधरराज्येनेव ब्रह्मसूत्रेण परिगृहीतं, महाभैरवं भैरवाचार्य्यम् अपश्यत्; उपसृत्य च अकरोत् नमस्कारम्; अभिनन्दितश्च तेन स्वव्यापारम् अन्वतिष्ठत् ।

---

—अग्निम्, ("अग्निर्वैश्वानरो वह्निः····। ······शिखावानाशुशुक्षणिः ॥" इत्यमरः) प्रक्षालयन्तमिव—शोधयन्तमिव ।

(३८३) धूमेति ।—धूमेन आलोहितम्—आरक्तं तेन, चक्षुषा—नेत्रेण, हुतभुजि—अग्नौ, क्षतजाहुतिमिव—रक्ताहुतिमिव, पातयन्तं—प्रक्षिपन्तम् । दृश्यमानविषयोपयोगितया रक्ताहुतिरत्र नासम्भाव्या इति ।

(३८४) ईषदिति ।—ईषद्विवृतेन—जपानुरोधादल्पव्यात्तेन, अधरपुटेन प्रकटितानि—प्रकाशितानि, सितानां—धवलानां, दशनानां—दन्तानां, शिखराणि—अग्राणि यस्य तथोक्तेन; ईषद्विवृतत्वादेवात्र शिखरप्रकटनं बोद्धव्यम् । अत एव दृश्यमानेति ।—दृश्यमाना मूर्त्ता—मूर्त्तिमती, मन्त्राणां—प्रणवादीनाम्, अक्षरपङ्क्तिः,—वर्णराजिः यत्र तादृशेन ।

(३८५) होमेति ।—होमेन यः श्रमः,—क्लान्तिः, तेन स्वेदसलिलानि—श्रमनिर्गतघर्म्मोदकानि, तेषु प्रतिबिम्बिताः,—प्रतिफलिताः ताभिः । आसन्नदीपिकाभिः,—समीपवर्त्तिप्रदीपैः; प्रतिबिम्बग्रहणोपपत्त्यर्थम् आसन्नेति पदं प्रयुक्तमिति मन्तव्यम् । सिद्धये—विद्याधरत्वलाभाय इत्यर्थः ।

(३८६) अंसावलम्बिना—स्कन्धविलम्बिना । बहुगुणेन—बहुतन्तुना, उत्कर्षातिशययुक्तेन च । विद्याधरराज्येन—तदाख्यदेवयोनिविशेषाणां राजत्वेन, ["विद्याधरराज्येनेव" इत्यत्र "विद्याराजेनेव" इति पाठे,—विद्याराजः,—मन्त्रविशेषः तेनेव । अस्मिन् पाठे विद्याराजपक्षे—बहुगुणेन—पुनःपुनरावर्त्तितेन, पुनःपुनरुच्चरितेनेत्यर्थः, बहुगुणसम्पन्नेनेति वा ] । ब्रह्मसूत्रेण—यज्ञोपवीतेन । महाभैरवं—शिवोपासकम्;

अत्रान्तरे पातालस्वामी (३८७) शातक्रतवीम् आशाम् अङ्गीचकार, कर्णतालः कौबेरीं, परिव्राट् (३८८) प्राचेतसीम्। राजा तु (३८९) त्रैशङ्कवेन ज्योतिषा अङ्कितां ककुभम् अलङ्कृतवान्।

(३९०) एवञ्च अवस्थितेषु प्रतिदिशं दिक्पालेषु, दिक्-

---

प्रतिभयङ्करं वा। अभिनन्दितः,—अभ्यर्थितः। तेन—भैरवाचार्य्येण। [ "परिगृहीतं, महाभैरवं भैरवाचार्य्यम्" इत्यत्र "परिगृहीतं भैरवाचार्य्यम्" इति पाठान्तरम् ]। स्वव्यापारं—स्वकार्य्यं, भैरवाचार्य्योक्तमिति शेषः। अन्वतिष्ठत्—अन्वपालयत्।

(३८७) शातक्रतवीं—शतक्रतुः,—इन्द्रः, तस्य इयं शातक्रतवी तां, प्राचीमित्यर्थः आशां—दिशं ("दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः) अङ्गीचकार—अधितष्ठौ। "अङ्गीचकार" इत्यनेन सर्वेषामेषां स्वेच्छापरिग्रहणं प्रकटितमिति। कौबेरीं—कुबेरसम्बन्धिनीं, कुबेरपालितां वा, उदीचीमित्यर्थः।

(३८८) प्राचेतसीं—प्रचेतसा—वरुणेन अधिष्ठिता प्राचेतसी तां, प्रतीचीमित्यर्थः। [ "तस्य निवासः" (४।२।६९ पा०) इत्यणि ङीपि रूपसिद्धिः ]।

(३८९) त्रैशङ्कवेन—त्रिशङ्कुर्नाम सूर्य्यवंश्यः राजा, तस्य इदं त्रैशङ्कवं तेन, ज्योतिषा—तेजसा, अङ्किता—चिह्निता तां, दक्षिणामिति यावत्। ककुभं—दिशम्। दक्षिणस्याम् इत्युक्तेरमङ्गलबोधकत्वात् त्रैशङ्कवेनेत्युक्तम्। पुरा त्रिशङ्कुर्नाम राजा सशरीरो दिवं जिगमिषुः सत्राय गुरुं वशिष्ठमन्वरुणत्। स तु नैतत् त्वया अधिक्रियते इत्यवज्ञातवान्। ततो गुरुपुत्रैरपि अवज्ञातः गुरुद्वेषिणं विश्वामित्रं शरणमगात्। तेन च कृतयज्ञः सशरीरो दिवं गच्छन् देवराजेन गुरुद्वेषी इति स्वर्गात् निराकृतः पतन् विश्वामित्रम् उच्चैः जगाद,—"मुने! त्रायस्व मां नरके पतन्तम्" इति। आत्मत्राणाय प्रार्थितः विश्वामित्रश्च तत्रैव अन्तरीक्षे दक्षिणदिग्भागवर्त्तिनि "तिष्ठ" इति उवाच; ततश्च असौ तथैव अद्यापि स्थितः। तच्च स्थानं त्रिशङ्कुस्वर्ग इति ख्यायते, एवं पुराणवार्त्ता अत्रानुसन्धेया।

(३९०) एवमित्यादि।—प्रतिदिशं—सर्वासु दिक्षु, दिशि दिशि इत्यर्थे व्याप्तावव्ययीभावात्। [ "प्रतिदिशम्" इति पाठः पुस्तकान्तरे न दृश्यते ]। दिक्पालेषु—दिशां रक्षकेषु, पातालस्वामिप्रभृतिषु चतुर्षु इत्यर्थः। दिक्पालेति।—दिक्-

पालभुजपञ्जरप्रविष्टे (३८१) साधयति विस्रब्धं कर्म्म भैरवं भैरवाचार्य्ये, (३८२) अतिचिरं कृतकोलाहलेषु निष्फलप्रयत्नेषु प्रत्यूहकारिषु शान्तेषु कौणपेषु, गलति अर्द्धरात्रसमये (३८३) मण्डलस्य नातिदवीयसी उत्तरेण अकस्मात् (३८४) प्रलयमहावराहदंष्ट्राविवरमिव दर्शयन्ती मही अदीर्य्यत। सहसैव च तस्मात् विवरात् आशावारणोत्क्षिप्त इव आलानलोहस्तम्भः, (३८५) महावराहपीवरस्कन्धपीठः,

---

पालानाम्—एषा पातालस्वामिप्रभृतीनां दिग्रक्षिणां, भुजा,—बाहव एव, "अर्त्तिस्तृसु—" (उ० १ पा० २८ सू०) इत्यादिना बाधधातोः कुप्रत्यये हकारादेशे रूपम् ] पञ्जराणि, तेषु प्रविष्टः तस्मिन्, अकुतोभये इति भावः।

(३८१) विस्रब्धं—निःशङ्कं, विश्वस्तं वा यथा तथा; एतन्निमित्तमेव राजादीनां साहाय्यग्रहणं बोद्धव्यम्। साधयति—अनुतिष्ठति।

(३८२) अतिचिरं—दीर्घकालं व्याप्य। प्रत्यूहकारिषु—विघ्नकारिषु। शान्तेषु—शान्तिं प्राप्तेषु, निवृत्तेषु इत्यर्थः। कौणपेषु—राक्षसेषु, ("राक्षसः कौणपः क्रव्यात्" इत्यमरः)। गलति—अतिक्रामति।

(३८३) मण्डलस्य—प्रागुक्तभस्मलिखितमण्डलाकाररेखायाः। नातिदवीयसी—नातिदूरवर्त्तिनी इत्यर्थः। उत्तरेण—उत्तरस्यां दिशि। [ "एनबन्यतरस्याम्—" (५।३।३५ पा०) इत्यादिना सप्तम्य स्य एनप्, तदन्तेन योगात् "एनपा—" (२।३।३१ पा ) इत्यादिना "मण्डलस्य" इति षष्ठी ]।

(३८४) प्रलयेति।—प्रलये—प्रलयकाले, महावराहः,—आदिवराहः, जलमग्नायाः पृथिव्याः उद्धारकः नारायणावतारविशेषः इति यावत्, तस्य दंष्ट्रा—दशनः, तस्याः विवरं—तत्कृत रन्ध्रम् इव इत्यर्थः, दर्शयन्ती—प्रकटयन्ती। [ "मही" इत्यत्र "क्षिति" इति पाठान्तरम् ]। अदीर्य्यत—स्वयमेव द्विधा अभवत् इत्यर्थः। विवरात्—रन्ध्रात्, "पुरुषः उज्जगाम" इति उत्तरेण सम्बन्धः। तमेव विशिनष्टि, आशेत्यादिभिः। —आशावारणः,—दिग्गज, पातालस्थ इति भावः, तेन उत्क्षिप्त इव—उपरि क्षिप्त इव, आलानलोहस्तम्भः,—आलानं—गजबन्धनं, ("आलानं बन्धस्तम्भे" इति हस्तिप्रकरणे अमरः) तदर्थं लोहस्तम्भः,—लौहनिर्मितः विपुलः स्थूणाविशेषः इत्यर्थः। लोहपदेन पुरुषस्य दृढशरीरत्व कृष्णवर्णत्वञ्चोक्तम्।

(३८५) महावराहेति।—महावराहस्य इव पीवरं—स्थूलं, मांसलमित्यर्थः,

नरकासुर इव भुवो गर्भात् उद्भूतः, बलिदानव इव भित्त्वोत्थितः पातालम्, इन्द्रनीलप्रासाद इव (३८६) उपरिज्वलितरत्नप्रदीपः, (३८७) स्निग्धनीलघननिविडकुटिलकुन्तलकान्तमौलिः, (३८८) उन्मीलन्मालतीमुण्डमालः, गद्गदतया स्वरस्य स्वभावपाटलतया च चक्षुषः क्षीव इव यौवनमदेन, (३८९) वल्गद्गलदामकः, (४००) करसम्पुटमृदितया मृदा (४०१) दिङ्नागकुम्भाभौ अंसकूटौ पुनः पुनः पङ्कयन्, (४०२) सान्द्रचन्दनपङ्क-

स्कन्धपीठम्—अंसफलकं, फलकवत् विस्तृतः स्कन्धः इत्यर्थः यस्य तथोक्तः। नरकासुर इव—भूमिसुतः असुरविशेष इव। गर्भात्—कुक्षेः, उदरादित्यर्थः, अभ्यन्तरादिति यावत्, ("कुक्षिभ्रूणार्भका गर्भाः" इत्यमरः) इन्द्रनीलप्रासाद इव—नीलकान्तमणिनिर्मितहर्म्यम् इव।

(३८६) उपरीति।—उपरि—ऊर्द्ध्वभागे, ज्वलितौ—प्रदीप्तौ, रत्नप्रदीपौ—मणिमयदीपौ, नेत्रे इति भावः यस्य तथाभूतः।

(३८७) स्निग्धेति।—स्निग्धैः,—मसृणैः, नीलैः,—कृष्णवर्णैः, घनैः,—अविरलैः, निविड़ैः,—सङ्कीर्णैः, दृढैरिति वा, दृढमूलैरित्यर्थः, कुटिलैः,—भङ्गिमद्भिः, कुञ्चितैरित्यर्थः, कुन्तलैः,—केशैः, कान्तः,—मनोज्ञः, मौलिः,—किरीटं यस्य तथोक्तः। ("मौलिः किरीटे धम्मिल्ले चूड़ायामनपुंसकम्" इति मेदिनी)।

(३८८) उन्मीलदिति।—उन्मीलन्ती—स्फुरन्ती, मालतीमुण्डमाला—मालतीपुष्पशेखरहारः यस्य तथोक्तः। गद्गदतया—अर्द्धस्फुटतया। स्वभावपाटलतया—सहजरक्ततया। क्षीव इव—मत्त इव।

(३८९) वल्गदिति।—वल्गत्—चलत्, गले—कण्ठे, दाम—माल्यं यस्य तथाभूतः; चाचल्यमानवक्षोलग्नहारयष्टिक इत्यर्थः।

(४००) करेति।—करयोः सम्पुटेन—योगेन, समुद्गकाकार-रचितकरद्वयेन इत्यर्थः, मृदिता—दलिता तया। मृदा—मृत्तिकया।

(४०१) दिङ्नागकुम्भाभौ—ऐरावतकुम्भनिभौ, अंसकूटौ—स्कन्धशिखरे, स्कन्धोपरिभागौ इत्यर्थः, पर्व्वतशृङ्गवत् समुन्नतदृढस्कन्धौ इत्यर्थः वा, पङ्कयन्—कर्द्दमयन्, मल्लयोधानां रीत्यनुसारेण कर्दमेन लिम्पन् इत्यर्थः।

(४०२) सान्द्रेति।—सान्द्रेण—घनेन, चन्दनपङ्केन—कर्द्दमितचन्दनेनेत्यर्थः,

दत्तैः अव्यवस्थास्थासकैः (४०३) अतिसितजलधरशकलशारित इव शारदाकाशैकदेशः, (४०४) केतकीगर्भपत्रपाण्डुरस्य चण्डातकस्य उपरि क्षामतरीकृतकुक्षिः, (४०५) कक्ष्याबन्धं विधाय विलासविक्षिप्तेन धवलव्यायामफालीपटान्तेन धरणि-तलगतेन धार्य्यमाण इव पृष्ठतः शेषेण, (४०६) स्थिर-स्थूलोरुदण्डः, भूमिभङ्गभयेन इव मन्थराणि स्थापयन् पदानि, (४०७) निर्भरगर्व्वगुरु कथमपि शैलम्

---

घृष्टचन्दनसारेण इति भावः, ["चन्दनपङ्क—" इत्यत्र "चन्दनकर्द्दम—" इति पाठान्तरेऽपि स एवार्थः] दत्तानि—विरचितानि तैः। अव्यवस्थास्थासकैः,—अव्य-वस्थया—यथायथाव्यवस्थया इत्यर्थः, स्थासकाः,—चन्द्रकाः, बुद्बुदाकारा बिन्दव इत्यर्थः तैः, यद्वा,—स्थासकैः,—चार्च्चिक्यैः, पाटवविनैवानुलिप्तचन्दनादिभिरित्यर्थः, ("स्थासकः पुंसि चार्च्चिक्ये जलादेरपि बुद्बुदे" इति मेदिनी)।

(४०३) अतीति।—अतिसितेन—अतिस्वच्छेन, जलधराणां—मेघानां, शकलेन—खण्डेन, शारित इव—चित्रित इव, कर्बुरित इव इत्यर्थः, [शारशब्दात् मत्वर्थीये इतचि सिद्धम्] शारदाकाशैकदेशः,—शरत्कालिकगगनैकभागः।

(४०४) केतकीति।—केतक्याः गर्भपत्रम्—अभ्यन्तरच्छदः, तद्वत् पाण्डुरं—धवलं तस्य, चण्डातकस्य—परिधानवसनभेदस्य, यद्यपि चण्डातकशब्देन उत्तमाङ्ग-नानामर्द्धोरुपर्य्यन्तलम्बितं वसनं गम्यते, तथाऽपि अत्र उपचारात् पुंसामपि वसन-विशेषो बोद्धव्यः। क्षामतरीकृतकुक्षिः,—अतिशयेन क्षीणतां नीतोदरः।

(४०५) कक्ष्याबन्धं—वस्त्ररज्जुं, कटिबन्धमित्यर्थः। विलासविक्षिप्तेन—लीलानिक्षिप्तेन। धवलेति।—धवलः,—शुभ्रः, व्यायामः,—विशेषेण आयत इति यावत्, व्यामपरिमाण-दीर्घो वा, फालीपटान्तः,—कटिबन्धवस्त्रान्तः तेन। धरणितलगतेन—भूतललुण्ठितेन। [धरणितलगेन इति पाठान्तरम्]। धार्य्यमाण इव—गृह्यमाण इव। शेषेण—अनन्त-नागेन। शेषस्य धावल्यात् व्यायतत्वात् धरणितलगतत्वाच्च तथाविधोत्प्रेक्षा बोद्धव्या।

(४०६) स्थिरेति।—स्थिरौ—दृढौ, स्थूलौ ऊरुदण्डौ यस्य तथोक्तः। भूमीति।—भूमेः,—पृथिव्याः, भङ्गभयेन—नाशभयेन, रसातलगमनाशङ्कया इति भावः। मन्थराणि—मन्दसञ्चाराणीत्यर्थः। स्थापयन्—अर्पयन्।

(४०७) निर्भरेति।—निर्भरेण—निरतिशयेन, गर्व्वेण—अहङ्कारेण, गुरु—

इव गात्रम् उद्वहन्, ( ४०८ ) दर्पेण स्वेन मुहुर्मुहुः उरसि द्विगुणिते दोष्णि वामे तिर्य्यक् उत्क्षिप्ते च दक्षिणे जङ्घाकाण्डे ( ४०९ ) कुण्डलिते चण्डास्फोटनटाङ्कारैः ( ४१० ) कर्म्मविघ्ननिर्घातानिव पातयन्, एकेन्द्रियविकलमिव जीवलोकं कुर्वन्, ( ४११ ) कुवलयदलश्यामलः पुरुषः उज्जगाम, जगाद च विहस्य ( ४१२ ) नरसिंहनादनिर्घोषघोरया भारत्या,—

भारवदित्यर्थः ; कार्त्तव्यानुरोधेन महाभारवत् गिरिशृङ्गमिव शरीरं धारयमाणः इति कथमपीत्यस्याशयः ।

( ४०८ ) दर्पेण—अभिमानेन, [ "स्वेन" इति पाठः पुस्तकान्तरे न दृश्यते ]। द्विगुणिते—द्विरावृत्ते, वामे—सव्ये, वामभागस्थे इत्यर्थः दोष्णि—भुजे। [ "दमेर्डोसिः" ( उ० २ पा० ६९ सू० ) इति दमधातोः डोसिप्रत्यये रूपम्। "भुजबाहू प्रवेष्टो दोः" इत्यमरः ] दक्षिणे च, भुजे इति शेषः, तिर्य्यक्—वक्रभावेन, उत्क्षिप्ते—ऊर्द्धे स्थापिते। जङ्घाकाण्डे—जङ्घारूपे स्तम्भे।

( ४०९ ) कुण्डलिते—कुण्डलीकृते, कुञ्चिते इत्यर्थः। चण्डेति।—चण्डम्—उत्कटं, यत् आस्फोटनम्—आघातः, वाह्वोरिति भावः, तेन ये टाङ्काराः,—शब्दविशेषाः तैः, कुलिशकठोरनिर्ह्रादैः इत्यर्थः।

( ४१० ) कर्मेति।—कर्म्मणि—भैरवाचार्य्यस्य साधनकार्य्ये, विघ्नाय—अन्तरायार्थमित्यर्थः, निर्घाताः,—आकाशात् पतितवायुजनिताः शब्दविशेषाः तानिव। तथा चोक्तं,—"यदन्तरीक्षे बलवान् मारुतो मरुताहतः। पतत्यधः स निर्घातो जायते वायुसम्भवः॥" इति। अत एव एकेन्द्रियविकलमिव—एकेन इन्द्रियेण—श्रोत्रेणेति भावः, विकलः,—शक्तिहीनः तमिव, बधिरमिवेत्यर्थः।

( ४११ ) कुवलयदलश्यामलः,—कौवलयानीव कुवलयानि, शोभाहेतुत्वात्, तेषां दलानि, तद्वत् श्यामलः, नीलोत्पलवत् कृष्णवर्णः इत्यर्थः। [ "कुवलयश्यामलः" इति पाठान्तरम् ]। उज्जगाम—उदतिष्ठत्।

( ४१२ ) नरेति।—नरसिंहः,—नृसिंहावतारः, तस्य नादः,—शब्दः, ( "नाभेरूर्द्धं हृदि स्थानात् मारुतः प्राणसंज्ञकः। नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तितः॥" इत्युक्तः "आकाशाग्निमरुज्जातो नाभेरूर्द्धं समुच्चरन्। मुखेऽभिव्यक्तिमापन्नो यः स नाद इतीरितः॥" इत्युक्तश्च प्राणवायुवृत्तिभेदो वा ) यः निर्घोषः,—हुङ्कारः, निनादः इत्यर्थः, तद्वत् घोरा—गम्भीरा तया। भारत्या—वाचा।

(४१३) "भो विद्याधरीश्रद्धाकामुक! किम् अयं विद्याऽवलेपः? सहायमदो वा? यत् अस्मै जनाय अविधाय (४१४) बलिं बालिश इव सिद्धिम् अभिलषसि? का ते दुर्बुद्धिरियम्? एतावता कालेन क्षेत्राधिपतिः अस्य मन्नाम्ना एव लब्धव्यपदेशस्य देशस्य नागतस्ते (४१५) श्रोत्रोपकण्ठं श्रीकण्ठनामा नागोऽहम्। अनिच्छति मयि का शक्तिः (४१६) ग्रहगणस्य अपि गन्तुं गगने? (४१७) भूनाथोऽपि अयम् अनाथः तपस्वी, यस्तु त्वादृशैः शैवापसदैः उपकरणी-

(४१३) भो विद्याधरीति।—विद्याधर्यां—देवयोनिविशेषस्त्रियां, श्रद्धया—आदरेण, आकाङ्क्षया वा, ("श्रद्धाऽऽदरे च काङ्क्षायाम्" इति मेदिनी) कामुकः,—अभिलाषी, तत्सम्बुद्धौ। विद्याधरीतपदप्रयोग. तपोत्पादनार्थं बोद्धव्यः, श्रद्धापदग्रहणञ्च चेष्टावैफल्यबोधनाय, विद्याधरीष्वेव श्रद्धा विद्यते नास्मासु, अतस्ते कार्य्यनाशो भविष्यतीति भावः। विद्याऽवलेपः,—विद्यागर्व्वः। सहायमदः,—सहकारिसद्भाव-जनितौद्धत्यम्। अस्मै जनाय—मह्यमित्यर्थः, इति आत्मनिर्द्देशः। "अस्मै" इत्यादि वाक्यं गर्व्वद्योतकमवगन्तव्यम्।

(४१४) बलिं—पूजाम्, अविधाय—अदत्त्वा। बालिश इव—मूर्खं इव। ("मूर्खवैधेयबालिशाः" इत्यमरः)। "अभिलषसि" इति पदं कामनावैफल्यसूचकम्। मन्नाम्नैव—मदीयेन नाम्नैव, लब्धव्यपदेशस्य—प्राप्ताभिधानस्य, सङ्केतितस्येत्यर्थः, अस्य देशस्य—श्रीकण्ठाख्यजनपदस्य इत्यर्थः, क्षेत्राधिपतिः,—क्षेत्रस्वामी, भूस्वामी इत्यर्थः।

(४१५) श्रोत्रोपकण्ठं—श्रोत्रयोः उपगतः कण्ठम् उपकण्ठं, श्रुतिसमीपम् इत्यर्थः; ["अत्यादयः क्रान्ताद्यर्थे द्वितीयया (वा०) इति समासः] श्रीकण्ठनामा नागः एतद्देशस्वामी, त्वया एतावताऽपि कालेन न श्रुतः किम्? इत्यर्थः।

(४१६) ग्रहगणस्यापि—ग्रहाः,—रव्यादयः, तेषां गणः तस्य; मदनिच्छया खेचराणामपि न शक्तिः खमुत्पतितुं, किमु मानववराकाणामिति भावः।

(४१७) भूनाथः,—भूपालः, अयं—पुष्पभूतिः इत्यर्थः। अनाथ,—अस्वामिकः, यद्यस्य कोऽपि स्वामी अस्थास्यत् तदा एनमस्माद्व्यापारात् न्यवारयिष्यदिति भावः। तपस्वी—वराकः, अधूर्त्तः इत्यर्थः, यदयं धूर्त्तेन त्वया प्रतारित इति भाव। रः,—भूपाल इत्यर्थ। त्वादृशैः,—त्वत्सदृशैः। ["यस्तु त्वादृशैः" इत्यत्र "यः त्वादृशैः"

क्रियते। सहस्व इदानीं सह अमुना (४१८) दुर्नरेन्द्रेण दुर्नयस्य फलम्" इत्यभिधाय च निष्ठुरैः प्रकोष्ठप्रहारैः त्रीनपि टीटिभप्रभृतीन् अभिमुखं प्रधावितान् सशरीरावरणकृपाणान् अपातयत्।

(४१९) अथ अपूर्व्वाधिक्षेपश्रवणात् अशस्त्रव्रणैः अपि अमर्ष-स्वेदच्छलेन अनेकसमरपीतम् असिधाराजलमिव वमद्भिः अव-यवैरपि रोमाञ्चनिभेन मुक्तशरशतशल्यनिकरभरलघुमिव आत्मानं रणाय कुर्वद्भिः, (४२०) अट्टहासेन अपि प्रतिबिम्बिततारागणेन स्पष्टदृष्टधवलदन्तमालम् अवज्ञया हसतेव कथ्यमानसत्त्वाव-

इति पाठान्तरम्]। शैवापसदैः,—शैवाधमैः। उपकरणीक्रियते—प्रलोभ्य सहायी-क्रियते इत्यर्थः।

(४१८) दुर्नरेन्द्रेण—कुराज्ञा। दुर्नयस्य—दुश्चेष्टितस्य। निष्ठुरैः,—निर्दयैः, प्रचण्डैरित्यर्थः, प्रकोष्ठप्रहारैः,—प्रकोष्ठस्य—हस्तावयवविशेषस्य, प्रहारैः, चपेटाघातैः इति वाऽर्थः, ("अस्योपरि प्रगण्डः स्यात् प्रकोष्ठस्तस्य चाप्यधः" इत्यमरः)। अभिमुखं प्रधावितान्—नागं लक्ष्यीकृत्य प्रचलितानित्यर्थः। सशरीरेति।—शरीरावरणं—वर्म्म, कृपाणः,—खड्गः, ताभ्यां सह वर्त्तमानान् असिवर्म्मसहितान् इत्यर्थः।

(४१९) अथेति।—"अथ" इत्यस्य "नरनाथः सावज्ञम् अवादीत्" इत्युत्तरे-णान्वयः। अपूर्वेति।—अपूर्व्वः,—अभिनवः, अ-तत्पूर्व्वः इत्यर्थः, योऽधिक्षेपः,—निर्भर्त्सनं, तस्य श्रवणम्—आकर्णनं तस्मात्, अशस्त्रव्रणैः,—अशस्त्रेण—न शस्त्रेण, व्रणं—क्षतं येषां तैः, अस्त्राघातमलभमानैः इत्यर्थः। अमर्षस्वेदच्छलेन—अमर्षेण—क्रोधेन, यः स्वेदः,—घर्म्मोद्गमः, तस्य छलेन—व्याजेन। अनेकेति।—अनेकेषु समरेषु—सङ्ग्रामेषु, पीतम्—आस्वादितम्, असिधाराजलमिव—बहुशत्रुप्रयुक्तखड्ग-धाराजलमिव, वमद्भिः,—उद्गिरद्भिः, अवयवैः,—अङ्गैः, रोमाञ्चनिभेन—लोमोद्गम-च्छलेन, मुक्ताः,—निःसारिताः, शरशतानि—बाणसमूहाः, शल्यनिकराः,—शल्य-समूहाः एव, भरो येन तथाभूतः, अत एव लघुः,—भाररहितः तमिव। रणाय—युद्धकर्म्मणे, ["तादर्थ्ये चतुर्थी वाच्या" (वा०) इति चतुर्थी]।

(४२०) अट्टहासेन—तदाख्येन असिना, प्रतिबिम्बितः,—प्रतिफलितः, तारा-गणः,—नक्षत्रवृन्दं यस्मिन् तेन। स्पष्टेति।—स्पष्टं—स्फुटं, दृष्टा धवला—शुभ्रा, दन्त-

ष्टम्भः, (४२१) परिकरबन्धविभ्रमभ्रमितकरनखकिरणचक्रवालेन व्यपगमनाशङ्कया नागदमनमन्त्रमण्डलबन्धेनेव रुन्धन् दशदिशः, नरनाथः सावज्ञम् अवादीत्,—"अरे (४२२) काकोदर! काक! मयि स्थिते राजहंसे न जिह्रेषि बलिं याचितुम्? अमीभिः किं वा परुषभाषितैः? भुजे वीर्य्यं निवसति, न वाचि, प्रतिपद्यस्व शस्त्रम्। अयं न भवसि। (४२३) अगृहीतहेतिषु अशिक्षितो मे भुजः प्रहर्तुम" इति। नागस्तु (४२४) अनादृततरम्,—"एहि, किं शस्त्रेण? भुजाभ्यामेव भनज्मि

---

माला—दशनश्रेणी यत्र तद्यथा तथा, हसतेव—हासं कुर्व्वतेव। कथ्यमानेति।—कथ्यमानः,—अभिधीयमान, प्रकाश्यमान इति यावत्, अशस्तवर्णैरवयवैः अट्टहासेन च इति भावः, सत्त्वस्य—उत्साहस्य, बलस्य वा, अवष्टम्भः,—वेगः यस्य तथाभूतः।

(४२१) परिकरेति।—परिकरबन्धः,—कटिबन्धः, तस्य विभ्रमेण—चेष्टया, व्यापारेणेत्यर्थः, भ्रमितयोः,—चलितयोः, करयोः,—हस्तयोः, नखकिरणानां चक्रवालं—मण्डलं तेन। व्यपगमनाशङ्कया—शत्रोः पलायनसम्भावनयेत्यर्थः। नागेति।—नागानां—सर्पाणां, दमनमन्त्रः,—शासनमन्त्रः, गारुड़ादिः इत्यर्थः, तेन यो मण्डलबन्धः,—मण्डलाकारबन्धनविशेषः, गारुड़तन्त्रप्रसिद्धः ऐन्द्रादिबन्ध इत्यर्थः, यत्र स्थितो नागः न पलायितुं प्रभवतीति भावः तेनेव; रुन्धन्—आवृण्वन्। सावज्ञं—सावहेलम्।

(४२२) काकोदर!—काकस्य—वायसस्येव, उदरं यस्य; यद्वा,—काकम्—ईषत् कुटिलगतिमत्, उदरं यस्य, तत्सम्बुद्धौ काकोदर!—रे भुजङ्ग! ("……भुजङ्गोऽहिर्भुजङ्गमः।……चक्षुःश्रवाः काकोदरः फणी॥" इत्यमरः) काक!—इति साधिक्षेपोक्तिः, काकवत् निर्लज्ज इति भावः। राजहंसे—नृपश्रेष्ठे, कलहंसे च, ("राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे" इति मेदिनी)। जिह्रेषि—लज्जसे। बलिं—पूजां, पूजाविधौ देयं तण्डुलादिकञ्च, ("बलिः पूजोपहारयोः" इत्यमरः)। काकानां बलिभोजनं प्रसिद्धम्। परुषभाषितैः,—कटूक्तिभिः। प्रतिपद्यस्व—गृहाण। अयम्—ईदृशः इत्यर्थः, न भवसि—न तिष्ठसीत्यर्थः, त्वमिति शेषः, न जीवसि इति भावः।

(४२३) अगृहीतहेतिषु—अगृहीतशस्त्रेषु, ("रवेरर्च्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः" इत्यमरः) अशिक्षितः,—अज्ञातः, अनभ्यस्त इत्यर्थः।

(४२४) अनादृततरं—सावज्ञातिशयमित्यर्थः। एहि—आगच्छ। किं शस्त्रेण?

भवतो दर्पम्" इति अभिधाय आस्फोटयामास। नरपतिरपि (४२५) निरायुधम् आयुधेन युधि लज्जमानो जेतुम् उत्सृज्य सचर्म्मफलकम् अट्टहासम् असिम् अर्द्धोरुकस्य उपरि बबन्ध बाहुयुद्धाय कक्ष्याम्। युयुधाते च (४२६) निर्दयास्फोटन-स्फुटितभुजरुधिरशीकरसिच्यमानौ शिलास्तम्भैरिव पतद्भिः बाहुदण्डैः शब्दमयमिव कुर्व्वाणौ भुवनं तौ। न चिराच्च पातयामास भूतले भुजङ्गं भूपतिः। जग्राह च केशेषु, (४२७) उच्चखान च शिरश्छेत्तुम् अट्टहासम्, अपश्यच्च वैकक्षकमालाऽन्तरेण अस्य यज्ञोपवीतम्। उपसंहृतशस्त्रव्यापारश्च अवादीत्,—"दुर्विनीत! अस्ति ते (४२८) दुर्नयनिर्वाहबीजम् इदं, यतो विश्रब्धमेव आचरसि चापलानि" इत्युक्त्वा उत्ससर्ज तम्।

---

—शस्त्रस्य किमपि प्रयोजनं नास्तीत्यर्थः। भनज्मि—नाशयामीत्यर्थः। आस्फोटयामास—आस्फालयामास, बाह्वौ कराघातम् अकार्षीदित्यर्थः।

(४२५) निरायुधम्—अशस्त्रम्। आयुधेन—शस्त्रेण। उत्सृज्य—परित्यज्य। अट्टहासं—तदाख्यं भैरवाचार्य्यदत्तं खड्गम्; अट्टहासग्रहणेनैव असौ गम्यमाने पुनरसिपदग्रहणं प्रशंसार्थं, "प्रशंसार्थः सामान्यपदप्रयोगः" इति रुद्रटानुशासनादवगन्तव्यम्। अर्द्धोरुकस्य—ऊर्व्वोरधरपर्य्यन्ताच्छादकवस्त्रविशेषस्य। कक्ष्यां—वसनरज्जुम्।

(४२६) निर्दयेति।—निर्दयं—निष्ठुरं, यत् आस्फोटनं—प्रहरणं, परस्परं बाह्वोर्हस्ततलप्रहारेण शब्दकरणमित्यर्थः, तेन स्फुटितस्य—विक्षतस्य, भुजस्य रुधिराणां—रक्तानां, शीकरैः,—विन्दुभिः, सिच्यमानौ—आप्लूयमानौ इत्यर्थः। पतद्भिः, परस्परदेहे इति भावः। न चिरात्—अचिरादित्यर्थः।

(४२७) उच्चखान—उत्तोलयामास इत्यर्थः। वैकक्षकमालां—तिर्य्यग्वक्षोविलम्बिहारविशेषम्, अन्तरेण—मध्ये, ["अन्तराऽन्तरेण युक्ते" (२।३।४ पा०) इति अन्तरेणेति योगे द्वितीया]। मालाऽन्तरितत्वात् पूर्व्वमदृष्टम्, इदानीमनावृतत्वात् तद्दर्शनं बोद्धव्यम्।

(४२८) दुर्नयेति।—दुर्नयस्य—दुश्चेष्टितस्य, निर्व्वाहः,—सम्पादनं, तस्य बीजं—कारणम्, इदं—यज्ञोपवीतमिति यावत्; एतद्दर्शनेन ब्राह्मणोऽयमिति मत्वा दुरा-

अनन्तरञ्च सहसैव (४२९) अतिबहलां ज्योत्स्नां ददर्श, शरदि विकसतां कमलवनानामिव च घ्राणावलेपिनम् आमोदम् अजिघ्रत्, झटिति च नूपुरशब्दम् अशृणोत्, व्यापारयामास च शब्दानुसारेण दृष्टिम्।

(४३०) अथ करतलस्थितस्य अट्टहासस्य मध्ये तड़ितमिव नीलजलधरोदरे स्फुरन्तीं, प्रभया पिबन्तीमिव त्रियामां, तामरसहस्तां, (४३१) कोमलाङ्गुलिरागराजिजालकानि च चरणलग्नानि (४३२) वेलाबालविद्रुमलतावनानि इव आकर्षन्तीं, (४३३) करपङ्कजसङ्कोचाशङ्कया शशाङ्कमण्डलमिव खण्डशः कृतं निर्म्मलचरणनखनिवहनिभेन बिभ्रतीं,

---

चारोऽपि त्वं न केनापि दण्ड्यसे ब्रह्महत्याभयादिति भावः। विश्रब्धं—निःशङ्कम्। चापलानि—औद्धत्यानि। उत्ससर्ज—मुमोच।

(४२९) अतिबहलाम्—अतिप्रभूताम्। घ्राणावलेपिनं—नासारन्ध्रपूरकमिति भावः। आमोदम्—अतिमनोहरगन्धम्। व्यापारयामास—प्रेरयामास, निक्षेपयामासेत्यर्थः। दृष्टिं—नेत्रम्।

(४३०) अथेत्यादि।—"अथ" इत्यस्य "स्त्रियमपश्यत्" इत्युत्तरेणान्वयः। अट्टहासस्य—तदाख्यस्य असेः। तड़ितमिव—सौदामनीमिव, स्फुरन्तीं—राजमानाम्। पिबन्तीमिव—ग्रसन्तीमिव। त्रियामां—रात्रिम्; अतिप्रभावत्त्वेन तमिस्राग्रसनमुत्प्रेक्षितम्। तामरसहस्तां—पद्मकराम्, ("अथ तामरसं पद्मे ताम्र-काञ्चनयोरपि" इति मेदिनी)।

(४३१) कोमलेति।—कोमलानाम् अङ्गुलीनां रागराजिः,—लोहितधारा, तस्या जालकानि—प्रवाहान्।

(४३२) वेलेति।—वेलायां—तटभूमौ, बालानि—नवानि, यानि विद्रुमलतावनानि—प्रवालवल्लीकाननानि तानि इव।

(४३३) करेति।—कर एव पङ्कजं—पद्मं, तस्य सङ्कोचः,—निमीलनं, चन्द्रोदयादिति भावः, तस्य आशङ्का—भयं तया, शशाङ्कमण्डलमिव—चन्द्रबिम्बम् इव। खण्डशः कृतं—खण्डंखण्डीकृतम्। निर्म्मलेति।—निर्म्मलानां—विशदानां, चरणनखानां निवहः—समूहः, तन्निभेन—च्छलेन।

( ४३४ ) गुल्फावलम्बिनूपुरपुटतया स्थितनिविड़कटकावलि-बन्धनादिव परिस्त्रस्य आगतां, ( ४३५ ) बहुविधकुसुम-शकुनिशतशोभितात् पवनचलिततनुतरङ्गात् अतिस्वच्छात् अंशुकात् उदधिसलिलादिव उत्तरन्तीम्, ( ४३६ ) उदधिजन्म-प्रेम्णा त्रिबलिच्छलेन त्रिपथगयेव परिष्वक्तमध्याम्, अत्युन्नत-स्तनमण्डलां दृश्यमानदिङ्नागकुम्भामिव ककुभं, ( ४३७ ) मद-लग्नैरावतकरशीकरनिकरम् इव शरत्तारागणतारं हारम् उरसा दधानां, ( ४३८ ) धवलचामरैरिव च मन्दमन्द-

( ४३४ ) गुल्फेति।—गुल्फं—पादग्रन्थिम्, अवलम्बते इति गुल्फावलम्बि—गुल्फस्थं, नूपुरपुटं—नूपुरसन्धिः यस्याः तद्भावः तत्ता तया हेतुना। स्थितेति।—स्थितं निविड़ं—दृढं, कटकावल्यां—सैनिकचक्रे, बन्धनं तस्मादिव, परिभ्रश्य—विच्युत्य, पलाय्य इत्यर्थः, आगताम्—उपस्थिताम्।

( ४३५ ) बहुविधेति।—बहुविधैः,—विचित्रैः, कुसुमानां—पुष्पाणां, शकुनीनां—पक्षिणाञ्च, शतैः, एकत्र—तन्तुनिर्मितैः, अन्यत्र,—उपरिपतितैः इति भावः, शोभितं तस्मात्। पवनेति।—पवनेन—वायुना, चलिताः,—विक्षिप्ताः, तनवः,—अल्पाल्पाः, तरङ्गाः,—शोभावर्द्धनार्थं हस्तेन कुञ्चनजनिताः भङ्गयः, ऊर्म्मयश्च यस्य तस्मात्, अति-स्वच्छात्—अतिविशदात्, अंशुकात्—वसनात्। उत्तरन्तीम्—उत्तिष्ठन्तीम्; वस्त्रा-च्छादिततया दूरात् स्पष्टं नालक्ष्यत, ततो यथा यथा समीपवर्त्तिनी अजायत, तथा तथा स्फुटं दृश्यमानत्वात् वसनाभ्यन्तरात् उत्तरणबोधो जायते; अथवा पवनेन आच्छादन-वसनस्य अन्तराऽन्तरा उदञ्चनात् वस्त्राभ्यन्तरादुत्तरणबोधः इति भावः।

( ४३६ ) उदधिजन्मप्रेम्णा—समुद्रोत्पत्तिस्नेहेन, त्रिबलिच्छलेन—त्रिबलिमिषेण, त्रिपथगयेव—त्रिधारया गङ्गयेव, परिष्वक्तमध्याम्—आलिङ्गितमध्यभागाम्। दृश्य-मानेति।—दृश्यमानौ दिङ्नागस्य—ऐरावतस्य, कुम्भौ यस्यां तथाभूताम् इव। ककुभं—दिशं ( "दिशस्तु ककुभः काष्ठा······" इत्यमरः )।

( ४३७ ) मदेति।—मदे—दानवारिणि, लग्नः,—संसक्तः मदलग्नः,समद इत्यर्थः, य ऐरावतः तस्य करः,—शुण्डा, तस्य शीकराणां—जलबिन्दूनां, निकरः,—सङ्घः तमिव। शरदिति।—शरदि यः तारागणः,—नक्षत्रवृन्दं, तद्वत् तारः,—महान्, उज्ज्वल इत्यर्थः तम्। उरसा—वक्षसा।

(४३८) धवलचामरैरिव—श्वेतवालव्यजनैरिव। मन्देति।—मन्दमन्देन—ईषच्चलितेन

निश्वासदोलायितैः हारकिरणैः उपवीज्यमानां, ( ४३९ ) स्वभावलोहितेन मदान्धगन्धेभकुम्भास्फालनसङ्क्रान्तसिन्दूरेणेव करद्वयेन द्योतमानां, ( ४४० ) हरशिखण्डेन्दुद्वितीयखण्डेनेव कुण्डलीकृतेन ज्योत्स्नामुचा दन्तपत्रेण विभ्राजमानां, ( ४४१ ) कौस्तुभगभस्तिस्तवकेन इव च श्रवणलग्नेन अशोककिसलयेन अलङ्कृतां, महता मातङ्गमदमयेन तिलकेन अदृश्यच्छत्रच्छायामण्डलेनेव अविरहितललाटाम, आ-पादतलात् आ-सीमन्ताच्च चन्द्रातपधवलेन चन्दनेन आदिराजयशसेव धवली-

---

अल्पाल्पेन इत्यर्थः, [ "प्रकारे गुणवचनस्य" ( ८।१।१२ पा० ) इति द्वित्वम् ] निश्वासेन दोलायिताः,—चञ्चलिताः तैः। उपवीज्यमाना—संवीज्यमाना ताम्।

( ४३९ ) स्वभावलोहितेन—सहजरक्तेन। मदान्धेति।—मदान्धः,—मदमत्तः, यः गन्धेभ,—गन्धप्रधानो हस्ती, "स्वेदं मूत्र पुरीषञ्च सञ्जाच्चैव मतङ्गजाः। यस्याघ्राय विमायन्ति तं विद्याद्गन्धहस्तिनम॥" इत्युक्तलक्षणो हस्ती वा, तस्य कुम्भास्फालनं—कुम्भताडनं, तेन सङ्क्रान्तं—संसक्त, सिन्दूर यस्मिन् तेनेव; लक्ष्म्याः गजारोहणशीलत्वा तत्कुम्भसिन्दूरसङ्क्रमणमवगन्तव्यम्; करद्वयेन—हस्तयुगलेन, द्यो माना—राजमानाम्।

( ४४० ) हरेति।—हरस्य शिखण्डं—चूडा. शेखरमित्यर्थः, ( "शिखण्डो बर्हचूडयोः" इति मेदिनी ) तत्र यः इन्दुद्वितीयखण्डः,—अर्द्धचन्द्र इत्यर्थः तेन इव। कुण्डलीकृतेन—कुण्डलरूपता नीतेन, ज्योत्स्नामुचा—प्रभावर्षिणा, दन्तप त्रेण—हस्तिदन्तनिर्म्मितकर्णभूषणेन विभ्रा माना—विराजमानाम्।

( ४४१ ) कौस्तुभेति।—कौस्तुभस्य—नारायणोरःस्थस्य मणिविशेषस्य, गभस्तीनां—किरणाना, स्तवकः,—गुच्छः तेन इव, श्रवणलग्नेन—श्रोत्रगतेन। मातङ्गमदमयेन—गजदानरचितेन इत्यर्थः। अदृश्येति।—अदृश्यस्य—तिरोहितस्य, छत्रस्य छायामण्डलं तेन इव, अविरहितः,—अशून्य, ललाटो यस्याः ताम्। आ-पादतलात्—पादतलमारभ्य, आ-सीमन्तात्—सीमन्तपर्य्यन्तम, [ अत्र "पञ्चम्यपाङ्परिभिः" ( २।३।१० पा० ) इति सूत्रेण पञ्चमी, ततः "आङ् मर्य्यादाऽभिविध्योः" ( २।१।१३ पा० ) इति पञ्चम्यन्तेन पदेन पाक्षिकः समासाभावः ]। चन्द्रातपधवलेन—कौमुदीवत् शुभ्रेण, चन्द्रातप इव—उल्लोच इव, धवलेन—स्वभावतश्शुभ्रेण[illegible]।

क्षतां, (४४२) धरणितलचुम्बिनीभिः कण्ठकुसुममालाभिः सरिद्भिरिव सागरादृष्टाभिः अधिष्ठितां, मृणालकोमलैः अवयवैः (४४३) कमलसम्भवत्वम् अनक्षरम् आचक्षाणां स्त्रियम् अपश्यत्, असम्भ्रान्तश्च पप्रच्छ,—"भद्रे! काऽसि? किमर्थं वा दर्शनपथम् आगताऽसि?" इति। सा तु स्त्रीजनविरुद्धेन (४४४) अवष्टम्भेन अभिभवन्तीव अभाषत तं,—"वीर! विद्धि मां (४४५) नारायणोरःस्थली-लीलाविहारहरिणीं, (४४६) पृथुभरतभगीरथादिराजवंश-

आदिराजयशसा इव—आदिराजस्य—मनोः वैवस्वतस्य, पृथुनृपतेर्वा, यशः तेन इव।

(४४२) धरणितलेति।—धरणितलं—भूतलं, चुम्बन्ति—स्पृशन्ति इति तथोक्ताभिः। विशेषणमिदं सरित्पक्षेऽपि योजनीयम्। सागरादृष्टाभिः,—सागरेण अदृष्टाः ताभिः, असागरगामिनीभिः इत्यर्थः, शुभ्रत्वादिति भावः। [ "सागरादृष्टाभिः" इत्यत्र "सागराधिष्ठाभिः" इति पाठे,—सागरम् अधि—अधिकृत्य, तिष्ठन्ति याः ताभिः, सागराधिष्ठिताभिरित्यर्थः ]।

(४४३) कमलसम्भवत्वं—कमलादुत्पत्तिम्; यद्वा,—सम्भूयते—स्थीयते अस्मिन्निति [ अधिकरणे अलि ] सम्भवः, कमलमेव सम्भवः,—अधिष्ठानस्थानं यस्याः तस्याः भावः तत्त्वं, कमलवासस्थलमित्यर्थः, लक्ष्म्याः पद्मालयत्वात्; अथवा,—कमलसम्भवत्वं—सलिलादुत्पन्नत्वं, क्षीरोदधेः तदुत्पत्तेः, ("सलिलं कमलं जलम्" इत्यमरोक्तेः) अनक्षरम्—अक्षररहितं, तूष्णीम् इत्यर्थः, वाग्व्यापारं विनैवेति यावत्, आचक्षाणां—कथयन्तीम। असम्भ्रान्तः,—अचकितः, अत्वर एवेत्यर्थः।

(४४४) अवष्टम्भेन—गर्वेण। अभिभवन्तीव—तिरस्कुर्व्वतीव, तद्वाक्यं प्रतिरुन्धतीवेत्यर्थः।

(४४५) नारायणेति।—नारायणस्य—विष्णोः, उरः,—वक्षःस्थलम् एव, स्थली—अकृत्रिमा भूमिः, अरण्यम् इत्यर्थः, तत्र लीलया—स्वेच्छयेत्यर्थः, यो विहारः,—क्रीडा, विचरणञ्च, तत्र हरिणी—मृगी ताम्; हरिणी अपि स्वेच्छया अरण्यस्थल्यां वहरति।

(४४६) पृथ्विति।—पृथुप्रभृतीनां राज्ञां, वंशस्य—कुलस्य, वेणुदण्डस्य च,

पताकां, (४४७) सुभटभुजजयस्तम्भविलासशालभञ्जिकां, (४४८) रणरुधिर-तरङ्गिणी-तरङ्ग-क्रीड़ा-दोहद-दुर्ललित-राजहंसीं, (४४९) सितनृपच्छत्रषण्डशिखण्डिनीम्, (४५०) अतिनिशितशस्त्रधारावनभ्रमणविभ्रमसिंहीम्, असिधाराजलकमलिनीं श्रियम्। (४५१) अपहृताऽस्मि तव अमुना शौर्य्यरसेन। याचस्व, ददामि ते वरम् अभिलषितम्" इति।

("वंशः पुंसि कुले वेणौ" इति मेदिनी) पताकां—वैजयन्ती, यशःप्रख्यापणीमित्यर्थः, एकत्र कीर्त्तिविस्तारात्, अन्यत्र,—वेणुदण्डस्योपरि अवस्थानात् इति भावः।

(४४७) सुभटेति।—सुभटानां—वीरश्रेष्ठानां, भुजाः,—बाहव एव, जयस्तम्भाः,—विजयज्ञापकस्थूणाः, तेषु विलासशालभञ्जिका—शोभार्थोपनिहितपुत्तलिका ताम्। दृश्यते हि लोके स्तम्भानामुपरि शालभञ्जिकान्यास क्रियते इति, एवं हि या सततं वीराणां हस्तेषु अभिरमते स्म इति। सुभटपदेन अस्याः वीरानुरागित्वं प्रकटीकृतं, "स्त्रीभिः षण्ढः इव श्रीभिः दुर्ब्बलः परिभूयते" इत्युक्तेः।

(४४८) रणेति।—रणेषु—सङ्ग्रामेषु, या रुधिरतरङ्गिण्यः,—रक्तनद्यः, तासां तरङ्गेषु—ऊर्मिषु, क्रीडा—केलिः, तत्र दोहदेन—अभिलाषेण, दुर्ललिता—दुर्विनीता, राजहंसी ताम्।

(४४९) सितेति।—सितानि—धवलानि, नृपाणां—राज्ञां, छत्रषण्डानि—आतपत्रमण्डलानि, आतपत्रवनानि इत्यर्थः, तत्र शिखण्डिनी—मयूरी ताम्, अनातपे प्रायशः मयूरीणां सञ्चरणशीलत्वात्।

(४५०) अतीति।—अतिनिशितानां—सुतीक्ष्णानां, शस्त्राणां धारा एव वनानि, तेषु भ्रमणम् एव विभ्रमः,—विलासः, तत्र सिंही ताम्; [हिंसेः पचाद्यचि "पृषोदरादीनि—" (६।३।१०९ पा०) इत्यादिना हकार-सकारयोः स्थानव्यत्ययात् सिंहः, ततः "जातेः—" (४।१।६३ पा०) इत्यादिना ङीषि रूपम्]। असीति।—असीनां—तरवारीणां, धारा एव—निशिताग्राण्येव, जलानि, तनुत्वात्, वैशद्याच्चेति भावः, तत्र कमलिनी—पद्मिनी ताम्।

(४५१) अपहृता—आकृष्टा। शौर्य्यरसेन—वीर्य्यानुरागेण, सिद्धानां चिरप्रार्थनयाऽपि दर्शनमददत्याः शौर्य्यगुणपक्षपातिन्याः सिन्धुजायाः तत्र राजनि स्वयमाविर्भावः, नरनाथासामान्यशौर्य्यानुरागात् इति बोध्यम्।

वीराणान्तु (४५२) अपुनरुक्ताः परोपकाराः; यतो राजा तां प्रणम्य स्वार्थविमुखो भैरवाचार्य्यस्य सिद्धिं ययाचे। लक्ष्मीस्तु देवी (४५३) प्रीततरहृदया विस्तीर्य्यमाणेन चक्षुषा क्षीरोदेनेव उपरि पर्य्यस्तेन अभिषिञ्चन्ती भूपालम्—"एवमस्तु" इति अब्रवीत्; अवादीच्च पुनः,—"अनेन (४५४) सत्त्वोत्कर्षेण भगवच्छिवभट्टारकभक्त्या च असाधारणया भवान् भुवि सूर्य्याचन्द्रमसोः तृतीय इव अविच्छिन्नस्य प्रतिदिनम् उपचीयमानवृद्धेः शुचिसुभगसत्यत्यागधैर्य्यशौण्डपुरुषप्रकाण्डप्रायस्य

(४५२) अपुनरुक्ताः,—पुनरुक्तिदोषरहिताः, परोपकाराः,—परेषामुपकाराः; वीराः परोपकारं करिष्यामः इति प्रतिज्ञाय तथा एव आचरन्ति, कार्पण्यात् न तत्र तेषां काऽपि अन्यथोक्तिरिति भावः; यद्वा,—अपुनरुक्ताः,—अनधिकाः, परोपकारा न तेषाम् अधिका मताः, अवश्यकर्त्तव्यत्वात् स्वतःसिद्धा इति भावः; परोपकारव्रतिनस्ते कृतमुपकारं कदाऽपि न वाचा व्याहरन्तीति तात्पर्य्यम्। तां—लक्ष्मीम्। स्वार्थविमुखः,—निःस्वार्थः, स्वोपकारार्थं वरमप्रार्थयमानः इत्यर्थः। सिद्धिम्—अभीष्टसाफल्यं, विद्याधरत्वलाभरूपामित्यर्थः; आश्रितेष्टसाधने एव महापुरुषाः व्यसनिनः भवन्तीति निष्कर्षः।

(४५३) प्रीततरेति।—प्रीततरम्—अतिशयेन प्रीतं, राज्ञः स्वार्थनिःस्पृहत्वेन इति भावः, हृदयं यस्याः सा। विस्तीर्य्यमाणेन—विस्फार्य्यमाणेन; राज्ञः निःस्पृहत्वदर्शनेन विस्मयोदयादिति भावः। क्षीरोदेनेव—दुग्धसागरेणेव, अतीव प्रसन्नत्वादिति भावः। उपरि पर्य्यस्तेन—उपरि पतितेन। एवम् अस्तु—त्वत्प्रार्थनं पूर्णं भवतु इत्यर्थः।

(४५४) सत्त्वोत्कर्षेण—चित्तस्य स्वभावस्य वा औदार्य्येण, मनस्वितया उदारस्वभावतया वा इत्यर्थः। असाधारणया—निरुपमया। सूर्य्याचन्द्रमसोः,—आदित्यनिशाकरयोः, तृतीय इव—सूर्य्याचन्द्रमसमपेक्ष्य तेजस्वितया तृतीयस्थानमधिकृत इत्यर्थः। अविच्छिन्नस्य—विच्छेदमनधिगतस्य। उपचीयमानवृद्धेः,—सततवर्द्धमानाभ्युदयस्य। कालवशात् स्वतेजःसु कदाचित् च्यवतः कदाचित् वृद्धिमतश्च सूर्य्यात्, प्रतिमासं क्षयवृद्धिमतः चन्द्रमसश्चापि उपमानभूतात् अहरहः उपचीयमानवृद्धिमद्वंशस्य उपमेयभूतस्य नरेन्द्रस्याधिक्यप्रतीतेः व्यतिरेकालङ्कारः। शुचीति।—शुचिः,—वाह्याभ्यन्तरपूतत्वं शुद्धाचरणं वा, सुभगं—सु—शोभनं, भगं—वीर्य्यं कीर्त्तिः वा, सत्यं—यथार्थभाषणं,

महतो राजवंशस्य कर्त्ता भविष्यति। (४५५) यस्मिन् उत्पत्स्यते सर्वद्वीपानां भोक्ता हरिश्चन्द्र इव हर्षनामा चक्रवर्त्ती त्रिभुवनविजिगीषुः द्वितीयो मान्धातेव; यस्य अयं करः स्वयमेव ग्रहीष्यति चामरम्" इति वचसोऽन्ते तिरोबभूव।

भूमिपालस्तु तदाकर्ण्य हृदयेन अतिमात्रम् अप्रीयत। भैरवाचार्य्योऽपि तस्या देव्याः तेन वचसा, (४५६) कर्म्मणा च सम्यक् उपपादितेन सद्य एव कुन्तली, किरीटी, कुण्डली, हारी, केयूरी, मेखली, मुद्गरी, खड्गी च भूत्वा अवाप विद्याधरत्वम्; प्रोवाच च,—"राजन्! (४५७) अदूरव्यापिनः फल्गुचेतसाम् अलसानां मनोरथाः। सतान्तु भुवि

---

त्यागः,—दानं, धैर्य्यं—धीरत्वं, तेषु शौण्डाः,—प्रसक्ताः, दक्षाः वा; यद्वा—तैः शौण्डाः,—विख्याताः, सदाचारपरायणा यशस्विनः सत्यवादिनः वदान्याः धीराश्च इत्यर्थः, पुरुषप्रकाण्डाः,—पुरुषश्रेष्ठाः, [प्रकृष्टः काण्डः प्रकाण्डः "प्रादयः गताद्यर्थे प्रथमया" (वा०) इति समासः। अत्र प्रकाण्डशब्दः श्रेष्ठार्थकोऽवगन्तव्यः] प्रायेण—बाहुल्येन यत्र तादृशस्य। कर्त्ता—उत्पादकः।

(४५५) यस्मिन्—राजवंशे। द्वितीयः,—अपरः, मान्धातेव—सूर्य्यवंश्य-नृपविशेष इव। अयं—मदीयः इत्यर्थः। ["स्वयमेव ग्रहीष्यति" इत्यत्र "स्वयमेव कमलमपहाय ग्रहीष्यति" इत्यधिकः पाठः]।

(४५६) कर्म्मणा—शवसाधनरूपकार्य्येण। सम्यक् उपपादितेन—सम्यगनुष्ठितेन। सद्य एव—तत्क्षणमेव। कुन्तली—कुन्तलवान्, सुकेश इति यावत्। किरीटी—मुकुटधारी। कुण्डली—कर्णान्दोलितकुण्डलः। हारी—हारवान्। केयूरी—अङ्गदी। मेखली—काञ्चीदामालङ्कृतकटिः। मुद्गरी—मुद्गरः,—दण्डविशेषः तद्वान्; [अत्र सर्व्वत्र इन्नन्तेषु "अत इनि-ठनौ" (५।२।११५ पा०) इति इनिप्रत्यये, मेखली इत्यत्र च "व्रीह्यादिभ्यश्च" (५।२।११६ पा०) इति इनिप्रत्यये रूपम्]। विद्याधरत्वं—विद्याधरभावम्।

(४५७) अदूरव्यापिनः,—अदूरविस्ताराः, न दूरप्रसारिण इत्यथः। फल्गुचेतसाम्—असारचित्तानाम्, ("असारं फल्गु" इत्यमरः) अलसाना—मन्दानां, कार्य्यपराङ्मुखाणाम् इत्यर्थः, मनोरथाः—कामाः।

(४५८) विस्तारवत्यः स्वभावेनैव उपकृतयः; स्वप्नेऽपि अस-म्भावितां दातुमिमां दक्षिणां क्षमः कोऽन्यो भवन्तम् अपहाय ? (४५९) सम्पल्लवणिकामपि प्राप्य तुलेव लघुप्रकृतिः उन्नतिम् आयाति। (४६०) त्वदीयैः गुणैः उपकरणीकृतस्य त्वत्त एव च लब्धात्मलाभस्य निर्लज्जता इयम् अस्य मूढहृदयस्य। तदिच्छामि येन केनचित् (४६१) कार्य्यलवोपपादनोपयोगेन स्मारयितुम् आत्मानम्" इति। (४६२) प्रत्युपकारदुष्प्रवेशास्तु भवन्ति धीराणां हृदयावष्टम्भाः; अतः तं राजा—"भवत्सिद्धैरेव परिसमाप्तकृत्योऽस्मि; साधयतु मान्यो यथासमीहितं स्थानम्" इति प्रत्याचचक्षे।

(४५८) विस्तारवत्यः,—प्रसरणशीलाः, दूरव्यापिन इत्यर्थः। उपकृतयः,—उपकाराः। इमां दक्षिणां—विद्याधरत्वलाभरूपाम्। क्षमः,—शक्तः। अपहाय—त्यक्त्वा, विनेत्यर्थः।

(४५९) सम्पदिति।—सम्पदः,—विभवस्य, कणिका—कणमात्रं, विभवलेश-मित्यर्थः। लघुप्रकृतिः,—क्षुद्रस्वभावः। उन्नतिम्—ऊर्द्धगमनम्, उन्मार्गगमनञ्च, विपथ-गामित्वमित्यर्थः।

(४६०) उपकरणीकृतस्य—उपकृतस्य इत्यर्थः। लब्धेति।—लब्धः आत्मनो लाभः,—अभीष्टरूपः येन तथाभूतस्य। अस्य—मदीयस्य इति भावः।

(४६१) कार्य्येति।—कार्य्यस्य लवः,—लेशः, बिन्दुः इत्यर्थः, यत्किञ्चित्कार्य्यम् इति निष्कर्षः, तस्य उपपादनं—सम्पादनं, तेन यः उपयोगः,—उपकारः, तेन। स्मारयितुं—स्मृतिपथं नेतुम्।

(४६२) प्रत्युपकारेति।—प्रत्युपकारेण—उपकारप्रतिदानेन, अन्यकृतेन इति भावः, दुष्प्रवेशाः,—प्रवेष्टुमशक्या इत्यर्थः। हृदयावष्टम्भाः,—हृदयगाम्भीर्य्याणि; धीराणां हृदयानि परप्रत्युपकारं नार्थयन्ते इति भावः। [ "अत" इत्यत्र "यतः" इति पाठान्तरम् ]। भवत्सिद्धैः—भवतः सिद्ध्या—अभीष्टपूरणेनेत्यर्थः। परिसमाप्तम्—अवसितं, कृत्यं—प्रयोजनं यस्य तथाभूतः, लब्धप्रत्युपकार इति भावः। साधयतु—गच्छतु। "प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते" इति साहित्यदर्पणः। मान्यः, भवानिति शेषः। यथासमीहि—चेष्टितानुरूपं, यथाऽभिलषितमित्यर्थः, स्थानं—

तथोक्तश्च (४६३) भूभुजा जिगमिषुः सुदृढं समालिङ्ग्य टीटिभादीन् कुवलयवनेनेव अवश्यायशीकरस्राविणा सास्रेण चक्षुषा वीक्षमाणः क्षितिपतिं पुनः उवाच,—"तात! ब्रवीमि यामीति न स्नेहसदृशम्। त्वदीयाः प्राणा इति पुनरुक्तम्। गृह्यताम् इदं शरीरकमिति (४६४) व्यतिरेकेण अर्थकरणम् तिलशः क्रीता वयमिति न उपकारानुरूपम्। बान्धवोऽसीति (४६५) दूरीकरणमिव। त्वयि स्थितं हृदयमिति अप्रत्यक्षम्।

---

विद्याधरलोकमित्यर्थः। इति, उक्ता इति शेषः। प्रत्याचचक्षे—प्रत्याख्यानं कृतवान् इत्यर्थः, प्रत्युपकृतिग्रहणे असम्मतोऽभूत् इति भावः।

(४६३) भूभुजा—राज्ञा। जिगमिषुः,—गन्तुमिच्छुः, [इच्छासन्नन्तस्य गमेः "सनाशंस—" (३।२।१६८ पा०) इति उप्रत्यये रूपम्] भैरवाचार्य्य इति शेषः। कुवलयवनेनेव उत्पलकाननेन इव। अवश्यायेति।—अवश्यायानां—तुषाराणां, ("अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्" इत्यमरः) शीकरान्—बिन्दून्, स्रवति इति तथोक्तेन। सास्रेण—सजलेन, अत्र अस्रशब्देनैव नयनसलिलार्थावबोधात् पुनः चक्षुःशब्दोपादानं निरर्थकमेव, तेन सास्रेणेत्यत्र ससलिलेनेति वक्तुमुचितम्। "यामि" इत्यादिना सर्वं स्वाभिप्रायं प्रकाशयतीति बोद्धव्यम्। स्नेहसदृशं—स्नेहानुरूपम्। अत्र स्नेहानुरूपनिषेधेन स्नेह इव सुतरामाविष्कृत एव, उक्तं हि,—प्रतिषेध इवेष्टस्य यद्विशेषाभिधित्सया। आक्षेप इति त सन्तः शंसन्ति कवयः सदा॥" इति। एवमुत्तरत्रापि। प्राणाः, मदीया इति शेषः, त्वदीयाः,—तवाधीनाः, त्वं मत्तः अभिन्न इति भावः। पुनरुक्तं—कार्य्येण प्राक् प्रदर्शितप्रायत्वात् तव पुनः वाचा समाधानं सधिकम् इति भावः।

(४६४) व्यतिरेकेण—पृथग्भावेन, अर्थकरणम्—अर्थसाधनम्, आवां खलु अभिन्नावेव, तथा कथने तु तस्य विप[र्य]यः स्यादिति भावः। तिलशः,—खण्डशः; यावन्त उपकाराः कृताः, मदीयेषु अवयवेषु तिलशः खण्डयित्वा प्रदत्तेषु सत्सु अपि तथा न परिशोध्यन्ते इति भावः।

(४६५) दूरीकरणम् इव—दूरे निक्षेप इव; बान्धवस्य स्वतो बहुधा भिन्नतया दूरवर्त्तित्वात् इति भावः। अप्रत्यक्षं—वचनमात्रम् एतत्; हृदयस्य तथास्थितस्य दृष्टिविषयत्वायोगात् इति भावः।

(४६६) त्वद्विरहकारिणी कारणा इयं नः सिद्धिरिति अश्रद्धेयम्। (४६७) निष्कारणः तव उपकार इति अनुवादः। स्मर्त्तव्या वयमिति (४६८) आज्ञा। सर्व्वथा (४६९) कृतघ्नालापेषु असज्जनकथासु च चेतसि कर्त्तव्योऽयं स्वार्थनिष्ठुरो जनः” इत्यभिधाय वेगच्छिन्नहारोच्छलितमुक्ताफलनिकरताडिततारागणं गगनतलम् उत्पपात; ययौ च सीमन्तितग्रहग्रामः सिद्धुरर्चितं धाम। (४७०) श्रीकण्ठोऽपि,—राजन्! पराक्रमक्रीतः

(४६६) त्वद्विरहकारिणी—तव विच्छेदजननी, अत एव नः,—अस्माकम्, इयं सिद्धिः,—विद्याधरत्वलाभः, कारणा—यातना, क्लेश एव इत्यर्थः, [ “कारणा तु यातना तीव्रवेदना” इत्यमरः। “नः सिद्धिः” इत्यत्र “न सिद्धिः” इति पाठे,—भवद्विरहजननात् इयं यातनारूपत्वेन परिणता, न हि एषा तात्त्विकी सिद्धिरिति, यतो हि, प्रियसङ्गसाहिना सिद्धिलाभस्यापि तथाविधसुखानाधायकत्वेनाकिञ्चित्करत्वादित्याशयः] अश्रद्धेयम्—अविश्वास्यम्; एतस्मिन् सविरहेण कारणाज्ञाने कथम् अत्र प्रवृत्तिः? इति एतद्वाक्यस्य अश्रद्धेयत्वम् इति भावः।

(४६७) निष्कारणः,—निरर्थकः, अहेतुः वा; कस्यापि प्रत्युपकारस्यानङ्गीकारादिति भावः। इति—एतत्कथनम्, अनुवादः,—उक्तार्थस्य प्रकारान्तरेण कथनम्।

(४६८) आज्ञा—आदेशः; अनुजीविभिः राजा न हि आदिश्यते, अपि तु राज्ञा ते आदिश्यन्ते इति भावः।

(४६९) कृतघ्नालापेषु—कृतं घ्नन्तीति कृतघ्नाः,—उपकारविस्मर्त्तारः, तेषाम् आलापाः,—भाषणानि तेषु, अकृतज्ञजनविषयकालापावसरेषु इत्यर्थः, असज्जनकथासु—दुर्ज्जनविषयकालापप्रस्तावेषु इत्यर्थः; भवत्प्रत्युपकाराकरणात् अहमपि कृतघ्नासज्जनेषु अन्यतमः इति भावः। स्वार्थनिष्ठुरः,—स्वकार्य्यमात्रनिर्वाहपरायणत्वेन निर्द्दयः। वेगेति।—वेगेन—उत्पतनरंहसा, छिन्नात्—त्रुटितात्, हारात् उच्छलितानां—स्खलितानां, मुक्ताफलानां—मौक्तिकानां, निकरैः,—समूहैः, ताड़ितः,—आहतः, तारागणः,—नक्षत्रसमूहः यस्य यत्र वा तत्। अत्र विषयिणां कियत्सङ्ख्यकानां मौक्तिकानां निगरणेन असङ्ख्यतारागणताड़नमध्यवसीयते इत्यसम्बन्धे सम्बन्धरूपा अतिशयोक्तिः। सीमन्तितेति।—सीमन्तितः,—द्विधाकृतः, ग्रहाणाम्—अन्तरीक्षचारिणां सूर्य्यादीनां, ग्रामः,—मण्डलं येन तथाभूतः। सिद्धुरर्चितं—विद्याधरत्वानुरूपमित्यर्थः, धाम—स्थानम्।

(४७०) श्रीकण्ठोऽपि—तदाख्यः नागोऽपि। पराक्रमक्रीतः,—वीर्य्यक्रीतः;

कर्त्तव्येषु नियोगेन अनुग्राह्यो ग्राहितविनयोऽयं जनः” इत्यभि-धाय राज्ञा अनुमोदितः तदेव भूयो भूविवरं विवेश।

(४७१) नरपतिस्तु क्षीणभूयिष्ठायां क्षपायां, प्रवातुम् आरब्धे (४७२) प्रबुध्यमानकमलिनीनिश्वाससुरभौ, (४७३) वन-देवताकुचांशुकापहरणपरिहासखेदिनि इव सावश्यायशीकरे, (४७४) परिमलाकृष्टमधुकृति, (४७५) कुमुदनिद्रावाहिनि,

[“कर्त्तृ-करणे कृता बहुलम्” (२।१।३२ पा०) इति सूत्रेण तृतीयासमासः]। कर्त्तव्येषु—कार्य्येषु, भवतः इति भावः, नियोगेन—आदेशेन। ग्राहितविनयः,—शिक्षितविनयः, पराजयेन इति भावः। [“राज्ञा अनुमोदितः” इत्यत्र “राजानु-मोदितः” इति पाठान्तरम्। एतदेव समीचीनं मन्यामहे, “मतिबुद्धि—” (३।२।११८ पा०) इति वर्त्तमानविहितस्य क्तस्य “क्तेन च—” (२।२।१२ पा०) इत्यादिना षष्ठ्या एव समासनिषेधात्, अतीतविहितेन क्तेन तृतीयया समासो भवत्येव इति समञ्जसं भवेत्। “राज्ञा अनुमोदितः” इति पाठे—“कर्त्तृ-करणे—” (२।१।३२ पा०) इति बहुलग्रहणात् समाधेयः समासाभावः इति दिक्]। भूविवरं—पातालम्।

(४७१) “नरपतिः” इत्यस्य “नगरं विवेश” इत्युत्तरेणान्वयः। क्षीणभूयिष्ठायां—प्रायेण क्षीणायाम् इत्यर्थः। क्षपायां—रजन्याम्। प्रवातुं—प्रकर्षेण सञ्चरितुम्।

(४७२) प्रबुध्यमानेति।—प्रबुध्यमानानां—सूर्य्योदयप्रारम्भात् विकाशं लभ-मानानां, कमलिनीनां—पद्मिनीनां, निश्वासेन—तत्सम्पृक्तवायुनेत्यर्थः, सुरभिः,—सुगन्धिः तस्मिन्।

(४७३) वनेति।—वनदेवतानां कुचयोः,—स्तनयोः, अंशुकस्य—वसनस्य, अपहरणमेव परिहासः,—क्रीड़नविशेषः, तेन यः खेदः,—घर्म्मोदकं, सत्त्वोदयात् इति भावः, तद्वति इव, सावश्यायशीकरे—तुषारविन्दुयुक्ते इत्यर्थः। एतेन वायौ भुजङ्गव्यवहारसमारोपात् समासोक्तिरलङ्कारः।

(४७४) परिमलेति।—परिमलः,—पुष्पादिविमर्द्दजनितो गन्धः, सुरतसम्भोगज-सन्निभः इति तु अर्थवशसम्पन्नः. तद्वत्त्वादिति भावः, (“विमर्द्दोत्थे परिमलः” इत्यमरः) तेन आकृष्टाः,—आक्षिप्ताः, मधुकृतः,—भ्रमराः; अन्यत्र,—तदाघ्रायोन्मादिताः विटाः इति फलितं येन तथोक्ते।

(४७५) कुमुदेति।—कुमुदानां निद्रा—सङ्कोच इत्यर्थः, तां वाहयति—

(४७६) निशापरिणतिजड़े,तुषारलेशिनि वनानिले,(४७७) विरह-विधुरचक्रवाकचक्रनिश्वसितसन्तापितायामिव अपरजलनिधिमव-तरन्त्यां त्रियामायां, (४७८) साक्षादागतलक्ष्मीविलोकनकुतू-हलिनीषु इव समुन्मीलन्तीषु नलिनीषु, (४७९) उन्निद्रपक्षिणि, (४८०) क्षरति कुसुमविसरमिव तुहिनकणनिकरं, मृदुपवन-

---

जनयति इति तस्मिन्; अत्र नायिकान्तरसमागमसमये प्रणयकलहमाशङ्क्य प्रागुप-भुक्ताया अप्यन्यस्याः कुमुदिन्याः प्रेमगर्भव्यवहारेण निद्रासमुत्पादनात्, अस्य नायिकासु तुल्यानुरागदर्शनात् दक्षिणनायकत्वं ध्वन्यते।

(४७६) निशेति।—निशायाः,—रात्रेः, परिणतिः,—परिणामः, अवसानम् इत्यर्थः, तया जड़ः,—मन्थरः; एकत्र—शिशिरभारेण, अन्यत्र,—सर्व्वां निशां व्याप्य निधुवनविलासात् प्रजागरालसः इति भावः तस्मिन्। तुषारलेशिनि—शिशिरबिन्दु-वाहिनि, ईषत् शीतले इति भावः, अन्यत्र,—रतिश्रमस्वेदवति इत्यर्थः।

(४७७) विरहेति।—विरहेण—विच्छेदेन, विधुराणां—व्याकुलानां, चक्र-वाकाणां—रथाङ्गनामकानां पक्षिणां, चक्रस्य—समूहस्य, निश्वसितेन—निश्वास-वायुना, उष्णेन इति भावः, सन्तापितायाम् इव; अत्र प्रकृतस्याप्रकृतस्वरूपेण सम्भा-वनादुत्प्रेक्षाऽलङ्कारः। अपरजलनिधिं—पश्चिमसागरम्; प्राचि तपनस्योदयात् तत्तेजसा क्रमात् तमसां प्रतीचि अपसरणात् इति तात्पर्य्यम्। सन्तापितः शीतल जलमवगाहते इति लोकप्रसिद्धिः। त्रियामायां—रजन्याम्।

(४७८) साक्षादिति।—साक्षादागतायाः,—नेत्रसमीपे समुपस्थितायाः, प्रत्यक्ष-दृश्यमानायाः इत्यर्थः, लक्ष्म्याः,—श्रियाः, ( नवोदितस्य पत्युः प्रभाकरस्य शोभाया इत्यपि व्यज्यते ) विलोकने—दर्शने, दर्शनार्थमित्यर्थः, कुतूहलिन्यः,—कौतुकवत्यः तासु इव। समुन्मीलन्तीषु—विकसन्तीषु, नलिनीषु—पद्मिनीषु; एतेन नलिनीनां मुग्धनायिका-वत्त्वं ध्वनितम्।

(४७९) उन्निद्रेति।—उन्निद्राः,—विगतनिद्राः, प्रबुद्धा इत्यर्थः, ( प्रत्यूषे पतत्रि-वर्गाणां जागरणस्वभावत्वादिति भावः ) पक्षिणो यत्र तस्मिन्; एतेन पक्षिणां शृङ्गार-सहायानां विटादीनामिव रत्यनुकूलसहायत्वं प्रतीयते।

(४८०) क्षरति—वर्षति। कुसुमविसरमिव—पुष्पनिकरमिव; अन्यत्र,—विरहतापोपशान्तये रतिसुखोपभुक्तये वा पुष्पविकीर्णत्वं दृश्यते। मृद्विति।—मृदुना

लासितलते कानने, (४८१) कमललक्ष्मीप्रबोधमङ्गलशङ्खेषु इव रसत्सु (४८२) अन्तर्बद्धध्वनन्मधुकरेषु, मुकुलायमानेषु कुमुदेषु, (४८३) उज्जिहानरविरथवाजिविसृष्टैः प्रोथपवनैः प्रोत्सार्य्यमाणासु इव वारुण्यां ककुभि पुञ्जीभवन्तीषु श्यामालताकलिकासु तारकासु, (४८४) मन्दरशिखराश्रयिणि मन्दानिललुलितकल्प-लतावनकुसुमधूलिविच्छुरिते इव धूसरीभवति सप्तर्षिमण्डले,

---

—मन्देन, पवनेन—वायुना, लासिताः,—नर्त्तिताः, कम्पिता: इत्यर्थः, लताः,—व्रतत्यः यत्र तादृशे; एतेन वायोः कलापरधीरललितनायकत्वं गम्यते।

(४८१) कमलेति।—कमलानां—पद्मानां, लक्ष्मीः,—श्रीः, तस्याः प्रबोधाय—जागरणाय, विकसनाय इति भावः, मङ्गलशङ्खाः तेषु इव, इत्युत्प्रेक्षा। रसत्सु—ध्वनत्सु।

(४८२) अन्तरिति।—अन्तः,—अभ्यन्तरे, बद्धाः—रुद्धाः सायं पद्मनिमील-नादिति भावः, सायन्तु पूर्वदिवसीयमवगन्तव्यम्; अधुना प्रभातवर्णनादर्शनात् कमलानां विकासप्रसङ्गात्, रतिश्रान्तानां कमलानां मधुररसनेन जागरणार्थं तत्र व्यासक्ताः वा, ध्वनन्तः—गुञ्जन्तः, मधुकराः,—भ्रमराः तेषु; एतेन भ्रमराणां रत्यनुकूलसहायत्वं प्रतीयते। मुकुलायमानेषु—मुकुलभावं गच्छत्सु।

(४८३) उज्जिहानेति।—उज्जिहानैः—उद्गच्छद्भिः, [उत्पूर्व्वकात् जिहीते इत्यस्य शानचि रूपम्] प्रबुद्धैः वा, रवेः,—सूर्य्यस्य, रथवाजिभिः,—रथाश्वैः, विसृष्टाः,—व्यक्ताः तैः। प्रोथपवनैः,—नासामारुतैः। प्रोत्सार्य्यमाणासु इव—अपसार्य्यमाणासु इव, इत्युत्प्रेक्षा। वारुण्यां ककुभि—पश्चिमायां दिशि। पुञ्जीभवन्तीषु—संहतीभवन्तीषु। श्यामेति।—श्यामा—निशा एव, लता—व्रततिः, ("श्यामा स्यात् शारिवा निशा" इत्यमरः) यद्वा,—श्यामालता—प्रियङ्गुलतिका, मकरिका वा, तस्याः कलिकाः,—कोरकाः तासु, तत्सदृशीषु इत्यर्थः। तारकासु—नक्षत्रेषु; इति परम्परितं (प्रियङ्गुलतिकापक्षे तु निरङ्गं) रूपकमलङ्कारः।

(४८४) मन्दरेति।—मन्दरस्य—पर्व्वतभेदस्य, शिखरं—शृङ्गम्, आश्रयतीति तथोक्ते। मन्दानिलेति।—मन्देन—अल्पाल्पेन, मृदु प्रवहता इत्यर्थः, अनिलेन—वायुना, लुलितम्—ईषदान्दोलितं, यत् कल्पलतावनं—देवतरुविशेषकाननं, तस्य कुसुमानां—पुष्पाणां, धूलिभिः,—परागैः, विच्छुरिते इव—विलिप्ते इव, [इति वाच्या क्रियोत्प्रेक्षा] धूसरीभवति—धूसरतां व्रजति, सप्तर्षिमण्डले—मरीच्यादिमहर्षिमण्डले; एतेषां स्वर्गावस्थायित्वात् कल्पलतिकाप्रसूनपरागलिप्तत्वं साधु सङ्गटते।

( ४८५ ) सुरवारणाङ्कुशे इव च्युते गलति तारामये मृगे त्रीनपि टीटिभादीन् गृहीत्वा नागयुद्धव्यतिकरमलीमसानि शुचिनि वनवापीपयसि प्रक्षाल्य अङ्गानि नगरं विवेश। अन्यस्मिन् अहनि तेषाम् आत्मशरीरानन्तरं स्नानभोजनाच्छादनादिना प्रीतिम् अकरोत्।

कतिपयदिवसापगमे च ( ४८६ ) परिव्राट् भूभुजा वार्य्यमाणोऽपि वनं ययौ। पातालस्वामि-कर्णतालौ तु शौर्य्यानुरक्तौ तमेव सिषेवाते। ( ४८७ ) सम्पादितमनोरथातिरिक्तविभवौ च सुभटमण्डलमध्ये निष्कृष्टमण्डलाग्रौ समरमुखेषु प्रथमम्

( ४८५ ) सुरेति।—सुरवारणस्य—ऐरावतस्य, अङ्कुशे इव, च्युते—स्वस्थानात् भ्रष्टे, गलति—सरति, अस्तं गच्छति इत्यर्थः, तारामये—नक्षत्रमये, मृगे—मृगशीर्षाख्ये नक्षत्रे, स हि त्रितारोऽङ्कुशाकार इति कोणत्रयविशिष्टेनाङ्कुशेन सहास्य नक्षत्रत्रयवतः मृगशिरस अत्रैधर्म्यसाम्यप्रतिपादनात् उपमाऽलङ्कारः। टीटिभादीन्—टीटिभ-कर्णताल-पातालस्वामिन इत्यर्थः। नागेति।—नागेन—श्रीकण्ठाख्येन सह, यत् युद्धं, तस्य व्यतिकरः,—सम्पर्कः, तेन मलीमसानि—मलिनानि। शुचिनि—पवित्रे, निर्म्मले वा, वनवापीपयसि—अरण्यसरसीजले। अन्यस्मिन् अहनि—अन्येद्युः, परदिने इत्यर्थः, निशाऽवसानात् परमिति भावः, तेषां—टीटिभादीनाम्। आत्मेति।—आत्मशरीरम् —आत्मदेहम, अनन्तरम्—अव्यवहितोत्तरं भवति यस्मिन् कर्म्मणि तत् यथा स्यात् तथा, स्नानभोजनाच्छादनादिना—स्नानाहारवसनादिना ; प्राक् तेषां स्नानभोजनादिव्यापारं समाधाय, तेषां शरीरं सन्तर्प्य, पश्चात् स्वस्य शरीरसन्तर्पणाय स्नानभोजनादिव्यापारं विदधाविति भावः, यद्वा—आत्मशरीरेण सह, नास्ति अन्तरं—भेदः यस्मिन् कर्म्मणि तत् यथा तथा, आत्मतुल्यमित्यर्थः।

( ४८६ ) परिव्राट्—परिव्राजकः, [ परिव्रजतीत्यर्थे परिपूर्व्वकात् व्रजतेः कर्त्तरि क्विपि निष्पन्नम् ] टीटिभ इत्यर्थः। भूभुजा—राज्ञा, [ भुवं भुनक्ति पालयतीत्यर्थे भूपदात् भुनक्तेः कर्त्तरि क्विपि रूपम् ]। वार्य्यमाणः,—निषिध्यमानः। वनं ययौ—वानप्रस्थाश्रममवलम्बे इति भावः। शौर्य्येति।—शौर्य्येण—पराक्रमेण, राज्ञ इति भावः, अनुरक्तौ—जातानुरागौ, न भोगलोलुपतया इति भावः, अन्तिमौ तु तौ गुणलुब्धौ गृहानेवाधितष्ठतुरिति फलितम्।

( ४८७ ) सम्पादितेति।—सम्पादितः,—सञ्जनितः, भूभुजेति शेषः, मनोरथस्य

उपयुज्यमानौ कथाऽन्तरेषु च अन्तराऽन्तरा समादिष्टौ विचित्राणि भैरवाचार्य्यचरितानि शैशववृत्तान्तांश्च कथयन्तौ तेनैव सार्द्धं जराम् आजग्मतुः इति ।

इति श्रीबाणभट्टकृते हर्षचरिते भैरवाचार्य्यसिद्धिसाधनं नाम
तृतीय उच्छ्वासः ॥ ३ ॥

---

—अभिलषितस्य, अतिरिक्तः,—अधिकः, विभवः,—सम्पत् ययोः तौ । सुभटमण्डलमध्ये —प्रवीरसङ्घमध्ये । निष्कृष्टेति ।—निष्कृष्टम्—अत्युत्कृष्टमित्यर्थः, मण्डलाग्रं—खड्गः ययोः तौ, ("खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः । कौक्षेयको मण्डलाग्र ..." इत्यमर ) यद्वा,—निष्कृष्टं—प्रख्यातं, यत् मण्डल—वीरव्यूह' तस्य अग्रौ—प्रधानभूतौ, वीरसमाजेषु प्रसिद्धावित्य'., अत एव समरमुखेषु—युद्धाग्रेषु, सेनाव्यूहसम्मुखे इति यावत्, प्रथमम्—अग्रे, प्राधान्येन, सेनापतित्वेन वा इति भावः, उपयुज्यमानौ—नियुज्यमानौ, कृतौ इत्यर्थः । कथाऽन्तरेषु—आलापप्रसङ्गेषु । अन्तराऽन्तरा—मध्ये मध्ये । [ "आनुपूर्व्ये द्वे वाच्ये" ( वा॰ ) इति द्वित्वम् ] समादिष्टौ—आज्ञप्तौ, राज्ञा इति शेष । शैशववृत्तान्तान्—बाल्यक्रीडादिव्यापारान्, भैरवाचार्य्यस्यैव इति भावः, कथयन्तौ इति स्थिरसौहार्दज्ञापनपरं बोद्धव्यम् । तेनैव—राज्ञा, [ अत्र "स युक्तेऽप्रधाने" ( २।३।१९ पा॰ ) इति सूत्रे, 'एवं साकं सार्द्धं सम-योगेऽपि' इति वृत्तिः, तेन सार्द्ध-योगे तृतीया ज्ञेया ] । सार्द्ध—सह । जरा—वार्द्धकम् ।

इत्यभिमशास्त्रा श्रीसच्चरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोध-
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चामलाख्यायां
श्रीहर्षचरितव्याख्यायां तृतीय उच्छ्वास. ॥ ३ ॥

# चतुर्थ उच्छ्वासः ।



योगं स्वप्नेऽपि नेच्छन्ति कुर्व्वते न करग्रहम् ।
महान्तो नाममात्रेण भवन्ति पतयो भुवः ॥ १ ॥
सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे ।
विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे ॥ २ ॥

---

अथेदानीं महता गुणकीर्त्तनच्छलेन प्रस्तुतस्य ग्रन्थनायकस्य गुणवत्त्वं प्रख्यापयितुमाह, योगमिति ।—महान्तः,—महाऽनुभावा जनाः, स्वप्नेऽपि—प्रसुप्तस्य विज्ञानेऽपि, निद्रावस्थाया मानसिकज्ञानविशेषेऽपि इत्यर्थः, ("स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्" इति मेदिनी) योगं—विश्वस्तघातकं, विश्वासहन्तृत्वम् इत्यर्थः, पराभिसन्धानार्थमुपधिमिति यावत्. ("योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । विश्वस्तघातके…… ॥" इति मेदिनी) मिलनञ्च,न इच्छन्ति—नाभिलपन्ति, करग्रहं—करेण—राजग्राह्यभागेषु, ग्रहः,—आग्रहः तं, पीडनम् इत्यर्थः, दण्डग्रहणमिति वा, पाणिग्रहणञ्च, विवाहमित्यर्थः, न कुर्व्वते,अथ च नाममात्रेण भुवः,—पृथिव्याः, पतयः,—अधिपतयः. परिणेतारश्च. भवन्ति ; एकत्र,—नाममात्रश्रवणेन सर्वं कम्पमानास्तान् पतित्वे वृण्वन्ति, अन्यत्र,—पाणिग्रहणसङ्गमादिकं विनाऽपि भूपतयः इति नामधारिणो भवन्तीति भावः ; एतेन भाविनृपतेः हर्षस्य अलोलुपत्वं प्रजारञ्जकत्वं प्रभावातिशय्यञ्च सूचितम् । पथ्यावक्त्रं वृत्तम् ॥ १ ॥

इदानीं पुष्पभूतिवंशे उत्पत्स्यमानस्य हर्षनृपतेः तद्वंशोत्पन्नेभ्यः पूर्व्वनृपतिभ्यः श्रेष्ठत्वमाह सकलेति ।—विपुले—महति, विशाले च, अपि नृपवंशे—राजवंशे, गणाधिपस्य —गणपतेः, मुखे—वदने, अन्यत्र,—गणाः,—सैन्यभेदाः, ("गणः प्रमथसङ्घौघे चण्डासैन्यप्रभेदयोः" इति मेदिनी) तेषाम् अधिपस्य—अधिपतेः, राज्ञः इत्यर्थः, राजसमूहानामिति भावः, मुखे—प्रधाने इत्यर्थः, नृपवंशे इत्यस्य विशेषणत्वेन योजनीयम्, दन्त इव—रदन इव, पृथुः,—आदिराजः, तत्प्रतिमः,—तत्सदृशः ; अन्यत्र,—पृथ्वी—विशाला, प्रतिमा—दन्तबन्धः, दन्तकोष इत्यर्थः यस्य तथाभूतः. ("प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि" इति मेदिनी) एक एव—कश्चिदेव, यथा गणाधिपस्य मुखे दन्तोऽप्येक एव, तथा नरेन्द्रवंशे कश्चिदेक एव इति

(१) अथ तस्मात् पुष्पभूतेः द्विजवरस्वेच्छागृहीतकोषो नाभिपद्म इव पुण्डरीकेक्षणात्, लक्ष्मीपुरःसरो रत्नसञ्चय इव रत्नाकरात्, गुरुबुधकविकलाभृत्तेजस्विभूनन्दनप्रायो ग्रहगण इव उदयस्थानात्, (२) महाभारवाहनयोग्यः सागर इव

---

भावः, सकलानां हीभृतां—राज्ञां, पर्व्वतानाञ्च, कम्पकृत्—भयप्रद इति भावः; एकत्र,—नामश्रवणेनैव वेपथुजननात्, अन्यत्र,—स्वस्थानादपसारणात्, उत्पद्यते—जायते। एतेन महाराजस्य हर्षस्य उत्पत्तिः सूचिता। आर्य्या वृत्तम् ॥ २ ॥

(१) अथेत्यादि।—"अथ" इत्यस्य "निर्जगाम राजवंश." इति उत्तरे सम्बन्धः। तमेव विशिनष्टि, द्विजवरेत्यादिभिः।—द्विजवरै.—ब्राह्मणश्रेष्ठैः; अन्यत्र,—द्विजेषु व :,—श्रेष्ठः, ब्रह्मेत्यर्थः, तेन स्वेच्छया—यथाकाममित्यर्थः, गृहीतः,—लब्धः, स्वीकृतश्च, कोषः,—धनं, बीजकोषश्च, कर्णिका च इत्यर्थः यस्य तथाभूतः, पुण्डरीकेक्षणात्—कमललोचनात्, पुण्डरीकाक्षात् नारायणाच्च, नाभिपद्म इव—नाभिकमलमिव; यद्यपि "वा पुंसि पद्मं नलिनम्" इत्युक्तममरेण, तथाऽपि पद्मशब्दस्य पुंसि प्रयोगस्तु अकविजुष्टदोषदुष्ट एवेत्युक्तमालङ्कारिकैः। इतः प्रभृति श्लेषसङ्कीर्णोपमाऽलङ्कारः विज्ञेयः, सर्व्वत्रावैधर्म्यसाम्यप्रतिपादनादिति। लक्ष्मी,—श्रीः, पुरःसरी—प्रथमा यस्य तथोक्तः, लक्ष्मीः,—सम्पत्, तत्पुरःसरश्च। रत्नसञ्चय इव—रत्नाना—रत्नभूतानाम्, उत्कृष्टानामित्यर्थः, पुत्राणामिति भावः, "जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते" इत्युक्तेः, सञ्चयः,—समुत्पत्तिः यस्मात् सः, रत्नानां सञ्चयः यस्य तथाभूतो वा, रत्नाना—मणीनां, सञ्चयः,—समूहश्च। रत्नाकरात्—रत्नानाम् आकरः,—आश्रयः, उत्पत्तिस्थानञ्च तस्मात्, समुद्राच्च। गुर्व्विति।—गुरवः,—उपदेष्टारः, बुधाः,—पण्डिताः, कवयः,—काव्यकर्त्तारः, कलाभृतः,—सङ्गीताभिज्ञाः, ["कलाभृत्" इत्यत्र "कलावत्" इति पाठेऽपि स एवार्थः] तेजस्विनः,—शूराः, भूनन्दनाः,—राजानः, अन्यत्र,—गुरुः,—बृहस्पतिः, बुधः,—सोमात्मजः, कविः,—शुक्रः, कलाभृत्—च :, तेजस्वी—सूर्य्यः, भूनन्दनः,—मङ्गलः, एते प्रायेण यत्र तथाभूतः। उदयस्थानात्—उदयाचलादित्यर्थः; अन्यत्र,—प्रभवस्थानादित्यर्थः।

(२) महाभारेति।—महान् भारः,—भूभार इत्यर्थः, भूपालनरूप इति भावः, तस्य वाहनं—निर्वाहणं, तस्य योग्यः, अन्यत्र,—महतो भारस्य—भारवद्द्रव्यस्य, वाहने—स्थानात् स्थानान्तरनयने, योग्यः,—समर्थः। [समुद्रपक्षे आरोप्योद्यमानायकेऽपि भारशब्दे राजवंशपक्षे भूरक्षणभारस्य न तथाऽर्थता इति "वाहन—"

सगरप्रभावात्, (३) दुर्ज्जयबलसनाथो हरिवंश इव शूरात् निर्जगाम राजवंशः। (४) यस्मात् अविनष्टधर्म्मधवलाः प्रजासर्गाः इव कृतसुखात्, प्रतापाक्रान्तभुवनाः किरणा इव तेजो-

(८।४।८ पा०) इत्यादिना न णत्वम्]। सगरप्रभावात्—सगरस्य—सूर्य्यवंशीयस्य राजविशेषस्य, प्रभावात्—सामर्थ्यात्। पुरा सगरस्य नृपतेः षष्टिसहस्राणि पुत्रा आसन्। ते तु कालेन महाबलाः पराक्रान्ताश्च वीराः पितुः सगरस्य अश्वमेधीयाश्वं रक्षन्तः सर्व्वां पृथ्वीं प्रदक्षिणीकुर्व्वन्तः चेरुः। अवान्तरे शक्रेण तेषां मध्यचारी अश्वः दैवशक्त्या हरता पाताले कपिलमुनिसमीपे रक्षितः। अथ ते रक्षकाः यज्ञीयमश्वम् अपश्यन्तः सर्व्वां पृथ्वीं स्वर्गञ्च भ्रमन्तः परं न अश्वमवापुः। ततः पित्राज्ञया पातालं खनित्वा कपिलसमीपे तमश्वं दृष्ट्वा कपिलं न्यपीड़यन्। स च मुनिः तान् कोपदृष्ट्या पश्यन्नेव भस्मीचकार। तेषां तदा पातालखननेन यो जलराशिरुत्थितः, स एव सगरादुत्पन्न इति सागरसंज्ञां लेभे इति पुराणवार्त्ता। अन्यत्र,—सगरस्येव प्रभावो यस्य तथाभूतः तस्मात्। ["प्रभावात्" इत्यत्र "प्रभवात्" इति पाठे,—सगरात् प्रभवः,—उत्पत्तिर्यस्य तस्मात्, सगरपुत्रादित्यर्थः; अन्यत्र,—सगरवत् प्र—प्रशस्तः, प्रशस्तवंशे इत्यर्थः; भवः,—उत्पत्तिः यस्य तस्मात् इत्यर्थः]।

(३) दुर्ज्जयबलसनाथः,—दुर्ज्जयं बलं—पराक्रमः येषां तैः, तादृशैः वीरैरित्यर्थः; यद्वा,—दुर्जयेन—दुःखेन जेतुं शक्येन, पराक्रमिणा इत्यर्थः, बलेन—सैन्येन सनाथः,—सहितः; किं वा—दुर्ज्जयश्च बलसनाथश्च—महाप्राणश्च सैन्ययुतश्च वा, असौ दुर्ज्जयबलसनाथः; अन्यत्र,—दुर्ज्जयेन—जेतुमशक्येन, बलेन—बलदेवेन, सनाथः,—सहितः; यद्वा,—दुर्ज्जयः,—विष्णुः, "दुर्ज्जयो दुरतिक्रमः" इति विष्णुसहस्रनामवचनात्, बलः,—बलदेवश्च, ताभ्यां सनाथः; शूरात्—वीरात्, "तस्मात् पुष्पभूतेः" इति पूर्व्वेणान्वयः; तदाख्यात् वसुदेवपूर्व्वपुरुषाच्च।

(४) यस्मात्—राजवंशात्, "यस्मात्" इत्यस्य "अजायन्त राजानः" इति उत्तरेण सम्बन्धः। तानेव विशिनष्टि, अविनष्टेत्यादिभिः।—अविनष्टेन—अविलुप्तेन, सम्पूर्णेनेत्यर्थः, धर्मेण—वेदोदितानुष्ठानेन, "चोदनालक्षणोऽर्थो धर्म्मः" इत्युक्तेः, "चोदना वेदविधिस्तया लक्ष्यते" इति तद्व्याख्यानाच्च; धवलाः,—विशुद्धाः, चतुष्पाद्धर्म्मशालिन इति यावत्; यद्वा,—अविनष्टधर्मान् धवान्—नरान्, लान्ति—गृह्णन्ति, सेवत्वेन भृत्यत्वेन वा इति भावः तथोक्ताः, ("धवः पुमान् नरे धूर्त्ते पत्यावन्तरेऽपि च" इति मेदिनी) प्रजासर्गाः,—मानुषसृष्टयः। कृतसुखात्—संस्कृत-

निधेः, (५) विग्रहव्याप्तदिङ्मुखा गिरय इव भूभृत्प्रवरात्, (६) धरणिधारणक्षमा दिग्गज इव ब्रह्मकरात्, उदधीन् पातुम् उद्यता जलधरा इव घनागमात्, (७) इच्छाफलदायिनः कल्पतरव इव नन्दनात्, (८) सर्व्वभूताश्रया विश्वरूपप्रकरा इव श्रीधरात् अजायन्त राजानः।

---

मुखात्, सत्कारपूतवचस इति भावः, सत्ययुगप्रारम्भाच्च। प्रतापेति।—प्रतापेन कोष-दण्डजशक्त्या, ("स प्रभावः प्रतापश्च यत्तेजः कोष-दण्डजम्" इत्यमरः) तेजसा च, आतपेनेत्यर्थः, आक्रान्तम्—अधिष्ठितं, भुवनं यैः तथोक्ताः। तेजोनिधेः,—प्रतापशालिनः, सूर्य्याच्च।

(५) विग्रहेति।—विग्रहेण—रणेन, कायेन च, ("विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम्" इति मेदिनी) व्याप्तानि दिङ्मुखानि यैः तथोक्ताः। भूभृत्प्रवरात्—भूभृत्सु—राजसु, पर्व्वतेषु च, प्रवरः,—श्रेष्ठः तस्मात्, [निर्द्धारे षष्ठीसमासनिषेधात् सप्तमी एव आश्रयणीया। "भूभृत्प्रवरात्" इत्यत्र "भूभृत्प्रभवात्" इति पाठे,—भूभृत्सु—भूपालेषु, प्रभवः,—पराक्रमः यस्य, अन्यच्च,—भूभृतां—पर्व्वतानां, प्रभवः,—प्रथमप्रकाशस्थानं तस्मात् इत्यर्थः, ("प्रभवो जन्ममूले स्यात् जन्महेतौ पराक्रमे। ज्ञानस्य चादिमस्थाने" इति मेदिनी) केचित्तु "भूभृत्प्रभवो ब्रह्मा" इति व्याचक्षते]।

(६) धरणीति।—धरण्याः,—पृथिव्याः, धारणे—पालने, उद्वहने च, क्षमाः,—शक्ताः। ब्रह्मकरात्—ब्रह्म—वेदोक्तं धर्म्मम् इत्यर्थः, करोतीति तस्मात्, विधातृहस्ताच्च, सामगानं कुर्व्वतः ब्रह्मणः करात् करिणः उत्पन्ना इति पौराणिकी वार्त्ता। उदधीन्—समुद्रान्, पातुं—रक्षितुं, ग्रसितुञ्च। घनागमात्—घनः,—सान्द्रः, दृढ इत्यर्थः, आगमः,—शास्त्रज्ञानं यस्य तथोक्तात्, मेघागमाच्च, वर्षाकालप्राप्त्येत्यर्थः।

(७) इच्छेति।—इच्छया—कामनया, अर्थिनामिति भावः, फलानि—अभिलषितानि, दातुं शीलमेषां तथोक्ताः, [अत्र इच्छाफलपूर्व्वकात् दाधातोः "सुप्यजातौ—" (३।२।७८ पा०) इत्यादिना णिनिप्रत्यये "आतो युक्—" (७।३।३३ पा०) इत्यादिना युगागमे रूपम्]। नन्दनात्—नन्दयतीति तथोक्तात्, तदाख्योद्यानाच्च।

(८) सर्व्वेति।—सर्व्वेषां भूतानां—प्राणिनां, जीवानाञ्च, प्रजानाञ्चेत्यर्थः, क्षित्यादिमहाभूतानां वा, आश्रयाः,—आश्रयणीयाः; यद्वा,—सर्व्वेषु—सकलेषु द्रव्येषु

(९) तेषु दैवमुत्पद्यमानेषु क्रमेण उदपादि हूणहरिण-केसरी, सिन्धुराजज्वरः, गुर्ज्जरप्रजागरः, गान्धाराधिपगन्धद्विप-कूटपाकलः, (१०) लाटपाटवपाटच्चरः, (११) मालव-लक्ष्मीलतापरशुः, प्रतापशील इति प्रथितापरनामा,

---

इति भाव, भूतानि—सत्यानि, नित्यत्वात् पारमार्थिका इति भाव, अत एव आश्रयाः। विश्वरूपप्रकारा,—विशेषा—जगता, रूपप्रकारा,—रूपनिवहाः, [ "विश्वरूपप्रकाराः" इत्यत्र "विश्वरूपप्रकारा." इति पाठे,—भगवतः श्रीविष्णो दर्दर्शरूपविशेषाः इव इत्यर्थ ]। श्रीधरात्—श्रियं—सम्पदं, राजलक्ष्मी वा, धरतीति तथोक्तात्, विष्णोश्च।

(९) तेष्वित्यादि।—"उदपादि" इत्यस्य "प्रभाकरवर्द्धनो नाम राजाऽधिराज." इत्युत्तरेणान्वय'। उदपादि—उत्पन्न.। तमेव विशिनष्टि, हूणेत्यादिभि।—हूणा.—तदाख्यक्षत्रियविशेषा, देशविशेषा वा, हरिणा इव—मृगा इव, तेषा तेषु वा केसरी—सिंह, तेषा विजयेन भीतिहेतुत्वादिति भाव.; एवमुत्तरत्रापि बोद्धव्यम्, इतः प्रभृति सर्वत्र रूपकमलङ्कार, अभेदाध्यासदर्शनात्। सिन्धुराजज्वर,—सिन्धुराजस्य ज्वर.—सन्तापदायक रोगविशेष। गुर्जरप्रजागर..—गुर्जरनिद्राक्षय., गुर्जरदेशीया जना यस्य भयेन सतत जाग्रतीति भाव। गान्धाराधिप,—गान्धारराज एव, गन्ध-द्विप,—गन्धप्रधानो द्विप, मत्तहस्तीत्यर्थ', "खेद मूत्रं पुरीषञ्च मज्ञाचेव मतङ्गजा। यस्याघ्राय विमाद्यन्ति त विद्यात् गन्धहस्तिनम्॥" इत्युक्तलक्षणो वा, तस्य कूट,—निश्चल', अविच्छेदीति भाव, यद्वा,—कूटे -यन्त्रे, मयमनविशेषे इत्यर्थ', ("कूटोऽस्त्री निश्चले राशौ···। ······सीरावयव-यन्त्रयो:॥" इति मेदिनी) पाकल',—हस्तिज्वर-विशेष, ("पाकल कुष्ठभेषज्ये पुंसि स्यात् कुञ्जरज्वरे" इति मेदिनी)। "विविधैर्नामभि' क्रूरो नानायोनिषु वर्त्तते। पाकलो गजेष्वभितापो वाजिष्वलर्क' कुकुरेषु। इन्द्रमदो मत्स्येष्वप्सु नीलिका ज्योतिरोषधिषु भूम्यामूषरो नाम॥" इत्यादि वैद्यके च।

(१०) लाटेति।—लाटाना—लाटदेशीयाना क्षत्रियाणा, [लाटशब्दात् 'तत्र जात' (४।३।२५ पा०) इत्यणि रूपम्] पाटवस्य—नैपुण्यस्य. पाटच्चरः,—चौरः, तद्विध्वंसीत्यर्थ, ("चौरैकागारिकस्तेन ·····पाटच्चरमलिम्लुचा" इत्यमर)।

(११) मालवेति।—मालवाना—तदाख्यजनपदाना, लक्ष्मीरेव लता, तस्याः परशु,—कुठार.। हूणादिराजविजेता, तदाख्यदेशविजेता वेति निष्कर्ष। प्रताप-शील,—यतो हूणादिराजविजयी, अत एव प्रतापशील इति, प्रथितापरनामा—

(१२) प्रभाकरवर्द्धनो नाम राजाधिराजः। (१३) यो राज्याङ्गसङ्गीनि अभिषिच्यमान एव मलानीव मुमोच धनानि। यः परकीयेणापि कातरवल्लभेन रणमुखे तृणेनेव धृतेन अलज्जत जीवितेन। यः (१४) करधृतधौतासिप्रतिविम्बितेन आत्मनाऽपि अदूयत समितिषु सहायेन। रिपूणां पुरः (१५) प्रधनेषु धनुषाऽपि नमता यो मानी मानसेन अखिद्यत। यस्य

---

विख्यातान्यनामधेयः; यद्वा,—प्रथित इति अपरः,—प्रभाकरवर्द्धनादितरः, नाम—समाख्या यस्य तथाभूतः।

(१२) प्रभेति।—प्रभाकरः,—सूर्य्यः, तद्वत् वर्द्धते इति तथोक्तः; यद्वा,—प्रभाकरश्चासौ वर्द्धनश्च इति विग्रहः, यशःप्रभावशालित्वात्।

(१३) राज्याङ्गसङ्गीनि—राज्याङ्गानि—अमात्याद्याः प्रकृतयः, तत्सङ्गीनि—तत्सङ्क्रान्तानि। अभिषिच्यमानः,—राज्ये प्रतिष्ठाप्यमानः, अन्यत्र,—अभितः—सर्व्वतः सिच्यमानः,—प्रोक्ष्यमाणः, जलेनेति भावः, [अत्र "उपसर्गात्—" (८।३।६५ पा०) इत्यादिना षत्वम्] यश्च सर्वतोभावेन जलसिक्तो भवति, सः अङ्गसङ्गीनि मलानि मुञ्चतीति लोकदृष्टम्। मलानीव—दूषितानीव, क्लेदानिव च, धनानि मुमोच—तत्याज, दीनानाथादिभ्यो दत्तवानित्यर्थः; अत्र मलैः सह धनानामवैधर्म्यसाम्यप्रतीतेरुपमाऽलङ्कारः। परकीयेणापि—परार्थप्रवृत्तेनापि इत्यर्थः, कातरेषु, जनेषु इति शेषः, कातराणां—दुर्बलानां जनानां वा, वल्लभेन—प्रियेण, हातुमशक्येनेति भावः, तृणेनेव—अतितुच्छेनेति भावः। कातरा अपि मुखे तृणानि धरन्ति इति प्रसिद्धिः। अलज्जत—अत्रपत, नित्यं परोपकाराय जीवनमुत्सृजन्नपि स नाहमेतावता कालेनापि कस्याप्यार्त्तस्य रक्षणाय जीवनमिदं तृणाय मत्वा उत्स्रष्टुं शक्नुयामिति अतुष्यन् किं मया जगति कृतमिति कुण्ठितोऽभूदित्यर्थः।

(१४) करेति।—करे—करतले, धृतः,—गृहीतः, धौतः,—निशितः, उज्ज्वलो वा; अत्र धौतपदप्रयोगेण प्रतिबिम्बग्रहणसामर्थ्यं प्रतिपादितमिति बोध्यम्; यः असिः,—तरवारिः, तत्र प्रतिविम्बितेन—प्रतिफलितेन। अदूयत—सन्तप्तवान्। समितिषु—युद्धेषु, ("युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्। ···समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः" इत्यमरः) सहायः,—सहचरः तेन; असहाय एव सर्वान् जिगीषुः स इति भावः।

(१५) प्रधनेषु—युद्धेषु। नमता—ज्यारोपणार्थमिति भावः। मानी—अभि-

(१६) अन्तर्गतापरिमितरिपुशल्यशङ्कुकीलितामिव निश्चलामुवाह राजलक्ष्मीम्। यश्च सर्व्वासु दिक्षु (१७) समीकृततटावटविटपाटवीतरुतृणगुल्मवल्मीकगिरिगहनैर्दण्डयात्रापथैः पृथुभिर्भृत्योपयोगाय व्यभजतेव वसुधाम्। यश्च (१८) अलब्धयुद्धदोहदस्वात्मीयोऽपि सकलरिपुसमुत्सारकः परकीय इव तताप प्रतापः। यस्य च (१९) वह्निमयो हृदयेषु, जलमयो लोचनपुटेषु, मारुत-

---

मानवान्। मानसेन—मनसा; असिः धनुश्च मया सहायत्वेन नीयते, न मन्नामश्रवणेन, केवलेन उपस्थित्या वा शत्रवो जीयन्ते इति दुःखेनेति भावः।

(१६) अन्तर्गतेति।—अन्तर्गतैः,—अभ्यन्तरस्थैः, अपरिमितैः,—अगणितैः, रिपूणां—शत्रूणां, रिपुनिचिह्नैरिति भावः, शल्यशङ्कुभिः,—बाणादिरूपकीलैः, कीलिता—निखाता, संयमिता इत्यर्थः तामिव, इत्युत्प्रेक्षा। निश्चलाम्—अनपायिनीम्।

(१७) समीकृतेति।—समीकृतानि—समतलतां नीतानि, तटाः,—नदीतीराणि, अवटाः,—गर्त्ताः, ("गर्त्तावटौ भुवि श्वभ्रे" इत्यमरः) विटपाः,—शाखाः, अटव्यः,—विपिनानि, तरवः,—वृक्षाः, तृणानि गुल्माः,—स्तम्बाः, काण्डविरहितवृक्षा इत्यर्थः, ("अप्रकाण्डे स्तम्ब-गुल्मौ" इत्यमरः) वल्मीकाः,—वामलूराः, "उयी" इति प्रसिद्धकीटविशेषसञ्चिता मृत्कूटाः इत्यर्थः, गिरिगहनानि—पार्व्वतीयवनानि; यद्वा,—गिरयः,—पर्व्वताः, गहनानि—गह्वराणि, पर्वतकन्दराणीत्यर्थः येषु तैः; ("गहनं कलिले त्रिषु। नपुंसकं गह्वरे स्यात् दुःख-काननयोरपि" इति मेदिनी) यद्वा,—समीकृताः तटावटाः यैः तादृशाः ये विटपाटवीतरवः, तथा तृणगुल्मवल्मीकगिरयश्च, तैः गहनैः,—कृच्छ्रैः, दुष्प्रवेशैरित्यर्थः, दण्डयात्रापथैः,—दण्डः,—सैन्यं, ("सैन्ये काले मानभेदे दण्डोऽस्त्री लगुडे पुमान्" इति मेदिनी) तस्य यात्रापथैः,—गमनमार्गैः, युद्धप्रयाणमार्गैरित्यर्थः। पृथुभिः,—महद्भिः, प्रशस्तैरित्यर्थः। भृत्योपयोगाय—भृत्यानाम्—अनुजीविनाम्, उपयोगाय—व्यवहाराय, सुखेन गमनायेति भावः, व्यभजत—विभक्तवानिवेत्यर्थः।

(१८) अलब्धेति।—न लब्धः,—प्राप्तः, युद्धदोहदः,—युद्धाभिलाषः येन तम्, अदृष्टयुद्धाभिलाषमित्यर्थः। सकलेति।—सकलानां—समग्राणां, रिपूणां—शत्रूणां, समुत्सारकः,—निराकर्त्ता। परकीय इव—परसम्बन्धव; परकीयः प्रतापो यथा विजिगीषं तपति, तथा स्वप्रतापोऽपि सदृशयुद्धव्यापाराप्राप्तेरिति भावः।

(१९) वह्निमयः,—अग्निरूपः, तेजोभूतमयश्च, [अत्र "तत्प्रकृतवचने मयट्"

मयो निश्वसितेषु, क्षमामयोऽङ्गेषु, आकाशमयः शून्यतायां, पञ्च-महाभूतमयो मूर्त्त इव अदृश्यत (२०) निहतप्रतिसामन्तान्तःपुरेषु प्रतापः। (२१) यस्य च आसन्नेषु भृत्यरत्नेषु प्रतिविम्बितेव तुल्यरूपा समलक्ष्यत लक्ष्मीः; तथा च, यस्य (२२) प्रतापाग्निना भूतिः, शौर्य्योष्मणा सिद्धिः, असिधाराजलेन

---

(५।४।२१ पा०) इति प्राचुर्य्यार्थे मयट्, एवं जलमयादिषु ज्ञेयम्] हृदयेषु – अन्तःकरणेषु, सततप्रियवियोगानलोद्दीपकवैक्लव्यस्मरणादिति भावः। जलमयः,—अश्रुमयः इत्यर्थः, अब्भूतमयश्च, शोकातिशयादजस्रनेत्राम्बुप्रपातादिति भावः। मारुतमयः,—उष्णदीर्घनिश्वासपवनरूपः, मरुद्भूतमयश्च, दुःखातिशयादविरतोष्णश्वासवायुसञ्चारादिति भाव। क्षमामयः,—क्षान्तिपूर्णः, क्षितिभूतमयश्च, विपक्षाणामप्यवरोधवर्गो न पीड़नीयः इति स्वीलेनाविनाशितत्वादिति भावः; यद्वा—क्षमामयः,—भूमिस्वरूपः, भूलोठनादिना धूलिपूर्णत्वात् काठिन्याच्च। आकाशमयः,—गगनरूपः, व्योमभूतमयश्च, शून्यतायां—विरहितायामिति यावत्, निश्चेष्टत्वे वा, प्रियतमविच्छेदादिति भावः; अत एव पञ्च-महाभूतमयः,—क्षित्यप्तेजोमरुद्व्योमानि महान्ति पञ्चभूतानि, तदात्मकः, तत्तद्रूपेण परिणत इत्यर्थः, मूर्त्तः,—मूर्त्तिमान्; यथा महाभूतानां शब्दादयः गुणाः केवलं परार्थैक-फलाः, तथैवास्य दयादाक्षिण्यादिगुणग्रामाः परोपकृतये आसन्निति तात्पर्य्यम्।

(२०) निहतेति।—निहताना—सङ्ग्रामे व्यापादितानां, प्रतिसामन्तानां—विरोधिस्वराज्यानन्तरवर्त्तिदेशाधिपानामित्यर्थः, अन्तःपुरेषु—अन्त पुरवर्त्तिनीषु नारीषु इत्यर्थः। अत्र एकस्यापि प्रतापस्य तत्तद्गुणयोगादनेकधोल्लेखे हृदयादयः यथायोगं प्रयोजकाः इत्युल्लेखालङ्कारः।

(२१) आसन्नेषु—सन्निहितेषु, भृत्यरत्नेषु—भृत्या रत्नानीव; यद्वा,—भृत्येषु रत्नानि तेषु, भृत्यश्रेष्ठेषु, अमात्यप्रधानेषु इति यावत्, ("जातौ जातौ यदुत्कृष्टं तद्रत्न-मिति कथ्यते" इति उत्पलमाला) प्रतिविम्बितेव—प्रतिफलितेव; आसन्नानि रत्नानि प्रतिविम्ब गृह्णन्ति इति दृश्यते लोके; तुल्यरूपा—समभागेन विभक्ता।

(२२) प्रतापाग्निना—प्रतापरूपेणानलेन, भूतिः,—सम्पत्, भस्म च, ("भूति-र्भस्मनि सम्पदि" इत्यमरः)। शौर्य्योष्मणा—वीर्य्योष्मभावेन, अन्नपाचिकया शक्त्या च, [अत्र "सर्व्वधातुभ्यो मनिन्" (उ० ४ पा० १४४ सू०) इति उषधातोः मनिन्-प्रत्ययान्तेन उष्मन्शब्देन अर्थबोधः। "इषि-युधि—" (उ० १ पा० १४४ सू०) इति इवे बाहुलकग्रहणात् उषधातोः मक्प्रत्यये सिद्धस्याविवक्षितत्वात्]। सिद्धिः,—

वंशवृद्धिः, शस्त्रव्रणमुखैः पुरुषकारोक्तिः, (२३) धनुर्गुणकिणेन करग्रहीति. अभवत्। य (२४) वैरमुपायनं, विग्रहमनुग्रहं, समरागमं महोत्सवं, शत्रुं निधिदर्शनम्, अरिवाहुल्यमभ्युदयम्, आहवाह्वानं वरप्रदानम्, अवस्कन्दपातं दिष्टवृद्धिं, शस्त्रप्रहारपतनं वसुधारारसम् अमन्यत।

---

राज्यादिलाभः, पाकश्च। असिधाराजलेन—खड्गधारारूपेण जलेन। वंशवृद्धिः,—वंशस्य—कुलस्य, वेणोश्च, वृद्धिः,—अभ्युदयः, वर्द्धनञ्च। शस्त्रेति।—शस्त्राणां व्रणानि—क्षतानि एव, यद्वा—शस्त्रव्रणानां—शस्त्रप्रहारेण जातानां क्षतानां मुखानि—अग्राणि, आननानि च तैः, पुरुषकारोक्तिः,—पौरुषप्रकटनमित्यर्थः; मुखैरेव उक्तिर्भवतीति तथाऽऽरोपः।

(२३) धनुरिति।—धनुषो गुणः,—मौर्व्वी, तस्य किणः,—मांसग्रन्थिः, व्रणजं चिह्नमित्यर्थः, व्यायामदृढताप्रकाशो वा तेन। करग्रहीतिः,—राजग्राह्यभागग्रहणं, करस्य—हस्तस्य ग्रहणञ्च। [अत्र सर्व्वत्र तृतीयान्तेषु "सहयुक्ते—" (२।३।१९ पा०) इत्यादिसूत्रे "विनाऽपि तद्योगं तृतीया, वृद्धो यूनेत्यादिनिर्द्देशात्" इति वृत्त्या सहतद्योगेऽपि सहार्थे तृतीया]।

(२४) वैरमित्यादि।—वैरं—विरोधः, शत्रुणा कृतम् अनिष्टाचरणमित्यर्थः, उपायनम्—उपढौकनं, तत्प्रतिसाधने प्रीत्यातिशय्यादिति भावः। विग्रहं—युद्धं, शत्रुभिः क्रियमाणमिति शेषः, अनुग्रहम्—अनुकम्पां, तत्रातीव अनुरागादिति भावः। समरागमं—सङ्ग्रामोपस्थितिं, महोत्सवं, बलपरीक्षणादिभिः आनन्दवर्द्धनत्वादिति भावः। निधिदर्शनं—निधेः,—महामूल्यरत्नस्य, [अत्र निपूर्व्वस्य धाधातोः "उपसर्गे—"(३।३।९२ पा०) इति किप्रत्यये निपातनाद्रूपम्] दर्शनम्; यद्वा,—निधेरिव दर्शनं यस्य तथाभूतम्; युद्धकण्डूविनोदनोपायत्वादिति भावः। अरिवाहुल्यं—शत्रूणामाधिक्यम्, अभ्युदयम्—उन्नतिजननमित्यर्थः, तन्निसूदनैः प्रतापविस्तारात् राज्यविस्ताराच्चेति भावः। आहवाह्वानं—युद्धे आकारणं, वरप्रदानम्—अभीष्टदानम्; निरन्तरमभिलषितत्वादिति भावः। अवस्कन्दपातं—शत्रुष्वभिगमोऽवस्कन्दः, [अत्र अवपूर्व्वकात् स्कन्दधातोः "अकर्त्तरि—" (३।३।१९ पा०) इत्यादिना अधिकरणे घञि रूपम्] तस्य पातः,—उपस्थितिः तं, दिष्टवृद्धि—भाग्यवर्द्धनम्, आनन्दवर्द्धनं वा। शस्त्रप्रहारेण, शत्रोरिति शेषः, पतनं—धरातले लुण्ठनमित्यर्थः, वसुधारारसं—वसुधा—पृथ्वी, तस्या राः,—दानं, [रा दाने इत्यस्मात् क्विपि रूपम्] तस्य रसः,—रागः, स्वादो वा तम्; यथा भूमिद, स्वर्गे

(२५) यस्मिंश्च राजनि निरन्तरैर्यूपनिकरैरङ्कुरितमिव कृतयुगेन, दिङ्मुखविसर्पिभिः अध्वरधूमैः पलायितमिव कलिना, ससुधैः सुरालयैः अवतीर्णमिव स्वर्गेण, (२६) सुरालयशिखरोद्धूयमानैर्धवलध्वजैः पल्लवितमिव धर्मेण, (२७) वहिरुपरचितविकटसभासत्रप्रपाप्राग्वंशमण्डपैः प्रसूतमिव ग्रामैः, काञ्चनमयसर्वोप-

---

गच्छेत्, तथा सङ्ग्रामे शस्त्रप्रहारपतितोऽपीति भावः; यद्वा,—यज्ञान्तवसुधाराकर्म्मणि दृष्टबन्धतनायस धारणानन्दरसमित्याशय.।

(२५) यस्मिंश्च राजनि सतीत्यर्थः [अत्र "यस्य च—" (२।३।३७ पा॰) इत्यादिना भावे सप्तमी ज्ञेया] निरन्तरैः,—अविच्छिन्नैः, यूपनिकरैः,—यूपाः—यज्ञार्थपशुबन्धनदारुविशेषाः, तेषां निकराः,—सङ्घाः तैः, अङ्कुरित—प्ररोहरूपेण समुत्थितमिव, इति क्रियोत्प्रेक्षा। कृतयुगेन—सत्ययुगेन। दिङ्मुखविसर्पिभिः,—दिगन्तरालविसृमरैः, अध्वरधूमैः,—यज्ञधूमैः, पलायितमिव, समाच्छन्नदृष्टित्वेनेति भावः, कलिना—चतुर्थयुगेन, कलेः पापत्वात् पापस्य च कृष्णवर्णतायाः कविस प्रसिद्धत्वात् धूमैर्हेतुभूतैरुत्प्रेक्षा स्फुटीकृता। ससुधैः,—सुधा—अमृत, चूर्णद्रव्य, तेन सहितैः, सुरालयैः,—देवमन्दिरैः।

(२६) सुरेति।—सुरालयानां—देवागाराणां, शिखरेषु—चूडासु, शीर्षदेशेषु इत्यर्थः, उद्धूयमानाः,—उड्डीयमानाः तैः, धवलध्वजैः,—श्वेतपताकाभिः, पल्लवितमिव—समन्तात् प्रसृतमिव; धर्मस्य शुक्लतायाः कविसमयप्रसिद्धत्वात् तथाविधोत्प्रेक्षाबीजमेतत्।

(२७) बहिरिति।—बहिः,—बाह्ये देशे, उपरचितानि—निर्मितानि, विकटानि—बृहन्ति, विशालानीत्यर्थः, सभानां—ससदां, ("समज्यापरिषद्गोष्ठीसभासमितिसंसदः। आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः॥" इत्यमरः) सत्राणां—सदादानानां ("सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च" इत्यमरः) प्रपाणां—पानीयशालिकानां, जलदानार्थगृहाणामित्यर्थः, ("प्रपा पानीयशालिका" इत्यमरः) प्राग्वंशानां—प्राक्—पूर्व्वभागे, वंशः,—सपत्नीकयजमानसमुदायः यत्र तेषां, यस्मिन् गृहे हविर्द्रव्यादिकं नियतं स्थाप्यते, तस्मात् पूर्वं सावरोधयजमानसदस्याद्यवस्थानानामित्यर्थः, ("प्राग्वंशः प्राग्घविर्गेहात्" इत्यमरः) मण्डपानि—गृहाणि तैः, प्रसूतमिव—उत्पन्नमिव, सृष्टमित्यर्थः, ग्रामैः; बहुभिः गृहैः अपरः ग्राम इव दृश्यमान आसीदिति भावः।

करणैर्विभवैर्विशीर्णमिव मेरुणा, (२८) द्विजदीयमानैः अर्थकलशैः फलितमिव भाग्यसम्पदा।

(२९) तस्य च जन्मान्तरेऽपि सती पार्व्वतीव शङ्करस्य, गृहीतहृदया लक्ष्मीरिव लोकगुरोः, (३०) स्फुरत्तरलतारका रोहिणीव कलावतः, सर्व्वजनजननी बुद्धिरिव प्रजापतेः,

---

काञ्चनमयसर्व्वोपकरणैः,—स्वर्णनिर्म्मितसर्व्वद्रव्यसम्भारैः, विभवैः,—सम्पद्भिः, विशीर्णमिव—पतितमिव, समागतमिवेत्यर्थः ; मेरोः स्वर्णमयत्वात् तत्र च सर्व्वसुवर्णानामानयनात् स एव विशीर्णः तत्रापतित इवेत्युत्प्रेक्षा ; यद्वा—विशीर्णमिव—चयितमिव, स्वर्णरहितमिवेत्यर्थः।

(२८) द्विजेति।—द्विजेभ्यः,—विप्रेभ्यः, दीयमानाः,—विसृज्यमानाः तैः ; अर्थकलसैः,—धनकुम्भैः। भाग्यसम्पदा—सौभाग्यसमृद्ध्या।

(२९) "तस्य" इत्यस्य "यशोवती नाम महादेवी······अभूत्, या अस्य वक्षसि···ललास" इति उत्तरेण सम्बन्धः। [ अत्र यशःशब्दात् "तदस्य—" (५।२।९४ पा०) इत्यादिना मतुपि "मादुपधायाश्च—" (८।२।९ पा०) इत्यादिना मतोर्मस्य वकारादेशे यशस्वत्, ततः स्त्रियां ङीपि यशस्वती इति रूपसिद्धिः ; अव्युत्पन्नप्रातिपदिकात् यशःशब्दात् मतुपि "संज्ञायाम्" (८।२।११ पा०) इति मतोर्मस्य वकारादेशे यशोवत् ततः ङीपि यशोवती इति कथञ्चित् निर्वाहः ]। तामेव विशिनष्टि, सतीत्यादिभिः।—सती—पतिव्रता, सती-नाम्नी च ; दक्षदुहितृरूपेण यदा जाता, तदा पार्व्वत्याः सतीति संज्ञा आसीदिति प्रसिद्धिः। शङ्करस्य—शं—मङ्गलं, करोतीति तथोक्तस्य, हरस्य च। "शङ्करस्य" इत्यादीनि "महामुनेः" इत्यन्तानि पदानि राजपक्षेऽपि सङ्गमनीयानि। गृहीतहृदया—हृदयग्राहिणी, वक्षःस्थलवासिनी च, [ "गृहीतहृदया" इत्यत्र "गृहीतपरहृदया" इति पाठे,—गृहीतम्—आवर्ज्जितं, परेषाम्—अन्येषां, हृदयं—चेतः, सद्व्यवहारादिनेति भावः यया सा ; अन्यत्र,—गृहीतम्—आश्रित, परस्य—श्रेष्ठस्य, विष्णोरित्यर्थः, हृदयं—वक्षःस्थलं, सततपवित्रपातिव्रत्यावलम्बनात् इति भावः यया सा ] लोकगुरोः,—जगद्गुरोः नारायणस्य, पृथिवीपतेश्च।

(३०) स्फुरदिति।—स्फुरन्ती—दीप्यमाना, तरला—चञ्चला, तारका—कनीनिका यस्याः सा, स्फुरन्ती—दीप्यमाना, तरला—भासुरा, उज्ज्वला इत्यर्थः, ( "तरलं चञ्चले षिङ्गे भास्वरेऽपि विलिङ्गकम्" इति मेदिनी ) तारका—नक्षत्ररूपिणीत्यर्थश्च। कलावतः,—चतुःषष्टिविद्याशालिनः, चन्द्रस्य च। सर्व्वजनजननी—

(३१) महाभूभृत्कुलोद्गत गङ्गेव वाहिनीनायकस्य, (३२) मानसानुवर्त्तनचतुरा हंसीव राजहंसस्य, (३३) सकललोकार्च्चितचरणा त्रयीव धर्म्मस्य, (३४) दिवानिशम् अमुक्तपार्श्वस्थितिः अरुन्धतीव महामुनेः, (३५) हंसमयीव गतिषु, परपुष्टमयीव

सर्वेषां जनानां जननी—उत्पादनी, [ जनघाती' "अर्त्तिसृ—" (उ० २ पा० १०२ सू० ) इत्यादिसूत्रे बाहुलकग्रहणात् अनिप्रत्यये ततो ङीपि रूपम् ] माता च, "राजभार्य्या प्रभुः पृथ्वी गुरुदारोपमातृका। श्वश्रूः पूर्व्वजपत्नी च सप्तैता मातरः स्मृताः॥" इत्युक्तेः। प्रजापतेः,—ब्रह्मणः, प्रजापालस्य च।

(३१) महेति।—महत्—विशालं, भूभृतां—राज्ञां, कुलं—वंशः, महाभूभृतः,—हिमाद्रेः, कुलं—तनुः इति च, ( "कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबम्" इति मेदिनी ) तस्मात् उद्गता—जाता, निर्गता च, [ अत्र "निरादय क्रान्ताद्यर्थे पञ्चम्या" ( वा० ) इति समासः ]। वाहिनीनायकस्य—सेनापतेः, तरङ्गिणीपतेः समुद्रस्य च, ( "वाहिनी स्यात्तरङ्गिण्या ˆ -सैन्यप्रभेदयोः" इति मेदिनी )।

(३२) मानसेति।—मानसस्य—चित्तस्य, तदाख्यस्य सरसश्च, अनुवर्त्तनम्—अनुसरणं, तस्मिन् चतुरा—निपुणा। राजहंसस्य—कलहंसस्य, नृपोत्तमस्य च, ( "राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे" इति मेदिनी )।

(३३) सकलेति।—सकलैः,—समग्रैः, लोकैः,—जनैः, अर्च्चितौ—सेवितौ, चरणौ—पादौ, अर्च्चिताः चरणाः,—बह्वृचादिशाखाश्च यस्याः सा, ( "चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च" इति मेदिनी ) त्रयी—ऋग्यजुःसामाख्या वेदा इत्यर्थः, [ अत्र "सङ्ख्याया—" ( ५।२।४२ पा० ) इत्यादिना विहितस्य तयपः "द्वित्रिभ्यां—" ( ५।२।४३ पा० ) इत्यादिना अयजादेशे स्थानिवद्भावात् "टिड्ढाणञ्—" ( ४।१।१५ पा० ) इत्यादिना ङीपि रूपम्। "स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमरः ]। धर्म्मस्य—विहितक्रियाकलापस्य, तज्जनितादृष्टस्य वा, धर्म्मोऽस्यस्येति धर्म्मः तस्य, [ अर्श-आदित्वादच्प्रत्ययः ] धर्म्मवत इत्यर्थः।

(३४) दिवानिशम्—अहोरात्रम्। [ अत्र "विप्रतिषिद्धञ्च—" ( २।४।१३ पा० ) इत्यादिना समाहारद्वन्द्वः ]। अमुक्तेति।—अमुक्ता—न त्यक्ता, पार्श्वे स्थितिर्यया सा, सततपार्श्वचारिणीत्यर्थः। महामुनेः,—वसिष्ठस्य, राजर्षेश्च। अत्र "सती पार्व्वतीव शङ्करस्य" इत्यादिषु सर्वत्र श्लिष्टैः पदैः अनेकार्थप्रत्यायनात् श्लेषसङ्करोपमाऽलङ्कारः।

(३५) हंसमयीव—हंसरूपिणीव, मृदुमन्दगमनादिति भावः। परपुष्टमयीव

आलापेषु, चक्रवाकमयीव पतिप्रेम्णि, प्रावृण्मयीव पयोधरोन्नतौ, मदिरामयीव विलासेषु, निधिमयीव अर्थसञ्चयेषु, वसुधारामयीव प्रसादेषु, कमलमयीव कोषसङ्ग्रहेषु, (२६) कुसुममयीव फलदानेषु, सन्ध्यामयीव वन्द्यत्वे, (२७) चन्द्रमयीव निरूष्मत्वे, दर्पणमयीव प्रतिप्राणिग्रहणेषु, सामुद्रमयीव परचित्तज्ञानेषु, परमात्ममयीव व्याप्तिषु, स्मृतिमयीव पुण्यवृत्तिषु,

—कोकिलरूपिणीव, मधुरस्वरत्वादिति भावः। पतिप्रेम्णि—भर्तृप्रणये, विरहे कातर्यातिशयादिति भावः। प्रावृण्मयीव—वर्षामयीव, पयोधरोन्नतौ—स्तनोन्नतौ, मेघोन्नतौ च। ("पयोधरः कोषकारे नारिकेले स्तनेऽपि च। कशेरु-मेघयोः" इति मेदिनी)। विलासेषु—विभ्रमचेष्टितेषु। अर्थसञ्चयेषु—अर्थानां—धनानां, सञ्चयः,—सङ्ग्रहः तेषु. निधिमयीव—निधिः,—गुप्तं धनं, तन्मयीव, धनसञ्चयकारिणी इति भावः। वसुधारामयीव—वसूनां—धनानां, धारा—वर्षणं, तन्मयीव, प्रसादेषु—अनुग्रहेषु, दयासु इत्यर्थः; एतादृशी दयावती, यत् सततं वसूनि अनुजीविभ्योऽर्थिभ्यश्च वितरतीति भावः। कमलमयीव—पद्मरूपिणीव, कोषसङ्ग्रहेषु—धनभाण्डाररचणेषु इत्यर्थः, कर्णिकासम्पूरणेषु च, बीजकोषग्रहणेषु इत्यर्थः।

(२६) कुसुममयीव—पुष्परूपिणीव, फलदानेषु—कृतस्य कर्मणः पुरस्कारादिदानेषु वृक्षादीनां शस्यादिवितरणेषु वा इति भावः; पुष्पानन्तरमेव फलस्योत्पत्तेश्च इत्याशयः। सन्ध्यामयीव—सन्ध्यारूपिणीव, वन्द्यत्वे—पूज्यत्वे; सन्ध्या यथा लोकैः पूज्यते, तथाऽसौ पूज्यते इति भावः।

(२७) चन्द्रमयीव—चन्द्ररूपिणीव, निरूष्मत्वे—अनुष्णत्वे, अक्रोधत्वे इत्यर्थः, उष्मराहित्ये च, शीतलप्रकृतित्वादिति भावः। दर्पणमयीव—आदर्शरूपिणीव, प्रतिप्राणिग्रहणेषु—प्राणिनं प्राणिनं प्रति इति प्रतिप्राणि, यत् ग्रहणम्—आवर्जनं, सर्वलोकवशीकरणम् इत्यर्थः, सर्वजनप्रतिबिम्बधारणं च तेषु। सामुद्रमयीव—सामुद्रं—परचित्तज्ञानसाधनं समुद्रकृतं शास्त्रं, येन अन्यस्य चित्तवृत्तिः ज्ञायते, तन्मयीव तद्रूपिणीव, परचित्तज्ञानेषु—परेषां चित्तस्य—मनसः मानसोदितविषयस्येति भावः, ज्ञानेषु—बोधेषु; उपस्थितिचण एव आश्रितानां परेषां मनोऽभिप्रेतकार्यसमाचरणादिति भावः। परमात्ममयीव परमेश्वररूपिणीव, व्याप्तिषु—व्यापनभावेषु, सर्वत्र कार्य्येषु अभिनिवेशात्, सर्वलोकान्तर्यामित्वाच्च। स्मृतिमयीव—स्मरणरूपिणीव, पुण्यवृत्तिषु

मधुमयीव सम्भाषणेषु, अमृतमयीव तृष्यत्सु, वृष्टिमयीव भृत्येषु, निर्वृतिमयीव सखीषु, वेतसमयीव गुरुषु, गोत्रवृद्धिरिव विलासानां, प्रायश्चित्तशुद्धिरिव स्त्रीत्वस्य, आज्ञासिद्धिरिव मकरध्वजस्य, (३८) व्युत्थानबुद्धिरिव रूपस्य, दिष्टवृद्धिरिव रतेः, मनोरथसिद्धिरिव रामणीयकस्य, दैवसम्पत्तिरिव लावण्यस्य, वंशोत्पत्तिरिवानुरागस्य, वरप्राप्तिरिव कान्तेः, सर्गसमाप्तिरिव सौन्दर्य्यस्य, आयतिरिव यौवनस्य, अनभ्रवृष्टिरिव वैदग्ध्यस्य, अयशःप्रमृष्टिरिव लक्ष्म्याः, यशःपुष्टिरिव चारित्रस्य, हृदय-

---

—पुण्यकर्म्मानुष्ठानेषु, पुण्यानि कर्म्माणि न विरम्यन्ते बहुव्यापृततयाऽपीति भावः । मधुमयीव सम्भाषणेषु—संलापेषु, मधुरभाषित्वात् इति भावः । अमृतमयीव—सुधामयीव, जलमयीव च, तृष्यत्सु—सन्तोषं गच्छत्सु, सर्वेषां तृप्तिसम्पादने पाटवादिति भावः । [ "तृष्यत्सु" इत्यत्र "तृष्यत्सु" इति पाठे,—तृषामनुभवत्सु पिपासुषु इत्यर्थः ] । वृष्टिमयीव—वर्षणरूपिणीव, भृत्येभ्यो वाञ्छाऽतिरिक्तप्रदत्वादिति भाव. । निर्वृतिमयीव—सुखमयीव, सखीषु—वयस्यासु ; तासां सततसुखसन्निधानादिति भावः । वेतसमयीव वेतसरूपिणीव, निरन्तरनम्रत्वादिति भाव' । अत्र सर्वत्र सप्तम्यन्तेषु "सप्तम्यधिकरणे च" ( २।३।३६ पा० ) इति विषयाधिकरणे सप्तमी ] गोत्रवृद्धिरिव—वंशोन्नतिरिव, विलासाना—विभ्रमवेष्टितानां, विभ्रमातिशयविस्तारादिति भावः । प्रायश्चित्तशुद्धि,—प्रायश्चित्तेन—चान्द्रायणादितपसा, शुद्धि',—पूतत्वम् ; स्त्रीत्वं हि पापमयं कातर्य्यादिदोषदूषितत्वात्, तत्तु अनया निजगुणैः अन्यथाकृत्य पावितम् उज्ज्वलितं वा इति भावः । मकरध्वजस्य—कामस्य, आज्ञासिद्धि,—अस्याः तथा कमनीयत्व, यथा एतद्दर्शने कस्यापि कामावेशः न शाम्यतीति कामस्य अव्याहताज्ञत्वमिति भाव. ।

(३८) व्युत्थानबुद्धिरिव—विशिष्टं उत्थाने—अभ्युदये, बुद्धिरिव—प्रज्ञेव । दिष्टवृद्धिरिव—भाग्योदय इव । रामणीयकस्य—रमणीयत्वस्य, [ अत्र रमणीयशब्दात् "योपधात्—" (५।१।१३२ पा० ) इत्यादिना वुञि रूपम् ] । सर्गसमाप्तिरिव— सृष्टिशेष इव, नान्यदितः सौन्द मिति भावः । आयतिरिव—आभोग इव, परिपूर्णतेवेत्यर्थः । अनभ्रवृष्टिरिव—विना मेघं वर्षणमिव, असम्भवत्वात् इति भाव', वैदग्ध्यस्य—निपुणतायाः ; यथा अनभ्रवृष्टिः विस्मयोत्पादिका, तथा अस्याः वैदग्ध्यमपि आश्चर्य-

तुष्टिरिव धर्म्मस्य, सौभाग्यपरमाणुसृष्टिरिव प्रजापतेः, शमस्यापि शान्तिरिव, विनयस्यापि विनीतिरिव, आभिजात्यस्यापि अभिजातिरिव, संयमस्यापि संयतिरिव, धैर्य्यस्यापि धृतिरिव, विभ्रमस्यापि विश्रान्तिरिव, यशोवती नाम महादेवी प्राणानां प्रणयस्य विस्रम्भस्य धर्म्मस्य सुखस्य च भूमिरभूत्, या अस्य वक्षसि नरकजितो लक्ष्मीरिव ललास।

निसर्गत एव च स (३९) नृपतिः आदित्यभक्तो बभूव। प्रतिदिनमुदये दिनकृतः स्नातः सितदुकूलधारी धवलकर्पटप्रावृतशिराः प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा कुङ्कुमपङ्कानुलिप्ते मण्डलके पवित्रपद्मरागपात्रीनिहितेन स्वहृदयेनेव सूर्य्यानुरक्तेन रक्तकमलषण्डेन अर्घं ददौ; अजपच्च जप्यं

---

जननमिति भावः। अयशःप्रसृष्टिः,—अयशसः,—अकीर्त्तेः, चपललजनितस्येति भावः, प्रमृष्टिः,—प्रमार्ज्जनम्, अपनयनमित्यर्थः सा इव; अनपायिनी लक्ष्मीरिवेति भावः। यशःपुष्टिरिव—यशसां—कीर्त्तीनां, पुष्टिः,—पोषणं सेव, अतीवसुचरित्वादिति भावः। अभिजातस्य—कौलीन्यस्य, अभिजातिः,—सत्कुलजातत्वं, सेव। महादेवी—कृताभिषेका प्रधाना महिषी। भूमिः,—भाजनम्। नरकजितः,—नरकासुरजेतुः, नारायणस्य इत्यर्थः, नरकं—निरयं, जितवानिति तथाभूतस्य च।

(३९) निसर्गतः,—स्वभावतः, आदित्यस्य भक्तः आदित्यभक्तः,—सूर्य्यपरायण इत्यर्थः, सूर्य्योपासक इति यावत्, [ अदितिशब्दादपत्यार्थे "दित्यदित्या—" (४।१।८५ पा०) इत्यादिना ण्यप्रत्यये रूपम् ] प्रकृतिः स्वानुकूलं भजते इति तेजस्विनः तेजस्विसमाराधनं समञ्जसम्। दिनकृतः,—सूर्य्यस्य। सितदुकूलधारी—परिहितशुभ्रपट्टवसनः। धवलेति। —धवलेन—श्वेतेन, कर्पटेन—वसनेन, प्रावृतम्—आच्छादितं, शिरो यस्य तथाभूतः, श्वेतोष्णीषधारीत्यर्थः। कुङ्कुमेति।—कुङ्कुमस्य पङ्केन—घनद्रवेण, घृष्टकुङ्कुमेनेत्यर्थः, अनुलिप्तं—प्रदिग्धं, रञ्जितमिति यावत् तस्मिन्। मण्डलके—मण्डलाकारे पद्मादिरूपेणाङ्किते स्थाने, सूर्य्योपासनाविधिविहिते इति भावः। पवित्रेति।—पवित्रा—विशुद्धा, पद्मरागस्य पात्री—पद्मरागमणिनिर्मितं भाजनं, [ अत्र पाधातोः "दाद्भ्यश्छन्दसि" (उ० ४ पा० १६९) इति त्रन्प्रत्यये "वनो र च" (४।१।७ पा०) इति ङीपि रूपम् ] तस्यां निहितं—रचितं तेन। स्वहृदयेनेव—स्वस्य—आत्मनः, हृदयेनेव—मानसेनेव,

सुचरितः प्रत्युषसि मध्यन्दिने दिनान्ते च अपत्यहेतोः प्राध्वं प्रयतेन मनसा जञ्जपूको मन्त्रमादित्यहृदयम्।

(४०) भक्तजनानुरोधविधेयानि तु भवन्ति देवतानां मनांसि · यतः स राजा कदाचित् ग्रीष्मसमये यदृच्छया सितकरकरसितसुधाधवलस्य हर्म्यस्य पृष्ठे सुष्वाप; पार्श्वे चास्य द्वितीयशयने देवी यशोवती शिश्ये। (४१) परिणत-

---

भक्तिप्रवणेन इति भावः। सूर्य्यानुरक्तेन—आदित्यानुरागिणा। रक्तकमलषण्डेन—रक्तोत्पलनिचयेन, ("षण्डादिकदम्बे षण्डमस्त्रियाम्" इत्यमर.) अर्चां—पूजाम्। जप्यं—जपनीयम्। सुचरितः,—सुशीलः, प्रभाकरवर्द्धन इति भावः। प्रत्युषसि—प्रभाते। मध्यन्दिने—मध्याह्ने। दिनान्ते—सायंकाले। अपत्यहेतोः,—पुत्रार्थम। प्राध्व—प्रणतः सन्, [ अव्ययमेतत्। "प्राध्वन्तु प्रणते चातिदूरवर्त्मनि बन्धने" इति मेदिनी ]। प्रयतेन—पवित्रेण। जञ्जपूकः,—पुनःपुनर्जपपरायणः। [ "यजजपदशां यङ" (३।२।१६६ पा०) इति ऊकप्रत्यये रूपम् ]। मन्त्रम्—"अर्कन्तु मूर्द्धि विन्यस्य ललाटे तु रविं न्यसेत्"इत्यादि न्यासपूर्वकम् "आदित्यो मन्त्रसंयुक्त आदित्यो भुवनेश्वरः। आदित्यान्नापरो देव ह्यादित्यः परमेश्वरः॥" इत्यादि भविष्यपुराणोक्तम्, आदित्यहृदयम्—आदित्यस्य—सूर्य्यस्य, हृत्—चित्तम्, अयते—गच्छति इति आदित्यहृदयं—सूर्य्यचित्तप्रियमित्यर्थ, आदित्यप्रीतिकरमिति यावत्।

(४०) भक्तेति।—भक्तजनानां—तदेकासक्तानां, सेवकानामित्यर्थः, अनुरोधस्य—निर्बन्धस्य, विधेयानि—वश्यानि, अनन्यभक्तिमात्रसुलभाः देवप्रसादाः इति भावः। यदृच्छया—स्वेच्छया, [ अत्र या इच्छा इति विग्रहे "मयूरव्यंसकादयश्च" (२।१।७२ पा०) इति निपातनात् समासः ] सितेति।—सितकरः,—चन्द्र, तस्य कराः,—किरणा, तद्वत् सिताभिः,—शुभ्राभिः, सुधाभिः,—चूर्णप्रलेपैरिति यावत्, धवलं—शुभ्रं तस्य, यद्वा,—सितकरकरसितोऽसौ सुधाधवलश्च तथाभूतस्य, विशदचन्द्रप्रभोद्भासित सुधाधवलस्य च इति भावः। हर्म्यस्य—प्रासादस्य इति यावत्, ("हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम्" इत्यमरवचनात्)। पृष्ठे—उपरिभागे। सुष्वाप—निदद्रौ। द्वितीयशयने—अपरशय्यायाम्। "द्वितीयशयने" इत्यनेनास्य संयमित्वं प्रकटीकृतम्; "नाश्नीयात् भार्य्यया सार्कं न च सुप्यात् तया समम्" इति स्मरणात्। शिश्ये—शयितवती।

(४१) "परिणत—" इत्यादेः "देवी यशोवती······रुदतिष्ठत्" इत्युन्ते

प्रायायान्तु श्यामायाम्, आसन्नप्रभातवेलाविलुप्यमानलावण्ये लिलम्बिषमाणे सीदत्तेजसि तारकेश्वरे, (४२) कराग्रस्पृष्ट-कुमुदिनीप्रमोदजन्मनि शशधरस्वेदे इव गलति अतिशीतले अवश्यायपयसि, (४३) मधुमदमत्तप्रसुप्तसीमन्तिनीनिश्वास-हृतेषु सङ्क्रान्तमदेष्विव घूर्णमानेषु अन्तःपुरप्रदीपेषु, (४४) राजनि च विमलनखप्रतिविम्बिताभिः संवाह्यमानचरणे इव तारकाभिः, विस्रब्धप्रसारितैः दिगङ्गनानामिवार्पितैरङ्गै-र्मधुसुगन्धिभिः स्वहस्तकमलतालवृन्तवातैरिव श्वसितैर्मुखश्रिया

---

थान्वयः। अत्र "उदोऽनूर्द्धकर्मणि" (१।३।२४ पा०) इति अनूर्द्ध्वग्रहणात्, शयनात् उत्थानरूपार्थे नात्मनेपदप्राप्तिः] परिणतप्रायायां—प्रायेणावसितायां, श्यामायां—निशायाम्। ("श्यामा स्याच्छारिवा निशा" इत्यमरः)। आसन्नेति।—आसन्नया—आपतन्त्येत्यर्थः, प्रभातवेलया—प्रत्यूषसमयेन,विलुप्यमानं—चीयमाणं, लावण्यं—कान्तिर्यस्य तथाभूते। लिलम्बिषमाणे—लम्बितुमिच्छति, अस्तं जिगमिषति इति यावत्, पश्चिमायां दिशीति शेषः। सीदत्तेजसि—चीयमाणरश्मौ। तारकेश्वरे—ताराराजे,चन्द्रमसि इत्यर्थः।

(४२) करेति।—कराग्रैः,—किरणाग्रैः, हस्ताग्रैश्च, स्पृष्टायां—कृतस्पर्शायां, धृतायाञ्च, कुमुदिन्यां—कैरविण्यां, यः प्रमोदः,—सत्त्वोदयजनितप्रीतिः, तस्मात् जन्म—उत्पत्तिर्यस्य तथोक्ते। शशधरस्वेदे इव—चन्द्रघर्मे इवेत्युत्प्रेक्षा, गलति—पतति, स्रवतीत्यर्थः। अवश्यायपयसि—तुषारजले, ("अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्" इत्यमरः)।

(४३) मध्विति।—मधुमदेन—मद्यपानजनितचित्तविकारेण, मत्तानां—क्षीवाणां, प्रसुप्तानां—निद्रितानां, सीमन्तिनीनां—नारीणां, निश्वासैः हृताः.—सञ्चालिताः तेषु, अत एव सङ्क्रान्तमदेष्विव—प्राप्तमद्यपानजनितावस्थाविशेषेष्विवेत्युत्प्रेक्षा; मत्तानां प्रमदानां निश्वाससङ्गादिति भावः। घूर्णमानेषु—भ्राम्यमाणेषु।

(४४) राजनि—नरेन्द्रे। विमलेति।—विमलेषु—निर्म्मलेषु, स्वच्छेषु इत्यर्थः, नखेषु, पादयोरिति भावः, प्रतिविम्बिताः,—प्रतिफलिताः ताभिः। तारकाभिः,—नक्षत्रैः। संवाह्यमानेति।—संवाह्यमानौ—आमृद्यमानौ, संसेव्यमानौ इत्यर्थः, चरणौ यस्य तथाभूते इवेत्युत्प्रेक्षा। विस्रब्धेति।—विस्रब्धं—विश्वस्तं यथा तथा, प्रसारितानि—विस्तारितानि तैः, अङ्गैः,—अवयवैः, [अत्र "लक्षण—" (१।४।९० पा०) इत्या-

वीज्यमाने, विमलकपोलस्थलस्थितेन सितकुसुमशेखरेणेव रतिकेलिकचग्रहलम्बितेन प्रतिमाशशिबिम्बेन विराजिते, स्वपिति देवी यशोवती सहसैव,—"आर्य्यपुत्र! परित्रायस्व परित्रायस्व" इति भाषमाणा भूषणरवेण व्याहरन्तीव परिजनम् उत्कम्पमानाङ्गयष्टिः उदतिष्ठत्।

अथ तेन सर्व्वस्यामपि पृथिव्याम् (४५) अश्रुतपूर्व्वेण, किमुत देवीमुखे, "परित्रायस्व" इति ध्वनिना दग्ध इव श्रवणयोः एकपद एव निद्रां तत्याज राजा। शिरोभागाच्च कोप-

दिना इत्यम्भूतलक्षणे तृतीया ] मधुसुगन्धिभिः,—मधु—मकरन्द, तद्वत् सुगन्धिभि.,—सुरभिभिः। मुखश्रिया—वदनलक्ष्म्या। विमलेति।—विमलं—स्वच्छं, यत् कपोलस्थलं—गण्डदेशः, तस्मिन् स्थितं—प्रतिफलितं तेन। सितकुसुमशेखरेणेव—श्वेतपुष्पशिरोमाल्येनेव। रतीति।—रतिकेलिः,—सुरतक्रीडा, तत्र ·यः कचग्रहः,—केशाकर्षणं, तेन लम्बित तेन। प्रतिमाशशिबिम्बेन—शशिप्रतिबि॰ इत्यर्थः। स्वपिति—नि ॰ति, राजनीति पूर्व्वेणान्वयः। भूषणरवेण—अलङ्कारशिञ्जितेन; भीत्या अङ्गवेपनेन भूषणरवः समुदितः इति भावः। व्याहरन्तीव—कथयन्तीव, स्वभयमिति शेष, यद्वा,—आह्वयन्तीव। परिजन—सखीजनं, भृत्यजनं वा। उत्कम्पमानाङ्गयष्टिः,—उच्चैः,—अतिशयेन, कम्पमाना—वेपमाना, अङ्गयष्टिः,—क्षीणदेह इत्यर्थः यस्याः तथाभूता।

(४५) अश्रुतपूर्व्वेण—पूर्व्वमश्रुतेन; तादृशे राजन्वति देशे प्रजाना तथाभूतविपत्पातस्य असम्भवादिति भावः। [ अत्र "सुपो—" (२।४।७१ पा०) इत्यादिवृत्तौ "भूतपूर्व्वे चरट्" (५।३।५३ पा०) इति निर्देशात् पूर्व्वनिपाते भूतपूर्व्ववत् सामान्यात् अश्रुतपूर्व्व इति सिद्धिः ] यद्वा,—अश्रुतः पूर्व्वः,—प्रागप्याविर्भाव. यस्य तथाविधेन, प्राचीनैरप्यश्रुतोत्पत्तिकेन इत्याशयः। किमुत—किं पुनः, यस्य राज्ये साधारणप्रजानामपि किमपि भयकारण नास्ति, तस्य अन्तःपुरे स्वमहिष्या' भयकारणस्य अतीव असम्भाव्यत्वमेवेति भाव'। दग्ध इव—ज्वलित इव।—एकपदे—तत्काले एव, सद्य एवेत्यर्थः, ("एकपदं तत्काले नपुंसकम्······" इति मेदिनी) अकस्मादेव वा। "शिरोभागाच्च" इत्यस्य "वेगेन उत्पपात" इति उत्तरेण सम्बन्ध ; तमेव विशिनष्टि, शिरोभागादिति।—शिरोभागात्—शीर्षदेशात्, शयनीय ॰ति भावः। कोपेति।—कोपेन—क्रोधेन,

कम्पमानदक्षिणकराकृष्टेन कर्णोत्पलेनेव निर्गच्छता अच्छ-धारेण धौतासिना सीमन्तयन्निव निशाम्, (४६) अन्तराल-व्यवधायकम् आकाशम् इव उत्तरीयांशुकं विक्षिपन् वामकर-पल्लवेन, करविक्षेपवेगगलितेन हृदयेनेव भयनिमित्तान्वेषिणा भ्रमता दिक्षु कनकवलयेन विराजमानः, (४७) सत्वराव-तारितवामचरणाक्रान्तिकम्पितप्रासादः, पुरः पतितेन असि-धारागोचरगतेन शशिमयूखखण्डेनेव खण्डितेन हारेण राजमानः, लक्ष्मीचुम्बनलग्नताम्बूलरसरञ्जिताभ्यामिव निद्रया कोपेन च अतिलोहिताभ्यां लोचनाभ्यां पाटलयन् पर्यन्तान् आशानाम्,

कम्पमानः,—वेपमानः, दक्षिणः,—अपसव्यः, करः,—हस्तः, तेन आकृष्टः,—आक्षिप्तः तेन। निर्गच्छता—निर्गता। अच्छधारेण—निर्मलधारेण। धौतासिना—निशितकरवालेन, सीमन्तयन्निव—द्विधा कुर्वन्निव, असिप्रभया कियतः स्थानस्य प्रकाशीभूतत्वात्, समन्तादन्धकारावृतत्वाच्च निशायाः सीमन्तीकरणत्वमवगन्तव्यम्।

(४६) अन्तरालेति।—अन्तरालस्य—मध्यस्य, व्यवधायकम्—व्यवधानकारणमित्यर्थः, आच्छादकमिति यावत्। आकाशमिव—शून्यमिव, सन्ततत्वात् स्वच्छत्वाच्च उज्ज्वलनीला-भासत्वाद्वा तथा बोध्यम्। उत्तरीयांशुकम्—उत्तरासङ्गं, वामकरपल्लवेन विक्षिपन्—पर्यस्यन्, अपसारयन् इत्यर्थः। करेति।—करस्य विक्षेपः,—प्रसारणमित्यर्थः, तस्य वेगः,—रयः, तेन गलितः—निःसृतः तेन। भयेति।—भयस्य निमित्तम्—कारणम्, अन्विष्यतीति तथोक्तेन। कनकवलयेन—काञ्चनकटकेन।

(४७) सत्वरेति।—सत्वरम्—सवेगम्, अवतारितेन—अधःस्थापितेन, वामचरणेन या आक्रान्तिः,—आघातः, तया कम्पितः,—चालितः, प्रासादः,—हर्म्यं येन तथा-भूतः। असिधारागोचरगतेन—असिधारायाः गोचरम्—विषयं, गतः,—प्राप्तः तेन, असिधाराप्रतिबिम्बितेन इत्यर्थः। शशिमयूखखण्डेनेव—चन्द्रकिरणशकलेनेव शौक्ल्यात् औज्ज्वल्याच्चेति भावः, खण्डितेन—छिन्नेन। राजमानः,—शोभमानः। लक्ष्मीति।—लक्ष्म्याः,—कर्त्रीभूतायाः राजलक्ष्म्याः, चुम्बनं, तेन लग्नः,—ससक्तः, यः ताम्बूल-रसः—पर्णरागः, तेन रञ्जिताभ्याम् इव—अनुलिप्ताभ्यामिवेत्युत्प्रेक्षा। अतिलोहिता-भ्याम्—अतिरक्ताभ्याम्। पाटलयन्—श्वेतरक्तीकुर्वन्। आशानाम्—दिशां, पर्यन्तान्—प्रान्तदेशान्।

(४८) आवद्धान्धकारया त्रिपताकया भ्रूकुट्या पुनरिव त्रियामां परिवर्त्तयन्,—"देवि! न भेतव्यं, न भेतव्यम्" इत्यभिदधानो वेगेन उत्पपात; सर्व्वासु च दिक्षु विक्षिप्तचक्षुः यदा न अद्राक्षीत् किञ्चिदपि, तदा पप्रच्छ तां भयकारणम्।

अथ (४९) गृहदेवतास्विव प्रधावितासु यामिकविलासिनीषु, प्रबुद्धे च समीपशायिनि परिजने, शान्ते च हृदयोत्कम्पकारिणि साध्वसे, सा समभाषत,—"आर्य्यपुत्र! (५०) जानामि, स्वप्ने भगवतः सवितुर्मण्डलात् निर्गत्य द्वौ कुमारकौ तेजोमयौ बालातपेनेव पूरयन्तौ दिग्भागान्, वैद्युतम् इव जीवलोकं कुर्व्वाणौ, मुकुटिनौ, कुण्डलिनौ, अङ्गदिनौ, कवचिनौ, गृहीतशस्त्रौ, इन्द्रगोपकरुचा रुधिरेण धाम्ना स्नातौ,

---

(४८) आवद्धान्धकारया—आपूर्णतिमिरया, महाक्रोधोत्पत्ते इति भावः। ["आवद्धान्धकारया" इत्यत्र "बद्धान्धकारया" इति पाठेऽपि—स एवार्थः]। त्रिपताकया—रेखात्रयेण। त्रियामा—प्रहरत्रितयवती रजनीमित्यर्थः। परिवर्त्तयन्—प्रवर्त्तयन्, जनयन्नित्यर्थः। विक्षिप्तचक्षुः,—प्रेरितनेत्रः, पातितनयन इत्यर्थः।

(४९) गृहदेवतासु इव—गृहाधिष्ठातृदेवीषु इवेत्युत्प्रेक्षा, प्रधावितासु—सवेगम् आपतितासु, आर्त्तनादश्रवणादिति भावः। यामिकविलासिनीषु—प्रहरपालिकासु, अन्तःपुररक्षिकासु नारीषु इति यावत्। ["यामिकविलासिनीषु" इत्यत्र "यामकिनीषु" इति पाठे,—यामः,—प्रहरः एव यामकः, तत्र तिष्ठन्ति याः ताः यामकिन्यः तासु, प्रहरिणीषु इत्यर्थः। [अत्र "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षाया भवन्ति मतुबादयः॥" इति नित्ययोगेऽर्थे "अत—" (५।२।११५ पा०) इति इनि ङीपि रूपम्] प्रबुद्धे—जागरिते। साध्वसे—भये, ("भीतिर्भीः साध्वसं भयम्" इत्यमरः)।

(५०) जानामि मन्ये। तेजोमयौ—तेजःपूर्णौ। बालातपेनेव—अभिनवसूर्य्यमयूखेनेव, पूरयन्तौ—व्यापुवन्तौ। वैद्युतमिव—तडिन्मयमिव। जीवलोकं—जगत्। मुकुटिनौ—किरीटधारिणौ। कुण्डलिनौ—कुण्डलालङ्कृतौ। अङ्गदिनौ—केयूरशोभितौ। कवचिनौ—वर्म्मधरौ। इन्द्रगोपकरुचा—इन्द्रगोपकः,—वर्षाकालिकरक्तवर्णकीटविशेषः, तद्वत् रुक्—प्रभा यस्य तथाभूतेन। धाम्ना—स्वीयतेजसा, प्रभया

उन्मुखेन उत्तमाङ्गघटमानाञ्जलिना जगता निखिलेन प्रणम्य-मानौ, कन्यया एकया च चन्द्रमूर्त्येव सुषुम्णारश्मिनिर्गतया अनुगम्यमानौ क्षितितलमवतीर्णौ; तौ च मे :विलपन्त्याः शस्त्रेण उदरं विदार्य्य प्रवेष्टुम् आरब्धौ; प्रतिबुद्धाऽस्मि च आर्य्य-पुत्रं विक्रोशयन्ती वेपमानहृदया" इति।

एतस्मिन्नेव च कालक्रमे राजलक्ष्म्याः प्रथमालापः (५१) प्रथ-यन्निव स्वप्नफलम् उपतोरणं रराण प्रभातशङ्खः। भाविनीं भूतिमिव अभिदधाना दध्वनुः अमन्दं दुन्दुभयः। चकाण

इति यावत्, उपलक्षितौ इति भावः, [ "धाम्ना" इति पाठः पुस्तकान्तरे न दृश्यते] अत एव रुधिरेण—रक्तेन, स्नातौ—अभिषिक्तौ, इवेति शेषः; यद्वा,—रुधिरेण – रक्तवर्णेन, इन्द्रगोपकरुचा धाम्ना—स्वदेहकिरणेन, स्नातौ। उन्मुखेन—ऊर्द्धमुखेन। उत्तमेति। —उत्तमाङ्गे—शिरसि, ("उत्तमाङ्गं शिरः शीर्षम्" इत्यमरः) घटमानः,—आबध्नन्, अञ्जलिः यस्य तेन, शिरोबद्धाञ्जलिनेति यावत्। जगता—जगद्वासिजनेनेत्यर्थः। निखिलेन—समस्तेन। प्रणम्यमानौ—अभिवन्द्यमानौ। चन्द्रमूर्त्येव—चन्द्रवत् रुचिरविग्रह-वत्येव दृश्यमानया इत्यर्थः, चन्द्रिकासमुज्ज्वलितकलेवरया इति भावः। सुषुम्णारश्मि-निर्गतया - सुषुम्णाख्योऽमृतमयो रविरश्मिः, तस्मात् निर्गता—निःसृता तया। [ सर्वत्रैव मुद्रितपुस्तकेषु "सुषुम्णरश्मि" इति पाठो विद्यते, स तु लिपिकरप्रमादात् प्रथममुद्रितपुस्तके स्थानमलभत, अनन्तरं तमेवादर्शं कृत्वा सर्वत्रैव गड्डलिकाप्रवाह-न्यायेन तथैव अवर्त्तत इति मन्यामहे; वस्तुतस्तु सुषुम्णारश्मि" इत्येव प्रकृतः पाठः, शास्त्रेषु सर्वत्रैव सुषुम्णा इति आकारान्तस्यैव प्रयोगदर्शनात् "सुषुं इति अव्यक्तं शब्दं म्नायति यत इति व्युत्पत्त्या म्नाधातोः कप्रत्ययेन निष्पन्नत्वाच्च आकारान्त एव युज्यते, न तु अकारान्तः इति सुधीभिः विभाव्यम् ]। तौ च—कुमारावित्यर्थः। प्रवेष्टुम्, उदरमेवेति शेषः। प्रतिबुद्धा—जागरिता। विक्रोशयन्ती—आर्त्तस्वरेण आकारयन्ती।

(५१) प्रथयन्निव—विस्तारयन्निव। उपतोरणं—तोरणे इति उपतोरणम्, ["अव्ययं—" (२।१।६ पा०) इत्यादिना विभक्त्यर्थेऽव्ययीभावः] तोरणसमीपे वा। रराण—दध्वान। प्रभातशङ्खः,—प्रातःकाले वाद्यमानः शङ्खः। भाविनीम्—आगामिनीं, भूतिम् अभ्युदयम्, अभिदधानाः,—कथयन्तः, सूचयन्त इत्यर्थः, अमन्दम्—

कोणाहता आनन्दादिव प्रत्यूषनान्दी ; जय जयेति प्रबोधमङ्गलपाठकानाम् , उच्चैर्वाचोऽश्रूयन्त। पुरुषश्च वल्लभतुरङ्गमन्दुरामन्दिरे मन्दमन्दं सुप्तोत्थितः सप्तीनां कृतमधुरह्रेषारवाणां पुरश्चोतत्तुषारसलिलशीकरं किरन् मरकतहरितं यवसं वक्त्रापरवक्त्रे पपाठ,—

"निधिस्तरुविकारेण सम्भाणिः स्फुरता धाम्ना।
शुभागमो निमित्तेन स्पष्टमाख्यायते लोके।" २ ॥

अनल्पम्, उच्चैरित्यर्थः। दुन्दुभय,—भेर्य्यः। चकाण—दध्वान। [ कणते भौवादिकस्य लिटि रूपम् ]। कोणाहता—कोणः—वीणादिवादनदण्डः, तेन आहता—ताडिता। प्रत्यूषनान्दी—प्राभातिकभेरीवाद्यविशेषः। प्रबोधेति।—प्रबोधे—जागरणकाले, राज्ञ इति शेषः, मङ्गलपाठकाना—माङ्गलिकस्तोत्रपाठिनाम्। पुरुषश्च—कश्चित् अश्वपाल इति भाव.। वल्लभेति।—वल्लभाना—प्रियाणा, तुरङ्गाणाम्—अश्वाना, मन्दुरा—वाजिशाला एव, [ मदिधातोः "मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्" ( उ० १ पा० ३८ सू० ) इति उरचि रूपम् ] "वाजिशाला तु मन्दुरा" इत्यमर ]। मन्दिरं तस्मिन् मदिधातो. "इषिमदि—" ( उ० १ पा० ५२ सू० ) इत्यादिना किरचि प्रत्यये रूपम्। मन्दमन्द -शनैः शनैः। सप्तीनाम्—अश्वानाम्। ( "घोटके पीति-तुरग··· ···। ··· ··हयसैन्धवसप्तयः" इत्यमर. )। कृतेति।—कृतः मधुर,—मनोज्ञः, ह्रेषारव,—ह्रेषाध्वनि यै. तथोक्तानाम्। ( "··अश्वाना ह्रेषा ह्रेषा च नि स्वन." इत्यमर ) पुर,—अग्रत। श्चोतदिति।—श्चोतन्त,—क्षरन्तः, तुषारसलिलाना—हिमजलाना, शीकराः,—बिन्दव यस्मात् तथोक्तम्। मरकतहरित—मरकतवत्—"पान्ना" इत्याख्यहरिद्वर्णमणिविशेषवत् हरित,—श्यामवर्ण. तम्। [मरकतशब्द. मरकपूर्वकात् तृधातो. डप्रत्यये सिद्धः, "अन्येष्वपि दृश्यते" ( ३।२।१०१ पा० ) इति सूत्रे "अपि-शब्द. सर्वोपाधिव्यभिचारार्थः, तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्" इति वृत्ते ]। यवस—घास. ( "घासो यवसम्" इत्यमर ) किरन्—विक्षिपन्, ददद्दित्यर्थ। वक्त्रापरवक्त्रे—वक्त्रञ्च अपरवक्त्रञ्च ते, तदाख्ये मात्रावृत्ते।

अथ प्रभाते सुप्तोत्थिताश्वपाल यत्कृया पठिताभ्या श्लोकाभ्या राज्ञ. भाविसुपुत्रलाभ सूचयति, निधिरिति।—लोके—जगति, तरुविकारेण—तरूणा—वृक्षाणा, विकारेण—विकृतभावेन, शाखाना परि··ाहोद्गतानामधोमुखत्वादिरूपेण इत्यर्थः, ( भूम्या; सुप्त. यत्र निधि वर्त्तते, तत्रत्या, वृक्षाः अर्ध मुखशाखामूलभाजो भवन्ति इति

अरुण इव पुरःसरो रविं पवन इवातिजवो जलागमम्।
शुभमशुभमथापि वा नृणां कथयति पूर्व्वनिदर्शनोदयः" ॥४॥

नरपतिस्तु तच्छ्रुत्वा प्रीयमाणेन अन्तःकरणेन तामवादीत्,—"देवि! (५२) किं मुदोऽवसरे विषीदसि? समृद्धाः ते गुरुजनाशिषः, पूर्णा नो मनोरथाः, परिगृहीताऽसि कुलदेवताभिः, प्रसन्नस्ते भगवान् अंशुमाली न चिरेणैव अतिगुणवदपत्यत्रयलाभेन आनन्दयिष्यति भवतीम्" इति अवतीर्य्य

---

प्रसिद्धिः) निधिः,—अधःस्थितरत्नविशेषः, स्फुरता—विसरता, धाम्ना—तेजसा, प्रभयेति यावत्, सन्मणिः,—सद्रत्नं, तथा निमित्तेन—शुभसूचकलक्षणेन, शुभागमः,—मङ्गलोत्पत्तिः, स्पष्टं—स्फुटम्, आख्यायते—सूच्यते। अत्र प्रस्तुतस्य शुभागमस्य निमित्तेन, अप्रस्तुतस्य च निधेः तरुविकारेण, तथा सन्मणेरपि स्फुरता धाम्ना स्पष्टाख्यानरूपैकक्रियाऽभिसम्बन्धात् मालादीपकमलङ्कारः। वक्त्रं वृत्तं,—"वक्त्रं नाद्यान्न-सौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्" इति वृत्तरत्नाकरधृतलक्षणात् ॥ ३ ॥

अरुण इति।—पूर्वनिदर्शनोदयः,—प्रागेव शुभाशुभलक्षणाविर्भावः, पुरःसरः,—अग्रोदित इति यावत्, अरुणः,—सूर्यसारथिः, रविं—सूर्यमिव, अतिजवः,—अतिवेगवान्, पवनः,—वायुः, जलागममिव—वारिवर्षणमिव, नृणां—मानवानां, शुभं—मङ्गलम्, अथापि वा अशुभम्—अमङ्गलं, कथयति—आचष्टे, सूचयतीत्यर्थः। अत्र पूर्वनिदर्शनोदयेन सह अरुणस्य तथा पवनस्य च अवैधर्म्यसाम्यप्रतीतेः मालोपमाऽलङ्कारः। अपरवक्त्रं वृत्तम्,—"अयुजि न-न-र-ला गुरुः समे तदपरवक्त्रमिदं न-जौ ज-रौ" इति लक्षणात् ॥ ४ ॥

(५२) [पुस्तकान्तरे "किम्" इति पाठो न विद्यते]। मुदोऽवसरे—आनन्दसमये इत्यर्थः। विषीदसि—विषण्णा भवसि। समृद्धाः,—सम्पन्नाः, सिद्धा इति यावत्। पूर्णाः,—सफलाः। नः,—अस्माकम्। कुलदेवताभिः,—वंशाराध्याभिः देवताभिः, परिगृहीताऽसि—अनुकम्पिताऽसि, अनुकम्प्यात्वेन स्वीकृताऽसीत्यर्थः; अन्यथा कथं लोकदुर्लभाभीष्टफलप्राप्तिसूचकस्वप्नावगमः? इति भावः। अंशुमाली—सूर्यः। न चिरेणैव—अविलम्बेनैव। अतिगुणवद्रिति।—अतिगुणवताम्—अतिगुणशालिनाम्, अपत्यत्रयाणां—पुत्रयोः पुत्र्याश्च इत्यर्थः, लाभेन—प्रदानेनेति यावत्। ["इति" इत्यनन्तरम् "अभिधाय" इति पाठः ग्रन्थान्तरे दृश्यते; तथा पाठे "अवादीत्" इति क्रिययाऽन्वितस्य सन्दर्भस्य

च यथाक्रियमाणाः क्रियाश्चकार; यशोवती अपि तुतोष तेन पत्युः भाषितेन।

(५३) ततः समतिक्रान्ते कस्मिंश्चित् कालांशे देव्याञ्च यशोवत्यां देवो राज्यवर्द्धनः प्रथममेव सम्बभूव गर्भे। गर्भस्थित-स्यैव च यस्य यशसेव पाण्डुतामादत्त जननी। (५४) गुण-गौरवक्लान्तेव गात्रमुद्वोढुं न शशाक। कान्तिविसरामृतरस-तृप्तेव आहारं प्रति पराङ्मुखी बभूव। शनैः शनैः उपचीय-मानगर्भभरालसा च गुरुभिः वारिताऽपि वन्दनाय कथमपि सखीभिर्हस्तावलम्बेन अनीयत। विश्राम्यन्ती शालभञ्जिकेव समीपगतस्तम्भभित्तिषु अलक्ष्यत। (५५) कमललोभनिलीनैः

---

पुनरभिधाय इत्यनेनान्वयः क्रियापुनरुक्तदोषापादकः इति न सदाहृतः इति ज्ञेयम्]। यथाक्रियमाणाः,—नित्यं सम्पाद्यमाना इत्यर्थः।

(५३) समतिक्रान्ते—समतीते। कालांशे—समयविभागे। सम्बभूव—सम्भूतः, सञ्जात इत्यर्थः। यस्य—राज्यवर्द्धनस्य, भाविन इति भावः। जननी—यशोवती, पाण्डुतां—पाण्डुवर्णत्वं, यशसः शुभ्रत्वेन कविभिर्वर्णमानत्वादिति भावः; आदत्त—जग्राह, पाण्डुवर्णा अभूदित्यर्थः।

(५४) गुणेति।—गुणानां—दयादाक्षिण्यादीनां, गर्भस्थार्भकस्य इति भावः, गौरवेण—अतिशयगुरुत्वेन, क्लान्तेव—खिन्नेव इत्यर्थः। उद्वोढुं—धारयितुमित्यर्थः, न शशाक—न चक्षमे, कथञ्चिद्धारयामास इति भावः। कान्तीति।—कान्तीनां—लावण्यानां, विसरः,—प्रसर एव, अमृतरसः,—पीयूषास्वादः, सुधास्वादजन्यानन्दसन्दोह इति यावत्, तेन तृप्ता इव—लब्धतृप्तिः इव। पराङ्मुखी—विमुखी, बभूव—अरुचिमती जाता इत्यर्थः। उपचीयमानेति।—उपचीयमानः,—वर्द्धमानः, यो गर्भभरः,—गर्भस्य भारः, तेन अलसा—मन्थरा। वारिताऽपि—निषिद्धाऽपि। वन्दनाय—प्रणामादिरूपार्चनाय, गुरूणामिति शेषः, [अत्र "क्रियार्थो—" (२।३।१४ पा०) इत्यादिना चतुर्थी]। हस्तावलम्बेन—हस्तधारणेन। विश्राम्यन्ती—विश्रामार्थं तिष्ठन्ती, शालभञ्जिकेव—पुत्तलिकेव, समीपगतस्तम्भभित्तिषु—सन्निहितस्थूणाकुड्येषु, अलक्ष्यत—अदृश्यत।

(५५) कमलेति।—कमलेषु लोभः,—चरणयोः कमलबुद्ध्या लोलुपता इत्यर्थः,

अलिभिरिव वृतौ उद्धर्त्तुं नाशकत् चरणौ। मृणाललोभेन च चरणनखमयूखलग्नैः भवनहंसैरिव सञ्चार्य्यमाणा मन्दमन्दं बभ्राम। (५६) मणिभित्तिपातिनीषु प्रतिमास्वपि हस्ताव-लम्बनलोभेन प्रसारयामास करकमलं, किमुत सखीषु !! (५७) माणिक्यस्तम्भदीधितीः अपि आलम्बितुम् आचकाङ्क्ष, किं पुनर्भवनलताः !! समादेष्टुमपि असमर्था आसीत् गृहकार्य्याणि, कैव कथा कर्त्तुम् !! आस्तां नूपुरभारखेदितं चरणयुगलं, मनसाऽपि न उदसहत सौधम् आरोढुम्। अङ्गान्यपि न अशक्नोत् धारयितुं, दूरे भूषणानि। चिन्तयित्वाऽपि क्रीडापर्व्वताधिरोह-णम् उत्कम्पितस्तनी तत्रास। प्रत्युत्थानेषु उभयजानुशिखर-

[अत्र चरणयोः कमलज्ञानं साम्यनिबन्धनप्रतिभोत्थापितम् इति भ्रान्तिमदलङ्कारानुप्राणितोत्प्रेक्षेयम्,] तेन निलीनैः,—संसक्तैः, चरणयोरिति भावः, अलिभिः,—भृङ्गैः, वृतौ इव—आकीर्णौ इव। मृणाललोभेन—मृणालानि एतानीति धिया यो लोभः तेन; अत्रापि अलङ्कारः पूर्व्ववत् बोध्यः। चरणेति।—चरणयोः नखाः, तेषां मयूखेषु—किरणेषु, लग्नाः,—संसक्ताः तैः। सञ्चार्य्यमाणा इव—सञ्चाल्यमाना इव, भ्रमणपद्धतिः गृहवर्त्तिहंसादेवानया शिक्षितेति हृदयम्। अत्र सर्व्वत्र वाच्योत्प्रेक्षा इति ज्ञेयम्।

(५६) मणीति।—मणिभित्तिषु—मणिमयकुड्येषु, पतन्तीति पातिन्यः तासु, प्रतिमासु—प्रतिबिम्बेषु, हस्तावलम्बनलोभेन—हस्तधारणाशया। किमुत—किं पुनः। एवमग्रेऽपि। अत्र अतस्मिन् तद्बुद्धेरुदयात् भ्रान्तिमदलङ्कारः।

(५७) माणिक्येति।—माणिक्यस्य—रत्नविशेषस्य, स्तम्भाः,—स्थूणाः, माणिक्यनिर्म्मितस्तम्भा इत्यर्थः, तेषां दीधितयः,—मयूखाः ताः। भवनलताः,—गृहाङ्गनवर्त्तिनीः वल्लीरित्यर्थः। समादेष्टुम्—आज्ञप्तुम्। आस्तां—तिष्ठतु। नूपुरेति।—नूपुरयोः,—मञ्जीरयोः, भारेण खेदितं—सञ्जातखेदम्। उदसहत—उत्साहमकरोत्। सौधं—हर्म्योपरितलमित्यर्थः; आरोहणचिन्तामपि कर्त्तुं नाशक्नोत्, किं पुनश्चरणाभ्यामारोहण-मिति भावः। दूरे विमुतेत्यर्थः; दूरे भूषणानि आसताम् इति वाऽर्थः। क्रीडेति।—क्रीडापर्व्वते विहारार्थनिर्म्मितकृत्रिमशैले, अधिरोहणम्—आरोहणम्। उत्कम्पित-स्तनी—उत्कम्पितौ—उद्वेपितौ, हृत्कम्पनादिति भावः, स्तनौ—कुचौ यस्याः तादृशी। तत्रास—भीता बभूव। ["तत्रास" इत्यत्र "तस्तान" इति पाठे,—चुकूज, यातनाव्यञ्जक

विनिहितकरकिशलयाऽपि गर्व्वादिव गर्भेण अधार्य्यत। (५८) प्रतिदिवसञ्च अधोमुखी स्तनपृष्ठसङ्क्रान्तेन अपत्यदर्शनौत्सुक्यात् अन्तःप्रविष्टेन इव मुखकमलेनैवं प्रीयमाणा ददर्श गर्भम्। उदरे तनयेन हृदये च भर्त्रा तिष्ठता द्विगुणिताभिव लक्ष्मीमुवाह। पत्युत्सङ्गमुक्तशरीरा च शरीरपरिचारिकाणाम् अङ्केषु, सपत्नीनान्तु शिरःसु पादौ चकार। (५९) अवतीर्णे च दशमे मासि (६०) सर्व्वोर्वीभृत्पक्षपाताय वज्रपर-

ध्वनि चकारेत्यर्थः]। प्रत्युत्थानेषु—गुरुजनाद्यागमने प्रत्युद्गमनेषु, उभयोर्जान्वोः,—जरु-पर्व्वणोः, जङ्घोर्व्वोः सन्धिदेशयोरित्यर्थः, शिखरयोः,—अग्रयोः, विनिहितः,—अर्पितः, करकिसलयः,—हस्तपल्लवः यया तथाभूता। अधार्य्यत—न्यधार्य्यत इत्यर्थः, प्रत्युत्थातु-मुपक्रममाणाऽपि तेजोत्कर्षवत्त्वात् तत् प्रत्यरुध्यत इव इति भावः।

(५८) ["प्रतिदिवसञ्च" इत्यत्र "दिवसञ्च" इति पाठे,—कृत्स्नं दिनं व्याप्येत्यर्थः। अत्र पक्षे "कालाध्वनोः—" (२।३।५ पा०) इत्यादिना अत्यन्तसंयोगे द्वितीया। प्रथमपक्षे—दिवसं दिवसं प्रति इत्यव्ययीभावे क्रियाविशेषणम् इति विवेकः]। स्तनेति। —स्तनपृष्ठे—स्तनयोरुपरि, सङ्क्रान्तं—प्रतिबिम्बितं तेन; पाण्डुरतया स्वच्छत्वादिति भावः। अपत्येति।—अपत्यस्य—पुत्रस्य, गर्भस्थितस्येति भावः, दर्शने यत् औत्सुक्य—कुतूहलं तस्मात्। द्विगुणिता—द्विरावृत्ता, लक्ष्मी—श्रियम्। पत्युत्सङ्गेति।—पत्युः, —स्वामिनः, उत्सङ्गे—क्रोडे, मुक्तं—निहितं, शरीरं यया तथाभूता। ["पत्युत्सङ्ग—" इत्यत्र "सख्युत्सङ्ग—" इति पाठान्तरम्]। शरीरेति।—शरीरं—देहं, परिचरन्ति—सेवन्ते याः तासां, पादादिसंवाहिकानामित्यर्थः, अङ्केषु—क्रोडेषु, तत्तदवयवेषु वा इत्यर्थः। सपत्नीनां—समानभर्तृकाणां, दुर्भगानामिति भावः। भर्तुरादरातिशय्यात् सर्व्वाः सपत्नीरतिक्रम्य अतिष्ठदिति भावः, न तु वास्तवत्वेन तासां शिरःसु पादौ स्थापितवती। अत्र पादयोः युगपदेकत्र स्थापनमसम्भवम् इति आपाततः विरोधस्य भिन्नसमयत्वेन समर्थनात् विरोधाभासोऽलङ्कारः।

(५९) अवतीर्णे—उपस्थिते।

(६०) सर्व्वेति।—सर्व्वेषाम् उर्व्वीभृतां—भूभृताम्,एकत्र—नृपाणाम्,अन्यत्र,—भूमि-धराणां,पर्व्वतानामित्यर्थः, ("भूभृद्भूमिधरे नृपे"इत्यमरः) पक्षपाताय—सहायनिपातनाय, पक्षवच्छेदनाय च, ("पक्षो मासार्द्धके···। ···सखिसहाययोः। चुल्लीरन्ध्रे पतत्रे च···"इति

माणुभिः इव निर्मितं, (६१) त्रिभुवनभारधारणसमर्थं शेषफणामण्डलोपकरणैः इव कल्पितं, सकलभूभृत्कम्पकारिणं दिग्गजावयवैः इव विहितम् असूत देवं राज्यवर्द्धनम्; (६२) यस्मिन् जाते जातप्रमोदा नृत्यमय्य इव अजायन्त प्रजाः। पूरितासङ्ख्यशङ्खशब्दमुखरं प्रहतपटहशतपटुरवं गम्भीरभेरीनिनादनिर्भरभरितभुवनं प्रमोदोन्मत्तमर्त्यलोकमनोहरं मासमेकं दिवसमिव महोत्सवम् अकरोत् नरपतिः।

अथ अन्यस्मिन्नतिक्रान्ते कस्मिंश्चित् काले (६३) कन्दलिनि, कुड्मलितकदम्बतरौ, तोक्मतृणस्तम्बे, स्तम्भिततामरसे,

---

मेदिनी) वज्रपरमाणुभिरिव—वज्रस्य—कुलिशस्य, परमाणवः,—अतिक्षुद्रा अंशविशेषाः तैरिव। इन्द्रः पुरा वज्रेण पर्वतानां पक्षच्छेदं कृतवान् इति पुराणवार्त्ता।

(६१) त्रिभुवनस्य—त्रिजगतः, भारस्य धारणे—पालने, वहने च, समर्थं—योग्यम्। शेषेति।—शेषस्य—अनन्तनागस्य, फणामण्डलानि—फटासहस्राणि एव, उपकरणानि—उपादानकारणानि तैरिव; अन्यथा कथं तादृशभारधारणे सामर्थ्यमस्येति भावः। सकलेति।—सकलानां भूभृतां—राज्ञां, पर्वतानाञ्च, कम्पकारिणं—कम्पहेतुं, रिपूत्सारणव्रतत्वादिति भावः; अत एव दिगिति।—दिग्गजानाम्—ऐरावतादीनाम्, अवयवैः,—अङ्गैरिव। असूत—प्रसूतवती। राज्यवर्द्धनं—राज्यं वर्द्धयतीति तथोक्तम्, अन्वर्थाभिधेयमिति भावः।

(६२) यस्मिन्—राज्यवर्द्धने। जातप्रमोदाः,—समुत्पन्नहर्षाः। नृत्यमय्यः,—नृत्यरूपाः, सदा नर्त्तनपरायणा इत्यर्थः। प्रजाः,—जनाः। पूरितेति।—पूरितानाम्—आध्मापितानाम्, असङ्ख्यानां—बहूनां, शङ्खानां—कम्बूनां, शब्दैः,—रवैः, मुखरः,—कोलाहलपूर्णः तम्। प्रहतेति।—प्रहतानां—ताडितानां, पटहशतानां—वादित्रविशेषसमूहानां, पटवः,—महान्तः, रवा यस्मिन् तथाविधम्। गम्भीरेति।—गम्भीरैः,—मन्द्रैः, भेरीणां—दुन्दुभीनां, निनादैः,—निःस्वनैः, निर्भरम्—अत्यन्तं यथा तथा, भरितम्—आपूरितं, भुवनं यत्र तथाविधम्। प्रमोदेति।—प्रमोदेन—प्रहर्षेण, उन्मत्तैः,—उल्लसितैः, मर्त्यलोकैः,—मनुष्यैरित्यर्थः, मनोहरं—रमणीयम्।

(६३) कन्दलिनि—कन्दलीलताकुसुमशोभिनि; यद्वा—नवाङ्कुरशालिनि। कुड्मलितेति।—कुड्मलिताः,—मुकुलिताः, कदम्बतरवः यस्मिन् तथोक्ते। तोक्मतृणस्तम्बे

विकसितचातकचेतसि, मूकमानसौकसि नभसि देव्या देवक्या इव चक्रपाणिः यशोवत्या हृदये गर्भे च सममेव सम्बभूव हर्षः। शनैः शनैः च (६४) अस्याः सर्व्वप्रजापुण्यैरिव परिगृहीता भूयोऽपि आपाण्डुताम् अङ्गयष्टिर्जगाम। गर्भारम्भेण

---

—तोक्माः,—हरिद्वर्णाः, [ तकघातोः मप्रत्यये "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०९ पा०) इति अकारस्य ओकारादेशे रूपम्। "तोक्मं कर्णमले पंसि हरिते च हरिद्यवे" इति मेदिनी ] तृणस्तम्बाः,—तृणगुच्छाः यस्मिन् तत्र, तरुण-तृणगुच्छे इत्यर्थः। स्तम्भितेति।—स्तम्भितानि—निश्चलानि, वातविरहादिति भावः, तामरसानि—पद्मानि यत्र तादृशे। विकसितेति।—विकसितम्—उल्लसितं, सततम् अम्बुलाभादिति भावः, चातकानां—पक्षिविशेषाणां, चेतः,—मानसं यस्मिन् तथोक्ते। मूकेति।—मूकाः,—निःशब्दाः, मानसगमनादिति भावः, मानसौकसः,—हंसाः यस्मिन् तादृशे; वर्षासु सर्व्वलोके वृष्टिजलस्य आविलत्वात् हंसानां तत्स्पृहाराहित्येन मानससरसि निर्म्मले विहरणस्य "जलदसमये मानसं यान्ति हंसाः" इत्यादिकविसमयप्रसिद्धेरिति भावः। नभसि—श्रावणे मासि, ("श्रावणे तु स्यान्नभाः श्रावणिकश्च सः" इत्यमरः)। देवक्याः,—वसुदेवपत्न्याः, भगवतः श्रीकृष्णस्य मातुरिति यावत्। चक्रपाणिः,—श्रीकृष्णः, चक्रं—चक्राकृतिरेखा, पाणौ—करतले यस्य स इति च; [ "प्रहरणार्थेभ्यः परे निष्ठा-सप्तम्यौ" (वा०) इति सप्तम्यन्तस्य परप्रयोगात् रूपम् ]। यशोवत्याः,—प्रभाकरवर्द्धनस्य महिष्याः; अन्यत्र,—यशस्विन्याः। हृदये हर्षः,—आनन्दः, गर्भे हर्षः,—हर्षनामा नरपतिरित्यर्थः। अत्र देवकी-चक्रपाण्योः यशोवती-हर्षयोः यथाक्रमम् उपमानोपमेयदलस्थयोः सादृश्यलक्ष्मीसमवगाहनादुपमा हर्ष इति श्लेषेण सङ्कीर्णा; अपि चात्र गर्भे सम्राजः श्रीहर्षस्य समुत्पत्तेरनन्तरमेव हृदये हर्षस्य समुत्पत्तिरुचिता, द्वयोरेतयोः समकालिकत्वेन कथनात् कार्य्य-कारणयोः पौर्वापर्य्य-विपर्य्ययरूपातिशयोक्तिरलङ्कारः इत्यवगन्तव्यम्।

(६४) अस्याः,—यशोवत्याः। सर्वेति।—सर्वासां प्रजानां—जनानां, पुण्यैः,—सुकृतैः; पुण्यानां यशोविशेषत्वात् शुभ्रतया वर्णनायाः "यशसि धवलता वर्ण्यते हासकीर्त्त्योः" इत्याद्युक्तिभिः कविसमयसिद्धत्वात्। परिगृहीता—आश्रिता। आपाण्डुताम्—ईषत्पाण्डुवर्णताम्; सर्वप्रजापुण्यफलसमष्टिभूतेयं सम्राजः प्रजारञ्जकस्य हर्षस्य समुत्पत्तिरिति हृदयम्।

(६५) श्यामायमानचारुचूचुकचूलिकौ चक्रवर्त्तिनः पातुं मुद्रितौ इव पयोधरकलशौ बभार। (६६) स्तन्यार्थम् आनननिहिता दुग्धनदीव दीर्घस्निग्धधवला माधुर्य्यम् अधत्त दृष्टिः। सकलमङ्गलगणाधिष्ठितगात्रगरिम्णेव गतिः अमन्दायत। (६७) मन्दमन्दं सञ्चरन्त्या निर्मलकुट्टिमनिमग्नप्रतिबिम्बनिभेन गृहीतपादपल्लवा पूर्व्वसेवामिव आरेभे पृथिवी अस्याः।

(६५) श्यामायमानेति।—श्यामायमाना—नीलायमाना, चारु,—मनोज्ञा, चूचुकयोः,—कुचाग्रयोः, ("चूचुकन्तु कुचाग्रं स्यात्" इत्यमरः) चूलिका—अग्रविशेष. ययो. तादृशौ; [चुल समुच्चये इति धातोः "ण्वुल्-तृचौ" (३।१।१३३ पा०) इति ण्वुल्, "प्रत्ययस्थात्—" (७।३।४४ पा०) इत्यादिना अतः इत्वे, "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०९ पा०) इति उकारस्य ऊत्वे रूपम्]। चक्रवर्त्तिन.,—भाविन सम्राजो हर्षस्य नृपते. इत्यर्थ.। मुद्रिताविव—मुद्रया अङ्किताविव, पयोधरकलशौ—स्तनकुम्भौ, दुग्धाधारकुम्भौ च।

(६६) स्तन्यार्थं—स्तनदुग्धार्थम्। दीर्घेति।—दीर्घा—आयता, स्निग्धा—प्रसन्ना, धवला—शुभ्रा च तथाभूता, विशेषणमेतत् दुग्धनदीपक्षेऽपि योजनीयम्। माधुर्य्यं—मधुररसं, मधुरभावञ्च। अधत्त—धृतवती। सकलेति।—सकलै. मङ्गलगणै:,—माङ्गलिकवस्तुनिवहैः, [मगिधातोः "मङ्गेरलच्" (उ० ५ पा० ७० सू०) इति अलच्प्रत्यये इदित्त्वात् नुमि रूपम्] अधिष्ठितम्—आश्रित, यत् गात्रं—शरीर, तस्य गरिमा—गुरुत्व तेनेव। अमन्दायत—मन्दा इव—स्वल्पा इव, धीरा इवेति यावत्, आचरत्।

(६७) मन्दमन्द—शनैः शनै:, ["मन्दमन्दम्" इत्यत्र "मन्दं मन्दम्" इति पाठान्तरम्, प्रथमपक्षे,—"प्रकारे—" (८।१।१२ पा०) इत्यादिना द्विर्वचनस्य कर्मधारयवद्भावात् सुब्लोपादिके कृते तथा रूपम्, पाठान्तरपक्षे,—"नित्यवीप्सयोः" (८।१।४ पा०) इति वीप्सार्थे द्विर्वचनम् इति विवेकः]। निर्मलेति।—निर्मलेषु—स्वच्छेषु, कुट्टिमेषु—गृहाभ्यन्तरतलेषु, निमग्न—निपतितं, यत् प्रतिबिम्ब, चरणयोरिति भावः, तन्निभेन—तद्व्याजेन, गृहीतपादपल्लवा—धृतचरणकिसलया, पृथिवी—भूमि:, अस्या,—यशोवत्या:, श्वश्रा इवेति भावः, पूर्व्वसेवा—प्रथमपरिचर्य्यां, स्वभर्त्तु: चक्रवर्त्तिनः श्रीहर्षस्य जननीत्वात् इति भावः। अत्र पादयोः प्रतिबिम्बनस्य सेवारूपत्वेन उत्कटैककोटिकसंशयाधायकतया सत्वात् उत्प्रेक्षाऽलङ्कारः, अपि च, अन्यस्याः कस्या

(६८) दिवसम् अधिशयानायाः शयनीयम् अपाश्रयपत्रभङ्ग-पुत्रिकाप्रतिमा विमलकपोलोदरगता प्रसवसमयं प्रतिपालयन्ती लक्ष्मीरिव अलक्ष्यत। (६९) क्षपासु सौधशिखराग्रगताया गर्भोन्माथमुक्तांशुके स्तनमण्डले सङ्क्रान्तमुडुपतिमण्डलम् उपरि गर्भस्य श्वेतातपत्रमिव केनापि धार्य्यमाणम् अदृश्यत। (७०) सुप्ताया वासभवने चित्रभित्तिचामरग्राहिण्योऽपि

अपि स्त्रियाः परिचर्य्या पृथिव्या प्राक् कदाचिदपि नैव कृता, एतस्याः तत्कारणेन त्रिजगल्ललनाभ्यः सौभाग्योत्कर्षप्रतीतिः इति व्यतिरेको व्यङ्ग्यः।

(६८) दिवसं—वासरम्। शयनीयं—शय्याम् ["अधिशीङ्स्थासां कर्म" (१।४।४६ पा०) इति आधारस्य कर्मसंज्ञा] अधिशयानायाः,—अधितिष्ठन्त्या इत्यर्थः। अपाश्रयस्य—गृहाभ्यन्तरगतचन्द्रातपस्य; "वालिश" इति ख्यातस्य उपाधानस्य वा, या पत्रभङ्गपुत्रिका—पुत्तलिकारचनाविशेषः, त [स्याः] प्रतिमा—प्रतिबिम्बम्। विमल—स्वच्छं, गर्भजन्यपाण्डुवर्णत्वादिति भावः, यत् कपोलोदर—गण्डाभ्यन्तरं, तद्गता—तत्र प्रतिफलिता इत्यर्थः। प्रतिपालयन्ती—प्रतीक्षमाणा, वितानेषु उपाधानेषु वा चित्रिताना नारीणा मूर्त्तिषु राजश्रियाः हर्षवरणार्थं प्रतीक्षणमुत्प्रेक्षितम्। लक्ष्मीरिव—राजश्रीरिव, [लक्षधातोः "लक्षेर्मुट् च" (उ० ३ पा० १६० सू०) इति ई-प्रत्यये मुडागमे रूपम्, अङ्यन्तत्वात् न सुलोपः]। अत्र "लक्ष्मीरिव" इति पदं गर्भस्थबालस्य भाविचक्रवर्त्तित्व-सूचकं ज्ञातव्यम्; एवमुत्तरत्र "श्वेतातपत्रमिव" इत्यादिस्थलेऽपि।

(६९) क्षपासु—रजनीषु, सौधशिखरस्य—प्रासादचूडायाः, अग्रम्—उपरि-भागः, तद्गतायाः,—तत्र स्थिताया इत्यर्थः। गर्भेति।—गर्भस्य उन्माथेन—पीडनेन इत्यर्थः, गर्भभारवहनजनितक्लेशेन इति यावत्, मुक्तं—त्यक्तम्, अपसृतमित्यर्थः, अंशुकं—वसनं यस्मात् तथाभूते, स्तनमण्डले सङ्क्रान्तं—प्रतिफलितम्, उडुपतिमण्डलं—चन्द्रबिम्बम्। केनापि—अनिर्दिष्टेन जनेन, सेवकेनेति भावः, यद्वा,—केन—ब्रह्मणा सू[र्य्ये]ण वा; उपयुक्तजगत्पालकादरात् स्वाशानुरागाद्वा इति ज्ञेयम्। एतेन लोकातीतप्रतापशालित्वावगमः अन्तरस्थगर्भस्य सूच्यते इति।

(७०) सुप्तायाः,—निद्रितायाः। चित्रेति।—चित्रभित्तिषु—आलेख्याङ्कित-कुड्येषु इति यावत्, स्थिताः,—चित्रिता इत्यर्थः, याः चामरग्राहिण्यः—वालव्यजन-धारिण्यः ताः। अत्र अपिशब्दः सम्भावनार्थकः इत्युत्प्रेक्षा, निश्चयार्थके तु न तथा।

चामराणि चालयाञ्चक्रुः। (७१) स्वप्नेषु करविधृतकमलिनीपलाशपुटसलिलैः चतुर्भिः अपि दिक्करिभिः अक्रियत अभिषेकः। (७२) प्रतिबुध्यमानायाश्च चन्द्रशालिकाशालभञ्जिकापरिजनो जयशब्दम् असकृत् अजनयत्। (७३) परिजनाह्वानेषु आदिश इति अशरीरा वाचो निश्चेरुः। क्रीड़ायाम् अपि न असहत आज्ञाभङ्गम्। अपि च (७४) चतुर्णामपि महार्णवानाम् एकीकृतेन अम्भसा स्नातुं वाञ्छा बभूव। वेला-

(७१) स्वप्नेषु—स्वप्नाः—निद्राऽवस्थायां विषयानुभवाः तेषु, "स्वप्नो निद्रासुप्तस्य विषयानुभवस्तु यः" इति दर्पणः। करेति।—करैः,—शुण्डैः, विधृतानि—गृहीतानि, कमलिनीपलाशानां—पद्मिनीपत्राणां, पुटे—पात्रविशेषे, सलिलानि—जलानि यैः तथाभूतैः, दिक्करिभिः,—दिग्गजैः। अभिषेकः,—स्नपनं, गर्भस्येति भावः। अत्र अपिशब्दः समुच्चयार्थकः, तेन एतेषां सर्वेषां ग्रहः इति महाप्रतापशालित्वं राजसौभाग्यभाक्त्वञ्च गर्भस्य सूचितम्।

(७२) प्रतिबुध्यमानायाः,—जाग्रत्याः। चन्द्रशालिका—शिरोगृहं, प्रासादोपरिस्थः "चिलेघर" इति वङ्गभाषाप्रसिद्धः गृहविशेष इत्यर्थः, तत्र याः शालभञ्जिकाः,—काष्ठनिर्म्मितपुत्तलिकाः, ता एव परिजनः। असकृत्—पुनःपुनः। अजनयत्—अकरोत्; तद्भवनस्य स्वाभाविकप्रतिध्वनिपूर्णतया जागरणक्षणे तथाविधं जयशब्दमिव सा अशृणोदिति भावः।

(७३) परिजनाह्वानेषु—परिवाराकारणासु। आदिश—आज्ञापय। अशरीराः,—आकाशचारिण्य इत्यर्थः। निश्चेरुः,—निर्गताः। एतेन अपौरुषेयैः व्योमचारिणां सिद्धानां "यदादिशति" इत्यादिस्वीकृतिसूचकशब्दैः गर्भस्थबालस्य महाप्रभाववत्त्वं सूचितम्। क्रीड़ायामित्यादिना तस्य अप्रतिहताज्ञत्वं प्रदर्शितम्। अत्र का कथा कर्त्तव्यार्थसम्पादनावसरे इति अपि-शब्दार्थः।

(७४) "चतुर्णाम्" इत्यादिना "प्रशस्तरत्नानि अबध्यन्त" इत्यन्तेन प्रबन्धेन तस्य भावि सार्व्वभौमत्वं महाशूरत्वञ्च प्रकटीकृतम्, अपि च गर्भः यं यमभिलषति, गर्भिण्या अपि तत्र तत्राभिलाषो जायते; यदुक्तं सुश्रुते,—"गर्भश्चतुर्थे मासि अभिप्रायमिन्द्रियार्थेषु करोति, द्विहृदयाञ्च नारीं दौहृदिनीमाचक्षते।......। अतोऽनुक्रोषु वा नारी समभिध्याति दौहृदम्। शरीराचारशीलैः सा समानं जनयि-

लतागृहोदरपुलिनपरिसरेषु पर्य्यटितुं हृदयम् अभिललाष। (७५) आत्ययिकेषु अपि कार्य्येषु सविभ्रमं भ्रूलता चचाल। (७६) सन्निहितेषु अपि मणिदर्पणेषु मुखम् उत्खाते खड्गपट्टे वीक्षितुं व्यसनमासीत्। (७७) उत्सारितवीणाः स्त्रीजनविरुद्धा धनुर्ध्वनयः श्रुतौ असुखायन्त। (७८) पञ्जरकेसरिषु चक्षुः अरमत।

---

ष्यति॥" इति। अनेन गर्भस्थस्यैव तस्य महावीरसार्व्वभौमसौभाग्याभिलाष प्रतीयते इति बोद्धव्यम्। वेलेति।—वेलासु—समुद्रतीरेषु, यानि लतागृहाणि—कुञ्जभवनानि, तेषाम् उदरेषु—अभ्यन्तरेषु, यानि पुलिनानि—सैकतभागाः, तेषां परिसराः,—प्रान्तदेशाः तेषु। एतेनास्य ससागरधराऽधीश्वरत्वस्यावश्यभाव्यत्वमनुमीयते।

(७५) आत्ययिकेषु—विपत्तिजनके्, कार्य्येषु, [ अत्यये भव इत्यर्थे "तत्र भवः" ( ४।३।५३ पा० ) इति ठञि रूपम् ] सविभ्रमं—सविलास,भ्रूलता चचाल—जगामेत्यर्थः, तस्या इति शेष', आग्रहसूचिकां भ्रूकुटिमकरोदिति भाव:। गर्भे वीरपुरुषस्य अवस्थित्या विपज्जनककार्य्ये प्रवृत्तिः आसीत्, अथवा,—आत्ययिकेषु—अवश्यकर्त्तव्येषु, सविभ्रमं—सविलास, भ्रूलता चचाल—पस्पन्दे, भ्रूलतासञ्चालनेनैव अवश्यकर्त्तव्यानि कारयामास, न तु हस्तादिना गर्भभारालसत्वादिति भाव:।

(७६) सन्निहितेषु अपि—निकटस्थितेषु अपि, मणिदर्पणेषु ["षष्ठी चानादरे" ( २।३।३८ पा० ) इति अनादरे सप्तमी ] तान् अनादृत्येत्यर्थ। उत्खाते —उद्धृते, परिजनेन इति भाव', यद्वा,—निष्कोषिते इत्यर्थ, महावीराश्रितगर्भत्वात्, मुख वीक्षित—द्रष्टुं, व्यसनम्—आसक्ति', अभिलाष इत्यर्थः, खड्गपट्टे—असिफलके, विजिगीषुभि. वीरैश्च खड्गफलके एव मुखदर्शनस्य प्राकृतिकत्वादिति भाव'।

(७७) उत्सारितवीणा',—उत्सारिता—अपसारिता, वीणा—वाद्यविशेषः यैश्च तथाभूताः, तद्ध्वनिभि' वीणादिमधुरशब्दाः तिरस्क्रिय'' इति भावः। धनुर्ध्वनयः,—धनुर्निनादा', श्रुतौ—श्रवणेन्द्रिये, असुखायन्त—श्रुतिसुखा जाता इति यावत्, पूर्व्ववत् महावीराश्रितगर्भत्वात्, प्रत्यर्थिप्रमर्द्दनपरायणानां वीराणाञ्च धनुष्टङ्का स्यैव श्रुतिसुखकरत्वादिति भाव:।

(७८) पञ्जरकेशरिषु—बन्धनं गतेषु सिंहेषु इत्यर्थ', चक्षु' अरमत—अप्रीयत; महापराक्रमस्य गर्भस्य मृगयादिव्यापारेषु सिंहादपि भीत्यभावात् तेनैव च सह क्रीडादिकरणात् इति भाव', अपि च. पञ्जरकल्पोदरशायिनः हर्षस्य केशरिप्रतिमत्वेन तद्दर्शनजनिततृप्तिः चक्षुष. अजनीति ज्ञेयम्।

(७९) गुरुप्रणामेषु अपि स्तम्भितमिव शिरः कथमपि नता। (८०) सखीजनाश्च अस्याः प्रमोदविस्फारितैः लोचनपुटैः आसन्नप्रसवमहोत्सवधियेव धवलयन्तो भवनं विकच-कुमुदकमलकुवलयपलाशवृष्टिमयं रक्षावलिविधिमिवानवरत विदधाना दिक्षु क्षणमपि न मुमुचुः पार्श्वम्। (८१) आत्मो-चितस्थाननिषणाश्च महान्तो विविधौषधिधरा भिषजो भूधरा इव भुवो धृतिं चक्रुः। (८२) पयोनिधीनां हृदयानीव

(७९) गुरुप्रणामेषु—वन्दनीयजनवन्दनेषु, स्तम्भितमिव—निश्चलीकृतमिव, नमने सत्स्वपि सपदि प्रतिरुद्धगतिकमिवेत्यर्थः, महावीरस्य सार्व्वभौमस्य च मस्तक-नमनस्य प्रकृतिविरोधित्वादनभ्यस्तत्वाच्च। पूर्वोक्तेषु सर्वेषु एव वाक्येषु वीरपुरुषाश्रित-गर्भत्वात् तथोक्तिरिति भावः।

(८०) सखीजनाः,—सहचारिण्यः। [“सखीजनाश्च” इत्यत्र “सख्यश्च” इति पाठान्तरम्] प्रमोदविस्फारितैः,—आनन्दविकसितैः। आसन्नेति।—आसन्नः,—समीपवर्त्ती, यः प्रसवः,—गर्भमोचन, स एव तेन वा महोत्सवः,—आनन्दजनन-व्यापार, तद्धियेव - तद्बुद्ध्या इव, महोत्सवः समीपवर्त्ती इति विभ्रम इवेत्यर्थः। धवलयन्तः,—शुभ्रीकुर्व्वन्तः। विकचेति।—विकचानि—विकसितानि, यानि कुमुद-कमल-कुवलयानि—कैरव-पद्म नीलोत्पलानि, तेषां पलाशानि—दलानि, तेषां वृष्टिमय—वर्षणात्मक, रक्षावलिविधि—रक्षायै—गर्भस्य विघ्नाभावसम्पादनाय, बलिविधि—पूजाविधानमिव। विदधानाः,—कुर्व्वन्तः। मुमुचुः,—तत्यजुः, आसन्नप्रसवायाः यतपर्य्यवेक्षणनियमादिति भावः।

(८१) आत्मेति।—आत्मनः,—स्वस्य, उचितेषु—योग्येषु स्थानेषु, निषण्णाः,—उपविष्टाः, महान्तः,—उत्तमाः इत्यर्थ, उन्नताश्च, भिषजः,—वैद्याः, विविधाः,—नानाविधाः, औषधीः,—गर्भविघ्नोत्पादकपूतनादिग्रहनिवारकाणि, तथा रोगोपशमनानि भेषजानि, द्रुमलतादीनि च, धरन्तीति तथोक्ताः, यद्वा—भूधरपक्षे,—विविधाः औषध्यः यासु तादृश्यः, धराः,—भूभागाः येषु तथाभूताः। भूधरा इव—पर्व्वता इव, भुवः,—भूमेः, प्रसवस्थानस्य इत्यर्थः, पृथिव्याश्च, धृतिम्—अवधारणं, धारणञ्च, चक्रुः,—कृतवन्तः, मन्त्रतन्त्रस्वतन्त्राः चिकित्सकाः एतत्पा त् क्षणमपि न प्रचेलुः इति भावः।

(८२) पयोनिधीनां—समुद्राणाम्। हृदयानीव—अभ्यन्तराणीवेत्यर्थः, यथा

लक्ष्म्या सहागतानि ग्रीवासूत्रग्रन्थिषु प्रशस्तरत्नानि अबध्यन्त।

ततश्च प्राप्ते (८३) ज्यैष्ठामूलीये मासि बहुलासु बहुलपक्षद्वादश्यां व्यतीते प्रदोषसमये समारुरुक्षति क्षपायौवने सहसैवान्तःपुरे समुदपादि कोलाहलः स्त्रीजनस्य। निर्गत्य च ससम्भ्रमं यशोवत्याः स्वयमेव (८४) हृदयनिर्विशेषा धात्र्याः सुता सुयात्रा इति नाम्ना राज्ञः पादयोर्निपत्य,—"देव! दिष्ट्या वर्द्धसे द्वितीयसुतजन्मना" इति व्याहरन्ती पूर्णपात्रं जहार।

अस्मिन्नेव च काले राज्ञः (८५) परमसम्मतः, शतशः

---

समुद्राभ्यन्तरे बहूनि प्रशस्तरत्नानि म्रियन्ते, तथेति भावः। लक्ष्म्या—कमलया, प्रयोनिधिसमुत्थितयेति भावः, सह आगतानि—उपस्थितानि, ग्रीवासूत्रग्रन्थिषु—ग्रीवाया ये सूत्रग्रन्थयः तेषु, रक्षाविधानार्थमिति भावः। प्रशस्तरत्नानि—उत्कृष्टमणयः, [प्रशस्तानि तानि रत्नानि इति कर्म्मधारयः; अन्यत्र,—प्रशस्तानि रत्नानि यस्मिन् इति बहुव्रीहिः] अबध्यन्त—बद्धानि, परिजनैः इति शेषः।

(८३) ज्यैष्ठामूलीये—ज्येष्ठानक्षत्राधिदैवते, ज्यैष्ठे मासि इत्यर्थः, बहुलासु—कृत्तिकासु नक्षत्रेषु, बहुलपक्षद्वादश्या—कृष्णपक्षद्वादश्यां तिथौ, ("बहुला नीलिकायां स्यादेलायां गवि योषिति। कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम्। पुंस्यग्नौ कृष्णपक्षे च···॥" इति मेदिनी)। व्यतीते—अतिक्रान्ते, प्रदोषसमये—रजनीमुखे, समारुरुक्षति—समारोढुमिच्छति, प्रादुर्भवतीत्यर्थः, क्षपायौव —रात्रितारुण्ये, निशीथे इत्यर्थः। समुदपादि—सञ्जातः।

(८४) हृदयनिर्विशेषा—हृदयादभिन्ना इत्यर्थः। धात्र्याः सुता—धात्रेयीत्यर्थः, [धाञ्-धेट्धातुभ्यां "ध्र. कर्म्मणि ष्ट्रन्" (३।२।१८१ पा०) इति ष्ट्रनि षित्त्वात् ङीषि भातशब्दात् ङीपि वा रूपम्]। दिष्ट्या—भाग्येन, दैवेनेत्यर्थः, [दिशधातोः "अग्ना-दयश्च" (उ० ४ पा० ११२ सू०) इति युक्प्रत्यये निपातनात् सिद्धम्] व्याहरन्ती—कथयन्ती, पूर्णपात्रं—प्रियवार्त्तादानजपरितोषजनितवसनरत्नादिपूरितपात्र दीयमानं पूर्ण-पात्रम्, "आ न्दोऽतिसौहार्दादेत्य वस्त्रादिकं बलात। अजानती हरत्येव पूर्णपात्रन्तु तत् स्मृतम्॥" इत्युक्तलक्षण यथा-परिहितवस्त्रालङ्का ादि वा। जहार—गृहीतवती।

(८५) परमसम्मतः,—अतिप्रियः। शतशः, शतवारान्, बहुश इत्यर्थः।

संवादितातीन्द्रियादेशः, दर्शितप्रभावः, सङ्कलिती ज्योतिषि, सर्वासां ग्रहसंहितानां पारदृश्वा, सकलगणकमध्ये महितो हितश्च, त्रिकालज्ञानभाक्, भोजकस्तारको नाम गणकः समुपसृत्य विज्ञापितवान्,—"देव ! श्रूयतां, मान्धाता किलैवंविधे (८६) व्यतीपातादिसर्व्वदोषाभिषङ्गरहितेऽहनि सर्वेषु उच्चस्थानस्थितेषु एवं ग्रहेषु ईदृशि लग्ने भेजे जन्म।

---

संवादितेति।—संवादितः,—प्रत्यक्षीकृतः, अतीन्द्रियः,—इन्द्रियमतिक्रान्तः, [ अत्यादयः "क्रान्ताद्यर्थे द्वितीयया" ( वा० ) इति समासः ] भावीति भावः, आदेशः,—आज्ञा, घटना इति यावत् येन तथाभूतः, भविष्यद्वक्तेति भावः ; यद्वा,—संवादितः, जनैरिति भावः, अतीन्द्रियः,—उत्कृष्टाशयः,आदेशः,—आज्ञावाक्, भाषणमित्यर्थः यस्य तथाभूतः। दर्शितप्रभावः,—दर्शितः,—प्रकटितः, प्रभावः,—सामर्थ्यं येन तथोक्तः ; यद्वा,—दर्शितः,—दर्शः,—दर्शनं सञ्जातोऽस्य इति विग्रहे [ "तदस्य—" ( ५।२।३६ पा० ) इत्यादिना तारकादेराकृतिगणत्वादितच्प्रत्यये सिद्धः ] प्रभावः यस्य तथाभूतः ; एतेनास्य विश्वपरीक्षाप्रतिभावत्त्वं सूचितम्। सङ्कलिती—सङ्कलितम् अस्यास्तीति सङ्कलिती, सङ्कलनाभिज्ञः, गणिताभिज्ञ इति यावत्, ज्योतिषि—ज्योतिषशास्त्रे। ग्रहसंहितानां—ग्रहाः,—रव्यादयः, तेषां संहिताः,—सन्दर्भाः, तत्तद्ग्रहज्ञानशास्त्राणीति यावत् तासां, पारदृश्वा—पारदर्शी, विशेषज्ञ इति यावत्, [ पारं दृष्टवान् इत्यर्थे "दृशेः क्वनिप्" ( ३।२।९४ पा० ) इति क्वनिपि रूपम् ]। महितः,—पूजितः। हितः,—हितकरः, सूर्य्यकृतज्योतिर्विद्यासिद्धान्तानां निरन्तरमनन-निदिध्यासनादिभिः इति भावः। गणकः,—दैवज्ञः ; सूर्य्योपासका हि प्रायशः गणका भवन्ति, ये देशान्तरे "मगाः" इति प्रसिद्धाः, भागवता इत्यन्ये। भोजकः,—आहारपटुरिति भावः ; यद्वा,—भोज इव इत्यर्थे स्वार्थे कनि तथाविधः भोजतन्त्रप्रवीणः, भोजवत् निगमागमज्ञो वा इत्याशयः। मान्धाता—सूर्य्यवंशीययुवनाश्वसुतः सार्व्वभौमनृपतिविशेषः।

(८६) व्यतीपातादीति।—व्यतीपातः—"गगने हि मकरार्कौ युगपत् स्यातां यदैकमार्गस्थौ। भगणार्द्धेऽर्कश्च यदा शशी स भवेत् व्यतीपातः॥" इत्युक्तलक्षणः अन्तरीक्षे राशिषट्के एकमार्गावस्थितयोः चन्द्र-सूर्य्ययोः योगविशेषः, आदिर्येषां तथोक्ताः, सर्वे दोषाः, तेषाम् अभिषङ्गः—व्यतिकरः, सम्बन्ध इति यावत्, तेन रहितं—वर्ज्जितं तस्मिन्, अहनि—दिवसे। उच्चस्थानस्थितेषु—तुङ्गेषु इत्यर्थः।

( ८७ ) अर्वाक् ततोऽस्मिन् अन्तराले पुनः एवंविधे योगे चक्रवर्त्तिजनने न अजनि जगति कश्चिदपरः। ( ८८ ) सप्तानां चक्रवर्त्तिनाम् अग्रणीः, चक्रवर्त्तिचिह्नानां महारत्नानाञ्च भाजनं, सप्तानां सागराणां पालयिता, सप्ततन्तूनां सर्वेषां प्रवर्त्तयिता, सप्तसप्तिसमः सुतोऽयं देवस्य जातः" इति।

अत्रान्तरे स्वयमेव ( ८९ ) अनाघ्राता अपि तारमधुरं

---

ग्रहेषु—रव्यादिषु। ईदृशि—एवंविधे शुभे इति भावः। लग्ने—राश्युदये, ( "राशीनामुदयो लग्नम्" इत्यमरः )। भेजे—लेभे।

(८७) अर्वाक् ततः,—तत्पश्चादित्यर्थः। अस्मि अन्तराले—अभ्यन्तरे, हर्ष-मान्धात्रोः जन्मकालमध्ये इत्यर्थः, एवंविधे—ईदृशे, सर्व्वशुभाकरे इति भावः, योगे—ग्रहादीनां सम्मेलने इत्यर्थः, चक्रवर्त्तिजनने—चक्रवर्त्तिनः,—सम्राजः, जननम्—उत्पत्तिर्यस्मिन् तादृशे। अपरः,—हर्षनृपात् अन्य इति यावत्, न अजनि—न जातः। एतेन मान्धाता तु कदाचित् सत्ययुगे आसीत्, इदानीमेष एव त्रिलोक्यामप्रतिमवीर्य्यः इत्यवगम्यते।

( ८८ ) सप्तानां चक्रवर्त्तिनां—सार्व्वभौमनृपतीनां, "भरतार्ज्जुनमान्धातृभगीरथयुधिष्ठिराः। सगरो नहुषश्चैव सप्तैते चक्रवर्त्तिनः॥" इत्युक्तानाम्, अग्रणीः,—अग्रगण्यः, तेषां सप्तानामपि श्रेष्ठ इत्यर्थः। चक्रवर्त्तिचिह्नानां—सार्व्वभौमलक्षणानां, पद्मजालहस्तत्वादीनामित्यर्थः, महारत्नानां—"मण्यश्वकरिचक्राणि वरा स्त्री परिनायकः। ( परिनायकः,—सेनापतिः ) षडेतानि तु रत्नानि कीर्त्तितानि मनीषिभिः॥" इत्युक्तविधानां रत्नविशेषाणां। भाजनं—पात्रम्। सप्तानां सागराणां—लवणेक्षुसुरासर्पिर्दधिदुग्धजलात्मनाम् इत्यर्थः। सप्ततन्तूनां—यज्ञानां, सप्तभि भूरादिमहाव्याहृतिभिः साध्यमानत्वादिति भावः, ( "यज्ञः सवोऽध्वरो यागः सप्ततन्तुमखः क्रतुः" इत्यमरः ) प्रवर्त्तयिता—सम्पादकः। सप्तसप्तिसमः,—सप्त—सप्तसङ्ख्यकाः, सप्तयः,—अश्वाः यस्य सः सप्तसप्तिः,—सप्ताश्वः इत्यर्थः, [ गमनार्थकात्-सपधातोः "वसेस्तिः" ( उ० ४ पा० १७९ सू० ) इति सूत्रे बाहुलकग्रहणात् तिप्रत्यये रूपम् ] तत्समः, आदित्यसदृशः इत्यर्थः, तदंशप्रभवत्वात् इत्याशयः, ( "भास्कराहस्करब्रध्नप्रभाकरविभाकराः। भास्वद्विवस्वत्सप्ताश्वः ···॥" इत्यमरः )। अत्र नरेन्द्रसूनोः लोकासाधारणसम्पत्तिशालित्वलक्षणवस्तुवर्णनविषयत्वात् उदात्तालङ्कारः।

( ८९ ) अनाघ्राताः,—अपूरिताः, मुखानिलेनेति भावः। तारमधुरम्—

शङ्खा विरेसुः। अताडितोऽपि क्षुभितजलनिधिजलध्वनिघोरं जुगुञ्ज अभिषेकदुन्दुभिः। अनाहतानि अपि (९०) मङ्गल-तूर्य्याणि रेणुः। (९१) सर्व्वभुवनाभयघोषणापटह इव दिगन्तेषु बभ्राम तूर्य्यप्रतिशब्दः। (९२) विधुतकेशरसटाश्च साटोप-गृहीतहरितदूर्वापल्लवकवलप्रशस्तैर्मुखपुटैः समक्रेषन्त हृष्टा वाजिनः। (९३) सलीलम् उत्क्षिप्तैः हस्तपल्लवैः नृत्यन्त इव श्रवणसुभगं जगर्जुः गजाः। (९४) ववौ च अचिरात् चक्रायुधम् उत्सृजन्त्या लक्ष्म्या निश्वास इव सुराऽऽमोदसुरभिः दिव्यानिलः।

---

उच्चैर्मधुरम्। विरेसुः,—दध्वनुः। अताडितः,—अनाहतः। क्षुभितेति।—क्षुभितस्य—विलोड़ितस्य, जलनिधेः,—सागरस्य, जलं, तस्य ध्वनिवत् घोरं—गम्भीरम्। जुगुञ्ज—दध्वान। अभिषेकदुन्दुभिः,—अभिषेकसमये वादनीयभेरी, ("भेरी स्त्री दुन्दुभिः पुमान्" इत्यमरः)।

(९०) मङ्गलतूर्य्याणि—माङ्गलिकवाद्यविशेषाः, रेणुः,—रणन्ति स्म।

(९१) सर्वेति।—सर्वेषां भुवनानाम् अभयघोषणायाः,—निर्भयताप्रचारस्य, पटह इव—आनकाख्यवादित्रभेद इव, ("आनकः पटहोऽस्त्री स्यात्" इत्यमरः) तूर्य्यप्रतिशब्दः,—गाद्दीवाद्यप्रतिध्वनिः।

(९२) विधुतेति।—विधुताः,—कम्पिताः, केसराः,—ग्रीवारोमाणि एव, सटाः,—जटाः यैः तथोक्ताः। साटोपेति।—साटोपं—साड़म्बरं, सवेगमित्यर्थः, गृहीतानां हरितानां—श्यामलानां, दूर्व्वापल्लवानां कवले—ग्रासे, प्रशस्तानि—विस्तृतानीत्यर्थः, व्यात्तानीति यावत् तैः, मुखपुटैः,—मुखविवरैः। समक्रेषन्त—क्रेषारवम् अकुर्व्वन्; अकस्मादेव हर्षोद्गमादिति भावः। ["समक्रेषन्त" इत्यत्र "समहेषन्त" इति पाठेऽपि स एवार्थः]। हृष्टाः,—प्रसन्नाः। वाजिनः,—अश्वाः।

(९३) सलीलं—सावहेलम्, उत्क्षिप्तैः,—उन्नमितैः इत्यर्थः, हस्तपल्लवैः,—शुण्डाग्रकिसलयैरित्यर्थः। श्रवणसुभगं—श्रुतिसुखं, जगर्जुः,—वबंहुः, गर्ज्जितवन्तः इत्यर्थः; आनन्दाविर्भाव एव गजानां गर्ज्जने हेतुः इति ज्ञेयम्।

(९४) ववौ—वहति स्म। चक्रायुधं—विष्णुम्, उत्सृजन्त्याः,—त्यजन्त्याः। सुराऽऽमोदसुरभिः,—सुरायाः,—मद्यस्य, आमोदः,—दूरप्रसारिगन्धः, तद्वत् सुरभिः,—घ्राणतर्पणः गन्धः; यद्वा—सुराणाम्—अमराणामपि आमोद,—आनन्दः यस्मात्

(९५) यज्वनां मन्दिरेषु प्रदक्षिणशिखाकलापकथितकल्याणागमाः प्रजज्वलुः अनिन्धना वैतानवह्नयः। (९६) भुवस्तलात् तपनीयशृङ्खलाबन्धबन्धुरकलशीकोशाः समुदगुः महानिधयः।

---

ताहृशश्चासौ सुरभिश्च इति विग्रहः, अमरवरसन्तर्पणसङ्गन्धवान् इत्यर्थः, दिव्यानिलः,—स्वर्गीयवायुः, सम्राजः श्रीहर्षस्य जातस्य श्रुतिस्मृतिविधिबोधितानां धर्माणां भाविविशुद्धसम्प्रदायप्रवर्त्तकत्वज्ञानेन देवानामपि प्रमुदितत्वादिति भावः।

(९५) यज्वनां मन्दिरेषु—यज्ञशालासु इत्यर्थः, [ "इषिमदि—" ( उ० १ पा० ५२ सू० ) इत्यादिना किरचि रूपम् ]। प्रदक्षिणेति।—प्रदक्षिणः,—अनुकूलः, दक्षिणावर्त्तः इति यावत्, अन्यथा हवनसमये ऋत्विजां हस्तदाहापातात्, तेन चाग्नेश्चाप्रसन्नत्वमाशङ्क्यते; तथा हि रघौ कालिदासः,—"प्रदक्षिणार्चिर्व्याजेन" इति; शिखाकलापः,—ज्वालासमूहः, तेन कथितः,—सूचितः, कल्याणागमः,—शुभोदयः यैः तथोक्ताः। अनिन्धनाः,—इन्धनं—दारु, दाह्यकाष्ठमित्यर्थः, तद्रहिताः, वैतानवह्नयः,—वितानं—क्रतुः, तत्र भवाः वैतानाः,—यज्ञीया इत्यर्थः, [ विपूर्व्वकात् तनधातोः "अकर्त्तरि च—" ( ३।३।१९ पा० ) इत्यादिना घञि, ततः भावार्थे अणि च रूपम् ] तथाविधाः वह्नयः,—यज्ञाग्नयः इत्यर्थः।

(९६) भुवस्तलात्—पृथ्वीतलात्, भुवस्तलं विदार्य्य इत्यर्थः, [ "ल्यब्लोपे कर्म्मण्यधिकरणे च" (वा०) इति पञ्चमीविभक्तिः ]। तपनीयेति।—तपनीयं—स्वर्णं, [ "तव्यत्तव्यानीयरः" ( ३।१।९६ पा० ) इति कर्म्मणि अनीयर्प्रत्यये रूपम्। "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्। तपनीयम्…॥" इत्यमरः ] तस्य शृङ्खला—हारविशेषः, सौवर्णरशनेत्यर्थः, निगडी वा, ( "शृङ्खला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु" इति मेदिनी ) तस्या बन्धेन बन्धुराः,—नतोन्नताः, रम्याः वा, ( "बन्धुरं तून्नतानतम्" "बन्धुरं मुकुटे पुंसि…।…त्रिषु स्याद्रम्य-नम्रयोः॥" इत्यमर-मेदिन्यौ ) कलसीकोशाः,—कुम्भभाजनानि, स्वाधारभूतकुम्भस्य पिधानानि वा येषां तथाविधाः, सौवर्णशृङ्खलाबद्धकुम्भपरिपूर्णा इत्यर्थः, महानिधयः,—महान्ति अमूल्यरत्नानि, शङ्खपद्मादयः शेवधिभेदा इति यावत्, समुदगुः,—समुद्गच्छन्ति स्म, समुत्तस्थुरित्यर्थः; महापुरुषजन्मप्रभावात् सर्व्वाण्येव शुभचिह्नानि सर्व्वतः प्रादुरासन्निति भावः। अत्र जन्मानुकूलाभ्युदयिकदेवादिसंस्काराणाम् अप्रसिद्धगौणहेतूनां सत्त्वेऽपि पुरुषकारस्य प्रसिद्धमुख्यहेतोः अभावात् विभावना।

(९७) प्रहतमङ्गलतूर्य्यप्रतिशब्दनिभेन दिक्षु दिक्पालैरपि प्रमोदात् अक्रियत इव दिष्टवृद्धिकलकलः। (९८) तत्क्षण एव च शुक्लवाससो ब्रह्ममुखाः कृतयुगप्रजापतय इव प्रजावृद्धये समुपतस्थिरे द्विजातयः। साक्षाद्धर्म्म इव (९९) शान्त्युदक-फलहस्तः तस्थौ पुरः पुरोधाः। (१००) पुरातन्यः स्थितय इव

(९७) प्रहतेति।—प्रहतस्य—ताडितस्य, मङ्गलतूर्य्यस्य—माङ्गलिकवाद्यविशेषस्य, प्रतिशब्दः,—प्रतिध्वनिः, तन्निभेन—तद्व्याजेन। प्रमोदात्—आनन्दात्। दिष्ट-वृद्धिकलकलः,—दिष्टं—भाग्यं, ("दैवं दिष्टं भागधेयं भाग्यम्" इत्यमरः) तस्य वृद्धिः,—उन्नतिः, तस्यै कलकलः,—कलरवः; [कलप्रकारः इत्यर्थे "प्रकारे—" (८।१।१२ पा०) इत्यादिना द्वित्वे रूपम्] शासति सति श्रीहर्षे राजनि सुशासन-गुणेन प्रजानां निरुपद्रवतया सत्त्वात् तेषां स्वस्वकार्य्यभारलाघवसम्भावनयेति भावः। अक्रियत इव—कृत इव। अत्र सम्भावनायाः उत्कटैककोटिकत्वात् उत्प्रेक्षा।

(९८) तत्क्षण एव—तज्जन्मसमये एव, कियत्कालक्षेपमप्यकृत्वा इति भावः; शुक्लवाससः,—श्वेतवसनाः, ब्रह्ममुखाः,—ब्रह्म—वेदः, [वृहिधातोः "वृंहेर्नोऽच्च" (उ० ४ पा० १४५ सू०) इति मनिनि नकारस्य अकारे ततः रत्वे रूपम्। पवर्गीयादिः इति केचित्। "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः] मुखे येषां तथोक्ताः, वेदानुद्गायन्त इति यावत्, पितामहप्रमुखाश्च, कृतयुगप्रजापतय इव—कृतयुगे—सत्ययुगे, प्रजापतयः,—लोकसृष्टिकर्त्तार इव, परमेष्ठिप्रधानाः प्रजापतयः सृष्ट्यादौ यथा समवेता आसन्, तथेत्यर्थः, इत्यवैधर्म्यसाम्यादुपमाऽलङ्कारः। प्रजावृद्धये—प्रजानां—जनानां, प्रजायाः,—सन्तानस्य च, ("प्रजा स्यात् सन्ततौ जने" इत्यमरः) वृद्धये—अभ्युदयाय, आयतिं संस्कर्तुमित्यर्थः, ["क्रियार्थोपपदस्य—" (२।३।१४ पा०) इत्यादिना चतुर्थी]। समुपतस्थिरे—उपस्थिताः। द्विजातयः,—ब्राह्मणाः; प्राक् ब्राह्मणोपस्थितिः सर्वोत्पातनाशनत्वात् अशेषमङ्गलप्रदा इति हृदयम्।

(९९) शान्तीति।—शान्त्यर्थमुदकं—जलं शान्त्युदकं, फलञ्च, आशीर्व्वादार्थ-मिति भावः, हस्ते यस्य तथाभूतः। पुरोधाः,—पुरोहितः। [पुरस्पूर्व्वकात् धाधातोः "पुरसि च" (उ० ४ पा० २३० सू०) इति असि प्रत्यये रूपम्] माङ्गलिक-कार्य्यादौ सर्वाग्रे पुरोहितोपस्थितिः सनातनी पद्धतिरेवेति भावः।

(१००) पुरातन्यः,—चिरन्तन्यः, [तत्र भवेऽर्थे "सायञ्चिरं—" (४।३।२३

अदृश्यन्त आगता बान्धववृद्धाः। (१०१) प्रलम्बश्मश्रु-जालजटिलाननानि बहलमलपङ्ककलङ्ककालकायानि नश्यतः कलिकालस्य बान्धवकुलानि इव आकुलानि अधावन्त मुक्तानि बन्धनवृन्दानि। (१०२) तत्कालापक्रान्तस्य अधर्म्मस्य शिविर-श्रेणय इव अलक्ष्यन्त लोकविलुण्ठिता विपणिवीथ्यः। (१०३) विलसदुन्मुखवामनक-बधिरवृन्दवेष्टिताः साक्षात् जातमातृदेवता इव बहुबालकव्याकुला ननृतुः वृद्धधात्र्यः।

---

पा० ) इत्यादिना ट्युल्प्रत्यये तुडागमे ततः टित्त्वात् ङीपि रूपम् ] स्थितय इव—मर्य्यादा इव, शिष्टाचारपद्धतयः इवेति यावत्। बान्धववृद्धाः,—बान्धवेषु—सगोत्रेषु, वृद्धाः,—स्थविराः; चिरन्तनाचारपरिरक्षणशीलवत्त्वात् तेषामिति भावः।

(१०१) प्रलम्बेति।—प्रलम्बेन—लम्बमानेन, क्षौराभावात् इति भावः, श्मश्रुजालेन—कूर्चसमूहेन, जटिलानि—व्याप्ततया निविड़ानि, आननानि येषां तानि। बहलेति।—बहलानां—बहूनां, मलपङ्कानां—गात्रक्लेदरूपकर्द्दमानां, कलङ्केन—कृष्णवर्णचिह्नेन, कालः,—कृष्णवर्णः, मलिन इत्यर्थः, कायः,—देहो येषां तानि, स्नानाद्यभावादिति भावः। नश्यतः,—पलायमानस्य, भाविसुराजदण्डभयादिति भावः। बान्धवकुलानि इव—स्वजनवृन्दानि इव। आकुलानि—अधिकारभ्रंशात् विह्वलानि इत्यर्थः। मुक्तानि—बन्धनागारात् त्यक्तानि, बन्धनवृन्दानि—कारानिरुद्धलोकसङ्घाः; [ बन्धननिरुद्धानि वृन्दानि इति विग्रहे शाकपार्थिवादित्वात् उत्तरपदलोपिसमासः ]; महोत्सवे राज्ञा कारावासिनो मुच्यन्ते इति चिरप्रसिद्धिः।

(१०२) तत्कालेति।—तस्मिन् काले—हर्षजन्मसमये इत्यर्थः, अपक्रान्तस्य—अपसृतस्य, धर्म्मतः शासितुः हर्षस्य भयात् पलायितस्य इत्यर्थः, अधर्म्मस्य—वेदनिषिद्ध-कर्म्मजन्यपापाचारस्य, शिविरश्रेणय इव—सेनानिवेशस्थानानि इव। लोकेति।—लोकैः,—जनैः, विलुण्ठिताः,—विशेषेण हृतद्रव्या इत्यर्थः, विपणिवीथ्यः,—पण्यवीथिका-निवहाः; आनन्देन राजाज्ञया लोका राजदेयक्षतिपूरणानां विपणिस्थितां वणिजां विपणिद्रव्याणि पराजितशिविरधनानीव लुण्ठितवन्त इत्यर्थः।

(१०३) विलसदिति।—विलसद्भिः,—आनन्देन स्फुरद्भिः, उन्मुखैः,—ऊर्द्ध्वमुखैः, वामनकानां—क्षुद्रकायानां जनविशेषाणां, बधिराणाम्—एड़ानां, श्रुति-शक्तिरहितानामित्यर्थः, अन्तःपुरचारिणामिति भावः, वृन्दैः,—समूहैः, वेष्टिताः,—परिवृताः। साक्षात्—मूर्त्तिमतीत्यर्थः, जातमातृदेवता इव—जातस्य—प्रसूतस्य

( १०४ ) प्रावर्त्तत च विगतराजकुलस्थितिः, अधःकृतप्रतीहाराकृतिः, अपनीतवेत्रिवेत्रः, निर्दोषान्तःपुरप्रवेशः, समस्वामिपरिजनः, निर्विशेषबालवृद्धः, समानशिष्टाशिष्टजनः, दुर्ज्ञेयमत्तामत्तप्रविभागः, तुल्यकुलयुवतिवेश्याविलासः, प्रनृत्तसकलकटकलोकः, पुत्त्रजन्मोत्सवो महान् ।

---

बालस्य, मातृदेवता इव—षष्ठीदेव्य इव इत्यर्थः, सा च मार्जारवाहिनी बहुबालकपरिवृता सूतिकाऽऽगारे स्थाप्यते । बहुभिर्बालकैः,—क्रोडनिहितैः शिशुभिः इति भावः, व्याकुलाः,—विह्वला, उद्वेजिता इत्यर्थः, युगपन्‍स्तनानुरोधे व्यस्ततापातात् इति हृदयं, वृद्धधात्र्यः,—स्थविरा उपमातरः, ननृतुः,—नृत्यन्ति स्म ।

( १०४ ) प्रावर्त्तत—प्रारभत, प्रारब्धोऽभवदित्यर्थः । विगतेति ।—विगता—विनष्टा, राजकुलस्य—राजवंशस्य, स्थितिः,—नियमः यस्मिन् तथोक्तः, कुमारदर्शनार्थं परितः प्रजानां पर्य्याकुलतया स्थितेरिति भावः । अधःकृतेति ।—अधःकृता—पातिता, परित्यक्ता इत्यर्थः, प्रतीहाराणां—दौवारिकाणाम्, आकृतिः,—आकारः, भीषणवेशेन स्थितिरिति यावत् यत्र तथाभूतः, यद्वा,—अधःकृता—न्यक्कृता, अगणिता इत्यर्थः, कुमारदर्शनार्थिभिरिति भावः, प्रतीहाराणाम् आकृतिः,—भयङ्करमूर्त्तिरिति यावत् यत्र तथाभूतः । अपनीतवेत्रिवेत्रः,—अपनीतानि—त्यक्तानि, वेत्रिभिः,—वेत्रधारिभिः, लोकापसारणार्थमिति भावः,वेत्राणि—करधृतवेत्रयष्टयः यस्मिन् तथोक्तः । निर्दोषेति ।—निर्दोषः,—दोषरहितः, अन्तःपुरे—राजावरोधे, प्रवेशः यस्मिन् तथाभूतः, अवारितान्तःपुरप्रवेश इत्यर्थः । समेति ।—समौ—तुल्यौ, स्वामि-परिजनौ—प्रभु-भृत्यौ यस्मिन् तथोक्तः, अयं स्वामी, समुचितमुपचरितव्यः, अयं परिजनः, तथा नोपचरितव्य इत्येवं विचाररहित इति भावः । निर्विशेषेति ।—निर्विशेषाः,—विशेषरहिताः, अभिन्ना इत्यर्थः, बालाः,—शिशवः, वृद्धाः,—स्थविराश्च यस्मिन् तथाभूतः; बालवृद्धयोः परस्परं मिलित्वा तुल्यभावेन उत्सवकरणादिति भावः । समानेति ।—समानाः,—तुल्यसत्काराः, शिष्टाः,—शान्ताः सन्तः, अशिष्टाः,—उद्धताः मूर्खाश्च, जना यस्मिन् तथोक्तः । दुर्ज्ञेयेति ।—दुर्ज्ञेयः,—कः पानोन्मत्तः, को वा कुमारजन्मना हृष्ट इति विशिष्य निर्णेतुमशक्यः, पानेन आनन्देन च विवेकविच्युतेरुभयत्रैव तुल्यत्वादिति भावः, मत्तानां—क्षीवाणाम्, अमत्तानां—प्रकृतिस्थानाञ्च जनानां, प्रविभागः,—प्रभेदः यस्मिन् तथाभूतः, सर्वेषामेव तत्र प्रमत्तत्वादिति भावः । तुल्येति ।—तुल्यः,—सदृशः, कुलयुवतीनां—कुलाङ्गनानां, वेश्यानां—वारनारीणाञ्च, विलासः,—विहारः

(१०५) अपरेद्युः आरभ्य सर्वाभ्यो दिग्भ्यः स्त्रीराज्यानि इव आवर्ज्जितानि, असुरविवराणि इव अपावृतानि, नारायणावरोधानि इव प्रचलितानि, अप्सरसामिव महीमवतीर्णानि कुलानि; (१०६) परिजनेन पृथुकरण्डपरिगृहीताः स्नानीयचूर्णावकीर्णकुसुमाः सुमनःस्रजः, स्फटिकशिलाशकलशुक्ल-

यस्मिन् तथोक्तः; कुलाङ्गनाः वेश्याश्च परस्परं मिलित्वैव समभावेन विहरन्ति स्म, सर्व्वासामेव तदानीं निर्भरानन्दसन्दोहविमुग्धत्वादिति भावः।' प्रनृत्तेति।—प्रकर्षेण नृत्ताः,—नर्त्तनरताः, सकलाः कटकलोकाः,—शिविरस्थजनाः यस्मिन् तथाभूतः।

(१०५) अपरेद्युः इत्यादि।—"अपरेद्युः" ["सद्यः—" (५।३।२२ पा०) इत्यादिना निपातनात् सिद्धम्] इत्यस्य "सामन्तान्तःपुरसहस्राणि अदृश्यन्त" इत्युत्तरेणान्वयः। तानि एव विशिनष्टि,स्त्रीराज्यानीव इत्यादिभिः।—आवर्ज्जितानि—आहृतानि। स्त्रीराज्यानि इव—कुमारदर्शनार्थमेकत्र सङ्गताः स्त्रीसमूहा इवेत्यर्थः; एवमादिषु प्रकृतस्य परात्मना सम्भावनोदयात् उत्प्रेक्षाऽलङ्कारः। असुरविवराणि इव—रसातलानि इव, अपावृतानि—उद्घाटितानि, उज्ज्वलत्वादिति भावः। नारायणावरोधानि इव—कृष्णान्तःपुरिका जना इव, तेषां सातिशयगौरववत्त्वात् षोड़शसहस्रसङ्ख्यातत्वाच्चेति भावः, [अत्र अवरुध्यन्ते याः ताः अवरोधाः, इति कर्म्मणि घञि अवरोधशब्दस्य नियतपुंलिङ्गता; तथा हि मेदिनी,—"अवरोधस्तिरोधाने राजदारेषु तद्गृहे" इति; एवञ्च कोषशास्त्रविरुद्धत्वात् विद्याविरुद्धत्वदोषः विज्ञेयः; घञि अलि च निष्पादितानां नियतपुंस्त्वानुशिष्टत्वात् व्याकरणादिलक्षणहीनत्वेन वा च्युतसंस्कारत्वमूह्यम्। अवरोधानां समूहः इत्यर्थे "तस्य समूहः" (४।२।३७ पा०) इति सूत्रेण समूहार्थे अणि कृते अवरोधानि—अवरोधानां कुलानि इत्यर्थपरत्वे तु क्लीवत्वं कथञ्चित् सम्पादनीयमिति, तथा च नाशङ्कितदोषावसर इति विवेकः]। महीं—पृथ्वीम्, अवतीर्णानि—आगतानि, अप्सरसां [अद्भ्यः सरन्ति इत्यर्थे "अपपूर्व्वकात् सृधातोः "अप्सराः" (उ० ४ पा० २३६ सू०) इति असिप्रत्यये रूपम्] कुलानीव—वृन्दानीव। अप्सरसामिव सुन्दरीणां नारीणामेकत्र सङ्गतत्वादिति भावः।

(१०६) परिजनेन—दासदासीवर्गेण। पृथ्विति।—पृथुभिः,—स्थूलैः, महद्भिर्वा, करण्डैः,—समुद्गकैः, भाजनविशेषैः इत्यर्थः, परिगृहीताः,—सङ्गृह्य आनीताः इत्यर्थः। स्नानीयेति।—स्नानीयं—स्नानोपकरणं, चूर्णं—चोदः, गन्धद्रव्यविशेषाणामिति भावः तेन अवकीर्णं—युक्तं, व्याप्तं वा, कुसुमं यासां ताः, सुमनःस्रजः,—पुष्पमाल्यानि

कर्पूरखण्डपूरिताः पात्रीः, ( १०७ ) कुङ्कुमाधिवासभाञ्जि भाजनानि च मणिमयानि, सहकारतैलतिम्यत्तनुखदिरकेसरजालजटिलानि चन्दनधवलपूगफलफालीदन्तुरदन्तशफरुकाणि, ( १०८ ) गुञ्जन्मधुकरकुलपीयमानपारिजातपरिमलानि पाटलानि पाटलकानि च, सिन्दूरपात्राणि च, पिष्टातकपात्राणि च, बाललतालम्बमानविटकवीटकांश्च ताम्बूलवृन्तान् बिभ्राणेन

"बिभ्राणेन" इत्यनेनान्वयः ; एवमुत्तरत्र। स्फटिकेति।—स्फटिकं—तदाख्यं, शिलाशकलं—प्रस्तरखण्डः, तद्वत् शुक्लेन—शुभ्रेण, कर्पूरखण्डेन पूरिताः,—आकीर्णाः, पात्रीः,—कर्पूरभाजनानि इत्यर्थः।

( १०७ ) कुङ्कुमेति।—कुङ्कुमान्येव—काश्मीरजान्येव, अधिवासाः,—अधिवासनद्रव्याणि, सुगन्धिद्रव्याणि इत्यर्थः, तान् भजन्ते इति तथोक्तानि, तत्पूरितानि इत्यर्थः। मणिमयानि—रत्ननिर्मितानि। सहकारेति।—सहकारस्य—अतिसौरभचूतफलस्य, तैलेन—स्नेहविशेषेण, तिम्यत्—सिक्तं, तनु—अल्पं,खदिरकेसरं—खदिरसारः यद्वा—खदिरः केशरश्च—किञ्जल्कश्च, तस्य जालेन—समूहेन, जटिलानि—युक्तानि, सम्भृतानि इत्यर्थः। चन्दनेति।—चन्दनवत् धवलानि—शुभ्राणि, पूगफलानि—गुवाकफलानि, तेषां फालीभिः,—शकलैः, दन्तुराणि—सञ्जातदन्तानीव लक्ष्यमाणानि, दन्तशफरुकाणि—गजदन्तनिर्मितभाजनविशेषान् इत्यर्थः, [ शफोपपदात् राधातोः "मृगय्वादयश्च" ( उ० १ पा० ३८ सू० ) इति कुप्रत्यये स्वार्थे कनि रूपम् ]।

( १०८ ) गुञ्जदिति।—गुञ्जद्भिः,—रणद्भिः, मधुकरकुलैः,—भृङ्गसङ्घैः, पीयमानः,—आस्वाद्यमानः, आघ्रायमाण इत्यर्थः, पारिजातानां—तत्पुष्पाणामित्यर्थः, राज्ञः महाप्रभावशालित्वात् देवानां सम्मतत्वाच्च, तेन पारिजातपुष्पाणि सुलभान्येवेति बोध्यम् ; यद्वा,—पारिजातानां—पारिभद्राख्यपुष्पविशेषाणां, परिमलः,—अतिमनोहरः गन्धः येषां तानि। पाटलानि—श्वेतरक्तवर्णानि, पाटलकानि—पात्रविशेषान्। [ "पाटलकानि" इत्यत्र "पीटलकानि" इति पाठान्तरम् ]। पिष्टातकपात्राणि—पिष्टातकः,—पटवासकः, वस्त्रवासकं सुगन्धिद्रव्यचूर्णमित्यर्थः, ( "पिष्टातः पटवासकः" इत्यमरः ) तस्य पात्राणि—भाजनानि। बालेति।—बालाः,—अभिनवाः, लताः तासु लम्बमानानि—प्रसरन्ति इत्यर्थः, विटकवीटकानि—पश्चाशत्ताम्बूलदलैः क्रियमाणाः स्तवकविशेषाः येषु तान्। ताम्बूलवृन्तान्—पर्णवल्लोरित्यर्थः। बिभ्राणेन—दधता, [ बिभर्तेः

(१०९) अनुगम्यमानचरणानि, कुट्टनरणितमणिनूपुरमुखरित-दिङ्मुखानि, नृत्यन्ति, राजकुलम् आगच्छन्ति, समन्तात् सामन्तान्तःपुरसहस्राणि अदृश्यन्त।

(११०) शनैः शनैः व्यजृम्भत च क्वचित् नृत्तानुचितचिरन्तनशालीनकुलपुत्रकलोकलास्यप्रथितपार्थिवानुरागः, क्वचित्
(१११) अन्तःस्मितक्षितिपालापेक्षितक्षीवक्षुद्रदासीसमाकृष्य-

"ताच्छील्य—" (३।२।१२९ पा०) इत्यादिना वयः अर्थे कर्त्तरि चानशि रूपम्] परिजनेन इत्यस्य विशेषणम्।

(१०९) अनुगम्यमानेति।—अनुगम्यमानाः,—सेव्यमानाः, चरणा येषां तानि वन्द्यमानचरणानि इत्यर्थः। कुट्टनेति।—कुट्टनेन—दलनेन, पदविक्षेपणेन इति यावत्, ["अनुगम्यमानचरणानि, कुट्टन—" इत्यत्र "अनुगम्यमानानि, चरणनिकुट्टन—" इति पाठे—पूर्वोक्तविशेषणविशिष्टेन परिजनेन अनुस्रियमाणानि। चरणयोः,—पादयोः, निकुट्टनेन—द्रुतपातनेन इत्यर्थः] रणितैः,—स्वनितैः, मणिनूपुरैः,—रत्नमयमञ्जीरैः, मुखरितानि—ध्वनितानि, दिशां मुखानि येषां यैर्वा तानि। नृत्यन्ति—क्रियमाणनर्त्तनानि इवेति प्रतीयमानोत्प्रेक्षा; यद्वा,— रतिगात्रविक्षेपस्यैवात्र विवक्षायाम् अपूर्व्वसुखोदयात् अतिवल्गादङ्गकानि इत्यर्थः। राजकुल—राज्ञः,—श्रीहर्षपितुः, गृहम्, आगच्छन्ति—आयान्ति, कुमारदर्शनार्थमिति भावः। समन्तात्—चतुर्दिक्षु। सामन्तेति।—सामन्तानाम्—अधीननृपतीनाम्, अन्तःपुराणि—अवरोधनाद्यैः, ["ऋक्पू—" (५।४।७४ पा०) इत्यादिना समासान्ते अचि रूपम्] तेषां सहस्राणि—समूहाः। अत्रार्हणार्थं सामन्तावरोधानां माङ्गल्यपूजोचितद्रव्यसम्भारहस्तानां राजभवनागमनौत्सुक्यं यथायथं प्रतिपादितमिति।

(११०) "शनैः शनैः व्यजृम्भत" इत्यस्य "उत्सवासीत्" इत्युत्तरेणान्वयः। शनैः शनैः,—क्रमेण। व्यजृम्भत—प्रावर्त्तत। नृत्तेति।—नृत्ते—नर्त्तने, अनुचितः,—अयोग्यः, अनभ्यस्त इत्यर्थः, चिरन्तनशालीनः,—चिरलज्जाशीलः, चिरविनीतो वा, [शालाशब्दात् "तदर्हति" (५।१।६३ पा०) इति खञि रूपम्] यः कुलपुत्रकलोकः,—सत्कुलजातसुतस्य लोकसमवायः, तस्य लास्येन—नर्त्तनेन, निरतिशयानन्दात् एतदुत्सवे एतेनापि नर्त्तितं लज्जात्यागः कृत इति भावः। प्रथितः,—प्रकाशितः, पार्थिवस्य—राज्ञः, पार्थिवे—राज्ञि वा, अनुरागः,—प्रीतिः यस्मिन् तथाविधः।

(१११) अन्तरिति।—अन्तःस्मितेन—अन्तरीषद्धसता इत्यर्थः, स्वपुत्र न्मल्लि

आणराजवल्लभः, क्वचित् (११२) मत्तकटककुट्टनीकण्ठलग्न-वृद्धार्य्यसामन्तनृत्तनिर्भरहसितनरपतिः, क्वचित् (११३) क्षिति-पाक्षिसंज्ञादिष्ट-दुष्टदासेरकगीत-सूच्यमान-सचिवचौर्य्यरतप्रपञ्चः, क्वचित् (११४) मदोत्कटकुटहारिकापरिष्वज्यमानजरत्प्र-व्रजितजनितजनहासः, क्वचित् (११५) अन्योऽन्यनिर्भरस्पर्द्धोद्धुर-

क्षुद्रदासीनामपि प्रमोदातिशय्यदर्शनादिति भावः, क्षितिपालेन—राज्ञा, अपेक्षिताः,—निरीक्षिताः; यद्वा,—अपेक्षिताः,—उपेक्षिता इत्यर्थः, दृष्टेनापि अदृष्टेनेव, सङ्गताम-सत्प्रतिकूलस्वभाववत्त्वात् इति भावः, क्षीबाभिः,—मद्यपानेन मत्ताभिः, क्षुद्राभिः,—इतर-जातीयाभिः, दासीभिः,—परिचारिकाभिः, समालभ्यमानाः,—आक्षिप्यमाणाः, राज-वल्लभाः,—राज्ञः नर्म्मसचिवा इत्यर्थः। यत्र तादृशः।

(११२) मत्तेति।—मत्तानां—मधुपानविह्वलानां, कटककुट्टनीनां—राजधानी-स्थितवारविलासिनीनां, ("कटकोऽस्त्री नितम्बोऽद्रेः… । …राजधानी-वलययोरपि" इति मेदिनी) कण्ठेषु—गलेषु, लग्नाः,—ससक्ताः, ये वृद्धाः,—स्थविराः, आर्य्याः,—साधवः, सामन्ताः,—अधीश्वरा नृपतयः, तेषां नृत्तेन—सविलासाङ्गविक्षेपरूपनर्त्तनेन इत्यर्थः, निर्भरम्—अत्यन्तं, हसितः,—कृतहासः, नरपतिः,—सम्राट् यत्र तथाभूतः विलासिनीभिः सह राजवृद्धानां नर्त्तनं हास्यरसानुकूलमेव इति भावः।

(११३) क्षितिपेति।—क्षितिपस्य—राज्ञः, अक्षिसंज्ञया—नेत्रेङ्गितेन, आदिष्टः,—आज्ञप्तः, दुष्टः,—दुर्वृत्तः, यो दास्या अपत्यं दासेरकः,—दासीपुत्र इत्यर्थः, ["क्षुद्राभ्यो वा" (४।१।१३१ पा०) इति पक्षे ढ्रकि ततः कनि रूपम्] चण्डो वा, [तस्येदमित्यर्थे सत्पालकः इत्यर्थः, अन्यथा सूच्यमानत्वानापत्तेः] तस्य गीतेन—गानेन, सूच्यमानः,—प्रकाश्यमानः, सचिवानाम्—अमात्यानां, चौर्य्येण—गोपनेनेत्यर्थः, रतप्रपञ्चः,—निधुवनविहारविलसितं यत्र तथोक्तः।

(११४) मदोत्कटेति।—मदोत्कटाभिः,—मदमत्ताभिः, कुटहारिकाभिः,—कुटं—घटं, कुम्भमिति यावत्, ("कुटः कोटे पुमानस्त्री घटे स्त्री पुंसयोर्गृहे" इति मेदिनी) हरन्ति वहन्ति याः तथोक्ताभिः, कुम्भयोगेन जलवाहिनीभिः दासीभिः, परिष्वज्यमानाः,—आलिङ्गमानाः, नीरेण स्वकुटपूरणार्थमिति भावः, ये जरन्तः,—स्थविराः, प्रव्रजिताः,—सन्यासिनः, तैः जनितः,—उत्पादितः, जनानां हासो यस्मिन् सः।

(११५) अन्योऽन्येति।—अन्योऽन्यस्मिन्—परस्परं, निर्भरस्पर्द्धा—अत्यन्तसाम्यम्, आत्यन्तिकी ईर्ष्येत्यर्थः, तया उद्धुराः,—दृढाः उन्मत्तप्राया इत्यर्थः, उच्छृङ्खला इति

चेटकपेटकारब्धावाच्यवचनयुद्धः, क्वचित् (११६) नृपा-बला-बलात्कार-नर्त्यमान-नृत्यानभिज्ञान्तःपुरपाल-भावित-भुजिष्यः, (११७) सपर्वत इव कुसुमराशिभिः, सधारागृह इव सीधु-प्रपाभिः, सनन्दनवन इव पारिजातामोदैः, सनीहार इव कर्पूर-रेणुभिः, साट्टहास इव पटहरवैः, सामृतमथन इव कलकलैः, सावर्त्त इव रासकमण्डलैः, सरोमाञ्च इव भूषणमणिकिरणैः,

यावत्, प्रचण्डभावेन वाग्युद्धेषु रता इति भावः, ये चेटकाः,—नीचदासाः, नायकनर्त्तकपरिचारकादय इति यावत्, तेषां पेटकेन—कदम्बकेन, समूहेन इत्यर्थः, ("पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके" इति मेदिनी) आरब्धं—प्रक्रान्तम्, अवाच्यम्—अवक्तव्यं, वचनयुद्धं—शुष्ककलहः यत्र तथोक्तः; अन्योऽन्यं कुवाक्यप्रयोग एव नीचानन्दप्रद इति भावः।

(११६) नृपेति।—नृपस्य—राज्ञः, अबलाभिः,—नारीभिः, राजयोषिद्भिरित्यर्थः, बलात्कारेण—बलप्रयोगेण, नर्त्यमानाः,—नर्त्तितुं प्रवर्त्यमानाः, नृत्यानभिज्ञाः,—नर्त्तनज्ञान-रहिताः, ये अन्तःपुरपालाः,—अन्तःपुररक्षिणः, तेषु तैः वा भाविताः,—अहो! एते पश्यामः नर्त्तनाज्ञता ज्ञास्यन्तीति चिन्तिताः; यद्वा,—सततपरिचयेन सद्भावान्विताः इत्यर्थः, भुजिष्याः,—किङ्कर्यः यस्मिन् तथोक्तः।

(११७) सपर्व्वतः,—पर्व्वताकारपुष्पपूर्ण इत्यर्थः। कुसुमराशिभिः,—राशीकृतैः पुष्पसमूहैः इत्यर्थः। सीधुप्रपाभिः,—सुरायाः पानीयशालिकाभिः, सधारागृह इव—जलधारागृहसमन्वित इवेत्युपमा, सीधुप्रपा-धारागृहयोः साहश्यञ्चोल्लासमुल्लासनात्; एवमग्रेऽपि ज्ञेयम्। पारिजातामोदैः,—पारिजातपुष्पसौरभैः, ["पारिजातामोदैः" इत्यत्र "पारिजातकामोदैः" इति पाठे,—पारिजात एवेति पारिजातकः तस्य आमोदैः] सनन्दनवन इव—नन्दनवनं—देवोद्यानं, तत्सहित इव, देवोद्याने यथा पारिजातानामामोदः, तथा अत्रापि पारिजातवृष्टिभिरिति भावः। सनीहार इव—हिमबिन्दुसहित इव, कर्पूररेणुभिः,—कर्पूरचूर्णैः। साट्टहास इव—अट्टहासः,—उच्चैर्हासविशेषः, तेन सहित इव, पटहरवैः,—आनकध्वनिभिः। सामृतमथन इव—अमृतमथनसहित इव, कलकलैः,—कोलाहलैः; अमृतमथनकाले यथा देवासुराणां कलकलः सञ्जातः, तथाऽत्रापीति भावः। सावर्त्त इव—जलभ्रमसदृशभ्रान्ति-सहित इव, रासकमण्डलैः,—स्त्रीणां परस्परं हस्तधारणेन मण्डलाकारेण नर्त्तनं रासः आख्यायितस्त्रीपुरुषाणां विभङ्गिभाजां नर्त्तनं वा, [ततः स्वार्थे कन्प्रत्ययः] रासकानां

सपट्टबन्ध इव चन्दनललाटिकाभिः, सप्रसव इव प्रतिशब्दकैः, सप्ररोह इव प्रसाददानैः उत्सवामोदः।

(११८) स्कन्धावलम्बमानकेसरमालाः काम्बोजवाजिन इव आस्कन्दन्तः, तरलतारका हरिणा इव उड्डीयमानाः, सगरसुता इव खनित्रैः निर्दयैः चरणाभिघातैः दारयन्तो भुवम् अनेकसहस्रसङ्ख्याः चिक्रीडुः युवानः। कथमपि (११९) तालाव-

मण्डलानि—समूहाः तैः। सरोमाञ्च इव—लोमहर्षसहित इव। भूषणेति।—भूषणमणीनाम्—अलङ्कारीभूताना रत्नानाम्, अलङ्कारयोजितरत्नाना वा, किरणैः,—प्रभाभिः। सपट्टबन्ध इव—सोष्णीषबन्ध इव, चन्दनललाटिकाभिः,—चन्दनतिलकरूपैः अलङ्कारैः। सप्रसव इव—ससन्तान इव, प्रतिशब्दकैः,—प्रतिध्वनिभिः। सप्ररोह इव—साङ्कुर इव, प्रसाददानैः,—पारितोषिकवितरणैः, पारितोषिकार्थं कोशागारादानीय प्रीतिपात्रसात्कृतैः इतस्ततः प्रक्षिप्तैः धनादिभिरित्यर्थः, उद्दामपवनैः विक्षोभितः महासिन्धुतरङ्गितनीरस्तोम. यथा सणिकादिषु न माति, तथा महोत्सवेषु महाराज-दीयमानार्थसङ्घः साधारणानुजीविषु अप ˚प्ततया न समाविात्याशयः।

(११८) स्कन्धेति।—स्कन्धेषु—गलदेशेषु इत्यर्थः, अवलम्बमानाः,—दोलायमाना., केसरमालाः,—वकुलमालाः, ("केशर हिङ्गुले……। सिंहसटाया पुन्नागे वकुले नागकेशरे॥" इति मेदिनी) ग्रीवारोमावल्यश्च येषा तथोक्ताः। काम्बोजवाजिन इव—काम्बोजाः,—काम्बोजदेशीयाः, वाह्लीकदेशजा इत्यर्थः, वाजिनः,—अश्वा इव, आस्कन्दन्त.,—आस्फोटयन्त., आक्रामन्तो वा, परस्परमिति शेष., बलपरीक्षणेच्छया इति भाव। तरलतारकाः,—चञ्चलकनीनिकाः, हरिणा इव—मृगा इव, उड्डीयमाना.,—उत्प्लवमाना इत्यर्थः, यद्यपि पक्षिणा गतौ प्रयुक्तस्यास्य डीयते. व्योमगमनार्थकत्वं दृश्यते, तथाऽपि इहातिचमत्कृत्यर्थमुत्प्लवने प्रयुक्त, तस्य वियति बहुतरत्वात्, तेन च न प्रसिद्धित्यागाख्यः वाक्यदोष। सगरसुता इव—सगरस्य—तदाख्यस्य राज्ञः, सुता इव—पुत्रा इव, षष्टिसहस्रसङ्ख्यका इति शेष. खनित्रैः,—अवदारणैः, खननसाधनैः अस्त्रैरित्यर्थः। चिक्रीडुः,—क्रीडन्ति स्म। ते खनित्रैः, एते चरणाघातैः, ते नियतसङ्ख्यकाः, एते असङ्ख्यकाः. इति तेभ्योऽतिगौरवमेतेषाम् इति हृदयम्।

(११९) तालेति।—तालैः,—करास्फालैः, करतालैरित्यर्थः, दक्षिणापथे

चरचारणचरणक्षोभं चक्षमे क्षमा। (१२०) क्षितिपाल-कुमारकाणां खेलताम् अन्योऽन्यास्फालैः आभरणेषु मुक्ताफलानि फेलुः। (१२१) सिन्दूररेणुना पुनरुत्पन्नहिरण्यगर्भगर्भशोणित-शोणाशम् इव ब्रह्माण्डकपालम् अभवत्। (१२२) पटवास-पांशुपटलेन प्रकटितमन्दाकिनीसैकतसहस्रमिव शुशुभे नभ-स्तलम्। (१२३) विप्रकीर्य्यमाणपिष्टातकपरागपिञ्जरितातपा भुवनक्षोभविशीर्णपितामहकमलकिञ्जल्करजोराजिरञ्जिता इव

तालावा" इति ख्यातैः सङ्गीताङ्गीभूतभ्रमणविशेषैः वा, यदुक्तं,—"स्फुटितालि-क्षाशतैर्युक्तं चारणजनस्य कैश्चिद्भ्रमणम्। तत्कांस्यतालिकयाराड़ाश्लिष्टापञ्चकुलमारि-दकाः॥" अवचरन्तीति तालावचरा', तादृशानां चारणानां—कुशीलवानां, नृत्यता-मिति भावः, चरणक्षोभं—पदविक्षेपजनिताघातं, कथमपि—केनापि प्रकारेण, एतेन अतिबाहुल्यमुत्प्रेक्ष्यते। चक्षमे—सेहे। क्षमा—पृथ्वी।

(१२०) क्षितिपालकुमारकाणां—सामन्तकुमाराणाम्। खेलतां—क्रीड़ताम्। अन्योऽन्यास्फालैः,—परस्परास्कन्दनैः, आभरणेषु—अलङ्कारेषु मध्ये, मुक्ताफलानि मौक्तिकानि, फेलुः,—विसरणानि प्रापुः, बिभिदुर्वा।

(१२१) सिन्दूरेति।—सिन्दूररेणुना—सिन्दूरचूर्णेन। पुनरिति।—पुन-रुत्पन्नस्य—द्वितीयवारं सञ्जातस्य, हिरण्यगर्भस्य—प्रजापतेः ब्रह्मणः, हर्षस्य चेति भावः, गर्भशोणितेन—गर्भान्निःसरणजनितप्रसृतरक्तेनेत्यर्थः, शोणाः,—रक्ताः, आशाः,—दिशो यस्य तथोक्तम्। ब्रह्माण्डकपालं—पृथ्वीतलमित्यर्थः।

(१२२) पटवासेति।—पटवासानां—वस्त्रवासकगन्धद्रव्यविशेषाणां, पांशुपटलेन—रजःसमूहेन, विक्षिप्यमाणेनेति भावः; यद्वा,—पटवासाः,—वस्त्रगृहाः एव, पांशवः,—कर्पूरविशेषाः,धावल्यादिति भाव ,तेषां पटलेन। प्रकटितेति।—प्रकटितं—बहिर्निःसृतं, मन्दाकिन्याः,—स्वर्गगङ्गायाः, सैकतसहस्र—बालुकामयभूमिसमूहः यस्मिन् तथोक्तमिव। नभस्तलम्—अन्तरीक्षम्; बहलोत्क्षिप्तगन्धचूर्णधाराबाहुल्यादेवमुत्प्रेक्षितम्।

(१२३) विप्रकीर्य्यमाणेति।—विप्रकीर्य्यमाणैः,—प्रसार्य्यमाणैः, पिष्टातकानां—पटवासकानां, परागैः,—रेणुभिः, पिञ्जरिताः,—रञ्जिता इत्यर्थः, आतपाः,—सूर्य्यमयूखाः येषु तथाभूताः। भुवनेति।—भुवनस्य—जगतः, क्षोभेण—सञ्चलनेन, आनन्दजनितेनेति भावः, विशीर्णं—विदलितं, यत् पितामहकमलं—ब्रह्मकमलं

रेजुर्दिवसाः। (१२४) सङ्घट्टविघटितहारपतितमुक्ताफलपटलेषु चखाल लोकः।

(१२५) स्थानस्थानेषु च मन्दमन्दमास्फाल्यमानालिङ्ग्यकेन शिञ्जानमञ्जुवेणुना (१२६) झणझणायमानझल्लरीकेण ताड्यमानतन्त्रीपटहिकेन (१२७) वाद्यमानानुत्तालालाबूवीणेन कल-

---

ब्रह्मण उत्पादकारणीभूतं पद्ममित्यर्थः, तस्य किञ्जल्काः,—केसराः, तेषु ये रजसां—परागाणां, राजयः,—समूहाः, तैः रञ्जिता इव। रेजुः,—शुशुभिरे।

(१२४) सङ्घट्टेति।—सङ्घट्टेन—अन्योऽन्यघर्षणेन, लोकानाम् अतिनिविड़त्वादिति भावः, विघटितेभ्यः,—छिन्नेभ्यः, हारेभ्यः पतितानि यानि मुक्ताफलानां—मौक्तिकानां, पटलानि—समूहाः तेषु, चखाल—पपात, पिच्छिलत्वात् उन्नतानतत्वाच्च तेषामिति भावः।

(१२५) स्थानस्थानेषु—क्वचित् क्वचित् प्रदेशेषु, स्थानं—स्थितिः, मर्य्यादा एव, तत्प्रकारकेषु इत्यर्थः, [ अन्यथा "प्रकारे—" (८।१।१२ पा० ) इत्यादिना न द्विरुक्तौ कर्म्मधारयवद्भावः इति स्थानेषु स्थानेषु वाक्यमेव स्यात् ]; यद्वा,—स्थानानां—नृपतिसाधारणाश्रयाणां, स्थानानि—प्रशस्तमण्डपादीनि तेषु इति विग्रहः, [ "कृद्योगा षष्ठी समस्यत इति वाच्यम्" ( वा० ) इति समासविधानात् ]। "स्थानस्थानेषु" इत्यस्य "पण्यविलासिन्यः ग्रानृत्यन्" इत्युत्तरेणान्वयः; ता विशिनष्टि—आतोद्यवाद्येनानुगम्यमाना इत्यादिभिः।—आतोद्यवाद्येनेति विशिनष्टि, मन्देत्यादिभिः।—मन्दं मन्दम्—ईषदीषत्, आस्फाल्यमानः,—ताड्यमानः, आलिङ्ग्यकः,—मुरजवाद्यभेदः यस्मिन् तेन, ( "मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्द्ध्वकास्त्रयः" इत्यमरः )। शिञ्जानेति।—शिञ्जानः,—रणन [ अदादेरात्मनेपदिनः शिजिधातोः "लटः—" ( ३।२।१२४ पा० ) इत्यादिना शानचि रूपम् ] मञ्जुः,—मनोज्ञः, वेणुः,—वंशीवाद्यभेदः यत्र तथोक्तेन।

(१२६) झणेति।—झणझणायमाना—झणझणेति शब्दं कुर्वाणा, झल्लरी वाद्यभेदः यत्र तादृशेन। ताड्यमानेति।—ताड्यमाना—वाद्यमाना, तन्त्रीपटहिका—पटहवाद्यविशेषः यत्र तथोक्तेन।

(१२७) वाद्यमानेति।—वाद्यमाना—आहन्यमाना, अनुत्ताला—अनुत्कटध्वना, अलाबूवीणा—अलाबूनिर्म्मिता वीणा यस्मिन् तेन। कलेति।—कला

कांस्यकोशीक्वणितकाहलेन (१२८) समकालदीयमानानु ताल-तालकेन आतोद्यवाद्येन अनुगम्यमानाः, पदे पदे झणझणित-भूषणरवैः अपि सहृदयैः इव अनुवर्त्तमानताललयाः, कोकिला इव (१२९) मदकलकाकलीकोमलालापिन्यो विटानां कर्णा-मृतानि अश्लीलरासकपदानि गायन्त्यः, समुण्डमालिकाः, कर्ण-पल्लवाः, सचन्दनतिलकाः, समुच्छ्रिताभिर्वलयावलीवाचालाभिः

मधुरस्वना, या कांस्यकोशी—करतालिका, तस्याः क्वणितेन—रणितेन सह, काहला—ढक्काख्यवाद्यभाण्डभेदः ; यद्वा—कांस्यकोशी—"काँसी" इति प्रसिद्धः कांस्यनिर्मितवाद्य-भेदः, तया सह क्वणिता काहला—वाद्यभाण्डविशेषः यत्र तथाविधेन, ("काहला वाद्यभाण्डस्य भेदे चाप्सरसां भिदि" इति मेदिनी)।

(१२८) समेति।—समकालं—युगपत्, दीयमानः,—सम्पाद्यमान इत्यर्थः अनुत्ताल',—अनुत्कटः, तालः,—स्वरविशेषः, द्विवमात्रादिकालक्रियामानी वा यत्र तेन, ["तालकेन" इत्यत्र "तानकेन" इति पाठे,—जनपद्याग्रविधेन गानाङ्गस्वरभेदेन इत्यर्थः] आतोद्यवाद्येन—"ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम्॥ चतुर्विधमिदं वाद्यवादित्रातोद्यनामकम्॥ इत्यमरोक्तेन वाद्यविशेषेण, अनुगम्यमानाः,—सङ्गम्यमानाः। पदे पदे—प्रतिपदक्षेपं, झणझणितभूषणरवैः,—झणझणायमानालङ्करणध्वनिभिः। सहृदयैरिव—रसग्राहिभिः सामाजिकैरिव। अनुवर्त्तमानेति।—अनुवर्त्तमानौ—अनुसरन्तौ, ताल-लयौ—यथा-काले दीयमान-मानसाम्यरूपौ यासां ताः, ("तालः कालक्रियामानं लयः साम्यमथा-स्त्रियाम्" इत्यमरः) तत्र हस्तेन अङ्गुल्या वा आकुञ्चन-प्रसारणगतिक्रियया कालस्य परिमाण मानं, काल-क्रिययोश्च वादिवादिदशाया तथाविधं मानं ताल उच्यते। लयः पुनः गीतवाद्यपादन्यासादीनां क्रियाकालयोश्च परस्परं समतारूपः इत्यवगन्तव्यम्।

(१२९) मदेति।—मदेन—मद्यपानजनितेन उल्लासेन ; अन्यत्र,—मदात् —हर्षात्, कला—मधुरास्फुटा, काकली—सूक्ष्ममधुरध्वनिः, ("काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे। कलः" इत्यमरः) तया कोमलं—मृदुमन्द, पेशलमित्यर्थ, मनोज्ञ-मिति यावत्, तद्यथा तथा आलपन्तीति तथोक्ताः। विटाना—लम्पटाना, विलासिनामित्यर्थ, कर्णामृतानि—श्रुतिसुखानीत्यर्थः। अश्लीलेति।—अश्लीलानि—ग्राम्याणि, लज्जावहानि इति यावत्, रसयन्तीति रासकानि—शृङ्गाररसोद्दीपनानीति भावः, पदानि—गेयवस्तूनि, गायन्त्यः,—उच्चारयन्त्यः। समुण्डमालिकाः,—मुण्ड

बाहुलतिकाभिः सवितारम् इव आलिङ्गयन्त्यः, कुङ्कुमप्रमृष्टि-रुचिरकायाः (१३०) काश्मीरकिशोर्य्य इव वलन्त्यः, नितम्बविम्ब-लम्बिविकटकुरुण्टकशेखराः प्रदीप्ता इव रागाग्निना, सिन्दूर-च्छटाच्छुरितमुखमुद्राः शासनपट्टपङ्क्तय इव अप्रतिहतशासनस्य

---

दारशिरसः। समुच्छ्रिताभिः,—समुच्चिताभिः, वलयावलीवाचालाभिः,—वलयराजि-झणत्कारवतीभिः इत्यर्थः, बाहुलतिकाभिः,—भुजवल्लीभिः, सवितारं—सूर्य्यम्, आलिङ्गयन्त्यः इव—आश्लिष्यन्त्यः इव, [आङ्पूर्व्वकात् लिङ्गयतेः चौरादिकात् शतरि ङीपि रूपम्] नर्त्तनकाले बाहुद्वयं किञ्चित्तिर्य्यग्भावेन उन्नीय प्रसार्य्य च गमनात् सूर्य्यालिङ्गनं कृतमिवेत्युत्प्रेक्षा। कुङ्कुमेति।—कुङ्कुमेन प्रमृष्टिः,—प्रमार्ज्जनम्, उद्वर्त्तन-मित्यर्थः, रञ्जनमिति भावः, एकत्र,—सौन्दर्य्यवर्द्धनाभिलाषात्; अन्यत्र,—कुङ्कुमक्षेत्रेषु लोठनादिति भावः, तया रुचिरः,—मनोज्ञः, कायः,—देहः यासां ताः।

(१३०) काश्मीरकिशोर्य्य इव—कुङ्कुमनिर्म्मिताः कुमार्य्य इव, काश्मीर-देशीयाः कुमार्य्य इव वा, [कशतेः शब्दार्थकात् "कशेर्मुट् च" (उ० ४ पा० ३२ सू०) इति ईरनि मुडागमे कश्मीरः इति, तत्र भवाः ताः इति ज्ञेयम्] वलन्त्यः,—चलन्त्यः। नितम्बेति।—नितम्बविम्बेषु—नितम्बभागेषु, लम्बिनः,—लम्बमानाः, विकटाः,—आयता इत्यर्थः, कुरुण्टकशेखराः,—रक्तपुष्पझिण्टिमञ्जर्य्य इत्यर्थः यासां तथोक्ताः, ["कुरुण्टक" इत्यत्र "कुरण्टक" इति पाठेऽपि स एवार्थः। प्रथम-पाठे,—कुपूर्व्वात् रुण्टतेः अणि, द्वितीये,—कुरधातोः अण्टक्प्रत्यये सिद्धिः]। प्रदीप्ता इव—प्रज्वलिता इव, रागाग्निना—अनुरागवह्निना, रक्तकुरुण्टकशेखराणां रक्तत्वादिति भावः। सिन्दूरेति।—सिन्दूरच्छटाभिः,—सिन्दूरतिलकरागैः इत्यर्थः, छुरिताः,—रञ्जिताः, मुखमुद्राः,—मुखशोभाः, ललाटसीमन्तादयो वा, मुखान्येव मुद्रा इति वा यासां ताः; मुद्राविशेषाणां सिन्दूरेण रञ्जितत्वं लोके दृश्यते; अन्यत्र,—सिन्दूरच्छटाभिः,—सिन्दूरप्रभाभिः, छुरिताः मुखे—अग्रभागे, मुद्राः,—प्रत्ययोत्पादकचिह्नविशेषाः यासां ताः; शासनपट्टानामग्रभागेऽपि सिन्दूराङ्किताः मुद्रा मुद्र्यन्ते इति लोकव्यवहारः। शासनपट्टपङ्क्तयः इव—शासनपट्टाः,—नियोगपत्राणि, दानपत्राणि वा, "सनन्दपत्र" इति भाषया प्रसिद्धाः, तेषां पङ्क्तय इव—राजय इव। अत्र बहुवचनेन बहुनियुक्तविचक्षणशासनपट्टविद्भिः प्रतिक्षणं प्रतिस्थानं तिष्ठद्भिः शासितुः श्रभङ्गाश्वमहाराजस्य आज्ञाभङ्गः आयः यथा न केनापि सुकरः, तथा।

कन्दर्पस्य,(१३१) मुष्टिप्रकीर्य्यमाणकर्पूरपटवासपांशुला मनोरथ-सञ्चरणरथ्या इव यौवनस्य, (१३२) उद्दामकुसुमदामताड़ित-तरुणजनाः प्रतीहार्य्य इव तरुणमहोत्सवस्य, प्रचलत्पत्रकुण्डला ललन्त्यो लता इव मदनचन्दनद्रुमस्य, (१३३) ललितपदहंसकरव-मुखराः समुल्लसन्त्यो वीचय इव शृङ्गाररसस्य, (१३४) वाच्यावाच्य-विवेकशून्या बालक्रीड़ा इव सौभाग्यस्य, घनपटहरवोत्कण्टकित-

---

मन्मथस्य राज्ञः शासनपट्टभूता. ता' दृष्ट्वा सर्वे एव दर्शकाः कन्दर्पवशीभूताः तच्छासनं स्वीचक्रु. इति अवगम्यते। अप्रतिहतशासनस्य—अव्याहताज्ञस्य।

(१३१) मुष्टीति।—मुष्टिभिः,—बद्धकरैः, प्रकीर्य्यमाणैः,—प्रक्षिप्यमाणैः, विलासिभिरिति भावः, कर्पूरपटवासैः,—कर्पूरबहुलसुगन्धिचूर्णैरित्यर्थः, पांशुलाः,—रजोभिराहता इत्यर्थः। मनोरथेति।—मनोरथेन—स्वेच्छया, सञ्चरणं—भ्रमणं, तस्य रथ्या इव—पन्थान इव, यौवनस्य—तारुण्यस्य, यथेच्छसम्भोगयौवनशालिन्य इति भा :; रथ्या अपि रथ्यासु सञ्चरणात् पांशुव्याप्ता भवन्ति।

(१३२) उद्दामेति।—उद्दामैः,—उत्कटैः, विपुलैरित्यर्थः, कुसुमदामभिः,—पुष्पमाल्यैः, ताडिताः,—आहताः, तरुणजनाः,—युवजना याभिः तथोक्ताः, तरुण-महोत्सवस्य—तरुणाना—यूना, महोत्सवः तस्य, प्रतीहा' इव—रक्षिण्य इते-त्यर्थः, प्रतीहार्य्योऽपि महोत्सवस्थले जनान् ताडयन्ति। प्रचलत्पत्रकुण्डलाः,—प्रचलन्ति—नृत्यवेगात् चाचल्यमानानीत्यर्थः, पत्राणि—किसलया एव, कुण्डलानि—कर्ण-भूषणानि, अन्यत्र,—पत्राणि कुण्डलानीव यासां ताः, अत एव ललन्त्यः,—स्फुरन्त्यः, [ "ललन्त्य." इत्यत्र "लसन्त्यः" इति पाठोऽपि स एवार्थः ] लता इव—व्रतत्य इव। मदनचन्दनद्रुमस्य—मदन,—काम एव, चन्दनद्रुमः,—चन्दनतरुः तस्य।

(१३३) ललितेति।—ललितानि—रमणीयानि, पदानि—चरणानि, पु हंसकाः,—नूपुराः, ("पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्। हंसकः पाद-कटकः." इत्यमरः) क्षुद्रहंसाश्च, [ अल्पार्थे कन्प्रत्ययः ] तेषां रवेण—ध्वनिना, मुखराः,—शब्दिताः ; यद्वा,—ललितानि पदानि यासां ताश्च ताः हंसकरवमुख-राश्च तथाभूताः। समुल्लसन्त्यः,—समुल्लासमानाः। वीचय इव—तरङ्गा इव। शृङ्गार-रसस्य—प्रधानोज्ज्वलरसस्य, रसस्य—जलस्य च।

(१३४) वाच्येति।—वाच्य—वक्तव्यम्, अवाच्यम्—अवक्तव्यं, तयोर्विवेकेन—विचारेण, शून्याः,—रहिताः यथाकामं व्याहारिण्य इत्यर्थः। बालक्रीड़ा इव—बाल्य-

गात्रयष्टयः केतक्य इव कुसुमधूलिमुद्गिरन्त्यः, कमलिन्य इव दिवसमुत्फुल्लाननाः, कुमुदिन्य इव रात्रावनुपजातनिद्राः, (१३५) आविष्टा इव नरेन्द्रवृन्दपरिवृताः, प्रीतय इव हृदयमपहरन्त्यः, गीतय इव रागमुद्दीपयन्त्यः, पुष्टय इव आनन्दमुत्पादयन्त्यः, मदमपि मदयन्त्य इव, रागमपि रञ्जयन्त्य इव, आनन्दमपि आनन्दयन्त्य

मिक्कायज्ञानमिव, अन्यत्र—बालाना—शिशूनां, क्रीडा—खेला, ("क्रीडा केलि स्यात् खेलाऽज्ञानयोरपि" इति मेदिनी); नवाभ्युदयमागच्छन् दरिद्रः अविवेकी यथा सौभाग्यमदेन यथेच्छव्यवहारः शिष्टाशिष्टजनविषयकविवेकविच्युतः वाच्यावाच्यज्ञानशून्यो भवति, तथैव ताः पण्ययोषितोऽपि नृत्यकालेऽभूवन् इत्याशयः। सौभाग्यस्य—सुखाद्दृष्टविलासस्य। घनेति।—घनेन—गम्भीरेण, पटहस्य—वाद्यविशेषस्य, नृत्यसमकाल ताड्यमानस्येत्यर्थः, रवेण—ध्वनिना, अन्यत्र,—घनः,—मेघ एव, पटहः,—वाद्यविशेषः, तस्य ध्वनिना—रवेण, उत्कण्टकिताः,—उद्गतलोमहर्षाः, सहसा वाद्यध्वनिश्रवणादिति भावः, अन्यत्र,—प्रकटितकण्टकाः गात्रयष्टय,—अङ्गलताः यासा तथोक्ताः, अन्यत्र,—गात्राणीव यष्टयः,—काष्ठा. यासा ताः। केतक्य इव—केतकाख्या इव। कुसुमधूलिं—पुष्पपरागम्, उद्गिरन्त्यः,—उत्क्षिपन्त्य इत्यर्थः। दिवसं—दिनं व्याप्य, उत्फुल्लानना,—उत्फुल्लानि—प्रफुल्लानि, आननानि—मुखानि, प्रियवयस्याभिः सह हृद्यनायकविषयकालापेन इति भावः यासा ताः, अन्यत्र,—विकसिताः, कमलिनीना दिवाविकाशिलात्। अनुपजातनिद्रा,—न उपजाता—उपगता, कान्तसङ्गातिशय्यात्, राजसभादौ नर्त्तनादिविलासव्यापारवत्त्वात् वा इति भावः, निद्रा—स्वापः यासा ताः, अनिमीलन्त्यश्च, कुमुदिनीना रात्रिविकाशिलादिति भावः।

(१३५) आविष्टा इव—अधिष्ठिता इव, भूतादिभिरिति शेषः। नरेन्द्रेति।—नरेन्द्राणा—राज्ञा, भूतवैद्यानाञ्च, भूतापसारणमन्त्रविदामित्यर्थः, ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम्" इति मेदिनी, अत्र चकारग्रहणात् भूतवैद्यादयः तदग्रका. ज्ञेया) वृन्दैः,—समूहैः, परिवृताः,—वेष्टिता, पिशाचोपहताः जना यथा भूतवैद्यपरिवेष्टिताः भवन्ति, तथा पण्ययोषित अपि राजवृन्दपरिवृता आसन्निति भाव, इति अवैधर्म्यसाम्यादुपमाऽलङ्कारः। हृदयमपहरन्त्यः,—मनोहारिण्य। रागं—वासनाविशेषम्, आसङ्गविषयमिति यावत्, अन्यत्र—गान्धारादिकाञ्च, उद्दीपयन्त्यः,—उत्तेजयन्त्यः। पुष्टय,

इव, नृत्यमपि नर्त्तयमाना इव, उत्सवमपि उत्सुकयन्त्य इव, (१३६) कटाक्षितेषु पिबन्त्य इवापाङ्गशुक्तिभिः, तर्जनेषु संयमयन्त्य इव नखमयूखपाशैः, कोपाभिनयेषु ताडयन्त्य इव भ्रूलताऽतिभागैः, प्रणयसम्भाषणेषु वर्षन्त्य इव सर्व्वरसान्, चतुरचङ्क्रमणेषु विकिरन्त्य इव विकारान्, पण्यविलासिन्यः प्रानृत्यन्।

---

इव—स्फूर्त्तय इव इत्यर्थः। मदमपि—मत्ततामपि, मदयन्त्यः,—समुत्तेजयन्त्य इत्यर्थः; मदो हि सर्वेषामुत्तेजको भवति, मदस्तु ता आश्रित्य स्वयमेव उत्तेजितोऽभवत् इति भावः। एवमुत्तरत्रापि सङ्गतिः करणीया; अत्र मदादीना यदि एतादृशी दशा, तदा का कथा मदभिन्नानामिति अपिकारलभ्योऽर्थः। राग—सम्भोगाभिलाषमित्यर्थः, रञ्जयन्त्यः,—उल्लासयन्त्य इत्यर्थः। उत्सवम्—आनन्दजनकानुष्ठानमिति यावत्, उत्सुकयन्त्यः,—उत्सुकं कारयन्त्यः; ["तत्करोति तदाचष्टे" (ग०) इति इणन्तादुत्सुकात् शतरि ङीपि रूपम्] उत्सवदर्शनार्थं सर्वे उत्कण्ठिता भवन्ति, उत्सवस्तु स्वयमेव ताः द्रष्टुमुत्सुको जातः इति भावः। [मदादिषु वाक्यनिकरेषु लोकोत्तरचमत्कारातिशय्यजननोन्मादनादिक्रिया उत्प्रेक्षिता इति क्रियोत्प्रेक्षाऽलङ्कारः]।

(१३६) कटाक्षितेषु—अपाङ्गदर्शनेषु इत्यर्थः, ["तदस्य सञ्जात—" (५।२।३६ पा०) इत्यादिना इतचि रूपम्] अपाङ्गशुक्तिभिः,—अपाङ्गाः,—नेत्रप्रान्तभागा एव, ("अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः) शुक्तयः,—मुक्तास्फोटाः ताभि, ("मुक्तास्फोटः स्त्रियां शुक्तिः" इत्यमरः) पिबन्त्य इव—ग्रसन्त्य इव, तरुणानिति शेषः, लोकेऽपि शुक्तिभिर्दुग्धादिपानीयं पिबन्ति। [दुग्धादिपानवत् शुक्तिभि. तरुणपानमसम्भवमिति विरोधः, ताभिः प्रियहृदयाकर्षणत्वेन स्वान्त. प्रियमूर्त्तिधारणत्वेन वा आभासीक्रियते इति विरोधाभासः उत्प्रेक्षासङ्कीर्णः] तर्जनेषु—भर्त्सनार्थम् अङ्गुलिसञ्चालनविशेषेषु, नखमयूखपाशैः,—नखानां मयूखाः,—किरणाः,पाशाः,—रज्जव इव तैः, संयमयन्त्य इव—सम्बध्नन्त्य इव। कोपाभिनयेषु—कोपसूचकाङ्गचेष्टासु, भ्रूलताऽतिभागै.,—भ्रुवो. सङ्कोचनजनितभङ्गिविशेषैरित्यर्थः, भ्रूलताऽभिघातैरित्यर्थो वा। ["भ्रूलताऽतिभागै." इत्यत्र "भ्रूलताऽऽदिभागैः" इति पाठे,—भ्रूनेत्रमुखप्रभृत्यवयवैरित्यर्थः] प्रणयसम्भाषणेषु—प्रेमालापेषु, सर्व्वरसान्—सर्वान्—सम्पूर्णान्, न तु किञ्चिन्मात्रानिति भाव,रसान्—शृङ्गाररूपान्, अनुरागरूपान् वा, वर्षन्त्यः इव—मुञ्चन्त्य इव। चतुरचङ्क्रमणेषु—विदग्धभ्रमिषु, नृत्यकाले सविलासभ्रमणेषु इत्यर्थः, विकारान्—कामजभावविशेषान्, विकिरन्त्य इव—विक्षिपन्त्य इव, तरुणेभ्य इति भावः।

( १३७ ) अन्यत्र वेत्रिवेत्रविलासितजनदत्तान्तराला:, भ्रियमाणधवलातपत्रवना वनदेवता इव कल्पतरुतलविचारिण्य:, काश्चित् ( १३८ ) स्कन्धोभयपालीलम्बमानलम्बोत्तरीयलग्ना लीलादोलाऽधिरूढा इव प्रेङ्खन्त्य:, काश्चित् ( १३९ ) कनककेयूरकोटिपाट्यमानपट्टांशुकोत्तरङ्गा: तरङ्गिण्य इव तरच्चक्रवाकसीमन्त्यमानस्रोतस:, काश्चित् ( १४० ) उद्धूयमानधवलचामरसटालग्नत्रिकण्टकवलितविकटकटाक्षा: सरस्य इव हंसाक्रान्त-

---

( १३७ ) "अन्यत्र" इत्यस्य "राजमहिष्य: प्रारब्धनृत्या विरेजु:" इत्युत्तरेणान्वय.। ता विशिनष्टि, वेत्रीत्यादिभि:।—वेत्रिभि,—वेत्रपाणिभि:, दौवारिकैरिति यावत्, वेत्रै:,—वेत्रयष्टिप्रदर्शने, विलासितै,—विशेषेण भीषितै, जनै दत्तम् अन्तरालम्—अवकाश: यासा ता', नृत्यदर्शनार्थिभि: अतिनिविडतया नृत्यस्थानाक्रमणात्, पात्रशालासमङ्गोपरि आपतनाच्चेति भाव:। भ्रियमाणेति।—भ्रियमाणानि—मस्तकोपरि उत्थाप्यमानानीत्यर्थ., परिचारिकाभिरिति शेष:, धवलानि—श्वेतानि, आतपत्रवनानि—छत्रसङ्घा: यासा तथोक्ता', अत एव कल्पेति।—कल्पतरूणा—कल्पवृक्षाणा, तलेषु—अधोदेशेषु, विचरन्ति—विहरन्तीति तथोक्ता., वनदेवता इव—वनाधिष्ठातृदेव्य इव, अधिकारिणा सर्व्वत्र समानाचा वत्त्वात् इति भाव।

( १३८ ) स्कन्धेति।—स्कन्धस्य—भुजशिरस, उभयो: पाल्यो:—कोणयो भागयोरित्यर्थ, लम्बमान—दोलायमान, लम्ब—दीर्घं, यत् उत्तरीयम्—उत्तरासङ्ग' तस्मिन् लग्ना,—ससक्ता, अत एव लीलादोला—क्रीडार्थं दोलनयन्त्रम्,, अधिरुढा इव—अधिष्ठिता इव, प्रेङ्खन्त्य.,—सञ्चरन्त्य'।

( १३९ ) कनकेति।—कनककेयूराणा—काञ्चनाङ्गदानाम्, अत्र कनकपदेन चक्रवाकसाम्यं प्रकटीकृत, तेषा कनकाभत्वात्, कोटिभि',—अग्रभागै, पाट्यमान—क्रियमान, अन्योऽन्यसङ्घर्षणेन इति भाव., पट्टांशुकस्य—कौषेयवसनस्य इत्यथ उत्तरङ्ग',—उत्तरीय यासा तथोक्ता, अन्यत,—उच्छलद्वीच्य. इत्यर्थ, अत एव तरदिति।—तरद्भि,—प्लवमानै., चक्रवाकै,—स्वर्णाभपक्षिविशेषै:, सीमन्त्यमानानि—द्विधा क्रियमाणानि, स्रोतांसि—स्वत.प्रवृत्तमृदुजलवेगा यासा तथाभूता., तरङ्गिण्य इव—नद्य इव।

( १४० ) उद्धूयमानेति।—उद्धूयमानाना—वीज्यमानाना, धवला ।—श्वेतानां,

माणनीलोत्पलवना:. काश्चित् ( १४१ ) चलच्चरणच्युतालक्तकारुणस्वेदशीकरसिच्यमानभवनहंसा: सन्ध्यारागरज्यमानेन्दुबिम्बा इव कौमुदीरजन्य:, काश्चित् ( १४२ ) कण्ठनिहितकाञ्चनकाञ्चीगुणाञ्चितकञ्चुकिविकारकुञ्चितभ्रुव:, कामवागुरा इव प्रसारितबाहुपाशा राजमहिष्य: प्रारब्धनृत्या विरेजु:।

---

चामराणां—बालव्यजनानां, सटासु—लोमसु, लग्न:,—संसक्त:, य: विकण्टक:,—"विकण्टकस्तु नाम्न: स्यात् विभीरैश्च भूषणम्" इत्युक्तलक्षण: रत्नत्रयघटितकर्णाभरणभेद:, तेन वलिता:,—सञ्चलिता:, सङ्कुचिता: इत्यर्थ: वा, आकर्षणेन कर्णपीडानुभवात् शालीनताऽतिशय्यात् वा इति भाव:, विकटा:,—उत्कटा:, विशाला: वा, कटाक्षा:,—अपाङ्गावलोकनानि यासां तथोक्ता:, अत एव हसैति।—हसै:,—मरालै:, आक्रम्यमाणानि—आविश्य नीयमानानि, नीलोत्पलवनानि यासां तथाविधा:, सरस्य इव—वाप्य इव।

( १४१ ) चलदिति।—चलद्भ्यां—सञ्चरद्भ्यां, चरणाभ्यां—पादाभ्यां, च्युतानि—निर्गलितानि, अलक्तकानि—लाक्षाद्रवा:, अरुणा:,—रक्ता:, स्वेदा इव, तेषां शीकरै:,—बिन्दुभि:, सिच्यमाना:—आर्द्रीक्रियमाणा:, रञ्यमाना इति यावत, भवनहंसा:,—गृहपालितहंसविशेषा: याभि: तथोक्ता:, अत एव सन्ध्याया:,—सन्धौ भवा; सन्ध्यायते परब्रह्म अस्यामिति वा तस्या:, राग:,—लौहित्यं, तेन रज्यमान—लोहितायमानम्, इन्दुबिम्ब—चन्द्रबिम्ब यासां ता:, कौमुदीरजन्य: इव—"कौ मोदन्ते जना यस्यां नानाभावै: परस्परम्। हृष्टास्तुष्टा: सुखापन्नास्तेन सा कौमुदी स्मृता॥" इत्युक्तलक्षणा: कार्त्तिकज्योत्स्नापूर्णा रात्रय इव इत्यर्थ:। शीतलोज्ज्वलोदारकान्तिमतीनां नृपाङ्गनानां चन्द्रिकारजनीसाम्येन हर्षोद्दीपनशक्त्यतिशय: सूच्यते।

( १४२ ) कण्ठेति।—कण्ठेषु—गलेषु, निहितेन—अर्पितेन, काञ्चनकाञ्चीगुणेन—सौवर्णमेखलादाम्ना, अञ्चितानां—पूजितानां, परिहासार्थं नियन्त्रितानां वा, कञ्चुकिनाम्—"अन्त:पुरचरो वृद्धो दा:स्थो (विप्रो) गुणगणान्वित:। सर्वकार्य्यार्थकुशल: कञ्चुकीत्यभिधीयते॥" इत्युक्तलक्षणानाम् अन्त:पुरचारिणां दौवारिकविशेषाणां, ( विप्रविशेषाणां ) विकारेण—विकृतभावेन, कण्ठे काञ्चीप्रदानादिति भाव:, कुञ्चिता—कुटिलिता, [ "विकारकुञ्चित—" इत्यत्र "विकाराकुञ्चित—" इति पाठे,—आकुञ्चिता—ईषत्कुटिलिता इत्यर्थ: ] भ्रू: यासां तथोक्ता.; कञ्चुकिन: विकारदर्शनेन तस्य तत्परिधाने अनिच्छां बुद्ध्वा ईषत्कोपभावप्रकटनार्थम् इति भाव:। कामवागुरा इव—कामस्य

सर्व्वतश्च नृत्यतः (१४३) स्त्रैणस्य गलद्भिः पदालक्तकैः अरुणिता रागमयीव शुशोण क्षौणी। (१४४) समुल्लसद्भिः स्तनमण्डलैः मङ्गलकलशमय इव बभूव महोत्सवः। (१४५) भुजलताविक्षेपैः मृणालवलयमय इव रराज जीवलोकः। समुल्लसद्भिः (१४६) विलासस्मितैः तड़िन्मय इव अक्रियत कालः। (१४७) चञ्चलानां चक्षुषाम् अंशुभिः कृष्णसारमया इव आसन् वासराः। समुल्लसद्भिः शिरीषकुसुमस्तवककर्णपूरैः शुक-

युवजनवन्धनसाधनानि यन्त्राणि इव इत्य ["मद्गुरादयश्च" (उ० १पा० ४२ सू०) इत्युरजन्तानाम् आकृतिगणत्वात् वाधातोः एतत् सिद्धम्]। प्रसारितौ—विस्तारितौ, नर्त्तनवशादिति भावः वाहू—भुजौ, पाशौ—रज्जू इव याभिः तथाभूता। प्रारब्धनृत्याः,—नृत्यन्त्यः इत्यर्थः। विरेजुः,—शुशुभिरे। ["विरेजुः" इत्यत्र "विलेसुः" इति पाठे,—चिक्रीडुरित्यर्थः]।

(१४३) स्त्रैणस्य—स्त्रीणां समूहः स्त्रैणं तस्य, ["तस्य समूहः" (४।२।३७ पा०) इति अण्,"स्त्रीपुंसाभ्या—" (४।१।८७ पा०) इत्यादिना नञ्-प्रत्ययेन सिद्धम्]। गलद्भिः,—स्रवद्भिः, पदालक्तकैः,—चरणस्थलाक्षारसैः, अरुणिता—रक्तीकृता, अत एव रागमयीव—रञ्जनमयीव, अनुरागमयीव वा, क्षौणी—पृथ्वी, शुशोण—शोणमयी बभूव इत्यर्थः, रक्तवर्णा जाता इति यावत्, ["सर्व्वप्रातिपदिकेभ्यः क्विप् वा" (वा०) इति आचारक्विबन्तात् शोणाल्लिटि रूपम्]।

(१४४) समुल्लसद्भिः,—समुल्लासमानैः। मङ्गलकलशमयः,—मङ्गलार्थस्थापितघटपूर्णः, स्तनयोः कलशसाम्यतया वर्णनस्य कविसमयसिद्धत्वादिति भावः।

(१४५) भुजलताविक्षेपैः,—वाहुवल्लीचालनैः, मृणालवलयमय इव, भुजलतानां मृणालवत् कोमलाकारत्वादिति भावः।

(१४६) विलासस्मितैः,—विभ्रमहसितैः, कालः,—होरादिरूपः, क्षणश्च, तड़िन्मय इव—सौदामनीनिकाश इवेत्यर्थः, हृदयहारिणां तेषां विद्युत्स्फुरणवदचिरस्थायित्वादिति भावः।

(१४७) चञ्चलानां—पुनःपुनश्चलताम्। अंशुभिः,—किरणैः। कृष्णसारमया इव—तदाख्यमृगविशेषमया इव, श्वेतमण्डलमध्यवर्त्तिकृष्णोज्ज्वलतारत्वात् चक्षुषामिति भावः। वासराः,—दिवसाः। शिरीषेति।—शिरीषकुसुमाना—शिरीष-

पिच्छमय इव हरितच्छायोऽभूत् आतपः। (१४८) विस्रंसमानैः धम्मिल्लतमालपल्लवैः कज्जलमयम् इव अलच्यत अन्तरिक्षम्। (१४९) उत्क्षिप्तैः हस्तकिशलयैः कमलिनीमय्य इव बभासिरे सृष्टयः। (१५०) माणिक्येन्द्रायुधानाम् अर्चिषा चाषपत्रमया इव चकाशिरे रविमरीचयः। (१५१) रणताम् आभरणगणानां प्रतिशब्दकैः किङ्किणीमय्य इव शिशिञ्जिरे दिशः। (१५२) जरत्योऽपि उन्मादिन्य इव ननृतुः रेणुः। (१५३) वर्षीयांसोऽपि ग्रहगृहीता इव न अपत्रपिरे। विद्वांसोऽपि मत्ता इव आत्मानं

---

पुष्पाणां, स का',—गुच्छका एव, कर्णपूराः,—कर्णभूषणानि तैः, शुकपिच्छमयः इव —शुकाख्यपक्षिपक्षव्याप्त इवेत्यर्थः, हरितच्छायः,—श्यामलकान्तिः।

(१४८) विस्रंसमानैः,—स्खलद्भिः, धम्मिल्लेति।—धम्मिल्लेषु—संयतेषु केशेषु, ("धम्मिल्लाः संयताः कचाः" इत्यमरः) स्थिता ये तमालपल्लवाः,—तमालतरुकिसलयाः तैः, कज्जलमयमिव—अञ्जनमयमिव, तमालपल्लवाना कृष्णवर्णत्वादिति भावः।

(१४९) उत्क्षिप्तैः,—उन्नमितैः, हस्तेति।—हस्ताः किसलया इव—पल्लवा इव तैः, सृष्टयः,—सर्गाः, जगन्ति इत्यर्थः, कमलिनीमय्यः इव—कमलमयस्थानानीव, हस्तानां कोमलत्वादारक्तत्वाच्चेति भावः, बभासिरे—शुशुभिरे।

(१५०) माणिक्येन्द्रायुधाना—माणिक्यानि—उत्कृष्टानि रत्नानि, इन्द्रायुधानीव —शक्रचापा इव तेषाम्, अर्चिषा—प्रभया, रविमरीचयः,—सूर्यमयूखाः, चाषपत्रमयाः इव—नीलकण्ठेतिप्रसिद्धकिकीदिविपक्षिपक्षमयाः इव, ("अथ चाषः किकीदिविः" इत्यमरः)। चाषपत्राणाम् इन्द्रधनुर्वत् नानावर्णत्वादिति भावः।

(१५१) रणता—झणत्कारवताम्, आभरणगणानाम्—अलङ्कारजातानां, प्रतिशब्दकैः,—प्रतिध्वनिभिः, किङ्किणीमय्य इव—किङ्किण्यः,—क्षुद्रघण्टिकाः, ("किङ्किणी क्षुद्रघण्टिका" इत्यमरः) तन्मय्य इव, शिशिञ्जिरे—ध्वनन्ति स्म।

(१५२) जरत्योऽपि—स्थविरा अपि, उन्मादिन्य इव—क्षिप्ता इव, रेणुः, नर्त्तितवत्यः।

(१५३) वर्षीयांसः,—अतिवृद्धाः, ग्रहगृहीता इव—भूताद्याविष्टा इव, अपत्रपिरे—न लज्जितवन्तः, नर्त्तनादिषु इति शेषः; अपूर्वानन्दोदयेन ते सहज

विसस्वरुः। (१५४) निनर्त्तिषया मुनीनामपि मनांसि विपुस्फुरुः। सर्व्वस्वञ्च ददौ नरपतिः। दिशि दिशि (१५५) कुवेरकोषा इव अलुप्यन्त लोकेन द्रविणराशयः।

(१५६) एवञ्च वृत्ते तस्मिन् महोत्सवे, शनैः शनैः पुनरपि अतिक्रामति काले, देवे च (१५७) उत्तमाङ्गनिहितरक्षासर्षपे, समुन्मिषत्प्रतापाग्निस्फुलिङ्गे इव गोरोचनापिञ्जरितवपुषि, (१५८) समभिव्यज्यमानसहजक्षात्त्रतेजसि इव हाटकवद्ध-

---

गाम्भीर्य्यमपहाय उन्मत्तवत् आचरन्ति स्म इति भावः। मत्ताः इव—मद्यपानजविकारग्रस्ता इव, विसस्वरुः,—विघूर्णितवन्तः।

(१५४) निनर्त्तिषया नर्त्तितुमिच्छया। विपुस्फुरुः,—विशेषेण स्पन्दन्ते स्म। विरागिणामपि वासनारहितेऽपि हृदये नर्त्तनानुरागोदय, किं वक्तव्यमन्येषाम्? इत्याशयः। ["विपुस्फुरुः" इत्यत्र "विप्रस्फुलुः" इति पाठोऽपि स एवार्थः]। सर्व्वस्वं—कृत्स्नं धनम्।

(१५५) कुवेरकोषा इव—कुवेरस्य—धनाधिपस्य देवस्य, ["कुन्थेर्नलोपश्च" (उ० १ पा० ६० सू०) इति कुविधातोः एरचि नलोपे रूपम्, अन्त्यस्थादिरयं धातुः इत्येके] कोषा इव—भाण्डागाराणीव अक्षयाणि इति भावः। द्रविणराशयः, धनराशयः। लोकेन—अर्थिजनेन इति भावः। अलुप्यन्त—हृतानि इत्यर्थः।

(१५६) "एवञ्च" इत्यस्य "देवी यशोवती गर्भेण आधत्त राज्यश्रियम्" इत्युत्तरेणान्वयः। वृत्ते—अवसिते इत्यर्थः। अतिक्रामति—अतिगच्छति। "देवे" इत्यादिपदं "हर्षे" इत्यस्य विशेषणम्।

(१५७) उत्तमेति।—उत्तमाङ्गे—शिरसि, निहितानि—रचितानि, रक्षासर्षपाणि भूताद्युपद्रवेभ्यः रक्षणार्थं मन्त्रपूतसर्षपाणीत्यर्थः यस्य तथोक्ते। समुन्मिषदिति।—समुन्मिषन्तः,—वहिःस्फुरन्तः, प्रतापाग्नेः, अन्तःस्थितस्येति भावः, स्फुलिङ्गाः,—कणसमूहा यस्य तथाभूते इव। गोरोचनेति।—गोरोचनया—तदाख्येन पीतवर्णमाङ्गलिकद्रव्यभेदेन, पिञ्जरित—पिङ्गलित, रञ्जितमित्यर्थः, वपुः,—शरीरं यस्य तथोक्ते।

(१५८) समभीति।—समभिव्यज्यमान—सम्यक् स्फुटीभवदित्यर्थः, सहजं स्वाभाविकं, क्षात्त्र—क्षत्रियोचितं, तेजः,—प्रतापः यस्य तथाभूते इव। हाटकेति। हाटकेन—स्वर्णेन, ("स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्" इत्यमरः)

विकटव्याघ्रनखपङ्क्तिमण्डितग्रीवके, (१५८) हृदयोद्भिद्यमानदर्पाङ्कुर इव प्रथमाव्यक्तजल्पितेन सत्यस्य शनैः ओङ्कारं कुर्व्वाणे, मुग्धस्मितैः कुसुमैरिव मधुकरकुलानि बन्धुहृदयानि आकर्षति, (१६०) जननीपयोधरकलशपयःशीकरसेकादिव जायमानैः विलासहसिताङ्कुरैः दशनकैः अलङ्क्रियमाणमुखकमलके, (१६१) चरित्रे इव अन्तःपुरस्त्रीकदम्बकेन पाल्य-

---

बद्धा—नियन्त्रिता, विकटा—भीषणा, व्याघ्रस्य—शार्दूलस्य, नखपङ्क्तिः,—नखरराजिः, तया मण्डिता—अलङ्कृता, ग्रीवा—कण्ठदेशः यस्य तथाभूते , विघ्नेभ्यः बालस्य रक्षाविधानार्थं स्वर्णादिमण्डितव्याघ्रनखमालिकया बालकग्रीवाऽलङ्करणं क्रियते इति लोकाचारः।

(१५८) हृदयेति।—हृदये—मनसि, उद्भिद्यमानः,—उद्भेदं गच्छन्, दर्पस्य—अहङ्कारस्य, स्पर्द्धाया इत्यर्थः, अङ्कुरः,—प्ररोह यस्य तथाभूत इव, मानोन्नताना मानाङ्कुरोद्गम. जन्मसहज. इत्याशयः। प्रथमाव्यक्तेति।—प्रथम—वाक्स्फुरणप्रारम्भे इत्यर्थ, यत् अव्यक्तम्—अस्फुट, जल्पितं—वचनं तेन, सत्यस्य—सत्ययुगस्य, सत्यवचसो वा, ओङ्कारमिव—प्रणवमिव, तस्य अनधिकारिजनश्रवणशङ्कया अस्पष्टतया उच्चार्य्यत्वादिति भाव , वा,—ओ ारमिव—अभ्युपगममिव, स्वीकारमिवेत्यर्थः, कुर्वाणे—उच्चारयतीत्यर्थः, अवश्यमेव सत्ययुगाचार प्रवर्त्तयामि, सत्यमेव वच्मि, नानृतमिति वा सदर्पम् अभिव्याहरतीति भावः। मुग्धस्मितैः,—रमणीयहास्यैः। बन्धुहृदयानि—बन्धुजनमनासि , प्राकृतिकसारल्यमेव बन्धुहृदयावर्ज्जनकारणमिति भाव.।

(१६०) जननीति।—जनन्याः,—मातुः यशोवत्याः, [ "अर्त्तिस्तु—" (उ० २ पा० १०३ सू० ) इत्यत्र बाहुलकादनि. ततो ङीपि रूपम् ] पयोधरौ—स्तनौ, पयोधराः,—मेघाश्च, तौ कलशौ इव तयोः, ते कलशा इव इति च, जलाधारत्वादिति भावः, पयःशीकरसेकादिव—पयसा—दुग्धाना, जलानाञ्च, शीकराः,—बिन्दवः, तेषां सेकात्—सेचनात्, वदने इति भावः, जायमानैः,—उत्पाद्यमानैः, विलासहसिताङ्कुरैः,—लीलाहासप्ररोहैः, जलसेकात् भूमावपि अङ्कुरः उद्गच्छति; दशनकैः—क्षुद्रदन्तैः, अलङ्क्रियमाण—शोभा नीयमान, मुखकमल—वदनपद्मं यस्य तथाभूते।

(१६१) चरित्रे इव—सुचरित्रे इव, [ "चरित्रे इव" इत्यत्र "चारित्रे इव"

माने, (१६२) मन्त्रे इव सचिवमण्डलेन रक्ष्यमाणे, वृत्ते इव कुलपुत्रकलोकेन अमुच्यमाने, यशसीव आत्मवंशेन संवर्द्ध्यमाने, (१६३) मृगपतिपोते इव रक्षिपुरुषशस्त्रपञ्जरमध्यगते, (१६४) धात्रीकराङ्गुलिलग्ने (१६५) पञ्चषाणि पदानि प्रयच्छति हर्षे, षष्ठं वर्षम् अवतरति च राज्यवर्द्धने, देवी यशोवती गर्भेण आधत्त (१६६) नारायणमूर्त्तिरिव वसुधां देवीं राज्यश्रियम्।

---

इति पाठान्तरम् ]। अन्तःपुरस्त्रीणां कदम्बकेन—समूहेन, पाल्यमाने—रक्ष्यमाणे लाल्यमाने वा, यथा अन्तःपुरिकाभिः स्वचरित्रं रक्ष्यते, तथा अस्मिन् रक्ष्यमाणे इत्यर्थः।

(१६२) मन्त्रे इव—मन्त्रितविषये इव, सचिवमण्डलेन—मन्त्रिसङ्घेन, रक्ष्यमाणे—गोप्यमाने इत्यर्थः, मनुजनात् दुष्टजनात् वा इति शेषः; "षट्कर्णो भिद्यते मन्त्रः" इत्युक्तेर्मन्त्रस्य अतिगोपनमेव कर्त्तव्यमिति भावः। वृत्ते इव—सदाचारे इव, कुलपुत्रकलोकेन—सत्कुलजातजनेन, अमुच्यमाने—अत्यज्यमाने रक्ष्यमाणे इति यावत्। आत्मवंशेन—निजकुलेन, संवर्द्ध्यमाने—सम्यक् वृद्धिं नीयमाने, यशोवृद्धौ न शीलवृत्तिरेव प्रधानं कारणं, सामयिकमहापुरुषोत्पत्तिप्रसङ्गात् इति भावः।

(१६३) मृगपतिपोते इव—सिंहशिशाविव, रक्षीति।—रक्षिपुरुषाणां—प्रहरिजनानां, शस्त्राणि—खड्गादीनि आयुधानि एव, पञ्जराणि—पिञ्जराणि, समन्तात् सशस्त्ररक्षिपरिवृतत्वादिति भावः, तन्मध्यगते—तदभ्यन्तरस्थिते।

(१६४) धात्रीकराङ्गुलिलग्ने—उपमातृहस्ताङ्गुलिधारिणि।

(१६५) पञ्चषाणि—पञ्च वा षड् वा, [बहुव्रीहौ "सर्व्वनामसङ्ख्ययोरुपसङ्ख्यानम्" (वा०) इत्यत्र "सङ्ख्याया अल्पीयस्याः" इति वृत्तिः, तथाऽत्र पूर्व्वनिपाते, "सङ्ख्ययाऽव्यया—" (२।२।२५ पा०) इति सूत्रेण बहुव्रीहौ, पश्चात् "बहुव्रीहौ सङ्ख्येये—" (५।४।७३ पा०) इति समासान्त-डच्प्रत्यये पञ्चषाणि इति सिद्धम्] पदानि, प्रयच्छति—भूमावर्पयति, चलतीत्यर्थः। हर्षे—हर्षवर्द्धने, द्वितीयकुमारे इति यावत्। अवतरति—उपगच्छतीत्यर्थः। राज्यवर्द्धने—तदाख्ये ज्येष्ठकुमारे इत्यर्थः। [कालादिषु च अत्र "यस्य च भावेन" (२।३।३७ पा०) इति सूत्रेण भावे सप्तमी बोध्या]

(१६६) नारायणमूर्त्तिरिव—नारायणस्य—श्रीविष्णोः, मूर्त्तिरिव—तनुरिव। वसुधां—पृथ्वीम्। नारायणमूर्त्तेः वसुधाप्रादुर्भावे प्रमाणं यथा ब्रह्मवैवर्त्ते प्र० ख० ७ अध्याये, कथयामि च तज्जन्म साधकं सर्व्वसम्मतम्। ५३। श्रुतं यत् स्मृत्युक्तं सर्व्वैः

(१६७) पूर्णेषु च प्रसवदिवसेषु दीर्घरक्तनालनेत्राम् उत्पलिनीमिव सरसी, (१६८) हंसमधुरस्वरां शरदमिव (१६९) प्रावृट्, (१७०) कुसुमसुकुमारावयवां वनराजिम् इव (१७१) मधुश्रीः, (१७२) महाकनकावदातां वसुधारा-

वक्त्राच्च पुष्करे॥ महाविराट्शरीरस्य जलस्थस्य चिरं स्फुटम्। मलो बभूव कालेन स सर्वव्यापको ध्रुवम्॥ स प्रविष्टः सर्वेषां तल्लोम्नां विवरेषु च। कालेन महता तस्मात् बभूव वसुधा मुने!॥ प्रत्येकं प्रतिलोमाच्च कूपेषु सा स्थिरा स्थिता। आविर्भूता तिरोभूता सा जले च पुनः पुनः॥ आविर्भूता सृष्टिकाले तज्जलोपर्यवस्थिता। प्रलये च तिरोभूता जलाभ्यन्तरवस्थिता॥" इति। राज्यश्रियं—तदाख्यां कन्यां, गर्भेण आपन्न—धृतवती; यद्वा,—भगवतः कमठस्वरूपिणः मूर्त्तिः पृष्ठेन धरित्रीमिव यशोवती राज्यश्रियं गर्भेण दधार इत्यर्थः।

(१६७) "पूर्णेषु" इत्यस्य "दुहितरं प्रसूतवती" इत्युत्तरेणान्वयः। पूर्णेषु प्रसवदिवसेषु—दशमे मासि इत्यर्थः। दीर्घेति।—दीर्घे—आयते, रक्ते—रक्तवर्णे, नलमेव—कमलमेव इति नालं तस्मिन् ("नलः पोटगले राशि पितृदेवे कपीश्वरे कमलेऽपि च नल्याञ्च क्रमेण क्लीबयोषितोः॥" इति मेदिनी) नाले—कमले, रक्तनाले—रक्तोत्पले इत्यर्थः, ते इव नेत्रे, अन्यत्र—रक्तोत्पले नेत्रे इव; यद्वा,—दीर्घाणि रक्तानि—रक्तवर्णानि, नालानि—दण्डानि, नेत्राणि—मूलानि च यस्याः तां, ("नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि...॥" इति मेदिनी) उत्पलिनीमिव—पद्मिनीमिव।

(१६८) हंसेति।—हंसवत् मधुरः स्वरः य :; अन्यत्र,—हंसस्य मधुरः स्वरः यस्यां ताम्।

(१६९) प्रावृट्—वर्षर्त्तुः इत्यर्थः; प्रावृषोऽनन्तरमेव शरत्प्रवृत्तेः तथा उपमीयते

(१७०) कुसुमेति।—कुसुमवत् सुकुमाराः,—सुकोमलाः, अवयवाः, अङ्गानि; अन्यत्र,—कुसु व सुकुमारा अवयवाः,—अंशाः यस्याः ताम्।

(१७१) मधुश्रीः,— लक्ष्मीः, ["मधु पुष्परसक्षौद्रमद्ये......। वसन्ते भिदैत्ये ......" इति मेदिनी। " धुश्रीः" इत्यत्र "माधवश्रीः" इति पाठे,—मधुरेव मा वः,—वसन्तः, स्वार्थे अण्। "माधवोऽजे मधौ राधे यादवे ना स्त्रियां सितौ" इति मेदिनी, तस्य श्रीरित्यर्थः]।

(१७२) महेति।—महाकनकं—तिलसुवर्णं, तद्वत् अवदाता गौराङ्गी

मिव द्यौः, प्रभावर्षिणीं (१७२) रत्नजातिमिव वेला, सकल-जननयनानन्दकारिणीं चन्द्रलेखामिव प्रतिपत्, (१७४) सहस्र-नेत्रदर्शनयोग्यां जयन्तीमिव शची, (१७५) सर्वभूभृदभ्यर्थितां गौरीमिव मेना प्रसूतवती दुहितरं, (१७६) यया द्वयोः सुतयोः उपरि स्तनयोः इव एकावलीलतया नितराम् अराजत।

(१७७) अस्मिन्नेव तु काले देव्या यशोवत्या भ्राता सुतम् अष्टवर्षदेशीयम् उड्डूयमानकुटिलकाकपक्षकशिखण्डं

---

ताम्, अन्यत्र,—सद्भिः,—प्रभूतैः, कनकैः,—स्वर्णैः, अवदाता—उज्ज्वला ताम्। वसुधारामिव—धनवृष्टिमिव। द्यौः,—अन्तरीक्षम्, सा हि जगतो महाऽभ्युदयाय दिवान्तरीक्षात् पततीति प्रसिद्धिः।

(१७२) रत्नजातिमिव—रत्नराशिमिव। वेला—अब्ध्यम्बुविकृतिः, समुद्रजलोच्छ्वास इत्यर्थः, समुद्रकूलं वा, ("अब्ध्यम्बुविकृतौ वेला" "वेला काले च सीमायामब्धेः कूल-विकारयोः." इत्यमर-मेदिन्यौ) चन्द्रलेखामिव—शशिकलामिव। प्रतिपत्—प्रथमा तिथिः।

(१७४) सहस्रेति।—सहस्रैः नेत्रैः,—बहुजननयनैरिति भावः, सहस्रनेत्रेण—इन्द्रेण च, दर्शनयोग्या—दर्शनीया ताम्, जयन्तीमिव—तदाख्यां कन्यकामिव। ("जयन्ती वृक्षभिद्गौर्योरिन्द्रपुत्री पताकयोः" इति मेदिनी) शची—इन्द्राणी।

(१७५) सर्वेति।—सर्वैः भूभृद्भिः,—राजभिः, अन्यत्र,—सर्वभूभृता—सर्वां भुवमभिव्याप्य तिष्ठता हिमाद्रिणा इत्यर्थः; यद्वा,—सर्वैः भूभृद्भिः,—पर्वतैः, राजकुमारीदर्शने सया इति भावः, अभ्यर्थिता—प्रार्थिता तां गौरीमिव—पार्वतीमिव। मेना—मेनका, हिमवन्महिषीति यावत्। [पूर्णस्थित्यारभ्यैतदन्तसन्दर्भे एक प्रभूतवत्त्वमेव सादृश्ये हेतुः, इति साधारणधर्मस्य रत्नजन्यादिवह्रूपमानसम्बन्धात् मालोपमाऽलङ्कृतिः इति सङ्क्षेपः]।

(१७६) यया—दुहित्रा, द्वयोः सुतयोः,—राज्यवर्द्धन-हर्षवर्द्धनयोः, उपरि—अग्रे स्थितया इति शेषः; यद्वा,—उपरि—अनन्तरमित्यर्थः, जातया इति शेषः, ऊर्द्ध्वभागविराजमानया च। एकावलीलतया—एकसरेण हारेण इत्यर्थः। यशोवती नितराम्—अतिशयेन अराजत इति सम्बन्धः।

(१७७) अस्मिन्नेति।—अस्मिन्नेव समये—दुहितृजननकाले। "अस्मिन्नेव" इत्यस्य "यशोवत्या भ्राता सुतं ....भण्डिनामानम् अनुचरं कुमारयोः अर्पितवान्" इति उत्तरेण

( १७८ ) खण्डपरशुहुङ्काराग्निधूमलेखानुबद्धमूर्द्धानं मकरध्वज-मिव पुनर्जातम्, एकेन ( १७९ ) इन्द्रनीलकुण्डलांशुश्यामलितेन शरीरार्द्धेन इतरेण च त्रिकण्टकमुक्ताफलालोकधवलितेन सम्पृक्तकायमिव हरिहरयोः दर्शयन्तं, ( १८० ) पीनप्रकोष्ठ प्रतिष्ठितपुष्पलोहवलयं परशुराममिव ( १८१ ) क्षत्रक्षपणक्षीण

सम्बन्धः । तं विशिनष्टि, अष्टवर्षदेशीयमित्यादिभिः । सुतं—स्वतनयम् । अष्टवर्षदेशीयं प्रायेण अष्टवर्षवयसमित्यर्थः, [ ईषदूनार्थे "ईषदसमाप्तौ—" ( ५।३।६७ पा० ) इत्यादिना देशीयर्प्रत्ययः ]। उद्धूयमानेति ।—उद्धूयमानः,—उड्डीयमानः, कुटिलः,—भङ्गिमान्, काकपक्षक एव—शिखा एव, शिखण्डः,—पिच्छं यस्य तं, ( "बालानान्तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इत्यमरः ), यद्वा,—काकपक्षकः,—काकपक्ष इव गाढकृष्ण इति भावः, शिखण्डः,—चूडा यस्य तम्, ( "शिखण्डो बर्ह-चूडयोः" इति मेदिनी )।

( १७८ ) खण्डेति ।—खण्डपरशुः,—हरः, तस्य हुङ्कारेण—क्रोधजेन हुमिति शब्देन, योऽग्निः,—अनलः, तृतीयनयनादुत्थित इति भावः, तस्य धूमलेखया अनुबद्धः,—आक्रान्तः, [ "लेखाऽनुबद्ध—" इत्यत्र "लेखाऽनुबुद्ध—" इति पाठे,—धूमलेखया—धूमरेखादर्शनेन, अनुबुद्धः,—परिज्ञातः, यतोऽयं धूमरेखावान्, अत एव मकरध्वजमूर्द्धा इति परिज्ञानमित्यर्थः ] मूर्द्धा—शिरो यस्य तथाभूतं, मकरध्वजमिव कामसिव । पुनर्जातं—पुनरुत्पन्नम् । राम-कृष्णयोः इव राज्यवर्द्धन-हर्षयोः आनुकूल्याय प्रद्युम्नमिव इति व्यङ्ग्यम् ।

( १७९ ) इन्द्रनीलेति ।—इन्द्रनीलस्य—नीलकान्तमणिविशेषस्य, यत् कुण्डलं कर्णभूषणं, तस्य अंशुभिः,—प्रभाभिः, श्यामलितं—सम्पन्नश्यामवर्णं तेन, शरीरार्द्धेन—अङ्गार्द्धभागेन, इतरेण—अन्येन, शरीरार्द्धेनेति शेषः, त्रिकण्टकं—तदाख्यं रत्न-त्रयघटितं कर्णभूषणं, तल्लक्षणन्तु प्राक् प्रदर्शितम्, तस्य मुक्ताफलानाम् आलोकेन प्रभया, धवलितं—जातशुभ्रवर्णं तेन, सम्पृक्तकायमिव—सम्मिलितावयवमिव, [ "सम्पृक्तकायमिव" इत्यत्र "सम्पृक्तावतारमिव" इति पाठे,—मिलितावतरणमिव ] एकत्र हरिहरात्माविर्भावः विशेषशुद्धिसूचकः ।

( १८० ) पीनेति ।—पीनयोः,—स्थूलयोः, प्रकोष्ठयोः,—कूर्पराधोभागयोः, प्रतिष्ठितं—प्रतिष्ठां गतं, स्थितमिति यावत्, पुष्पलोहवलयं मणिविशेषवलयं यस्य तथोक्तम् । [ केचित्तु पुष्पलोहशब्देन "मृताग्निहोत्र रथचक्रम्" इति वदन्ति ]।

( १८१ ) क्षत्रेति ।—क्षत्राणां—क्षत्रियाणां, क्षपणेन—छेदनेन, क्षीणः,—क्षय

परशुपाशचिह्नितं बालतां गतं, (१८२) कण्ठसूत्रग्रथितभङ्गुरप्रवालाङ्कुरं हिरण्यकशिपुमिव उरःकाठिन्यखण्डितनरसिंहनखरखण्डं गृहीतजन्मान्तरं, शैशवेऽपि सावष्टम्भं बीजमिव वीर्य्यद्रुमस्य भण्डिनामानम् अनुचरं कुमारयोः अर्पितवान्।

(१८३) अवनिपतेस्तु तस्य उपरि पुत्रयोः तृतीयस्य नेत्रयोः इव ईश्वरस्य तुल्यं दर्शनमासीत्। राजपुत्रौ अपि

गतः, परशुः,—कुठारः, अत एव पाशः,—रज्ज्वाकारः; यद्वा,—क्षत्रियक्षपणेन क्षीणः,—रेखामात्रावशिष्टः, अत एव अपकृष्टः परशुः,—परशुपाशः, प्रधनाप्राधान्यात् इति भावः, तेन चिह्नितः,—परशुरामोऽयमिवेति लक्षितः,, महावीरनिबर्हणवीरसमित्प्रदत्तपरिचयपरिणद्धस्नेहेन इदानीमपि परशोः किञ्चित् खण्डं भूषणमिव दधानो वा इत्यर्थः तम्। बालता—शिशुत्वं, गतं—प्राप्तं, पुनरुत्पन्नं परशुराममिवेत्यर्थः। श्रीराम-लक्ष्मणयोः इव राज्यवर्द्धन-हर्षयोः उपासनार्थमेव परशुरामस्येव कुमारस्य तदभ्युदयबोधकत्वमेतत् इति भावः।

(१८२) कण्ठेति।—कण्ठसूत्रे—गलदेशनिहिततन्तौ, ग्रथितः,—गुम्फितः, भङ्गुरः,—कुटिलः, प्रवालाङ्कुरः,—विद्रुमप्ररोहः यस्य तम्, अत एव हिरण्यकशिपुमिव—तदाख्यमादिदैत्यमिव। उर इति।—उरसः,—वक्षसः, काठिन्येन—दार्ढ्येन, खण्डितः,—भग्नः, नरसिंहस्य—नृसिंहाकृतेर्भगवतो विष्णोः, नखरखण्डः यस्मिन् तथोक्तम्। व्यर्थीकृतभगवन्नरसिंहनखरत्वेन एतस्य विशेषवैशिष्ट्यं ध्वनितम्, एकत्र बाध्यबाधकत्वभेदाग्रहाददोषापत्तेः। गृहीतजन्मान्तरं—पुनर्जातमित्यर्थः। अभिन्नोरस्केन भग्नभगवन्नखरेणापि असुरेण साम्यप्रतिपादनात् हीनोपमेयमिति, अथ तथाविधासुराभावात् अखण्डत्वाच्च भगवतोऽङ्गानामसम्बन्धे सम्बन्धरूपातिशयोक्तिः व्यङ्ग्या। सावष्टम्भ—सतेजस्कम् इत्यर्थः, बीजमिव—प्ररोहमूलमिव; बालत्वात् बीजमिवेत्युत्प्रेक्षा उन्नेया। वीर्य्यद्रुमस्य—शौर्य्यवृक्षस्य।

(१८३) अवनिपतेः,—राज्ञः। तस्य—भण्डिनामकस्य कुमारस्य। पुत्रयोः तृतीयस्य—आत्मजौ अपेक्ष्य तृतीयस्थानमधिकृतस्य इत्यर्थः, तृतीयपुत्रत्वं गतस्येति भावः, [ "पूरणगुण—" ( २।२।११ पा० इति न षष्ठीसमासः ] ईश्वरस्य—हरस्य नेत्रयोः तृतीयस्य—तृतीयनेत्रस्य इव, तुल्यं—समानं, न तु भिन्नविधमित्यर्थः दर्शनम्—अवलोकनम्; अन्यत्र,—दृष्टिम्; राजा आत्मपुत्राविव तं ददर्शेत्यर्थः

सकलजीवलोकहृदयानन्ददायिनौ तेन (१८४) प्रकृति-दक्षिणेन मधु-माधवौ इव मलयमारुतेन उपेतौ नितरां रेजतुः। क्रमेण च अपरेणेव भ्राता प्रजानन्देन सह वर्द्धमानौ यौवनम् अवतेरतुः। (१८५) स्थिरोरुस्तम्भौ च पृथुप्रकोष्ठौ दीर्घभुजार्गलौ (१८६) विकटोरःकवाटौ प्रांशुशालाभिरामौ महानगरसन्निवेशौ इव सर्व्वलोकाश्रयक्षमौ बभूवतुः।

सकलेति।—सकलानां—सर्वेषां, जीवलोकानां—प्राणिपूर्णजगतां, हृदयस्य—अन्तःकरणस्य, आनन्दम्—उल्लासं, दत्तः,—जनयतः इति तौ।

(१८४) प्रकृतिदक्षिणेन—प्रकृत्या—स्वभावेन, दक्षिणः,—सरलः, उदारो वा तेन, दक्षिणदिग्भवेन च। मधु माधवाविव—चैत्र-वैशाखाविव, ("स्याच्चैत्रे चैत्रिको मधुः। वैशाखे माधवो राधः." इत्यमरः.) उपेतौ—युक्तौ, सङ्गतौ इत्यर्थः। अपरेण—द्वितीयेन प्रजानन्देन—प्रजानामानन्देन, भ्रातृजन्मना यथा आनन्दो जायते, तयोर्यौवनोदयेन प्रजाना तथाऽऽनन्दवृद्धिः जातेति भावः। अवतेरतु,—प्रापतुः, यौवनोद्गमसन्धिस्थौ बभूवतुः इत्यर्थः।

(१८५) स्थिरोरुस्तम्भौ—स्थिरौ—दृढौ, ऊरू—सक्थिनी, स्तम्भाविव, अन्यच, स्थिराः,—दृढाः, उरवः,—महान्तः, स्तम्भाः,—स्थूणाः ययो. तौ, पृथुप्रकोष्ठौ—पृथू—स्थूलौ, पृथवश्च, प्रकोष्ठौ—"प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इत्युक्तौ कूर्पराधोभागौ इत्यर्थः, कक्षविशेषाश्च ययोः तौ, ("प्रकोष्ठो मणिबन्धस्य……। भूपकक्षान्तरेऽपि स्यात्॥" इति मेदिनी) दीर्घेति।—दीर्घौ—आयतौ, भुजौ—बाहू, अर्गलाविव—कवाटरोधककाष्ठदण्डाविव; अन्यत्र,—भुजाविव अर्गलौ ययोः तौ।

(१८६) विकटेति।—विकटः,—विशालः, उरः,—वक्षस्थल, कवाट इव—अररमिव, द्वारावरणभूतकाष्ठखण्डमिव इत्यर्थः, अन्यत्र,—उर इव कवाटौ ययो. तौ। प्रांश्विति।—प्रांशू—उन्नतौ, शालौ इव—तदाख्यवृक्षौ इव, अभिरामौ—रमणीयौ अन्यत्र,—प्रांशुना शालेन—प्राकारेण, ("प्राकारो वरणः शालः" इत्यमरः) यद्वा, प्रांशुभिः शालाभिः,—गृहविशेषैः, अभिरामौ। महेति।—महतः,—विशालस्य, नगरस्य सन्निवेशौ इव—य स्थानभूतौ इवेत्यर्थः। सर्वेति।—सर्वेषां लोकानां—जनानाम् आश्रये—आश्रयदाने, अभयदाने इति यावत्, रक्षणे इति भावः, अधिष्ठाने च, क्षमौ शक्तौ, यौवराज्योचितवयोवत्त्वात् बहुप्रासादवत्त्वाच्चेति भाव.।

(१८७) अथ चन्द्र-सूर्य्यौ इव स्फुरज्ज्योत्स्नायशःप्रतापाक्रान्तभुवनौ अभिरामदुर्निरीक्ष्यौ, अग्नि-मारुतौ इव समभिव्यक्ततेजोबलौ एकीभूतौ, (१८८) शिलाकठिनकायबन्धौ हिमवद्विन्ध्यौ इव अचलौ, महावृषौ इव कृतयुगयोग्यौ, अरुण-गरुड़ौ इव (१८९) हरिवाहनविभक्तशरीरौ, इन्द्रोपेन्द्रौ इव नागेन्द्रगतौ

---

(१८७) अथेत्यादि।—"अथ" इत्यस्य "सर्व्वस्यामेव पृथिव्यां……प्रकाशतां जग्मतुः" इत्युत्तरेणान्वयः। तौ विशिनष्टि, चन्द्र-सूर्य्यावित्यादिभिः। स्फुरदिति।—स्फुरत्—सर्व्वतः प्रसरत्, ज्योत्स्नेव—कौमुदीव, यशः,—कीर्त्तिः, ज्योत्स्ना यश इव इति च, भुवनाक्रान्तिसामर्थ्यादिति भावः, प्रतापः,—कोष-दण्डजं तेजः, ("स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्यमरः) आतपश्च, आह्लादकत्वात् उद्वेजकत्वाच्चेति भावः, तेन आक्रान्तम्—अधिष्ठितं, भुवनं—जगत् याभ्यां तौ. अत एव अभिरामदुर्निरीक्ष्यौ—अभिरामः,—सुदर्शनः, चन्द्रतुल्यत्वादिति भावः, दुर्निरीक्ष्यः,—निरीक्षितुमशक्यः, दुर्धर्ष इति यावत्, सूर्य्यतुल्यत्वादिति भावः, सौम्य-भीमाविति तात्पर्य्यम्। समभिव्यक्तेति।—समभिव्यक्तानि—सम्यक्प्रकटितानि, तेजांसि—प्रभावाः, दीप्तयश्च, तथा बलानि—सामर्थ्यानि, वेगा इत्यर्थश्च याभ्यां ययोर्वा तौ, अत एव एकीभूतौ—समवेतौ, अन्योऽन्यानुवर्त्तिनौ च।

(१८८) शिलेति।—शिलावत् शिलाभिश्च कठिनः,—दृढ़ः, कायबन्धः,—अवयवसंस्थानं ययोः तौ। अचलौ—अकम्पौ, कर्त्तव्ये अप्रतिहतोत्साहवत्त्वात्, गतिरहितौ च, स्थावरत्वात् इति भावः। कृतयुगेति।—कृतयुगस्य—सत्ययुगस्य; अन्यच,—कृतस्य—रथहलाद्याकर्षणादिनिमित्तं निर्म्मितस्य, युगस्य—रथहलाद्यङ्गकाष्ठभेदस्य, ("युगो रथहलाद्यङ्गे न द्वयोस्तु कृतादिषु" इति मेदिनी) योग्यौ—समुचितौ, वहनक्षमौ च; यद्वा,—कृतयुगस्य इव योग्यः,—अनुरूपः, विनीतत्वादिगुणाभ्याससत्त्वात् निर्म्मलसत्त्वोत्कर्षवत्त्वाच्चेति भावः; अन्यत्,—सत्ययुगे यादृशी शकटादियोजना नियता आसीत् तद्योग्यौ; अतिभारवहनसामर्थ्यादिसत्त्वात् इति भावः।

(१८९) हरीति।—हरयः,—अश्वाः एव, वाहनानि—यानानि, तैः विभक्तं—विभज्य गृहीतं, स्कन्धसन्ध्यादिभागेन स्थितमिति भावः, शरीरं—देहः ययोः तौ, पृथक्कृताश्ववाहनौ इत्यर्थः, पितापसादिकलाऽभिज्ञत्वात् इति भावः; अन्यच,—

( १९० ) कर्णार्ज्जुनौ इव कुण्डल-किरीटधरौ, पूर्व्वापरदिग्भागौ इव सर्व्वतेजस्विनामुदयास्तमयसम्पादनसमर्थौ, अमान्तौ इव

हरेः,—सूर्य्यस्य, विष्णोश्च, ( "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥" इत्यमरः ) वाहने—वहनकर्म्मणि, विभक्तं—परिकल्पित-मित्यर्थः, शरीरं याभ्या तौ । अरुणस्य सूर्य्यवाहनत्वं तत्सारथित्वात्, गरुडस्य च विष्णुवाहनत्वं प्रसिद्धमेव ; अपरिमेयशक्तिमत्त्वात् इति भाव । इन्द्र,—शचीपतिः, [ इदिधातोः "ऋज्रेन्द्र—" ( उ० २ पा० २८ सू० ) इत्यादिना रन्प्रत्यये रूपम् ] उपेन्द्र,—वामनरूपी विष्णुश्च तौ, अदितिगर्भसम्भूतौ इति भावः, नागेन्द्रगतौ—नागेन्द्रवत् गतं नागेन्द्रेण गतं—गमनमिति वा ययोस्तौ, गजेन्द्रगामिनौ, गजेन्द्र-वा नौ वा, धीरमन्थरगामित्वात् त्रिलोक्यधिनाथत्वात् वा ; अन्यत्र,—नागेषु—गजेषु, पन्नगेषु,च, [ पन्नम्—अधोमुखं यथा तथा गच्छन्ति इति, पद्भ्यां न गच्छन्ति इति वा ; अत्र "अन्येष्वपि दृश्यते" ( ३।२।१०१ पा० ) इति सूत्रे "अपिशब्दः सर्वोपाधि-व्यभिचारार्थः" इति दीक्षिताः, तेन पन्नोपपदात् गमधातोः डप्रत्यये रूपम् । "नागः पन्नगमातङ्गक्रूरचारिषु तोयदे" इति मेदिनी ] इन्द्रः,—श्रेष्ठः, ऐरावतः शेषश्च इत्यर्थः, तत्र गतौ—स्थितौ ।

( १९० ) कर्णार्ज्जुनौ—कुन्तीसुतौ इति भावः । [ इह लोकोत्तरपरमरमणीय-दुर्द्धर्षतेजोवसहोदरत्वे कवीन्द्राग्रहेण औपम्यानुकूल एव कुण्डलादिधारणार्थे बोधावगमः, प्रसिद्धेऽप्रतिमे वैराद्यनुषङ्गे तात्पर्य्याभावात्, अन्यथा अप्रयुक्तदुष्टौपम्येन सौन्दर्य्ये दौर्भाग्यावतारणात्, महापुरुषमहासत्त्ववर्णनमनोहरसुरभिरुदकुसुमाचिते महार्हरत्नपीठे अयुक्तहीनार्थलोष्टपङ्कपाषाणादिप्रक्षेपः स्यात् ] । कुण्डलेति । —कुण्डलं—कर्णालङ्कारभेदः, किरीट—शिरोभूषण, तयोः धरौ—धारिणौ ; अन्यत्र,—कुण्डलधरः,—कर्णः, किरीटधरः,—अर्ज्जुनः तौ । [ अत्र "चन्द्र-सूर्य्यौ" इत्यादीनाम् एतदन्तानां सहजसौभ्रात्रसमर्पणमेव प्रधानाशयः, इति प्रायः सहो-दरार्थकोपमानद्वन्द्वे भिन्नार्थानामपि विचतुराणां छविन्यायेन ग्रहणम् इति नैव शङ्कावकाशोऽपि । अन्यत् सर्व्वमवदातम् ] । पूर्वेति ।—पूर्व्वश्च—प्राक् च, अपरश्च—पश्चिमश्च तौ, दिग्भागौ—दिशां विभागौ तौ इव, सर्वेति ।—सर्वे च ते तेजस्विनः, —प्रतापवन्तः, राजानः ग्रहाश्च आदित्या वा तेषाम् । उदयेति ।—उदयः,—अभ्युन्नतिः, आविर्भावश्च, अस्तमयः,—नाशः, अदर्शनञ्च, तयोः सम्पादने—विधाने, समर्थौ—क्षमौ, अनुग्रहदृष्ट्या उदयसम्पादनक्षमौ, निग्रहदृष्ट्या नाशसम्पादनसमर्थौ

अतिमानेन (१९१) आसन्नवेलाऽर्गलनिरोधसङ्कटे कुकुटीरके तेजःपराङ्मुखीं छायामपि जुगुप्समानौ, (१९२) स्वात्मप्रतिबिम्बेन अपि पादनखलग्नेन लज्जमानौ, शिरोरुहाणामपि भङ्गेन दुःखम् अवतिष्ठमानौ, चूडामणिसङ्क्रान्तेनापि द्वितीयेन आतपत्रेण अपत्रपमाणौ, भगवति (१९३) षण्मुखेऽपि स्वामिशब्देन असुखायमानश्रवणौ, दर्पणदृष्टेन अपि प्रतिपुरुषेण दूय-

च इत्यर्थः। अमान्तौ इव—पर्य्याप्तिम् अगच्छन्तौ इव। अतिमानेन—अतिगौरवेण इति यावत्।

(१९१) आसन्नेति।—आसन्ना—निकटवर्त्तिनी, वेला—सीमा, जलधिजलरूपा इत्यर्थः, सा एव अर्गल—प्रतिरोधनं, तेन निरोधः,—प्रसराभावः, तेन सङ्कटम्—अप्रशस्तामति यावत् राजकीयच्छायासञ्चाराणां पर्य्याप्तम् अयोग्यमिति भावः तस्मिन्, कुः,—पृथिवी एव, ("गोत्रा कुः पृथिवी पृथ्वी" इत्यमरः) कुटीरकं—क्षुद्रगृहं तस्मिन्। तेजःपराङ्मुखीं—तेजः,—प्रतापः, पराङ्मुखं—प्रतिनिवृत्तं प्रसरणावकाशविरहादिति भावः यस्याः तथाभूता, छाया—शरीरप्रतिबिम्बं, जुगुप्समानौ—कथमेषा निरस्ततेजाः, धिगेतामिति निन्दन्तौ, पृथिवी इतोऽप्यधिका विस्तृता चेत् आवयोस्तेजोऽपि दूरप्रसारि भवेत्, तदभावात् तेजसः प्रसरणस्थानाभावात् तथा जुगुप्सा इति भावः; अथवा,—तथाविधे कुकुटीरके—क्षुद्रधरामण्डलात्मके, तेजःपराङ्मुखीं—सूर्य्यातपप्रतीपाम् उदयास्तमयनकालिकामपि यत् पूर्व्वापरकालादौ प्रत्यक्षीभूतामिति, तथाभूतां छायामपि जुगुप्समानौ—निन्दन्तौ इत्यर्थः; गर्हायां स्वार्थे सनः तथैव त्वात्, अग्रेसरत्वप्रतेः पराङ्मुखतां शारीरकच्छायामप्यसहमानौ इति भावः, एतेन सर्व्वसमुद्रान्तभूमण्डलाधिकारः सर्व्वसमुद्राधिकारश्च एतयोः पराङ्मुखप्रवृत्तिविमुखयोः सूचितः।

(१९२) स्वात्मेति।—स्वस्य—निजस्य, आत्मनः,—शरीरस्य, ("आत्मा पुंसि स्वभावे च……। ……शरीर-ब्रह्मणोरपि॥" इति मेदिनी) प्रतिबिम्बं—छाया, तेन लज्जमानौ—त्रपमाणौ, अभिमानातिशय्यात् ममापि चरणपतनमिति धिगेति भाव। शिरोरुहाणां—केशानामपि, भङ्गेन—भङ्गुरत्वेन, कुञ्चितत्वेनेत्यर्थः, युद्धे पलायनेन च। चूडामणिसङ्क्रान्तेन—शिरोरत्नप्रतिफलितेन, अत एव द्वितीयेन—एकाधिकेनेत्यर्थः, आतपत्रेण—छत्रेण, अपत्रपमाणौ—लज्जमानौ, कथमेकच्छत्रत्वेऽस्माकं द्वितीयच्छत्रं दृश्यते॥ इति धिगेति भावः।

(१९३) षण्मुखे—षडानने, स्कन्ददेवे इत्यर्थः। स्वामिशब्देन—स्वामी—

मानननयनौ, ( १८४ ) सन्ध्याऽञ्जलिघटनेषु अपि शूलायमानोत्तमाङ्गौ, ( १८५ ) जलधरच्युतेन अपि धनुषा दोदूयमानहृदयौ, आलेख्यक्षितिपतिभिः अपि अप्रणमद्भिः सन्तप्यमानचरणौ, ( १८६ ) परिमितमण्डलसन्तुष्टं तेजः सवितुरपि अबहुमन्यमानौ, ( १८७ ) भूभृदपहृतलक्ष्मीकं सागरमपि उपहसन्तौ, बलवन्तमकृतविग्रहं मारुतमपि निन्दन्तौ, हिमवतोऽपि चमरी-

---

कुमार, प्रभुश्च तच्छब्देन अनुखायमानश्रवणौ—दुःखानुभाविकर्णौ इत्यर्थः, कथमस्मदतिरिक्तेऽपि स्वामीति प्रयुज्यते इति धियेति भावः। दर्पणदृष्टेन—आदर्शावलोकितेन, प्रतिपुरुषेण—प्रतिबिम्बगतेन जनेन, प्रतिस्पर्द्धिपुरुषेण वा, स्वप्रतिबिम्ब दर्पणपतित दृष्ट्वा प्रतिस्पर्द्धी अयमिति धियेति भावः, दूयमाननयनौ—असन्तुष्टनेत्रौ।

( १८४ ) सन्ध्येति।—सन्ध्यायाम् अञ्जलिघटनानि—सन्ध्याकालिकदेवतावन्दने शिरसि अञ्जलियोजनानि इत्यर्थः तेषु, शूलायमान—शूलविद्धमिवाचरत्, उत्तमाङ्गं—शिरो ययो तौ अन्यदभिवन्दने एव लोकैः शिरसि अञ्जलिर्बध्यते, वयन्तु कथमञ्जलिं शिरसि बध्नीम ॥ इति धियेति भावः।

( १८५ ) जलेति।—जलधरच्युतेन—मेघच्युतेन, धनुषा—शक्रधनुषेत्यर्थः, दोदूयमानहृदयौ—पुनःपुनः सन्तप्यमानमानसौ, कथमपरेणापि धनुर्भ्रियते अस्माकमसमक्षम् ॥ इति क्रोधादिति भावः। आलेख्यक्षितिपतिभिः—चित्रार्पितनृपतिभिः इत्यर्थः। सन्तप्यमानचरणौ—दह्यमानपादौ, कथमेते अस्माकं चरणेषु न प्रणमन्ति ॥ इति क्रोधादिति भावः।

( १८६ ) परिमितेति।—परिमिते—परिच्छिन्ने, इयत्तया ईदृक्तया च इति भावः, मण्डले—बिम्बे, देशे च, विषये इत्यर्थः, ("मण्डलं परिधौ देशे कोठे द्वादशराजसु। कोविदश्व निवहे बिम्बे विषु॰॰॥" इति मेदिनी ) सन्तुष्टम्—एतदेव पर्य्याप्तमिति मत्वा हृष्टमित्यर्थः, सवितुः—सूर्य्यस्य, तेजः—आतपं, प्रभावञ्च, अबहु—न प्रभूतमित्यर्थः, मन्यमानौ—अवधारयन्तौ, स्वस्य अपरिमिततेजःशालित्वादिति भावः।

( १८७ ) भूभृदिति।—भूभृता—मन्दराचलेन इत्यर्थः, भूभृद्भिः—राजभिश्च, अपहृता लक्ष्मीः—श्रीः, रत्नादिसम्पच्च यस्मात् तथाभूतं, सागरमपि उपहसन्तौ—परिहासं कुर्व्वन्तौ; ततोऽपि स्वस्य दुर्द्धर्षत्वादिति भावः। अकृतः—अनाचरितः, विग्रहः—युद्धम्, अकृतः—अन्यतः, विग्रहः—शरीरं येन तथोक्तञ्च, मारुतं—वायुं निन्दन्तौ—कुत्सयन्तौ, यदि विग्रहवत्त्वमस्य अभविष्यत, तदा ज्ञायत

बालव्यजनवीजितेन दह्यमानौ, जलधीनामपि शङ्खैः खिद्यमानौ, चतुःसमुद्राधिपतिम् अपरं प्रचेतसमपि असहमानौ, (१९८) अनपहृतच्छत्रानपि विच्छायान् अवनिपालान् कुर्वाणौ, साधुषु अपि असेवितप्रसन्नौ सुखेन मधु चरन्तौ, (१९९) दुष्टराजवंशान् उष्मणा दूरस्थितानपि म्लानिमानयन्तौ, अनुदिवसं शस्त्राभ्यासश्यामिकाकलङ्कितम् अशेषराजकप्रतापाग्निनिर्वापण-

अलम् अस्माभिः अद्रक्ष्यतेति धियेति भावः। हिमवतोऽपि—हिमाद्रेरपि, चमरीणां तदाख्यमृगभेदाना, बालव्यजनेन—पुच्छरूपव्यजनेन, वीजित तेन, वयमेव चामरव्यजनैः वीज्यामहे, कथमयमपि॥ इति ईर्ष्ययेति भाव.। जलधीना—सागराणा, शङ्खैः,—कम्बुभिः, निधिविशेषैश्च, ("पद्मशङ्खादयो निधेः" इत्यमरः) खिद्यमानौ—क्लिश्यमानौ, शङ्खनिधिभुजौ वयमेव, कथ जलधिषु एतत्सद्भाव॥ इति स्पर्द्धयेति भावः। अपरम्—अन्यम्, अस्मदतिरि[क्त]मिति भाव, प्रचेतस—वरुणदेव, ("प्रचेता वरुण. पाशी" इत्यमरः) असहमानौ—अक्षममाणौ। सर्वत्र विवर्णितेभ्य. उपमानभूतेभ्यः उपमेयभूतयोरेतयोराधिक्यप्रतिपादनात् व्यतिरेकालङ्कारः।

(१९८) अनपहृतेति।—न अपहृत छत्र येषा तान्, विजित्य पुनः स्वे स्वे पदे प्रतिष्ठापितानिति भावः, विच्छायान्—विगताः छाया,—अनातपाः येषा तथाविधान्, ये छत्रिण, ते कथ विच्छायभाजः (आतपभाजः) इति आपातत. विरोधात् विरोधाभास, परिहारस्तु—विच्छायान्—विगतकान्तीन्, पराजयव्यलीकादिति भावः, अवनिपालान्—राज्ञ। साधुषु—सज्जनेषु, असेवि[त]प्रसन्नौ—विना सेवा प्रसन्नौ—प्रसादवन्तौ, सज्जनप्रियौ इत्यर्थ, असेविता—अपीता, प्रसन्ना—मद्यविशेषः याभ्या तौ इति च, मधु चरन्तौ—मधुरभाषिणौ इत्यर्थः, मधु—मद्य, चरन्तौ—स्रवन्तौ इति च; य' असेवितप्रसन्न, कथ तस्य सुखात् मधु स्रवति? इति विरोधः, परिहारस्तु पूर्वव्याख्यया इति बोध्यम्।

(१९९) दुष्टराजवंशान्—दुष्टराजकुलानि, वंशान्—वेणुदण्डांश्च, उष्मणा—प्रतापाग्निना, सन्तापेन च, म्लानि—मालिन्य, शुष्कताञ्च, उष्मा तु निकटस्थानेव मलिनीकरोति, न तु दूरस्थान् इति विरोध., परिहारस्तु, उष्मणा प्रतापाग्निना इत्यनेन प्रदर्शित.। अनुदिवस—प्रतिदिनम्, शस्त्रेति।—शस्त्राणाम् अभ्यासेन—आवृत्त्या, पुन.पुनर्व्यवहारेण इत्यर्थ, या श्यामिका—कलङ्करेखा,तया कलङ्कित—सञ्जात[कल]ङ्कम्। अशेषेति।—अशेषाणा—समस्ताना,राजकाना—राजन्याना,प्रतापाग्ने.,—वीर्यवह्नेरित्यर्थ निर्वापणेन—प्रतिघातेन,

मलिनमिव करतलसम्पुटहन्तौ, (२००) योग्याकालेषु धीरैः धनुर्ध्वनिभिः अभ्यर्णोपभोगाय दिग्वधूभिः इवालपन्तौ, राज्यवर्द्धन इति हर्ष इति (२०१) सर्व्वस्यामेव पृथिव्याम् आविर्भूतशब्दप्रादुर्भावौ, स्वल्पीयसा एव कालेन द्वीपान्तरेषु अपि प्रकाशतां जग्मतुः।

एकदा च (२०२) तौ आहूय भुक्तवान् अभ्यन्तरगतः पिता सस्नेहम् अवादीत्,—"वत्सौ! प्रथमं राज्याङ्गं दुर्लभाः सद्भृत्याः। प्रायेण परमाणव इव समवायेषु अनुगुणीभूय द्रव्यं कुर्व्वन्ति पार्थिवं क्षुद्राः। क्रीड़ारसेन नर्त्तयन्तो मयूरतां नयन्ति

---

प्रशमनेन इत्यर्थः, ["निर्वापणं विशसनं मारण प्रतिघातनम्" इत्यमरः। "निर्वापण—" इत्यत्र "निर्वपण—" इति पाठान्तर न समीचीनम्; "प्रादेशनं निर्वपणम्—"इत्यमरानुशा ने निर्वपणशब्दस्य दानपर्य्याये प्रयोगदर्शनात्] मलिनमिव—मलदूषितमिव, मसीलि मिवेति भावः। वह्नेर्नीरप्रक्षेपणादिरूपसाधनमन्तरेण करतलाभ्यां निर्वापणं विरुद्धं, प्रतापवह्नेः इति समाधानात् सूर्य्यांशत्वात् करतलाग्निनिर्वापणसङ्गतेश्च विरोधाभासः।

(२००) योग्याकालेषु—अभ्यासकालेषु, ("योग्यः प्रवीणयोगार्हौ···। ··· स्त्र्यभ्यासार्कयोषितोः" इति मेदिनी) धीरैः,—गभीरैः, धनुर्ध्वनिभिः,—कार्म्मुकनिःस्वनैः, अभ्यर्णः,—सन्निहितः, प्रत्यासन्न इत्यर्थः, अचिरभावीति भावः, य उपभोगः,—दिक्पालानां विजयेन सम्भोगः तस्मै। ["अभ्यर्णोपभोगाय" इत्यत्र "अभ्यर्णोपभोगात्" इति पाठान्तरं, तत्राभ्यर्णोपभोगमभिप्रेत्येत्यर्थः, "ल्यब्लोपे कर्म्मण्यधिकरणे" (वा०) इति पञ्चमी]।

(२०१) सर्व्वस्या—समग्रायाम् इत्यर्थः, सार्व्वभौमैश्वरतनयत्वात् अलौकिकप्रभावशालित्वात् वा इति भावः। आविर्भूतेति।—आविर्भूतः,—प्रकाशितः, शब्दप्रादुर्भावः,—ख्यातिः ययोः तौ। स्वल्पीयसैव—अत्यल्पेनैव। द्वीपान्तरेषु—अन्येषु द्वीपेषु, जम्बूद्वीपातिरिक्तेषु द्वीपेषु इत्यर्थः, प्रकाशता—ख्याततामित्यर्थः; दुष्प्रतर्क्यशक्तिशालित्वात् इति भावः।

(२०२) तौ—राज्यवर्द्धन-हर्षाख्यकुमारौ। भुक्तवान्—कृताहारः, मध्यन्दिने इति भावः। अभ्यन्तरगतः,—अन्तःपुरवर्त्ती। प्रथमं—प्रधानभूतम्। राज्याङ्गं—राजकर्म्मणः अवयवः, राज्यपोषकमिति भावः। सद्भृत्याः,—सच्चरिताः अमात्या इत्यर्थः,

वालिशाः। (२०३) दर्पणमिवानुप्रविश्य आत्मीयां प्रकृतिं सङ्क्रामयन्ति पल्लविकाः। (२०४) स्वप्ना इव मिथ्यादर्शनैः

मैत्रचलय नरनाथानुरागयोः एकवासुलभत्वात् इति भावः। क्षुद्राः,—नीचाशयाः, साधारणा जना इत्यर्थः; अन्यत्र—क्षुद्राः. अतिसूक्ष्मावयवाः. परमाणव इव, समवायेषु—सम्मेलनेषु, मिलित्वा मन्त्रणाकार्य्येषु इत्यर्थः, संहतिषु च; समवायेषु अनुगुणीभूय युतसिद्धानामाधाराधेयभूतानां कथमिह प्रत्ययहेतुः इति सम्बन्धोऽयमिति समवायः; अनुगुणीभूय—अनुकूलीभूय. अनुकूलमतं प्रदर्श्य इत्यर्थः, प्रविश्य च. अन्योऽन्यमिति भावः, पार्थिवं—राजानं, द्रव्यं—सामान्य जनरूप वस्तु, स्वार्थसाधनाय उपकरणीभूतमिति यावत्, अस्थापिते स्थिरमनर्हं वादिति भावः; अन्यत्र.—पार्थिवं—पृथिवीसम्बन्धि, द्रव्यं—वस्तु, चित्यङ्कुरादिरूपमिति यावत्, प्रायेण बाहुल्येन, कुर्वन्ति—निष्पादयन्ति; "प्रायेण" इत्यनेन अदृष्टादिकमपि हेतुरत्र विद्यते, प्राधान्यन्तु पुरुषकारशाक्तमतां तेषामेव इति ध्वनितम्। नीचाशयाः प्रथमं मन्त्रणासदसि गत्वा राज्ञः अनुकूलमतं प्रकाश्य शनैः शनैः राजानम् आयत्तीकृत्य स्वमतानुवर्त्तिनं कुर्वन्ति इति समुदितार्थः। अत्रायमाशयः,—यथा समवायिकारणैः समवायसम्बन्धेन परमाणवः सम्भूय द्रव्याणि उत्पादयन्ति, तथा क्षुद्रा जनाः अनुगुणीभूय पार्थिवम् आत्मविधमिव घटयन्ति; क्षुद्राः भृत्याः परिहरणीया इति फलितम्। क्रीडारसेनेति। वालिशाः—धूर्त्ताः, [ वालाः सन्ति एषाम् इति वालिनः,—मूर्खाः, तान् श्यन्ति तनूकुर्वन्ति आत्मवशमापादयन्ति कपटान्तरितपरामर्शैः हीनविचारैः वा लघूकुर्वन्ति तथाक्ताः। वालपूर्वात् शोधातोः "आतोऽनुपसर्गे कः" (३।२।३ पा०) इति कः ] प्रकृत्यनुकूलवादुवाक्यादिभिः कोमलमतिखायत्तीकरणपटवः इत्यर्थः, शिशवश्च, ( "शिशावज्ञे च वालिशः" इत्यमरः ) क्रीड़ारसेन—क्रीड़ारागेण, नर्त्तयन्तः,—चालयन्त इत्यर्थः, नृत्यं कारयन्तश्च, मयूरता—धूर्त्तजनसेव्यतामित्यर्थः उपहास्यतां वा, शिखित्वञ्च, नयन्ति—प्रापयन्ति; बालका यथा क्रीड़या मयूरं नर्त्तयन्ति, तथा धूर्त्ताः अबोध नृपमन्यं वा क्रीड़ारसेन उत्थाय क्रीड़नकं कुर्व्वन्तीति भावः।

(२०३) दर्पणमिति।—दर्पं मन अनुप्रविश्य—अभ्यन्तरं प्रविश्य, समवानुकूलचाटुवादैः मनोरञ्जनं कृत्वा इति भावः राजानम् अन्यं वा इति शेषः, आत्मीयां प्रकृतिं—स्वभावं, प्रतिच्छायाञ्च, सङ्क्रामयन्ति समारोपयन्ति; दर्पणे यथा प्रतिबिम्बं भवति, तथा रञ्जनाङ्गनायाः कञ्चुकैः अभ्यन्तरं प्रविष्टैर्धूर्त्तैः चित्तरञ्जनेन राजा अन्यो वा स्वां प्रकृतिं धूर्त्ततां नीयते इति भावः। पल्लविकाः—विटाः।

(२०४) स्वप्ना इव—"स्वप्नो निद्रासुनेतस्य विषयानुभवस्तु यः इत्युक्तलक्षणा

असद्बुद्धिं जनयन्ति विप्रलम्भकाः। (२०५) गीतनृत्यहसितैः उन्मत्ततामावहन्ति उपेक्षिता विकारा इव वातिकाः। (२०६) चातका इव तृष्णावन्तो न शक्यन्ते ग्रहीतुमकुलीनाः। (२०७) मानसे मीनमिव स्फुरन्तमेव अभिप्रायं गृह्णन्ति जालिकाः। (२०८) यमपट्टिका इव अम्बरे चित्रमालिखन्ति उद्गीतकाः।

---

इव, मिथ्यादर्शनैः,—असच्छास्त्रैः, अलीकवस्तुप्रकटनैश्च, असतीम्—अशोभनां, दुष्टामित्यर्थः बुद्धिं—ज्ञानम्, असति—अविद्यमाने अलीके च, बुद्धिं—धियं, जनयन्ति—उत्पादयन्ति; निरन्तरमसत्प्रपञ्चप्रदर्शनपरत्वात् इति भावः। विप्रलम्भकाः,—प्रतारकाः, असन्मार्गप्रवर्त्तकाः इति भावः।

(२०५) गीतेति।—गीतं—गानं, नृत्यं—नर्त्तनं, हसितं—हासः तैः, उपेक्षिताः,—अवधीरिताः, अचिकित्सिता इत्यर्थः, वातिकाः,—वायुजनिता इत्यर्थः, ["तत आगतः" (४।३।७४ पा०) इति वातात् ठञि रूपम्] विकाराः,—रोगविशेषा इव, वातिकाः,—धूर्त्ताः, उन्मत्ततां—विकृतचित्तताम्, आवहन्ति—नयन्तीत्यर्थः, सदसद्विचारशक्तेर्दुर्बलीकरणात् इति भावः।

(२०६) चातका इव—तदाख्यपक्षिविशेषा इव, तृष्णावन्तः,—धनलुब्धाः, पिपासिताश्च, अकुलीनाः,—अकुलजाः, दुष्कुलजाता इत्यर्थः; अन्यत्र,—न कौ—पृथिव्यां, लीनाः,—स्थिताः, आकाशचारिण इत्यर्थः, ग्रहीतुं—वशीकर्त्तुं, धर्त्तुञ्च न शक्यन्ते—न पार्यन्ते; एकत्र,—दुष्टहृदयत्वात् खलप्रकृतिकत्वाच्च, अन्यत्र,—आकाशचारित्वात् इति भावः।

(२०७) मानसे इति।—जालिकाः,—कूटकारकाः, शठा इत्यर्थः, जालोपजीविनः कैवर्त्ताश्च, मानसे—चित्ते, तदाख्यसरसि च, स्फुरन्तं—विराजमानम्, अभिप्रायम्—आशयं, गृह्णन्ति—अवबुध्यन्ते, धरन्ति च; उभयत्र निरपराधसरलप्राणिनियन्त्रणं समानम् इत्याशयः।

(२०८) यमपट्टिका इवेति।—उद्गीतकाः,—अतिदुश्चरितत्वेन उच्चैर्गीतं—कीर्त्तनं येषां तथाभूताः, अतिदुर्विनीता इत्यर्थः, यमपट्टिका इव—यमस्य पट्टिका येषां ते, यमदूता इत्यर्थः, यमपट्टेन—यमपट्टप्रदर्शनेन जीवन्ति इति वा ते यमपट्टिकाः इति, अन्तकशासनप्रवक्तारः, गृहीतपट्टलिखितसपरिजनधर्मराजाः वा, ते इव, बहुव्रीहितद्धितान्तयोरनयोः ग्रहणं, स्त्रीलिङ्गपुंलिङ्गयोः उपमानोपमेयभावस्य साधुत्वाभावात्, अम्बरे—आकाशे, अभित्तौ इत्यर्थः, वस्त्रे च, चित्रम्—

(२०९) शल्यं हृदये निक्षिपन्ति अतिमार्गणाः। (२१०) यतः सर्वैर्दोषाभिषङ्गैः असङ्गतौ बहुधा उपधाभिः परीक्षितौ शुची विनीतौ विक्रान्तौ अभिरूपौ मालवराजपुत्रौ भ्रातरौ भुजौ इव मे शरीरात् अव्यतिरिक्तौ कुमारगुप्त-माधवगुप्तौ अस्माभिर्भवतोः अनुचरत्वार्थम् इमौ निर्दिष्टौ। अनयोः उपरि भवद्भ्यामपि न अन्यपरिजनसमवृत्तिभ्यां भवितव्यम्" इत्युक्त्वा तयोः आह्वानाय प्रतीहारम् आदिदेश।

(२११) न चिरात् द्वारदेशनिहितलोचनौ राज्यवर्द्धन-हर्षौ

---

आश्चर्यम्, असम्भावनीयं वस्तु इति भावः, आलिखन्ति—चित्रयन्ति; यमदूता यथा अतर्कितमेव स्वव्यापारमनुतिष्ठन्ति, तथा तादृशा धूर्त्ताः सहसा असम्भाव्यमनिष्टमुत्पादयन्ति; यद्वा,—यमपट्टिका यथा विविधं चित्रं यमपुरवृत्तं वस्त्रे आलिख्य दर्शयित्वा विस्मयमुत्पादयन्ति, तथा धूर्त्ता आकाशकुसुमोपमं विविधं सुख-चित्रं प्रदर्श्य राजानमायत्तीकुर्व्वन्तीति भावः।

(२०९) शल्यमिति।—अतिमार्गणाः,—अत्यर्थमन्वेषणपराः, अतिशयेन छिद्रान्वेषिण इत्यर्थ, बाह्यभक्तिप्रदर्शिनः धूर्त्तविशेषाः इति भावः, तीक्ष्णशराश्च; ("मार्गणो याचके शरे। याच्ञाऽन्वेषणयोः क्लीवम्" इति मेदिनी) हृदये—अन्तरात्मनि, वक्षसि च, शल्य—व्यथाविशेष, स्व फलकञ्च; निक्षिपन्ति—निदधतीत्यर्थः।

(२१०) यत इति।—यतः,—यस्मात्, सर्वैः दोषाभिषङ्गैः,—दोषैः,—अविनयादिभिः, अभिषङ्गाः,—पराभवाः तैः, ("अभिषङ्गः पराभवे" इत्यमरः) असङ्गतौ—असंसृष्टौ, सर्व्वदोषविनिर्मुक्तौ इत्यर्थः। बहुधा—बहुना प्रकारेण, उपधाभि,—छलैः, भृत्यानां परीक्षणोपायविशेषैरित्यर्थः, "उपेत्याधीयते यस्मादुपधेति ततः स्मृता। उपाय उपधा ज्ञेया तया भृत्यान् परीक्षयेत्॥" इत्युक्तेः; परीक्षितौ—अवेक्षितौ। शुची—विशुद्धचरितौ। विनीतौ—विनयवन्तौ। विक्रान्तौ—पराक्रम-शालिनौ। अभिरूपौ रमणीयौ, सुन्दराकृती इत्यर्थः। ("अभिरूपो बुधे रम्ये" इति मेदिनी)। अव्यतिरिक्तौ—अभिन्नौ। अनुचरत्वार्थं—साहचर्य्यार्थम्। इमौ इति।—तत्र अवर्त्तमानयोरपि तयोरनन्तरमेव आगमनात् इदंशब्देन निर्द्देशो ज्ञेयः। निर्द्दिष्टौ—निरूपितौ। तयोः,—मालवराजपुत्रयोः कुमारगुप्त-माधवगुप्तयो भ्रात्रोः।

(२११) "न चिरात्" इत्यस्य "राज्यवर्द्धन-हर्षौ कुमारगुप्तं पृष्ठतः तस्य···

प्रतीहारेण सह प्रविशन्तम्, अग्रतो ज्येष्ठम् अष्टादशवर्षवयसं, नात्युच्चं, नातिखर्व्वम्, अतिगुरुभिः पदन्यासैः अनेकनरपति-सञ्चरणचलां निश्चलीकुर्व्वाणम् इव उर्व्वीम्, (२१२) अनवरताभ्यस्तलङ्घनघनोपचयकठिनमांसमेदुरात् ऊरुद्वयात् निष्पतन्तेव अनुल्बणजानुग्रन्थिप्रसूतेन तनुतरजङ्घाकाण्डयुगलेन भासमानम्, (२१३) उल्लिखितपार्श्वप्रकाशितकृशिम्ना मन्दरमिव सुरासुररभसभ्रमितवासुकिकर्षणक्षीणेन मध्येन लक्ष्यमाणम्,

---

माधवगुप्तं ददृशतुः" इत्यग्रेण सम्बन्धः। प्रथम तावत् कुमारगुप्तं विशिनष्टि, प्रतीहारेणेत्यादिभिः।—प्रतीहारेण—दौवारिकेण। अष्टादशवर्षवयसम्—अष्टादशवर्षाः वय यस्य तादृशम्। अतिगुरुभिः,—अतिभारवद्भिः, सत्त्वसारत्वादिति भाव., पदन्यासैः,—पदविक्षेपैः। अनेकेति।—अनेकेषु—बहुषु, नरपतिषु—राजसु, सञ्चरणेन—सङ्क्रमणेन, चलां—चञ्चलाम्, एकत्रास्थायिनीमित्यर्थः, बहुस्वामिकामिति भावः। निश्चलीकुर्वाणमिव—स्थिरीकुर्व्वाणमिव, एकस्वामिकां कुर्वाणमिव इत्यर्थ। उर्वीं—पृथ्वीम्।

(२१२) अनवरतेति।—अनवरतम्—अविच्छेदं यथा तथा, अभ्यस्तेन—पुनः पुन शीलितेन, लङ्घनेन—उत्प्लवनेन, उल्लम्फनेन इति यावत, बाल्यसुलभाचारात इति भावः, घनं—सान्द्र, निबिडमिति यावत्, उपचयेन—वृद्ध्या, कठिनम्—अशिथिल, दृढमित्यर्थः, यत् मांसं, तेन मेदुरं—पुष्टं तस्मात्, ["भञ्जभास—" (३।२।१६१ पा०) इत्यादिना घुरचि रूपम्] ऊरुद्वयात्—ऊरुयुगलात्, निष्पततेव—निर्गच्छतेव। अनुल्बणेति।—अनुल्बणः,—अनुत्कटः, यः जानुग्रन्थिः,—जङ्घोर्वोः सन्धिः, तस्मात् प्रसूतम्—उद्भूतं तेन, "तनुतरजङ्घाकाण्डयुगलेन—तनुतरः,—क्षीणतरः, ऊर्ध्वापेक्षया इति भाव, यः जङ्घाकाण्डः,—प्रसृतादण्डः, जानु-गुल्फयोरन्तरदेश इत्यर्थः, तद्युगलेन—तद्द्वयेन, कृशतरजङ्घाकाण्डद्वयेन इत्यर्थः, भासमान—राजमान, मांसलोरु-तनुजान-शालित्वस्यातिरमणीयत्वात् इत्याशयः।

(२१३) उल्लिखितेति।—उल्लिखितेन—तनूकृतेन, ("स्यादुल्लिखितमुत्कीर्णं तनूकृते च वाच्यवत्" इति मेदिनी) पार्श्वेन—पार्श्वदेशेन, प्रकाशितः,—प्रकटितः, कृशिमा—कार्श्यं यस्य तेन। सुरेति।—सुराश्च असुराश्च ते, रभसेन—वेगेन; भ्रमितस्य—सञ्चालितस्य, वासुकेः,—नागराजस्य, कर्षणेन—घर्षणेन, क्षीणः—कृशः तेन, मध्येन—मध्यभागेन, कटिदेशेन इत्यर्थः। मन्दरमिव—मन्दराचलमिव, उन्न-

अतिविस्तीर्णेन उरसा स्वामिसम्भावनानाम् अपरिमितानाम् अवकाशम् इव प्रयच्छन्तम्, (२१४) प्रलम्बमानस्य भुजयुगलस्य निभृतललितैः विक्षेपैः अतिदुस्तरं तरन्तमिव यौवनोदधिं, (२१५) वामकरकटकमाणिक्यमरीचिमञ्जरीजालिन्या समुद्भिद्यमानप्रतापानलशिखापल्लवियेव चापकिणलेखया अङ्कितपीवरप्रकोष्ठम्, (२१६) आलोहिनीम् उच्चांसतटावलम्बिनीम् अस्त्रग्रहणव्रतविधृतां रौरवीम् इव त्वचं कार्ष्णा[illegible]मणेः प्रभा

सार्यं—दृश्यमानम्। घर्षणेन मन्दराद्रेः तथा तानवासम्भवात् मराम्बन्धे सम्बन्धरूपातिशयोक्तिः उपमासङ्कीर्णा] अतिविस्तीर्णेन—अतिविशालेन, उरसा—वक्षःस्थलेन, स्वामिसम्भावनानां—प्रभुसमादराणां, प्रभोः स्नेहानामिति भावः, अवकाशमिव—स्थानमिव, प्रयच्छन्तं—ददतम्।

(२१४) प्रलम्बमानस्य—आयतस्य इत्यर्थः। निभृतललितैः—निभृताः—विनीताः, विनयसूचका इत्यर्थः. ललिताः,—रम्याश्च ते, विक्षेपैः,—सञ्चालनविशेषैः. अतिदुस्तरं—दुःखेनापि लङ्घितुमशक्यं, स्खलनेनापि स्खलनेन मज्जनसम्भवादिति भावः, यौवनोदधिं—तारुण्यसागरम्, अतलस्पर्शिविषयरसरागमकरादिसङ्कुलत्वात् तथात्वम् इति हृदयम्।

(२१५) वामेति।—वामकरे—सव्यहस्ते, यः कटकः—वलयः, तत्र यत् माणिक्यं—रत्नविशेषः, तस्य मरीचयः,—मयूखा एव, मञ्जर्यः, वल्लर्यः, अभिनवोद्गताः सुकोमलाः पल्लवाङ्कुररूपा इत्यर्थः., तासां जालं—समूहः अस्ति अस्यामिति तथोक्तया। समुद्भिद्यमानेति।—समुद्भिद्यमानाः,—समुद्भेदं नीयमानाः, प्रतापानलस्य—वीर्यवह्नेः, शिखा एव—ज्वाला एव, पल्लवाः,—किसलयाः यस्याः तथाभूतया, शिखायाश्च लोहितिमाभासत्वात् इति भावः. चापकिणलेखया—धनुर्धारणजनितकलङ्करेखया। अङ्कितेति।—अङ्कितः,—चिह्नितः, पीवरः,—पुष्टः, प्रकोष्ठः,—कूर्परमणिबन्धयोः अन्तरालभागः यस्य तथोक्तम्।

(२१६) आलोहिनीम्—आरक्ताम्, ईषद्रक्तामित्यर्थः, [आलोहितशब्दात् "वर्णादनु—" (४।१।३९ पा०) इत्यादिना ङीपि तकारस्य नकारादेशे सिद्धम्] उच्चांसतटावलम्बिनीम्—उच्चम्—उन्नतम्, अंसतटं—स्कन्धदेशम्, अवलम्बते—आश्रयतीति तथोक्ताम्। अस्त्रेति।—अस्त्रग्रहणमेव व्रतं—नियमः, तस्मै विधृता—गृहीता, रौरवीमिव—रुरुः,—मृगविशेषः तत्सम्बन्धिनीमिव, त्वचं—चर्म, "कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः। वसीरन्नानुपूर्वेण शाणक्षौमाविकानि च॥

बिभ्राणम्, (२१७) उत्कोटिकेयूरपत्रभङ्गपुत्त्रिकाप्रतिबिम्बगर्भ-कपोलं मुखं चन्द्रमसम् इव हृदयस्थितरोहिणीकम् उद्वहन्तम्, (२१८) अचपलस्तिमिततारकेण अधोमुखेन चक्षुषा शिक्षयन्तमिव लक्ष्मीलाभोत्तानितमुखानि पङ्कजवनानि विनयं, स्वाम्यनुरागमिव अम्लातकम् उत्तंसीकृतं शिरसा धारयन्तं, (२१९) निर्दयया कङ्कणभङ्गभीतसकलकासुंकार्पितामिव

---

इति भगवता मनुना क्षत्रियब्रह्मचारिणां रौरवचर्माच्छादनस्योक्तत्वादिति भावः कर्णाभरणमणेः,—कर्णालङ्काररत्नस्य, प्रभा—कान्तिं, बिभ्राणं—दधानम्।

(२१७) उत्कोटीति।—उत्—उद्गता, कोटिः—अग्रभागः, कोणो वा यस्य, तादृशः यः केयूरपत्रभङ्गः,—अङ्गदपत्रभङ्गः, अङ्गदस्थपत्राकाररचनाविशेषः तत्र या पुत्त्रिका—पुत्तलिकाऽऽकृतिः, तस्याः प्रतिबिम्बः—प्रतिच्छाया, गर्भे—मध्ये यस्य तादृशौ, कपोलौ—गण्डौ यस्य तथाभूतं, मुखं—वदनम्। हृदयेति।—हृदये—उरसि, स्थिता—विराजिता रोहिणी—स्वप्रिया यस्य तथाविधं, चन्द्रमुखम् इति भावः।

(२१८) अचपलेति।—अचपला—अचञ्चला, स्तिमिता—स्थिरा, तारका—कनीनिका यस्य तेन, अधोमुखेन—नतेन, विनयावनम्रेणेति भावः। लक्ष्मीति।—लक्ष्म्याः,—श्रियाः, लाभेन—प्राप्त्या, उत्तानितानि—उन्नमितानि, नीचाश्रयसुलभ-गर्वादिति भावः, मुखानि येषां तानि, पङ्कजवनानि—पद्मवनानि, विनयं—शिष्टाचारं, शिक्षयन्तमिव—सम्पत्समये नैव औद्धत्यं प्रदर्शितव्यमिति उपदिशन्तमिव इत्यर्थः [अत्र "गतिबुद्धि—" (१।४।५२ पा०) इति सूत्रेण अणौ कर्तृणां कमलवनानां कर्मत्वं, भौवादिकस्य "शिक्षते" इत्यस्य अभ्यासार्थकत्वेन ज्ञानसामान्यार्थकत्वात्, णौ तस्य प्रयोज्यकर्तुः कर्मत्वं वेदितव्यम्; अत एव वृत्तौ दीक्षिता,—"ज्ञानसामान्यार्थानामेव ग्रहणं, न तु तद्विशेषार्थानाम्" इति] सवर्गीयैः गर्वितसर्वैर्गीयोपदेशनस्य समाहृतत्वात् एतेनास्य कमललोचनत्वं ध्वनितम्। स्वाम्यनुराग—प्रभुभक्तिम्। अम्लातक—पुष्पविशेषं, कुरण्टिकापुष्पमिदमिति यावत्, "आमृडा" इति वङ्गीयैराख्यातम् आम्रातकवृक्षं वा तस्य मुकुलमिति भावः। उत्तंसीकृत—शेखरतां नीतम्।

(२१९) निर्दयया—दयाराहित्येन, काठिन्येन इति भावः; ["निर्दयया इत्यत्र "निर्दयतया" इति पाठः कल्पनीयतया प्रतिभाति, दयानामभावः इति विग्रहाव्ययीभावे कृते, मत्वर्थस्य प्राधान्येन विवक्षितत्वे, निर्मक्षिकमित्यादिवत्

नम्रतां प्रकाशयन्तं, शैशवे एव निर्जितैः इन्द्रियैः अरिभिरिव संयतैः शोभमानं, प्रणयिनीमिव (२२०) विश्वासभूमिं कुलपुत्रताम् अनुवर्त्तमानं, (२२१) तेजस्विनमपि शीलेन आह्लादकेन सवितारमिव शशिना अन्तर्गतेन विराजमानम्,(२२२)अचलानामपि कायकार्कश्येन गन्धनम् इव आचरन्तं, दर्शनक्रीतम् आनन्दहस्ते विक्रीणानमिव जनं सौभाग्येन कुमारगुप्तं, पृष्ठतः

निर्दयमिति पदं प्रसज्येतेति विभावनीयम्]। कङ्कणेति।—कङ्कणस्य—हस्ताभरणस्य वलयस्य, भङ्गात्—खण्डात्, भीतं—वस्तं, सकलं कार्मुकं—धनुः, तेन अर्पितां—मा एवं निर्दयतां कुर्विति शिक्षाकल्पितामिति भावः, नम्रतां—विनीतत्वम्। शैशवे एव—बाल्ये एव, निर्जितैः,—वशीकृतैः, इन्द्रियैः,—चक्षुरादिभिः, अरिभिरिव—शत्रुभिरिव, संयतैः,—निगड़ितैः; सततशास्त्रव्यायामादिव्यसनवत्त्वात् जितेन्द्रियम् अविलासिनञ्च इति भावः।

(२२०) विश्वासभूमिं—प्रत्ययभाजनम्। कुलपुत्रतां—कुलीनताम्, अनुवर्त्तमानम्—अनुसरन्तं, सत्कुलोत्पन्नतया अवश्यमेव विश्वसनीयमिति भावः।

(२२१) तेजस्विनमपि—प्रतापवन्तमपि। शीलेन—चरित्रेण, निर्मलेनेति भावः। आह्लादकेन—आह्लादयतीति तेन, आनन्दजनकेन, सदा प्रसन्नेन शान्तेन च इत्यर्थः। अन्तर्गतेन—हृदयावस्थितेन; अन्यत्र,—बिम्बागतेन इत्यर्थः, विरुद्धधर्म्मयोरसामानाधिकरण्यादिति भावः, एतेनास्य अदाम्भिकत्वं प्रकटितम्। उष्णशीतलत्वाद्यपूर्व्वयोगवैलक्षण्यं महानुभावेष्वेव "भीमकान्तैर्नृपगुणैः" इत्याद्युक्तपात्रवाक्यैः सूचितम्; सत्स्वपि तेजस्वितादिगुणसङ्घेषु निशायां तेजस्वितपनः यथा निशाकरमनुप्रविष्टः जनानां नयनसन्तर्पणः भवति, तथा अयमपि विनयादिगुणग्रामयोगात् सर्व्वेषां हृदयग्राही अभूदिति तात्पर्य्यम्।

(२२२) अचलानामपि - पर्व्वतानामपि, कायकार्कश्येन—अङ्गकाठिन्येन, गन्धनमिव—हिंसनमिव, विमर्दनमिवेत्यर्थः, पराभवमिवेति भावः, ("उत्साहने च हिंसाया सूचने चापि गन्धनम्" इत्यमरः) आचरन्तं—कुर्वाणं, पर्व्वतादपि दृढ़शरीरमिति तात्पर्य्यम्। दर्शनक्रीतं—दर्शनेन—दृष्टिमात्रेण, क्रीतम्—आयत्तीकृतं, स्वयमेव वशङ्गतमिति यावत्, जनं सौभाग्येन—प्रणयित्वेन, आभाषणादिना आनन्दोत्पादनेनेत्यर्थः, आनन्दहस्ते—आह्लादकरे संस्थाप्य इत्यर्थः, [औपश्लेषिकाधिकरणे सप्तमी] तत्र नानुचरादिपरम्परया इति भावः, विक्रीणानमिव—विक्रय

तस्य कनीयांसम् अतिप्रांशुतया गौरतया च मनःशिला-शैलमिव सञ्चरन्तम्, (२२३) अनुल्वणमालतीकुसुमशेखर-निभेन निर्जिगमिषता गुरुणा शिरसि चुम्बितमिव यशसा, पर-स्परविरुद्धयोः विनय-यौवनयोः चिरात् प्रथमसङ्गमचिह्नमिव भ्रूसङ्गतकेन कथयन्तम्, अतिधीरतया हृदयनिहितां स्वामि-भक्तिम् इव निश्चलां दृष्टिं धारयन्तम्, (२२४) अच्छाच्छचन्दन-रसानुलेपशीतलं सन्निहितहारोपधानं वक्षःस्थलम् अनन्त-

कुर्वाणमिव, भूयसा जनं सानन्दं कुर्वाणमिव इत्यर्थः। एतेन जनानां विमुग्धीकरणं व्यज्यते। कस्यापि कार्य्यस्यार्थं यद्वस्तु प्राक् क्रीयते, पश्चात प्रभूतलाभार्थं तदन्यस्यापि विक्रीयते इति लोकदृष्टम्; प्रकृते तु प्रथमतः खस्य सौम्यमूर्त्तितया दर्शनेनैव क्रीतः, पश्चात्तु हर्षोत्पादनार्थमानन्दहस्ते जनः विक्रीत इति फलितम्। कनीयांसं—कनिष्ठम्। अतिप्रांशुतया—अत्युन्नतकायत्वेन, गौरतया—गौराङ्गत्वेन च, मनःशिला-शैलमिव—मनःशिला—मनोह्वा, उपधातुविशेष इति यावत्, तस्य शैलमिव—तन्मयपर्व्वतमिव, तस्य तथोन्नतत्वात् मनःशिलासद्भावेन गौराङ्गत्वाच्च इति भावः।

(२२३) अनुल्वणेति।—अनुल्वणं—सौम्यं, शुभदर्शनमित्यर्थः, यत् मालती-कुसुमशेखरं—मालतीपुष्पशिरोमाल्यं, (शेखरस्य अनुल्वणता विनयव्यञ्जिका ज्ञातव्या) तन्निभेन—तद्व्याजेन, निर्जिगमिषता—निर्गन्तुमिच्छता, :प्रकाशमानेन इति भावः, गुरुणा—महता, पितादिगुरुजनेन च, यशसा—कीर्त्त्या, शिरसि चुम्बित-मिव—स्पृष्टमिव, कृतचुम्बनमिव च, आघ्रातमिवेत्यर्थः; पितादिगुरुजनेन च प्रवासं गच्छता पुत्रादयः शिरसि चुम्ब्यन्ते इति व्यवहारः। परस्परविरुद्धयोः,—अन्योऽन्यविरोधिनोः, यौवनकालस्य उद्धतप्रकृतिकत्वात् विनयस्य च तद्विरोधित्वात् तयोरेकत्रावस्थानासम्भवाद्दिति भावः, प्रथमसङ्गमचिह्नमिव—प्रथमसम्मेलनलक्षणमिव, भ्रूसङ्गतकेन—भ्रुवोः सङ्गतकं—सम्मेलनं तेन, कथयन्तं—सूचयन्तं, यथा भ्रुवौ मम परस्परविरोधिन्यौ युक्ते, तथा विनययौवने परस्परमविरोधिनी सती अत्र स्यास्तः इति भ्रूयुग्मसम्मेलनव्याजेन प्रकटयन्तमिव इत्यर्थः; एतेनायं युग्मभ्रूरिति व्यञ्जितम्। निश्चलाम्—अचञ्चलां, धीरामित्यर्थः।

(२२४) अच्छेति।—अच्छाच्छः,—अतिस्वच्छः, यः चन्दनरसः,—श्रीखण्ड-द्रवः, तस्य अनुलेपेन—अङ्गे प्रलेपनेन, शीतलं—हिमम्। सन्निहितेति।—सन्निहितश्च

क्षामन्तसङ्क्रान्तिश्रान्तायाः श्रियो विशालं शशिमणिशिलापट्टशयनमिव बिभ्राणं. (२२५) चक्षुः कुरङ्गकैः, घोणावंशं वराहैः, स्कन्धपीठं महिषैः, प्रकोष्ठबन्धं व्याघ्रैः, पराक्रमं केसरिभिः, गमनं मतङ्गजैः मृगयाक्षपितशेषैर्भीतैः उत्कोचमिव दत्तं दर्शयन्तं माधवगुप्तं ददृशतुः।

प्रविश्य च दूरादेव (२२६) चतुर्भिः अङ्गैः उत्तमाङ्गेन च गां स्पृशन्तौ नमश्चक्रतुः स्निग्धनरेन्द्रदृष्टिनिर्दिष्टाम् उचितां भूमिं भेजाते। मुहूर्त्तञ्च स्थित्वा भूपतिः आदिदेश तौ,—

—समीपस्थितस्य, परिहितस्येत्यर्थः, हारस्य उपधानम्—उपबर्हम्, आश्रयमित्यर्थः, हारशोभितम् इति भावः। अनन्तेति।—अनन्तेषु—असंख्येयेषु, सामन्तेषु—अधीनराजसु, या सङ्क्रान्तिः,—सङ्क्रमणं, सञ्चरणमित्यर्थः, तया श्रान्ता—क्लान्ता तस्याः, श्रियः,—लक्ष्म्याः, विशालं—विस्तृतं, प्रशस्तमित्यर्थः, शशिमणिशिलापट्टशयनमिव—चन्द्रकान्तमणिप्रस्तरफलकशय्यामिव; श्रान्तजनैः शीतलप्रशस्तशुभ्रशयनीये शयित्वा विश्रम्यते इति भावः। एतेनास्य कवाटोरस्कत्वं प्रकटीकृतम्। सुखकरदृढाश्रये एव शय्यते इति मनोरमाधारोऽयं रमायाः विश्रामस्य इति ध्वनितम्।

(२२५) चक्षुः,—नेत्रं. कुरङ्गकैः,—मृगविशेषैः, दत्तमित्यन्वयः, एवमुत्तरत्र। घोणावंशं—नासादण्डम्। स्कन्धपीठम्—अंसतटम्। प्रकोष्ठबन्धं—हस्तावयवबन्धविशेषम्। केशरिभिः,—सिंहैः। मतङ्गजैः,—गजैः। मृगयेति।—मृगयया—आखेटाचरणेन, क्षपिताः,—नाशिताः, तेभ्यः शेषाः,—अवशिष्टाः तैः, भीतैः,—त्रस्तैः, सर्वानेव मृगसमूहानयं विनाशयिषति, इदानीम् अस्मानपि चेत् क्षपयिष्यति इति धिया शङ्कितैः इत्यर्थः। उत्कोचमिव—दत्तविशेषमिव। एतेनास्य कुरङ्गनेत्रत्वम्, उन्नतघोणत्वं, वृषस्कन्धत्वं, पीनप्रकोष्ठत्वं, सिंहविक्रमत्वं, गजगतित्वञ्च प्रकटीकृतम्; अतीवरमणीयाकृतिः पराक्रान्तश्चायमिति भावः।

(२२६) चतुर्भिरिति।—चतुर्भिरङ्गैः,—जानुभ्यां हस्ताभ्याञ्च इत्यर्थः, उत्तमाङ्गेन—शिरसा। गां—भुवम्; अनेन पञ्चाङ्गः प्रणामः प्रदर्शितः। स्निग्धेति।—स्निग्धेन—वत्सलेन, स्नेहशालिनेत्यर्थः, नरेन्द्रेण—राज्ञा प्रभाकरवर्द्धनेन, दृष्ट्या—नेत्रेण, चैवसंज्ञयेत्यर्थः, निर्दिष्टा—प्रदर्शिता ताम्; स्निग्धेति दृष्टिविशेषणं वा; उचितां—योग्यां, सम्राट्समीपे स्वपदमर्य्यादानुसारेण उपवेशनार्हामित्यर्थः, भूमिं—स्थानम्, आसन-

"अद्य प्रभृति भवद्भ्यां (२२७) कुमारौ अनुवर्त्तनीयौ" इति। "यथा आज्ञापयति देवः" इति मेदिनीदोलायमानमौलिभ्याम् उत्थाय राज्यवर्द्धन-हर्षौ प्रणेमतुः; तौ च पितरम्। ततश्च आरभ्य क्षणमपि (२२८) निमिषोन्मेषौ इव चक्षुर्गोचरात् अनपयान्तौ, उच्छ्वास निश्वासौ इव नक्तन्दिवम् अभिमुखस्थितौ, भुजौ इव सततपार्श्ववर्त्तिनौ कुमारयोः तौ बभूवतुः।

(२२९) अथ राज्यश्रीरपि नृत्यगीतादिषु विदग्धासु सखीषु सकलासु कलासु च प्रतिदिनमुपचीयमानपरिचया शनैः शनैः अवर्द्धत, (२३०) परिमितैरेव दिवसैः यौवनम् आरुरोह।

---

मिति भावः, भेजाते—सिषेवाते, उपविविशतुरित्यर्थः, गुरुजनानुमतस्य आसनग्रहण-नियमात् इति भावः। तौ—कुमारगुप्त-माधवगुप्तौ।

(२२७) कुमारौ—राज्यवर्द्धन-हर्षाख्यौ। अनुवर्त्तनीयौ—अनुसरणीयौ, संसेवनीयौ इत्यर्थः, सहजनद्भावेन इत्याशयः। मेदिनीति।—मेदिन्या—भूमौ, दोलायमानौ—विलुठन्तौ, मौलौ—किरीटौ धम्मिल्लौ वा ययोः ताभ्याम्, धरणीपृष्ठे अवनमितशिरोभ्यामिति भावः। तौ च—राज्यवर्द्धन-हर्षौ च, पितरं प्रणेमतुरित्यनेनान्वयः।

(२२८) निमिषोन्मेषौ इव—निमीलनोन्मीलने इव, चक्षुर्गोचरात्—दृष्टिविषयात्, अनपयान्तौ अबहिर्गच्छन्तौ, निमिषोन्मेषौ यथा कदाचित् नेत्र न त्यजतः, तथा अत्यक्तसमीपौ इत्यर्थः। नक्तन्दिव—रात्रिन्दिनम्। [ अचतुर—" (५।४।७७ पा॰) इत्यादिना समासः] अभिमुखस्थितौ—अभिमुख—मुखसमीपे, सम्मुखे इत्यर्थः, स्थितौ—वर्त्तमानौ; उच्छ्वास-निश्वासावपि सदैव मुखसमीपे प्रवहन्तौ वर्त्तेते। सततपार्श्ववर्त्तिनौ—निरन्तरपार्श्वचारिणौ; कार्यसाधनाय रक्षणाय वा इति भावः, बाहू अपि सदैव पार्श्वदेशे लम्बेते।

(२२९) राज्यश्रीः—तदाख्या राजदुहिताऽपि। विदग्धासु—चतुरासु, सखीषु—सुहृत्सु, इवेति भावः, नृत्यगीतादिषु—नर्त्तन-गानादिषु; सखीनामिव नृत्य-गीतादीनामपि चित्तविनोदित्वादिति भावः। कलासु—चतुःषष्टिविधासु विद्यासु। [ उपचीयमान—" इत्यत्र "समुपचीयमान—" इति पाठान्तरम् ]।

(२३०) परिमितैरेव—अल्पैरेव, अतियत्नेन परिपालनात् इति भावः।

निपेतुः एकस्यां तस्यां शरा इव लक्ष्यभुवि भूभुजां सर्वेषां दृष्टयः। दूतप्रेषणादिभिश्च तां ययाचिरे राजानः।

कदाचित्तु राजा अन्तःपुरप्रासादस्थितो (२३१) वाह्यकक्ष्यावस्थितेन पुरुषेण स्वप्रस्तावागतां गीयमानामार्य्यामशृणोत्,—

"उद्वेगमहाऽऽवर्त्ते पातयति पयोधरोन्नमनकाले।
सरिदिव तटमनुवर्षं विवर्द्धमाना सुता पितरम्" ॥ ५ ॥

(२३२) तां च श्रुत्वा पार्श्वस्थितां महादेवीम् उत्सारितपरिजनो जगाद,—"देवि! तरुणीभूता वत्सा राज्यश्रीः। एतदीया गुणवत्तेव क्षणमपि हृदयात् नापयाति मे चिन्ता। यौवनारम्भ

---

एकस्यां तस्यां—केवलायां राज्यश्रियां, विशेषाग्रहात् इति भावः। लक्ष्यभुवि—शरव्यविषये। भूभुजां—राज्ञाम्।

(२३१) वाह्येति।—वाह्या—वहिः स्थिता, कक्ष्या—प्रकोष्ठः, "महल" इति भाषा, तत्र अवस्थितः तेन। स्वस्य—आत्मनः, प्रस्तावः,—कन्यादानविषयकः प्रसङ्गः, तेन तत्र वा आगता—उपस्थिता तां, कन्यादानविषयिणीमिति भावः, गीयमानां—कीर्त्त्यमानाम्, आर्यां—छन्दोजातिं, "यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके साऽऽर्य्या॥" इत्युक्तलक्षणाम्।

यौवनपदवीमारोढुमुद्यतायाः अनूढायाः कन्यायाः पितुः सदैवाशङ्कित्वं प्रस्तावानुकूलं यदृच्छाक्रमेण पुरुषमुखात् वर्णयति, उद्वेगेति।—अनुवर्षं—प्रतिवर्षं, प्रतिवृष्टि च, विवर्द्धमाना—वृद्धिं गच्छन्ती; एकत्र,—क्रमशः यौवनोन्मेषेण, अन्यत्र,—अजस्रवर्षजलपूरेण इति भावः, सुता—कन्या, पयोधरोन्नमनकाले—स्तनोद्गमसमये, मेघोदयकाले च, पितरं—जनयितारं, सरित्—नदी, तटमिव—कूलमिव, उद्वेगः,—उद्वेजन, व्याकुलचित्तता इत्यर्थः, स एव महान् आवर्त्तः,—जलभ्रमिः, उद्वेग इव महान् आवर्त्तश्च तस्मिन्; यद्वा,—उत्—उद्गतः, वेगः,—रयः यस्य तादृशः महान् आवर्त्तः तस्मिन्, पातयति—निक्षिपति; कन्यादायो नदीवेग इव महोद्वेगजनकः, कुल-कूलध्वंसाशङ्कोदयात् इति भावः। उपमाऽलङ्कारः॥ ५॥

(२३२) ताम्—आर्य्याम्। महादेवीं—यशोवतीम्। उत्सारितपरिजनः,—अपसारितपरिवारवर्गः, निभृतमन्त्रणाकरणस्यौचित्यात् इति भावः। तरुणीभूता—प्राप्तयौवना। एतदीया—एतत्सम्बन्धिनी, राज्यश्रीविषयिणीत्यर्थः।

एव च कन्यकानाम् (२३३) इन्धनीभवन्ति पितरः सन्तापानलस्य। हृदयम् अन्धकारयति मे दिवसमिव (२३४) पयोधरोन्नतिः अस्याः। केनापि कृता धर्म्या नाभिमता मे स्थितिः इयं, यत् अङ्गसम्भूतानि अङ्कलालितानि अपरित्याज्यानि अपत्यकानि अकाण्ड एवागत्य असंस्तुतैर्नीयन्ते। एतानि तानि खलु अङ्कनस्थानानि संसारस्य। सेयं (२३५) सर्वाभिभाविनी शोकाग्नेः दाहशक्तिः, यत् अपत्यत्वे समाने जातायां दुहितरि दूयन्ते सन्तः। एतदर्थं जन्मकाल एव कन्यकाभ्यः प्रयच्छन्ति सलिलम् अश्रुभिः साधवः। (२३६) एतद्भयात् अकृतदारपरिग्रहाः परिहृतगृहवसतयः शून्यानि अरण्यानि अधिशेरते

(२३३) इन्धनीभवन्ति—काष्ठभूता भवन्ति। सन्तापानलस्य—उद्वेगाग्नेः, कथमेषा पात्रसात् क्रियते, यदि अपात्रगता स्यात् तदाऽतीव दुःखमिति चिन्ताऽग्नेरिति भावः।

(२३४) पयोधरोन्नतिः,—स्तनोद्गमः, मेघोदयश्च। केनापि—अज्ञातनाम्ना, नियन्त्रेति भावः, कृता—विहिता, प्रवर्त्तिता इत्यर्थः, धर्म्या—धर्मादनपेता, [ "धर्म्मपथ्यर्थ—" (४।४।९२ पा०) इत्यादिना यत्प्रत्यये रूपम् ] इयम्—एषा, कन्याया भर्त्तृभवनगमनरूपा इत्यर्थः, स्थितिः,—मर्य्यादा, सदाचार इत्यर्थः, मे—मम,न अभिमता —न सम्मता, न अनुमोदिता इत्यर्थः। अङ्गसम्भूतानि—देहोत्पन्नानि, आत्मजानीत्यर्थः, अङ्कलालितानि—उत्सङ्गवर्द्धितानि, अपरित्याज्यानि—परित्यक्तुमयोग्यानि, अपत्यकानि—कन्या इत्यर्थः, अकाण्डे एव—असमये एव, हठादेव इत्यर्थः। असंस्तुतैः,—अपरिचितैः, जनैरिति शेषः। ( "संस्तवः स्यात् परिचयः" इत्यमरः ) अङ्कनस्थानानि—कलङ्कस्थानानि, ( "कलङ्काङ्कौ लाञ्छनञ्च" इत्यमरः )।

(२३५) सर्वाभिभाविनी—सर्वान् जनान् अभिभवतीति तथोक्ता। अपत्यत्वे—सन्तानत्वे, समाने—तुल्ये, पुत्त्रेण सहेति भावः। जातायाम्—उत्पन्नायाम्। दूयन्ते—तप्यन्ते। एतदर्थम्—एतन्निमित्तं, दुहितुः अपात्रपतनादिदुर्भावनायाः सन्तापोत्पादकत्वात् यथा सा अतिसन्तापदायिनी न भवेत्, तदर्थमिति भावः। अश्रुभिः,—नेत्रजलवर्षणैः, कन्यकायामुत्पन्नमात्रायामेव सा सत्पात्रगता भविष्यति न वा इत्यादि परिणामचिन्तया पित्रादिगुरुजनानामश्रूणि आविर्भवन्तीति भावः।

(२३६) एतद्भयात्—कन्यातः सन्तापभयात्, अकृतदारपरिग्रहाः,—अकृतोद्वाहाः,

मुनयः। को हि नाम सहते विरहम् अपत्यानाम्? यथा यथा (२३७) समापतन्ति दूता वराणां, वराकी लज्जमानेव चिन्ता तथा तथा नितरां प्रविशति मे हृदयम्। किं क्रियते? तथाऽपि (२३८) गृहगतैः अनुगन्तव्या एव लोकवृत्तयः। प्रायेण च खलु अपि अन्येषु (२३९) वरगुणेषु अभिजनमेव अनुरुध्यन्ते धीमन्तः। (२४०) धरणीधराणाञ्च मूर्द्धि स्थितो माहेश्वरः पादन्यास इव सकलभुवननमस्कृतो मौखरो वंशः।

---

परिहृतगृहवसतयः,—परित्यक्तगृहस्थितयः, शून्यानि—निर्जनानि। अधिशेरते—आश्रयन्ति। अवीपमानान्यूनत्वप्रतीतेः गृहिभ्यः एव आरण्यकाः यथार्थसुखिनः इति व्यतिरेको व्यज्यते। नाम—सम्भावनायाम्; पाषाणहृदयोऽपि न कदाचित् तथाविध क्लेश सोढ़ुं शक्नुयादित्याशयः।

(२३७) समापतन्ति—समागच्छन्ति। वराकी—दीना, उपयुक्तोपायोद्भावनशक्त्यभावात् इति भावः। लज्जमानेव—दुहितुः भाव्यन्यासङ्गभावनाजनितत्रपान्वितेव। नितराम्—अतिशयेन। लोकेऽपि निरतिशयलज्जितानां मुग्धाङ्गनानां सदनाभ्यन्तरतः निलयनं प्रसिद्धम्।

(२३८) गृहगतैः,—गृहस्थैः, लोकवृत्तयः,—लोकव्यवहाराः, लोकाचारा इत्यर्थः, अनुगन्तव्याः,—अनुसरणीयाः, सनातनसामाजिकसत्प्रणसरणे. अलङ्घ्यत्वात् इति भावः।

(२३९) वरगुणेषु—वरस्य—उद्वोढुः, गुणेषु—रूपयौवनश्रुतविनयादिषु। अभिजनमेव—सत्कुलमेव, सत्कुलजातत्वमेवेत्यर्थः, ("भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे। कुलेऽपि च" इति मेदिनी)। अनुरुध्यन्ते—अनुसरन्ति, अन्विष्यन्ति इत्यर्थ।

(२४०) धरणीधराणां—राज्ञां, पर्व्वतानाञ्च, मूर्द्धि—शिरसि, शिखरे च, माहेश्वरः—महेश्वरस्य—अधीश्वरस्य, महादेवस्य च अयं माहेश्वरः, ("महेश्वरो महादेवे कथितोऽधीश्वरेऽपि च" इति मेदिनी) अस्मिन् वंशे बहवो महाप्रभावा राजानः प्रादुर्बभूवुरिति भावः, पादन्यास इव—निक्षिप्तचरण इव, चरणनिक्षेप इव चेत्यर्थः, तद्वंशे समुत्पन्नत्वात्, तत्रावस्थानाच्च; "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति न्यायादिति भावः; सकलैः भुवनैः,—तद्वासिभिरित्यर्थः, नमस्कृतः,—पूजितः, माननीयतया श्रेष्ठत्वे परिगणितः समादृतश्च इत्यर्थः, आराध्यतया अभिवन्दितश्च, मौखरः,—मुखरो नाम कश्चिदवनिपतिः, तस्य अयं मौखरः वंशः,—कुलम्; हिमालयस्य उपरि

(२४१) तत्रापि तिलकभूतस्य अवन्तिवर्म्मणः सूनुः अग्रजो ग्रह-वर्म्मा नाम ग्रहपतिरिव गां गत. पितुः अन्यूनो गुणैः एनां प्रार्थयते। यदि भवत्या अपि मतिः अनुमन्यते, ततः तस्मै दातुम् इच्छामि" इति उक्तवति भर्त्तरि दुहितृस्नेहकातर-तरहृदया साश्रुलोचना महादेवी प्रत्युवाच,—"आर्य्यपुत्र ! (२४२) संवर्द्धनमात्रोपयोगिन्यो धात्रीनिर्विशेषा भवन्ति खलु मातरः कन्यकानाम्। दाने तु प्रमाणम् आसां पितरः। केवलं (२४३) कृपाकृतविशेषः सुदूरेण तनयस्नेहात् अतिरिच्यते दुहितृस्नेहः। यथा यावज्जीवम् आवयोः (२४४) न आर्त्तिताां प्रतिपद्यते, तथा आर्य्यपुत्त्र एव जानाति" इति।

---

यथा महेश्वरेण पादन्यासः कृतः, तथा सर्वेषां भूभृतामुपरि वंशोऽयं पादन्यासोऽकारि, सर्वेभ्यः राजकुलेभ्यः एतत् गरिष्ठं मतं तात्पर्य्यम्।

(२४१) तत्रापि—तस्मिन् वंशेऽपि इत्यर्थः, तिलकभूतस्य—ललाटालङ्कारभूतस्य, अवन्तिवर्म्मणः,—तदाख्यस्य नृपतेः, सूनुः अग्रजः,—ज्येष्ठपुत्रः, ग्रहपतिरिव—सूर्य्य इव, ("सूरसूर्य्यार्य्यमादित्य···। विभावसुर्ग्रहपतिः—" इत्यमरः) गां गतः,—स्वर्गस्थः, दिविस्थः इत्यर्थः, अन्यत्र,—भुवमवतीर्णः, ("स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रिया पुंसि गौः" इत्यमरः) पितुः,—अवन्तिवर्म्मणः इत्यर्थः, अन्यूनः,—अहीनः, तुल्य इति यावत्, यथावदाकृत्यादिभिः इत्याशयः। एनां—राज्यश्रियम्।

(२४२) संवर्द्धनेति।—संवर्द्धनं—परिपोषणं, तन्मात्रे—तत्रैवेत्यर्थः, उपयोगः,—व्यापारः, प्रयोजनमित्यर्थः अस्ति आसामिति तथोक्ताः। धात्रीति।—धात्री—उपमातृका, तस्याः निर्विशेषाः,—विशेषरहिताः, धात्रीसदृश्य इत्यर्थः। प्रमाण—प्रमातारः, निर्णेतारः इत्यर्थः, एतासां पितृपादा एव दानादौ कर्त्तव्याकर्त्तव्यनिर्णयकारिण इति भावः।

(२४३) कृपेति।—कृपया—अनुकम्पया, भर्त्तृभवनगमनान्निश्चितभाविविच्छेद-जनितयेति भावः, कृतः,—जनितः, विशेषः,—पार्थक्यं यस्य तथाभूतः। तनयस्नेहात्—पुत्रप्रीतिमपेक्ष्य इत्यर्थः, अतिरिच्यते—अतिरिक्ततया स्थीयते इत्यर्थः।

(२४४) आर्त्तिता—मनःपीडात्वं, न प्रतिपद्यते—न प्राप्नोति, म नःपीडां जनय-तीत्यर्थः, दुहितृस्नेहः इति शेषः। ["न आर्त्तिताम्" इत्यत्र "नाधिताम्" इति

राजा तु (२४५) जातनिश्चयो दुहितृदानं प्रति समाहूय सुतौ अपि विदितार्थौ अकार्षीत्। (२४६) शोभने च दिवसे ग्रहवर्म्मणा कन्यां प्रार्थयितुं प्रेषितस्य पूर्व्वागतस्यैव प्रधानदूतपुरुषस्य करे सर्व्वराजकुलसमक्षं दुहितृदानजलम् अपातयत्। (२४७) जातमुदि कृतार्थे गते च तस्मिन्, आसन्नेषु च विवाहदिवसेषु, (२४८) उद्दामदीयमानताम्बूलपटवासकुसुमप्रसाधितसर्व्वलोकं, (२४९) सकलदेशादिश्यमानशिल्पिसार्थागमनम्, अवनिपालपुरुषगृहीतसमग्रग्रामीणानीयमानोपकरण-

---

पाठेऽपि,—स एवार्थः। "आर्त्तिता" इति पाठे तु,—आर्त्तिता—दुःखभावः, प्रतिपद्यते—जायते, यादृशेन कर्म्मणा अस्माभिर्यावज्जीवं शोचितव्य, तदार्य्यपुत्रः जानात्येव, अतो विविच्य क्रियता, यथा परिणामः विरसो न भवेत् इति भावः]।

(२४५) जातनिश्चय.,—कृतनिर्णयः, निश्चितमतिरित्यर्थः। विदितार्थौ—ज्ञातार्थौ, तयोः प्राप्तवयस्कतया मित्रवदुपचरणार्हत्वात्, "प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत्" इति नीतेः इति भावः।

(२४६) शोभने—शुभे। दुहितृदानजलं—दुहितुः दानाय—समर्पणाय, ग्रहवर्म्मणे सम्प्रदानाय इति भावः, जलम् अपातयत्—प्रायच्छत्, वाग्दानविधानेनेति भावः।

(२४७) "जातमुदि" इत्यस्य "आसीत् राजकुलम्" इत्युत्तरेण सम्बन्धः। जातमुदि—जातहर्षे। कृतार्थे—सत्यसन्धनरेन्द्रस्वीकारात् सिद्धागमनप्रयोजने इत्यर्थः। आसन्नेषु—सन्निहितेषु।

(२४८) राजकुलं विशिनष्टि, उद्दामेति।—उद्दामम्—अवातरितमिति यावत्, दीयमानेन—अर्प्यमाणेन, ताम्बूलेन—पर्णेन, पटवासेन—पिष्टातेन, गन्धद्रव्यभेदेन इत्यर्थः, कुसुमेन—पुष्पेण च, प्रसाधिताः,—अलङ्कृताः, सम्मानिता वा, सर्वे लोकाः,—जनाः यस्मिन् तत्, मङ्गलकर्म्मणि तथा प्रसाधननियमात् इति भावः।

(२४९) सकलेति।—सकलेभ्यः,—सर्वेभ्य, देशेभ्य,—स्थानेभ्य, जनपदेभ्य इत्यर्थ, सकलैः देशैर्वा, आदिश्यमानम्—आज्ञायमानम्, अनुमन्यमानमिति यावत्, शिल्पिसार्थाना—कारुकर्म्मिसमूहानाम्, आगमनम्—उपस्थितिर्यस्मिन् तत्, सद्दार्ङ्-रत्नमण्डपादिनिर्माणाय इति हृदयम्। अवनिपालेति।—अवनिपालपुरुषैः,—राजपुरुषैः, राजनियुक्तकोषाध्यक्षादिभिरित्यर्थः, गृहीता,—आदत्ताः, समग्राः,—समस्ताः, ग्रामी-

सम्भारं, (२५०) राजदौवारिकोपनीयमानानेकनृपोपायनम्, (२५१) उपनिमन्त्रितागतबन्धुवर्गसंवर्गणव्यग्रराजवल्लभं, (२५२) लब्धमधुमदप्रचण्डचर्म्मकार-करपुटोल्लालितकोणपटु-विघट्टनरणन्मङ्गलपटहं, (२५३) पिष्टपञ्चाङ्गुलमण्ड्यमानो-लूखलमुसलशिलाद्युपकरणम्, (२५४) अशेषाशामुखावि-

याणां—जानपदानां, ग्रामीणैर्वा आनीयमानाः,—उपस्थाप्यमानाः, प्रदीयमाना इत्यर्थः, उपकरणसम्भाराः,—कार्य्यसाधनाङ्गसामग्रीसञ्चयाः यस्मिन् तत्।

(२५०) राजेति।—राजदौवारिकैः,—राज्ञः द्वाररक्षिभिः, उपनीयमानानि—सङ्गृह्यमाणानि, अनेकेषां—बहूनां, नृपाणां—राज्ञां, सामन्तानां निमन्त्रितानाञ्चेति भावः, उपायनानि—उपढौकनानि यस्मिन् तत्।

(२५१) उपेति।—उपनिमन्त्रिताः,—कन्याविवाहक्रियासमाधानार्थं सादर-माहूताः, अत एव आगताः,—उपस्थिताः, ये बन्धुवर्गाः,—बान्धवसमूहाः, तेषां संवर्गणाय—सङ्ग्रहणाय, संवर्द्धनार्थमिति यावत्, व्यग्राः,—व्यापृताः, राजवल्लभाः,—राज्ञा नियुक्ताः तद्विषयकाध्यक्षाः यत्र तत्।

(२५२) लब्धेति।—लब्धेन—प्राप्तेन, प्राप्य पीतेनेति यावत्, मधुना—मद्येन, यो मदः,—उल्लासः, तेन प्रचण्डाः,—मद्यपानजनितस्फूर्त्त्या कार्य्यतत्पराः इत्यर्थः, मद्यपानेनैव नीचानामानन्दोदयात् इति भावः, ये चर्म्मकाराः,—वाद्यकरा इति यावत्, तेषां कर-पुटेन—पाणियुगलेन, उल्लालितः,—धृतः, यः कोणः,—वादनदण्डः, ("कोणो वीणादि-वादनम्" इत्यमरः) तस्य पटुना—नैपुण्यसहकृतेन इति यावत्, विघट्टनेन—ताडनेन, रणन्तः,—ध्वनन्तः, मङ्गलपटहाः,—आभ्युदयिकानकाख्यवाद्यभेदाः यस्मिन् तत्।

(२५३) पिष्टेति।—पिष्टानाम्—आतपणानां, "पिटुलि" इति वङ्गभाषया प्रसिद्धानाम् आलेपनद्रव्यभेदानामित्यर्थः, हरिद्राकुङ्कुमगोरोचनातण्डुलचूर्णादिकृतानाम् इत्यर्थो वा, पञ्चानाम् अङ्गुलीनां समाहारः पञ्चाङ्गुलं तेन, [ "सङ्ख्यापूर्वो द्विगुः" (२।१।५२ पा०) इति समासे "स नपुंसकम्" (२।४।१७ पा०) इति नपुंसकत्वं, "द्विगुरेक—" (२।४।१ पा०) इत्यादिना एकवचनञ्च, ततः "तत्पुरुषस्याङ्गुलेः" (५।४।८६ पा०) इति सूत्रेण समासान्तोऽच् ] पञ्चाङ्गुलगृहीतपिष्टेन इत्यर्थः, मण्ड्य-मानानि—अलङ्क्रियमाणानि, उलूखलमुसलशिलादीनि—तदाख्यधान्यादिकण्डनसाधनानि, उपकरणानि—माङ्गलिकद्रव्यसमूहाः यत्र तत्, देशकुलाचारनियमात् इति भावः।

(२५४) अशेषेति।—अशेषाणां—सर्व्वासाम्, आशानां—दिशां, मुखेभ्यः,—

भूत-चारण-परस्परा-पूर्य्यमाण-प्रकोष्ठ-प्रतिष्ठाप्यमानेन्द्राणीदैवतं, (२५५) सितकुसुमविलेपनवसनसत्कृतैः सूत्रधारैः आदीयमान-विवाहवेदीसूत्रपातम्, (२५६) उत्कूर्चककरैश्च सुधाकर्परस्कन्धैः अधिरोहणीसमारूढैः धवैः धवलीक्रियमाणप्रासादप्रतोली-प्राकारशिखरं, (२५७) क्षुण्णक्षाल्यमानकुसुम्भसम्भाराम्भःप्लव-

अन्तरालेभ्यः इत्यर्थः, आविर्भूतानाम्—आगतानां, चारणाना—कुशीलवानां, नट-विशेषाणामित्यर्थः, राज्ञा प्रशस्तिकीर्त्तकानामिति यावत्, परम्पराभिः,—समूहैः, पूर्य्यमाणेषु—भ्रियमाणेषु, प्रकोष्ठेषु—कक्षाविशेषेषु, प्रतिष्ठाप्यमाना—प्रतिष्ठा नीयमाना, इन्द्राणी—शची एव, देवता—उत्सवविघ्ननिवारिणीति भावः यस्मिन् तत्, स्वयं-वरादिक्षोभकारिणः शच्या विनाश्यन्ते इति प्रसिद्धेः।

(२५५) सितेति।—सितेन—शुभ्रेण, कुसुमेन—पुष्पेण, विलेपनेन—श्रीखण्डा-द्यनुलेपनद्रव्येण, वसनेन—वस्त्रेण च, सत्कृताः,—सम्मानिताः तैः, सूत्रधारैः,—स्थप-तिभिः, आदीयमानेति।—आदीयमानः,—क्रियमाण इत्यर्थः, विवाहवेद्याः,—विवा-हार्था—परिणयार्था, वेदी—परिष्कृता भूमिः, मञ्चविशेष इत्यर्थः, तस्याः, तन्निर्माणार्थ-मिति भावः, सूत्रपातः,—तन्तुविन्यासः, समत्व-विषमत्वनिर्णयार्थमिति भावः यत्र तत्।

(२५६) उत्कूर्चककरैः,—उत्कूर्चकानि—"कर्णिक" इति ख्यातानि "राजमिस्त्रि" इत्याख्यया प्रसिद्धानां प्रासादादिनिर्म्मापकाणाम् इष्टकागृहनिर्म्माणसाधनानि अस्त्राणि इत्यर्थः, करेषु—हस्तेषु येषां तैः, यद्वा—उत्कूर्चिकाः,—उत्—उत्तोलिताः, कूर्चिकाः,—तूलिकाः, "कुँचि" इति ख्याता चूर्णलेपसाधनद्रव्यविशेषा इत्य , ("कूर्चिका सूचिकायाञ्च तूलिकायाञ्च कुड्मले' इति मेदिनी) करेषु येषां तैः। सुधेति।—सुधानां—चूर्णाख्यालेपनद्रव्याणां, कर्पराः,—भाजनानि, स्कन्धेषु—अंसेषु येषां तैः। अधिरोहणी-समारूढैः,—अधिरुह्यते अनयेति अधिरोहणी—निःश्रेणिः, "सिँडी" इति भाषा, ("निःश्रेणिस्त्वधिरोहणी" इत्यमरः) ["अधिरोहणी" इत्यत्र "अधिरोहिणी" इति पाठान्तरम्] तां समारूढाः,—अधिष्ठिताः तैः, धवैः,—नरैः, (पतिशाखिनरा धवाः" इत्यमरः)। धवलीति।—धवलीक्रियमाणानि—श्वेतीक्रियमाणानि, चूर्णलेपनेनेति भावः, प्रासादाः,—राजभवनानि, प्रतोल्यः,—रथ्याः, ("रथ्याप्रतोलीविशिखाः' इत्यमरः) प्राकाराः—प्राचीराणि, प्रतोलीप्राकाराः,—मार्गपार्श्वस्थप्राचीराणि इत्यर्थो वा, तेषां शिखराणि—अग्रभागाः यत्र तत्, महोत्सवादौ प्रासादपथादिपरिष्करणनियमदर्शनात् इत्याशयः।

(२५७) क्षुण्णेति।—क्षुण्णानां—चूर्णितानां, क्षाल्यमानानां—धौतीक्रियमाणानां,

पूररज्यमानजनपादपल्लवं, (२५८) निरूप्यमाणयौतुकयोग्य-मातङ्गतुरङ्गतरङ्गिताङ्गनं, (२५९) गणनाऽभियुक्तगणकगणगृह्य-माणलग्नगुणं, गन्धोदकवाहिमकरमुखप्रणालीपूर्य्यमाणक्रीड़ा-वापीसमूहं, (२६०) हेमकारचक्रप्रक्रान्तहाटकघटनटाङ्कार-वाचालितालिन्दकम्, (२६१) उत्थापिताभिनवभित्तिपात्य-

---

कुसुम्भसम्भाराणां—महारजनपुष्पाख्यरञ्जनद्रव्यविशेषाणां, ["स्यात् कुसुम्भं वह्निशिखं महा-रजनमित्यपि"इत्यमरः। "कुसुम्भ—"इत्यत्र"कुसुम्भक—"इति पाठे,—कुसुम्भकं—पद्मक, तेषामित्यर्थ.] अम्भःसु—जलेषु, प्लवपूरेण—प्लुतगतिपरम्परया,पुनः पुनरुत्प्लुत्य गमनागमनेन इति यावत्,रज्यमाना.,—चित्रमाणाः,जनाना पादपल्लवाः,—चरणकिसलया यस्मिन् तत्।

(२५८) निरूप्यमाणेति।—निरूप्यमाणे',—दैयत्नेन अवधार्य्यमाणे, यौतुक-योग्यैः,—विवाहेषु कन्या-वरौ उद्दिश्य सम्बन्धिभिः देयं वस्तु यौतुकं, [ "यु मिश्रणे" इति धातो. "उणादयो बहुलम्" (३।३।१ पा०) इति सर्व्वेणादीना बाहुलकात् "सित—" (उ० १ पा० ६९ सू०) इत्यादिना तुनि वृद्ध्यादेशे कणि च निष्पन्नम्। "यौतुक" इत्यत्र "यौतक" इति पाठेऽपि स एवार्थः] तस्य योग्या.,—उपयोगिनः तै., मातङ्गै,—हस्तिभिः, तुरङ्गै',—अश्वैश्च, तरङ्गितानि—सञ्जाततरङ्गाणि इव लक्ष्य-माणानि इत्यर्थ., अङ्गनानि—चत्वराणि यस्मिन् यस्य वा तत्।

(२५९) गणनेति।—गणनाया—लग्ननिरूपणे इत्यर्थः, अभियुक्तैः,—अभि-निविष्टै, गणकगणैः,—ग्रहाचार्य्यै., गृह्यमाणा—विचार्य्यमाणा, लग्नस्य—विवाह-कालोदितमेषादिराशेः, गुणाः,—उत्कर्षा. यस्मिन् तत्, उत्तमलग्नोदये माङ्गलिकोप-पयोगात् इति भाव'। गन्धोदकेति।—गन्धोदकं—सुगन्धवारीत्यर्थः, वहतीति गन्धो-दकवाहिनी, या मकरमुखी—मकरस्य इव मुखं यस्याः तथाभूता, प्रणाली—जल-निःसरणमार्गे, तया पूर्य्यमाणाः,—भ्रियमाणा', क्रीडावापीना—विहारसरसीना, समूहा. यस्मिन् तत्। वाप्यादिपूरणार्थं मकरमुखी प्रणाली क्रियते लोके।

(२६०) हेमकारेति।—हेमकाराणा—स्वर्णकाराणा, चक्रै,—वृन्दैः, प्रक्रान्तं —प्रारब्ध, यत् हाटकाना—स्वर्णाना, घटनम्—अलङ्कारादिनिर्म्माणमित्यर्थ., तस्य टाङ्कारै,—ध्वनिविशेषै, वाचालिताः,—शब्दिताः, अलिन्दका.,—बहिर्द्वारप्रकोष्ठ-विशेषाः यस्मिन् तत्, ("प्रघाणप्रघणालिन्दाः बहिर्द्वारप्रकोष्ठके" इत्यमरः)।

(२६१) उत्थापितेति।—उत्थापिताभ्यः,—उत्तोलिताभ्यः, ग्रथिताभ्य इत्यर्थः,

स्रान-बहलबालुकाकरटकालेपाकुलालेपकलोकं, ( २६२ ) चतुर-चित्रकरचक्रवाललिख्यमानमङ्गल्यालेख्यं, ( २६३ ) लेप्यकार-कदम्बकक्रियमाण-मृन्मयमीन कूर्म्म-मकर--नारिकेल-कदली-पूग-वृक्षकं, क्षितिपालैश्च स्वयमावद्धकक्ष्यैः स्वाम्यर्पितकर्म्मशोभा-सम्पादनाकुलैः सिन्दूरकुट्टिमभूमीश्च मसृणयद्भिः ( २६४ ) विनि-हितसरसातर्पणहस्तान् विन्यस्तालक्तकपाटलांश्च चूताशोक-

अभिनवाभ्यः भित्तिभ्य.,—कुड्येभ्यः, पात्यमानानाम्—अध.क्षिप्यमाणानां, बहलाना—प्रभूताना, वालुकानां—सिकताना, करटकैः,—तीक्ष्णकणाः इत्यर्थः, तेषाम् आलेपेन—लिपनेन, सम्पर्केण इत्यर्थः, आकुलाः,—चञ्चलाः, आलेपकाः,—लेपनकारिणः, लोकाः यस्मिन् तत्, वालुकापतनेन चक्षूरोधशङ्कया प्रलेपनान्तरायात् इति भावः।

( २६२ ) चतुरेति।—चतुरैः,—निपुणैः, चित्रकाराणाम्—आलेख्याङ्ककानां, चक्रवालैः,—वृन्दैः, मण्डलैरित्यर्थः, ( "चक्रवालन्तु मण्डलम्" इत्यमरः ) लिख्यमानानि—चित्रीयमाणानि, मङ्गल्यानि—मङ्गलकार्य्ये हितानि, आलेख्यानि—चित्रपटाः, लोकपालादिचित्राणि इत्यर्थः यस्मिन् तत्।

( २६३ ) लेप्यकारेति।—लेप्यकाराणां—मृत्तिकाशिल्पिनां, कदम्बकैः,—समूहैः, क्रियमाणानि—घट्यमानानि, मृन्मयानि—मृन्निर्मितानि, [ "प्रत्यये भाषायां नित्यम्" ( वा॰ ) इति यरोऽनुनासिकत्वम् ] मीनकूर्म्ममकरनारिकेलकदलीपूगवृक्षकाणि —तत्तत्समूहा. यत्र तत्, माङ्गलिकाङ्गन त् इत्याशयः। क्षितिपालैः,—राजभि., आवद्धकक्ष्यैः,—वद्धपरिकरैः इत्यर्थः स्वामीति।—स्वामिना—प्रभुणा, समर्जितेत्यर्थ, अर्पितानां—दत्तानां,न्यस्तभाराणा-मित्यर्थ, कर्म्मणां—कार्य्याणां, शोभासम्पादने—सौष्ठवविधाने, आकुलाः,—व्यापृता तैः, सिन्दूरकुट्टिमभूमी,—सिन्दूररञ्जिता कुट्टिमा.,—तलदेशाः यासां तथाभूताः, भूमी,—प्रदेशान्, मसृणयद्भि.,—चिक्कणीकुर्व्वद्भिः।

( २६४ ) विनिहितेति।—विनिहिताः,—वि—विशेषेण, निहिताः,—अर्पिताः, सरसा.,—आर्द्राः, आतर्पणहस्ताः,—पिष्टहस्ताः, हस्तगृहीतमङ्गला-लेपनानि येषु तान्, ("आतर्पणं प्रीणने स्यात् मङ्गलालेपनेऽपि च" इति मेदिनी)। विन्यस्तेति।—विन्यस्तेन—निहितेन, अलक्तकेन—लाक्षारसेन, पाटला,—रक्तवर्णा तान्। चूतेति।—चूतानाम्—आम्राणा, [ चुषधातोः क्तप्रत्यये "पृषोदरादीनि—" ( ६। ३। १०९ पा॰ इत्यादिना सिद्धिः ] अशोकाना—तदाख्यरक्तपुष्पवृक्षाणाञ्च,

पल्लवलाञ्छितशिखरान् (२६५) उद्वाहवितर्द्दिकास्तम्भान् उत्तम्भयद्भिः प्रारब्धविविधव्यापारम्, (२६६) आ-सूर्य्योदयाच्च प्रविष्टाभिः, सतीभिः, सुभगाभिः, सुरूपाभिः, सुवेशाभिः, अविधवाभिः, सिन्दूररजोराजिराजितललाटाभिः, बधू-वरगोत्रग्रहण-गर्भाणि श्रुतिसुभगानि मङ्गलानि गायन्तीभिः, (२६७) बहुविधवर्णकादिग्धाङ्गुलीभिः, ग्रीवासूत्राणि च चित्रयन्तीभिः, चित्रपत्रलतालेख्यकुशलाभिः, कलशांश्च धवलितान् शीतल-

---

पल्लवैः,—किसलयैः, लाञ्छितानि,—अलङ्कृतानि, शिखराणि—अग्राणि येषां तान्; विवाहादौ तथाऽलङ्करणनियमादिति भावः।

(२६५) उद्वाहेति।—उद्वाहवितर्द्दिका—विवाहवेदिका, ("स्याद्वितर्द्दिस्तु वेदिका" इत्यमरः) तस्याः स्तम्भाः,—स्थूणाः, चन्द्रातपसंस्थापनार्हा इति भावः तान्, उत्तम्भयद्भिः,—उन्नमयद्भिः, [ "उदः स्था-स्तम्भोः—" (८।४।६१ पा०) इत्यादिना सकारस्य पूर्व्वसवर्णे थकारे "खरि च" (८।४।५५ पा०) इति चर्त्वे रूपम्]। प्रारब्धेति।—प्रारब्धाः,—प्रक्रान्ताः, विविधाः,—बहवः, व्यापाराः,—कर्म्माणि यत्र तत्। अधीनानां चितिपालानां महोत्सवे स्तम्भोन्नमनादौ अकृत्रिमचेष्टादयः साङ्गिकतया उपवर्णिताः इति स्वभावोक्तिः।

(२६६) आ-सूर्य्योदयात्—सूर्य्योदयमारभ्य। सुभगाभिः,—पतिवल्लभाभिः। अविधवाभिः,—सपतिकाभिः, विधवानामुद्वाहादिमङ्गलकर्म्मणि योगदानस्य लोकाचार-विरुद्धत्वादिति भावः। सिन्दूरेति।—सिन्दूराणां रजोराजिभिः,—परागसमूहैः, राजिताः,—अलङ्कृताः, ललाटाः,—भालदेशाः यासां ताभिः। वध्विति।—वधू-वरयोः,—कन्या-जामात्रोः, गोत्रस्य—नाम्नः, ग्रहणम्—उच्चारणमित्यर्थः, गर्भे—मध्ये येषां तानि, श्रुतिसुभगानि—कर्णसुखजनकानि इत्यर्थः; सज्जनाहृतपुरातनाचारयोगादिति भावः।

(२६७) बहुविधेति।—बहुविधैः,—नानाप्रकारैः, वर्णकैः,—रञ्जनद्रव्यैः, हरिद्रादिभिरित्यर्थः, आदिग्धाः,—आलिप्ताः, अङ्गुलयः यासां ताभिः, ग्रीवासूत्राणि—ग्रीवाबन्धनसूत्राणि, चित्रयन्तीभिः,—रञ्जयन्तीभिः। चित्रेति।—चित्राणि—मनोज्ञानि, पत्रलतालेख्यानि—पत्राणां लतानाञ्च अङ्कनानि इत्यर्थः, तेषु कुशलाभिः,—निपुणाभिः। धवलितान्—श्वेतीकृतान्, आलेपनादिना इति भावः, शीतल-

शालाजिरश्रेणीश्च मण्डयन्तीभिः, (२९८) अभिन्नपुटकार्पासतूलपल्लवांश्च वैवाहिककङ्कणोर्णासूत्रसन्नाहांश्च रञ्जयन्तीभिः, (२९९) बलाघृतघनीकृतकुङ्कुमकल्कमिश्रितांश्च अङ्गरागान् लावण्यविशेषकान्ति च मुखालेपनानि कल्पयन्तीभिः, कक्कोलमिश्राः सजातीफलाः स्फुरत्स्फीतस्फटिककर्पूरशकलखचि-

शालाजिरश्रेणीश्च—शीतलगण्डाङ्गनसमूहांश्च, अपक्वशरावसमूहांश्च वा, [ "स्याच्छरावस्तु मार्त्तिकः शालाजिरः" इति त्रिकाण्डशेषः। "शीतलशालाजिर—"इत्यत्र "शीतलशाराजिर—" इति पाठे,—शीतलम्—अपक्वमित्यर्थः, शाराजिर—शरावमित्यर्थः ; केचित्तु "शाराजिरं—शारवम्' इति व्याख्यानयन्ति ] मण्डयन्तीभिः,—अलङ्कुर्वतीभिः, देशाचारादरात् इति भावः।

(२९८) अभिन्नेति।—अभिन्नानि—अविदलितानि, पुटानि—आवरणानि येषां तेषां, कार्पासतूलानां पल्लवाः,—किसलयाः तान् ; [ "कार्पासतूल—" इत्यत्र "कर्पासतूल—" इति पाठेऽपि स एवार्थः। केचित्तु "अभिन्न : वंशादिमयश्चतुष्कोणः पाटलाकृतिर्जालकैः क्रियते, तच्छिद्रान्तरपूरणाय कर्पासतूलपल्लवा रज्यन्ते" इति व्याचख्युः ]। वैवाहिकेति।—वैवाहिकं,—विवाहाय हितं, विवाहाय इदं वा, यत् कङ्कण—हस्तसूत्रं, तस्य ऊर्णासूत्राणि—मेषादिलोमतन्तवः, तेषां सन्नाहाः,—सङ्घाः तान्, रञ्जयन्तीभिः,—रञ्जनद्रव्येण चित्रीयमाणाभिः।

(२९९) बलेति।—बलाघृतं—बला—वन्यशणपुष्पाख्या ओषधिः ; यद्वा,—बला—बाट्यालकाख्यः क्षुपजातीय ओषधिविशेषः, तत्पक्वं घृत, रक्षार्थं क्रियमाणमिति भावः, [ बलाघृत—" इत्यत्र "बलाशनाघृत—" इति पाठे,—बलाशना—पुष्पाख्यौषधिरित्यर्थः ] तेन घनीकृताः,—सान्द्रीकृताः, कुङ्कुमानां कल्काः,—पिष्टकुङ्कुमानि इत्यर्थः ; यद्वा,—बलाघृते घनीकृताः,—प्रचुरमानेन प्रक्षिप्ता इत्यर्थः, ये कुङ्कुमकल्काः,—काश्मीरजन्मकिञ्जल्काः, तैः मिश्रिताः तान्। लावण्यविशेषकान्ति—कान्तिविशेषकराणि इत्यर्थः, मुखालेपनानि—मुखरञ्जनसाधनानि, द्रव्याणि इति शेषः, कल्पयन्तीभिः,—रचयन्तीभिः ; विवाहादौ सद्गन्धचूर्णवत् स्नेहमसृणोद्वर्त्तनालेपनादिषु सुषमाविशेषाय समादरः क्रियते इति सनातनः व्यवहारः इति भावः। कक्कोलमिश्राः,—कक्कोलैः,—वनकर्पूरैः, गन्धद्रव्यविशेषैः इत्यर्थः, मिश्राः,—संवलिताः, सजातीफलाः,—जातीफलसहिताः, स्फुरदिति। —स्फुरतां—राजतां, स्फीतानां—बहुलानां, स्फटिककर्पूराणां—स्फटिकवद्दृश्यमानानां

तान्तरालाः लवङ्गमाला रचयन्तीभिः समन्तात् सामन्तसीमन्तिनीभिः व्याप्तं, (२७०) बहुविधभक्तिनिर्माणनिपुणपुराणपौरपुरन्ध्रिबध्यमानैः बद्धैश्च आचारचतुरान्तःपुरजरतीजनितपूजाराजमानरजकरज्यमानैः रक्तैश्च उभयपटान्तलग्नपरिजनप्रेङ्खोलितैः छायासु शोष्यमाणैः शुष्कैश्च (२७१) कुटिलक्रमरूपक्रियमाणपल्लवपरभागैः अपरैः आरब्धकुङ्कुमपङ्कस्थासकाच्छुरणैः अपरैः

कर्पूरभेदानां, ["स्फटिककर्पूर—" इत्यत्र "स्फाटिककर्पूर—" इति पाठेऽपि स एवार्थः] शकलैः,—खण्डैः, खचितम्—आकीर्णम्, अन्तरालम्—अवकाशः, मध्यदेश इत्यर्थः यासां ताः, लवङ्गमालाः,—लवङ्गपुष्परचिताः स्रजः, रचयन्तीभिः,—ग्रथ्नतीभिः। सामन्तसीमन्तिनीभिः,—अधीनराजानां वधूभिः, ("नारी सीमन्तिनी वधूः" इत्यमरः) व्याप्तम् —आकीर्णम्। सामन्तसीमन्तिनीत्यत्र "मन्त" इत्यक्षरयोः सकृत्साम्यात् वृत्त्यनुप्रासः।

(२७०) बहुविधेति।—बहुविधा —विविधा, भक्तिः,—विच्छित्तिः, रञ्जनविशेष इत्यर्थः, तस्या निर्माणे—रचने, निपुणाः,—पटवः, पुराणाः,—स्थविराः, पौराणां—पुरवासिनां, गृहस्थानाम् इत्यर्थः, पुरन्ध्रयः,—कुटुम्बिन्यः, पतिपुत्रपौत्रादिमत्यः गृहिण्यः इत्यर्थः, ("स्यात्तु कुटुम्बिनी। पुरन्ध्री" इत्यमरः) [इकारान्तोऽपि पुरन्ध्रिशब्दो विद्यते, तथा हि,—पुरोपपदात् चौरादिकात् धृधातोः "संज्ञायां भृतॄवृजिधारिसहितपिदमः" (३।२।४६ पा०) इति खचि मुम् "षिद्गौरादिभ्यः" (४।१।४१ पा०) इति ङीषि "पृषोदरादीनि—" (६।३।१०९ पा०) इत्यादिना तस्य आकृतिगणत्वात् गुणाभावः, ङीषः पाक्षिको ह्रस्वश्च इति सिद्धम्] ताभिः बध्यमानाः,—सङ्कुच्यमानाः तैः, बद्धैः,—सङ्कुच्य एकत्र स्तूपीकृतैरित्यर्थः। आचारेति।—आचारेषु —कुलोचितेषु व्यवहारेषु, चतुराः,—निपुणाः, या अन्तःपुरजरत्यः,—अवरोधस्थवृद्धाः, ताभिः जनितायाम्—अनुष्ठितायां, पूजायां—देवाराधनकर्म्मणि, राजमानाः, —शोभमानाः, रजकेन—वस्त्ररञ्जकजातिभेदेन च, रज्यमानाः,—रक्तीक्रियमाणाः, कुलाचारानुरूपरागरञ्जिताः वा तैः। रक्तैः,—रक्तवर्णैः, कुलाचारोचितरागैर्वा, उभयेति।—उभयोः पटान्तयोः,—वसनप्रान्तयोः, लग्नाः,—सक्ताः, पटप्रान्तधारिण इत्यर्थः, ये परिजनाः,—परिवाराः, तैः प्रेङ्खोलितैः,—सञ्चालितैः, छायासु—अनातपेषु, शोष्यमाणैः,—शोषं नीयमानैः, आतपे शोषणेन वर्णविकृतिसम्भावनयेति भावः।

(२७१) कुटिलेति।—कुटिलः,—भङ्गियुक्तः, क्रमः,—परम्पराविन्यासः, येषां तादृशैः, रूपैः,—प्रकारभेदैः, क्रियमाणाः,—सम्पाद्यमानाः पल्लवानामिव—

उद्भुजभुजिष्यभज्यमानभङ्गुरोत्तरीयैः क्षौमैश्च बादरैश्च दुकूलैश्च लालातन्तुजैश्च अंशुकैश्च नेत्रैश्च निर्मोकनिभैः अकठोररम्भागर्भ-कोमलैः निश्वासहार्य्यैः स्पर्शानुमेयैः वासोभिः सर्व्वतः स्फुरद्भिः इन्द्रायुधसहस्रैः इव सञ्छादितम्, (२७२) उज्ज्वलनिचोल-कावगुण्ठ्यमानहंसकुलैश्च शयनीयैः तारामुक्ताफलोपचीय-

किसलयानामिव, परभागाः,—उत्कर्षाः, प्रान्तभागाः वा येषां तैः, [ प्रान्तकोणसर्वा-वयवादौ महार्हवस्त्रकुञ्चनपटुभिः सेवकैः वीजलौहयन्त्रादिभिः हस्तैरपि लतापत्र-प्रसूनाद्याकृतिवन्नानाविधकुञ्चनप्रकाराः क्रियन्ते प्रतुष्टप्रभुप्रदत्तपारितोषिकप्राप्तये इति भावः। उपमाऽलङ्कृतिः, उभयोरवैधर्म्यवाच्यसाम्यात् ] अपरैः,—अन्यजनैः, आरब्धेति। —आरब्धानि—कर्तुं प्रवृत्तानि, कुङ्कुमपङ्कस्थासकैः,—कुङ्कुमद्रवचर्चाभिः, छृष्टकुङ्कुम-विन्यासैरित्यर्थः, ("चर्चा तु चार्चिक्यं स्थासकः" इत्यमरः) कुरणानि—रञ्जनानि येषु येषां वा तैः। उद्भुजेति।—उत्—उद्गताः, भुजाः,—बाहवः येषां तैः, उत्क्षिप्तभुजै-रित्यर्थः, भुजिष्यैः,—किङ्करैः, भज्यमानानि—आभुग्नीक्रियमाणानि, मुष्टिदानप्रयोगैः कुञ्चितीक्रियमाणानि इत्यर्थः, अत एव भङ्गुराणि—भङ्गिमन्ति, उत्तरीयाणि—उत्तरासङ्गानि तैः, क्षौमैः,—क्षुमा—अतसी तद्विकारैः, बादरैः,—बदरा—कार्पासी तद्भवैः, कार्पासैरित्यर्थः, ("तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च" इत्यमरः) दुकूलैः,—श्लक्ष्णवसनैः, सुचिक्कणवस्त्रैरित्यर्थः, ("दुकूलं श्लक्ष्णवस्त्रे स्यात् क्षौमे च" इति मेदिनी) लालातन्तुजैः,—कौशेयैः, अंशुकैः,—सूक्ष्मवसनभेदैः, ("अंशुकं श्लक्ष्णवस्त्रे स्यात् वस्त्रमात्रोत्तरीययोः" इति मेदिनी) नेत्रैः,—वसनविशेषैः, [ निधातोः "दाम्नी—" (३।२।१८२ पा०) इत्यादिना ष्ट्रनि रूपम्। "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च" इति मेदिनी ] निर्मोकनिभैः,—सर्पकञ्चुकसदृशैः, श्लक्ष्णसान्द्र-क्रमिकरेखाविन्यासाकृतिमद्भिः इति भावः, अकठोररम्भागर्भकोमलैः,—मृदुलकदली-गर्भसुकुमारैः। निःश्वासहार्य्यैः,—निःश्वासवायुनाऽपि उत्क्षेपणार्हैरित्यर्थः, अतिसूक्ष्मैरिति भावः, स्पर्शानुमेयैः,—स्पर्शमात्रवेद्यैः, सूक्ष्मत्वाददृश्यप्रायैरित्यर्थः, चमत्कृत्यातिशय्याय रत्नादिखचिताम्बरीपरिष्टात् महाभागधारणार्हैः इति भावः। वासोभिः,—वसनैः। स्फुरद्भिः,—द्योतमानैः।

(२७२) उज्ज्वलेति।—उज्ज्वलैः,—भासुरैः, निचोलकैः,—प्रच्छदपटैः, शय्या-च्छादनास्तरणविशेषैरित्यर्थः, ("निचोलः प्रच्छदपटः" इत्यमरः) अवगुण्ठ्यमानानि—आच्छाद्यमानानि, हंसकुलानि—हंसाकाराणि अङ्गानि येषां, यद्वा,—हंसकुलानीव हंस-

सानैश्च कञ्चुकैः (२७३) अनेकोपयोगपाट्यमानैश्च अपरिमितैः पट्टपटीसहस्रैः (२७४) अभिनवरागकोमलदुकूलराजमानैश्च पटवितानैः (२७५) स्तवरकनिवहनिरन्तरच्छाद्यमानसमस्तपटलैश्च मण्डपैः उच्चित्रनेत्रपटवेष्ट्यमानैश्च स्तम्भैः उज्ज्वलं, रमणीयञ्च, औत्सुक्यदञ्च, मङ्गल्यञ्च आसीत् राजकुलम्।

देवी तु यशोवती (२७६) विवाहोत्सवपर्य्याकुलहृदया हृदयेन भर्त्तरि, कुतूहलेन जामातरि, स्नेहेन दुहितरि, उप-

---

कुलानि—कोणेषु दम्पत्योरविच्छेदसूचकगजदन्तादिनिर्म्मितपूर्णाङ्गयुगलमरालप्रतिकृतय इत्यर्थः येषु तैः; एतेन शिल्पकौशलवत्त्व महाभागार्हत्वञ्च ध्वनितम्; शयनीयैः,—पर्य्यङ्कैः। तारेति।—ताराः,—नक्षत्राणि, ("नक्षत्रमृक्षं भं तारा" इत्यमरः) तद्वत् यानि मुक्ताफलानि—मौक्तिकानि, तैः उपचीयमानाः,—अलङ्क्रियमाणाः तैः, कञ्चुकैः,—चोलकैः, स्तनावरणवस्त्रविशेषैरित्यर्थः, ("कञ्चुकी वारवाणे···वर्द्धापकगृहीताङ्गस्थितवस्त्रे च चोलके" इति मेदिनी)।

(२७३) अनेकेति।—अनेकेषु उपयोगेषु—व्यवहारेषु, उपयोगाय वा; असङ्ख्याभिनवपताकाध्वजोष्णीषजाल-चन्द्रातपशिविरनिर्म्माण-देवब्राह्मणमाननीयाराधनाय इति भावः, पाट्यमानानि—छिद्यमानानि तैः, पट्टपटीसहस्रैः,—पट्टवसनसमूहैः।

(२७४) अभिनवेति।—अभिनवः,—नूतनः, रागः,—रञ्जनं येषां तानि, कोमलानि—मृदूनि, दुकूलानि—श्लक्ष्णवसनानि, तैः राजमानाः,—शोभमानाः तैः, पटवितानैः,—शोभार्थं प्रान्तभागराजितबहुवर्णविवर्णदोलायमानकुञ्चिकान्विताभिनववसननिर्म्मितचन्द्रातपैः इत्यर्थः।

(२७५) स्तवरकेति।—स्तवरकाणां—वस्त्रविशेषाणां, [स्तृधातोः "कृञादिभ्यः—" (उ० ५ पा० ३५ सू०) इत्यादिना वुनि पृषोदरादित्वादरकादेशे रूपम्] निवहेन—समूहेन, निरन्तरम्—अविच्छेदं यथा तथा, छाद्यमानानि—आव्रियमाणानि, समस्तानि—समग्राणि, पटलानि—छदयः, गृहाच्छादनानि इत्यर्थः येषां तैः, मण्डपैः,—गृहैः। उच्चित्रेति।—उच्चित्रैः,—उन्नतचित्रैः, चित्रितैरिति यावत्, नेत्रपटैः,—वसनभेदैः, वेष्ट्यमानाः,—आच्छाद्यमानाः तैः, सौष्ठवार्थेति भावः।

(२७६) विवाहेति।—विवाहोत्सवेन—परिणयजनितानन्दजनकव्यापारेणेत्यर्थः, पर्य्याकुलं—व्यस्तं, हृदयं—चेतः यस्याः तथाभूता। भर्त्तरि—पत्यौ, हृदयेन—मनसा,

चारेण निमन्त्रितस्त्रीषु, आदेशेन परिजने, शरीरेण सञ्चरणे, चक्षुषा कृताकृतप्रत्यवेक्षणेषु, आनन्देन महोत्सवे एकाऽपि बहुधा विभक्तेव अभवत्। भूपतिरपि ( २७७ ) उपर्य्युपरि विसर्ज्जितोष्ट्रवामीजनितजामातृतोषः सत्यपि आज्ञासम्पादनदक्षे मुखेक्षणपरे परिजने समं पुत्राभ्यां दुहितृस्नेहविक्लवः सर्वं स्वयम् अकरोत्।

( २७८ ) एवञ्च तस्मिन् अविधवामये इव भवति राजकुले, मङ्गलमये इव जायमाने जीवलोके, चारणमयेषु इव लक्ष्यमाणेषु दिङ्मुखेषु, पटहमये इव कृतेऽन्तरिक्षे, भूषणमये इव

---

पतिहृदयनिहितहृदया, उभयोरैक्यात् इत्यर्थः, विभक्ता इव इत्युत्तरेणान्वयः। एवमुत्तरत्र विभक्ता इत्यनेनान्वयः ज्ञेयः विपश्चिद्भिः। कुतूहलेन —कौतुकेन, दर्शनौत्सुक्येन इति यावत्, जामातरि—वरे, जामातरि कौतूहलवतीति भावः। उपचारेण—समुचितसम्माननेन। कृतेति।—कृतानि —सम्पादितानि, अकृतानि —असम्पादितानि च, तेषां प्रत्यवेक्षणानि —परिदर्शनानि तेषु, गृहिणीपरिदर्शनोचितव्यापारनिवहेषु इत्याशयः।

( २७७ ) उपर्य्युपरि—पुनःपुनरित्यर्थः। [ उपर्य्यादिशब्दानाम् "उपर्य्य—" ( ८।१।७ पा० ) इत्यादिना सामीप्ये द्वित्वविधानात् तदर्थे द्योत्ये "उभ" (वा०) द्वितीयाप्राप्तिः, इह तथाऽप्रसङ्गात् न इति ज्ञेया ]। विसर्ज्जितेति।—विसर्जिताभिः, —प्रेषिताभिः, उष्ट्रवामीभिः,—उष्ट्रीभिः, विविधद्रव्यवाहिनीभिरिति भावः ; यद्वा, —उष्ट्राश्च वाम्यश्च—अश्वाश्च, लघुहस्तिन्यश्च वा ताभिः. ( "वामी शृगाली-वड़वा-रासभी-करभीषु च" इति मेदिनी, केचित्तु,—वामी —हयम्, अन्ये—वेसरीम्, अन्ये —गुर्व्वीमित्याहुः ) जनितः,—उत्पादितः, जामातुः,—वरस्य, तोषः,—प्रीतिः येन तथोक्तः। [ "जामातृतोषः" इत्यत्र "जामातृजोषः" इति पाठे—जोषः,—सुखमित्यर्थः ]। मुखेक्षणपरे —मुखावलोकनपरे, मुखवचनप्रतीक्षे इत्यर्थः, हृदयवशंवदत्वात् इति भावः। समम्—सह। पुत्राभ्यां—राज्यवर्द्धन-हर्षाभ्याम्। दुहित्रिति।—दुहितुः,—कन्यायाः, स्नेहेन—प्रीत्या, विक्लवः,—विह्वलः, व्याकुल इत्यर्थः।

( २७८ ) "एवम्" इत्यस्य "आजगाम विवाहदिवसः" इत्युत्तरेणान्वयः। अविधवामये इव—सभर्तृकात्मके इव, केवलसधवापूर्णे इव इत्यर्थः। जीवलोके—

भ्रमति परिजने, बान्धवमये इव दृश्यमाने (२७९) सर्गे, निर्वृतिमये इव उपलक्ष्यमाणे काले, लक्ष्मीमये इव विजृम्भमाणे महोत्सवे, निधाने इव सुखस्य फले इव जन्मनः परिणामे इव पुण्यस्य यौवने इव विभूतेः यौवराज्ये इव प्रीतेः सिद्धिकाले इव मनोरथस्य वर्त्तमाने, (२८०) गण्यमान इव जनाङ्गुलीभिः, आलोक्यमान इव मार्गध्वजैः, प्रत्युद्गम्यमान इव मङ्गल्यवाद्य-प्रतिशब्दकैः, (२८१) आहूयमान इव मौहूर्त्तिकैः, आकृष्यमाण इव मनोरथैः, परिष्वज्यमान इव वधूसखीहृदयैः आजगाम विवाहदिवसः। प्रातरेव (२८२) प्रतीहारैः समुत्सारित-निखिलानिबद्धलोकं विविक्तम् अक्रियत राजकुलम्।

अथ प्रतीहारः प्रविश्य नृपसमीपं,—"देव! जामातुः

---

प्राणिपूर्णजगति, सर्व्वत्र समानोत्सवप्रसङ्गात् इति भावः। चारणमयेषु—नटमयेषु। पटहमये—पटहादिवादित्रमये।

(२७९) सर्गे—सृष्टौ। निर्वृतिमये—सुखमये। लक्ष्मीमये—शोभामये। विजृम्भमाणे—प्रकाशमाने। निधाने इव—आश्रये इव। विभूतेः,—सम्पदः, सर्व्व-समजगद्विभूतीनाम् एकत्र प्राचुर्य्यात् इति भावः।

(२८०) गण्यमान इव—सङ्ख्यायमान इव, अत्यौत्सुक्यात् इति भावः। आलोक्य-मान इव—दृश्यमान इव, मार्गध्वजैः,—अध्वनि प्रोथितवैजयन्तीदण्डैः, तेषाम् ऊर्द्धी-भूयावस्थानादिति भावः। प्रत्युद्गम्यमान इव—पुरत आगत्य अभिनन्द्यमान इव, मङ्गल्येति।—मङ्गल्यवाद्यानां प्रतिशब्दकैः,—प्रतिध्वनिभिः।

(२८१) आहूयमान इव—आकार्य्यमाण इव, मौहूर्त्तिकैः,—गणकैः। परिष्वज्यमान इव—आलिङ्ग्यमान इव, वध्विति।—बध्वाः सखीनां हृदयानि तैः, मुग्धहृदयानां तथैकतानत्वात् इति भावः।

(२८२) प्रतीहारैः,—दौवारिकैः। समुत्सारितेति।—समुत्सारिताः,—वहि-ष्कारिताः, निखिलाः,—समग्राः, अनिबद्धाः,—वाह्याः, कार्य्येषु अनियुक्ता इत्यर्थः, अन्तर्नियतकार्य्यव्यग्राणां निबद्धत्वप्रतीतेः इति भावः, लोका यस्मात् तथोक्तं, विविक्तं—विशोधितं, विजनं वा।

( २८३ ) अन्तिकात् ताम्बूलदायकः पारिजातकनामा सम्प्राप्तः” इत्यभिधाय स्वाकारं युवानम् अदर्शयत्। राजा तु तं दूरादेव जामातृबहुमानात् दर्शितादरः,—“बालक ! कच्चित् कुशली ग्रहवर्मा ?” इति पप्रच्छ। (२८४) असौ तु समाकर्णितनराधिपध्वनिः धावमानः कतिचित् पदानि उपसृत्य प्रसार्य्य च बाहू सेवाचतुरः चिरं वसुन्धरायां निधाय मूर्द्धानम् उत्थाय,—“देव ! कुशली, यथाऽऽज्ञापयसि, अर्च्चयति च देवं नमस्कारेण” इति व्यज्ञापयत्। ( २८५ ) आगतजामातृनिवेदनागतञ्च तं ज्ञात्वा कृतसत्कारं राजा,—“यामिन्याः प्रथमे यामे विवाहकालात्ययकृतो यथा न भवति दोषः” इति सन्दिश्य प्रतीपं प्राहिणोत्।

---

( २८३ ) अन्तिकात्—समीपात्। सम्प्राप्तः,—समागतः। स्वाकारं—सुन्दराकृतिं, सौम्यदर्शनं वा। जामातृबहुमानात्—जामातरि—वरे, बहुमानात्—आदरातिशयात्; प्रथमतः परिचारकसम्मानः तत्प्रभुसमर्च्चनमेव इत्यभिप्रायादिति भावः। कच्चित्—प्रश्ने, (“कच्चित् कामप्रवेदने। प्रश्ने हर्षे मङ्गले च” इति मेदिनी)।

( २८४ ) असौ—बालकः। समाकर्णितेति।—समाकर्णितः,—श्रुतः, नराधिपस्य—राज्ञः, ध्वनिः,—कण्ठरवः येन तथोक्तः। धावमानः,—अतित्वरमाणः, सम्भ्रमातिशय्यादित्यर्थः। सेवाचतुरः,—सेवायां निपुणः, निरन्तरं स्वप्रभोरिङ्गितनिर्दिष्टसाधनप्रवणत्वात् इति भावः। चिरं—बहुक्षणम् इत्यर्थः, सामयिकस्योचितप्रणाममुद्राप्रदर्शनाय इति भावः, वसुन्धरायां निधाय मूर्द्धानं—भूमिलुण्ठितमस्तकं यथा तथा प्रणम्येत्यर्थः। अर्च्चयति—पूजयति। देवं—राजानं, भवन्तमित्यर्थः।

( २८५ ) आगतेति।—आगतस्य—उपस्थितस्य, राजधान्यामिति भावः; यद्वा,—उपस्थितप्रायस्य, कियद्दूरावस्थितस्य इत्यर्थः, जामातुः,—दुहितुः पत्युः, भाविवरस्य इत्यर्थः, (“जामाता दुहितुः पतिः” इत्यमरः) निवेदनाय—उपस्थितिज्ञापनाय, आगतः तम्। कृतसत्कारं—विहितसमुचितसमादरं, जामातृप्रियकिङ्करोचितप्राप्तासाधारणपुरस्कारमित्यर्थः। यामिन्याः,—रात्रेः। यामे—प्रहरे। विवाहेति।—विवाहस्य कालः,—समयः, तस्य अत्ययः,—अतिक्रमः, तेन कृतः,—जनितः, दोषः,—स्खलनं, यथा न भवति, तथा कर्त्तव्यमिति शेषः; यथा विवाहलग्नमतिक्रान्तं न भवति तथा

(२८६) अथ सकलकमलवनलक्ष्मीं वधूमुखे इव सञ्चार्य्य समवसिते वासरे, विवाहदिवसश्रियः पादपल्लवे इव रज्यमाने सवितरि, (२८७) वधूवरानुरागलघूकृतप्रेमलज्जितेषु इव विघटमानेषु चक्रवाकमिथुनेषु, (२८८) सौभाग्यध्वजे इव रक्तांशुकसुकुमारवपुषि नभसि स्फुरति सन्ध्यारागे, कपोतकण्ठकर्बुरे वरयात्रागमनरजसीव कलुषयति दिङ्मुखानि तिमिरे, (२८९) लग्नसम्पादनसज्जे इव उज्जिहाने ज्योतिर्गणे, विवाह-

---

आगन्तव्यम्, अतीते सुलग्ने पुनः तत्कालाप्राप्तिप्रसङ्गात् इति भावः। प्रतीपं—विपरीतं, प्राहिणोत्—प्रेषयामास, प्रतिप्रस्थापयामास इत्यर्थः, वरपक्षीयस्कन्धावारे इति भावः।

(२८६) अथेत्यादि।—"अथ" इत्यस्य "आजगाम……प्रत्यासन्नलग्नो ग्रहवर्म्मा" इत्युत्तरेणान्वयः। सकलेति।—सकलानां कमलवनानां लक्ष्मी—श्रियम्। सञ्चार्य्य—सङ्क्रमय्य। समवसिते इव—शेषतां गते इत्युत्प्रेक्षा। लोकेऽप्यन्तिमकाले सन्तः स्वलक्ष्मीं समुचितपात्रेषु समर्पयन्ति इति ध्वनितम्। वासरे—दिवसे। विवाहदिवसश्रियः,—विवाहदिवसीया या श्रीः,—लक्ष्मीः तस्याः। रज्यमाने—रक्तायमाने, शोणीभवति इत्यर्थः। सवितरि—सूर्य्ये।

(२८७) वध्विति।—वधू-वरयोः,—कन्या-जामात्रोः, अनुरागेण—प्रेम्णा, लघूकृतं,—तुच्छीकृतं, प्रेम—प्रणयं, स्वकीयमिति भावः, तेन लज्जितानि तेषु, विघटमानेषु इव—विच्छेदं गच्छत्सु इवेत्युत्प्रेक्षा। चक्रवाकमिथुनेषु—चक्रवाकद्वन्द्वेषु; चक्रवाकमिथुनानां निशावियोगित्वस्य महाकविसमयप्रसिद्धेरिति भावः।

(२८८) सौभाग्यध्वजे इव—उत्सवीयपताकादण्डे इव। रक्तेति।—रक्तांशुकेन—रक्तवस्त्रेण, सुकुमारं—सुदर्शनमित्यर्थः, वपुः,—अवयवः यस्य तथाभूते, नभसि—आकाशे। स्फुरति—दीप्यमाने। कपोतेति।—कपोतानां—पारावतानां, कण्ठ इव कर्बुरं—पाण्डुलं तस्मिन्। वरेति।—वरस्य—जामातुः, यात्रा—उत्सवः, [ अश्वघासादिवत् तादर्थ्ये षष्ठी-समासः। "यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम्" इति मेदिनी ] तत्र गमनं—प्रस्थानं, तेन यत् रजः,—धूलिः, वरानुगानां हस्त्यश्वाद्यात्मकानां चतुरङ्गाणां पादाहत्योत्थितमिति भावः तस्मिन्निव, कलुषयति—आविलयति, मलिनयतीत्यर्थः; रजोऽपि मुखानि कलुषयति इति दृश्यते। तिमिरे—अन्धकारे।

(२८९) लग्नेति।—लग्नस्य—राश्युदयरूपवैवाहिकशुभसमयस्य, सम्पादने—

मङ्गलकलशे इव उदयशिखरिणा समुत्क्षिप्यमाणे वर्द्धमानधवलच्छाये ताराऽधिपमण्डले, ( २९० ) वधूवदनलावण्यज्योत्स्नापरिपीततमसि प्रदोषे वृथोदितमुपहसन्निव रजनिकरम् उत्तानितमुखेषु कुमुदवनेषु, आजगाम मुहुर्मुहुः ( २९१ ) उल्लासितस्फारस्फुरिताऽरुणचामरैः मनोरथैः इव उत्थितरागाग्रपल्लवैः

सन्न,—प्रवृत्तः तस्मिन्निव, उज्जिहाने—उदयमाने, उद्गच्छति इत्यर्थः, ज्योतिर्गणे—तारानिकरे, ज्योतिषिकनिवहे च, शास्त्र-शास्त्रविदोः अभेदोपचारात् इति भावः। विवाहमङ्गलकलशे इव - विवाहार्थस्थापितमङ्गल्यघटे इव, वृत्तत्वात् शैत्यात् धावल्याच्च कलशस्य अखण्डचन्द्रमण्डलसाम्यमवगन्तव्यम्; अक्षीणसुधाकरोदये विवाहादीनि मुहूर्त्तग्रन्थे बहुसम्मतानि इति हृदयं कलशस्तु विवाहादिमङ्गलकर्म्मणि पिष्टादिलिम्पनेन धवलीक्रियते इति लोकाचारः। उदयशिखरिणा—उदयाद्रिणा, समुत्क्षिप्यमाणे—समुन्नम्यमाने। एतेन जामातृसम्भावनार्थं हस्ताभ्यां मस्तकेन वा धार्य्यमाणमङ्गलकलशे परिजने इव स्थिते पूर्व्वाचले इति व्यज्यते लोकाचारसमन्वयात् इति ज्ञेयम्। वर्द्धमानेति।—वर्द्धमाना—प्रवृद्धिं गच्छन्ती, सन्ध्यालौहित्यापगमादिति भावः, धवला—शुभ्रा, छाया—कान्तिः, प्रभेत्यर्थः, अन्यत्र,—वर्द्धमानेन—शरावेण, शरावसम्पर्केणेत्यर्थः, सोऽपि मङ्गलकार्य्ये लेपनादिना शुभ्रीक्रियते, ( "शरावो वर्द्धमानकः" इत्यमरः ) धवला छाया यस्य तथाभूते। ताराऽधिपमण्डले—चन्द्रमण्डले।

( २९० ) वध्विति।—वध्वा वदनस्य लावण्यमिव कान्तिरेव, ज्योत्स्ना—कौमुदी, तया परिपीतं—ग्रस्तं, तमः,—अन्धकारः यस्य तथाभूते, प्रदोषे—रजनीमुखे, ( "प्रदोषो रजनीमुखम्" इत्यमरः ) वृथोदित—स्वपोदयमानं, वधूवदनलावण्येनैव तत्कार्य्यसम्पादनादिति भावः। रजनीकर—चन्द्रम्. "प्रायो मूर्खः परिभवविधौ नाभिमानं तनोति" इत्य विचार्य्येति भावः। उत्तानितमुखेषु—उन्मुखेषु, विकसितवदनेष्विति भावः। आजगाम—आययौ, ग्रहवर्म्मेति शेषः।

( २९१ ) उल्लासितेति।—उल्लासितानि—सञ्चालितानीति यावत्, स्फारस्फुरितानि अतिशयेन राजितानि, अरुणानि—आरक्तानि, विवाहकर्म्मणि रक्तवर्णद्रव्याणां व्यवहारस्य लोकाचारत्वादिति भावः, चामराणि—वालव्यजनानि यैः तथोक्तैः। उत्थितेति।—उत्थितः,—उद्गतः, रागः,—आरक्त्यं येषां तानि, अग्रपल्लवानि—पत्राग्राणि, कर्णादौ भूषणीक्रियमाणानि इति भावः येषां तैः; अन्यत्र,—उत्थितः,

पुरो धावमानैः पादातैः (२९२) उत्कर्णकटकहयप्रतिहेषित-दीयमानस्वागतैः इव वाजिनां वृन्दैश्च आपूरितदिग्भागः, (२९३) चलत्कर्णचामराणां चामीकरमयसर्वोपकरणानां वर्णकलखिनां बलिनां घण्टाटाङ्कारिणां करिणां घटाभिः घटयन् इव पुनः इन्दूदयविलीनम् अन्धकारं, (२९४) नक्षत्रमाला-मण्डितमुखीं करिणीं निशाकर इव पौरन्दरीं दिशम् आरूढः,

—अभ्युदितः, रागः,—अनुरागः, अग्रपल्लव इव, अनुरागस्य लौहित्येन वर्णनायाः प्रसिद्धत्वादिति भावः येषां तैः। पुरः.—अग्रे, धावमानैः,—गच्छद्भिः, (मनोरथोऽपि पुरत एव धावति) पादातैः,—पादचारिभिः सैनिकैरित्यर्थः। [पद्भ्यामतति इति पत्-पूर्व्वकात् अतधातोः "इणजादिभ्यः" (वा०) इति इणि ततः "तस्य समूहः (४।२।३७ पा०) इत्यणि रूपम्]।

(२९२) उत्कर्णेति।—उत्—उन्नताः, कर्णा येषां तेषां, कटकहयानां—राजधानीस्थाश्वानां, ("कटकोऽस्त्री नितम्बोऽद्रेः···। ······ राजधानी-वलययोरपि॥ इति मेदिनी) प्रतिहेषितैः,—प्रतिह्रेषारवैः, वरपक्षीयाश्वानां हेषारवं श्रुत्वा तत्प्रत्युत्तर-रूपैरिति भावः, दीयमानं—निवेद्यमानमित्यर्थः, स्वागतं—स्वागतसम्भाषणं, सुखेन आगमनप्रश्नमित्यर्थः येषां तथाभूतैः, वाजिनाम्—अश्वानां, वरपक्षीयाणामिति भावः, वृन्दैः,—समूहैः, आपूरितः,—आकीर्णः, दिग्भागो येन तथाभूतः।

(२९३) चलेति।—चलानि—चपलानि, कर्णयोः:—श्रवणयोः, कर्णे राजितानि इत्यर्थः, चामराणि येषां तेषां, चामीकरेति।—चामीकरमयाणि—स्वर्णमयानि, सर्व्वाणि उपकरणानि—अलङ्कारा येषां तेषां, वर्णकलस्विनां—विचित्रवर्ण-रञ्जितानामित्यर्थः। बलिनां—बलवतां, घण्टाटाङ्कारिणां—घण्टाध्वनिमतां, करिणां—हस्तिनां, घटाभिः,—समूहैः, घटयन्निव—समाहरन्निव, करिणां सान्द्रकृष्णवर्णत्वादिति भावः, इन्दूदयविलीनं—चन्द्रोदयक्षीणम्।

(२९४) नक्षत्रेति।—नक्षत्रमालया—सप्तविंशतिमौक्तिकरचितकरिणां माला नक्षत्रमाला उच्यते, तया, करेणुमस्तकमण्डनमौक्तिकस्रजा इत्यर्थः; अन्यत्र,—नक्षत्र-मालया—तारानिचयेन, मण्डितम्—अलङ्कृतं, मुखं—वदनं, स्वकीयभागश्च यस्याः ताम्। निशाकरः,—चन्द्रः। पौरन्दरीं—पुरन्दरः,—इन्द्रः, तस्येयं पौरन्दरी—इन्द्राधि-ष्ठिता, प्राची इत्यर्थः ताम्।

(२९५) प्रकटितविविधविहगविरुतैः तालावचरचारणैः पुरःसरैः बालो वसन्त इव उपवनैः क्रियमाणकोलाहलः,(२९६) गन्धतैलावसेकसुगन्धिना दीपिकाचक्रवालस्य आलोकेन कुङ्कुमपटवासधूलिपटलेन इव पिञ्जरीकुर्व्वन् सकलं लोकम्, (२९७) उत्फुल्लमल्लिकामुण्डमालामध्याध्यासितकुसुमशेखरेण शिरसा हसन्निव सपरिवेशचपाकरं कौमुदीप्रदोषम्, (२९८) आत्मरूपनिर्जितमकरकेतुकरापहृतेन कार्मुकेण इव कौसुमेन दाम्ना विरचितवैकक्ष्यकविलासः, (२९९) कुसुमसौरभगर्वभ्रान्तभ्रमरकुलकल-

(२९५) प्रकटितेति।—प्रकटितं—प्रकीर्त्तितं, प्रकाशितञ्च, विविधं—बहुप्रकारं, विचित्रमित्यर्थः, विहगेन—रागभेदेन, "वे " इति भाषया प्रसिद्धेनेति भावः, विहगानां—पक्षिणाञ्च, विरुतं—सङ्गीतनादः, शब्दश्च येषां येषु वा तैः, ता ति।—तालेन—सङ्गीताङ्गविशेषेण, अवचरन्ति—आलपन्तीति तथोक्ताः, ये चारणाः,—कुशीलवाः तैः। बालः,—नवः, तरुण इत्यर्थः, अभिनवश्च। क्रियमाणेति।—क्रियमाणः,—उत्पाद्यमानः, कोलाहलः,—कलकलनिनादः येन सः।

(२९६) गन्धेति।—गन्धतैलानाम् अवसेकेन—सिञ्चनेन, सुगन्धिः,—सुरभिः तेन, दीपिकाचक्रवालस्य—दीपमण्डलस्य, आलोकेन—उद्योतेन, कुङ्कुमेति।—कुङ्कुमानां पटवासधूलयः,—वसनसौगन्ध्यकरचूर्णविशेषाः, तेषां पटलेन—निचयेन, पिञ्जरीकुर्व्वन्—पिङ्गलयन्नित्यर्थः।

(२९७) उत्फुल्लेति।—उत्फुल्लानां—विकस्वराणां, मल्लिकानां—तदाख्यकुसुमानां,या मुण्डमाला—शिरोमालिका, तस्या मध्यम् अध्यासितं—निवेशितं, कुसुमशेखरं—पुष्पमयं शिरोभूषणं यस्य तेन। सपरिवेशचपाकरं—सपरिवेशः,—परिधिवेष्टितः, ('परिवेशस्तु परिधिरुपसूर्य्यकमण्डले" इत्यमरः) क्षपाकरः,—चन्द्रः यत्र तादृशं, कौमुदीप्रदोषं—ज्योत्स्नाऽलङ्कृतरजनीमुखम्। अत्र चन्द्रपरिहासोत्प्रेक्षणं नामातुः प्रभावत्त्वातिशय्याय इति ध्वनितम्।

(२९८) आत्मेति।—आत्मनः,—स्वस्य, रूपेण—सौन्दर्य्येण, निर्जितस्य—पराभूतस्य, मकरकेतोः,—कामस्य, करात्—हस्तात्, अपहृतं—प्रसह्यादत्तं तेन,कार्मुकेण—धनुषा, कौसुमेन—सत्पुष्परचितेन,दाम्ना—स्रजा,विरचितेति।—विरचितः,—सम्पादितः,वैकक्ष्यकस्य—वामस्कन्धात् तिर्य्यग्विलम्बिनी हारविशेषस्य, विलासः—शोभा येन तथोक्तः।

प्रलापसुभगः पारिजात इव जातः श्रिया सह पुनः अवतारितो, मेदिनीं नववधूवदनावलोकनकुतूहलेन इव ( ३०० ) कृष्यमाण-हृदयः, पतन्निव मुखेन प्रत्यासन्नलग्नो ग्रहवर्म्मा।

( ३०१ ) राजा तु तम् उपद्वारम् आगतं चरणाभ्यामेव राजचक्रानुगम्यमानः ससुतः प्रत्युज्जगाम। अवतीर्णञ्च तं कृत-नमस्कारं मन्मथमिव माधवः प्रसारितभुजो गाढ़म् आलिलिङ्ग। यथाक्रमं परिष्वक्तराज्यवर्द्धन-हर्षञ्च हस्ते गृहीत्वा अभ्यन्तरं

---

( २९९ ) कुसुमेति।—कुसुमानां—पुष्पाणां, सौरभात्—आमोदात्, गर्वेण—उल्लासेन, भ्रान्तानां—भ्रमतां, भ्रमराणां—मधुकराणां, कुलस्य—वृन्दस्य, कलप्रलापेन—मधुरास्फुटेन झङ्कारेण, सुभगः,—मनोहरः, पारिजात इव—देवतरुविशेष इव, श्रिया—लक्ष्म्या, सौन्दर्य्येणेत्यर्थः, सहोदरया इति भावः। अवतारितः,—अवतारं नीतः, विधात्रेति शेषः; सहनियतसंस्कारवतां युगपदाविर्भावादिप्राकृतिकनियमा-दित्याशयः।

(३००) कृष्यमाणहृदयः,—प्रगृह्य नीयमानमानसः। पतन्निव—त्वरयाऽधःस्खलन्निव, अतिपरिचालितधावमानतुरङ्गोद्दामसंसर्पणवेगात् इति भावः; मुखेन—"ओष्ठौ च दन्त-मूलानि दन्ता जिह्वा च तालु च। गलो गलादिसकलं सप्ताङ्गं मुखमुच्यते॥" इत्युक्ता-वयववता वदनेन इत्यर्थः; [ खनधातोः "डित् खनेर्मुट् स चोदात्तः" ( उ० ५ पा० २० सू० ) इति अचि डित्त्वात् धातोर्मुड़ागमे रूपम् ] वेगाक्रान्तानाम् अधोमुखेन पतनं लोके प्रसिद्धम्। प्रत्यासन्नलग्नः,—प्रत्यासन्नं—समीपवर्त्ति, लग्नं—विवाहकालिकशुभराश्युदयः यस्य तथाभूतः, अनुकूलयात्राप्रसादात् सन्निहितवैवाहिकशुभक्षण इत्यर्थः।

( ३०१ ) राजेत्यादि।—उपद्वारं—द्वारसमीपं, द्वारे वा, [ विभक्त्यर्थे अव्ययी-भावः ]। राजचक्रानुगम्यमानः,—राजचक्रैः,—स्वसभास्थराजसमूहैः सौहार्दादि-सम्बन्धोपस्थितैर्वा, अनुस्रियमाणः; एतेनास्य चक्रवर्त्तित्वं व्यज्यते। प्रत्युज्जगाम—प्रत्युद्गमनं चकार, अनादिविवाहप्रथावत्त्वात् लोकेशैरपि कन्यापितृभिः समित्रकुटुम्बा-दिभिः सन्निकृष्टागमने आश्रिता अपि सामन्तसामान्यनरपालाः स्वयमुपगम्यन्ते पादः-चारिभिः, एषः सदातनः सदाचारः इति गम्यते। अवतीर्णम्—अवरूढं, वैवाहिक-यानादिति शेषः। माधवः,—कृष्णः, वसन्तो वा, मन्मथमिव—प्रद्युम्नमिव, काममिव

लिन्ये। स्वनिर्विशेषासनदानादिना च एनम् उपचारेण उपचचार।

(२०२) न चिराच्च गम्भीरनामा नृपतेः प्रणयी विद्वान् द्विजन्मा ग्रहवर्म्माणम् उवाच,—"तात! त्वां प्राप्य चिरात् खलु राज्यश्रिया घटितौ तेजोमयौ सकलजगद्गीयमानबुधकर्णानन्दकारिगुणगणौ सोम-सूर्य्यवंशौ इव पुष्पभूति-मुखरवंशौ। प्रथममेव कौस्तुभमणिरिव गुणैः स्थितोऽसि हृदये देवस्य। इदानीन्तु शशीव शिरसा परमेश्वरेण असि वोढ़व्यो जातः" इति।

एवं वदति एव (२०३) तस्मिन् नृपमुपसृत्य मौहूर्त्तिकाः,—

---

या। यथाक्रमं—क्रमानुसारेण, ज्येष्ठानुसारेणेत्यर्थः, परिष्वक्तेति।—परिष्वक्तः,—आलिङ्गितः, राज्यवर्द्धनः हर्षश्च येन तं, ग्रहवर्म्माणमिति भाव, अभ्यन्तरम्—अन्तर्भवनम् इत्यर्थः। स्वेति।—स्वस्मात्—आत्मनः, निर्विशेषम्—अपृथक्रूपं, तुल्यरूपमित्यर्थ, आसनदानादि यत्र तादृशेन, उपचारेण—पूजोपकरणेन, हृदयसमर्पणादिनाऽर्घ्याद्यभेदेन वा, उपचचार—पूजयामास, "विष्णु जामातरं मन्ये" इत्युक्तेरिति भाव.।

(२०२) न चिरात्—नातिविलम्बेन इत्यर्थः। प्रणयी—स्निग्धः, सुहृदित्यर्थः। द्विजन्मा—ब्राह्मणः। चिरात्—बहोः कालात्। राज्यश्रिया—तदाख्यया राजकन्यया, राजलक्ष्म्या च, घटितौ—योजितौ, सङ्गतौ इत्यर्थः। तेजोमयौ—प्रतापसम्पन्नौ, ज्योतिर्मयौ च। सकलेति।—सकलैः,—समग्रैः, जगद्भिः,—भुवनैः, सकलेषु जगत्सु या, गीयमाना',—कीर्त्यमानाः, बुधानां—विदुषां, कर्णानन्दकारिणः,—श्रुतिसुखजननाः, बुध-कर्णयोः,—चन्द्रसुत-सूर्य्यसुतयोः, आनन्दकारिणश्च, गुणगणाः,—गुणसङ्घाः ययोः तथाभूतौ। पुष्पेति।—पुष्पभूति',—प्रभाकरवर्द्धनस्य पूर्व्वपुरुषः, मुखरः,—ग्रहवर्म्मणः पूर्व्वपुरुषः, तयोः वंशौ—अन्ववायौ। कौस्तुभमणिरिव—तदाख्यमहारत्नमिव, गुणैः,—धैर्य्यगाम्भीर्य्यादिभिः, सूत्रैश्च, देवस्य—राज्ञः, विष्णोश्च, हृदये—अन्तःकरणे, वक्षसि च। शशीव—चन्द्र इव, परमेश्वरेण—सार्व्वभौमेण, हरेण च, शिरसा—मस्तकेन; एकत्र—जामातृत्वात् समादरेण; अन्यत्र,—भूषणत्वात् इति भावः, वोढव्यः,—धार्य्यः, परमस्निग्धसम्बन्धादिति भावः।

(२०३) तस्मिन्—गम्भीराख्ये द्विजन्मनि। मौहूर्त्तिकाः,—गणकाः

"देव! समासीदति लग्नवेला, व्रजतु जामाता कौतुकगृहम्" इति ऊचुः। अथ नरेन्द्रेण,—"उत्तिष्ठ गच्छ" इति गदितो ग्रहवर्म्मा प्रविश्य अन्तःपुरं जामातृदर्शनकुतूहलिनीनां स्त्रीणां पतितानि लोचनसहस्राणि विकचनीलकुवलयवनानि इव लङ्घयन् आससाद कौतुकगृहद्वारं, निवारितपरिजनश्च प्रविवेश।

(३०४) अथ तत्र कतिपयाप्तप्रियसखीस्वजनप्रमदाप्रायपरिवाराम्, (३०५) अरुणांशुकावगुण्ठितमुखीं प्रभातसन्ध्यामिव स्वप्रभया निष्प्रभान् प्रदीपकान् कुर्व्वाणाम्, (३०६) अतिसौकुमार्य्यशङ्कितेन इव यौवनेन नातिनिर्भरमुपगूढाम्,

---

समासीदति—समासन्ना भवति। लग्नवेला—शुभराश्युदयकालः। व्रजतु—गच्छतु। कौतुकगृह—वैवाहिकमण्डपम्। जामात्रिति।—जामातुः,—वरस्य, दर्शने—अवलोकने, कुतूहलम्—औत्सुक्यमिति यावत् विद्यते आसामिति तथोक्तानाम्। विकचेति।—विकचानि—प्रस्फुटितानि, नीलकुवलयवनानि—नीलोत्पलकाननानि। लङ्घयन्—अतिक्रामन्। निवारितेति।—निवारितः,—प्रतिषिद्धः, परिजनः,—अनुयायिवर्गः येन तथाभूतः। अन्तःपुरत्वात् तत्र न साधारणैः सार्द्धं गमनं सज्जनानुमोदितम् इति नयाचारः प्रदर्शितः।

(३०४) "अथ" इत्यस्य "वधूमपश्यत्" इत्युत्तरेणान्वयः। तां विशिनष्टि, कतीति।—कतिपयाः,—अल्पसङ्ख्यका इत्यर्थः, आप्ताः,—विश्वस्ताः, प्रियसख्यः,—स्निग्धवयस्याः एव, तथा स्वजनानां—बन्धुजनानां, प्रमदाः—अङ्गनाश्च, प्रायेण—बाहुल्येन, परिवाराः,—परिजनाः यस्याः ताम्, ताभिः वेष्टिताम् इति भावः।

(३०५) अरुणेति।—अरुणेन—रक्तेन, अंशुकेन—वसनेन, अवगुण्ठितम्—आच्छादितं, मुखं यस्याः ताम्; अन्यत्र,—अरुणस्य—सूर्य्यस्य, अंशुकेन—प्रत्यग्रतया मृदुना किरणेनेत्यर्थः, अवगुण्ठितम्—अदर्शनतां गतं, मुखं यस्याः तां, प्रभातसन्ध्यामिव—प्रातःसन्ध्यामिव, निष्प्रभान्—दीप्तिरहितान्, मलिनान् इत्यर्थः।

(३०६) अतीति।—अतिसौकुमार्य्यम्—अतिमार्द्दवं, तेन शङ्कितं—विनाशात् भीतमित्यर्थः तेनेव। नातिनिर्भरं—नातिगाढम्, उपगूढा—आलिङ्गिता तां, नवयौवनामिति भावः; अतिकोमलाः न निर्विशङ्कं समाश्लिष्यन्ते इति हृदयम्।

(३०७) साध्वसनिरुध्यमानहृदयदेशदुःखमुक्तैः निभृतायतैः श्वसितैः अपयान्तं कुमारभावम् इव अनुशोचन्तीम्, (३०८) अत्युत्कम्पिनीं पतनभिया इव त्रपया निष्पन्दं धार्य्यमाणां, हस्तं तामरसप्रतिपक्षम् आसन्नग्रहणं शशिनमिव रोहिणीं भयवेपमानमानसाम् अवलोकयन्तीं, (३०९) चन्दनधवलतनुलतां ज्योत्स्नाऽऽदानसञ्चितलावण्यात् कुमुदिनीगर्भादिव प्रसूतां,

---

(३०७) साध्वसेति।—साध्वसेन—सुचिरमध्युषितं मद्धृदयं सपदि विहाय गते त्वयि अहं निराश्रया भवेयमिति भयेनेति भावः, निरुध्यमानः,—मां मा विजहीहि इति अवरुध्यमानः, हृदयदेशः,—चित्तवेत्रं, तस्मात् दुःखेन—क्लेशेन, कुमारभावानिरोधजनितेनेति भावः, समापततः बलवतः तारुण्यस्य तदानीं प्रसभमागमनात् तद्विरोधिनः कौमार्य्यस्य सहसा तद्धृदयदेशादपसरणं वेदितव्यम्, अतः अत्याग्रहेऽपि तन्निरोधाशक्तिरिति तात्पर्य्यम्, मुक्तैः,—त्यक्तैः; अत एव निभृतायतैः,—अस्पष्टदीर्घैः इत्यर्थः, उद्वेगादिति भावः, श्वसितैः,—दीर्घनिश्वासैः, अपयान्तम्—अपसरन्तम्, आत्मानं त्यजन्तमिति यावत्, कुमारभावं—कौमारम्, अनुशोचन्तीं—विलपन्तीं, गतस्य पुनरपरावृत्तिप्रसङ्गात् इति भावः।

(३०८) अत्युत्कम्पिनीम्—अतिशयेन उत्कम्पमानाम्, अत एव पतनभिया—स्खलनाशङ्कया, त्रपया—लज्जया, निष्पन्दं—निश्चलं यथा तथा, धार्य्यमाणाम्—अवलम्ब्यमानाम्, अत्यधिकत्रपावतीमित्यर्थः, सौभाग्यवतीभिः विवाहे तथा पतिवराधारणाचारदर्शनात् इति भावः। तामरसप्रतिपक्षं—रक्तोत्पलविरोधिनं, रक्तकमलवैरिणम् इत्यर्थश्च, तदानीं यौवनोद्गमाभावात्, आसन्नग्रहणम्—अचिरपाणिपीडनं, सन्निहितपरिणयमिति भावः, सन्निहितग्रासश्च, ("ग्रहणं स्वीकारादरकरोपरागोपलब्धिवन्दिषु" इति मेदिनी) भयेति।—भयेन वेपमानं—कम्पमानं, मानसं—चित्तं यस्याः ताम्, अवलोकयन्ती—पश्यन्तीम्। बाल्ये हस्ततलस्य धावल्यात तस्य शशिसाम्यमवगन्तव्यम्, इदानीन्तु यौवनोद्गमात तस्य रक्ततोत्पत्तेः, शशिनः ग्राससमये रोहिण्याः तत्प्रियायाः इव यौवनभिया अस्याः वेपमानकलेवरत्वं सञ्जातमिति, एतेनास्याः यौवनकालिकः पूर्वरागः दर्शितः इति।

(३०९) चन्दनेति।—चन्दनेन—चन्दनानुलेपनेन, चन्दनवदा, निसर्गविमलाङ्गत्वादिति भावः, धवला—विशदा, तनुलता—अङ्गयष्टिः यस्याः ताम्। ज्योत्स्नेति।—ज्योत्स्नानां—कौमुदीनाम्, आदानेन—ग्रहणेन, सञ्चितं—परिपुष्टं,

(३१०) कुसुमामोदनिर्हारिणीं वसन्तहृदयात् इव निर्गतां, निश्वासपरिमलाकृष्टमधुकरकुलां मलयमारुतात् इव उत्पन्नां, कृतकन्दर्पानुसरणां रतिमिव पुनर्जातां, (३११) प्रभालावण्य-मदसौरभमाधुर्य्यैः कौस्तुभशशिमदिरापारिजातामृतप्रभवैः सर्व्वैरत्नगुणैः अपरामिव सुरासुररुषा रत्नाकरेण कल्पितां श्रियं,

लावण्यं—कान्तिविशेषः यस्य तस्मात्, कुमुदिनीगर्भात्—कैरविण्या जठरात्, प्रसूतामिव—निर्गतामिव ; अन्यथा जगदाह्लादिनी कथमेतस्याः कान्तिः ? इत्युत्प्रेक्षा-बीजम्।

(३१०) कुसुमेति।—कुसुमानां—पुष्पाणाम्, आमोदः,—सौरभं, तेन निर्हरति—लोकानां मानसं रञ्जयतीति यावत् तथोक्ता तां, वसन्तहृदयात्—वसन्तस्य—पुष्पसमयस्य, कन्दर्पपरिजनस्य इति यावत्, हृदयात्—वक्षःस्थलात्, प्रस्फुटितसर्वकुसुमा-वयवस्य वसन्तकालस्य मध्यभागादित्यर्थः, उत्पन्नामिव—सम्भूतामिव ; एतेनास्याः अङ्गेषु प्रसूनसौरभसत्त्वात् पद्मिनीस्त्रीत्वं व्यक्तीकृतमिति। एतदेव विशिष्य व्यनक्ति, निश्वासेति।—निश्वासपरिमलेन—निश्वाससौरभेण, आकृष्टानि—आनीतानि, मधुकरकुलानि—भृङ्ग-वृन्दानि यया ताम्, उत्तमानामङ्गनानां निश्वासादेः पद्मगन्धादिविशिष्टत्वादिति भावः ; मलयेति।—मलयमारुतस्यापि चन्दनामोदवाहित्वेन सुगन्धत्वादिति भावः। कृतेति।—कृतं—विहितं, कर्त्तुमभीप्सितमिति यावत्, कन्दर्पस्य—मदनस्य, अनुसरणम्—अनुगमनं यया ताम्। एतेनास्याः पत्युः कन्दर्पप्रतिमत्वं ध्वनितमिति वेदितव्यम्।

(३११) प्रभेति।—प्रभा—कान्तिः, लावण्यं—"मुक्ताफलेषु छायायास्तरलत्व-मिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिह स्मृतम्॥" इत्युक्तलक्षणं, मदः,—मद्य-पानजनितः उल्लासः, सौरभं—परिमलः, माधुर्य्यं—"सर्वावस्थाविशेषेषु माधुर्य्यं रमणीयता" इत्युक्तलक्षणं तैः, कौस्तुभशशिमदिरापारिजातामृतप्रभवैः,—कौस्तुभः,—नारायणवक्षःस्थलस्थमणिविशेषः, शशी—चन्द्रः, मदिरा—मद्यं, पारिजातः,—नन्दन-काननीयपुष्पविशेषः, अमृतं—सुधा, तेभ्य, क्षीरोदमथनोद्भूतेभ्यः इति भावः, प्रभवैः,—उद्भूतैः ; तत्र कौस्तुभस्य गुणः प्रभा, शशिनो गुणो लावण्यं, मदिराया गुणः मदः, पारिजातस्य गुणः सौरभम्, अमृतस्य गुणो माधुर्य्यमिति द्रष्टव्यम्। सर्व्वैरत्नगुणैः,—सर्वेषां रत्नानाम्—उत्कृष्टानां वस्तूनां, ("जातौ जातौ यदुत्कृष्टं तत् रत्नमिह कथ्यते" इत्युत्पलमाला) गुणा —उत्कर्षाः तैः। सुरासुररुषा—देवासुरान् प्रति कोपेन,

( ३१२ ) स्निग्धेन बालिकालोकेन सितसिन्धुवारकुसुममञ्जरीभिः इव मुक्तादीधितिभिः कल्पितकर्णावतंसां, ( ३१३ ) कर्णाभरणमरकतप्रभाहरितशाद्वलेन कपोलस्थलीतलेन विनोदयन्तीम् इव हारिणीं लोचनच्छायाम्, ( ३१४ ) अधोमुखं वरकौतुकालोकनाकुलं मुहुर्मुहुः कृतमुखोन्नमनप्रयत्नं सखीजनं हृदयञ्च निर्भर्त्सयन्तीं वधूम् अपश्यत्।

---

मन्थनेन स्वस्य निरपराधस्य सर्व्वोत्कृष्टानां बह्वायाससञ्चितानां सयत्नरक्षितानाञ्च वस्तूनां बलात् ग्रहणजनितेन इति भावः, रत्नाकरेण—समुद्रेण, कल्पिता—निर्म्मिताम्। पुरा देवासुराभ्यां मिलित्वा बलपूर्व्वकं समुद्रं विमथ्य निखिलरत्नजातं ततः उद्धृत्य गृहीतमिति पौराणिकी वार्त्ता, एतामेवोपजीव्य हृतरत्नेन रत्नाकरेण कोपवशादेव तज्जिगीषया ऽन्तरत्नगुणान् एकत्रैव सन्निवेश्य निर्म्मितामिवेत्युत्प्रेक्षितमिति वेदितव्यम्, अन्यथा विधिः कथम् एतादृशीम् अलौकिकचमत्कृतिं निर्म्मातुं प्रभवेत् इत्याशयः।

( ३१२ ) स्निग्धेन—प्रणयिना, बालिकालोकेन—कुमारीजनेन, सिताभिः,—शुभ्राभिः, सिन्धुवारकुसुमानां—निर्गुण्डीपुष्पाणां, मञ्जरीभिः,—बल्लरीभिः, मुक्तादीधितिभिरिव—मौक्तिकप्रभाभिरिव, इत्यवैधर्म्यसाम्ययोगादुपमाऽलङ्कारः, कल्पितः,—रचितः, कर्णावतंसः,—कर्णभूषणं यस्या ताम्।

( ३१३ ) कर्णेति।—कर्णाभरणेषु—कर्णभूषणेषु, यानि मरकतानि—हरिन्मणयः, तेषां प्रभाभिः,—छटाभिः, हरितशाद्वलेन—बहुलश्यामघासयुक्तेनेवेत्यर्थः, ( "शाद्वलः शादहरिते" इत्यमरः ) कपोलस्थलीतलेन—गण्डतटेन, विनोदयन्तीमिव—प्रीणयन्तीमिव, हारिणीं—मनोहारिणीं, हरिणीसम्बन्धिनीञ्च, लोचनच्छाया—नेत्रकान्तिम्; हरिणीलोचनच्छायामपि शान्तः स्थलीभागः स्वाभिरामणीयत्वेन विनोदयति इति। एतेनास्या हरिणायतलोचनत्वं व्यज्यते।

( ३१४ ) अधोमुखम्—अवनतमुखं, कन्यकाजनसाहजिकचपाऽऽवेशात् इति भावः। वरेति।—वरस्य—उन्नोढुः, कौतुकेन—कुतूहलेन, आलोकने—दर्शने, आकुलं—व्याकुलम्। कृतेति।—कृतः मुखस्य उन्नमने—उत्तोलने, प्रयत्नः,—चेष्टा येन तम्। हृदयं—चित्तम्, हृदयमपि उक्तविशेषणद्वयविशिष्टमिति बोद्धव्यम्। निर्भर्त्सयन्ती—निन्दन्तीम्; लज्जां विहाय वरदर्शनार्थं प्रयासकरणात् सखीजननिर्भर्त्सनं, तथा दर्शनतृष्णायां प्रबलायां सत्यामपि सहजलज्जावशात् तत्कर्त्तुमक्षमतया

प्रविशन्तमेव (२१५) तं हृदयचौरं वध्वा समर्पितं—आह कन्दर्पः। परिहासस्मेरमुखीभिश्च नारीभिः कौतुकगृहे यत् यत् कार्य्यते जामाता, तत् तत् सर्व्वम् अतिपेशलं चकार। (२१६) कृतपरिणयोनुरूपवेशपरिग्रहां गृहीत्वा करे वधूं निर्जगाम; (२१७) जगाम च नवसुधाधवलां निमन्त्रितागतैः तुषारशैलोपत्यकाम् इव

---

हृदयनिर्भर्त्सन व्रीडव्यम्। "कन्या त्वजातोपयमा सलज्जा नवयौवना" इति दर्पणकृटकृतलक्षणसौसादृश्यात् नवोढायामप्येतस्या तदानीमपि तद्गुणस्थानपायादिति विभाव्यम्।

(२१५) तं—ग्रहवर्म्माणम्। हृदयचौरं—चेतोऽपहर्त्तारं, मनोहरमिति भावः। वध्वा—राज्यश्रिया, समर्पितं—धृत्वा प्रदत्तं कन्दर्पायेति भावः, यथा लोके कश्चित् कमपि चौरं धृत्वा कस्यापि राजपुरुषस्य हस्ते समर्पयति, तथा राज्यश्रीरपि तं हृदयचौरं ज्ञात्वा, धृत्वा च कन्दर्पराजहस्ते मनश्चौर्य्यविचारार्थं समर्पितवतीत्यर्थः; ग्रहवर्म्मा राज्यश्रियं दृष्ट्वा कन्दर्पवशगो जातः इति भाव। परिहासेति।—परिहासेन स्मेर—मृदुहसितं, मुखं यासां ताभिः। कौतुकगृहे—वैवाहिकमङ्गल्यानुष्ठानजन्यनिर्द्दिष्टभवने। कार्य्यते—आचार्य्यते। अतिपेशलम्—अतिरुचिरम्, अतिदक्षं वा यथा तथा, ("पेशलो रुचिरे दक्षे" इति मेदिनी) चकार—कृतवान्, नवीनजामातरं वञ्चयित्वा आनन्दमनुभवितु परिहासप्रियाभिः ताभिः यत्किञ्चित् नर्म्मव्यवहारादिकम् अकार्य्यत सः, वध्वायत्तहृदयत्वात् तत्सर्वं सत्यं वा छलं वा इति निर्णेतुमशक्यतया अविचारेणैव तेन सम्पादितम् इति भावः।

(२१६) कृतेति।—कृत. परिणयस्य—विवाहस्य, अनुरूपस्य—सदृशस्य, वेशस्य—परिच्छदस्य. परिग्रहः,—स्वीकारः, परिधानमित्यर्थः यया तथोक्ता, विवाहसमयोचितप्रसाधनवतीम् इत्यर्थः।

(२१७) "जगाम" इत्यस्य "वेदीम्" इत्युत्तरेणान्वयः। तां विशिनष्टि, नवेत्यादि।—नवाभि,—नूतनाभिः, सद्य. प्रदत्ताभिरित्यर्थः. सुधाभिः,—चूर्णलेपैः इत्यर्थ., धवला—श्वेता ताम्। निमन्त्रिता,—आहूता इत्यर्थ., तथाभूताः सन्तः आगताः,—उपस्थिताः तैः। तुषारशैलस्य—हिमगिरेः, ("तुषारस्तुहिनं हिमम्" इत्यमरः), उपत्यकामिव—आसन्ना भूमिमिव, ("उपत्यकाऽद्रेरासन्ना भूमिः" इत्यमरः)।

(३१८) त्र्यम्बकाम्बिकाविवाहाहूतैः भूभृद्भिः परिवृतां, (३१९) सेकसुकुमारयवाङ्कुरदन्तुरैः पञ्चास्यैः कलशैः कोमलवर्णिकाविचित्रैः अमत्रमुखैश्च (३२०) मङ्गल्य-फलहस्ताभिः अञ्जलिकारिकाभिः उद्भासितपर्यन्ताम्, (३२१) उपाध्यायोपधीयमानेन्धन-धूमायमानाग्निसन्धुक्षण-क्षणिकोपद्रष्टृद्विजाम्, (३२२) उपकण्ठानुनिहितानुप-

(३१८) त्र्यम्बकाम्बिकाविवाहाहूतैः,—हर-गौरीविवाहनिमन्त्रितैः, भूभृद्भिः,—राजभिः, पर्व्वतैश्च, परिवृताम्—आकीर्णाम्। अत्र भूभृद्भिः इव भूभृद्भिः इति उपमानोपमेययोः सामान्यलक्ष्मीसमुल्लासनात् श्लेषसङ्कीर्णोपमा।

(३१९) सेकेति।—सेकेन—जलसिञ्चनेन, सुकुमाराः,—सुकोमलाः, ये यवाङ्कुराः,—यवप्ररोहाः, तैः दन्तुराः,—सञ्जातदन्ता इव लक्ष्यमाणाः तैः, [दन्तशब्दात् उन्नत-दन्तार्थे "दन्त—" (५।२।१०६ पा०) इत्यादिना उरचि रूपम्] पञ्चास्यैः,—पञ्चमुखैः, कलसैः,—कुम्भैः। कोमलेति।—कोमलाभिः,—नयनसुभगाभिरित्यर्थः, वर्णिकाभिः,—वर्णविशेषैः, चन्दनादिभिः खटिकादिभिर्वा इति यावत्, विचित्राः,—रम्याः तैः, अमत्र-मुखैः,—रौप्यमयैः, यद्वा,—अमत्रं—पात्रम्, आवरणपात्रविशेष इति यावत्, ("सर्व्वमा-वपन भाण्डं पात्रामत्रञ्च भाजनम्" इत्यमरः) मुखे—अग्रभागे येषां तैः। ["अमत्र-मुखैश्च" इत्यत्र "अमित्रमुखैश्च" इति पाठेऽपि—रूप्यमयैः इत्य :]।

(३२०) मङ्गल्येति।—मङ्गल्यं—मङ्गलाय हितं, फलं—नारिकेलाम्रादिकं, हस्ते यासां ताभिः, अञ्जलिकारिकाभिः,—मृन्मयप्रतिमाभिः, सालभञ्जिकाभिर्वा, उद्भासितपर्य्यन्ता—विद्योतितप्रान्तभागाम्।

(३२१) उपाध्यायेति।—उपाध्यायेन—गुरुणा, पुरोधसेति यावत्, उपधीय-मानानि—अर्प्यमाणानि, इन्धनानि—काष्ठानि, अग्निसंस्थापनार्थमिति भा :, तैः धूमाय-मानः,—धूममुद्गमन्, योऽग्निः,—अनलः, वैवाहिकहोमीय इति भावः, तस्य सन्धुक्षणे—प्रज्वालने, क्षणिकः,—क्षणेन कार्य्यसम्पादनार्थी, व्यग्रः इत्यर्थः; ["सन्धुक्षणक्षणिकी—" इत्यत्र "सन्धुक्षणाक्षणिकी—" इति पाठे,—अक्षणिकः,—क्षणादतीतः अक्षणः,—कालासहिष्णुरित्यर्थः, तस्यायम् अक्षणिकः,—कार्य्यनिष्पादने क्षणादिविचारबहिष्कृतः, व्यग्र इत्येवार्थः] उपद्रष्टा—साक्षीभूतः, "उपदेश्यः" इति केचित्, द्विजः,—ब्राह्मणः, ऋत्विगित्यर्थः यस्यां तथोक्ताम्।

(३२२) उपेति।—उपकण्ठानु—अग्निसमीपे, निहिताः,—स्थापिताः, अनुप-

हृतहरितकुशां, सन्निहितदृषदजिनाज्यस्रुक्समित्पूलीनिवहां, (३२३) नूतनशूर्पार्पितश्यामलशमीपलाशमिश्रलाजहासिनीं वेदीम्। आरुरोह च तां दिवमिव सज्योत्स्नः शशी। (३२४) समुत्ससर्प च वेल्लितारुणशिखापल्लवस्य शिखिनः कुसुमायुध इव रतिहितीयो रक्ताशोकस्य समीपम्। हुते च (३२५) हुतभुजि दक्षिणावर्त्तप्रवृत्ताभिः वधूवदनविलोकनकुतूहलिनीभिः इव ज्वालाभिः एव सह प्रदक्षिणं बभ्राम। पात्यमाने च

---

हृताः,—अच्छिन्नाः, हरिताः,—हरिद्वर्णाः, सद्यः समाहृताः इति यावत्, महोत्सवादौ तथाविधानामेवोपयोगात् इति भावः, कुशाः,—दर्भाः यस्यां ताम्। सन्निहितेति।—सन्निहिताः,—समीपस्थाः, दृषत्—शिला, अजिनं,—चर्म्म, आज्यं—घृतं, स्रुक्—होमभाण्डं, समिधः,—काष्ठानि, तेषां पूल्यः,—श्रेणयः, तासां निवहाः,—सङ्घाः यस्यां ताम्।

(३२३) नूतनेति।—नूतने—नवे, शूर्पे—प्रस्फोटने, "कुला" इति वङ्गीयैः परिभाषिते, अर्पितानि—स्थापितानि, श्यामलानि,—हरिद्वर्णानि, यानि शमीपलाशानि—शमीपत्राणि, तैः मिश्राः,—संवलिताः, लाजाः,—अक्षतानि, भृष्टधान्यानीत्यर्थः, "खइ" इति वङ्गीयैः "लाइ" इति च पाश्चात्त्यैः परिभाषितानि, तैः हसति—राजते इति तथाविधा ताम्, अतिधावल्यात् लाजानां तेषु हासत्वमुपचरितं वेदितव्यं, "यशसि धवलता वर्ण्यते हासकीर्त्त्योः" इति कविसमयप्रसिद्धेरिति। तां—वेदीम्, आरुरोह—आरूढ़वान्। सज्योत्स्नः,—ज्योत्स्नासहितः, सवधूक इति भावः।

(३२४) समुत्ससर्प—उपातिष्ठत्। वेल्लितेति।—वेल्लिताः,—चलिताः, अरुणाः,—रक्ताः, शिखाः,—ज्वालाः, पल्लवा इव—किशलया इव, शिखा इव पल्लवाश्च यस्य तथाभूतस्य, शिखिनः,—अग्नेः, द्रुमस्य च, वृक्षस्य चेत्यर्थः, "शिखी वह्नौ बलीवर्द्दे शरे केतुग्रहे द्रुमे" इति मेदिनी) कुसुमायुध इव—काम इव। रक्ताशोकस्य—विकसितपुष्पाशोकपादपस्य। तस्य रक्तप्रसूनत्वात् अग्निसाम्यं, मदनोद्दीपकत्वाच्च तत्रानियतकालमवस्थायिना सस्त्रीकमदनेन सह सवधूककुमारस्य साम्यं सुसरचितमेवेति ज्ञेयम्, अतः उपमाऽलङ्कारः।

(३२५) हुतभुजि—अग्नौ, दक्षिणावर्त्तप्रवृत्ताभिः,—दक्षिणायां दिशि आवर्त्तनेन प्रवृत्ताभिः तथा च, ऋत्विजा दक्षिणा हि आज्यग्रहणार्थं समुत्सुकं प्रधावितामिः,

लाजाञ्जलौ नखमयूखधवलिततनुः अदृष्टपूर्व्ववधूवररूपविस्मय-स्मेर इव अदृश्यत विभावसुः।

अत्रान्तरे (३२६) स्वच्छकपोलोदरसङ्क्रान्तमनलप्रति-विम्बमिव निर्वापयन्ती (३२७) स्थूलमुक्ताफलविमलवाष्प-विन्दुसन्दोहदर्शितदुर्दिना निर्वदनविकारं रुरोद वधूः। (३२८) उदश्रुविलोचनानाञ्च बान्धववधूनाम् उदपादि महान् आक्रन्दः। परिसमापितवैवाहिकक्रियाकलापस्तु जामाता

---

प्रदक्षिणप्रसृताभिरित्यर्थः, दक्षिणावर्त्तस्य तस्य शुभसूचकत्वादिति भावः। ज्वालाभिः,—शिखाभिः। पात्यमाने—प्रक्षिप्यमाणे, अर्प्यमाणे इत्यर्थः, लाजाञ्जलौ—अक्षता-ञ्जलौ, भृष्टधान्याञ्जलावित्यर्थः, कुशण्डिकाकर्म्मणि लाजहोमसम्पादनार्थमिति भावः। नखेति।—नखानां—कररुहाणां, वधू-वरयोरिति भावः, मयूखेन—प्रभया, धवलिता —शुभ्रीभूता, तनुः,—देहः यस्य तथाभूतः; अत एव अदृष्टेति।—अदृष्टपूर्वेण—प्रागनवलोकितेन, वधू-वरयोः,—कन्या-जामात्रोः, रूपेण—सौन्दर्य्येण, यो विस्मयः,—आश्चर्य्यभावः, तेन स्मेर इव—सहास इव, विभावसुः,—अग्निः। शुक्लभास्वरप्रभावतः कृशानोः स्वगुणत्यागात् नखमयूखैः अत्युत्कृष्टशुद्धधवलितत्वरूपगुणग्रहणेन तद्गुणालङ्कृति-सङ्कीर्णोत्प्रेक्षा।

(३२६) स्वच्छेति।—स्वच्छम्—उज्ज्वलं, कपोलस्य—गण्डस्य, उदरम्—अभ्यन्तरं, तत्र सङ्क्रान्तः,—प्रतिफलितः तम्, अनलप्रतिविम्बमिव—अग्निप्रतिच्छायामिव, निर्वापयन्ती —प्रशमयन्ती। अग्निपरामर्श निराकर्त्तुमेवाश्रुविसर्ज्जनमित्युत्प्रेक्षावीजमवगन्तव्यम्।

(३२७) स्थूलेति।—स्थूलानि—पृथूनि, मुक्ताफलानि—मौक्तिकानि इव, विमलाः,—स्वच्छाः, वाष्पविन्दूनाम्—अश्रुकणानां, सन्दोहाः,—समूहाः, तैः दर्शितं —प्रकटितं, दुर्दिनं—मेघाच्छन्नम् अहः, पतदजस्रनीरासारं वासरमिति यावत्, दुःखजनकं दिनञ्च, सामयिकपित्रादिविच्छेदसम्भावनया इति भावः यया तथाभूता। निर्वदनविकारं—निः,—नास्ति, वदनस्य—मुखस्य, विकारः,—विकृतिः यस्मिन् तत् यथा तथा, निःशब्दमिति भावः।

(३२८) उदश्रुविलोचनानाम्—उद्गतवाष्पनेत्राणां, वान्धववधूनां—स्वजन-नारीणाम्, आक्रन्दः,—क्रन्दनम्, ("आक्रन्दः क्रन्दने ह्वाने मित्र-दारुणयुद्धयोः" इति मेदिनी)।

बध्वा सह प्रणनाश श्वश्रुरी। (३२९) प्रविवेश च द्वारपक्ष-लिखितरतिप्रीतिदैवतं, प्रणयिभिः इव प्रथमप्रविष्टैः अलिकुलैः कृतकोलाहलम्, (३३०) अलिकुलपक्षपवनप्रेङ्खोलितैः कर्णोत्पलप्रहारभयप्रकम्पितैः इव मङ्गलप्रदीपैः प्रकाशितम्, (३३१) एकदेशलिखितस्तवकित-रक्ताशोकतरुतलभाजा अधिज्यचापेन तिर्य्यक्कूणितनेत्रत्रिभागेण शरमृजूकुर्व्वता

---

(३२९) "प्रविवेश" इत्यस्य "वासगृहम्" इत्युत्तरेण सम्बन्धः। तदेव विशिनष्टि, द्वारेत्यादि।—द्वारपक्षे—द्वारपार्श्वे, ("पक्षो मासार्द्धके···। ·····बाजे कुञ्जरपार्श्वयो." इति मेदिनी) लिखित—चित्रित, रतिप्रीतिदैवत—रतिरेव—कामवधूरेव, प्रीतिदैवत—प्रणयदेवता यस्य तत्, यद्वा,—रते.,—दाम्पत्यानुरागस्य, प्रीतेः,—हर्षे., दैवतम्—अरुन्धत्यादीना पतिव्रता-ललामभूताना देवताना समूह. यत्र तथाविधम्, एता हि दाम्पत्यसुखविधायिन्यः इति वेदितव्यम्। प्रणयिभिरिव—सुहृद्भिरिव, प्रथमप्रविष्टै.,—अग्रे एव अन्तर्गतैः, कुसुमामोदसमाकृष्टैरिति भावः; प्रणयिनः प्रणयवताम् अन्त.पुरादावपि स्वच्छन्दसञ्चारिण. भवन्तीति गम्यते।

(३३०) अलीति।—अलिकुलाना—भ्रमरवृन्दाना, पक्षपवनेन—पतत्रानिलेन, प्रेङ्खोलिताः,—कम्पिताः तै., अत एव कर्णेति।—कर्णोत्पलस्य—कर्णभूषणीभूतस्य उत्पलस्य, प्रहारात्—ताडनात्, भयेन—शङ्कया, प्रकम्पितैरिव—प्रवेपितैरिव, बहुताडिताना ताडनभयस्य सतताविर्भावात् इति भाव.। ननु सत्स्वपि बहुषु वस्तुषु वासगृहे कथमत्र ताडनाशङ्का मङ्गलप्रदीपाना जाता? इति चेदवोच्यते,—सप्रतिपक्षा. तुल्यबलाः परस्पर प्रतिहतिमाशङ्कन्ते इति दृश्यते, अत एव कर्णोत्पलायमानाः मङ्गलदीपाः भ्रमराभिलङ्घनजनित कर्णोत्पलान्दोलन तेषा स्वताडनार्थं समुद्योगमिवामन्यन्त इत्युत्प्रेक्षाबीजमवधेयम्।

(३३१) एकेति।—एकदेशे—एकस्मिन् विभागे, लिखितः,—चित्रितः, स्तवकितः,—सञ्जातगुच्छः, यः रक्ताशोकतरु.,—रक्तपुष्पाशोकवृक्ष., तस्य तलं—निम्नदेश, भजते—आश्रयति इति तथोक्तेन, तत्तलस्थितेन इत्यर्थः, अधिज्यचापेन—मौर्व्वीयुतधन्वना, तिर्य्यगिति।—तिर्य्यक्—वक्र यथा तथा, कूणितः,—सङ्कोचितः, नेत्रविभाग.,—नयनस्य तृतीयाश. येन तथाविधेन, लक्ष्यस्थिरीकरणाय अपाङ्गावलोकनतत्परेणेत्यर्थ., शरं—बाणम्, ऋजूकुर्व्वता—सन्दधतेत्यर्थः।

कामदेवेन अधिष्ठितम्, (३३२) एकपार्श्वन्यस्तेन काञ्चनचामरकेण इतरपार्श्ववर्त्तिन्या च दान्तशफरुकधारिण्या कनकपुत्त्रिकया साक्षाल्लक्ष्म्येव उद्दण्डपुण्डरीकहस्तया सनाथेन सोपधानेन स्वास्तीर्णेन शयनेन शोभमानं, (३३३) शयनशिरोभागस्थितेन च कृतकुमुदशोभेन कुसुमायुधसाहायकाय आगतेन शशिनेव निद्राकलशेन राजतेन विराजमानं वासगृहम्।

तत्र च (३३४) व्रीताया नववधूकायाः पराङ्मुखप्रसुप्तायाः मणिभित्तिदर्पणेषु मुखप्रतिबिम्बानि (३३५) प्रथमालापाकर्णनकौतुकागतगृहदेवताऽऽननानीव मणिगवाक्षकेषु वीक्षमाणः

---

(३३२) एकपार्श्वन्यस्तेन—एकपार्श्वनिहितेन, काञ्चनचामरकेण—काञ्चनं—सौवर्णं, चामरकं—चमरमृगप्रतिकृतिः तेन। "काञ्चनचामरकेण" इत्यत्र "काञ्चनचामरकेण" इति पाठकल्पनं साधु ; काञ्चनचामरकेण—स्वर्णदण्डशोभितबालव्यजनेन। इतरपार्श्ववर्त्तिन्या—अपरपार्श्वस्थापितया, दान्तेति।—दान्तं—गजदन्तमयं, शफरुकं—कुसुदविशेषमित्यर्थः, धरति—गृह्णातीति तथोक्तया, कनकपुत्तिकया—काञ्चनपुत्तलिकया। उद्दण्डेति।—उद्दण्डम्—उन्नतनालं, पुण्डरीकं—श्वेतपद्मं, हस्ते यस्याः तथाभूतया। सनाथेन—युक्तेन। सोपधानेन—उपधानं—"बालिश" इति वङ्गभाषया प्रसिद्धं, तत्सहितेन, स्वास्तीर्णेन—शोभनास्तरणशालिना, शयनेन—शय्यया, पर्य्यङ्केणेत्यर्थः।

(३३३) शयनेति।—शयनस्य—शय्यायाः, शिरोभागे—अग्रभागे, स्थितेन—निहितेन, कृतेति।—कृता—विरचिता, कुमुदेन—कैरवेण, कुमुदस्य च, शोभा—सौन्दर्य्यं यस्य येन च तेन, कुसुमेति।—कुसुमायुधस्य—पुष्पशरस्य, कामस्येत्यर्थः, साहायकाय—साहाय्यकरणाय, शशिनः उद्दीपकत्वादिति भावः। राजतेन—रौप्यमयेण, निद्राकलशेन—निद्रायां—शयने, शयनगृहे इत्यर्थः, यः कलशः,—घटः, लोकपालादीनाराध्य मङ्गलार्थं स्थापित इति भावः तेन।

(३३४) व्रीतायाः,—लज्जितायाः। पराङ्मुखप्रसुप्तायाः,—परावृत्य निद्रितायाः, लज्जावशादेवेति भावः। मणीति।—मणिभित्तयः,—रत्नकुड्यानि एव, दर्पणाः,—आदर्शाः तेषु, मुखप्रतिबिम्बानि—आननप्रतिच्छायाः।

(३३५) प्रथमेति।—प्रथमालापस्य—आद्यसम्भाषणस्य, आकर्णने—श्रवणे, यत् कौतुकं—कौतूहलं, तस्मै आगताः,—उपस्थिताः, या गृहदेवताः,—भवनाधि-

चणदां निन्ये। स्थित्वा च श्वशुरकुले (२३६) शीलेन अमृतमिव श्वश्रूहृदये वर्षन्, अभिनवाभिनवोपचारैः अपुनरुक्तानि आनन्दमयानि दश दिनानि स्थित्वा, दत्त्वा राजदौवारिकमिव राजकुले रणरणकं, यौतुकनिवेदितानि इव संवलानि आदाय हृदयानि सर्व्वलोकस्य, कथङ्कथमपि विसर्ज्जितो नृपेण बध्वा सह स्वदेशम् अगमदिति ।

इति श्रीबाणभट्टकृते हर्षचरिते चक्रवर्त्तिजन्मवर्णनं नाम

चतुर्थ उच्छ्वासः ॥ ४ ॥

---

शालदेव्यः, तासाम् आननानि इव—मुखानि इव, मणिगवाक्षकेषु—रत्नमयवातायनेषु, [ गवाम् अक्षीव इत्यत "अक्ष्णोऽदर्शनात्" (५।४।७६ पा॰) इति समासान्ते अचि "अवङ्—" (६।१।१२३ पा०) इत्यादौ व्यवस्थितविभाषाश्रयणात् अवङि रूपम् ] वीक्षमाणः,—पश्यन्, चणदा—रात्रिं, निन्ये—यापयामास इत्यर्थः ।

(२३६) शीलेन—सच्चरितेन। अभिनवाभिनवोपचारैः,—प्रतिदिनं नूतननूतनसत्कारैः। अपुनरुक्तानि—अनास्वादितपूर्व्वाणि। राजदौवारिकं—राज्ञः द्वाररक्षकम्। रणरणकं—विच्छेदजनितमुद्वेगमित्यर्थः; [रणः,—शब्दः, तत्प्रकारः द्वित्वं, ततः संज्ञाया कन् ] दौवारिको यथा नियतमेव द्वारमाक्रम्य वर्त्तते, तथा तद्गमनजनितरणरणकोऽपि सदैव राजपरिजनानां हृदयमाक्रम्य अतिष्ठदिति भावः। यौतुकेति।—यौतुकाय—वैवाहिकोपहाराय, निवेदितानि—समर्पित नि। संवलानि—पाथेयानि, आदाय—गृहीत्वा, हृत्वेत्यर्थः। कथङ्कथमपि—अतिक्लेशेन, अनिच्छयेत्यर्थः; अपत्यभूतं वस्तु न हि क्लेशेनापि नयनगोचरादपसारयितुं शक्यते सहसा पाषाणहृदयैरपीति भावः, विसर्ज्जितः,—गमनाय अनुमतः इति यावत्। वध्वा—राज्यश्रिया।

इत्यभिनवास्लाटवीमचरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना बि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोधविद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चामलाख्यायां श्रीहर्षचरितव्याख्यायां चतुर्थ उच्छ्वासः ॥ ४ ॥

# पञ्चम उच्छ्वासः ।

नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वाऽऽलोकं तरला तड़िदिव वज्रं निपातयति ॥ १ ॥
पातयति महापुरुषान् सममेव बहूननादरेणैव ।
परिवर्त्तमान एकः कालः शैलानिवानन्तः ॥ २ ॥

(१) अथ कदाचित् राजा राज्यवर्द्धनं कवचहरम् आहूय हूणान् हन्तुं हरिणान् इव हरिर्हरिणेशकिशोरम् अपरिमित-

इदानीं राज्ञः प्रभाकरवर्द्धनस्य स्वर्गमनं सूचयितुं नियति-कालचक्रयोः गतिं द्वाभ्यां प्रकटयति, नियतिरिति।—नियतिः,—दैवं, ("दैवं दिष्टं भागधेयं भाग्यं स्त्री नियति-र्विधिः" इत्यमरः) प्रथमम्—आदौ इत्यर्थः, पुंसां—जनानां, सुखम्—आनन्दं, विधाय—दत्वा, तरला—चपला, तड़ित्—विद्युत्, आलोकम्—उद्द्योतं, कृत्वा—सम्पाद्य, उपरि—पश्चात्, वज्रमिव—अशनिमिव, दारुणं—भीषणं, दुःखं—क्लेशं, निपातयति—आनयतीत्यर्थः। अत्र तड़िता सह नियतेरवैधर्म्यसाम्यप्रतिपादनात्, निपातनादिरूपसामान्यधर्म्मादीनाञ्च वाच्यत्वात् पूर्णोपमाऽलङ्कारः। आर्य्या वृत्तम् ॥ १ ॥

पातयतीति।—अनन्तः,—अशेषः, शेषाख्यनागश्च, एकः—केवलः, एकाकी च, सहायान्तरनिरपेक्षः सन्नेवेत्यर्थः, कालः,—समयः, महाकालश्च, प्रलयकाले सङ्कर्षणाख्यस्य अनन्तदेवस्य मुखोद्भूतेन प्रचण्डानलेन जगतो विध्वंसकारित्वोक्तेः; परिवर्त्तमानः,—चक्रवत् परिभ्रमन्, शिरःपरिवर्त्तनादिकं कुर्वंश्च, शैलानिव—पर्व्वतानिव, सममेव—तुल्यकालमेव, युगपदेवेत्यर्थः, बहून्—अनेकान्, महापुरुषान्—श्रेष्ठजनान्, अनादरेणैव—अवहेलयैव, पातयति—ध्वंसयति। एतेन वर्त्तमानस्य राज्ञः भाविनिधनं सूचितम्। अत्रापि पूर्व्ववदेवोपमाऽलङ्कारः। आर्य्या वृत्तम् ॥ २ ॥

(१) अथेत्यादि।—कवचहरं—वर्म्मधरं, ["हरतेर—" (३।२।९ पा०) इत्यादिना कवचोपपदात् हृधातोः अचि रूपम्]। हूणान्—तदाख्यान् स्वधर्म्मच्युत-क्षत्रियान्। हरिः,—सिंहः। हरिणेशकिशोरं—मृगेन्द्रशिशुं, सिंहशावकमित्यर्थः; हरिः हरिणेशकिशोरं हरिणान् हन्तुं यथा प्रहिणोति, तथा राजा राज्यवर्द्धनं हूणान् हन्तुं प्राहिणोदित्यन्वयः। इह हकार-रकार-णकारादीनाम् असकृदावृत्त्या वृत्त्यनुप्रासः,

बलानुयातं चिरन्तनैः अमात्यैः अनुरक्तैश्च महासामन्तैः कृत्वा साभिसारम् उत्तरापथं प्राहिणोत्।

(२) प्रयान्तञ्च तं देवो हर्षः कतिचित् प्रयाणकानि तुरङ्गमैः अनुवव्राज। प्रविष्टे च (३) कैलासप्रभाभासिनीं ककुभं भ्रातरि, वर्त्तमानो नवे वयसि विक्रमरसानुरोधिनि (४) केसरिशरभशार्दूलवराहबहुलेषु तुषारशैलोपकण्ठेषु (५) उत्कण्ठमानवनदेवताकटाक्षांशुशारितशरीरकान्तिः क्रीड़न् मृगयां

---

पूर्णोपमाऽलङ्कारश्च। अपरिमितबलानुयातम्—अपरिमितैः,—प्रभूतैः, बलैः,—सैनिकैः, सामर्थ्यैश्च, अनुयातम्—अनुगतं, चिरन्तनैः,—प्राचीनैः, कुलागतैरित्यर्थः, "सेवकाद्ये पुरातने" इत्युक्तेर्निरतिशयविश्वासपात्रैः इति भावः; अनुरक्तैः,—स्वामिनि अनुरागवद्भिः, महासामन्तैः,—सामन्तप्रधानैः। साभिसार—ससहायमित्यर्थः। ["साभिसारम्" इत्यत्र "साभिसरम्" इति पाठेऽपि स एवार्थः, यद्वा—तैः सानुचरं सम्राट्सुतत्वात् सामन्तैः सेवकैरिवानुसृतम्]। उत्तरापथम्—उत्तरदिक्स्थप्रदेशविशेषं, प्राहिणोत्—प्रेषयामास।

(२) प्रयान्त—गच्छन्तं, रणायेति शेषः। प्रयाणकानि—पदः। अनुवव्राज—अनुजगाम, निर्म्मलसौभ्रातृभावात् प्रवासगमनप्रवृत्ते प्रियजने कियत्पथं तदनुसरणस्य लोकाचारसिद्धत्वाच्च इति भावः।

(३) कैलासेति।—कैलासस्य—तदाख्यस्य अद्रेः, प्रभया—कान्त्या, भासते—द्योतते इति तथोक्ता ता, ककुभं—दिशम्। भ्रातरि—राज्यवर्द्धने। नवे वयसि—प्रथमयौवने इत्यर्थः। विक्रमरसानुरोधिनि—विक्रमे—शौर्य्ये, यो रसः,—अनुरागः, उत्साह इति यावत्, तम् अनुरुध्यते—अनुबध्नाति इति तथाभूते, यौवनकालस्वभावात् शौर्य्यप्रदर्शनोपयोगिनीत्यर्थः।

(४) केशरीति।—केशरिणः,—सिंहाः, शरभाः,—अष्टापदमृगाः, शार्दूलाः,—व्याघ्राः, वराहाः,—शूकराः, तैः बहुलेषु—आकीर्णेषु, यद्वा,—ते बहुलाः,—प्रभूता येषु तथोक्तेषु, दुर्गमस्थानादौ तेषां प्राचुर्य्यात् इति भावः, तुषारशैलोपकण्ठेषु—हिमाचलान्तिकेषु।

(५) उत्कण्ठेति।—उत्कण्ठमानानां—तादृशशोभनाकृतिवीरपुरुषदर्शनेन उत्

मृगलोचनः कतिपयानि अहानि बहिरेव व्यलम्बत। चकार च (६) आकर्णान्ताकृष्टकार्मुकनिर्गतभासुरभल्लवर्षी स्वल्पीयोभिः एव दिवसैः निःश्वापदानि अरण्यानि।

एकदा तु (७) वासतेय्याः तुरीये यामे प्रत्युषसि एव स्वप्ने चटुलज्वालापुञ्जपिञ्जरीकृतसकलककुभा दुर्निवारेण दवहुतभुजा दह्यमानं केसरिणम् अद्राक्षीत्। तस्मिन् एव च दावदहने (८) समुत्सृज्य शावकान् उत्प्लुत्य च आत्मानं पातयन्तीं सिंहीम् अपश्यत्। आसीच्च अस्य चेतसि,—

---

कलिकावतां, तद्दर्शनमात्रेण अनुरागोदयात् दर्शनोत्सुकानामित्यर्थः, वनदेवतानां—वनाधिष्ठातृदेवीनां, कटाक्षाः,—सानुरागतिर्य्यगवलोकितानि, तेषाम् अंशुभिः,—मयूखैः, शारिता—चित्रिता, शरीरकान्तिः,—देहलावण्यं यस्य तथाभूतः। मृगलोचनः,—हरिणायतरम्यनयनः, हर्ष इति भावः। व्यलम्बत—विलम्बं कृतवान्।

(६) आकर्णेति।—कर्णान्तात् आ आकर्णान्तं—कर्णसमीपपर्य्यन्तम्, [“आङ्—” (२।१।१३ पा०) इत्यादिना अव्ययीभावः] आकृष्टात्—आक्षिप्तात्, कार्मुकात्—धनुषः, निर्गतान्—निःसृतान्, भासुरान्—प्रदीप्तान्, शाणितत्वात् इति भावः, भल्लान्—तदाख्यास्त्रविशेषान्, वर्षति—मुञ्चतीति तथाभूतः। स्वल्पीयोभिः,—अत्यल्पैः। निःश्वापदानि—श्वापदरहितानि, अव्यर्थसन्धानत्वात् हिंस्रजन्तुशून्यानीत्यर्थः।

(७) वासतेय्याः,—वसतिः,—रात्रिरेव वासतेयी तस्याः, [तत्र साधुः इत्यर्थे “पथ्यतिथि—” (४।४।१०४ पा०) इत्यादिना ढञ्प्रत्ययः] (वसती रात्रि-वेश्मनोः” इत्यमरः) तुरीये—चतुर्थे, यामे—प्रहरे। प्रत्युषसि—प्रभाते। चटुलेति।—चटुलानां—चञ्चलानाम्, इतस्ततः सञ्चरन्तीनामित्यर्थः, ज्वालानां—शिखानां, पुञ्जैः,—समूहैः, पिञ्जरीकृताः,—पिङ्गलीकृताः, सकलाः,—समस्ताः, ककुभः,—दिशः येन तथाभूतेन, दुर्निवारेण—निवारयितुमशक्येन, अनिर्वापणीयेन इत्यर्थः, दवहुतभुजा—दावाग्निना। केसरिणं—सिंहम्; एतेन पितुर्गात्रदाहरूपो व्याधिः सूचितः, प्रत्यूषकालिकस्वप्नानां प्रायशः निरर्थकत्वाभावात्।

(८) समुत्सृज्य—परित्यज्य। उत्प्लुत्य—उल्लम्फ्य। पातयन्तीं—निक्षिपन्तीम्, अनुरागातिशय्यादिति भावः; एतेन अस्य मातुरग्निप्रवेशः सूचितः।

(९) "लोके हि लोहेभ्यः कठिनतराः खलु स्नेहमया बन्धनपाशाः, यदाकृष्टाः तिर्य्यञ्चोऽपि एवम् आचरन्ति" इति।
(१०) प्रबुद्धस्य च अस्य मुहुर्मुहुः दक्षिणेतरम् अक्षि पस्पन्दे; गात्रेषु च अकस्मादेव वेपथुः विपप्रथे; निर्निमित्तम् एव अन्तर्बन्धनस्थानात् चचाल इव हृदयम्; अकारणादेव च अजायत गरीयसी दुःखासिका। "किमिदम्?" इति च (११) समुत्पन्नविविधविकल्पविमथितमतिः अपगतधृतिः चिन्ताऽवनमितवदनः स्तिमिततारकेण चक्षुषा (१२) समुद्भिद्यमानस्थलकमलिनीवनामिव चकार चकोरेक्षणः क्षणं क्षौणीम्। अह्नि च तस्मिन् शून्येन एव च चेतसा चिक्रीड़ मृगयाम्।

---

(९) लोके—जगति, संसारे इत्यर्थः, कठिनतराः,—अतिकठिनाः, स्नेहमयाः,—स्नेहात्मकाः, बन्धनपाशाः,—बन्धनरज्जवः। यदाकृष्टाः,—यैः,—पाशैः, आकृष्टाः,—नियन्त्रिताः, तिर्य्यञ्चः,—पशुपक्ष्यादयः, एवम्—अग्निप्रवेशेन आत्मत्यागरूपं व्यवसायमिति भावः।

(१०) प्रबुद्धस्य—जागरितस्य। दक्षिणेतरं—वामम्, अक्षि—नेत्रं, पस्पन्दे—पुस्फोर। वेपथुः,—कम्पः, विपप्रथे—प्रचकाट, आविरभूदित्यर्थः। निर्निमित्तम्—अहेतुकम्, अन्तरिति।—अन्तः,—देहाभ्यन्तरे इत्यर्थः, यत् बन्धनस्थानं—संयमनस्थानं, हृदयस्येति भावः तस्मात्, चचाल—चकम्पे, हृत्कम्पः जात इत्यर्थः। गरीयसी—अतिगुर्वी, दुःखासिका—दुःखेन अवस्थानम्; प्राकृतिकारत्याविर्भावात्, निस्त्रिंशप्राया अरुन्तुदा शोकसन्ततिर्वा।

(११) समुत्पन्नेति।—समुत्पन्नेन—आविर्भूतेन, विविधेन—नानाप्रकारेण, विकल्पेन—संशयेन, विमथिता—आलोड़िता, मतिः,—बुद्धिर्यस्य तथाभूतः, अपगतधृतिः,—अधीरः, शुभमशुभं वा इति निर्णेतुमशक्यत्वात् इति भावः, चिन्तेति।—चिन्तया—दुर्भावनया, अवनमितम्—अधःकारितं, वदनं—मुखं येन तथाभूतः। स्तिमिततारकेण—निश्चलकनीनिकेन।

(१२) समुद्भिद्यमानेति।—समुद्भिद्यमानं—विकाशं गच्छत्, स्थलकमलिनीवनं—स्थलपद्मिनीकाननं यस्यां तामिव। चकोरेक्षणः,—चकोरनेत्रः, स्वाभाविकारुण्यात् इति भावः। क्षौणीं—पृथ्वीम्।

(१३) आरोहति च हरितहये मध्यमह्नो भवनम् आगत्य उभयतो मन्दमन्दं संवाह्यमानतनुतालवृन्तः क्षितितलविततम् (१४) अतिशिशिरमलयजरसलवलुलितवपुषम् इन्दुधवलोपधान-धारिणीं वेत्रपट्टिकाम् अधिशयानः साशङ्क एव तस्थौ।

(१५) अथ दूरादेव लेखगर्भया नीलीरागमेचकरुचा चीरचीरिकया रचितमुण्डमालकं, (१६) श्रमातपाभ्याम् आरोप्यमाणकायकालिमानम्, अन्तर्गतेन शोकशिखिना अङ्गा-

---

(१३) हरितहये—हरिदश्वे, सूर्ये इत्यर्थः, अह्नः,—दिवसस्य, मध्यः,—मध्य-भागः तम्, आरोहति—उत्पतति, मध्याह्ने जाते इत्यर्थः। उभयतः,—उभयोः पार्श्वयोरित्यर्थः। संवाह्यमानेति।—संवाह्यमानं—संवीज्यमानं, किङ्करादिभिः इति भावः, तनु—स्वल्पं, क्षुद्रमित्यर्थः, मन्दं मन्दं यथा स्यात्तथा वा, तालवृन्तं—व्यजनं यस्य तथाभूतः। क्षितितलविततां—भूतलविस्तृताम्।

(१४) अतिशिशिरेति।—अतिशिशिरेण—अतिशीतलेन, मलयजरसस्य—चन्दनद्रवस्य, लवेन—विन्दुना, लुलितं—लिप्तं, वपुः,—अवयवः यस्यां तथोक्ताम्। इन्दुधवलेति।—इन्दुः,—चन्द्रः, तद्वत् धवलं—शुभ्रम्, उपधानम्—उपबर्हः, "बालिश" इति ख्यातः शिरःस्थापनोपयोगितूलपूर्णद्रव्यविशेषः इत्यर्थः, तत् धरतीति तां, तद्विशिष्टामित्यर्थः, वेत्रपट्टिकां—"शीतलपाटी" इति समाख्यया वङ्गदेशे प्रसिद्ध-वेत्रनिर्म्मितशयनसाधनविशेषम्। साशङ्कः,—सोद्वेगः।

(१५) "अथ" इत्यस्य "दूरादेव···कुरङ्ककनामानम् आयान्तम् अद्राक्षीत्" इति अग्रेण सम्बन्धः। तं विशिनष्टि, लेखगर्भयेत्यादिभिः।—लेखगर्भया—अन्तर्गतलिप्या, नीलीति।—नीलीरागः,—नीलवर्णः; यद्वा,—नीली—"नील" इति प्रसिद्धः क्षुप-विशेषः, तया रागः,—रञ्जनं, तेन तद्वद्वा मेचका—श्यामला, मयूरकण्ठाभा इत्यर्थः, ("कृष्णे नीलासितश्यामकालश्यामलमेचकाः" इत्यमरः) रुक्—कान्तिः यस्याः तया, चीरचीरिकया—वसनखण्डेन, रचितेति।—रचिता—कृता, मुण्डमाला—शिरो-माला, शिरोवेष्टनमित्यर्थः येन तम्।

(१६) श्रमेति।—श्रमः,—आयासः, आतपः,—रौद्रञ्च ताभ्याम्, आरोप्य-माणेति।—आरोप्यमाणः,—उत्पाद्यमानः, कायस्य—देहस्य, कालिमा—कार्ष्ण्यं यस्य तम्। अन्तर्गतेन—हृदयस्थेन, शोकशिखिना—शोकाग्निना, अङ्गा-

रताम् इव नीयमानम्, (१७) अतित्वराऽऽगमनद्रुततरपदोद्धूय-मानधूलिराजिव्याजेन राजवार्त्ताश्रवणकुतूहलिन्या मेदिन्या इव अनुगम्यमानम्, (१८) अभिमुखपवनप्रेङ्खत्प्रविततोत्तरीय-पटप्रान्तवीज्यमानोभयपार्श्वम् अतित्वरया कृतपक्षम् इव आशु परापतन्तं, प्रेर्य्यमाणम् इव पृष्ठतः स्वाम्यादेशेन, कृष्य-माणम् इव पुरस्तात् आयतैः श्रमश्वासमोचैः, (१९) स्विद्य-ल्ललाटतटघटमानप्रतिबिम्बकेन कार्य्यकौतुकात् अपक्रियमाण-लेखमिव भास्वता, सम्भ्रमभ्रष्टैः इव इन्द्रियैः शून्यीकृतशरीरं,

रतामिव—अलातकृतामिव, नीयमान—प्राप्यमा॰, स्वत्राणातिरेकस्य जायमानत्वात् कृष्णवर्ण्णदेहप्रसमिति भावः।

(१७) अतीति।—अतित्वरया—अतिवेगेन, आगमनम्—आगतिः, तस्मिन् द्रुत-तरेण—अतिशीघ्रेण, शीघ्रनिक्षिप्तेनेत्यर्थः, पदेन—पदक्षेपेण, उद्धूयमाना—उत्क्षिप्य-माणा, या धूलीना—रजसा, राजिः,—श्रेणी, समूह इत्यर्थः, तद्व्याजेन—तन्मि-षेण, राजवार्त्ताश्रवणकुतूहलिन्या—राज्ञः प्रभाकरवर्द्धनस्य सवादाकर्णनौत्सुक्यवत्या, मेदिन्येव—पृथिव्येव, क्षितिपतित्वात् राजपत्नीव इति भावः, अनुगम्यमानम्—अनु-स्रियमाणम्।

(१८) अभिमुखेति।—अभिमुखपवनेन—सम्मुखागतेन वायुना, प्रेङ्खन्—चलन्, प्रविततस्य—सुविस्तृतस्य, उत्तरीयपटस्य—उत्तरीयवसनस्य, यः प्रान्तः,—पर्य्यन्त-भागः, तेन वीज्यमानौ—प्राप्तवीजनौ, उभयौ—द्वौ, पार्श्वौ—कक्षयोरधोभागौ यस्य तम्; अत एव कृतपक्षं—जनितगरुतमिव। परापतन्तं—समागच्छन्तम्। प्रेर्य्यमाण-मिव—प्रेर्य्यमाणमिव। स्वाम्यादेशेन—प्रभुनियोगेन। पुरस्तात्—अग्रतः, आयतैः,—दीर्घैः, श्रमश्वासमोचैः,—परिश्रमजनितनिश्वासमोचनैः, अविश्रामधावने तथैव सञ्चारात् इति भावः।

(१९) स्विद्यदिति।—स्विद्यत्सु—घर्माक्तेषु, ललाटतटेषु—भालदेशेषु, घट-मानं—पतत्, प्रतिबिम्ब—प्रतिरूपं यस्य तथाभूतेन, भास्वता—सूर्य्येण, का कौतु-कात्—केन कार्य्यानुरोधेन अयमीदृक् द्रुततरं गच्छति इति ज्ञातुमौत्सुक्यात्, अप-क्रियमाणा—चौर्य्यमाणा, लेखा—लिपिः यस्मात् यस्य वा तम्, ("लेखा लिपिराजि-रूपयोरपि" इति मेदिनी)। सम्भ्रमभ्रष्टैरिव—सम्भ्रमः,—कार्य्यव्यग्रता, तेन भ्रष्टानि—

(२०) लेखापितप्रयोजनगौरवात् इव समेऽपि वर्त्मनि शून्यहृदयतया स्खलन्तं, कालमेघशकलम् इव पतिष्यतो दुर्वार्त्तावज्रस्य, धूमपल्लवम् इव ज्वलिष्यतः शोकज्वलनस्य, बीजम् इव फलिष्यतो दुष्कृतशालेः, अनिमित्तभूतदीर्घाध्वगं कुरङ्गकनामानम् आयान्तम् अद्राक्षीत्।

दृष्ट्वा च (२१) पूर्वानिमित्तपरम्पराऽऽविर्भूतभीतिः अभिद्यत हृदयेन। कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथमम्

---

च्युतानि तैरिव, इन्द्रियैः,—हस्तपदादिभिः, शून्यीकृतेति।—शून्यीकृतं—विरहितमित्यर्थः, शरीरं—देहः यस्य तथोक्तं, महाऽऽपदि तथैव वैकल्योत्पत्तेः इति भावः।

(२०) लेखेति।—लेखे—पत्रिकायाम्, अर्पितस्य—निहितस्य, लिखितस्येत्यर्थः, प्रयोजनस्य—कार्य्यस्य, गौरवं—गुरुत्वं तस्मादिव, समे—समतले, अबन्धुरे इत्यर्थः, अपि वर्त्मनि—पथि, शून्यहृदयतया—विमनस्कतया, महाराजामङ्गलाशङ्कयेति भावः, स्खलन्तं—पतन्तम्। कालमेघशकलमिव—कृष्णवर्णमेघखण्डमिव, प्रलयकालिकसंवर्त्तादिवलाहकखण्डमिव वा, दुर्वार्त्तावज्रस्य—दुः,—दुष्टा, कठिना इत्यर्थः, वार्त्ता—संवादः एव, वज्रम्—अशनिः तस्य (वजधातोः "ऋज्रेन्द्राग्र—" (उ० २ पा० २८ सू०) इत्यादिना रनि रूपम्]। धूमपल्लवमिव—धूमनिचयमिव, शोकज्वलनस्य—शोकाग्नेः। फलिष्यतः,—फलं प्रसविष्यमाणस्य, दुष्कृतशालेः,—दुःखव्रीहिभेदस्य, दुर्दैवधान्यविशेषस्य वा, त्वरितफलाविर्भावबोधनार्थं शालेरौपम्यम्। अनिमित्तभूतदीर्घाध्वगं—दुर्निमित्तसूचकं दीर्घपथिकम्; यद्वा,—अनिमित्तभूतं—दुर्निमित्तरूपं, दीर्घम्—आयतम्, अध्वानं—पन्थानं गच्छतीति तथोक्तं, विशिष्टामङ्गलसम्भावनाव्यतिरेकेण ईदृशदीर्घाध्वागमनप्रयोजनाभावात् इति भावः।

(२१) पूर्वेति।—पूर्वाभ्यः,—प्रागनुभूताभ्यः, अनिमित्तपरम्पराभ्यः,—दुर्लक्षणसमूहेभ्यः, दुःस्वप्नदर्शनादिरूपेभ्यः इति भावः, ["पूर्वानिमित्त—" इत्यत्र "पूर्व्वनिमित्त—" इति पाठे,—पूर्वेषां—पूर्व्वदृष्टानां, निमित्तानां—हेतूनां, दुःस्वप्नादिदुर्निमित्तसूचकानामिति भावः] आविर्भूता—सञ्जाता, भीतिः,—भयं यस्य तथाभूतः, ["—आविर्भूत—" इत्यत्र "—आविर्भावित—" इति पाठान्तरम्; तत्र पूर्व्वनिमित्तपरम्पराभिः कर्त्रीभिः आविर्भाविता—सञ्जनिता, भीतिः यस्य तादृशः] हृदयेन अभिद्यत—भग्नहृदयोऽभूदित्यर्थः, दूतस्य व्यग्रमलिनवेशदर्शनात् इति भावः।

आननलग्नं विषादम् उपनिन्ये, पश्चाल्लेखम्। तञ्च देवो हर्षः स्वयमेव आदाय अवाचयत्। लेखार्थेन एव च समं गृहीत्वा हृदयेन सन्तापम् अवग्रहरूपोऽप्यधात्,— "कुरङ्गक! किं मान्द्यं तातस्य?" इति। (२२) स चक्षुषा वाष्पजलविन्दुभिः, मुखेन च अखण्डाक्षरैः क्षरद्भिः युगपत् आचचक्षे,—"देव! दाहज्वरो महान्" इति। तच्च आकर्ण्य सहसा सहस्रधा इव अस्य हृदयं पफाल।

आननलग्नं—स्ववदनसंसक्तं, वदनवैकृतेन सूचितमिति यावत्। उपनिन्ये—अर्पितवान्, राजकुमारमिति शेषः, स्वाननीयविषादस्य अन्यतार्पणासम्भवेऽपि तत्सम्बन्धकथनादतिशयोक्तिः। लेखं—पत्रम्। अवाचयत्—अपाठयत्, परिजनेनेति शेषः; अमङ्गलाशङ्कया मतिवैकल्यात् स्वयं पठितुमसमर्थतया, राज्ञां तथाऽऽचारवत्त्वया वा इति भावः; यद्वा,—आदाय स्वयम् अवाचयत्—पितृसंवादत्वेन अपठत् इत्यर्थः, वाचयतेः स्वार्थिकणिजन्तस्य पठनार्थकत्वात्, अन्यथा महाराजासम्माननाख्यापनात् गौरवप्रदर्शनव्याघातः स्यात् इति ज्ञेयम्। लेखार्थेन—पत्रनिहितवस्तुना, लिखितवृत्तान्तेनेत्यर्थः, समं—सह। अवग्रहरूपः,—वर्षप्रतिबन्धरूपः, अवग्रहो यथा शस्योत्पत्तिविघातकरत्वात् प्रजानां शोकराशिमादाय समुदेति, तथा अयमपि सन्तापसमन्वितः आसीत् इत्यस्यावग्रहरूपत्वं ज्ञेयम्; यद्वा,—प्रतिबन्धमयः, स्तम्भिताकृतिरित्यर्थः, ["अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके" इति मेदिनी। अवपूर्व्वकात् ग्रहधातोः"आक्रोशे—" (३।३।४५ पा०) इत्यादिना अनाक्रोशार्थे घञो बाधात् "ग्रहवृ—" (३।३।५८ पा०) इत्यादिना अपि रूपं, वृष्टिविघातार्थकस्तु "अवे—" (३।३।५१ पा०) इत्यादौ विभाषाश्रयणात् इति ज्ञेयम्]। मान्द्यं—विकारः, दैहिकम् अकुशलमित्यर्थः।

(२२) सः,—कुरङ्गकः। वाष्पजलविन्दुभिः,—नेत्रजलपृषतैः; अत्र वाष्पपदेनैव चक्षुर्जलार्थावबोधात् पुनस्तदुपपत्तये जलपदोपादानमधिकमेवेति अधिकपदत्वाख्यदोषः, "चक्षुषा जलविन्दुभिः" इत्यनेनैव गतार्थत्वादिति ज्ञेयम्। अखण्डाक्षरैः,—अभग्नवर्णैः, स्पष्टाक्षरैः इत्यर्थः। ["अखण्डाक्षरैः" इत्यत्र "खण्डाक्षरैः" इति पाठे,—भग्नाक्षरैः, शोकवशात् अस्पष्टाक्षरैरित्यर्थः] क्षरद्भिः,—स्रवद्भिः, दाघजनकपक्षे इति भावः, अक्षरपक्षे—स्खलद्भिः, अन्तरान्तरा प्रसिद्धखण्डिरित्यर्थ शोकजवाष्पावरोधेन गद्गदकण्ठतया इति भावः। अस्य—हर्षस्य। पफाल—पुस्फोट, विददारेत्यर्थः।

कृताचमनश्च (२३) जनयितुः आयुष्कामोऽपरिमितमणि-कनकरजतजातमात्मपरिवर्हम् अशेषं ब्राह्मणसात् अकरोत्, (२४) अभुक्त एव उच्चचाल। "दापय वाजिनः पर्य्याणम्" इति च पुरःस्थितं शिरःकृपाणं बिभ्राणं बभाण युवानम्। (२५) वेपमानहृदयश्च ससम्भ्रमप्रधावितपरिवर्द्धकोपनीतम् आरुह्य तुरङ्गमम् एकाकी एव प्रावर्त्तत।

(२६) अकाण्डप्रयाणसंज्ञाशङ्कक्षुभितन्तु सम्भ्रमात् सज्जीभूतम् उद्भूतमुखरखुररवभरितसकलभुवनविवरम् आगत्यागत्य सर्व्वाभ्यो दिग्भ्यो धावमानम् अश्वीयम् अदृश्यत।

(२३) जनयितुः,—पितुः, आयुष्कामः,—जीविताकाङ्क्षी, अपरिमितेति।—अपरिमितानि—असङ्ख्यानि, मणयः,—रत्नानि, कनकानि—काञ्चनानि, रजतानि—रौप्याणि, तेषां जातं—समूहम्, आत्मनः,—स्वस्य, परिवर्हं—परिच्छदम्, अश्वोपकरणभूतमिति यावत्, अशेषं—समग्रं, ब्राह्मणसात्—विप्रदेयं, ब्राह्मणाधीनमित्यर्थः।

(२४) अभुक्त एव—असम्पन्नान्नपानादिक्रिय एव, उच्चचाल—गन्तुमियेष इत्यर्थः। दापय—आरोपय इत्यर्थः, वाजिनः,—अश्वस्य, पर्य्याणं—पल्ययनम्। शिर इति।—शिरसि—मूर्ध्नि कृपाणम्—असिं, निहितमिति भावः, बिभ्राणं—धारयन्तं, प्रभुनिर्द्देशाकर्णने शस्त्रिणां तदाचारवत्त्वात् इति भावः। बभाण—उवाच।

(२५) वेपमानहृदयः,—कम्पमानचित्तः। ससम्भ्रमेति।—ससम्भ्रमं—सत्वरं, प्रधावितः,—प्रचलितः, यः परिवर्द्धकः,—अश्वपालः, तेन उपनीतः,—उपस्थापितः तम्। एकाकी एव—असहाय एव। प्रावर्त्तत—प्रचक्रमे, गन्तुम् इति शेषः।

(२६) अकाण्डेति।—अकाण्डे—असमये, सहसा इत्यर्थः, प्रयाणं—यात्रा, प्रत्यावर्त्तनमिति यावत्, तस्य संज्ञा—सूचना, ("संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः) तस्यै शङ्कः,—शङ्कनाद इत्यर्थः, तेन क्षुभितं—समाकुलितम्। सम्भ्रमात्—आवेगात्, उद्वेगाद्वा, सज्जीभूतं—कृतसज्जम्, उद्भूतेति।—उद्भूतेन—उद्गतेन, मुखरेण—उच्चैः प्रसृतेन इत्यर्थः, खुराणाम्—अश्वशफानां, रवेण—नादेन, भरितम्—आपूरितं, सकलं भुवनानां—जगतां, विवरम्—अन्तरालं येन यस्य वा तथाभूतम्। सर्वाभ्यः,—चतसृभ्य इत्यर्थ। अश्वीयम्—अश्वानां समूहः अश्वीयम्—

(२७) प्रस्थितस्य च अस्य प्रदक्षिणेतरं प्रयान्तो विनाशम् उपस्थितं राजसिंहस्य हरिणाः प्रकटयाम्बभूवुः। (२८) अग्निशिरश्मिमण्डलाभिमुखश्च हृदयम् अवदारयन् इव दावशुष्को दारुणि दारुणं रराण वायसः। (२९) कज्जलमय इव बहुदिवसम् उपचितबहलमलपटलमलिनिततनुः अभिमुखम् आजगाम शिखिपिच्छलाञ्छनो नग्नाटकः।

---

अश्वसेनावृन्दं, ससादिकं, स्वयङ्गमाप्रसिद्धात् इति भावः, सन्मार्गेनयनात् तेभ्यो हितम्, अश्वारोहिसैन्यमित्यर्थो वा, ["तस्य समूहः" (४।२।३७ पा०) इति "तस्मै हितम्" (५।१।५ पा०) इत्यर्थे वा छविधानात् इति ज्ञेयम्] अढौकत—अनुययौ, तमिति शेषः।

(२७) प्रस्थितस्य—प्रचलितस्य, अस्य—हर्षस्य। प्रदक्षिणेतरम्—अप्रदक्षिणं यथा तथा, वामभागेन इति यावत्, प्रयान्तः,—गच्छन्तः। राजसिंहस्य—राजश्रेष्ठस्य, ("स्युरुत्तरपदे व्याघ्र-पुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥" इत्यमरः); यद्वा,—राजा सिंह इव, राजेव सिंहश्च तस्य, हरिणाः,—मृगाः, हरिणा हि अरण्ये उद्धतं चरन्तः तदरण्यस्य सिंहाभाववत्त्वं सूचयन्ति। प्रकटयाम्बभूवुः,—सूचयामासुः; उक्तञ्च,—"वामे शवशिवाकुम्भा दक्षिणे गोमृगद्विजाः" इति।

(२८) अग्निशिरेति।—अग्निशिराः,—उष्णाः, रश्मयः,—किरणाः यस्य तस्य, सूर्यस्येत्यर्थः, मण्डलं—विम्बं, तदभिमुखः,—तल्लक्ष्यीकृत्य उपविष्ट इत्यर्थः। अवदारयन्—विदारयन्, व्यथयन्निति यावत्,तादृशवायसानाममङ्गलसूचकत्वादिति भावः। दावशुष्के—वनाग्निना दग्धावशिष्टे इति यावत्, दारुणि—काष्ठे, अर्द्धदग्धशुष्कवृक्षे इत्यर्थः, स्थित इति शेषः। दारुणं—श्रुतिकठोरं यथा तथा, रराण—दध्वान; एतस्य दुर्लक्षणत्वमुक्तं वराहमिहिरेण; यथा,—"छिन्नाग्रेऽङ्गच्छेदः कलहः शुष्कद्रुमस्थिते ध्वाङ्क्षे" इति।

(२९) कज्जलमय इव—अञ्जनमय इव। उपचितेति।—उपचितेन—सञ्चितेन, अङ्गमलेषु जीवानां सञ्चारसम्भावनया जैनशासनरतानां तत्चालननिषेधादिति भावः, बहलेन—प्रभूतेन, मलपटलेन—किट्टनिचयेन, मलिनिता—सञ्जातमला, तनुः,—शरीरं यस्य तथाभूतः। शिखीति।—शिखिनः,—मयूरस्य, पिच्छं—बर्हं, लाञ्छनं—चिह्नं यस्य तथाभूतः, नग्नाटकः,—नग्नः,—विवसनः सन्, अटति—भ्रमतीति तथोक्तः, नग्नक्षपणक इत्यर्थ, दिगम्बरबौद्धसन्यासीति यावत्। अहिंसां परमं धर्मं वदद्भिः बौद्धैः शरीरकीटविनाशशङ्कया न शरीरसंस्कारः क्रियते, मयूरपिच्छकृतेन

(३०) दुर्निमित्तैः अनभिनन्द्यमानगमनश्च नितराम् अशङ्कत। हृदयेन पितृस्नेहाहितम्रदिम्ना च तत्तदुपेक्षमाणः, (३१) तुरङ्गमस्कन्धबद्धलक्ष्यं चक्षुः अविचलं दधानः, समवसितहसितसङ्कथः, (३२) तूष्णीम्भूतेन भूपाललोकेन अनुगम्यमानो (३३) बहुयोजनसम्पिण्डितम् अध्वानम् एकेन एव अह्ना समलङ्घयत्।

(३४) उपलब्धनरेन्द्रमान्द्यवार्त्ताविषण्णे इव नष्टतेजसि

---

व्यजनेन च पथि आकाशे च सञ्चारिणः कीटा अपसार्य्यन्ते आवातोष्णश्वासादिभ्यः तन्नाशभयात् इति प्रसिद्धिः, तेषाञ्च दर्शनस्य दुर्लक्षणत्वमुक्तं, यथा,—"नपुंसकव्यङ्गनग्नमुक्तकच्छासिताम्बराः। प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गताः॥" इति।

(३०) दुर्निमित्तैः,—पूर्वोक्तैः वामगहरिणादिभिः दुर्लक्षणैः, अनभिनन्द्यमानम्—अप्रशस्यमानम्, अनाद्रियमाणमिति यावत्, गमनं यस्य तथाभूतः, गत्वा किं द्रक्ष्यामि? किं श्रोष्यामि? अथवा अस्मच्छून्य एव समये कदाचित् अनर्थपातः घटेत, तर्हि किं मुखं दर्शयामः अम्बायाः? इति विचिन्त्य मन्दोत्साहगतिक इत्यर्थः, नितराम्—अतिशयेन। पित्रिति।—पितरि—जनके, स्नेहः,—प्रेम, अनुरागविशेषः इत्यर्थः, तेन आहितः,—जनितः, म्रदिमा—मार्दवं यस्य तेन, जनकस्नेहाकुलेन इति भावः, तत्तत्—दुर्निमित्तजातमित्यर्थः, उपेक्षमाणः,—अगणयन्।

(३१) तुरङ्गमेति।—तुरङ्गमस्य—स्ववाहनस्य, स्कन्धे—गलदेशे एव, बद्धं—लग्नमित्यर्थः, लक्ष्यं—दृष्टिविषयः यस्य तथोक्तम्, अविचलं—स्थिरं, चक्षुः,—नेत्रं, दृष्टिमित्यर्थः, दधानः,—धारयन्। समवसितेति।—समवसिता—अवसानं गता, ["समवसित—" इत्यत्र "दुःसमवसित—" इति पाठे,—दुः,—दुःखात्, समवसिता इत्यर्थः] हसितेन—हास्येन सह, सङ्कथा—आलापः यस्य सः।

(३२) तूष्णीम्भूतेन—मौनिना, महादुर्भावनया विस्मृतान्यावेशेन इति भावः।

(३३) बहुयोजनेति।—बहुभिः,—अनेकैः, योजनैः,—क्रोशचतुष्टयैः, ("स्यात् योजनं क्रोशचतुष्टयेन" इति लीलावती) सम्पिण्डितं—सम्बद्धं, पूर्णमिति यावत्, गुम्फितं वा, बहुयोजनविस्तृतमित्यर्थः। अह्ना—दिवसेन, ["अपवर्गे तृतीया" (२।३।६ पा०) इति तृतीया]। समलङ्घयत्—अतिचक्राम।

(३४) उपलब्धेति।—उपलब्धया—विदितया, नरेन्द्रस्य—राज्ञः, मान्द्यवार्त्तया

अधोमुखीभवति भगवति भानुमति भण्डिप्रमुखेण प्रणयिना राजपुत्रलोकेन बहुशो विज्ञाप्यमानोऽपि न आहारम् अकरोत्। (३५) पुरःप्रवृत्तप्रतीहारगृह्यमाणग्रामीणपरम्पराप्रकटितप्रगुण ि च वह ेव निन्ये निशाम्।

(३६) अन्यस्मिन् अहनि मध्यन्दिने विगतजयशब्दम्, अस्तमिततूर्य्यनादम्, उपसंहृतगीतम्, उत्सारितोत्सवम्, अप्रगीतचारणम्, (३७) अप्रसारितापणपण्यं, स्थानस्थानेषु पवन-

---

—अकुशलसंवादेन, विपन्ने इव—विषादं गते इव, व्यथिते इव इत्यर्थः, नष्टतेजसि—मन्दप्रभे, स्वागुरुत्वसेवकक्लेशस्मरणात् इति भावः, अधोमुखीभवति—पश्चिमाशामवतरतीत्यर्थः। भानुमति—सूर्य्ये। भण्डिप्रमुखेण—भण्डिप्रभृतिना। विज्ञाप्यमानोऽपि—अनुरुध्यमानोऽपि, प्रणयप्राचुर्य्यात् सहचराचारनियमवत्त्वात् वा इति भावः।

(३५) पुर इति।—पुरः,—अग्रतः, प्रवृत्तेन—प्रचलितेन, प्रतीहारेण—दौवारिकेण, गृह्यमाणाः,—ध्रियमाणाः, पथिज्ञानार्थमाहूय आनीयमाना इत्यर्थः, याः ग्रामीणपरम्पराः,—ग्रामवासिगणाः, त्वमेतस्मात् ग्रामात् अग्रवर्त्तिग्रामपर्य्यन्त पन्थानं प्रदर्शय, त्वमप्येतस्मात् पुरःस्थग्रामपर्य्यन्तमित्येवंरूपेण आदिश्यमानप्रतिग्रामस्थजनता इति भावः, ताभिः प्रकटितं—प्रदर्शितं, प्रगुणम्—ऋजु, सुगममित्यर्थः, ("ऋजावजिह्म-प्रगुणौ" इत्यमरः) वर्त्म—पन्थाः यस्य तथाभूतः सन्, वहन्नेव—अविश्रान्त चलन्नेव, पितृपाददर्शनौत्सुक्येन इति भावः।

(३६) "अन्यस्मिन्" इत्यस्य "स्कन्धावारमाससाद" इत्युत्तरेणान्वयः। मध्यन्दिने—मध्याह्ने। स्कन्धावारं विशिनष्टि, विगतेत्यादि।—विगतः,—विरहितः, जयशब्दः,—जयसूचकमङ्गलनिनादः यस्मात् यस्मिन् वा तं, महाविषादात् इत्याशयः। अस्तमितेति।—अस्तमिताः,—अस्त गताः, नष्टा इत्यर्थः, तूर्य्याणां—वादित्रभेदानां, नादाः,—ध्वनयः यस्मिन् तम्। उपेति।—उपसंहृतानि—त्यक्तानीति यावत्, गीतानि—गानानि यस्मिन् यस्मात् वा तम्। उत्सारितोत्सवम्—अपनीतानन्दम्। अप्रगीतचारणं—प्रकृष्टं गीतं येषां ते प्रगीताः, न सन्ति प्रगीताः अप्रगीताः,—अकृतसङ्गीता इत्यर्थः, चारणाः,—कुशीलवाः, नटा इति यावत् यस्मिन् तम्।

(३७) अप्रसारितेति।—न प्रसारितानि—न विस्तारितानि, आपणेषु—निषद्यासु, हट्टेषु इत्यर्थः, ("आपणस्तु निषद्यायाम्" इत्यमरः) पण्यानि—विक्रेयवस्तूनि

बलकुटिलाभिः कोटिहोमधूमलेखाभिः उल्लसन्तीभिः (३८) यम-महिषविषाणकोटिभिः इव उल्लिख्यमानं, कृतान्तपाशवागुराभिः इव वेष्ट्यमानम्, (३९) उपरि कालमहिषालङ्कारकालायस-किङ्किणीभिः इव कटु क्वणन्तीभिः दिवसं वायसमण्डलीभिः भ्रमन्तीभिः आवेद्यमानप्रत्यासन्नाशुभं, (४०) क्वचित् प्रतिशायित-स्निग्धबान्धवाराध्यमानाहिबुध्नं, क्वचित् (४१) दीपिकादह्यमान-

यस्मिन् तम्। पवनेति।—पवनस्य—वायो. बलेन—वेगेन, कुटिलाः,—भङ्गिमत्यः ताभिः, कोटीति।—कोटिहोमस्य—राज्ञः पीड़ानिवृत्त्यर्थं स्वस्त्ययनेषु कोटिकृत्वः अनुष्ठितहोमस्य इति भावः, धूमलेखाभिः,—धूमराजिभिः, उल्लसन्तीभिः,—उद्गच्छन्तीभि।

(३८) यमेति।—यमस्य—कृतान्तस्य, राज्ञो ग्रहणार्थम् आगतस्य इति भावः, यो महिषः,—वाहनभूत इति भावः, तस्य विषाणकोटिभिरिव—शृङ्गाग्रैरिव, उल्लिख्यमानम्—उद्घृष्यमाणं, समन्तादाकीर्य्यमाणमिति यावत्। कृतान्तेति।—कृतान्तस्य—यमस्य, पाशाः,—प्राणिसंयमनार्थमस्त्रविशेषा एव, वागुराः,—मृगबन्धनजालविशेषाः ताभिः, [ वाधातोः "मद्गुरादयश्च" (उ० १ पा० ४२ सू०) इति आकृतिगणत्वात् उरचि गुगागमे निपातनात् रूपम्। "वागुरा मृगबन्धनी" इत्यमरः ] वेष्ट्यमानमिव—संयम्यमानमिव।

(३९) उपरि—ऊर्द्ध्वदेशे, अन्तरीक्षे इत्यर्थः, कालेति।—कालस्य—यमस्य, ( "शमनो यमराड् यमः। कालो दण्डधरः" इत्यमरः ) यो महिषः,—वाहनस्वरूपः,तस्य अलङ्काराः,—आभरणरूपाः, याः कालायसकिङ्किण्यः,—कृष्णलौहनिर्म्मितक्षुद्रघण्टिकाः ताभिरिव, कटु—श्रुतिविरसं यथा तथा इत्यर्थ, क्वणन्तीभिः,—रुवतीभिः, दिवसं—कृत्स्नं दिनं व्याप्य इत्यर्थः, भ्रमन्तीभिः,—विचरन्तीभिः, वायसमण्डलीभिः,—काकनिवहैः, आवेद्यमानेति।—आवेद्यमानं—सूच्यमानं, प्रत्यासन्नम्—आगतप्रायम्, अशुभम्—अमङ्गलं राजविनाशरूपमिति भावः यस्मिन् तं, महोत्पातादौ क्रूरजीवानां स्वयं सहसा समापतनवत्त्वादिति भावः।

(४०) क्वचित्—कुत्रचित् विभागे, प्रतिशायितेति।—प्रतिशायितैः,—कृतोपवा इत्यर्थः, स्निग्धैः,—वत्सले, राजनि अनुरक्तैरित्यर्थः, बान्धवैः,—बन्धुजनै, आराध्यमानः,—अर्च्यमानः, आरोग्यकामनयेति भावः, अहिबुध्नः,—अहिना शोभितः बुध्नः,—ग्रीवा, अहेरिव बुध्नो वा यस्य सः अष्टमूर्त्तिः, शिवः इत्यर्थः, सततकण्ठावेष्टितभुजङ्गवत्त्वात्

कुलपुत्त्रकप्रसाद्यमानमातृमण्डलं, क्वचित् ( ४२ ) मुण्डोपहाराहरणोद्यतद्रविड़प्रार्थ्यमानामर्द्दकं, क्वचित् ( ४३ ) अन्ध्रोद्भ्रियमाणबाहुवप्रोपयाच्यमानचण्डिकम्, अन्यत्र ( ४४ ) शिरोविधृत-

वीरनीराजनबत्त्वाद् इति भावः यस्मिन् तम्, मृत्युभये मृत्युञ्जयाराधनस्य शास्त्रोपदिष्टत्वात् इति हृदयम्। [ "—बान्धवाराध्यमानाहिर्बुध्नम्" इत्यत्र "—बान्धवाराध्यमान हिर्बुध्नम्" इति पाठोऽपि स एवार्थः, ( "अहिर्बुध्नोऽष्टमूर्त्तिश्च गजारिश्च महानटः" इति कोष )।

( ४१ ) दीपिकेति।—दीपिकाभिः,—प्रदीपैः, सर्वासु दिक्षु प्रज्वलन्तीभिरिति भावः, एतदपि स्वस्त्ययनार्थमिति बोध्यम् एवमुत्तरत्रापि, दह्यमानेन—तप्यमानेन, समन्तादवस्थितदीपमण्डलीमध्यस्थितेन इति भावः, यद्वा,—दीपिकाभिः,—स्वर्णाधारसज्जितसहस्रदीपैः इत्यर्थः, दह्यमानेन, नीराजने हस्तात्तलम्बनात् इति भावः, कुलपुत्त्रकेण—सत्कुलजा कुमारेण, प्रसाद्यमान—सन्तर्प्यमाणम्, आराध्यमानमिति यावत्, मातृणा—ब्राह्मीत्यादीना, मण्डल-समूहः यस्मिन् तम्, मातरश्चोक्ता यथा,—"ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः॥" इति।

( ४२ ) मुण्डेति।—मुण्ड—नरशिरः, तदेव उपहारः,—बलि, तस्य आहरणे—सङ्ग्रहणे, उद्यतः,—प्रवृत्तः, यः द्रविडः,—द्रविडदेशीयोपासकविशेष, तेन प्र[र्थ्य]मानः,—याच्यमानः, राज्ञ आरोग्यमिति भावः, आमर्द्दकः,—वेतालविशेषः, "रौद्रदेवताभेदः" इत्यन्ये, यस्मिन् तथोक्तम्, वेताला हि मुण्डोपहारप्रिया अलौकिकप्रभावेण उपासकानामभीष्ट साधयन्तीति धिया केनचित् द्रविडेन राज्ञ आरोग्यकामेन नरशिरोबलिविधानेन यत्र क्वचित् वेतालसिद्धिः क्रियते, तत्कालप्रचलितप्रथाऽनुरूपम् इति भावः।

(४३) अन्ध्रेति।—अन्ध्रैः—तदाख्यदेशभवै उपासकैः,उद्भ्रियमाणै,—उत्तोल्यमानैः, [ "अन्ध्रोद्भ्रियमाण—" इत्यत्र "आन्ध्रोद्भ्रियमाण—" इति पाठेऽपि स एवार्थः ] बाहुभिः,—भुजैः, वप्रैरिव—प्राकारसदृशैरित्यर्थः, प्राकारसदृशैः उन्नतैरिति यावत्, ऊर्द्ध्वबाहुभिरन्ध्रदेशीयोपासकैरिति भाव उपयाच्यमाना—राजजीवन प्रार्थ्यमाना, चण्डिका—तदाख्या देवीमूर्त्तिः यस्मिन् तम्, "काली चण्डी-विनायकौ" इत्यादिदर्शनात् त्वरितफलसिद्ध्याशया महामायोपासनारतत्वात् इति भावः यत्र क्वचित् अन्ध्राः स्वान् स्वान् बाहून् उत्तोल्य स्तुतिभिः चण्डिकाऽन्तिके राजारोग्य प्रार्थयामासुरित्याशय। चण्डिकामाहात्म्यस्तुतेरारोग्यफलकत्वमुक्त देवीमाहात्म्ये यथा,—"श्रुत हरति पापानि तथाऽऽरोग्य प्रयच्छति" इति,

विलीयमानगुग्गुलुविकलनवसेवकानुनीयमानमहाकालम्, अपरत्न
(४५) निशितशस्त्रीनिकृत्तात्ममांसहोमप्रसक्ताप्तवर्गम्, अपरत्न
(४६) प्रकाशनरपतिकुमारकक्रियमाणमहामांसविक्रयप्रक्रमम्,

---

तथा,—"सर्वाबाधासु घोरासु वेदनाऽभ्यर्दितोऽपि वा। स्मरन्ममैतन्माहात्म्यं नरो मुच्येत सङ्कटात्॥" इति च। [ "अन्त्रोद्ध्रियमाण······चण्डिकम्"इत्यत्र"अन्त्रोद्ध्रियमाणान्त्रोपयाच्यमानचण्डिकम्" इति पाठे,—अन्त्रेण उद्ध्रियमाणं यदन्त्रं—बलिपशोः उदरदेशस्थनाड़ीविशेषः, तेन, तद्दानेन इत्यर्थः, उपयाच्यमाना—"देवि! एतदन्त्रग्रहणेन सन्तुष्टा राजानं नीरुजं कुरु" इति प्रार्थ्यमाना, चण्डिका यत्र तं, तेषाम् उत्कटतन्त्रोक्ताचारवत्त्वात् इत्याशयः ]।

(४४) शिर इति।—शिरसा—मूर्द्ध्ना, विधृतेन—गृहीतेन, शिरसि स्थापितेन इत्यर्थः, विलीयमानेन—अग्न्युत्तापेन विगलता, गुग्गुलुना—तन्निर्म्मितधूपविशेषेण, विकलः,—विह्वलः, धूपानलसन्तापात् इति भावः, यो नवः,—नवीनः, युवेत्यर्थः, वृद्धानां तद्धारणासामर्थ्यादिति भावः, सेवकः,—उपासकः, तेन अनुनीयमानः,—प्रसाद्यमानः, कालकवलाद्राजरक्षणार्थमिति भावः, महाकालः,—हरः यस्मिन् तम्; तदुक्तमग्निपुराणे,—"गुग्गुलुं घृतसंयुक्तं साक्षात् गृह्णाति शङ्करः" इति।

(४५) निशितेति।—निशितया—तीक्ष्णया, शस्त्र्या—छुरिकया, ("स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका" इत्यमरः) निकृत्तेन—छिन्नेन, आत्मनः,—स्वस्य, मांसेन - पिशितेन, यो होमः,—देवयज्ञः, देवानुद्दिश्य मन्त्रोच्चारणपूर्व्वकमग्नौ आहुतिदानमित्यर्थः, तस्मिन् प्रसक्ताः,—प्रवृत्ताः, आप्तवर्गाः,—स्वजनाः यस्मिन् तम्, इतरेषां तत्साधने तथाविधानुरागायोगात् इत्याशयः; उक्तञ्च तन्त्रसारे,—"यः स्वहृदयसञ्जातं मांसं माषप्रमाणतः। तिलमुद्गप्रमाणं वा दद्यात् भक्तियुतो नरः॥ स एव मासाभ्यन्तरे काममिष्टमवाप्नुयात्॥" इति।

(४६) प्रकाशेति।—प्रकाशं—सर्व्वसमक्षं यथा तथा, नरपतीनां—राज्ञां, करदानां सामन्तानामित्यर्थः, कुमारकैः,—तनयैः, क्रियमाणः,—विधीयमानः, महामांसानां—मनुष्यपिशितानां, निहतबहुमेध्यपुरुषावयवगृहीतानामिति भावः, विक्रयस्य, पिशाचादिभ्य इति भावः, प्रक्रमः,—प्रारम्भः यस्मिन् तथोक्तम्; पिशाचादयोऽपि महामांसप्राप्त्या तद्विनिमयेन अलौकिकशक्तिमत्तया विक्रेतॄणामुपकारं कुर्व्वन्ति, अत्र तु राजजीवनोपायभूतौषधादिदानमेव उपकार इति भावः। तादृशक्रियायाः राजदण्डभयात् लोकापवादभीतेः वा अप्रकाशम् अनुष्ठानं जनैः क्रियते, इह तु राजाभीष्ट-

(४७) उपहतमिव श्मशानपांशुभिः, अमङ्गलैरिव परिगृहीतं, यातुधानैरिव विध्वस्तं, कलिकालेन इव कवलितं, (४८) पापपटलैः इव सञ्छादितम्, अधर्म्मविक्षेपैः इव लुण्ठितम्, अनित्यताधिक्कारैः इव आक्रान्तं, नियतिविलासैः इव आत्मीकृतं, शून्यमिव, सुप्तमिव, मुषितमिव, विलक्षितमिव, छलितमिव, मूर्च्छितमिव स्कन्धावारम् आससाद।

---

सिद्धये तदनुष्ठानात् न राजदण्डभयं न लोकनिन्दाभयं वा इति प्रकाशशब्देन आवेदितम्।

(४७) श्मशानेति।—श्मानः,—शवाः शेरतेऽत्र इति श्मशानं—शवदाहस्थानं, [श्मन्नुपपदात् 'शीङ्' इत्यस्मात् "युधि—" (उ० २ पा० ९० सू०) इत्यादिना उणादिविधीनां बाहुल्यवत्त्वात् इति आनचि तत्रैव चकारग्रहणात् डित्त्वात् रूपम्] तस्य पांशुभिः,—श्मशानस्थधूलिपुञ्जैः इत्यर्थः, उपहतमिव—दूषितमिव, नीरसेक-मार्ज्जनाद्य-भावात् पांशुव्याप्तमिति भावः। अमङ्गलैः,—अशुभैः, परिगृहीतमिव—आक्रान्तमिव, सर्व्वत्रैव प्रबलविषादराशिसमाच्छन्नत्वादिति भावः। यातुधानैरिव—राक्षसैरिव, ("राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः। यातुधानः पुण्यजनः" इत्यमरः) विध्वस्तं—विनष्टं, सर्व्वत्र स्थितिनियमानुकूलशृङ्खलाभावात्। कवलितं—ग्रस्तं, शासनाभावेन दुर्वृत्तानां प्रभावाधिक्यात्, लुण्ठनादिव्यापारनिरतत्वाच्च इति भावः।

(४८) पापपटलैरिव—कलुषनिचयैरिव, सञ्छादितम्—आकीर्णम्। अधर्म्मविक्षेपैः इव—अधर्म्मसञ्चारैरिव, लुण्ठितं—कृतलुण्ठनम्। अनित्यताधिक्कारैरिव—अनित्यः,—संसारोऽयं क्षणभङ्गुरः, तस्य भावः अनित्यता—विनश्वरता, तया धिक्काराः,—अनित्यं संसारं धिगिति वचनानि तैरिव, आक्रान्तम्—अभिभूतं, शोकावेगात् सर्व्वत्रैव कर्त्तव्येषु औदासीन्यादिति भावः। नियतिविलासैरिव—भाग्यविचेष्टितैरिव, आत्मीकृतं—गृहीतम्, अहो दुर्दैवम्! कथमस्माकमीदृशी दुर्दशा समुपस्थिता, सर्व्वत्रैव ईदृशवाक्यप्रवर्त्तनादिति भावः। शून्यमिव—जनरहितमिव, सुप्तमिव—निद्रितमिव, महाशोकवैकल्येन सर्व्वेषां निःशब्दमवस्थानादिति भावः। मुषितमिव—हृतसर्व्वस्वमिव इत्यर्थः, विभूषिताङ्गानामपि जनानां भूषणादिकं परित्यज्य दीनभावेनावस्थानादिति भावः। विलक्षितमिव—अप्रतिभमिव, लज्जितमिव वा। छलितमिव—प्रतारितमिव, दुर्भावनया मुखादिवैवर्ण्यादिति भावः। मूर्च्छितमिव—मोहं गतमिव,

प्रविशन्नेव च (४९) विपणिवर्त्मनि कुतूहलाकुलबहुलबालकपरिवृतम् ऊर्द्ध्वयष्टिविष्कम्भविततं वामहस्तवर्त्तिनि (५०) भीषणमहिषाधिरूढप्रेतनाथसनाथे चित्रवति पटे परलोकव्यतिकरम् इतरकरकलितेन शरकाण्डेन कथयन्तं यमपट्टिकं ददर्श ; तेनैव च गीयमानं श्लोकम् अशृणोत्,—

"मातापितृसहस्राणि पुत्त्रदारशतानि च ।
युगे युगे व्यतीतानि कस्य ते ? कस्य वा भवान् ?" ॥३॥ इति ॥

---

शोकावेगेन सर्व्वचेष्टाराहित्यादिति हृदयम् ; स्कन्धावार—कटकं, सैनिकनिवेशनस्थानमित्यर्थ, राजधानीमिति यावत्, आससाद—प्राप, उपतस्थे इत्यर्थ, ["आससाद" इत्यत्र "समाससाद" इति पाठोऽपि—स एवार्थ ]। अत्र शोच्यमहाराजः आलम्बनविभावः, निराशार्त्तचेष्टाद्युद्दीपनविभावा, दैवनिन्दाक्रन्दिताद्यनुभावा, मोहादिव्यभिचारिण:, तै व्यक्तीकृत, शोक: करुणरसरूपतामेत्य भद्धितामेति, रौद्रवीभत्सादयश्चान्ये,स्य अङ्गभूता ज्ञेया इति सङ्क्षेप. ।

(४९) "विपणिवर्त्मनि" इत्यस्य "यमपट्टिक ददर्श" इत्यग्रेणान्वय'। विपणिवर्त्मनि—पण्यवीथिकामार्गे, ("विपणि: पण्यवीथिका" इत्यमर.) कुतूहलेति ।—कुतूहलेन—किमेतदिति कौतुकेन, आकुला:,—आक्रान्ता, बहुला:,—बहव, ये बालका,—शिशव:, तै: परिवृत:,—वेष्टित: तम्, ऊर्द्ध्वेति ।—ऊर्द्ध्वा—ऊर्द्ध्वीकृत्य स्थापिता इत्यर्थ., या यष्टि:,—दण्ड:, सैव विष्कम्भ.,—स्खलनप्रतिबन्ध इत्यर्थ, अवलम्बनमिति यावत्, ("विष्कम्भो योगभेदे स्यात् विस्तार-प्रतिबन्धयो." इति मेदिनी ) तत्र विततः,—प्रसारित' तस्मिन्, वामहस्तवर्त्तिनि—वामकरस्थिते ।

(५०) भीषणेति ।—भीषण:,—भयङ्कर., य. महिष:, तम् अधिरूढ:,—अधिष्ठित:, य. प्रेतनाथ:,—यम., तत्सनाथे—तद्युक्ते, चित्रवति—चित्रिते, पटे—फलके इत्यर्थ:, परलोकव्यतिकरं—प लोके—अन्यस्मिन् जगति, प्रेतलोके इति यावत्, य' व्यतिकर',—सम्बन्ध:, शुभाशुभकर्म्मजनितपुरस्कारदण्डरूप. इति भाव: तं, परलोकव्यापारमित्यर्थ', इतरकरकलितेन—दक्षिणहस्तधृतेन, शरकाण्डेन—तदाख्यतृणविशेषस्य स्तम्बेन. कथयन्तं—धर्म्मशून्यमानवजीवनं निरर्थकम् इत्यावेदयन्तमित्यर्थ:, यमपट्टि का—यमपट्टेन—तत्प्रदर्शनेनेत्यर्थ', दीव्यति इति यमपट्टिक. तम् ; ["तेन दीव्यति—" (४।४।२ पा० ) इत्यनेन ठकि रूपम् ]। तेनैव—यमपट्टिकेनैव ।

चित्र प्रदर्श्य सर्वेषामेव नश्वरत्वप्रकटनव्याजेन राज्ञ. अचिरविनाश सूचयति,

(५१) तेन च अधिकतरम् अवदीर्य्यमाणहृदयः क्रमेण राजद्वारं प्रतिषिद्धसकललोकप्रवेशं ययौ। तुरगात् अवतीर्णश्च अभ्यन्तरात् निष्क्रामन्तम् अप्रसन्नमुखरागं मुक्तमिव इन्द्रियैः सुषेणनामानं वैद्यकुमारम् अद्राक्षीत्। कृतनमस्कारश्च अप्राक्षीत्,—"सुषेण! अस्ति तातस्य विशेषो न वा?" इति। सोऽब्रवीत्,—"नास्ति, इदानीं यदि भवेत् कुमारं दृष्ट्वा" इति। (५२) मन्दमन्दं द्वारपालैः प्रणम्यमानश्च दीयमानसर्वस्वं, पूज्य-

मातेति।—मातापितॄणां—मातरपितॄणाम्, [ "आनङ् ऋतो द्वन्द्वे" (६।३।२५ पा०) इति सूत्रेण ऋदन्तायाः मातुरानङ्] सहस्राणि—समूहाः, पुत्रदारशतानि च—पुत्र-कलत्रसमूहाश्च, युगे युगे—प्रतियुगं, व्यतीतानि—अतिक्रान्तानि, स्वं स्वं सम्बन्धिनं त्यक्त्वा नाशं गतानि इत्यर्थः, ते—मातापित्रादयः स्त्रीपुत्रादयश्च, कस्य?—न कस्यापि इत्यर्थः, भवान्—त्वं, वा कस्य?—न कस्यापि इत्यर्थः। श्लोकेनानेन राजमरणे त्वया अधीरेण न भाव्यं, प्राणिनामियमेव गतिः नियता, त्वयाऽप्येवमेव गन्तव्यमिति उप-दिष्ट इव हर्षः इति बोध्यम्। अत्र पितुस्ते निधनं भविष्यति, तेन पितृविरहनिबन्धन-शोकस्तु त्वया परिहरणीयः, तत्तत्सम्बन्धस्यानित्यत्वात् चयित्वस्यापरिहार्य्यत्वादिति विशेषे प्रस्तुते वक्तव्ये मातापित्रादीनां प्रतियुगक्षतं चयित्वं सामान्यमभिहितमिति सामान्येन विशेषस्य गम्यमानत्वेनाप्रस्तुतप्रशंसाऽलङ्कारः]। पथ्यावक्त्रं वृत्तम्॥ ३॥

(५१) तेन—उक्तरूपश्लोकेन, अवदीर्य्यमाणहृदयः,—भिद्यमानान्तःकरणः। प्रतिषिद्धेति।—प्रतिषिद्धः,—निवारितः, सकलानां लोकानां—जनानां, प्रवेशः,—अन्तर्गमनं यस्मिन् तत्। अभ्यन्तरात्—गृहमध्यात्, अन्तःपुरादिति भावः, निष्क्रामन्तं—निर्गच्छन्तम्। अप्रसन्नेति।—न प्रसन्नः,—प्रसादयुक्तः, मुखस्य रागः,—कान्तिः यस्य तम्, इन्द्रियैः,—चक्षुरादिभिः, मुक्तमिव—परित्यक्तमिव, राज्ञः रोगप्रशमनोपायानुसन्धान-व्याकुलचित्ततया बाह्यज्ञानरहितमिव इत्यर्थः। विशेषः,—अवस्थापरिवर्त्तनमित्यर्थः, कियता परिमाणेन रोगोपशम इति यावत्। नास्ति, विशेष इति शेषः। भवेत्, विशेष इति शेषः; प्रवासागतपुत्रमुखनिरीक्षणेन महानन्दोदये रोगप्रशमनस्य कथञ्चित् सम्भावितत्वात् इति भावः।

(५२) "मन्दमन्दम्" इत्यस्य "प्रणम्यमानश्च······राजकुलं विवेश" इति अग्रेण सम्बन्धः। मन्दमन्दं—शनैः शनैः। ["मन्दमन्दम्" इत्यत्र "मन्दं मन्दम्" इति

मानकुलदेवतं, (५३) प्रारब्धास्तृतचरुपचनक्रियं, क्रियमाण-षड़ाहुतिहोमं (५४) हूयमानपृषदाज्यलवलिप्तप्रचलदूर्वा-पल्लवं, (५५) पठ्यमानमहामायूरी, प्रवर्त्त्यमानगृहशान्ति,

पाठान्तरम् ]। तत् विशिनष्टि, दीयमानेत्यादिभिः।—दीयमानानि—अर्प्यमाणानि, ब्राह्मणादिभ्य इति भावः, सर्व्वस्वानि—सर्वाणि स्वानि—धनानि यत्र तत्, ब्राह्मणार्चाया महाबाधाशान्तिकरत्वात् इति भावः। पूज्यमानेति।—पूज्यमानाः,—अर्च्यमानाः, कुल-देवताः,—चण्डीप्रभृतयो गृहदेवताः यस्मिन् तत्।

(५३) प्रारब्धेति।—प्रारब्धा—प्रक्रान्ता, अमृतचरोः,—रोगशान्तये देवेभ्यः दीयमानस्य चीरपक्वान्नविशेषस्य, पायसस्येति यावत्, पचनक्रिया—पाकानुष्ठानं यस्मिन् तत्, पुष्यनक्षत्रसञ्जातरोगशान्तये घृतपायसेन होमविधानादिति भावः; उक्तञ्च षट्कर्म्म-दीपिकायां,—"पुष्ये घृतपायसम्" इति। क्रियमाणेति।—क्रियमाणाः,—अनुष्ठीयमानाः, षट्—षट्सङ्ख्यकाः, आहुतयः,—देवोद्देशेन अग्नौ समन्त्रघृतादिप्रक्षेपरूपाः एव, होमा यस्मिन् तत्; षड़ाहुतिहोमानामशुभशान्तिकरत्वं तत्तन्मन्त्रैरेवोक्तं, यथा शाकुनः,—"ओँ देवकृतस्यैनसोऽवयजनमसि स्वाहा १। ओँ मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा २। ओँ पितृकृतस्यैनसोऽवयजनमसि स्वाहा ३। ओँ आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ४। ओँ एनसोऽवयजनमसि स्वाहा ५। ओँ यच्चैनो विद्वांश्चचार यद्वा विद्वांसस्य सर्व्वस्यैनसो-ऽवयजनमसि स्वाहा" ६। इति। यद्वा,—"ओँ प्रजापतये स्वाहा" इत्यादिमन्त्रेण षण्णां देवतानां नामोच्चारणपूर्व्वकमग्नौ षण्णामाहुतीनां दानेन कृतः होमः षड़ाहुतिहोम उच्यते।

(५४) हूयमानेति।—हूयमानाः,—अग्नौ प्रक्षिप्यमाणाः, पृषदाज्यस्य—दधियुक्तघृतस्य, ("पृषदाज्यं सदध्याज्ये" इत्यमरः) लवेन—बिन्दुना, लिप्ताः,—सिक्ता इत्यर्थः, प्रचलाः,—चञ्चलाः, हरिद्वर्णा इति भावः, दूर्वापल्लवाः,—दूर्वाकिसलयाः यस्मिन् तत्; उक्तञ्च षट्कर्म्मदीपिकायाम्,—"आयुष्कामो घृततिलैः दूर्वाभिः आम्रपर्णकैः ज्वरं सद्यो विनाशयेत्" इति।

(५५) पठ्यमानेति।—पठ्यमाना—उच्चार्यमाणा, महामायूरी—बौद्धविद्या-विशेषः, शैवमन्त्रविशेषो वा यत्र तत्, सार्व्वभौमस्य निरामयत्वकामनया राष्ट्रवासि-विभिन्नसाम्प्रदायिकैः स्वमतसिद्धस्वस्त्ययन-मन्त्रवादादीनामर्चादौ अनुष्ठानात् इति ज्ञेयम्। प्रवर्त्त्यमानेति।—प्रवर्त्त्यमाना—सम्पाद्यमाना, गृहशान्तिः,—गृहदोष-

( ५६ ) निर्वर्त्त्यमानभूतरक्षावलिविधानं, प्रयतविप्रप्रस्तुतसंहिता-जपं, ( ५७ ) जप्यमानरुद्रैकादशीशब्दायमानशिवगृहम्, अतिशुचि-शैवसम्पाद्यमान-विरूपाक्ष-क्षीरकलश-सहस्रस्नपनम्, ( ५८ ) अजिरोपविष्टैश्च अनासादितस्वामिदर्शनदूयमानमानसैः

संश्लिरिति यावत् यत्र तत्, दुष्टग्रहाणां कौपदृष्टिशङ्कया भूयसः शल्याद्यवस्थितिशङ्कया वा इति भाव.।

( ५६ ) निर्वर्त्त्यमानेति।—निर्वर्त्त्यमान—सम्पाद्यमान, भूतेभ्य,—दैवयोनि-विशेषेभ्यः, रक्षार्थं—त्राणार्थं, बलिविधान—माषभक्ताद्युपहारप्रदान यस्मिन् तत् ; तत्प्रदानमन्त्राश्च उक्ता. यथा,—"ओ भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले। ते गृह्णन्तु मया दत्त बलिमेतं प्रसाधितम्॥ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिता.। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥" इति। [ "पठ्यमान ··बलिविधानम्" इत्यत्र "पठ्यमानमहामायूरीप्रवर्त्त्यमानगृहशान्तिनिर्वर्त्त्यमानभूतरक्षावलिविधानम्" इति समस्त-पाठे,—पठ्यमाना या महामायूरी, तया प्रवर्त्त्यमानायै—कर्त्तुमिष्यमाणायै, गृहस्य शान्त्यै—दोषसंशोधनाय, निर्वर्त्त्यमान भूतरक्षाबलिविधान यत्र तत् ]। प्रयतेति।—प्रयतै.,—संयतशालिभि., विशुद्धचित्तै. इति यावत्, विप्रै,—द्विजै., प्रस्तुत,—प्रारब्ध., संहिताजप,—वेदपाठ. यस्मिन् तत् ; अपौरुषेयवागात्मकमन्त्रस्तोमाना निरन्तर-पाठेनाशेषप्रत्यवायनाशानुशासनात् इति भाव.।

( ५७ ) जप्यमानेति।—जप्यमानया—पठ्यमानया, रुद्रैकादश्या—"नमस्ते रुद्रमन्यवे" इत्यादि यजुर्वेदे ज्ञातरुद्राध्यायस्तुतिरूपया, शब्दायमान—निनाद्यमान, शिवगृहं —शिवमन्दिर यस्मिन् तत्, दु.साध्यपीडादौ शिवसविधे रुद्राध्यायपाठस्य महार्त्तिप्रशमन-त्वात् इति हृदयम्। अतिशुचीति।—अतिशुचिना—अतिपूतेन, शैवेन—शिवोपासकेन, सम्पाद्यमानम्—अनुष्ठीयमान, विरूपाक्षस्य—शिवस्य, [ "बहुव्रीहौ—" ( ५। ४। ११३ पा॰ ) इत्यादिना षच् ] क्षीरकलशाना—दुग्धकुम्भाना, सहस्रेण—दशशतसङ्ख्यया, स्नपनम्—अभिषेचनं यस्मिन् तत्, शैवतन्त्रविधानेन तथाविधानुष्ठानस्य उत्पात-प्रशमकत्वात् इति भाव।

( ५८ ) अजिरोपविष्टै,—चत्वरासीनै., [ अजधातोः "अजिर—" ( उ॰ १ पा॰ ५४ सू॰ ) इत्यादिना किरचि वीभावाभावे रूपम्। "अङ्गनं चत्वराजिरे" इत्यमर. ] अनासादितेति।—अनासादितेन—अप्राप्तेन, स्वामिदर्शनेन—प्रभु-साक्षात्कारेण, स्वामिदर्शनालाभेन इत्यर्थ., दूयमान - तप्यमान, मानस—चित्तं

अभ्यन्तरनिष्पतितनिकटवर्त्तिपरिजननिवेद्यमानवार्त्तैः वार्त्ती-भूतस्नानभोजनशयनैः (५९) उज्झितात्मसंस्कारमलिन-वेशैः लिखितैः इव निश्चलैः नरपतिभिः नीयमाननक्तन्दिनं, (६०) दुःखदीनवदनेन च प्रघणेषु बद्धमण्डलेन उपांशु-व्याहृतैः केनचित् चिकित्सकदोषान् उद्भावयता, केनचित् (६१) असाध्यव्याधिलक्षणपदानि पठता, केनचित् दुःस्वप्नान् आवेदयता, केनचित् पिशाचवार्त्तां विहृखता, केनचित्

येषां तैः। अभ्यन्तरेति।—अभ्यन्तरात्—प्रासादमध्यात्, अन्तःपुरादिति यावत्, निष्पतितेन—निर्गतेन, निकटवर्त्तिना—समीपस्थेन, राज्ञ इति भावः, परिजनेन—परिचारकेण, निवेद्यमाना—विज्ञाप्यमाना, वार्त्ता—राजवृत्तान्तः येभ्यः तैः। वार्त्तीभूतेति।—वार्त्तीभूतानि—वार्त्तात आगतानि, कथाशेषाणीति भावः, स्नानानि—आप्लावाः, भोजनानि—आहाराः, शयनानि—स्वापाश्च येषां तैः, सम्राजो जीवननाशा-शङ्कया उद्विग्नचित्तत्वादिति भावः।

(५९) उज्झितेति।—उज्झितेन—परित्यक्तेन, आत्मसंस्कारेण—स्वकीय-केशशरीर-माज्जनादिरूपेण प्रसाधनकर्म्मणा इत्यर्थः, मलिनाः,—विवर्णाः, वेशाः,—परिच्छदाः येषां तैः। लिखितैरिव—चित्रार्पितैरिव, निश्चलैः,—निस्पन्दैः। नीयमानेति।—नीयमानम्—अतिक्रम्यमाणं, नक्तन्दिनं—रात्रिन्दिवं यस्मिन् तत्। [नक्तञ्च दिनञ्च इत्यत्र "विप्रसिद्ध—" (२।४।१३ पा०) इत्यादिना एकवद्भावे रूपम्। "नक्तन्दिनम्" इत्यत्र "नक्तन्दिवम्" इति पाठेऽपि स एवार्थः, "अचतुर—" (५।४।७७ पा०) इत्यादिना समासः]।

(६०) दुःखेति।—दुःखेन—मनःपीड़या, शोकेनेति यावत्, दीनं—म्लानं, वदनं यस्य तेन। प्रघणेषु—वहिर्द्वारप्रकोष्ठविशेषेषु, ("प्रघाणप्रघणालिन्दा वहिर्द्वारप्रकोष्ठके" इत्यमरः) बद्धमण्डलेन—मण्डलाकारोपविष्टेन, उपांशुव्याहृतैः,—अनुच्चभाषितैः, चिकित्सकदोषान्—चिकित्सका रोगमेतं न निर्णेतुं शक्नुवन्ति, औषधान्यपि नैतेषां सुप्रयुक्तानीत्येवं दोषान्, उद्भावयता—प्रकटयता।

(६१) असाध्येति।—असाध्यस्य—दुश्चिकित्सस्य, व्याधेः,—रोगस्य, ("रोग-व्याधिगदामयाः" इत्यमरः) लक्षणपदानि—लिङ्गप्रकाशकवाक्यानि, पठता—कीर्त्तयता, सर्वज्ञाभिमानित्वादिति भावः। दुःस्वप्नान्—अमङ्गलसूचकस्वप्नदर्शनानि,

(६२) कार्त्तान्तिकादेशान् प्रकाशयता, केनचित् उपलिङ्गानि गायता, अन्येन अनित्यतां भावयता, संसारञ्च अपवदता, कलिकालविलसितानि च निन्दता, दैवञ्च उपालभमानेन अपरेण धर्म्माय कुप्यता, राजकुलदेवताश्च अधिक्षिपता, अपरेण (६३) क्लिष्टकुलपुत्त्रकभाग्यानि गर्हयता बाह्यपरिजनेन कथ्यमानकष्टपार्थिवावस्थं राजकुलं विवेश।

(६४) अविरलबाष्पपयःपरिप्लुतलोचनेन पितृपरिजनेन वीक्ष्यमाणो विविधौषधिद्रव्यद्रवगन्धगर्भमुत्क्वाथ्यतां क्वाथानां

---

आवेदयता—ज्ञापयता, परस्परमिति भावः। पिशाचवार्त्ता—पिशाचः,—अधमदेवयोनिविशेषः, तस्य वार्त्ता—वृत्तान्तः ता, पिशाचाविष्टो वा राजा, यदस्य तथा चेष्टितं दृश्यते, इत्येवंरूपवचनमित्यर्थः, वितन्वता—प्रकटयता।

(६२) कार्त्तान्तिकादेशान्—गणकादेशान्, ज्योतिर्विदः राज्ञ एवमेवमशुभं निर्णीतवन्त इत्येवंरूपानित्यर्थः। ("सांवत्सरो ज्यौतिषिको दैवज्ञ-गणकावपि। स्युर्मौहूर्त्तिकमौहूर्त्तज्ञानिकार्त्तान्तिका अपि॥" इत्यमरः)। उपलिङ्गानि—उत्पातविशेषान्, अमङ्गलसूचकरक्तवृष्ट्यादिरूपान् इति भावः, गायता—कीर्त्तयता। अनित्यता—क्षणभङ्गुरता, देहस्य इति भावः, भावयता—चिन्तयता। अपवदता—निन्दता। कलिकालविलसितानि—कलिकालस्य—चतुर्थयुगस्य, विलसितानि—दुश्चेष्टितानि, कलिकाले पापिजनसङ्गसमाकुले ईदृशो धर्म्मपरायणो राजा कथमपि न जीवति इत्यादिरूपाणीति भावः। दैव—विधिम्, उपालभमानेन—तिरस्कुर्वता। अधिक्षिपता—निर्भर्त्सयता।

(६३) क्लिष्टेति।—क्लिष्टाना—क्लेशाभिभूताना, दुर्गतानामित्यर्थः, कुलपुत्राणां—सत्कुलजातकुमाराणा, पित्रादिविहीनतया निराश्रयाणा राज्ञा पाल्यमानानामिति भाव, भाग्यानि—दुरदृष्टानि, गर्हयता—निन्दता। बाह्यपरिजनेन—बहिःसञ्चरता परिवारवर्गेण, कथ्यमानेति।—कथ्यमाना—मिथः आलप्यमाना, कष्टा—दारुणा, पार्थिवस्य—राज्ञः, अवस्था—दशा यस्मिन् तत्।

(६४) अविरलेति।—अविरलैः,—निरन्तरैः, अविच्छिन्नैरिति यावत्, बाष्पपयोभिः,—नेत्रजलैः, [अत्र पयःपदमधिकमेव, बाष्पपदेनैव विवक्षितार्थलाभादिति ज्ञेयं] परिप्लुते—सिक्ते, लोचने—नयने यस्य तेन। विविधेति।—विविधाना

सर्पिषां तैलानाञ्च पच्यमानानां गन्धम् आजिघ्रन् अवाप तृतीयं कक्ष्यान्तरम्।

(६५) तत्र च अतिनिःशब्दे गृहावग्रहणीग्राहिबहुवेत्रिणि, त्रिगुणतिरस्करिणीतिरोहितसुवीथीपथे, (६६) पिहितपक्षद्वारके, परिहृतकवाटरटिते, घटितगवाक्षरक्षितमरुति, दूयमानपरिचारके, (६७) चरणताड़नस्वनत्सोपानप्रकुपितप्रती-

—नानाप्रकाराणाम्, औषधद्रव्याणां—रोगोपशमकलतागुल्मादीनां, द्रवस्य—रसस्य, गन्धः,—आघ्राणं, गर्भे—मध्ये यत्र तत् यथा तथा, उत्क्वथतां—पच्यमानानां, क्वाथानां—कषायविशेषाणाम्। सर्पिषां—घृतानाम्। अवाप—प्राप, प्रविवेश इति यावत्। कक्ष्यान्तरं—कक्षे—राजान्तःपुरे भवाः कक्ष्याः,—हर्म्यादिप्रकोष्ठाः इत्यर्थः, तासामन्तरम्—अभ्यन्तरम्।

(६५) तत्रेत्यादि।—"तत्र च" इत्यस्य "धवलगृहे स्थित···पितरमद्राक्षीत्" इत्युत्तरेण सम्बन्धः। गृहेति।—गृहावग्रहणी—देहली, द्वारारम्भप्रदेश इत्यर्थः ("गृहावग्रहणी देहली" इत्यमरः) तद्ग्राहिणः,—तद्वारिणः, तत्रावस्थायिन इत्यर्थः बहवः,—अनेके, वेत्रिणः,—वेत्रपाणयः पुरुषा यस्मिन् तथोक्ते। त्रिगुणेति।—त्रिगुणाभिः,—त्रिरावृत्ताभिः, तिरस्करिणीभिः,—जवनिकाभिः, तिरोहिताः,—अन्तर्हिताः, सुवीथिनां—गृहाङ्गानाम्, अभ्यन्तरगृहविशेषाणामित्यर्थः, ("वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तर-वर्त्मनोः" इति मेदिनी) पन्थानः,—अभ्यन्तरमार्गा इत्यर्थः, यस्मिन् तथोक्ते, असूर्य्यम्पश्याना राजदाराणां निःसङ्कोचसञ्चारार्थमिति भावः।

(६६) पिहितेति।—पिहितम्—आवृतं, पक्षद्वारम्—अभ्यन्तरस्थं प्रच्छन्नद्वारं, "खिड़्की" इति ख्यातं गुप्तद्वारमित्यर्थः पार्श्वस्थद्वारं वा यस्य तादृशे, ("प्रच्छन्नमन्तर्द्वारं यत् पक्षद्वारं तदुच्यते" इति "पक्षद्वारन्तु पक्षकः" इति च कोषामरौ)। परिहृतेति।—परिहृतं—परित्यक्तं, कवाटानाम्—अरराणां, द्वाररोधककाष्ठफलकानामित्यर्थः, रटितं—शब्दः यस्मिन् तथोक्ते राज्ञः कर्णपीडाशङ्कया प्रवेश-निर्गमनयोरपि सशब्दावरोधनात् निःशब्दे इति भावः। घटितेति।—घटितैः,—बद्धैः, गवाक्षैः,—वातायनैः रक्षिताः,—निरुद्धाः, मरुतः,—वायवः यस्मिन् तथोक्ते निवारितवाह्यवायाविति भावः। दूयमानपरिचारके—दूयमानाः,—तप्यमानाः, परिचारकाः,—भृत्या यस्मिन् तथोक्ते।

(६७) चरणेति।—चरणस्य—पदस्य, इतस्ततः सञ्चरतां जनानामिति भावः, ताडनेन—आघातेन, क्षेपणेन इति यावत्, स्वनत्—नदत्, यत् सोपानम्—अधिरोहणी, तेन

द्वारे, निभृतसंज्ञानिर्दिश्यमानसकलकर्म्मणि, नातिनिकटोपविष्टकङ्कटिनि, (६८) कोणस्थिताह्वानचकिताचमनकवाहिनि, चन्द्रशालिकालीनमूकमौललोके, महाऽऽधिविधुरबान्धवाङ्गनावर्गगृहीतप्रच्छन्नप्रग्रीवके, (६९) सञ्जवनपुञ्जितोद्विग्नपरिजने,

प्रकुपिताः,—रुष्टाः, प्रतीहाराः,—द्वारपाला यस्मिन् तादृशे, राजपीडाशङ्कया प्रतिहारिभिरुपदिष्टनिःशब्दपदसञ्चारे इति भावः। निभृतेति।—निभृतया—विनीतया, शब्दरहितया इति भावः, संज्ञया—हस्तादीनाम् इङ्गितेन, निर्दिश्यमानानि—प्रदर्श्यमानानि, सकलानि—समग्राणि, कर्म्माणि—अनुष्ठेयानि यस्मिन् तथाविधे, कोलाहलपरिहारार्थमिति भावः। नातीति।—नातिनिकटे—नातिसन्निधौ, उपविष्टाः,—आसीनाः, कङ्कटिनः,—वर्म्मभृतः यस्य तथोक्ते, ("तनुत्रं वर्म्म दंशनम्। उरश्छदः कङ्कटकः…" इत्यमरः) तेषामवयवसञ्चालनेन वर्म्मभ्यः मर्म्मरशब्दा जायन्ते इति तत्परिहारायेति भावः।

(६८) कोणेति।—कोणेषु—गृहैकदेशेषु, स्थिताः,—दण्डायमाना इत्यर्थः, आह्वानेन—आकारणमात्रेण, चकिताः,—व्यग्रा इत्यर्थः, आचमनकवाहिनः,—आचमनार्थं पानीयहारिणः यत्र तादृशे। ["आचमनकवाहिनि" इत्यत्र "आचमनवाहिनि" इति पाठेऽपि—स एवार्थः]। चन्द्रेति।—चन्द्रशालिकाया—शिरोगृहे, प्रासादोपरिवर्त्तिनि गृहविशेषे इत्यर्थः, ("चन्द्रशाला शिरोगृहम्" इत्यमरः) लीनाः,—निश्चलोपविष्टा इत्यर्थः, [लीधातोः "निष्ठा" (३।२।१०२ पा०) इति क्तप्रत्यये "ल्वादिभ्यः" (८।२।४४ पा०) इत्यादिना निष्ठा-नत्वे रूपम्] मूकाः,—अवाचः, मौलाः,—कुलक्रमपालिताः, लोकाः,—प्रकृतिविशेषाः इत्यर्थः यस्मिन् तथोक्ते, किङ्कर्त्तव्यताविमोहात् इति भावः। महेति।—महद्भिः,—प्रबलैः, आधिभिः,—मानसव्यथाभिः, ("पुंस्याधिर्मानसी व्यथा" इत्यमरः) विधुराणां—व्याकुलानां, बान्धवाङ्गनानां—बन्धुस्त्रीणां, वर्गैः,—समूहैः, गृहीतम्—अधिष्ठितं, प्रच्छन्नं—निर्ज्जनं, गुप्तमित्यर्थः, प्रग्रीवकं—कक्ष्याविशेषः, वातायनं वा यस्मिन् यस्य वा तथोक्ते, यद्वा,—महाधिविधुरबान्धवाङ्गनावर्गैः गृहीताः,—अवलम्बिताः, अन्योऽन्यमिति भावः, प्रच्छन्ने—निभृतप्रदेशे, प्रग्रीवकाः,—प्रकृष्टा ग्रीवाः, शोभनकन्धरा इत्यर्थः यत्र तादृशे, शोकार्त्तासु परस्परं ग्रीवामवलम्ब्य प्रच्छन्नभावेनावस्थानस्य प्रकृतिसिद्धाबलाजनाचारात् इति भावः।

(६९) सञ्जवनेति।—सञ्जवने—चतुःशालायाम्, अन्योऽन्याभिमुखावस्थितगृहचतुष्टयात्मकभवने इत्यर्थः, ("सञ्जवनन्त्विदम्। चतुःशालम्" इत्यमरः) पुञ्जिता

प्रविष्टकतिपयप्रणयिनि, गम्भीरज्वरारम्भभीतभिषजि, दुर्मनायमानमन्त्रिणि, (७०) मन्दायमानपुरोधसि, सीदत्सुहृदि, निद्राणविपश्चिति, सन्तप्ताप्तसामन्ते, (७१) विचित्तचामरग्राहिणि, दुःखक्षामशिरोरक्षिणि, क्षीयमाणप्रसादवित्तमनोरथसम्पदि,

—समवेताः, उद्विग्नाः,—उत्कण्ठिता इत्यर्थः, परिजनाः,—परिवारवर्गाः यस्मिन् तथोक्ते, बहुसङ्ख्यकानां तेषां तथाविधप्रशस्तस्थाने अवस्थानस्य सुघटत्वात् इति भावः। प्रविष्टेति।—प्रविष्टाः,—अभ्यन्तरागताः, कतिपये—अल्पा इत्यर्थः, प्रणयिनः,—सुहृदः यत्र तादृशे। गम्भीरेति।—गम्भीरस्य—"गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया। आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च॥" इत्युक्तलक्षणस्य कृच्छ्रसाध्यस्य, ज्वरस्य आरम्भात्—प्रवृत्तिदर्शनादित्यर्थः, भीताः,—शङ्किताः, तस्य असाध्यज्वरलक्षणे पठितत्वात् इति भावः, भिषजः,—चिकित्सकाः यस्मिन् तथाविधे, ("भिषग्वैद्यौ चिकित्सके" इत्यमरः)। दुर्मनायमानेति।—दुर्मनायमानाः,—विमनायमानाः, सचिन्तान्तःकरणा इत्यर्थः, व्यथितमनसः इति यावत्, ("दुर्मना विमना अन्तर्मनाः" इत्यमरः) मन्त्रिणः,—सचिवाः यस्मिन् तादृशे।

(७०) मन्देति।—मन्दायमानः,—विषादं गच्छन्नित्यर्थः, पुरोधाः,—पुरोहितो यस्मिन् तथोक्ते। सीददिति।—सीदन्तः,—अवसादं गच्छन्तः. क्लिश्यन्त इत्यर्थः, सुहृदः,—बान्धवाः यस्मिन् तथोक्ते। निद्राणविपश्चिति—निद्राणाः,—स्वपन्तः, जपहोमार्चानुष्ठानैः समस्तरात्रिजागरणादिति भावः, विपश्चितः,—विद्वांसः, उपाध्यायाः इति यावत् यस्मिन् तथोक्ते, ("विद्वान् विपश्चिद्दोषज्ञः" इत्यमरः)। सन्तप्तेति।—सन्तप्ताः,—व्यथिता इत्यर्थः, आप्ताः,—विश्वस्ताः, सामन्ताः,—अधीनस्थ-राजानः यत्र तादृशे, उत्तरोत्तरनरेन्द्ररोगयन्त्रणाऽभिवृद्धिश्रवणादिति भावः।

(७१) विचित्तेति।—विचित्ताः,—विचेतनप्रायाः, चामरग्राहिणः,—व्यजनधारिणः यत्र तथोक्ते। दुःखेति।—दुःखेन—मनःपीड़या, शोकेनेति यावत्, क्षामः,—क्षीणः, शिरोरक्षी—शीर्षरक्षकः यस्मिन् तथाविधे। क्षीयमाणेति।—क्षीयमाणा—क्षयमापद्यमाना, आरोग्यनैराश्येन इति भावः, प्रसादवित्तानां—प्रसादख्यातानां, राजानुग्रहेण प्रतिपालितानामित्यर्थः; यद्वा,—प्रसादः,—राजानुग्रह एव, वित्तं—धनं येषां तथोक्तानां, मनोरथसम्पत्—अभिलाषसमृद्धिः यस्मिन् तादृशे; आ वाल्यात् अनुग्राहकस्य राज्ञः अभावे तेषां जीविकानिर्वाहस्य कृच्छ्रत्वशङ्कया इति भावः।

(७२) स्वामिभक्तिपरित्यक्ताहारहीयमानबलविकलवल्लभभूभृति, (७३) क्षितितलपतितसकलरजनीजागरूकराजपुत्रकुमारके, (७४) कुलक्रमागतकुलपुत्रनिवहोह्यमानशुचि, शोकसङ्कुचितकञ्चुकिनि, निरानन्दवन्दिनि, निश्वसन्निराशासन्नसेवके, विस्मृतताम्बूलधूसराधरवारयोषिति, (७५) विलक्ष-

---

(७२) स्वामीति।—स्वामिनि—प्रभौ, भक्तिः,—अनुरागातिशयः, तया परित्यक्तः,—उत्सृष्टः, आहारः,—भोजनं, तेन हीयमानं—क्षीयमाणं, बलं—सामर्थ्यं, तेन विकलाः,—अपटवः, वल्लभाः,—प्रियाः, भूभृतः,—राजानः यस्मिन् तथोक्ते, सहभोजिना राज्ञा तसन्तरा भोजनत्यागात् शोकप्राणता जातेति हृदयम्।

(७३) क्षितीति।—क्षितितलेषु—भूतलेषु, पतिताः,—लुठिताः, "निद्रातुराणां क्व च भूः क्व शय्या" इति भावः, सकलाः,—सर्वे, रजनीषु—रात्रिषु, जागरूकाः,—जागरणशीलाः, ["जागरूकः" (३।२।१६५ पा०) इति जागर्तेः ऊकप्रत्ययः] स्वामिपरिचर्य्यार्थमिति भावः, राजपुत्राः,—राजतनया एव, कुमारकाः,—शिशवः, युवराजा वा यत्र तथाभूते।

(७४) कुलेति।—कुलक्रमेण—वंशपरम्परया, आगतानां—प्राप्तानां, प्रतिपालितानामिति भावः, कुलपुत्राणां—कुलीनसन्तानानां, सत्कुलजातजनानामिति यावत्, निवहैः,—समूहैः, उह्यमाना—धार्य्यमाणा, शुक्—शोकः यत्र तथोक्ते, कृतज्ञत्वयोगात् इति भावः। शोकेति।—शोकेन—शुचा, सङ्कुचिताः,—कुण्ठिताः, कर्त्तव्यविमूढा इत्यर्थः, कञ्चुकिनः,—"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते॥" इत्युक्तरूपाः राजान्तःपुररक्षकाः पुरुषाः यस्मिन् तथोक्ते। निरानन्देति।—निरानन्दाः,—विषण्णाः, निरुत्साहा इति भावः, वन्दिनः,—स्तुतिपाठकाः यस्मिन् तादृशे। निश्वसदिति।—निश्वसन्तः, दीर्घम् इति शेषः, निराशाः,—आशाशून्याः राजजीवने स्वभाग्ये च इति भावः, आसन्नसेवकाः,—अन्तिकचरभृत्याः यस्मिन् तथोक्ते। विस्मृतेति।—विस्मृतताम्बूलाः,—परित्यक्तपर्णाः, ["विस्मृतताम्बूल—" इत्यत्र "निःसृतताम्बूल—" इति पाठे,—निःसृतानि—निर्गतानि, परित्यक्तानीत्यर्थः, ताम्बूलानि याभिः ताः इति स एवार्थः] अत एव धूसराधराः,—ईषत्पाण्डुवर्णोष्ठाः, शोकात् ताम्बूलपरित्यागेन पाण्डुलाधरा इत्यर्थः, वारयोषितः,—वाराङ्गनाः, परिचर्य्यार्थं दर्शनार्थं वा आगता इति भावः, यत्र तथोक्ते।

(७५) विलक्षेति।—विलक्षेण—लज्जितेन इत्यर्थः, रोगापनयनाक्षमत्वात्

वैद्योपदिश्यमानपथ्याहरणावहितपौरोगवे, अनुजीविपीयमानोच्चषकधारावारिविनोद्यमानास्यशोषरुजि, राजाभिलाषभोज्यमानबहुभुजि, (७६) भेषजसामग्रीसम्पादनव्यग्रसमग्रव्यवहारिणि, मुहुर्मुहुः आहूयमानतोयकर्म्मान्तिकानुमितघोरातुरतृषि, तुषारपरिकरितकरकशिशिरीक्रियमाणोदश्विति,

---

कुण्ठितेन इति यावत्, वैद्येन—भिषजा, उपदिश्यमानस्य—निर्दिश्यमानस्य इत्यर्थः, पथ्यस्य—आतुरयोग्यस्य हितजनकस्य आहार्य्यद्रव्यस्य, रोगोपशमनोपयोगिनो भक्ष्यद्रव्यस्य इति यावत्, आहरणे—आयोजने, अवहितः,—अभिनिविष्टः, पौरोगवः,—पाकशालाध्यक्षः यस्मिन् तथोक्ते, [ पुरोऽग्रे, पाच्यवस्तुष्वित्यर्थः, गौः नेत्रं यस्येति बहुव्रीहौ "गोरतद्धितलुकि" (५।४।९२ पा०) इति सूत्रेण समासान्ते अचि निष्पादितात् पुरोगुशब्दात् स्वार्थे "प्रज्ञादिभ्यश्च" (५।४।३८ पा०) इत्यण्। "रसवत्यान्तु पाकस्थान-महानसे। पौरोगवस्तदध्यक्षः" इत्यमरः ]। अनुजीवीति।—अनुजीविभिः,—सेवकैः, ("सेवकास्त्वनुजीविनः" इत्यमरः) पीयमानेन उच्चषकधारावारिणा——ऊर्द्ध्वीकृतपानपात्रनिःसृतजलेन, ("चषकोऽस्त्री पानपात्रम्" इत्यमरः) विनोद्यमाना—शाम्यमाना, आस्यस्य—मुखस्य, शोषरुक्—शोषाख्यव्याधिः यस्मिन् तथोक्ते, रोगिणः अधिकजलपाननिषेधात् तदकुर्व्वतोऽपि तत्समीपे सेवकैः उद्धृतजलपात्रात् धारावारि पीयमानं पश्यतः तस्य मुखशोषनिवृत्तिः जायते इति भावः। राजेति।—राज्ञः,—नृपस्य, अभिलाषेण—इच्छया, भोज्यमानाः,—आहारं कार्य्यमाणाः, बहुभुजः,—प्रभूतभोजनक्षमाः पुरुषा यत्र तथोक्ते, स्वयं भोक्तुमशक्तस्य जनस्य अन्यभोजनदर्शनेनापि तृप्तिः जायते इति भावः।

(७६) भेषजेति।—भेषजस्य—औषधस्य, याः सामग्र्यः,—उपकरणानि, तासां सम्पादने—समाहरणे, व्यग्राः,—व्यापृताः, समग्राः,—सकलाः, व्यवहारिणः,—व्यवहाराभिज्ञाः, द्रव्यगुणपरीक्षकाः इति भावः यत्र तादृशे। आहूयमानेति।—आहूयमानेन—आकार्य्यमाणेन, तोयकर्म्मान्तिकेन—तोयदानकर्म्मणि निरतेन, पुरुषेणेति शेषः, अनुमिता—तर्किता, निरन्तरमेव जलदानार्थं सेवकानां समाह्वानश्रवणादिति भावः, घोरा-दारुणा, आतुरस्य—रोगिणः, तृषा—पिपासा यस्मिन् तादृशे घोरज्वरजनितप्रचण्डमुखशोषादौ दुःसहतृष्णोपमर्द्ददर्शनात् इति भाव। तुषारेति।—तुषारेण—नीहारेण, तद्वता द्रव्यादिना वा, परिकरितः,—संयुक्तः; यद्वा;—

श्वेतार्द्रकर्पटार्पितकर्पूरपरागशीतलीकृतशलाके, (७७) नाश्यान-पङ्कलिप्यमाननवभाण्डगतगण्डूषग्रहणमस्तुनि, तिम्यत्कोमल-कमलिनीपलाशप्रावृतमृदुमृणालके, सनालनीलोत्पलपूली-सनाथ-सलिलपानभाजन-भुवि, धारानिपात-निर्वाप्यमाण-

तुषारस्य—हिमस्य, परिकरः,—समारम्भः, घनसन्निवेशः इत्यर्थः, तज्जातः यः करकः, —वर्षोपलः, "वरफ्" इति वङ्गभाषया प्रसिद्धः जलसङ्घातविशेषः इत्यर्थः ; यद्वा,—तुषारेण परिकरितः,—मिलितः, यः करकः,—कमण्डलुः, ("कमण्डलौ च करकः" इत्यमरः) तेन, तत्र स्थापनेनेत्यर्थः, शिशिरीक्रियमाणं—शीतलीक्रियमाणम्, उदश्वित् —अर्द्धोदकं तक्रं यस्मिन् तथोक्ते, ("तक्रं ह्युदश्विन्मथितं पदाम्ब्वर्द्धाम्बु निर्जलम्" इत्यमरः)। श्वेतेति।—श्वेते—शुभ्रे, धौते इत्यर्थः, आर्द्रे—जलसिक्ते इत्यर्थः, कर्पटे —जीर्णवस्त्रखण्डे, अर्पितैः,—निहितैः, कर्पूराणां—घनसाराणां, [ क्रपधातोः "खर्जि —" (उ० ४ पा० ९० सू०) इत्यादिना ऊरप्रत्यये लत्वाभावे रूपं] परागैः,—रजोभिः, शीतलीकृताः,—शिशिरीकृताः, शलाकाः,—शिलाकणिकाः ; यद्वा,—सीसकादिकृतवर्त्तुलायतद्रव्यविशेषाः इत्यर्थः, शिरोहृदयादिषु चक्षुःश्रवणाद्यतिसुकुमाराङ्गेषु च तस्य प्रयोगेण क्षणिकशैत्यविनोदानुभवात् इति भावः यत्र तथोक्ते।

(७७) नाश्यानेति।—नाश्यानेन—अघनेन, तरलेन इत्यर्थः, (आङ्पूर्व्वकस्य "श्यायते" इत्यस्य निष्ठायां रूपं, पश्चात् नञ्समासः] पङ्केन—कर्दमेन, मुखशोषप्रशमनाय शीतलीकरणार्थमिति भावः, लिप्यमानं,—दिह्यमानं, यत् नवं—नूतनं, भाण्डं —घटः, तद्गतं—तत्स्थं, गण्डूषग्रहणाय—मुखपूरणाय इत्यर्थः, ("गण्डूषो मुखपूर्त्तौभपुष्करप्रसृतीन्मिते" इति मेदिनी) मस्तु—दधिभवं मण्डं, दध्न उपरिभागात् निःसृतं दधिसम्पृक्तं जलमित्यर्थः यत्र तादृशे, तस्य मुखशोषाद्युपशमकरगुणवत्त्वात् इति भावः, ("मण्डं दधिभवं मस्तु" इत्यमरः)। तिम्यदिति।—तिम्यता—आर्द्रीभवता, सद्यः आनीततया जलसम्पृक्तेन इत्यर्थः, कोमलेन—मृदुना, कमलिनीपलाशेन—पद्मिनीपत्रेण, प्रावृतानि—आच्छादितानि, मृदूनि—कोमलानि, मृणालकानि—उशीराणि, बिसानि वा यस्मिन् तथोक्ते, ("मृणालं नलदे क्लीवं पुनपुंसकयोर्बिसे" इति मेदिनी। नलदम् —उशीरम्) एतत्स्पर्शात् अङ्गदाहस्य कथञ्चिदुपशम स्यादिति द्रव्यगुणविदामाशयः। सनालेति।—सनालानां—नालसहितानां, नीलोत्पलानाम्—इन्दीवराणां, पूलीभिः,—समूहैः सनाथा—युक्ता, आच्छादितेति यावत्, सलिलपानभाजनानां—जलपानपात्राणां, भूः,—स्थानं यस्मिन् तथोक्ते, सुरभितां शीतलताञ्च नेतुं भूमौ सनाल-

क्वथिताम्भसि, (७८) पटुपाटलशर्करामोदमुचि, मञ्चकाश्रितसिकतिलकर्करीविश्रान्तातुरचक्षुषि, (७९) सजलशैवलवलयितगलद्गोलयन्त्रके, गल्वर्कशालाजिरोल्लासितलाजसक्तुनि, पीतमसारपारीपरिगृहीतकर्कशर्करे,

नीलोत्पलसमूहं विन्यस्य तदुपरि सजलपात्रं स्थापितवान् इति भाव। धारेति।—धाराणां—प्रपातानां, जलस्येति भावः, निपातेन—पातनेन, निर्वाप्यमाणानि—शीतलीक्रियमाणानि, क्वथितानि—उष्णीकृतानि, अम्भांसि—जलानि यस्मिन् तादृशे, त्वरितशैत्योपयोगाशयेति भावः।

(७८) पट्विति।—पटु—प्रकृष्टं यथा तथा, पाटलायाः,—श्वेतरक्तवर्णायाः, शर्करायाः,—पुष्परेणोः, ("शर्करा खादृगन्धमृद् पुष्परेणु-पिशाचयोः। इक्षुपाकविशेषे च पुमान् सैन्धव-नागयोः" इति रभसः) आमोदं सौरभं, मुञ्चति—त्यजतीति तस्मिन्। मञ्चकेति।—मञ्चकम्—आधारविशेषः, तत्र आश्रिता—अधिष्ठिता, सिकतिला सिकतामयी, शायशो वालुकानिर्मितेति भावः, [सिकताशब्दात् "देशे लुविलचौ च" (५।२।१०५ पा०) इतीलचि रूपं] या कर्करी—भाण्डभेदः, जलाधारविशेषः इत्यर्थः, ("कर्करी भाण्डभेदे ना दर्पणे कठिने त्रिषु" इति मेदिनी) तस्यां विश्रान्ते—कृतविश्रामे, निश्चलतया अवस्थिते इति यावत्, अतितृष्णार्त्तत्वादिति भावः, आतुरस्य—पीड़ितस्य राज्ञः, चक्षुषी—नयने यत्र। ["विश्रान्तातुरचक्षुषि" इत्यत्र "विश्रान्तान्तरचक्षुषि" इति पाठे,—आन्तरे—अन्तर्निलीने, रोगातिशय्यात् कोटरं गते इति भावः, चक्षुषी, राज्ञ इति भावः यस्मिन् यस्य वा तथोक्ते।

(७९) सजलेति।—सजलैः,—जलसहितैः, ["सजल—" इत्यत्र "सरल—" इति पाठे,—सरलैः—ऋजुभिः, दीर्घैरिति यावत्] शैवलैः,—शैवालैः, वलयितं—वेष्टितं, गलत् स्यन्दमानं, गोलयन्त्रकं—सहस्रधारेति प्रसिद्धं बहुच्छिद्रं जलयन्त्रं यस्मिन् तथोक्ते, सदनस्य शैत्यविधानार्थम् इति भावः। गल्वर्केति।—गल्वर्कः,—मणिविशेषः, तस्य शालाजिरः,—शरावः, गल्वर्कनिर्मित इति यावत्, ("स्याच्छरावस्तु मार्त्तिकः शालाजिरः" इति त्रिकाण्डशेषः) तत्र उल्लासिताः,—उद्भासिताः, लाजसक्तवः,—अक्षतसक्तव भृष्टधान्यचूर्णानि इत्यर्थः यत्र तथोक्ते, कदाचित् पथ्यार्थमिति भावः। पीतेति।—पीतः,—पीतवर्णः, यो मसारः,—मणिविशेषः, तस्य पारी—शरावविशेषः, ("पारी पात्रशरावयोः" इति हैमः) तत्र परिगृहीताः,—स्थापिताः, कर्कशर्कराः,—श्वेतशर्करा यत्र तादृशे।

(८०) शिशिरौषधरसचूर्णावकीर्णस्फटिकशुक्तिशङ्खसञ्चये, सञ्चित-प्रचुरप्राचीनामलकमातुलुङ्गद्राक्षादाडिमादिफले, (८१) प्रति-ग्राहितविप्रविप्रकीर्य्यमाणशान्त्युदकविप्रुषि, प्रेष्यापिष्यमाण-ललाटलेपोपदिग्धदृषदि धवलगृहे स्थितं, (८२) परलोक-विजयाय नीराज्यमानमिव ज्वरज्वलनेन, अनवरतपरिवर्त्तनैः तरङ्गिणि शयनीये शेषमिव विषोष्मणा क्षीरोदन्वति विचेष्टमानं,

---

(८०) शिशिरेति। —शिशिरौषधानां— शैत्यकारकाणाम् औषधानां, रसैः,—द्रवैः, चूर्णैः—क्षोदैश्च अवकीर्णाः,—आकीर्णाः, परिपूर्णा इत्यर्थः, स्फटिकानां—स्वनामख्यातमणीनां, शुक्तीनां मुक्तास्फोटानां, शङ्खानां—कम्बूनाञ्च, सञ्चयाः,—समूहाः यस्मिन् तथोक्ते, सर्वेषां शैत्यगुणाधायकत्वात् इति भावः। सञ्चितेति।—सञ्चितानि—सङ्गृहीतानि, औषधार्थमिति भावः, प्रचुराणि—प्रभूतानि, प्राचीनानां—पुरातनानाम्, आमलकानां—धात्रीफलानां, प्राचीनामलकानां—पानीयामलक इति ख्यातानाम् आमलकविशेषाणां वा. मातुलुङ्गानां—वीजपूराणां, जम्बीरविशेषाणामित्यर्थः, द्राक्षाणां —मृद्वीकानां, दाड़िमादीनाञ्च फलानि यत्र तादृशे।

(८१) प्रतिग्राहितेति। - प्रतिग्राहिताः,—प्रतिग्रहं ग्राहिताः, दत्तदक्षिणा इति यावत्, ये विप्राः,—ब्राह्मणाः, तैः विप्रकीर्य्यमाणाः,—समन्तात् विक्षिप्यमाणाः, शान्त्युदकानां शान्तिजलानां, विप्रुषः,—विन्दवः यस्मिन् तथोक्ते, सदक्षिणं शान्त्युदकानां ग्रहणेन त्वरितफलावाप्तिः इति भावः, ("पृषन्ति विन्दुपृषताः पुमांसो विप्रुषः स्त्रियः" इत्यमरः)। प्रेष्येति। - प्रेष्याभिः,—दासीभिः, पिष्यमाणेन—चूर्ण्यमानेन, ललाटलेपेन—भाललेपनद्रव्येण, उपदिग्धाः,—प्रलिप्ताः, दृषदः,—शिला यस्मिन् तथोक्ते, धवलगृहे—स्फटिकशिलानिर्म्मिते सुधालिप्ते वा भवने।

(८२) परलोकेति। —परलोकस्य—स्वर्गस्य, विजयाय—आत्मसात्करणाय, लाभायेत्यर्थः, ज्वरज्वलनेन—ज्वराग्निना, नीराज्यमानमिव—निर्मञ्छ्यमानमिव, क्रियमाणाऽऽरत्रिकक्रियमिवेत्यर्थः, इत्युत्प्रेक्षा, विजयाय प्रस्थितस्य जिगीषोः नीराजना क्रियते इति प्रसिद्धिः। अनवरतपरिवर्त्तनैः,—शय्यायां निरन्तरलोठनैः, तरङ्गिणि—सभङ्गीमति, सङ्कोचशालिनि इत्यर्थः, शयनीये—शय्यातले, क्षीरोदन्वति—क्षीरसागरे, विषोष्मणा—विषोत्तापेन, विचेष्टमानं—लुठन्तं, शेषमिव—अनन्तनागमिव। अत्र श्लेषेण सद्भावे धर्म्मसाम्यबोधादुपमाऽलङ्कारः।

( ८३ ) मुक्ताफलवालुकाधूलिधवलितं जलधिमिव क्षयकाले शुष्यन्तं, ( ८४ ) कालेन कैलासमिव दशाननेन उद्ध्रियमाणम्, अविरतचन्दनचर्चापराणां परिचारकाणाम् अत्युष्णावयव-स्पर्शभस्मीभूतोदरैः इव धवलैः करैः स्पृश्यमानं, लोकान्तर-प्रस्थितं स्थास्नुना स्वयशसेव चन्दनानुलेपनच्छलेन आपृच्छ्यमानम्, ( ८५ ) अविच्छिन्नदीयमानकमलकुमुदेन्दी-वरदलं कालकटाक्षपतनशबलमिव शरीरम् उद्वहन्तं,

(८३) मुक्तेति ।—मुक्ताफलानां—मौक्तिकानां, वालुका इव—सिकता इव, धूलयः,—चूर्णानि, ताभिः धवलितः,—शुभ्रीकृतः, तापशान्तये स्वभावशीतलतच्चूर्णलेपनादिति भावः ; अन्यत्र,—मुक्ताफलानामिव वालुकानां धूलयः,—सिकता इति यावत्, ताभिः धवलितः तम्, अतिशौक्ल्यात् इति भावः, क्षयकाले—कल्पान्ते, शुष्यन्तं—शोषं गच्छन्तं, प्रचण्डरूपेणोदितस्य द्वादशात्मनो दिवाकरस्य प्रखरकिरणसम्पर्कात् इति भावः ।

( ८४ ) कालेनेति ।—कालेन—यमेन, कृष्णवर्णेन च, दशाननेन—रावणेन, उद्ध्रियमाणम्—उत्क्षिप्यमाणं, स्वमावासं नेतुमभीप्सयेति भावः । अविरतेति ।—अविरतम्—अविच्छिन्नं यथा तथा, चन्दनचर्चायां—चन्दनरसलेपने, घृष्टसितचन्दन-प्रलेपे इत्यर्थः, पराणां—नियुक्तानामित्यर्थः, परिचारकाणां—भृत्यानाम्, अतीति ।—अत्युष्णानाम्—अतिसन्तप्तानाम्, अवयवानाम्—अङ्गानां, स्पर्शेन—सम्पर्केण, भस्मीभूतानि—दग्धानि, उदराणि—मध्यदेशा इत्यर्थः, तलदेशा इति यावत् येषां तथाभूतैरिव, धवलैः,—श्वेतैः, चन्दनसम्पर्कादिति भावः, करैः,—हस्तैः, स्पृश्यमानं—संवाह्यमानम् ; परलोके प्रस्थितं—लोकान्तरप्रस्थानाय उद्यतमित्यर्थः, अत एव स्थास्नुना—स्थितिशीलेन, [ "ग्लाजिस्थश्च ग्स्नुः" ( ३।२।१३९ पा० ) इति ग्स्नुप्रत्यये रूपं ] स्वयशसेव—निजकीर्त्येव, आपृच्छ्यमानम्—आमन्त्र्यमाणम्, आश्रितानां प्रभोः प्रस्थानादौ पृच्छादिसज्जनाचारवत्त्वात् इति भावः ।

( ८५ ) अविच्छिन्नेति ।—अविच्छिन्नम्—अनवरतं, दीयमानानि—निधीयमानानि, कमलानां—पद्मानां, कुमुदानां—कैरवाणाम्, इन्दीवराणां—नीलोत्पलानाञ्च, दलानि—पत्राणि यस्मिन् तथोक्तम्, अत एव कालस्य—यमस्य, कटाक्षाणाम्—अपाङ्गवीक्षणानां, रक्तश्वेतकृष्णवर्णविशिष्टत्वात् कमलादिसदृशानामपाङ्गदर्शनानामिति भावः, पतनेन—निक्षेपेण, शबलमिव—चित्रमिव, विविधवर्णरञ्जितमिवेत्यर्थः, शरीरं—कलेवरम् ।

(८६) निविड़दुकूलपट्टनिपीड़ितकेशान्तकथ्यमानकष्टवेदनाऽनुबन्धं मूर्द्धानं धारयन्तं, (८७) दुर्द्धरवेदनोन्नमन्नीलशिराजालककरालेन च कालकराङ्गुलिलिख्यमानलेखाख्यातमरणावधिदिवससङ्ख्यानेन इव ललाटफलकेन भयमुपजनयन्तम्, (८८) आसन्नयमदर्शनोद्वेगादिव च किञ्चिदन्तःप्रविष्टतारकं, शुष्यद्दशनपङ्क्तिप्रसृतधूसरदीधितितरङ्गिणीं मृगतृष्णिकामिव उष्णां निश्वासपरम्पराम् उद्वहन्तम्, (८९) अत्युष्णनिश्वासदग्धया इव श्यामायमानया रसनया निर्वेद्यमान-

(८६) निविड़ेति।—निविड़ेन—दृढ़ेन, दुकूलपट्टेन—क्षौमवस्त्रखण्डेन, निपीड़ितः,—दृढ़निबद्ध इत्यर्थः, यः केशान्तः,—केशप्रान्तभागः, ललाटादिदेश इत्यर्थः, तेन कथ्यमानः,—आवेद्यमानः, कष्टः,—कृच्छ्रः, वेदनाऽनुबन्धः,—व्यथानैरन्तर्य्यं यस्य तथाभूतं, मूर्द्धानं—मस्तकं, ("मूर्द्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः)।

(८७) दुर्द्धरेति।—दुर्द्धरया—दुःसहया, वेदनया—पीड़या, शिरस इति भावः, उन्नमत्—उद्गच्छत्, यत् नीलं—कृष्णं, शिराणां—नाड़ीनां, जालकं—समूहः, तेन करालं—दन्तुरं, व्याप्तं वा तेन; कालेति।—कालस्य—अन्तकस्य, कराङ्गुलिभिः,—हस्ताङ्गुलिभिः, ["कालकराङ्गुलिभिः" इत्यत्र "कालाङ्गुलिभिः" इति पाठे,—कालस्य—यमस्य, अङ्गुलिभिः, करस्य इति भावः] लिख्यमानया—अङ्क्यमानया, लेखया—रेखया, ख्यातं—प्रकाशितं, मरणस्य—मृत्योः, अवधिदिवसानां—मर्य्यादादिनानां, सङ्ख्यानं—गणना यस्मिन् तेनेव।

(८८) आसन्नेति।—आसन्नम्—आगतप्रायं, यमस्य—कृतान्तस्य, दर्शनम्—अवलोकनं, तेन उद्वेगः,—भीतिः तस्मादिव, किञ्चित्—ईषत्, अन्तरिति।—अन्तःप्रविष्टा—कोटरं गता, तारका—कनीनिका यस्य तम्। शुष्यदिति।—शुष्यन्त्याः,—शोषं गच्छन्त्याः, दशनानां—दन्तानां, पङ्क्तेः,—श्रेण्याः, प्रसृताः,—निःसृताः, याः धूसराः, ईषत् पाण्डुवर्णाः, दीधितयः,—मयूखाः, तासां तरङ्गाः,—ऊर्मयः सन्ति अस्यामिति तथोक्तां, मृगतृष्णिकामिव—मरीचिकामिव, उष्णां—तप्तां, निश्वासपरम्परां—निश्वासततिम्।

(८९) अत्युष्णेति।—अत्युष्णैः,—अतितप्तैः, निश्वासैः,—नासावायुभिः, दग्धा—भस्मीभूता तया इव, दग्धानां वैवर्ण्योत्पत्तेः इति भावः, श्यामायमानया—

दारुणसन्निपातारम्भम्, (९०) उरःस्थलस्थापितमणिमौक्तिक-हारचन्दनचन्द्रकान्तं कृतान्तदूतदर्शनयोग्यमिव आत्मानं कुर्व्वाणम्, (९१) अङ्गभङ्गवलनोत्क्षिप्तभुजयुगलं पर्य्यस्तहस्त-नखमयूखैः धारागृहमिव तापशान्तये रचयन्तं, (९२) नेदिष्ठ-सलिलमणिकुट्टिमादर्शोदरेषु निपतद्भिः प्रतिबिम्बैरपि सन्तापाति-

श्यामतामापद्यमानया, [ "लोहितादि—" (३।१।१३ पा०) इत्यादिना क्यषन्तात् शानच् ] रसनया—जिह्वया, घोरसान्निपातिकज्वरे रसना कृष्णा भवति इति वैद्यके; निवेद्यमानेति।—निवेद्यमानः,—कथ्यमानः, विज्ञाप्यमान इत्यर्थः, दारुणस्य,—भीषणस्य, सन्निपातस्य—दोषत्रयसम्भूतस्य ज्वरस्य, आरम्भः,—उपक्रमः यस्य तथोक्तम्।

(९०) उरःस्थलेति।—उरःस्थले—वक्षसि, स्थापिता,—निहिताः, तापशान्त्यै इति भावः, मणीनां—रत्नानां, मौक्तिकानाञ्च—मुक्ताफलानाञ्च, हाराः,—एकावल्यः, चन्दनानि—श्रीखण्डानि, चन्द्रकान्ताश्च—तदाख्यमणिभेदाश्च यस्य तम्; अत एव कृतान्तेति।—कृतान्तः,—अन्तकः, राजा इति भावः, तस्य दूतेन—वार्त्तावहेन, दर्शनं—साक्षात्कारः, तस्य योग्यः,—अनुरूपः तमिव, राजान्तरदूतानां सन्निधौ स्वस्य ऐश्वर्य्याधिक्यप्रदर्शनाय राजभिः सुसज्जितैर्भूयते इति भावः; कृतान्तदूतानां दर्शन-योग्यं वा, आ-जीवनात्तथाविधालङ्कारालङ्कृतनयनाभिरामरूपादर्शनात् इत्याशयः। [ पूर्व्वपदसङ्गस्य उत्तरपदसङ्गहेतुकत्वात् काव्यलिङ्गम्, अतिशैत्यसम्पादकानां मौक्तिक-हारादीनाञ्च विन्यासेनासन्नमृत्योः दाहज्वरेण प्रकटनात् यमदूतदर्शनयोग्यत्वमात्मनि सम्भावनादुत्प्रेक्षा चैतयोः सङ्करः ]।

(९१) अङ्गेति।—अङ्गानाम्—अवयवानां, भङ्गः,—मोटनं, "गानोड़ा" इति वङ्गभाषा, तस्मै वलनं—सञ्चालनं, तेन उत्क्षिप्तम्—उन्नमितं, भुजयुगलं—बाहुद्वयं येन तथोक्तम्, अत एव पर्य्यस्ताः,—समन्तात् प्रसृताः, हस्तयोः,—करयोः, नखानां मयूखाः,—किरणाः तैः, धारागृहं—"फोयारा" इति प्रसिद्धं जलयन्त्रागारं, दाहार्त्तस्य तादृशगृहे अवस्थानस्य विधानात् इति भावः, रचयन्त—कल्पयन्तम् उन्मीलितकरयोः अधोमुखीभूतेभ्यः नखेभ्यः प्रसृतानां शुभ्रकिरणानां जलधारारूपेण प्रतीयमानत्वादिति भावः।

(९२) नेदिष्ठेति।—नेदिष्ठेषु—अतिसन्निहितेषु, (अन्तिकशब्दात् "अति-शायने—" (५।३।५५ पा०) इत्यादिना इष्ठनि "अन्तिक-बाढ़योः—" (५।३।६३ पा०)

शयमिव कथय', स्पृशन्तीं प्रणयिनीमिव विश्वा भूमिं मूर्च्छां व- मन्यमानम्, (८२) अन्तकाह्वानाचरैः इव सभय-भिषग्दृष्टैः अरिष्टैः आविष्टं, महाप्रस्थानकाले स्वसन्तापसन्तानम् आप्तहृदयेषु सञ्चारयन्तम्, अरतिपरिगृहीतम् ईर्ष्यया इव

---

इत्यादिना नेद्दृशेशः ] सलिलेषु—जलेषु, मणिकुट्टिमाना—मणिमयगृहतलानाम्, आदर्शानां—दर्पणानाञ्च, गृहस्थितानामिति भावः, उदरेषु—अभ्यन्तरेषु. निपतद्भिः,—प्रतिफलद्भिः, प्रतिबिम्बैरपि—प्रतिकृतिभिरपि, आतुरस्य राज्ञ इति शेषः, प्रतिबिम्बानामपि एतादृशः सन्तापः यत्,तच्छमनाय तैरपि सलिलादिकं प्रविश्यते.का कथा राज्ञ. सन्तापस्य इति भावः। प्रणयिनीमिव—प्रेयसीमिव, स्पृशन्ती—शरीरं परामृशन्ती, जायमानाञ्च, आश्रयन्तीमित्यर्थः,विश्वासभूमिम्—अतिविश्वस्ता, वि—विशिष्टानाम्,आयतानामिति भाव., श्वासाना—निश्वासाना, महाश्वासानामित्यर्थ, भूमि.,—स्थान तामिति च, हेतुभूतामिति भावः, मुमूर्षो. सन्नातोपि निश्वासानाम् अत्यायतत्वं प्रसिद्धम्, तदवस्थायां सन्तापानुभवा-भावात् मूर्च्छाया. यातनाप्रशमकत्वेन विश्वासभूमित्वमिति वा, अत एव बहु मन्यमानम्—अतिशयेन आद्रियमाणं, सुचिकित्सकत्वादिति भाव'; यद्वा,—विश्वासभूमिं स्पृशन्तीमित्यन्वयः, विश्वासस्थानं गतवतीम्, अतिविश्वस्तामिति तु तदर्थ.।

(८२) अन्तकेति।—अन्तकस्य—यमस्य, आह्वानम्—आकारणा, तस्य अक्षराणि—वर्णाः तैरिव, "आगच्छ राजन्। मदालयम्" इत्येवरूपैः इति भावः, तेषा नियतमृत्युज्ञापकत्वात्, सभयेति।—सभयैः,—विभ्यद्भिः इत्यर्थः, भिषग्भिः,—चिकित्सकैः, दृष्टानि—अवलोकितानि तैः, अरिष्टैः,—मरणचिह्नैः, नियतमृत्युबोधक-लक्षणैरिति भावः, "नियतमरणाख्यापकं लिङ्गमरिष्टम्" इत्युक्तेः, आविष्ट—युक्तम्। महेति।—महत् प्रस्थानम्—अन्तकसदनगमनमित्यर्थ., "शुक्ले तैले तथा मासि" इत्यादिनियमे यात्राशब्दवत् प्रस्थानशब्दस्यापि महोपपदस्य प्रोक्तार्थबोधकत्वदर्श-नात्, तस्य कालः,—समय. तस्मिन्। स्वसन्तापाना—निजव्यथाना, सन्तानं, समूहं तम्, आप्तहृदयेषु—स्वजनमनःसु, सञ्चारयन्त—सङ्क्रामयन्त, स्वजनान् नितरां सन्तापयन्तमिति यावत्, पुनरागमनकप्रस्थानेऽपि क्षणिकात्मीयवियोगोऽसह्यः, किं पुनरपुनरागमनके इत्याशय। अरतिपरिगृहीतम्—अरतिः,—एकत्र अनव-स्थितिः, अस्थिरता इत्यर्थः, वस्तुवैराग्यं वा, काचित् नारीति ध्वनिः, [अत एव लिङ्गात् समासोक्त्यलङ्कारः] तया परिगृहीतः,—आश्रितः तम्, अत एव ईर्ष्ययेव—

छायया मुच्यमानम्, (८४) उद्योगमिव उपद्रवाणां, सर्वास्त्रमोक्षमिव क्षामतायाः, हस्तीकृतं विह्वलतया, विषयीकृतं वैषम्येण, क्षेत्रीकृतं क्षयेण, गोचरीकृतं ग्लान्या, दष्टं दुःखासिकया, आलीकृतम् अस्वास्थ्येन, विधेयीकृतं व्याधिना, क्रोडीकृतं कालेन, लक्ष्यीकृतं दक्षिणाशया, पीतमिव पीडाभिः, जग्धमिव जागरेण,

---

दर्पेणेव, छायया—कान्त्या, अपरया कान्तयेति ध्वनिः, मुच्यमानं—परित्यज्यमानं, सपत्नीसुलभविद्वेषाक्रान्तयेति भावः, दुःसहवेदनया शरीरं निष्प्रभमेवेति तात्पर्य्यम्।

(८४) उद्योगमिव—उपक्रममिव, स्वपराक्रमप्रदर्शनाय विविधचेष्टायाः स्थानमिवेत्यर्थ, उपद्रवातिशययुक्तमिति भावः, उपद्रवाणा—रोगारम्भकदोषप्रकोपजन्यानामन्यविकाराणा, हिक्कामूर्च्छाऽतीसारादीनामिति यावत्। सर्वास्त्रमोक्षमिव—सर्वेषाम् अस्त्राणाम्—आयुधाना, मोक्ष,—निक्षेपः तमिव, क्षामतायाः,—क्षीणतायाः, क्षीणतया सर्वथा आक्रान्तमिति भाव.। विह्वलतया—व्याकुलीभावेन, ("विह्वलव्याकुलौ समौ" इत्यमर) हस्तीकृतम्—आयत्तीकृतमिवेत्यर्थः, [इति प्रतीयमानोत्प्रेक्षा] अत्याकुलमिति भाव। वैषम्येण—विषमावस्थया, दारुणावस्थयेत्यर्थः, विषयीकृत—स्वगोचरीकृत, आयत्तीकृतमित्यर्थ., विषमावस्थाप्राप्तमिति भावः। क्षयेण—नाशेन, अल्पतया इति यावत्, धातूनामिति भाव, क्षेत्रीकृतं—स्थानीकृतम्, आधारीकृतमित्यर्थ, क्षीणधातुकमिति भाव। गोचरीकृतं—विषयीकृत, कवलितमित्यर्थः, ग्लान्या—वेदनाविशेषोद्भवेन हर्षाभावेनेत्यर्थ, अतीव म्लानमिति यावत्। दष्टं—ग्रस्त, दुःखासिकया—कष्टावस्थानेन, शय्याऽऽसनादिष्वपि अनुभूतक्लेशमिति यावत्, यद्वा,—दुःखासिकया—क्लेशबहुलेन, दष्ट—क्षतम्। आलीकृतम्—आयत्ततां नीतम्, अस्वास्थ्येन—रोगजनितेन क्लेशेन, आत्मीयमिति मत्वा अस्वास्थ्येनाश्रित, क्षणमपि नानुभूतस्वास्थ्यमिति भावः। विधेयीकृतं—आश्रवीकृतम्, आयत्तीकृतमित्यर्थ. ("विधेयो विनयग्राही वचनेस्थित आश्रव." इत्यमरः) अविचारेण प्रतिपालितव्याध्यादेशमिति भाव। क्रोडीकृतम्—उत्सङ्गं नीतमित्यर्थः, कालेन—कृतान्तेन, अचिरमेव कालभवनगमनोन्मुखमिति भावः। लक्ष्यीकृतं,—दृष्ट, दक्षिणाशया—दक्षिणया दिशा, यमपालितयेति भाव.। पीतमिव—ग्रस्तमिव, कङ्कालमात्रावशेषत्वादिति भावः। जग्धमिव—भक्षितमिव, जागरेण—अनिद्रया, व्याधिजन्येन

निगीर्णमिव वैवर्ण्येन, (८५) ग्रासीकृतं गात्रभङ्गेन, ह्रियमाण-मिव विपद्भिः, वण्ट्यमानम् इव वेदनाभिः,लुण्ठ्यमानमिव दुःखैः, आदित्सितं दैवेन, निरूपितं नियत्या, घ्रातम् अनित्यत्वेन, अभि-भूयमानम् अभावेन, परिकलितं परासुतया, दत्तावकाशं क्लेशस्य, निवासं वैमनस्यस्य, समीपे कालस्य, अन्तिकेऽन्त्योच्छ्वासस्य, मुखे

---

निद्राऽभावादिति भावः। निगीर्णमिव—कवलितमिव, वैवर्ण्येन—मालिन्येन, रोगजक्लेशेन कान्तिचयात् अतीव विवर्णमिति भावः।

(८५) गात्रभङ्गेन—"गा मोड़ा" इति वङ्गभाषया प्रसिद्धेन देहमोटनेन, ग्रासी-कृतं—कवलीकृतम्, [ अत्र "इव" पदाप्रयोगात् प्रतीयमानक्रियोत्प्रेक्षाऽलङ्कारः ] दोषप्राबल्यात् निरन्तरकृतगात्रभङ्गमिति भावः। ह्रियमाणमिव—चौर्य्यमाणमिव, नीयमानमिवेत्यर्थः, विपद्भिः,—आपद्भिः, विपदाक्रान्तमित्यर्थः। वण्ट्यमान-मिव—विभज्यमानमिव, मुखे नासिकायाञ्च श्वासेन, चक्षुषि कोटरप्रविष्टत्वेन, कर्णे वाधिर्य्येण, एवम् एकैकस्मिन् अङ्गे एकैकया वेदनया विभज्य गृह्यमाण-मिवेत्यर्थः। लुण्ठ्यमानमिव—स्वातन्त्र्यात् वश्यानङ्गीकारत्वेन बलपूर्व्वकं नीयमानमिव, अतीव दुःखमनुभवन्तमित्यर्थः। आदित्सितं—ग्रहीतुमिष्टम्, [ आददातेः सनि "सनि—" (७।४।५४ पा० ) इत्यादिना अच इसि "निष्ठा" (३।२।१०२ पा० ) इति कर्म्मणि क्तः ] दैवेन—प्राक्तनेन कर्म्मणा, देवानां समूहः दैवं तेन, देव-समूहेन इत्यर्थो वा। निरूपितं—निर्द्धारितं, ग्रहणायेति भावः, नियत्या—भाग्येन, ("भाग्यं स्त्री नियतिर्विधिः" इत्यमरः)। घ्रातमिव—स्पृष्टमिव, अनित्यत्वेन—अस्थायित्वेन, अचिरमेव नश्यमानत्वात् इति भावः। अभिभूयमानम्—आक्रम्यमाणम्, अभावेन—अविद्यमानतया। परिकलितं—कवलितं, परासुतया—प्राप्तपञ्चत्वतया, गतप्राणतया इत्यर्थ,मृतधर्म्मेणेति यावत्, ("परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः। मृत-प्रमृतौ त्रिष्वेते" इत्यमरः)। दत्तः,—अर्पितः, अवकाशः,—स्थानं येन तं, क्लेशेन यदृच्छया निरन्तरं क्लिश्यमानमिति भावः। निवासम्—आश्रयं, वैमनस्यस्य—विकृतमनस्कतायाः, विधिबोधितान् अवश्यकरणीयान् अभिलषितानसम्पाद्य असमयपरलोकगमनाशङ्कया मुहुर्मुहुः विमनायमानमिति भावः। "समीपे"इत्यस्य वर्त्तमानमिति उत्तरेणान्वयः। कालस्य—यमस्य, प्रायेण निधनं गतमिति भावः। अन्तिके—सन्निधौ, अन्त्योच्छ्वासस्य—चरमनिश्वासस्य, प्राणापानवायोः वियोगरूपस्येत्यर्थः। मुखे—वदने, कवले इति

महाप्रयासस्य, द्वारि दीर्घनिद्रायाः, जिह्वाग्रे जीवितेशस्य वर्त्त-मानं, विरलं वाचि, चलितं चेतसि, विह्वलं वपुषि, क्षीण-मायुषि, प्रचुरं प्रलापे, सन्ततं श्वसिते, जितं जृम्भिकाभिः, परा-धीनम् आधिभिः, (९६) अनुबद्धम् अनुबन्धिकाभिः, पार्श्वोप-विष्टया अनवरतरोदनोच्छूननयनया गृहीतचामरिकयाऽपि निःश्वसितैः एव वीजयन्त्या विविधौषधिधूलिधूसरितशरीरया मुहुर्मुहुः,—"आर्य्यपुत्र! स्वपिषि?" इति व्याहरन्त्या

---

भावः, महाप्रयासस्य—महतः क्लेशस्य। द्वारि—द्वारसमीपे, दीर्घनिद्रायाः,—चिरनिद्रायाः, मृत्योरित्यर्थः। जिह्वाऽग्रे—रसनाऽग्रे, जीवितेशस्य—यमस्य, ("जीवितेशो यमे पुंसि विधु स्यात्जीवितेश्वरे" इति मेदिनी)। विरलम्—अल्पं वाचि—वाक्यकथने, वाक्यं कथयितु-मशक्तमिति भावः। चलितं—भ्रष्टं, चेतसि—चित्ते, असह्यक्लेशेन विगतचित्तमित्यर्थः, नष्टसंज्ञमिति भावः। विह्वलं—विवशं, वपुषि—देहे, अवशशरीरमित्यर्थः। क्षीणं—क्षयं गतम्, आयुषि—जीवितकाले। प्रचुरं—प्रभूतं, प्रलापे—परस्परविरुद्धभाषणे, अर्थरहितवचने प्रत्यर्थः, ("प्रलापोऽनर्थकं वचः" इत्यमरः) अनवरतं प्रलपन्तमिति भावः। सन्ततं—निरन्तरं, श्वसिते—श्वासनिर्गमे, पुनः पुनः अतिशयेन निःश्वसन्तमित्यर्थः। जृम्भिकाभिः,—जृम्भणैः, वदनव्यादानपूर्वकवायुग्रहणमोचनरूपाभिः आलस्यप्रकटनक्रियाभिरित्यर्थः, जितम्—अभिभूतं, मुहुर्मुहुः जृम्भावेगेन अवसन्नमित्यर्थः। आधिभिः,—मनःपीडाभिः, एतान् प्रियजनान् परित्यज्य सहसा एव चिराय प्रतिष्ठे इति बोधोद्भवैः इत्याशयः, पराधीनम्—आयत्तीकृतं, प्रियपुत्रकलत्रादीनामाशुवियोगसम्भावनया पीड्यमानमिति निष्कर्षः।

(९६) अनुबन्धिकाभिः,—गात्रसन्धिपीडाभिः, यद्वा,—मुख्यानुयायिनीभिः, प्रधानरोगानुवर्त्तिनीभिः मूर्च्छापिपासादिभिः पीडाभिरिति यावत् ("अनुबन्धः शिशौ दोषोत्पादे मुख्यानुयायिनि" इति मेदिनी) अनुबद्धम्—अविच्छिन्नम्, अनुगतमित्यर्थः। पार्श्वोपविष्टया—पार्श्वे आसीनया, अनवरतेति।—अनवरतेन—अविरतेन, रोदनेन—क्रन्दनेन, उच्छूने—स्फीते, नयने—लोचने यस्याः तथाभूतया, गृहीतचामरिकया—धृतवालव्यजनया, चामरेण वीजयन्त्येति यावत्, निःश्वसितैः,—मुहुर्मुहुः पतद्भिः दीर्घनिश्वासैरिति यावत्। विविधेति।—विविधानां—नानाप्रकाराणाम्, औषधीनां—रोगोपशमकवृक्षलतादीनां, धूलिभिः,—चूर्णैः, धूसरितम्—ईषत्पाण्डुभूतं, शरीरं—गात्रं यस्याः तथाभूतया। व्याहरन्त्या—जल्पन्त्या, शोकसिन्धुपारादर्शनेन विकलाय-

देव्या यशोवत्या शिरसि वक्षसि च स्पृश्यमानं पितरम् अद्राक्षीत्।

दृष्ट्वा च (९७) प्रथमदुःखसम्पातमथ्यमानमतिः आशङ्कित इव भागधेयेभ्यः समभवत्। अन्तकपुरवर्त्तिनमेव च पितरम् अमन्यत। निराकृत इव च अन्तःकरणेन क्षणम् आसीत्। अवधूतश्च धैर्य्येण, चेलीकृतः क्षोभेण, रिक्तीकृतो रत्या, विषयीकृतो विषादेन, पावकमयमिव हृदयम् उद्वहन्, विषमविषदूषितानीव मुह्यन्ति इन्द्रियाणि बिभ्राणः, तमसा रसातलमपि विशेषयन्, शून्यत्वेन आकाशमपि अतिशयानो न

---

मानयेति भावः। अत्र महाराजः आलम्बनविभावः, तस्य महाक्लेशानिष्टाशिप्रभृतयः उद्दीपनविभावाः, क्रन्दितभूपातादयः अनुभावाः, मोहविषादादयश्च व्यभिचारिणः, एतै व्यक्तीकृतः शोकः करुणरसरूपतामायातः इत्यनवद्यम्।

(९७) प्रथमेति।—प्रथमेन—आद्येन, इतः पूर्वं कदाऽप्यननुभूतत्वात् इति भावः, दुःखाना—मनःपीडाना, सम्पातेन—समागमेन, मथ्यमाना—विलोड्यमाना, मतिः,—बुद्धि यस्य तथाभूतः, भागधेयेभ्यः,—दुर्भाग्येभ्य, आसन्नपितृविनाशहेतुभ्य इति भावः, आशङ्कित इव—जाताशङ्क इव, समभवत्—समजायत, पितृविनाश शङ्कित-वानित्यर्थः। अन्तकपुरवर्त्तिनमेव—यमपुरगतमेव। अन्तःकरणे—अन्तरिन्द्रियेण, मनसा इत्यर्थ, निराकृत इव-परित्यक्त इव, पितृमहाक्लेशदर्शनातिशोकक्षोभेण नष्टसञ्ज इवेत्यर्थः। अवधूत, विचलितः, धैर्य्यविहीन इत्यर्थः, कठोराघाते तथाभावात् इति भावः। चेलीकृतः,—विषयीकृतः, क्षोभेण—दुःखेन, दुःखाभिभूत इत्यर्थ। रिक्तीकृतः,—विरहितः, रत्या—सन्तोषेण, अरतिग्रस्त इत्यर्थः। विषयीकृतः—गोचरीकृतः, विषादेन—अप्रसादेन, अप्रसन्नतयेत्यर्थः, विषण्ण इति यावत्। पावकमयमिव—अग्निमयमिव, महातापाग्नि ज्वलितमिव इत्यर्थः, अतीव सन्तप्यमानमानस इति भावः। विषमेति।—विषमेण—दारुणेन, विषेण—हलाहलेन, दूषितानीव—विकृतानीव, अत एव मुह्यन्ति—मोह गच्छन्ति, विमूढानीति यावत्, स्वव्यापार-रहितानीति भावः, इन्द्रियाणि—चक्षुरादीनि। तमसा—अन्धकारेण, शोकेन च, शोकजमोहेन इत्यर्थः, ("तमो ध्वान्ते गुणे शोके क्लीब वा ना विधुन्तुदे" इति मेदिनी) रसातलं—पातालमपि, विशेषयन्—अतिशयानः, अन्धतमसङ्कुलात् पातालादपि

अविन्दत कर्त्तव्यम्। पस्पर्श च हृदयेन भियम् उत्तमाङ्गेन च गाम्।

(९८) अवनिपतिस्तु दूरादेव दृष्ट्वा अतिदयितं तनयं तदवस्थोऽपि निर्भरस्नेहावर्ज्जितः प्रधावमानो मनसा प्रसार्य्य भुजौ "एहि एहि" इति आह्वयन् शरीरार्द्धेन शयनात् उदगात्। ससम्भ्रमम् उपसृतञ्च एनं विनयावनम्रम् उन्नमय्य बलात् उरसि निवेश्य, विशन्निव प्रेम्णा निशाकरमण्डलमध्यं, मज्जन् इव अमृतमये महासरसि, (९९) स्नान् इव महति हरिचन्दनरसप्रस्रवणे, अभिषिच्यमान इव तुषाराद्रिद्रवेण, पीड़यन्

तमसाऽभिभूत इत्यर्थः। शून्यत्वेन—विरहितत्वेन, नीरूपमाकाशमिव सर्व्वद्रव्यसम्पन्नोऽप्यसौ पितृवियोगसम्भावनया सर्व्वैरेव विरहितमिव आत्मानम् अमन्यत इति भावः, आकाशमपि—गगनमपि, अतिशयानः,—अभिभवन्, कर्त्तव्यं—तात्कालिककार्य्यं, न अविन्दत—न अवबुबुधे। भियं—भीतिं, ("भीतिर्भीः साध्वसं भयम्" इत्यमरः) साशङ्कहृदयः अभवदिति भावः, उत्तमाङ्गेन—शिरसा, गां—भूमिं, पस्पर्श- स्पृष्टवान्, भूमिपतितः पितरं प्रणनामेत्यर्थः। अत्र प्रस्तुतयोः हृदयोत्तमाङ्गयोः स्पर्शरूपैकक्रियाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कार इति ज्ञेयम्।

(९८) अवनिपतिः,—भूपालः, प्रभाकरवर्द्धन इति यावत्। अतिदयितम्—अतिप्रियम्। तदवस्थोऽपि—तथा अस्वस्थोऽपीत्यर्थः। निर्भरेति।—निर्भरेण—निरतिशयेन, स्नेहेन—प्रेम्णा, आवर्ज्जितः,—वशीभूतः, आकृष्ट इति यावत्, मनसा—चित्तेन, न तु शरीरेण उत्थानसामर्थ्याभावादिति भावः। शरीरार्द्धेन—पूर्व्वकायेन, कटिदेशात् शिरःपर्य्यन्तेनेत्यर्थः। उदगात्—उत्तस्थौ। ससम्भ्रमं—सत्वरम्, उपसृतम्—उपगतम्। प्रेम्णा—स्नेहेन। निशाकरमण्डलमध्यं—चन्द्रमण्डलाभ्यन्तरं, तनयालिङ्गनस्य हृत्सन्तापनिवारकत्वेनातीव प्रीतिजननत्वात् चन्द्रमण्डलमध्यप्रवेशवदानन्दानुभव इति बोद्धव्यं, चन्द्रमण्डलस्यापि हृदयाह्लादकपीयूषगुणवच्छैत्यवत्त्वेन तथाविधत्वादिति भावः; एवमन्यतमयादिष्वपि उन्नेयम्। अमृतमये महासरसि—अमृतपूर्णह्रदे।

(९९) स्नान् इव—स्नानं कुर्व्वन्निव, [स्नाधातोः "लटः—" (३।२।१२४ पा०) इत्यादिना अप्रथमान्तेन सामानाधिकरण्ये शतृ-शानचोः विधानात् कथमत्र लक्षणानुगमः? अत्र दीक्षिताः,—"लड़ित्यनुवर्त्तमाने पुनर्लड्ग्रहणम् अधिकविधा-

अङ्गैः अङ्गानि, कपोलेन कपोलम् अवघट्टयन्, निमीलयन् पक्ष्माग्रग्रथिताजस्रास्रविस्राविणी विलोचने, विस्मृतज्वरसंज्वरः सुचिरम् आलिलिङ्ग। (१००) कथङ्कथमपि चिरात् विमुक्तास्तु उपसृत्य कृतनमस्कारं प्रणतजननीकम् उपागतम् आसीनञ्च शयनान्तिके पिबन् इव विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत्। पस्पर्श च पुनःपुनः वेपथुमता पाणितलेन। क्षयक्षाम-

नार्थं, तेन प्रथमा सामानाधिकरण्येऽपि क्वचित्" इति शतृप्रत्ययः। हरिचन्दनेति।—हरिचन्दनस्य—हरेः,—शक्रस्य, इन्द्रस्येत्यर्थः, ("हरिर्यमानिलेन्द्रार्कविष्णु…… । … …शक्रे लोकान्तरे पुमान्॥" इति मेदिनी) प्रिय चन्दनं—देवतरुविशेषः इत्यर्थः, गोशीर्षाख्यः मलयैकदेशजः चन्दनभेदो वा, ("हरिचन्दनमस्त्री स्यात् देवताना महीरुहे। नपुंसकन्तु गोशीर्षे ज्योत्स्ना-कुङ्कुमयोरपि॥" इति मेदिनी) हरेः,—विष्णोः, प्रिय चन्दनं, श्वेतचन्दनमित्यर्थो वा, तेषामतीव शैत्यगुणवत्त्वेन दाहनाशकत्वात्, तस्य रसः,—द्रव एव, प्रस्रवण—निर्झरः तस्मिन्। तुषाराद्रिद्रवेण—हिमाचलस्रावेण, अङ्गैः, स्वीयैरिति भाव, अङ्गानि, कुमारस्येति भावः, पीडयन्—बद्धाकाङ्क्षितत्वात् निविडमाश्लिष्यन्नित्यर्थः। अवघट्टयन्—सङ्घर्षयन्। निमीलयन्—मुद्रयन्, आत्मजाश्लेषजहर्षभरेण अपूर्व्वानन्दोदयात् इति भावः। पक्ष्मेति।—पक्ष्मणा—नेत्रलोम्नाम्, अग्रेषु—प्रान्तेषु, ग्रथितानि—सक्तानि, अजस्राणि—अविच्छिन्नानि, अस्राणि—बाष्पाणि, विस्रवतः—विगलतः इति तथोक्ते, विलोचने—नेत्रे। विस्मृतेति।—विस्मृतः,—अननुभूतः इत्यर्थः, ज्वरस्य—दाहज्वरस्य इति भावः, सज्वरः,—सन्तापः येन तथाभूतः, ("सन्तापः संज्वरः समौ" इत्यमरः)।

(१००) कथङ्कथमपि—अतिकष्टेण, अनिच्छन्नपीत्यर्थः, पुनरप्राप्तिदुर्भावनीयत्वादिति भावः। विमुक्तं—त्यक्तम्। कृतनमस्कार—कृतप्रणामं, पित्रे एव इति भावः। उपसृत्य—समीपं गत्वा, मातुरिति भावः। प्रणतेति।—प्रणता—वन्दिता, जननी—माता येन तथाभूतम्। उपागतम्—उप—समीपे, आगतं—प्रत्यागतं, मातृप्रणामानन्तरमिति भावः। आसीनम्—उपविष्टम्। शयनान्तिके—शय्यासन्निधौ। विगतेति।—विगतः,—परिहृतः, निमेषः,—निमीलनं यस्मिन् तथाभूतम्, अत एव निश्चलं—स्थिरं तेन। वेपथुमता—कम्पशालिना, [ वेपधातोः "ट्वितोऽथुच्" (३।३।८९ पा०) इत्यथुच्, ततः "तदस्य—" (५।२।९४ पा०) इत्यादिना

कण्ठश्च क्षामात् इव अवादीत्,—"वत्स! कृशोऽसि" इति। भण्डिस्तु अकथयत्,—"देव! तृतीयमहः कृताहारस्य अस्य अद्य" इति।

(१०१) तत् श्रुत्वा वाष्पवेगरुध्यमाणाक्षरं कथञ्चिदपि आयतं निश्वस्य उवाच,—"वत्स! जानामि त्वां पितृप्रियम् अतिमृदुहृदयम्। ईदृशेषु विधुरयति धीमतोऽपि धियम्। अतिदुर्द्धरो बान्धवस्नेहः सर्व्वप्रमाथी; अतो न अर्हसि आत्मानं शुचे दातुम्। (१०२) उद्दामदाहज्वरदग्धोऽपि दह्ये खलु अहम् अधिकतरम् अनेन आयुष्मदाधिना। निशितमिव शस्त्रं तक्ष्णोति मां त्वदीयः तनिमा। सुखञ्च राज्यञ्च वंशश्च प्राणाश्च

---

मतुप्]। क्षयेति।—क्षयेण—क्षीणतया, क्षाम,—क्षीणः, अवरुद्धः इत्यर्थ, कण्ठः,—गलदेश', कण्ठध्वनिरिति यावत् यस्य तथाभूतः। भण्डि',—हर्षस्य मातुलात्मजः। अद्य—अस्मिन्नहनि, तृतीयम् अह',—तयाणा पूरणभूतं दिन कृताहारस्य—कृतभोजनस्य, पथि दिवसद्वयमुपोषितवान्, इदानीमप्यसौ न भुक्तवान् इति भाव।

(१०१) तत्—दिनत्रयाभोजनमित्यर्थः। वाष्पेति।—बाष्पवेगेन—उद्गताश्रुप्रवाहेण, रुध्यमाणानि—अवरुध्यमानानि, अक्षराणि—वर्णा. यस्मिन् तद्यथा तथा। आयत—दीर्घम्। पितृप्रियं—पिता प्रियः यस्य, पितरि प्रियो वा त, पितृभक्तमित्यर्थ। अतिमृदुहृदयम्—अतिकोमलान्तःकरणम्, अल्पेनैव मद्दुःखेन त्वम् अतिविधुरता गतोऽसीति भाव'। ईदृशेषु—एवंविधेषु, महत्सु दुर्योगेष्विति भावः। विधुरयति—व्याकुलयति, धीमतोऽपि—बुद्धिमतोऽपि, अतिधीरस्यापीत्यर्थः. धियं—मतिं, ("धीः प्रज्ञा शेमुषी मति" इत्यमर.)। अतिदुर्द्धर,—अतिदुःखेन भ्रियते इति तथोक्त, अतिदुःखेनापि त्यक्तुमशक्य इति भाव। सर्व्वप्रमाथी—सर्व्वजन व्याकरः। शुचे—शोकाय, ["चतुर्थी—" (२।३।१३ पा॰) इत्यादिना चतुर्थी] दातु—समर्पयितुं, शोकाधीन कर्त्तुमित्यर्थ.।

(१०२) उद्दामेति।—उद्दामेन—अत्युत्कटेन, दाहज्वरेण—दाहप्रबलेन ज्वरेण, पित्तज्वरसन्तापेनेत्यर्थ, दग्धोऽपि—सन्तप्तोऽपि। दह्ये—सन्तप्ये। आयुष्मदाधिना—आयुष्मतः,—दीर्घायुष., वत्सस्य ते इत्यर्थः, आधिना—मनःपीडया, मन्निमित्तेनेति यावत्, ("पुंस्याधिर्मानसी व्यथा" इत्यमरः) निशित—तीक्ष्णम्।

त्वयि मे स्थिताः। यथा मम, तथा सर्व्वासां प्रजानाम्। त्वद्विधानां पीड़ाः पीड़यन्ति सकलमेव भुवनतलम्। न हि अल्पपुण्यभाजां वंशम् अलङ्कुर्व्वन्ति भवादृशाः। (१०३) फलमसि अनेकजन्मान्तरोपार्ज्जितस्य अकलुषस्य कर्म्मणः। करतलगतमिव कथयन्ति चतुर्णाम् अपि अर्णवानाम् आधिपत्यं ते लक्षणानि। त्वज्जन्मनैव कृतार्थोऽस्मि, निरभिलाषोऽस्मि जीवितव्ये। भिषगनुरोधः पाययति माम् औषधम्। (१०४) अपि च सर्व्वप्रजापुण्यैः सकलभुवनतलपरिपालनार्थम् उत्पत्स्यमानानां भवादृशां जन्मग्रहणोपायः पितरौ। प्रजाभिस्तु बन्धु-

---

तक्ष्णोति—निकृन्तति, कृशीकरोति वा। तनिमा—तनोः,—कृशत्वस्य भावः, कृशत्वमित्यर्थः। सुखञ्चेत्यादि।—त्वयि वत्से कुशलिनि सति मम सुखादिकं सर्व्वमेव अविकलं स्थास्यति इति भावः।

(१०३) अनेकेति।—अनेकेषु—बहुषु, जन्मान्तरेषु—पूर्व्वपूर्व्वजन्मसु, उपार्ज्जितम्—अनुष्ठितं तस्य, अकलुषस्य—अनघस्य, कर्म्मणः,—कार्य्यस्य, सुकृतरूपस्य इत्यर्थः, फलं—परिणामभूतः, असि—भवसि, त्वम् इति शेषः, मदीयपूर्व्वपूर्व्वजन्मार्ज्जितबहुसुकृतिपरिणामेन पुण्यसन्तानस्वरूप विशुद्धसत्त्वगुणसम्पन्नस्त्वम् उत्पन्नोऽसि इति भावः। करतलगतमिव—हस्ततलस्थितमिव, चतुर्णामपि, न त्वेकस्य द्वयोस्त्रयाणां वा इत्यपिकारार्थः। अर्णवानां—सागराणाम्, आधिपत्यं—प्रभुत्वम्। लक्षणानि—शुभचिह्नानि। त्वज्जन्मनैव—तव उत्पत्तिमात्रेणैव, नान्येनेत्यर्थः; अन्ययोगव्यवच्छेदकोऽयमेवकारः; कृतार्थः,—चरितार्थः, सिद्धकाम इत्यर्थः। निरभिलाषः,—निस्पृहः, जीवितव्ये—प्राणधारणविषयभूतवस्तुनि, सर्व्वगुणवतः तव जननेनैव देवादि-ऋणेभ्यो मुक्तिलाभात् प्राणधारणफलं प्राप्तम्, अतोऽन्यफलाकाङ्क्षाऽभावात् कृतकृत्योऽस्मि इदानीमिति भावः। यदि त्वं जीवने वीतस्पृहः, तत् कथमौषधं सेवसे? इत्यत आह, भिषगिति।—भिषजां—चिकित्सकानां, अनुरोधः,—निर्बन्धः, आग्रहातिशय इति यावत्, माम् औषधं पाययति, न तु जीवितार्थिता इति भावः।

(१०४) पक्षान्तरमाह, अपि चेत्यादिना। सर्व्वेति।—सर्व्वासां प्रजानां—जनानां, पुण्यैः,—सुकृतैः, न केवलं ममेति भावः, सकलभुवनतलपरिपालनार्थं—समस्तभूमण्डलरक्षणार्थम्, उत्पत्स्यमानानां—जनिष्यमाणानां, [“लृटः—” (३।३।१४

मन्तो राजानः, न ज्ञातिभिः। तद् उत्तिष्ठ, कुरु पुनरेव सर्वाः क्रियाः। कृताहारे च त्वयि अहमपि स्वयम् उपयोक्ष्ये पथ्यम्" इत्येवम् (१०५) अभिहितस्य च अस्य धक्ष्यन्निव हृदयमतितरां शोकानलः सन्दुधुक्षे। क्षणमात्रञ्च स्थित्वा पिता पुनः आहारार्थम् आदिश्यमानो धवलगृहात् अवततार; चकार च चेतसि,—"अकाण्डे खलु अयं समुपस्थितो महाप्रलयो व्यभ्र इव वज्रपातः। सामान्योऽपि तावत् शोकः सोच्छ्वासं मरणम्,

पा०) इत्यादिना शानच्] भवादृशा—भवद्विधाना, जन्मग्रहणोपाय,—जन्मग्रहणस्य—उत्पत्तिलाभस्य, उपायः,—साधन, निमित्तभूतौ इत्यर्थ., [उद्देश्यविधेयभावस्थले लिङ्गवचनकाले नास्ति तन्त्रता इति वचनविपर्यास]। पितरौ—माता च पिता च तौ, उक्तञ्च वसिष्ठेन,—"शुक्रशोणितसम्भव पुत्रो मातापितृ निमित्तक." इति, भवादृशा महात्मना शरीरपरिग्रहणार्थमेव पित्रोः जीवनधारणस्य प्रयोजनीयता, तत् जन्मना तत्सिद्धे इदानीं मज्जीवनस्य तथा नास्ति काऽप्युपयोगिता इति भाव। प्रजाभि,—भूतलवासिभिर्जनै, बन्धुमन्त,—स्वजनवन्त., राजान,—नृपाः, न ज्ञातिभि,—पित्रादिभि सगोत्रै., बन्धुमन्त इति भावः, प्रजा एव राज्ञा बन्धव., न ज्ञातय, परस्परपोषणादिभि अन्वयव्यतिरेकात् इत्याशय, अत मदभावे न त्वं निर्बान्धवो भविष्यसि, न च त्वया मदर्थं शोचितव्य, यथा प्रजाना हित भवति, तथा क्रियतामिति निष्कर्ष.। सर्वा क्रिया,—स्नानाहारादिका: इत्यर्थ., त्वयि जीवति प्रजाः सनाथाः भविष्यन्ति, तेन आत्मजीवनमवश्यमेव त्वया रक्षितव्यम्, अतः स्नानाहारादिषु नोपेक्षा कर्त्तव्या इति भाव। उपयोक्ष्ये—खादिष्यामि।

(१०५) अभिहितस्य—उक्तस्य, पित्रा इति शेष.। अस्य—हर्षस्य। धक्ष्यन्निव—भस्मीकरिष्यन्निव। अतितराम्—अतिशयेन। सन्दुधुक्षे—सन्दिदीपे, पितृजीवननैराश्यात् इति भावः। आदिश्यमान,—आज्ञाप्यमान, अनुरुध्यमान इति यावत्। अकाण्डे—सहसा। महाप्रलयः,—कल्पान्तकल्पः महात्यय, जन्यभावानधिकरणीभूतकाल इत्यर्थः। व्यभ्र,—निरभ्रः, निर्मेघ इत्यर्थः। सामान्य,—अल्पः, शोकः,—प्रियजनविच्छेदज दुःखमित्यर्थ, सोच्छ्वास—सनिश्वासं, मरणं—मृत्यु, मरणे निश्वासापगम स्यात्, शोकरूपे मरणे तु तत्सद्भाव इति भावः। श्वासवत्त्वात् यन्त्रणाभेदत्वेन मरणादतिरिच्यते शोक. इति व्यतिरेकध्वनिः॥

(१०६) अनुपदिष्टौषधो महाव्याधिः, अभस्मीकरणोऽग्निप्रवेशः, अनुपरतस्य एव नरकवासः, निर्ज्योतिः अङ्गारवर्षम्, अशकलीकरणं क्रकचदारणम्, (१०७) अव्रणो वज्रसूचीपातः, किमुत विशेषाश्रितः ? किमत्र करवाणि ?" इति।

(१०८) राजपुरुषेण अधिष्ठितश्च गत्वा स्वधाम (१०९) धूममयान् इव कृताश्रुपातान्, अग्निमयान् इव जनितहृदय-

(१०६) अनुपदिष्टेति।—न उपदिष्टं—न कथितम्, औषधं—भेषजं यस्य तथाभूतः, शास्त्रोक्तभेषजरहित इत्यर्थः, ["अनुपदिष्टौषध." इत्यत्र "अनुपदिष्टौषधी" इति पाठान्तरम्] महाव्याधिः,—महान् रोगः, सरतो व्याधिः शास्त्रीयौषधेन प्रतीकारः स्यात्, शोकस्य तु न तथेति भाव.। अभस्मीकरणः,—अदहन इत्यर्थ., अग्निप्रवेशेऽङ्गदाहः स्यात्, शोके तु न तथा, किन्तु केवलं ज्वलनमिति भाव। अनुपरतस्य—अमृतस्य, जीवत इत्यर्थः, नरकवास.,—नरके—निरवच्छिन्नदुःखनिलये स्थानविशेषे, वासः,—अवस्थानं, मृतस्यैव पापातिरेकात् नरकेऽवस्थान, शोकार्त्तस्य तु तदभावेऽपि इति भावः। निर्ज्योतिः,—निष्प्रभम्, अङ्गारवर्षं—ज्वलदग्निस्फुलिङ्ग-वृष्टिः, तादृशाङ्गारवर्षणे उद्द्योतो दृश्यते, शोकरूपे तु अन्तर्वर्षणात् बहिः निष्प्रभता एव भवतीति भावः। अशकलीकरणम्—अखण्डीकरणं, क्रकचदारणं—करपत्र-विपाटनं, करपत्रच्छेदने वस्तुन. द्वेधा त्रेधा वा विपाटनं भवति, शोके तु न तथा, परं तादृशः क्लेश एवेति भावः।

(१०७) अव्रण,—अक्षतकारणः, वज्रसूचीपातः,—कुलिशशलाकापतनं, वज्र-सूचीपाते शरीरं क्षत स्यात्, शोकपाते तु न तथा, किन्तु तत्पतनक्लेश इति भावः; यद्वा,—हीरकसूच्यग्रवेध., हीरकस्य अतीव काठिन्यात् तेन निखननस्य निरतिशय-क्लेशदायकत्वात्। किमुत—किं पुनः, विशेषाश्रितः?—विशेषम् आश्रितः ? असामान्य इत्यर्थः, पितृवियोगज इति भावः; सामान्येऽपि शोके यदा एवं क्लेश. सञ्जायते, तदा पित्रादिवियोगजशोकस्य दारुणत्वे किं पुनर्वक्तव्यम् ? इति निष्कर्षः।

(१०८) "राजपुरुषेण" इत्यस्य "कवलान् अग्रहात्" इत्युत्तरेणान्वय.। राजपुरुषेण—राजलोकेन, [ "षष्ठी" (२।२।८ पा०) इति समासः] अधिष्ठित,—अनुसृतः। स्वधाम—स्वभावासम्।

(१०९) कवलान् विशिनष्टि, धूमेति।—कृतः,—विहितः, अश्रूणां—वाष्पाणां, पातः,—पतनं चे. तान्, अत एव धूममयानिव—धूमात्मकानिव, धूमाच्छन्नानिव वा,

दाहान्, विषमयान् इव दत्तमूर्च्छावेगान्, महापातकमयान् इव उत्पादितघृणान्, क्षारमयान् इव आनीतवेदनान् कतिचित् कवलान् अग्रहीत्। (११०) आचमंश्च चामरग्राहिणम् आदिदेश,—"विज्ञाय आगच्छ, कथम् आस्ते तातः" इति। गत्वा च प्रतिनिवृत्य च,—"देव! तथैव" इति विज्ञापितः तेन अगृहीतताम्बूल एव उत्ताम्यता मनसा अस्ताभिलाषिणि सवितरि सर्वान् आहूय उपह्वरे,—"वैद्याः? किमस्मिन्नेवंविधे

---

धूमेन यथा दृष्टिविघातकरम् अश्रु आविर्भवति, तथा तत्कवलग्रहणकाले उच्छ्वसितशोकाश्रुणा दृष्टेरवरोधादिति भावः। जनितेति।—जनितः,—उत्पादितः, हृदयस्य—अन्तःकरणस्य, दाहः,—ज्वलनं यैः तान्, अत एव अग्निमयानिव—अनलसन्निभानिति यावत्। दत्तेति।—दत्तः,—जनित इत्यर्थः, मूर्च्छायाः,—मोहस्य, वेगः,—जवः, प्रसर इति यावत् यैः तान्, अत एव विषमयानिव—विषमिश्रितानित्यर्थः, विषस्य मोहजनकत्वादिति भावः। उत्पादितेति।—उत्पादिता—जनिता, घृणा—जुगुप्सा, पितुरनिष्टाशङ्कया स्वजीवने निःस्पृहत्वादिति भावः यैः तान्, अत एव महापातकमयानिव—"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चमः॥" इत्युक्तानि पञ्चविधानि महान्ति—घोराणि, पातकानि—पातित्यजननानि, तन्मयान्—तत्प्रचुरान् इव, पापानि यथा लोकैः जुगुप्स्यन्ते, तथा तदानीम् अस्य कवलेषु घृणा आसीदिति भावः। आनीतवेदनान्—जनितक्लेशान्, अत एव क्षारमयान् इव—लवणमयान् इव, यथा समधिकलवणव्यञ्जनादिभक्षणे क्लेशः स्यात्, तथा तत्कवलग्रहणेऽस्य जात इति भावः, यद्वा—क्षारमयानिव—मुष्ककादिभस्मकृतसुतीक्ष्णरसविशेषात्मकानित्यर्थः, देहस्य कुत्रचित् क्षतांशे लिप्तः क्षारो यथा अतीव सन्तापकारी भवति, तथा तदन्नभक्षणेऽपि सन्तापोऽस्य महाशोकक्षतहृदयस्य जात इति भावः, ("क्षारो रसान्तरे धूर्त्ते लवणे काचभस्मनी." इति मेदिनी)। कतिचित्—स्वल्पान् इत्यर्थः, द्वित्रानिति यावत्, पितुर्निर्देशगौरवात् इति भावः, कवलान्—अन्नग्रासान्।

(११०) आचमंश्च—आचमनं कुर्वंश्च। चामरग्राहिणं—वीजनकारिणमिति यावत्। कथं—कीदृक्। तथैव—यथा प्रागासीत्, अधुनाऽपि तत्सदृश एव इत्यर्थः। अगृहीतताम्बूलः,—असेवितपर्णः। उत्ताम्यता—क्लाम्यता। अस्ताभिलाषिणि—

विधेयमधुना ?" इति विषण्णहृदयः पप्रच्छ। तं तु व्यज्ञापयन्,—"देव! धैर्य्यमवलम्बस्व, कतिपयैः एव वासरैः पुनः स्वां प्रकृतिमापन्नं स्वस्थं श्रोष्यसि पितरम्" इति।

तेषान्तु भिषजां मध्ये (१११) पौनर्वसवो युवा, अष्टादश-वर्षदेशीयः, तस्मिन्नेव राजकुले कुलक्रमागतः, (११२) गतः पारम् अष्टाङ्गस्य आयुर्वेदस्य, भूभुजा सुतनिर्विशेषं लालितः,

---

अस्ताचलं गन्तुमभिलषति, सर्व्वान्, वैद्यानिति शेषः, उपह्वरे—रहसि, विजने इत्यर्थः, ("रहोऽन्तिकमुपह्वरे" इत्यमरः)। वैद्याः। इति सम्बोधनम्। अस्मिन्नेवंविधे—ईदृशे रोगे, अस्यामवस्थायामित्यर्थः। विधेयं—कर्त्तव्यम्। ते—वैद्याः, व्यज्ञापयन्—न्यवेदयन्। कतिपयैः,—स्वल्पैः, वासरैः,—दिवसैः, [अपवर्गे तृतीया] स्वां प्रकृतिं—निजस्वभावं, साहजिकीमवस्थामित्यर्थः, आपन्नं—प्राप्तं, स्वस्थं—प्रकृतिस्थं, रोगमुक्तमिति यावत्। "स्वां प्रकृतिमापन्नं स्वस्थम्" इत्यनेन प्रकृतिम्—अव्यक्तरूपत्वम्, अव्यक्ततत्त्व-मित्यर्थः, क्षित्यादिमहाभूतेषु लयरूपमिति भावः, "मरणं प्रकृतिः शरीरिणाम्" इत्युक्तेः, आपन्नं—प्राप्तं, पृथिव्यादिरूपेण परिणतमित्यर्थः, पार्थिवादिदेहस्य लये तत्तदंशस्य तत्र तत्र परिणमनादिति भावः, स्वस्थम्—अविकृतं, "विकृतिर्जीवितमुच्यते बुधैः" इति स्मरणात् मृतमिति भावः, स्वर्गस्थमिति वा, इत्यपि ध्वन्यते; "जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च। तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि॥" इति शास्त्रात्।

(१११) पौनर्वसवः,—पुनर्वसुनक्षत्रे जातः, पुनर्वसोः अपत्यं पुमान् पौनर्वसव इति वा, यद्वा,—पुनर्वसुना मुनिना प्रोक्तम् आयुर्वेदं वेत्ति अधीते वेति पौनर्वसवः, अष्टादशवर्षदेशीयः,—प्रायेण अष्टादशवर्षवयस्कः, ["ईषदसमाप्तौ—" (५।३।६७ पा०) इत्यादिना देशीयर्प्रत्ययः]। कुलक्रमागतः,—वंशपरम्परया चिकित्सक-पदाधिष्ठित इत्यर्थः।

(११२) अष्टाङ्गस्येति।—अष्टौ अङ्गानि यस्य तथोक्तस्य, तथा चोक्तं,—"काय-बालग्रहोर्द्ध्वाङ्ग-शल्यदंष्ट्राजरावृषान्। अष्टावङ्गानि तस्याहुः चिकित्सा तेषु संश्रिता॥" इति। "ततोऽल्पायुष्ट्वम् अल्पमेधस्त्वञ्चावलोक्य नराणां भूयोऽष्टधा प्रणीतवान्, शल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रं, रसायनतन्त्रं, वाजी-करणतन्त्रञ्च" इति सुश्रुतसंहिता। आयुर्वेदस्य—आयुर्विद्यते—लभ्यते येन सः, आयुरनेन विन्दति—लभते इति वा, आयुरस्मिन् विद्यते—वर्त्तते इति वा, आयुर्वेत्ति—

प्रकृत्यैव अतिपटीयस्या प्रज्ञया यथावत् विज्ञाता व्याधि-स्वरूपाणां रसायनो नाम वैद्यकुमारकः सास्रः तूष्णीम् अधोमुखो-ऽभूत्। पृष्टश्च राजसूनुना,—"सखे! रसायन! कथय तथ्यं, यदि असाधु इव पश्यसि?" इति। सोऽब्रवीत्,—"देव! श्वः प्रभाते यथाऽवस्थितम् आवेदयितास्मि" इति।

अत्रैव च (११३) अन्तरे भवनकमलिनीपालः कोकम् आश्वासयन् अपरवक्त्रमुच्चैः अपठत्,—

"विहग! कुरु दृढं मनः स्वयं त्यज शुचमास्स्व विवेकवर्त्मनि।
सह कमलसरोजिनीश्रिया अयति सुमेरुशिरो विरोचनः" ॥ ४ ॥

---

जानाति अनेनेति वा आयुर्वेदः,—वैद्यकशास्त्रमित्यर्थः तस्य, पारं गतः,—पारदृश्वा, अष्टाङ्गायुर्वेदेऽधीती इत्यर्थः। भूभुजा—राज्ञा। प्रकृत्यैव—स्वभावेन एव, अतिपटीयस्या—अतिचतुरया, अतितीक्ष्णयेत्यर्थः, प्रज्ञया—बुद्ध्या, यथावत्—यथायथं, व्याधिस्वरूपाणां—रोगप्रकृतीनां, विज्ञाता—वेत्ता। सास्रः,—अश्रुपूर्णलोचनः, राज्ञः अतिप्रियत्वात्। तूष्णीं—मौनम्। राजसूनुना—हर्षेण। तथ्यं—प्रकृततत्त्वान्तम्। असाधु—अशुभं, दुर्लक्षणमित्यर्थः, अवश्यम्भाविषु गोपनं निष्प्रयोजनम् इत्याशयः। श्वः,—अनागतेऽह्नि, परदिने इत्यर्थः, आगामिनि दिने इति यावत्, ("अनागतेऽह्नि श्वः" इत्यमरः) यथा-ऽवस्थितं—प्रकृतावस्थामित्यर्थः, आवेदयितास्मि—कथयितास्मि। [ लुटि रूपम् ]।

(११३) अन्तरे—अवसरे। भवनेति।—भवनकमलिनीपालः,—कमलं—जलम् अस्यामस्तीति कमलिनी—पुष्करिणी, ("सलिलं कमलं जलम्" इत्यमरः) भवने—गृहे, या कमलिनी—पुष्करिणी, तां पालयति—रक्षति इति, गृहसरसीरक्षकः इत्यर्थः, कोकं—चक्रवाकं, भाविविच्छेदविधुरमिति भावः, ("कोकश्चक्रश्चक्रवाकः" इत्यमरः) आश्वासयन्—प्रबोधयन् सान्त्वयन् वा, अपरवक्त्रं—छन्दोविशेषम्. "अयुजि न-न-र-ला गुरुः सम तदपरवक्त्रमिदं न-जौ ज-रौ" इत्युक्तलक्षणं, तन्निबद्धश्लोकमिति यावत्।

कोकमुद्दिश्य यदृच्छया पठितेनानेन श्लोकेन राज्ञः आशु-विनाशं सूचयन्नाह, विहगेति।—विहग!—हे पक्षिन्! चक्रवाक! इति यावत्, त्वं स्वयम्—आत्मना, मनः,—चित्तं, दृढं—स्थिरं, धीरमिति यावत्, कुरु—विधेहि, शुचं—शोकं, भाविप्रिया-वियोगजमिति भावः, त्यज—मुञ्च, विवेकवर्त्मनि—ज्ञानमार्गे, संसारसुखस्य क्षण-भङ्गुरत्वप्रदर्शिनि इति भावः, आस्स्व—तिष्ठ, विचरेत्यर्थः; विरोचनः,—सूर्यः, ("सूर-

( ११४ ) तच्च आकर्ण्य वाङ्मित्तज्ञः पितरि सुतरां जीविताशां शिथिलीचकार। गतेषु च भिषक्षु क्षतधृतिः क्षपामुखे क्षितिपालसमीपम् एव पुनः आरुरोह धवलं गृहम्। (११५)तत्र च,—"दाहो महान्, आहर हारान् हरिणि !, मणिदर्पणान् मे देहि देहि वैदेहि !, हिमलवैर्लिम्प ललाटं लीलावति !, घन॰

सूर्य्यार्य्यमादित्य···। चित्रभानुर्विरोचनः॥" इत्यमरः) कमलसरोजिनीश्रिया—कमलयुक्ता सरोजिनी—पद्मपुष्पसमन्विता पद्मिनी, पद्मलतेत्यर्थः, तस्याः श्रीः,—शोभा तया, सह—सार्द्धं, सुमेरोः,—कनकाचलस्य, शिरः,—शृङ्गं, श्रयति—अवलम्बते, अस्तमेतीति भावः, विधातुर्नियोगोऽयं यत्, प्रतिदिनं सूर्य्यस्य उदयास्तमने स्याताम्, उदये युष्माकं सम्मेलनात् सुखम्, अस्तमने च वियोगदुःखं, तदत्र नियते अपरिहार्य्ये च विषये त्वया शोकं परिहृत्य धैर्य्यमवलम्ब्यतामिति निष्कर्षः। तेजस्विनामपि पतनं नियतमेव इति सम्भवद्वस्तुनः बिम्बानुबिम्बत्वेन बोधनात् निदर्शनाऽलङ्कृतिः; अपि च राज्ञः प्रभाकरवर्द्धनस्य सूर्य्यतुल्यस्य राजमहिष्या सह सुमेरुशिरोरूपस्वर्गप्राप्तिः अचिरभाविनी इति अवश्यम्भाविनि विषये कुमारेण त्वया धैर्य्यावलम्बनमेव कर्त्तव्यमिति प्रस्तुतस्य, अप्रस्तुतेन विहगसमाश्वासनरूपेण वस्तुना प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः, समाश्रयस्य सम्बन्धभेदादेव भेदेन अभेदाध्यवसायरूपातिशयोक्तिमूलकसहोक्त्यलङ्कारश्च इत्येतेषामङ्गाङ्गिभावेन संस्थितेः सङ्करः। अपरवक्त्रं छन्दः॥४॥

( ११४ ) तत्—पठितश्लोकम्। वाङ्मित्तज्ञः,—वाचः,—वाक्यस्य, निमित्तं—शुभाशुभलक्षणं जानातीति तथोक्तः। सुतरां—यतो वाङ्मित्तज्ञः अत एवेत्यर्थः, कथितवाक्यस्य लोकपालान्तर्द्धानसूचकत्वादिति भावः। शिथिलीचकार—मन्दीचकार। भिषक्षु—वैद्येषु। क्षतधृतिः,—विच्युतधैर्य्यः, आत्मवर्गाणां वियोगाशङ्कायाः तथाभवनस्य नियतत्वात् इति भावः। क्षपामुखे—रजनीमुखे। क्षितिपालसमीपं—राजान्तिकम्। [ "आरुरोह धवलं गृहम्" इत्यत्र "आरुरोह" इत्येतावन्मात्र एव पाठः पुस्तकान्तरे ]।

( ११५ ) "तत्र च" इत्यस्य "जागरदेव निशामनैषीत्" इत्युत्तरेणान्वयः। तत्र—क्षितिपालसमीपे धवलगृहे। आहर—आनय, अङ्गेषु अर्पय इत्यर्थः। हरिणि !—तदाख्यायाः परिचारिकायाः सम्बोधनम्; एवमुत्तरत्र। हिमलवैः,—तुषारलेशैः, "वरफ" इति वङ्गभाषया प्रसिद्धैः घनीभूततुषारखण्डैरित्यर्थः, चन्दनविन्दुभिरिति वा, ("हिमं तुषार-मलयोद्भवयोः स्यान्नपुंसकम्" इति मेदिनी)। लिम्प

सारचोदधूलीर्निधेहि धवलाचि !, निचिप चक्षुषि चन्द्रकान्तं कान्तिमति !, कपोले कलय कुवलयं कलावति !, चन्दनचर्चां रचय चारुमति !, पाटय पटमारुतं पाटलिके !, मन्दय दाहम् इन्दुमति ! अरविन्दैः, जनय जलार्द्रया मुदं मदिरावति !, समुपानय मृणालानि मालति !, तरलय तालवृन्तम् आवन्तिके !, (११६) मूर्द्धानं धावमानं बधान बन्धुमति !, कन्धरां धारय धारणिके !, उरसि सशीकरं करं कुरु कुरङ्गवति !, संवाहय बाहू वलाहिके !, पीड़य पादौ पद्मावति !, गृहाण गाढ़मङ्गम् अनङ्गसेने !, का वेला विलासवति ! नैति निद्रा, कथाः कथय कुमुद्वति !" इत्येवंप्रायान् पितुरालापान् अनवरतम् आकर्णयन् दूयमानहृदयो दुःखदीर्घां जाग्रदेव निशाम् अनैषीत्।

—लिप्तं कुरु। घनेति।—घनसारस्य—कर्पूरस्य, ("अथ कर्पूरमस्त्रियाम्। घनसारः···॥" इत्यमरः) चोदाः,—चूर्णानीव, धूलयः,—पांशवः ताः, निधेहि—अर्पय। चन्द्रकान्तं—तदाख्यमणिशिलाविशेषं, तस्य शीतलत्वात्। कपोले—गण्डदेशे, कलय—निधेहि, कुवलयं—नीलोत्पलम्। चन्दनचर्चां—चन्दनलेपम्। पाटय—सञ्चालय इत्यर्थः, यद्वा—पाटय—निवारय इत्यर्थः. मा कुरु इति यावत्, पटमारुतं—"टानापाखा" इति वङ्गभाषया प्रसिद्धं वस्त्रव्यजनम्। मन्दय—ह्रासय। अरविन्दैः,—पद्मैः, पद्मपत्रैरिति यावत्। जलार्द्रया—जलेनार्द्रा तया, जलयुक्ततालवृन्तेन इत्यर्थः, ("धुवित्रं तालवृन्तं स्यात् तद्वदुत्क्षेपणञ्च तत्। जलेनार्द्रं जलार्द्रा स्यात्" इति वैजयन्ती) मुदं—प्रीतिं, दाहशान्त्या इति भावः। समुपानय—समाहर, ["समुपानय" इत्यत्र "समुपनय" इति पाठान्तरम्]। तरलय—सञ्चालय।

(११६) मूर्द्धानं—मस्तकं, धावमानं—लुठन्तं, यातनाऽतिशयात् इतस्ततः सञ्चलन्तमित्यर्थः, बधान—स्थगय, धारयेत्यर्थः। कन्धरां—ग्रीवाम्। उरसि—वक्षसि, सशीकरं—साम्बुकणं, जलार्द्रमित्यर्थः, कुरु—स्थापयेत्यर्थः। संवाहय—परामृश, मर्द्दय इति वा। पीड़य—संवाहय। गाढ़ं—दृढं यथा तथा, अङ्गं—हस्तपदाद्यवयवम्। का वेला—कियान् समयः, बहुक्षणमित्यर्थः, कियन्मात्रावशिष्टा क्लेशनिशा इत्यर्थो वा, व्याधीनां रात्रावेव विशेषप्रकोपात् तस्याः दुष्पारत्वप्रतीतेः साहजिकत्वादिति भावः। एति—आगच्छति। कथाः कथय—मया सह आभाषणानि कुरु इत्यर्थः। एवंप्रायान्

(११७) उषसि च अवतीर्य्य राजद्वारदेशोपसर्पिणा परिवर्द्धकेन उपस्थापितेऽपि तुरङ्गे चरणाभ्यामेव आजगाम स्वमन्दिरम्। तत्र च (११८) त्वरमाणो भ्रातुः आगमनार्थम् उपर्य्युपरि क्षिप्रपातिनो दीर्घाध्वगान् प्रजविनश्च उष्ट्रपालान् प्राहिणोत्। प्रक्षालितवदनश्च परिजनोपनीतमपि प्रतिकर्म न अग्रहीत्। (११९) अग्रतः स्थितानां राजपुत्त्रयूनां विमनसां "रसायनो रसायनः" इति जल्पितम् अव्यक्तम् अश्रौषीत्। पर्य्यपृच्छच्च तान्,—"भद्राः! किं रसायनः?" इति। पृष्टाश्च ते

---

—उत्क्रान्तपशुविष्ठान्, यातनासूचकानिति भावः। अनवरतं—निरन्तरम्, आकर्णयन्—शृण्वन्, दूयमानहृदयः,—तप्यमानचित्तः। दुःखदीर्घां—दुःखेन—क्लेशेनेति यावत्, दीर्घाम्—आयतां, दीर्घवत् प्रतीयमानामित्यर्थः। अनैषीत्—अतिवाहयामास।

(११७) उषसि—प्रभाते, अवतीर्य्य—अवरुह्य, धवलगृहादिति शेषः, राजेति।—राज्ञः द्वारदेशे—राजाधिष्ठितधवलगृहद्वारि, उपसर्पति—उपतिष्ठते इति तथोक्तेन, परिवर्द्धकेन—तदाख्येन अश्वपालेन, उपस्थापिते—आनीते, हर्षस्य आरोहणार्थमिति भावः।

(११८) त्वरमाणः,—सत्वरो भवन्। भ्रातुः,—राज्यवर्द्धनस्य। उपर्य्युपरि—निरन्तरं, चर्णोर्द्धमित्यर्थः; [ अत्र "उभसर्व्वतसोः—" इत्यादिना न द्वितीया, "उपर्य्यध्यधसः सामीप्ये" (८।१।७ पा०) इत्युपर्य्यादिशब्दानां सामीप्ये द्वित्वविधानात् तदर्थे द्योत्ये द्वितीया, इह न तथा प्राप्तिरिति सङ्क्षेपः ] क्षिप्रपातिनः,—द्रुतगामिनः, दीर्घाध्वगान्—दीर्घं—बहुविस्तृतम्, अध्वानं—मार्गं, गच्छन्ति—गन्तुं शक्नुवन्तीत्यर्थः तथोक्तान्, प्रजविनः,—प्रकृष्टवेगशालिनः, उष्ट्रपालान्—उष्ट्ररक्षकान्, उष्ट्रारोहिणो दूतानिति यावत्, उष्ट्राणां द्रुततया दूराध्वगमने सामर्थ्यातिशयादिति भावः, ["अनभिहिते" (२।३।१ पा०) इत्यधिकृत्य "कर्म्मणि—" (२।३।२ पा०) इत्यादिना द्वितीया] प्राहिणोत्—प्रेषयामास। प्रतिकर्म्म—प्रसाधनम्, ("आकल्प-वेशौ नेपथ्यं प्रतिकर्म्म प्रसाधनम्" इत्यमरः) पितृविच्छेदाशङ्कया विमनस्कत्वात् इति भावः।

(११९) अग्रतः,—पुरतः, स्थितानां—दण्डायमानानां, राजपुत्त्रयूनां—तरुणानां राजसुतानां, विमनसाम्—उद्भ्रान्तचेतसां, दुःखातिशयादिति भावः। जल्पितं—भाषितम्, अव्यक्तम्—अस्पष्टम्। भद्राः!—साधवः! सुचरिताः! इत्यर्थः, ("भद्रः

सर्वे समम् एव तूष्णीम्बभूवुः। भूयो भूयश्च (१२०) अनुबध्यमाना दुःखेन कथङ्कथमपि आचचक्षिरे,—"देव! पावकं प्रविष्टः" इति। तच्च श्रुत्वा (१२१) प्लुष्ट इव अन्तस्तापेन सद्यो विवर्णताम् अगात्। उत्पाट्यमानमिव च न शशाक शोकान्धं धारयितुं हृदयम्। आसीच्च अस्य चेतसि,—"कामं स्वयं न भवति, न तु श्रावयति अप्रियं वचनम् अरतिकरम् इतर इव अभिजातो जनः। (१२२) कृच्छ्रे च यथा अनेन अनुष्ठितम्, उज्ज्वलीकृतम् अधिकतरं ज्वलनप्रवेशेन कल्याणप्रकृति कार्त्तस्वरमिव कौल-

---

शिवे खञ्जरीटे…। त्रिषु श्रेष्ठे च साधौ स्यात्…॥" इति मेदिनी)। सममेव—तुल्यकालमेव, युगपदेवेत्यर्थः, तूष्णीम्बभूवुः,—मौनिनो जाताः, किंवक्तव्यविमुग्ध-चेतना आसन् इति भावः।

(१२०) अनुबध्यमानाः,—अनुरुध्यमानाः। कथङ्कथमपि—केनापि प्रकारेण, अतिकृच्छ्रेणेत्यर्थः, आचचक्षिरे—ऊचुः। पावकम्—अग्निं, प्रविष्टः, रसायन इति शेषः, राज्ञा सुतनिर्विशेषं लालितेन तेन वैद्यकुमारेण राज्ञि प्रीतिबाहुल्यात् सम्भावितत‍द्वियोगशोकं सोढुमशक्नुवता, पूर्व्वप्रतिश्रुतिमनुसृत्य कुमारहर्षाय अप्रियसत्यम् आवेदयितुमसमर्थतया वा प्रागेव अग्निप्रवेशोऽकारि इति बोध्यम्।

(१२१) प्लुष्टः,—दग्धः, अन्तस्तापेन—मनःसन्तापेन, सद्यः,—तत्क्षणमेव, विवर्णतां—मलिनतां, कृष्णवर्णतामित्यर्थः, अगात्—प्रापत्। उत्पाट्यमानमिव—उच्छिद्यमानमिव। धारयितुं—स्थिरीकर्त्तुम्। कामम्—इष्टं, वरमित्यर्थः, ("कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सितम्"इत्यमरः) स्वयम्—आत्मना,न भवति—न जीवति। अरतिकरम्—असन्तोष-करम्। इतर इव—नीच इव, अभिजातः,—कुलीनः, सत्कुलजातः इत्यर्थः, पण्डितो वा, ("अभिजातः कुलीने स्यात् न्याय्य-पण्डितयोरपि" इति मेदिनी) कुलीनः पण्डितो वा स्वजीवनविसर्ज्जनमपि इष्टत्वेन स्वीकरोति, किन्तु परपीड़ाकरं तथ्यमपि अप्रियं वचः न कथयति,"सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्" इति नीतिस्मरणादिति भावः।

(१२२) कृच्छ्रे—क्लेशे, क्लेशेनापि उच्चारयितुमशक्ये ईदृगरतिकराप्रियसत्य-कथनरूपे वाक्यसङ्कटे इत्यर्थः, अनेन—रसायनेन, यथा—यत्, अग्निप्रवेशरूपं यत् कार्य्यमित्यथः, अनुष्ठितम्—आचरितम्; अत्र "एतेन" इति पदमूहनीयम्; एतेन ज्वलनप्रवेशेन अग्निप्रवेशेन करणेन कल्याणप्रकृति—सौम्यस्वभावं सृदुस्वभाव ञ्च,

युत्तमस्य" इति। पुनश्च अचिन्तयत्,—"समुचितम् एव अथवा स्नेहस्य इदम्; किमस्य तातो न तातः? किंवा अम्बा न जननी? वयं न भ्रातरः? (१२३) अन्यस्मिन्नपि तावत् स्वामिनि दुर्लभीभवति भवन्ति असवो म्रियमाणा व्रीडितवो लोके, किमुत अमृतमये ऽनुजीविनां निर्व्याजबान्धवे अवन्ध्यप्रसादे सुगृहीत-नाम्नि ताते? सम्प्रति साम्प्रतम् आचरितमनेन आत्मानं

---

कार्त्तस्वरमिव—सुवर्णमिव, विमलमुज्ज्वलञ्चेत्यर्थः, ("स्वर्णं सुवर्णं···। रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्॥" इत्यमरः) अस्य—आत्मनः, रसायनस्येत्यर्थः, कौलपुत्त्रं—कुलपुत्त्र,—कुलीनतनयः, तस्य भावः, सत्कुलसम्भूतत्वमिति फलितम्। उज्ज्वलीकृतं—सुवर्णसमसमुज्ज्वलगुणाश्रयं भास्वरीकृतमित्यर्थः, उदात्ताचारवत्त्वात् पूतीकृतमिति भावः। समुचितं—सुसदृशम्। इदम्—अग्निप्रवेशरूपानुष्ठानम्। तातः,—पिता, अस्माकमिति शेषः, अस्य—रसायनस्य, तातो न किम्? तात एवेत्यर्थः। अम्बा—माता, अस्माकमिति भावः, किं न जननी? अस्येति शेषः जनन्येव, आ-बाल्यात् आत्मजनिर्विशेषेण पालनादिति भावः। वयं न भ्रातरः? किम् इति शेषः, भ्रातर एव, पितृभ्यामुभाभ्यां पालनाद्युपचारवत्त्वे वर्द्धना इति भावः, अत एवानेन पितृवियोगशङ्कया यत् कृतं तत् युक्तमेवेति हृदयम्।

(१२३) अन्यस्मिन्—इतरस्मिन्,मत्पितुरिति शेषः, यादृशि तादृशि इति भावः, स्वामिनि—प्रभौ, दुर्लभीभवति—दुष्प्रापे सति, मृते सतीत्यर्थः. असवः,—प्राणाः, ("पुंसि भूम्न्यसवः प्राणाः" इत्यमरः) म्रियमाणाः,—त्यज्यमाणा इत्यर्थः, व्रीडितवः,—लज्जाकराः. यथातथाविधस्यापि स्वामिनः वियोगे प्राणधारणस्य अनौचित्यात् इति भावः, लोके—जगति। किमुत—किं पुनः, अमृतमये—सुधामये, निरतिशयवात्सल्यवतीत्यर्थः, अनुजीविनाम्—आश्रितानां, निर्व्याजबान्धवे—अकापट्यसुहृदि, अवन्ध्यप्रसादे—सफलानुग्रहे, आत्मनिर्विशेषेण पोषणादितः इति भावः, सुगृहीतनाम्नि—प्रातःस्मरणीये, "स सुगृहीतनामा स्यात् यः प्रातः स्मर्य्यते बुधैः" इति लक्षणात्। सम्प्रति—इदानीं, साम्प्रतं—युक्तं, ("युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः) आचरितम्—अनुष्ठितम्, अनेन—रसायनेन, आत्मानं—स्वदेहं, दहता—भस्मीकुर्व्वता।

(१२४) पाकल्पं—प्रलयकालपर्य्यन्तम्, अवस्थितस्य—वर्त्तमानस्य, श्रेयसः,—

दहता। (१२४) किं वा अस्य आकल्पम् अवस्थितस्य श्रेयसो यशोमयस्य दह्यते? (१२५) पतितः स केवलं दहने, दग्धास्तु वयम्। धन्यः खलु असौ अग्रणीः पुण्यभाजाम्। अपुण्यभाक् तु इदमेव राजकुलं, कुलपुत्रेण यत् तादृशा वियुक्तम्। अपि च मम्नापि कः खलु एतेषां प्राणानां (१२६) कार्य्यातिभारः, कृत्यशेषो वा? का वा व्यापृतता, येन न अद्यापि निष्ठुराः प्राणाः प्रतिष्ठन्ते? को वा अन्तरायो हृदयस्य, येन सहस्रधा न दलति?" इति। दुःखार्त्तश्च न जगाम राजसद्म। समुत्ससर्ज्ज च सर्व्वकार्य्याणि। (१२७) शयनीये निपत्य उत्तरीयवाससा सोत्तमाङ्गम् आत्मानम् अवगुण्ठ्य अतिष्ठत्।

---

प्रतिस्थितिशीलस्य। यशोमयस्य—पूर्णयशसः, यशोरूपस्य देहस्य वा, किं दह्यते?—किं भस्मीक्रियते? अनलेनेति शेषः, "चलच्चित्तं चलद्वित्तं चलज्जीवनयौवनम्। चलाचलमिदं सर्व्वं कीर्त्तिर्यस्य स जीवति॥" इति स्मरणात्, दग्धीभूतनश्वरदेहोऽपि सुकृतलब्धेनाविनश्वरेण यशःशरीरेण आकल्पजीवी अयमिति भावः। इहापि-फलस्य न्यूनेन विनिमयात् चमत्कारातिशयनिबन्धना परिवृत्तिरलङ्कारः।

(१२५) सः,—रसायनः, दहने—अग्नौ, केवलं पतितः,—प्रविष्ट एव, न तु दग्धः, अविनाशियशोलाभादिति भावः, वयन्तु दग्धाः,—वयमेव भस्मीभूताः, तद्दुःखेन, पितृजीवननाशशोकेन चेति भावः। असौ—रसायनः। अग्रणीः,—अग्रगण्यः, पितृतुल्यस्य राज्ञः शोकभोगावसराभावात्, प्रभोः जीवनरक्षणे असामर्थ्य-तया न किञ्चित्करत्वबोधेन राजभक्त्या स्वजीवनपरित्यागाच्चेति भावः। तादृशा—तथाविधेन, कुलपुत्रेण—सत्कुलजातेन, वियुक्तम्—विरहितम्।

(१२६) कार्य्यातिभारः,—कार्य्यगौरवम्। कृत्यशेषः,—करणीयावशेषः, अस्ति इति शेषः। व्यापृतता—कार्य्यनियोगः, कार्य्यासक्तता इति यावत्। प्रतिष्ठन्ते—अपगच्छन्ति, प्रस्थानं कुर्व्वन्तीत्यर्थः; यद्वा,—प्रतिष्ठन्ते—अग्रेसराः भवन्ति, ("पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः" इत्यमरः) प्रतिष्ठां कुर्व्वते वा इत्यर्थः, तथा विधानाचरणे तत्लाभात् इति भावः। अन्तरायः—विघ्नः। समुत्ससर्ज्ज—परितत्याज, निरुत्साहत्वादिति भावः।

(१२७) शयनीये—शय्यायां, ("शय्यायां शयनीयवत्" इत्यमरः)। उत्त

(१२८) इत्यम्भूते च देवे हर्षे, राजनि च तदवस्थे, सर्वस्य लोकस्य कपोलेषु कीलिता इव कराः, लोचनेषु (१२९) लेप्यमय्य इव अश्रुसृतयः, नासाग्रेषु ग्रथिता इव दृष्टयः, कर्णेषु (१३०) उत्कीर्णा इव रुदितध्वनयः, जिह्वासु (१३१) सहजानि इव हा! कष्टानि, लपनेषु पल्लवितानि इव श्वसितानि —धरेषु (१३२) लिखितानि इव परिदेवितपदानि, हृदयेषु निधानीकृतानि इव दुःखानि अभवन्। (१३३) उष्णाश्रुदाह-

---

रीयवाससा—उत्तरीयवसनेन, सोत्तमाङ्गम्—आमस्तकमित्यर्थः, आत्मेन—शरीरम्, ("आत्मा पुंसि स्वभावे च प्रयत्न-मनसोरपि। धृतावपि मनीषायां शरीर-ब्रह्मणोरपि॥" इति मेदिनी) अवगुण्ठ्य—आच्छाद्य।

(१२८) इत्यम्भूते—ईदृगवस्थे, राजनि—प्रभाकरवर्द्धने। तदवस्थे—संशयितजीवने इत्यर्थः। कपोलेषु—गण्डदेशेषु, कराः—हस्ताः, कीलिता इव—कीलप्रोथिता इव, सर्वे लोका कपोलनिहितकराः सततं चिन्तामग्ना जाता इति भावः।

(१२९) लेप्यमय्य इव—लेपाय—लेपनकर्म्मणे हितं, लेप्यं, तन्मय्य इव, लिप्ता इवेत्यर्थः, अविच्छिन्ना इति भावः, अश्रुसृतयः—अश्रुपाताः, सदैव सर्वे रुरुदुः इति भावः। ग्रथिता इव—निबद्धा इव, दृष्टयः—नयनानि, इतः परं किं भविष्यति इत्यादिध्यानपरायणा बभूवुः इति भावः।

(१३०) उत्कीर्णा इव—उल्लिखिता इव, सततसन्निहिता इति भावः, रुदितध्वनयः—रोदननिनादाः, अनवरतं रोदनध्वनिरश्रूयत इति भावः।

(१३१) सहजानि इव—स्वाभाविकानि इव, हा! कष्टानि—हा कष्ट, किमेतत्? इत्येवंवचनानीत्यर्थः, सर्वे शोकार्त्ताः अनवरतमेव हा! कष्टम् इति ऊचुः इति भावः। लपनेषु—मुखेषु, ("लपनं मुखम्" इत्यमरः) पल्लवितानीव—सञ्जातपल्लवानीव, विस्तारं गतानीत्यर्थः, श्वसितानि—निश्वासाः, सदैव प्रबलशोकावेगेन दीर्घनिश्वासं तत्यजुरित्यर्थः।

(१३२) लिखितानि इव—चित्रितानि इव, परिदेवितपदानि—विलापाक्षराणि, ("विलापः परिदेवनम्" इत्यमरः) लिखितपदानि यथा कदाऽपि न विलुप्तीभवन्ति, तथा विलापाक्षराण्यपि सदैव प्रावर्त्तन्त इत्यर्थः। निधानीकृतानि इव—निहितानि इव, आस्पदीकृतानीवेत्यर्थः, सर्वे दुःखमथितहृदया जाता इति भावः।

(१३३) उष्णेति।—उष्णैः,—तप्तैः, अश्रुभिः,—नेत्रजलैः, दाहात्—भस्मी-

भीता इव न अभजत नेत्रोदराणि निद्रा। (१३४) निश्वासवातविधूता इव व्यलीयन्त हासाः। (१३५) निरवशेषदग्धा इव च सल्लापेन न प्रावर्त्तत वाणी। कथासु अपि न अश्रूयन्त परिहासाः। क्व अगमन्निति न अज्ञायन्त गीतगोष्ठ्यः। (१३६) जन्मान्तरानीतानि इव न असम्यन्त लास्यानि। स्वप्नेऽपि न अदृश्यन्त (१३७) प्रसाधनानि। वार्त्ताऽपि न अलभ्यत उपभोगानाम्। नामापि न अकीर्त्त्यत आहारस्य। (१३८) खपुष्पप्रतिमानि आसन् आपानमण्डलानि। लोका-

---

भवनात् भीता इव—त्रस्ता इव, नेत्रोदराणि—नयनान्तराणि, न अभजत—न सिषेवे, सदैवाशङ्कया जागराम्बभूवुः, रात्रावपि निद्रां न लब्धवन्तः इति भावः।

(१३४) निश्वासेति।—निश्वासवातेन—नासामुखनिःसृतेन प्राणवायुना, विधूता इव—सञ्चालिता इव, निरस्ता इवेत्यर्थः, व्यलीयन्त—विलयं गता इत्यर्थः, केऽपि न जहसुः इति भावः।

(१३५) निरवशेषदग्धा इव—निःशेषभस्मीकृता इव, प्रावर्त्तत—उदचरदित्यर्थः, वाणी—वाक्, सदैव सर्वे मौनिनः अतिष्ठन् इति भावः। परिहासाः,—नर्महसितानि, व्यवहारतः ते दूरे सन्तु, परिहास इति पदमपि केऽपि न उच्चरितवन्तः इति भावः। क्व—कुत्र। अज्ञायन्त—अबुध्यन्त। गीतगोष्ठ्यः,—सङ्गीतसभाः, सङ्गीतालापाः वा, सर्वैः व्यथितान्तरत्वात् गानानि परित्यक्तानीति भावः।

(१३६) जन्मान्तरानीतानि इव—जन्मान्तरप्राप्तानि इव, [ "जन्मान्तरानीतानि" इत्यत्र "जन्मान्तरातीतानि" इति पाठे,—जन्मान्तराय—पुनर्जन्मने, अतीतानि—गतानि, मृतानीत्यर्थः ] लास्यानि—नर्त्तनानि, राजभवने तस्मिन् प्राक् कदाऽपि नर्त्तनादिकमभवत् इत्यस्यापि संस्कारस्य विच्छेभावेन न स्मर्त्तुमशक्नुवन् तदत्या इति भावः।

(१३७) प्रसाधनानि—अलङ्काराः। वार्त्ताऽपि—प्रवृत्तिरपि, कथाऽपीत्यर्थः, उपभोगानां—सम्भोगानां, स्रक्चन्दनवनिताविलासादीनामिति यावत्। अकीर्त्त्यत—अकथ्यत, अश्रूयतेति यावत्, किमुत आहारः इति भावः।

(१३८) खपुष्पप्रतिमानि—आकाशकुसुमनिभानि, अलीकानि इत्यर्थः। आपानमण्डलानि—पानगोष्ठीसमूहाः, ("आपानं पानगोष्ठिका" इत्यमरः) वयस्यप्रेयस्यादिभिः सह मद्यपानार्थं समवेतनागरिकाणां समाजाः सपदि अन्तर्हिता इति

न्तरम् इव अनीयन्त वन्दिवाचः। युगान्तर इव अवर्त्तन्त निर्वृतयः। (१३९) पुनरिव अदह्यत शोकाग्निना मकरकेतुः। दिवाऽपि न अमुच्यन्त शयनानि। (१४०) शनैः शनैश्च महापुरुषविनिपातपिशुनाः समं समन्तात् समुदभवन् भुवने भूयांसो भूपतेः अभावाय भयम् उत्पादयन्तो (१४१) भूतानां महोत्पाताः।

---

भावः। लोकान्तरमिव—परलोकमिव, राजपुरे तदुच्चारणाभावादिति भावः, अनीयन्त—प्राप्यन्त, महाराजमृत्युसूचयता दुर्दैवेनेति भावः। वन्दिवाचः,—वैतालिकस्तुतयः। युगान्तर इव—युगावसान इव, कल्पान्त इवेति यावत्, अवर्त्तन्त—अतिष्ठन्, निर्वृतयः,—सुखानि, शान्तय इत्यर्थः, निस्तब्धता इति यावत्, प्रलयावसाने जीवासद्भावात् यथा सर्व्वत्र निस्तब्धत्वेन महाशान्तिः विराजते, तथा सर्वेषां मूकीभावात् तत्रापीति भावः, ("निर्वृतिः स्वस्थितावस्तं गमने च सुखेऽस्त्रियाम्" इति मेदिनी)।

(१३९) मकरकेतुः,—कामः, पुनरिव—भूय इव, हरकोपाग्निना प्राक् दग्धोऽपीति भावः, अदह्यत—दग्धोऽभूत्, सर्व्वत्रैव तत्प्रसङ्गराहित्यादिति भावः। अमुच्यन्त—त्यक्तानि, दुश्चिन्ताऽवसादाधिक्यादिति भावः, शयनानि—शय्याः।

(१४०) शनैः शनैः,—मन्दं मन्दम्, अल्पशः इत्यर्थः, महापुरुषेति।—महापुरुषस्य—महाजनस्य, विनिपातः,—विध्वंसनं, तस्य पिशुनाः,—सूचकाः, ("पिशुनौ खल-सूचकौ" इत्यमरः) समं—युगपत्, समन्तात्—चतुर्दिक्षु, समुदभवन्—प्रादुर्भूताः। भूयांसः,—बहवः, अभावाय—विनाशाय, तज्ज्ञापयितुमित्यर्थः, ["क्रियार्थोपपदस्य—" (२।३।१४ पा०) इत्यादिना चतुर्थी]। उत्पादयन्तः,—जनयन्तः।

(१४१) भूतानां—प्राणिनां, महोत्पाताः,—महान्तः,—प्रबलाः, उत्पाताः,—प्रकृतिविपर्य्यासरूपाः भूकम्पादयः; तदुक्तं नारदसंहितायाम्,—"उत्पाता विविधा लोके दिव्यभौमान्तरीक्षजाः। देवतौघाः प्रनृत्यन्ति पतन्ति प्रज्वलन्ति च॥ मुहुर्गायन्ति रोदन्ति प्रस्विद्यन्ति हसन्ति वा। वमन्त्यग्निं तथा धूमं स्नेहं रक्तं पयो जलम्॥ अधोमुखा प्रतिष्ठन्ति स्थानात् स्थानं व्रजन्ति वा। एवमाद्याश्च दृश्यन्ते विकाराः प्रतिमादिषु॥ गन्धर्व्वनगरञ्चैव दिवा नक्षत्रदर्शनम्। महोल्कापातनं काष्ठं तृणां रक्तप्रवर्षणम्॥ गान्धवदाहो दिग्दाहो भूमिकम्पो दिवानिशि। अनग्नौ च स्फुलिङ्गाः स्युर्ज्वलनश्च विनेन्धनम्॥ निशीन्द्रचापसण्डूकशिखरं श्वेतवायसम्। प्रतिसूर्य्याश्चतस्रषु स्युर्दिक्षु युगपद्रवेः॥ जम्बूकी ग्रामसंवेशः केतूनाञ्च प्रदर्शनम्। काकानामाकुलं रात्रौ कपोतानां दिवा यदि॥" इति।

तथा हि (१४२) दोलायमानसकलकुलाचलचक्रवाला पत्या साकं गन्तुकामा इव प्रथमम् अचलत् धरित्री। (१४३) धान्वन्तरैः इव अन्तरे तस्मिन् स्फरन्तः परस्परास्फालनवाचालवीचयो विजुघूर्णिरेऽर्णवाः। (१४४) भूभृदभावभीतानां विततशिखाकलापविकटकुटिलाः केशपाशा इव ऊर्ध्वीबभूवुः

(१४२) दोलायमानेति।—दोलायमानं—कम्पमानं, सकलानां—सर्वेषां, कुलाचलानां—"महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥" इत्युक्तानां, चक्रवालं—मण्डलं यस्यां तथाभूता, ("चक्रवालन्तु मण्डलम्" इत्यमरः) धरित्री—पृथिवी, पत्या—प्रभाकरवर्द्धनेन राज्ञेति भावः, साकं—सह, अचलत्—अकम्पत, पतिव्रतायाः पत्न्याः पतिमनुगमनस्य शास्त्रानुमोदितत्वेन तदाचारप्रतिपालनार्थमिति भावः, मरणसहोत्पातरूपो भूमिकम्पः प्रादुरासीदिति हृदयम्।

(१४३) धान्वन्तरैः,—धन्वन्तरिरेव धान्वन्तरिः,—प्रसिद्धः स्वर्वैद्यविशेषः तस्य [कर्मणि षष्ठी] धन्वन्तरिमित्यर्थः, ["धान्वन्तरैः" इत्यत्र "धन्वन्तरेः" इति पाठेऽपि स एवार्थः] स्मरन्तः,—यदि इदानीं धन्वन्तरिरब्धावप्यभविष्यत्, तदा राजानमरोगिणम् अकरिष्यदित्येवं चिन्तयन्त इति यावत्, तस्मिन् अन्तरे—अवसरे, परस्परेति।—परस्परस्य—अन्योऽन्यस्य, आस्फालनेन—सङ्घट्टनेन, ताडनेनेत्यर्थः, वागाडम्बरेणेति भावः, वाचालाः,—जल्पन्त इत्यर्थः, [कुत्सितं बहु भाषते इत्यर्थे "आलजाटचौ बहुभाषिणि" (५।२।१२५ पा०) "कुत्सित इति वक्तव्यम्" (वा०) इत्यालच्] वीचयः,—तरङ्गाः येषां ते, अर्णवाः,—समुद्राः, विजुघूर्णिरे—चुक्षुभुः, क्षोभ्याः समुद्रा अपि भूपालनिधनोत्पातमहावातेन क्षुभिताः बभूवुः इति भावः। पुरा धन्वन्तरेः समुद्रगर्भस्थितिः पश्चात् तदुत्थानञ्च पुराणेषु प्रसिद्धम्, तथा च,—"अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः। उदतिष्ठत् महाराज। पुरुषः परमाद्भुतः॥ अमृतापूर्णकलशं बिभ्रत् वलयभूषितः। धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक्॥" इति।

(१४४) भूभृदिति।—भूभृतः,—राज्ञः, अभावात्—भाविविनाशात्, भीताः,—शङ्किताः तासां, राज्ञः दिक्पालांशसम्भूतत्वात् पतिवियोगार्त्तानामिति भावः, ककुभां—दिशां, केशपाशा इव—केशनिचया इव, विततेति।—विततेन—विस्तृतेन, शिखाकलापेन—ज्वालानिचयेन, ["विततशिखाकलाप—" इत्यत्र "विततशिखिकलाप—" इति पाठे,—विततेन—विस्तृतेन, शिखिकलापेन—अग्निसमूहेन, अनल्प

धूमकेतवः ककुभाम्। (१४५) धूमकेतुकरालितदिङ्मुखैः दिक्पालारब्धायुष्कामहोमधूमधूम्रमिव अभवत् भुवनम्। (१४६) भ्रष्टभासि तप्तकालायसकुम्भबभ्रुणि भानुमण्डले भयङ्करकबन्धकायव्याजेन कोऽपि पार्थिवप्राणितार्थी पुरुषोपहारमिव उपजहार। (१४७) ज्वलितपरिवेशमण्डलाभोग-

शिखावत्प्रभानिचयेनेत्यर्थः; अन्यत्र,—शिखिनः,—मयूरस्य, कलापेन—वर्हेण, ("शिखी वह्नौ बलीवर्द्दे……। मयूरे कुक्कुटे……॥" "कलापः संहतौ वर्हे…" इति च मेदिनी) विकटाः,—उत्कटाः, कुटिलाः,—भङ्गिमन्त इत्यर्थः, धूमकेतवः,—उत्पातसूचकाः ग्रहविशेषाः, अग्नयश्च, ऊर्द्धीबभूवुः,—उन्नसुः; उक्तञ्च कालिदासेन,—"उपप्लवाय लोकानां धूमकेतुरिवोत्थितः" इति; भीतानां केशपाशाश्च ऊर्द्धीभवन्ति, अग्नेरपि ऊर्द्ध्वज्वलनं प्रसिद्धम्।

(१४५) धूमकेत्विति।—धूमकेतुभिः,—उत्पातविशेषैः, अग्निभिश्च, ("स्याद्धूमकेतुरुत्पातभेदे वैश्वानरे पुमान्" इति मेदिनी) करालितानि—भीषणीकृतानि, व्याप्तानि च, दिशां—ककुभां, मुखानि यस्य तथोक्तम्, अत एव दिक्पालैरिति।—दिक्पालैः,—इन्द्रादिभिः लोकपालैः, आरब्धस्य—उत्पातशान्तये प्रक्रान्तस्य, आयुष्कामस्य—राज्ञः आयुर्वर्द्धनार्थमभिलषितस्य, होमस्य—दैवयज्ञस्य, धूमैः धूम्रमिव—धूमलमिव, कृष्णलोहितमिवेति यावत्। उत्पातधूमबहुलत्वात् तथोत्प्रेक्षा।

(१४६) भ्रष्टेति।—भ्रष्टाः,—च्युताः, भासः,—दीप्तयः यस्य तथोक्ते, निष्प्रभे इत्यर्थः, धरित्रीपतेः तदानीं भूलोकत्यागोद्योगेन तीव्रशोकोदयात् वैवर्ण्यप्रादुर्भावः इत्याशयः, तप्तेति।—तप्तम्—अग्न्युत्तापेन उष्णं, यत् कालायसं—कृष्णवर्णलौहविशेषः, तस्य कुम्भः,—तन्निर्मितकलस इत्यर्थः, तद्वत् बभ्रु—पिङ्गलं तस्मिन्, भानुमण्डले—सूर्य्यबिम्बे, [अधिकरणे सप्तमी] भयङ्करेति।—भयङ्करः,—भयजनकः, कबन्धकायः,—क्रियायुक्तमपमूर्द्धकलेवरं, सक्रियं छिन्नशिरःशरीरमित्यर्थः, ("कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः) तस्य व्याजेन—मिषेण, कोऽपि, जन इति शेषः, पार्थिवेति।—पार्थिवस्य—राज्ञः, प्राणितं—जीवितं, तस्य अर्थी—तत्काम इत्यर्थः, पुरुषोपहारमिव—नरबलिमिव, उपजहार—उपहृतवान्, पुरुषोपहारेण सूर्य्यदेवम् आराधितवान् इव इत्युत्प्रेक्षा, सूर्य्यमण्डलं निष्प्रभं जातं, तथा तत्र कबन्धाकारश्च समदृश्यत इति भावः।

(१४७) ज्वलितेति।—ज्वलितस्य—प्रदीप्तस्य, परिवेशमण्डलस्य—परिधिमण्डल-

भास्वरो जिघृक्षाजृम्भमाणस्वर्भानुभयात् उपरचिताग्निप्राकार इव प्रत्यदृश्यत श्वेतभानुः। (१४८) अवनिपतिप्रतापप्रसाधिताः प्रथमतरकृतपावकप्रवेशा इव अदह्यन्त अनुरक्ता दिशः। (१४९) स्नुतशोणितशीकरासारारुणिततनुः अनुमरणाय प्रावृतपाटलांशुकपटेव अदृश्यत वसुधावधूः। (१५०) नराधिपविनाश-

---

पस्य, आभोगेन—वेष्टनेन, भास्वरः,—दीप्यमानः, जिघृक्षेति।—जिघृक्षया—ग्रहीतुमिच्छया, ग्रासेच्छयेति यावत्, जृम्भमाणः,—मुखं व्याददत्, यः स्वर्भानुः,—राहुः, ("तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः" इत्यमरः) तस्मात् भयं—त्रासः तस्मात्, उपरचितेति।—उपरचितः,—मण्डलाकारेण कल्पितः, राहुप्रवेशनिवारणार्थमिति भावः, अग्निप्राकारः,—अग्निमयो वरणः येन तथाविध इव, ("प्राकारो वरणः सालः" इत्यमरः) श्वेतभानुः,—सितांशुः, चन्द्र इत्यर्थः, प्रत्यदृश्यत—अलक्ष्यत, सुधांशोः रक्तवर्णपरिवेशस्य जगदमङ्गलसूचकत्वात् इति भावः।

(१४८) अवनीति।—अवनिपतेः,—राज्ञः प्रभाकरवर्द्धनस्य,प्रतापेन—प्रभावेण, कोषदण्डजेन तेजसेति यावत्, ("स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्यमरः) प्रसाधिताः,—आवर्जिताः, अलङ्कृताश्च, प्रथमेति।—प्रथमतरम्—अतिपूर्व्वमित्यर्थः, महाराजस्वर्गारोहणात् पूर्व्वमेवेति भावः, कृतः—अनुष्ठितः, पावके—अग्नौ, प्रवेशः याभिः तथाभूता इव, अदह्यन्त—दग्धा अभवन्, अनुरक्ताः,—वशीभूताः, लोहितवर्णाश्च वा, अनुरागिण्यः कामिन्यश्च, अनुरागिण्यः कामिन्यः यथा पत्युर्मरणं निश्चितं विभाव्य तन्मरणात् पूर्व्वमेव अग्नौ प्रविशन्ति, तथा दिग्वध्वोऽपीति भावः, दिग्दाहोऽभूदिति फलितम्। एतेन दिग्वधूनां स्वीयात्वमुत्प्रेक्षितं, "पतिव्रता स्वीया" इत्यादिलक्षणसमन्वयात् इत्याशयः।

(१४९) स्नुतेति।—स्नुताना—क्षरितानामित्यर्थः, शोणितानां—रक्तानां, शीकरासारेण—बिन्दुधारया, अरुणिता—रञ्जिता, रक्तीकृतेत्यर्थः, तनुः,—कलेवरं यस्याः तथाभूता, वसुधावधूः,—वसुधा—पृथ्वी एव, वधूः,—राजपत्नीति भावः, अनुमरणाय—पत्युर्मरणात् परं मरणाय, सहमरणाय वा, प्रावृतेति।—प्रावृतः,—आच्छादितः, परिहित इति यावत्, पाटलः,—रक्त इति भावः, अंशुकपटः,—वस्त्ररूपमावरणं यया तथाभूता इव, अनुमरणे तादृशवस्त्रपरिधानस्याचारवत्त्वात् इति भावः, भुवनभयङ्करी रक्तवृष्टिः अभूदिति फलितम्।

(१५०) नराधिपेति।—नराधिपस्य—राज्ञः, विनाशेन—मरणेन, भाविना

सम्भ्रमभीतैः लोकपालैः इव कालायसकवाटपुटैः अकालकाल-मेघपटलैः अरुध्यन्त दिग्द्वाराणि। (१५१) प्रेतपतिप्रयाणप्रहताः पटवः पटहा इव आरटन्तो हृदयस्फोटनाः पस्फायिरे निर्घातानां घोरा निर्घोषाः। (१५२) निकटीभवद्यममहिषखुरपुटोद्भूता इव द्युमणिधाम धूसरीचक्रुः क्रमेलककचकपिलाः पांशुवृष्टयः।

इति भाव, यः सम्भ्रमः,—आवेगः, तस्मात् भीताः,—त्रस्ताः तैः, तस्य लोकपालसत्त्व-त्वादिति भावः, लोकपालैः,—इन्द्रादिभिः, कालेति।—कालायसं—कृष्णवर्ण-लौहविशेषः, तस्य कवाट ना पुटानि—आवरणानि तैरिव, कृष्णलौहनिर्मितकवाटपर-म्पराभिरिवेति यावत्, अकालेति।—अकाले—असमये, प्रावृड्व्यतिरिक्ते इत्यर्थः, ये कालमेघाः,—नीलनीरदाः, तेषां पटलानि—वृन्दानि तैः, दिग्द्वाराणि—दिशा द्वार-देशाः, अरुध्यन्त—आच्छाद्यन्त, राज्ञः प्रतापेन लोकपाला निष्कण्टकं स्वं स्वमधिकारं पालयन्ति स्म, इदानीं तन्निधनेन असुराणां प्रादुर्भावात् पुनः स्वाधिकारेषु उपद्रवो भविता इति आशङ्कया कवाटावरणेन तन्निरोधयाञ्चक्रुः इति भावः, अकालमेघो-दयरूपा उत्पाताः प्रादुरासन् इति निष्कर्षः।

(१५१) प्रेतेति।—प्रेतपतेः,—अन्तकस्य, प्रयाणे—यात्रायां, प्रहताः,—ताडिताः, पटवः,—गम्भीररवा इत्यर्थः, पटहा इव—वाद्यभेदा इव आरटन्तः,—नदन्तः, हृदयस्फोटनाः,—हृदयविदारिण इत्यर्थः, निर्घातानां—"यदन्तरीक्षे बलवान् मारुतो मरुताहतः। पतत्यधः स निर्घातो जायते वायु-सम्भवः॥" इत्युक्तलक्षणानां परस्परप्रहतवायुविशेषाणां घोराः,—दारुणाः, निर्घोषाः,—शब्दाः, पस्फायिरे—वव्रधिरे, उदभवन् इत्यर्थः, हृदयकम्पनोत्पादकध्वानोद्गमस्य जगज्जीवदारुणदुःखज्ञापकत्वात् इति भावः।

(१५२) निकटीभवदिति।—निकटीभवन्—समीपमागच्छन्, यमस्य—कृता-न्तस्य, राज्ञः प्राणानामादातुरिति भावः, यो महिषः,—वाहनमित्यर्थः, तस्य खुराणां—शफानां, पुटैः,—युगलैः, उद्भूता इव—उत्क्षिप्ता इव, [ "खुरपुटोद्भूताः" इत्यत्र "खुरपुटोद्गताः" इति पाठे,—खुरपुटेभ्यः उद्भूताः,—सञ्जाताः, उद्गता इत्यर्थः ] क्रमेलकेति।—क्रमेलकस्य—उष्ट्रस्य, ("उष्ट्रे क्रमेलक-मय-महाङ्गाः" इत्यमरः) कचा इव—केशा इव, लोमानि इव इति यावत्, ("कचः केशः शिरोरुहः" इत्यमरः) कपिलाः,—धूसराः, पांशुवृष्टयः,—रजोवर्षणानि, द्युमणेः,—सूर्यस्य, ("सूरसूर्यार्य्य-मादित्य···। द्युमणिस्तरणिर्मित्रः···" इत्यमरः) धाम—स्थानम्, अन्तरीक्षमित्यर्थः,

(१५३) विरसविराविणीनाम् उन्मुखीनां शिखिनो ज्वालाः प्रतीच्छन्त्य इव पतन्तीः उल्काः नभसो ववाशिरे शिवानां राजयः। (१५४) राजधामनि धूमायमानकवरीविभागविभावितविकाराः प्रकीर्णकेशपाशप्रकाशितशोका इव प्राकाशन्त प्रतिमाः कुलदेवतानाम्। (१५५) उपसिंहासनमाकुलं कालरात्रिविधूयमानवृजिन-

धूसरीचक्रु',—धूम्रवर्णीकृतवन्तः, छादयामासुः इति भावः, महापुरुषनिपातरूपघोरविप्लवादिबोधकः पांशुवृष्टिरूपोत्पातः प्रादुरभवदिति निष्कर्ष'।

(१५३) विरसेति।—विरस—कठोर, ["विरस—" इत्यत्र "विसर—" इति पाठे,—विसर—विसरं यथा तथा, उच्चैरित्यर्थः] विरुवन्ति—नदन्तीति तथोक्ताना, कर्कशनिनादिनीनाम् इत्यर्थ, उन्मुखीनाम्—ऊर्द्धमुखीना, शिवाना राजयः,—शृगालवृन्दानि, शिखिनः,—अग्ने, ज्वालाः,—शिखाः, प्रतीच्छन्त्य इव—गृह्णत्य इव, जिघृक्षव इव इति यावत्, तन्निखाया विवृतमुखीना तासा मुखान्तः ज्वलदग्निवत् परिदृश्यमानत्वादिति भाव, नभसः,—आकाशात्, पतन्ती.—भ्रश्यन्तीः, उल्का',—ज्व लन्मूलप्रलम्बदण्डसुन्दराग्राकृतितेजोविशेषान्, "वृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला। पौरुषी च प्रमाणेन उल्का नानाविधा स्मृता॥" इत्युक्तलक्षणाः इत्यर्थ, ववाशिरे—आतवन्ति स्म, तदानीम् उल्कामुख्यः वदनेभ्य. अग्निशिखा उद्गीर्य कठोरं न्यनदन् उल्कापाताश्च अभवन् इति वाक्यार्थः।

(१५४) राजधामनि—राजमन्दिरे, धूमेति।—धूमायमानेन—धूमसुदस्तृजति धूमायमान' तेन, स्नेहाभ्यङ्गाभावात् रूक्षेणेत्यर्थ', कबरीविभागेन, केशनिचयेन इत्यर्थः, विभावित',—प्रकटितः, विकारः,—विकृतिभावः यासा ता', अत एव प्रकीर्णेति।—प्रकीर्णेन—विच्छिन्नेन, समन्तादालुलायितेन इति यावत्, केशपाशेन—कुन्तलकलापेन, प्रकाशित',—प्रकटितः, शोकः,—शुक् याभि ता इव, प्राकाशन्त—प्रराजन्त, शोकार्त्ता इव अलक्ष्यन्त इति भावः, गृहदेवप्रतिमाना स्वयमर्चाप्रसाधनशृङ्गारविसर्द्देन देशतापकरत्वज्ञापनात् इति बोध्यम्।

(१५५) उपसिंहासन—सिंहासनस्य समीपे, कुलदेवतानां राज्ञो वा इति भाव', ["अव्ययं—" (२।१।६ पा०) इत्यादिना सामीप्यार्थेऽव्ययीभावः] आकुलं—चञ्चलं, कालेति।—कालरात्रेः,—सर्वजन्तुमरणोपलक्षितायाः कल्पान्तरात्रेः

वेणीबन्धविभ्रमं बिभ्राणं बभ्राम भ्रामरं पटलम् । (१५६) अटताम् अन्तःपुरस्य उपरि क्षणमपि न शशाम व्याक्रोशी वायसानाम् । (१५७) श्वेतातपत्रमण्डलमध्यात् जीवितमिव राज्यस्य सरसपिशितपिण्डलोहितं चञ्चच्चञ्चुः उच्चैः उच्चखान खण्डं माणिक्यस्य कूजन् जरद्गृध्रः । महोत्पातदूयमानश्च कथमपि निनाय निशाम् ।

(१५८) अन्यस्मिन् अहनि समीपमस्य राजकुलात् द्रुत-

---

महावरजन्या इत्यर्थः, म्लुटेव्या इति भावः, विधूयमानः,—विस्तार्यमाणः, वृजिनः,—कुटिलः, ("वृजिनं कलुषे क्लीबं केशे ना कुटिले त्रिषु" इति मेदिनी) यः वेणीबन्धः,—केशबन्धः, केशविन्यास इति यावत्, तस्य विभ्रमः,—विलासः तं, बिभ्राणं—दधानं, भ्रामरं पटलं—भ्रमरवृन्दं, बभ्राम—भ्रमति स्म, सिंहासनं परितः अभ्यमात् विविधमङ्गानामाकुलभ्रमणं लक्ष्म्यामङ्गलसूचकम् इति भावः । अत्र अन्यस्य विभ्रमं कथमन्यो बिभर्तु इति वेणीबन्धस्य विभ्रममिव विभ्रममिति बिम्बानुबिम्बप्रतीतेः निदर्शनाऽलङ्कारः, तदुक्तं दर्पणे,—"सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वाऽपि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥" इति ।

(१५६) अटतामिति ।—अन्तःपुरस्य—अवरोधस्य, उपरि—ऊर्ध्वदेशे, अटतां—सञ्चरतां, वायसानां—काकानां, व्याक्रोशी—विकृतशब्दविधिः, क्षणमपि—क्रियत्कालमपि, न शशाम—न निवृत्त इत्यर्थः, अतिरलककलशगरटरटितानां जनपद्भीतिसञ्चारकत्वात् ।

(१५७) श्वेतातपत्रमण्डलमध्यात्—मण्डलाकारशुभ्रराजच्छत्रमध्यात्, श्वेतातपत्रस्य सम्राजां एव धार्यमाणत्वादिति भावः, सरसेति ।—सरसम्—अपर्युषिततया शोणितार्द्रं, सद्यस्कम् इति भावः, पिशितपिण्ड—मांसखण्डं, तद्वत् लोहितं—रक्तम् । चञ्चच्चञ्चुः—चञ्चन्ती—आमिषलोभेन स्फुरन्ती, चञ्चुः—त्रोटिः यस्य तथाभूतः । उच्चखान—उत्खातवान्, उत्पाटितवान् इत्यर्थः । कूजन्—विरुवन् नदन्, जरद्गृध्रः,—जरन्—स्थविरः, गृध्रः,—"शकुनि" इति प्रसिद्धः पक्षिविशेषः । महेति ।—महद्भिः,—प्रबलैः, अतिभयजनकैः इति भावः उत्पातैः,—प्रागुक्तैः अशुभसूचकैः भूकम्पादिभिः, दूयमानः,—सन्तप्यमानः, हर्षः इति शेषः ।

(१५८) "अन्यस्मिन्" इत्यस्य "वेला इति नाम्ना यशोवत्याः प्रतीहारी आजगाम" इति अग्रेण सम्बन्धः । अस्य—हर्षस्य, समीपं—निकटं, [ द्वान्तरुग्सर्गर्यो पुत्" (६।३।९९ पा०) इति ईत्वम् ] राजकुलात्—राजभवनात्

गतिवश-विशीर्यमाणालङ्कार-झाङ्कारिणी विजयघोषणेव विषादस्य, (१५८) आकुलचरणचलत्तुलाकोटिक्वणितवाचालिताभिः उद्ग्रीवाभिः किम्? किम्? इति पृच्छ्यमानेव दूरादेव भवन-हंसीभिः, (१६०) स्खलितविशालश्रोणिशिञ्जानरशनानुराविणीभिश्च वाष्पान्धा समुपदिश्यमानमार्गेव गृहसारसीभिः, (१६१) अदृष्टकवाटपट्टसङ्घट्टस्फुटितललाटपट्टरुधिरपटलेन पटान्तेन इव रक्तांशुकस्य मुखम् आच्छाद्य प्ररुदती,

राजान्तःपुरादित्यर्थः, वेलां विशिनष्टि, द्रुतेति।—द्रुतगतिवशेन—शीघ्रगमनवेगेन, विशीर्यमाणैः—स्खलद्भिः, अलङ्कारैः,—भूषणैः, झाङ्कारिणी—झाङ्कारशब्दवती, अत एव विषादस्य,—दुःखस्य, विजयघोषणा इव—विजयख्यापनी इव, तौर्यरटना इव इत्यर्थः, विजयिनां त्वरितजयघोषणाप्रचारस्य स्वाभाविकत्वात् इति भावः।

(१५९) आकुलेति।—आकुलयोः,—अस्थिरयोः, सर्वविषमस्थानानवधानेन विक्षिप्तयोरिति भावः, चरणयोः,—पादयोः, चलन्त्योः,—चञ्चलयोः, तुलाकोट्योः,—नूपुरयोः, ("पादाङ्गदं तुलाकोटी मञ्जीरौ नूपुरोऽस्त्रियाम्" इत्यमरः) क्वणितेन—रणितेन, वाचालिताः,—मुखरीकृताः ताभिः, मञ्जीररावविणीनां हंसीनां नूपुररवश्रवणेन तदनुकरणशीलत्वादिति भावः, उद्ग्रीवाभिः,—उन्नमितकन्धराभिः, भवनहंसीभिः,—गृहपालितहंसीभिः, पृच्छ्यमाना—अनुयुज्यमाना, अतिव्यग्रसञ्चरणं किमर्थं क्रियते? इति प्रश्नः कृत इव इति भावः।

(१६०) वाष्पान्धा—अश्रुपूरेण दृष्टिशक्तिहीना इति यावत्, तान्तः शोकादिति भावः, अत एव स्खलितेति।—स्खलितां—स्वस्थानात् भ्रष्टां, शिथिलीभूतामित्यर्थः, श्रोण्यां—नितम्बे, शिञ्जानां—स्वनन्तीं, रशनां—काञ्चीम्, अनुरुवन्ति—अनुनदन्तीति तथोक्ताभिः, गृहसारसीभिः,—भवनस्थसारसयोषिद्भिः, समिति।—समुपदिश्यमानः,—प्रदर्श्यमानः, मार्गः,—पन्थाः यस्याः सा वा तथोक्ता, दृष्टिहीनस्य पथप्रदर्शनस्य सज्जनाचारत्वात् इति भावः। सारसयोषितः रशनारवणवत् रुवन्ति इति प्रसिद्धिः।

(१६१) अदृष्टेति।—अदृष्टस्य—अलक्षितस्य, महाशोकात् व्यस्ततया वाष्पान्धतया वेति भावः, कवाटपट्टस्य—कवाटफलकस्य, सङ्घट्टेन—सङ्घर्षेण, स्फुटितात्—आहतात्, विदीर्णात् इत्यर्थः, ललाटपट्टात्—भालफलकात्, निःसृतमिति शेषः, यत् रुधिरपटलं—रक्तनिचयः तेन, रक्तांशुकस्य—रक्तवस्त्रस्य, पटान्तेन इव—अञ्चलेन इव, मुखमाच्छाद्य—अवगुण्ठ्य।

(१६२ सन्तापवलविलीनकनकवलयरसधारामिव वेत्रलताम् उत्सृजन्ती, (१६३) मुखमरुत्तरङ्गितामुत्तरीयांशुकपटीं स्फुरन्तीं फणिनी इव निर्मोकमञ्जरीम् आकर्षन्ती, नम्रांसस्रंसिना अनिलविलोलेन नीलतमेन तमालचीरचीवरेणेव शोकोचितेन धम्मिल्लरचनारहितेन शिरोरुहसञ्चयेन चञ्चता प्रावृतकुचा, (१६४) कुचताडनपीड़या समुच्छूनाताम्रश्यामतलं मुहुर्मुहुः अत्युष्णाश्रुप्रमार्ज्जनप्रदग्धम् इव करकिशलयं धुनाना,

---

(१६२) सन्तापेति।—सन्तापस्य—शोकजोत्तापस्य बलेन—वेगेन, विलीनस्य—गलितस्य, कनकवलयस्य—स्वर्णकङ्कणस्य, रसधारामिव—द्रवपरम्परामिव, वेत्रलता—प्रतीहारत्वेन स्वेन ध्रियमाणा वेत्रयष्टिम्, उत्सृजन्ती—पातयन्ती।

(१६३) मुखेति।—मुखमरुता—मुखवायुना, मुखनिःसृतेन शोकोद्भवदीर्घनिश्वासेन इति भाव, तरङ्गिता—सञ्जाततरङ्गा ताम्, कुञ्चितामिति चञ्चलामिति वा भावः, ["तदस्य—" (५।२।३६ पा०) इत्यादिना इतच्] स्फुरन्ती—प्रेङ्खन्तीम्, उत्तरीयांशुकपटीम्—उत्तरासङ्गवसनं, फणिनी—भुजङ्गी, नि ोकमञ्जरीमिव—कञ्चुकवल्लरीमिव, आकर्षन्ती—निरुन्धाना इत्यर्थः, वैकल्येपि स्त्रीजनस्वभावसिद्धाचारात् इति भाव। नम्रांसस्रंसिना—नम्रे—आनते, अंसे—स्कन्धदेशे, स्र —लम्बते इति तथोक्तेन, अनिलविलोलेन—मरुत्तरलेन, नीलतमेन—अतिनीलेन, तमालेति।—तमालस्य—कालस्कन्धाख्यवृक्षविशेषस्य, चीरचीवरेणेव—सूक्ष्मत्वग्रूपेण वसनेनेव, शोककाले तद्वासग्रहणस्याचारात् इत्याशय, शोकोचितेन—शोकसमययोग्येन, धम्मिल्लरचनारहितेन—असंयतेन, बन्धनरहितेनेत्यर्थः, ("धम्मिल्लः संयताः कचाः" इत्यमरः) चञ्चता—स्फुरता, शिरोरुहसञ्चयेन—केशनिचयेन, प्रावृतकुचा—आच्छादितस्तनी।

(१६४) कुचेति।—कुचयोः—स्तनयोः, ताडनम्—आघातः, तेन या पीडा—व्यथा तया, समुच्छूनेति।—समुच्छूनम्—सम्यक् स्फीतम्, आताम्रम्—आरक्तं, श्यामञ्च—कृष्णञ्च, तलं यस्य तथाभूतम् अत्युष्णेति।—अत्युष्णानाम्—अतिसन्तप्तानाम्, अतिशोकात् इति भाव, अश्रूणा—नेत्रजलाना, प्रमार्ज्जनेन—प्रोञ्छनेन, प्रदग्धं—प्रकर्षेण प्लुष्टमिव, करकिसलयं—हस्तपल्लवं, धुनाना—कम्पयन्ती, सञ्चालयन्ती इत्यर्थः, शोकावेगेन वक्षसि कराघातम् अश्रुप्रमार्ज्जनं तथा द्रुतगमनवशात् हस्तकम्पनञ्च कुर्व्वतीति भावः।

( १६५ ) चक्षुर्निर्झरे श्चोतति स्नपयन्ती इव शोकाग्निप्रवेशार्थं स्वकपोलतलप्रतिविम्बितम् आसन्नलोकं, ( १६६ ) लोललोचनप्रवृत्तैः तरलैः तारकांशुभिः श्यामायमानम् आत्मदुःखेन दिवसमपि दहन्ती इव "क्व कुमारः? क्व कुमारः?" इति पुरुषं पृच्छन्ती, वेलेति नाम्ना यशोवत्याः प्रतीहारी आजगाम। ( १६७ ) विषण्णलोकलोचनप्रत्युद्गता च उपसृत्य कुट्टिमन्यस्तहस्तयुगला गलन्तीभिः सिञ्चन्ती इव शुष्यन्तं दशनदीधितिधाराभिः आधूसरम् अधरम् अधोमुखी विज्ञापितवती,—"देव!

( १६५ ) श्चोततीति—गलति, प्रसरतीत्यर्थः, चक्षुर्निर्झरे— नेत्रवारिप्रस्रवणे, ("उत्सः प्रस्रवणो वारिप्रवाहो निर्झरो झरः" इत्यमरः) स्वेति।—स्वस्य—आत्मनः, कपोलतले—गण्डदेशे, अविरलनयनजलेन प्रक्षालनादतिस्वच्छे इति भावः, प्रतिविम्बितं—प्रतिफलितम्, आसन्नलोकं—पार्श्ववर्त्तिनं जनमित्यर्थः, स्नपयन्ती इव—स्नानं कारयन्तीव, कृतस्नानस्याचारवतः शरीराहवनाय हुताशानुप्रवेशाधिकारात् इत्याशयः।

( १६६ ) लोलेति।—लोलात्—चञ्चलात्, लोचनात्—नयनात्, प्रवृत्ताः,—निःसृताः तैः, तरलैः,—स्फुरद्भिरित्यर्थः, तारकांशुभिः,—तारकायाः,—कनीनिकायाः, ("तारकाऽक्ष्णः कनीनिका" इत्यमरः) अंशुभिः,—मयूखैः, श्यामायमानं—मलिनायमानम्। आत्मदुःखेन—स्वीयशोकसन्तापेन इत्यर्थः, दहन्तीव—भस्मीकुर्वतीव, दग्धश्च श्यामो भवतीति भावः; एतेन तदा अपराह्णः सञ्जातः इति सूचितम्। पुरुषम्—अनियतं जनं, यं कञ्चित् पश्यति, तमेवेति भावः। प्रतीहारी—द्वाररक्षिणी।

( १६७ ) विषण्णेति।—विषण्णानां—विषादयुक्तानां, ["रदाभ्यां—" (८।२।४२ पा०) इत्यादिना निष्ठायाः, धातोर्दकारस्य च नत्वम्] लोकानां—जनानां, लोचनैः—नयनैः, प्रत्युद्गता—प्रत्युत्थिता, देव्याः प्रतीहारीत्वात् सम्मानप्रदर्शनार्थमिति भावः। कुट्टिमन्यस्तहस्तयुगला—कुट्टिमे—गृहाभ्यन्तरतले, न्यस्ते—निहिते, हस्तयुगले—करद्वये यया तथाभूता, भूतलस्पृष्टकरेति यावत्, शोकक्षामतया स्थातुमसामर्थ्यात् अवलम्बनार्थं, प्रभुसमीपे तादृशाचारप्रदर्शनस्य अनुजीविनाम् अवश्यकर्त्तव्यत्वाद्वा इति भावः, गलन्तीभिः,—स्रवन्तीभिः, दशनदीधितिधाराभिः,—दन्तकिरणपरम्पराभिः, विमलवारिधारावत् प्रतीयमानाभिरिति भावः, शुष्यन्तं—शोषमापद्यमानं, शोकसन्तापादिति भावः, अत

परित्रायस्व परित्रायस्व, जीवत्येव भर्त्तरि किमपि अध्यवसितं देव्या" इति।

ततस्तत् (१६८) अपरम् आकर्ण्य च्युत इव सत्त्वेन, द्रुत इव दुःखेन, आचान्त इव चिन्तया, तुलित इव तापेन, अङ्गीकृत इव आतङ्केन अप्रतिपत्तिः आसीत्; आसीच्च अस्य चेतसि (१६९) प्रतिपन्नसंज्ञस्य,—"बहुशोऽपि हृदये दुःखाभिषङ्गो निपतन् अश्मनीव लोहप्रहारः कठिने हुतभुजम् उत्थापयति, न तु भस्मसात्करोति मे निरनुक्रोशस्य कायम्" इति। उत्थाय च

---

एव आधूसरम्—आपाण्डुम्, अधरम्—अधोरदनच्छदं, सिञ्चन्तीव—आर्द्रीकुर्व-न्तीव, अधोमुखी—अवनतवदना। लोकेऽपि सर्वे अध एवद्रव्यसिञ्चनकाले अधोमुखा भवन्तीति दृश्यते। भर्त्तरि—स्वामिनि, राज्ञि प्रभाकरवर्द्धने इति यावत्। किमपि—अनिर्वचनीयम्, अतिशोच्यतया वक्तुमशक्यमिति भावः। अध्यवसितम्—उद्युक्तं, देव्या—यशोवत्या।

(१६८) अपरम्—अन्यत्, अशुभमित्यर्थः, शोककारणमिति भाव। च्युत इव—भ्रष्ट इव, सत्त्वेन—बलेन, अतिदुर्बल इत्यर्थः। द्रुत इव—गलित इव, दुःखा-म्बुधिनिमग्न इत्यर्थः, अतिकारुण्यरसोद्रेकात् इति भाव। आचान्त इव—निपीत इव, चिन्तामग्न इत्यर्थः। तुलित इव—लघुतां नीत इव, तापेन—उष्मणा, शोकाग्निनेत्यर्थः, शोकावसन्न इति यावत्। अङ्गीकृत इव—क्रोडनिहित इवेत्यर्थः, आतङ्केन—शङ्कया, भयाक्रान्त इत्यर्थः। अप्रतिपत्तिः,—इतिकर्त्तव्यताविमूढ, मूर्च्छित इवेत्यर्थः, [अत्र च्युतत्व-द्रुतत्वादीनां सर्वासामेव क्रियाणाम् उत्कटैककोटिकसंशयोदयादुत्प्रेक्षाऽलङ्कार।

(१६९) प्रतिपन्नसंज्ञस्य—लब्धचैतन्यस्य। बहुशः,—बहुवारान्, पुनःपुनरपीत्यर्थः, कठिने—दृढे, अश्मनि—प्रस्तरे, लोहप्रहारः,—लौहाघात इव, निरनुक्रोशस्य—निर्दयस्य, निष्ठुरस्येति यावत्, मे—मम, कठिने हृदये—अन्तःकरणे, निपतन्—आविशन्नित्यर्थः, दुःखाभिषङ्गः,—दुःखाभिघातः, हुतभुजम्—अग्निम्, उत्थापयति—आनयति, न तु भस्मसात् करोति—न दहत्येव, अतिकठोरहृदयत्वादिति भावः, यथा लौहाहताद्धि कठिनप्रस्तरात् अग्निरुत्तिष्ठते, न तु स प्रस्तरः तदुद्भूतेन तेन दग्धी-क्रियते, तथा पाषाणकठोरे मम हृदयेऽपि पुनः पुनरापतन् दुःखातिशयः शोकाग्निं प्रवर्द्धयत्येव, न तु तेनाग्निना मां निःशेषं दहति, अहो! कष्टम् इति निष्कर्षः।

त्वरमाणोऽन्तःपुरम् अगात्। (१७०) तत्र च मर्त्तुमुद्यतानां राजमहिषीणाम् अशृणोत् दूरादेव,—"तात! चूत! चिन्तय आत्मानं, प्रवसति ते जननी। वत्स! जातीगुच्छ! गच्छामि आपृच्छस्व माम्। मया विना अद्य अनाथा भवसि भगिनि भवनदाड़िमलते!। रक्ताशोक! मर्षणीयाः पादप्रहाराः कर्णपूरपल्लवभङ्गापराधाश्च। (१७१) पुत्रक! अन्तःपुरबालवकुलक! वारुणीगण्डूषग्रहणदुर्ललित! दृष्टोऽसि। वत्से! प्रियङ्गुलतिके! गाढ़म् आलिङ्ग मां, दुर्लभा भवामि ते। भद्र! भवन-

---

(१७०) "तत्र" इत्यस्य "राजमहिषीणामशृणोत्……इत्येवंप्रायानालापान्" इत्युत्तरेण सम्बन्धः। तात!—वत्स! चूत!—आम्र! आत्मानं—स्वं, चिन्तय—स्वस्य योगक्षेमं स्वयमेव सम्पादयेति यावत्। जननी—उत्पादिका, प्रवसति—दूरं गच्छति। या त्वामुत्पादितवती इयन्तं कालं पालितवती च, सा इदानीं स्वामिजीवननैराश्यात् परलोकं गच्छतीति भावः। जातीगुच्छ!—जातीस्तवक! मां—ते जननीं, पालयित्रीमिति यावत्, आपृच्छस्व—सम्भाषस्व, पुनः समागमाभावात् इति भावः, [ "आङि नुप्रच्छ्योः" (वा०) इत्यात्मनेपदम् ]। अनाथा—निराश्रया, स्नेहयोगेन पोषिकाऽभावादिति भावः। भवनदाड़िमलते!—गृहप्राङ्गणरोपित-दाड़िमवल्लि! इति यावत्। रक्ताशोक!—रक्तपुष्पाशोकवृक्ष! पादप्रहाराः,—चरणताड़नानि, "पादाहतः प्रमदया विकसत्यशोकः" "पादाघातादशोकं विकसति" इति च कविसमयसिद्धेः, कर्णेति।—कर्णपूरार्थं,—कर्णभूषणार्थं, पल्लवानां—किसलयानां, भङ्गाः,—छेदानि एव, अपराधाः,—दोषाः, मर्षणीयाः,—सोढव्याः, क्षन्तव्या इत्यर्थः।

(१७१) पुत्रक!—वत्स! कृत्रिमपुत्र! इति वा, अन्तःपुरबालवकुलक!—अवरोधस्थ नवकेशरक! वारुणीति।—वारुणी—मदिराविशेषः, तस्या गण्डूषः,—मुखपूरणं, मुखपूरणमदिरारस इत्यर्थः; तस्य ग्रहणेन—लाभेन, स्वप्रसूनविकाशकदोहदव्यापारे मत्सकाशादिति भावः, दुर्ललित!—दुर्विनीत! मदोन्मदयोगात् अन्यस्मादपि अग्राह्यत इति भावः, "शोकं जहाति वकुलो मुखसीधुसिक्तः" "वकुलं योषितास्यमद्यैः" इति च कविसमयसिद्धेः; दृष्टोऽसि—एतावत्कालम् अवलोकितोऽसि, अतःपरं न द्रक्ष्यसे शरीरपरित्यागात इति भावः। गाढ़ं—निर्भरम्। ते—तव, दुर्लभा—

द्वारसहकारक ! दातव्यो निवापतोयाञ्जलिः, अपत्यमसि ! भ्रातः ! (१७२) पञ्जरशुक ! यथा न विस्मरसि मां, किं व्याहरसि ? दूरीभूताऽस्मि ते । शारिके ! स्वप्ने नः समागमः पुनर्भूयात् । मातः ! मार्गलग्नं कस्य समर्पयामि गृहमयूरकम् ? (१७३) अम्ब ! सुतवल्लालनीयमिदं हंसमिथुनं, मन्दपुण्यया मया न सम्भावितोऽस्य चक्रवाकयुगलस्य विवाहोत्सवः । (१७४) मातृवत्सले ! निवर्त्तस्व गृहहरिणिके ! । समुपनय सौविदल्ल !

दुष्प्रापा, अदर्शनीयेति यावत् ; [ ननु "न लोकाव्यय—" ( २।३।६९ पा० ) इत्यादिना षष्ठीप्रतिषेधात् दुर्लभेति खलर्थप्रत्ययान्तस्य कर्त्तरि "ते" इत्यत्र कथं षष्ठी ? इति चेत् अत्रोच्यते—"सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः, शेषे षष्ठी तु स्यादेव" इति दीक्षितवचनात् अत्रागत्या शेषे षष्ठी इति वक्तव्या, कर्त्तृपदान्तरमतोऽध्याहार्यमित्यकामेनाप्यङ्गीकरणीयमिति विवेकः ] । भवनद्वारसहकारक !—गृहद्वारारोपितातिसुरभिचूततरो ! निवापतोयाञ्जलिः,—निवापः,—पितृलोकमुद्दिश्य दानं, ("पितृदानं निवापः स्यात्" इत्यमरः) तत्कर्मभूतं यत् तोयं—जलं, तर्पणसलिलमित्यर्थः, तत्पूर्णः अञ्जलिः,—युक्तकरगृहीतसलिलमित्यर्थः, दातव्यः,—देयः, त्वया इति शेषः, अपत्यमसि—पुत्रोऽसि, अपत्यकृत्येषु निवापादिकर्मणामवश्यकर्त्तव्यतया विधानात् इति भावः ।

( १७२ ) पञ्जरशुक !—पिञ्जरस्थकीर ! यथा मां न विस्मरसि, तथा कार्यमिति शेषः । व्याहरसि ?—ब्रवीषि ? यद्वा,—न विस्मरसि माम् इति किं व्याहरसि ?—किमर्थं ब्रवीषि ? मृताऽपि त्वां न विस्मरामि इति भावः । ते—तव, त्वत्समीपादित्यर्थः । मार्गलग्नं—मार्गे—पथि, लग्नः,—संसक्तः तं, मार्गरोधकमित्यर्थः, मयि दृढानुरागात् इति भावः, गृहमयूरकं—गृहपालितमयूरशावकम् ।

(१७३) अम्ब !—मातः !, हंसमिथुन—हंसदम्पती, सुतवत्—पुत्रवत्, लालनीयं—यत्नेन पालनीयम् । मन्दपुण्यया—अपुण्ययेत्यर्थः, अधन्येति यावत् । सम्भावितः,—सम्पादितः । चक्रवाकयुगलस्य—कोकद्वन्द्वस्य ।

( १७४ ) मातृवत्सले !—मातृभक्ते ! गृहहरिणिके !—गृहपालितक्षुद्रहरिणि ! निवर्त्तस्व—प्रतिनिवृत्ता भव, अतःपरं मया सह मा गच्छेति भावः ।

वल्लभवल्लकीं, परिष्वजे तावत् एनाम्।' चन्द्रसेने! (१७५) सुदृष्टः क्रियतामयं जनः। विन्दुमति! इयं ते अन्त्या वन्दना। चेटि! मुञ्च चरणौ।' आर्य्ये! कात्यायनिके! किं रोदिषि? नीताऽस्मि दैवेन। तात! कञ्चुकिन्! किं माम् अलक्षणां प्रदक्षिणीकरोषि? धात्रेयि! धारय आत्मानं, किं पादयोः पतसि? भगिनि! गृहाण माम् अपश्चिमां कण्ठे। कष्टम्! न दृष्टा प्रियसखी मलयवती! कुरङ्गवति!' अयम् (१७६) आमन्त्रणाञ्जलिः। सानुमति!' अयमन्त्यः प्रणामः। कुवलयवति! एष ते अवसानपरिष्वङ्गः। सख्यः! क्षन्तव्याः प्रणयकलहाः" इत्येवंप्रायान् आलापान्।

(१७७) दह्यमानश्रवणश्च तैः प्रविशन्नेव निर्य्यान्तीं, दत्तसर्व्व-

---

सौविदल्ल।—कञ्चुकिन्; ("सौविदल्लाः काञ्चुकिनः" इत्यमरः) वल्लभवल्लकी—प्रियवीणा, समुपनय—समुपस्थापय। एना—वल्लकीमित्यर्थः, परिष्वजे—आलिङ्गानि।

(१७५) सुदृष्टः,—प्रीत्या अवलोकितः। अन्त्या—चरमा। मुञ्च—त्यज।' दैवेन—विधिना, दौर्भाग्येण इत्यर्थः। अलक्षणा—दुर्लक्षणाम्। धात्रेयि।—उपमातृतनये। आत्मानं धारय—धैर्य्यमवलम्बस्व इत्यर्थः।' अपश्चिमाम्—अपुनः आगामिनीमित्यर्थः। कष्ट—खेदे, दुःखकरमेतदित्यर्थः।

(१७६) आमन्त्रणाञ्जलिः,—प्रार्थनाऽञ्जलिः, प्रस्थानकालिकः क्षमाप्रार्थनाय करद्वयसंयोग इत्यर्थः। अन्त्यः—चरमः। अवसानपरिष्वङ्गः,—शेषालिङ्गनम्। क्षन्तव्याः,—मर्षयितव्याः, प्रणयकलहाः,—प्रेमविवादाः, तेषां जीवनावधित्वात् इति भावः। एवंप्रायान्— उक्तरूपभूयिष्ठानित्यर्थः।'

(१७७) "दह्यमानश्रवणः" इत्यस्य "मातरं ददर्श" इत्यग्रेण सम्बन्धः। तैः,—आलापैः, प्रागुक्तैरिति यावत्, दह्यमानं—भस्मत्वमापद्यमानम्, अतिसन्तापकत्वात् इति भावः, श्रवणं—श्रोत्रेन्द्रियं यस्य तथाभूतः। मातरं विशिनष्टि, निर्य्यान्तीमित्यादि।—निर्य्यान्ती—निर्गच्छन्तीम्, अन्तःपुरादिति शेषः। दत्तेति।—दत्तानि—वितरितानि, पात्रसात्कृतानीत्यर्थः, सर्व्वाणि—समग्राणि, स्वपतौ स्थितानि

स्वापतेयां, (१७८) गृहीतमरणप्रसाधनां, जानकीमिव जातवेदसं पत्युः पुरः प्रवेक्ष्यन्तीं, प्रत्यग्रस्नानार्द्रदेहतया श्रियमिव भगवतीं सद्यः समुद्रात् उत्थितां, (१७९) कुसुम्भ-बभ्रुणी वाससी दिवमिव तेजसी सान्ध्ये दधानां,

स्वापतेयानि—धनानि, स्वाधिकृतानि यौतुकादिद्रव्याणि इत्यर्थः यया ता, ["पथ्यतिथि—" (४।४।१०४ पा०) इत्यादिना ढञ्। "द्रव्य वित्त स्वापतेयं रिक्थमृक्थ धन वसु" इत्यमरः] महाराजमङ्गलार्थम् अर्थिसात्कृतात्मसर्वधनामित्य :।

(१७८) गृहीतेति।—गृहीतानि—स्वीकृतानि, रणाय मरणस्य वा प्रसाधनानि—अलङ्काराः, सहमरणौचितरक्तवसन इत्यर्थः यया तथोक्ताम्। जानकीमिव—जनकदुहितरं सीतामिव, इत्युपमा, वैदेही यथा पुरा लङ्का समुद्रार्थं पत्युः समक्षमेव वह्नौ आत्मान विसृष्टवती तथेत्यर्थः, तथा हि अन्वारोहण-धर्मे मृतस्य पत्यु. प्रज्वलच्चितायामेव सतीना प्रवेशो दृश्यते, इह तु तदसत्त्वात् जीवत. पत्यु. पुरत. ज्वलन प्रविशन्त्याः सीताया. साम्य प्रदर्शितम्, एवम्भूतं निदर्शन-मतीव दुर्लभमेव, अत्र तु एतावानेव विशेषः यत् तत्र स्वशुद्धिप्रदर्शनार्थम्, इह तु जीवत्यपि पत्यौ भावि-तद्विरहजशोक सोढुमशक्नुवत्तया प्रागेव चितायामारोहणमिति, एवञ्च उपमागतासादृश्यादिनिबन्धनदोष. न शङ्कनीय इति। जातवेदसम्—अग्निम्, ("अग्निर्वैश्वानरो वह्नि···। ···जातवेदास्तनूनपात्॥" इत्यमरः) पुर.,—अग्रत., प्रवेक्ष्यन्तीं—प्रवेष्टुमेषिष्यन्तीम्, अग्नेरन्तरेष्यन्तीम् इत्यर्थः। प्रत्यग्रेति।—प्रत्यग्रेण—नवेन, अचिरकृतेन इति यावत्, स्नानेन—आप्लावेन, आर्द्र.,—सिक्त., देह.,—अवयवः यस्याः तस्या भावः तत्ता तया हेतुना, ज्वलने प्रवेष्टुकामेन अग्निप्रवेशात् पूर्वं कृतस्नानेन पुरुषेण तथा स्त्रियाऽपि भूयते इति प्रसिद्धि., श्रियमिव—लक्ष्मीमिव, मथ्यमाननीरनिधेराविर्भावेन उत्थितिकालिकसादृश्यसत्त्वात् इति भाव.।

(१७९) कुसुम्भेति।—कुसुम्भवत्—महारजनेत्यपरा स्वनामख्यातपुष्पवत्, बभ्रुणी—पिङ्गले, ("बभ्रुर्ना पिङ्गले त्रिषु" इत्यमरः) वाससी—वसने, परिधेय-मुत्तरीयञ्च इति भाव, दिवमिव—आकाशमिव, सान्ध्ये—सन्ध्याकालीने, तेजसी—सूर्या-चन्द्रमसौ इत्यर्थः। इहोभयोरुपमानोपमेययोः अवैधर्म्यसाम्यसत्त्वादुपमा। यदि सायं युगपत् द्वयो. तेजस्विनोः उदयास्तमयनकृतसत्ताया विरोध. कश्चित् आशङ्क्यते, तदा तेज:पदस्य तेजस्व्यर्थकता परिहृत्य दीप्त्यर्थकता अङ्गीकरणीया, तथा च सान्ध्यरागौ इव द्वे द्वितायमाने वाससी वसानामित्यर्थ.।

(१८०) ताम्बूलदिग्धरागान्धकाराधरप्रभापटलपाटलं पट्टांशुकमिव विधवामरणचिह्नम् अङ्गलग्नम् उद्वहन्तीं, (१८१) रक्तकण्ठसूत्रेण कुचान्तरावलम्बिना स्फुटितहृदयविगलितरुधिरधाराशङ्कां कुर्वतीं, (१८२) तिर्यक्कुटिलकुण्डलकोटिकण्टकाक्रष्टतन्तुना हारेण वलितेन सितांशुकपाशेन इव कण्ठम् उत्पीड़यन्तीं, (१८३) सरसकुङ्कुमाङ्गराग-

---

(१८०) ताम्बूलेति।—ताम्बूला [नां]—पर्णानां, पुनः पुनः चर्व्वितानामिति भावः, दिग्धः—लिप्तः, घनीभूत इति भावः, रागः—लौहित्यम्, अन्धकार इव—तमः इव, स्वाभाविकदीप्तेरावरकत्वात् आवरणभूतः इत्यर्थः यस्मिन् तादृशः, [उपमितसमासः] योऽधरः—अधोरदनच्छदः, तस्य प्रभापटलेन—द्युतिपुञ्जेन, पाटलम्—अरुणं, पट्टांशुकमिव—रक्तपट्टवसनमिव, विधवेति।—विधवानां—पतिहीनानां, पत्युपरमानन्तरं सहमरणप्रवृत्तानामिति भावः, मरणचिह्नं—सहगमनलक्षणं, रक्तपरिच्छदादिकमिति शेषः, अङ्गलग्नम्—अङ्गासक्तम्। ["ताम्बूल··पटलपाटलम्" इत्यत्र "ताम्बूलदिग्धरागान्धकारप्रभापटलं पाटलम्" इति पाठः समीचीनतया प्रतिभाति, तत्र ताम्बूलदिग्धरागान्धकाराधरस्य प्रभायाः,—द्युतेः, पटलं—समूहः यत्र तादृशम्, अत एव पाटलं—रक्तवर्णं, पट्टांशुकमिव इति योजना, तथात्वे पाटलमित्यस्य पट्टांशुकविशेषणत्वेन अर्थगरीयस्त्वमिति भावः]।

(१८१) रक्तेति।—रक्तं—रक्तवर्णं, कण्ठसूत्रं—गलदेशनिहिततन्तुः तेन, कुचान्तरावलम्बिना—स्तनान्तरविलम्बमानेन, स्फुटितेति।—स्फुटितात्—विदीर्णात्, भर्तृशोकेन इति भावः, हृदयात्—वक्षसः, विगलितानि—स्रुतानि, यानि रुधिराणि—शोणितानि, तेषां धाराशङ्का—प्रवाहसंशयं, कुर्व्वती—जनयन्ती, लोकानां द्रष्टृणामिति भावः।

(१८२) तिर्य्यगिति।—तिर्य्यक्—वक्रं यथा तथा, कुटिलेन—भङ्गिमता, कुण्डलकोटिकण्टकेन—कर्णभूषणाग्रसूच्या, आकृष्टः,—आक्रान्तः, तन्तुः,—सूत्रं यस्य तेन, वलितेन—वेष्टनकारिणा, हारेण—एकावल्या, सितांशुकपाशेनेव—श्वेतवसनरूपरज्ज्वा इवेत्यर्थः, उत्पीडयन्तीम्—उद्बध्नतीम् इव लक्ष्यमाणां, कण्ठापीडाकुलत्वात् इत्याशयः।

(१ ३) सरसेति।—सरसैः,—आर्द्रैः, [illegible]ः,—वाह्लीकैः, अङ्गरागः

तया कवलितामिव दिधक्षता चिताऽर्च्चिष्मता, चितानलार्च्चनाकुसुमैः इव धवलधवलैः अश्रुविन्दुभिः अंशुकोत्सङ्गम् आपूरयन्तीं, (१८४) गृहदेवताऽऽमन्त्रणबलिमिव वलयैर्विगलद्भिः पदे पदे विकिरन्तीम्, आप्रपदीनां कण्ठे गुणकुसुममालां यमदोलाम् इव आरूढ़ाम्, (१८५) अन्तर्गुञ्जन्मधुकरमुखरेण आमन्त्र्यमाणलोचनोत्पलामिव कर्णोत्पलेन, (१८६) प्रदक्षिणीक्रियमाणामिव मणिनूपुरबन्धुभिर्बद्धमण्डलं भ्रमद्भिर्भवनहंसैः, सन्निहितप्राणसमं मद्-

अङ्गलेपनं यस्याः तस्य भावः तत्ता तया हेतुना, कवलितामिव—ग्रस्तामिव, इत्युत्प्रेक्षा, दिधक्षता—दग्धुमिच्छता, चिताऽर्चिषता—चितानलेन। चितेति।—चितानलस्य—मृतदाहनाग्नेः, अर्चनाकुसुमानि—पूजार्थपुष्पाणि तैरिव, इत्यवैधर्म्यसाम्यावगमादुपमाऽलङ्कारः, धवलधवलैः,—अतिस्वच्छैः, अश्रुविन्दुभिः,—विन्दुविन्दुरूपेण अविरलधारया पतितैः नयनजलै, अंशुकोत्सङ्ग—वसनमध्यभागम्, आपूरयन्तीं—परिपूर्णं कुर्व्वतीं, स्त्रियो हि पूजार्थकुसुमानि उच्चित्य वसनाञ्चले संरक्षन्ति इति दृश्यते लोके, गलदश्रुधारया सिक्तवक्षोवसनामिति भावः।

(१८४) पदे पदे—प्रतिपादक्षेपं, विगलद्भिः,—भ्रश्यद्भिः, शोककृशाभ्यां हस्ताभ्याम् इति भावः, वलयैः,—कङ्कणैः, गृहदेवतानां—भवने प्रतिष्ठितकुलदेवतानाम्, आमन्त्रणाय—सम्भाषणाय, बलिमिव—उपहारमिव, विकिरन्तीं—विक्षिपन्तीम्, अर्पयन्तीमिति यावत्। आप्रपदीनां—प्रपदं—पादस्याग्रं, ("पादाग्रं प्रपदम्" इत्यमरः) तन्मर्य्यादीकृत्य आप्रपदं तत्प्राप्नोति इति आप्रपदीना ताम्, ["आप्रपदं प्राप्नोति" (५।२।८ पा०) इति खञ्] गुणकुसुममालां—तन्तुगुम्फितपुष्पस्रजं, यमदोलामिव—समादरेण प्राणिविशेषानयनार्थं यमस्य दोलायन्त्रमिव, आरूढाम्—अधिष्ठिताम्।

(१८५) अन्तः,—अभ्यन्तरे, गुञ्जद्भिः,—ध्वनद्भिः, मधुकरैः,—भृङ्गैः, मुखरं—वाचालितं तेन, कर्णोत्पलेन—कर्णावतंसीकृतेन इन्दीवरेणेति यावत्, आमन्त्र्यमाणेति।—आमन्त्र्यमाणं—सम्भाष्यमाणं, लोचनं—नयनम्, उत्पलमिव—इन्दीवरमिवेत्यर्थः यस्याः तामिव, सजातीयत्वात् कृताभाषणनीलनीरजनयनामिवेति भावः।

(१८६) प्रदक्षिणीक्रियमाणामिव—अप्रदक्षिणा प्रदक्षिणा क्रियमाणा प्रदक्षिणी-

स्याय चित्तमिव चित्रफलकमविचलं धारयन्तीम्, (१८७) अर्च्चा-बद्धोद्धूयमानधवलपुष्पदामकां पतिव्रतापताकामिव पत्युःप्रास-यष्टिमिष्टामुपगूहमानां, बन्धोरिव निजचारित्रधवलस्य नृपातपत्रस्य पुरो नेत्रोदकमुत्सृजन्तीं, (१८८) पत्युः पादपतनसमुद्गमदत्यधिकवाष्पाम्भःप्रवाहप्रतिरुद्धदृशः कथमपि प्रतिपन्ना-देशान् सचिवान् सन्दिशन्तीम्, (१८९) अनुनयनिवर्त्तितविधुर-

क्रियमाणा—विष्वग्भ्राम्यमाणा तामिव, मणिनूपुरयोः,—रत्नमञ्जीरयोः, बन्धुभिः,—सुहृद्भिः, मणिनूपुरसदृशबन्धुभिरिति भावः, बद्धमण्डल—विरचितचक्राकारवेष्टन-मित्यर्थः। सन्निहितेनेति।—सन्निहितः,—सम्यक्तया स्थापितः, चिंतित इति यावत्, प्राणसमः,—जीवनसदृशः, पतिरिति भावः यत्र तादृशम्, अविचलं—निश्चलम्, एकाग्रञ्च, चित्रफलकम्—आलेख्यपट, धारयन्ती—दधाना, तीव्रशोकावेगेन कृतमरणनिश्चयामिति भाव.।

(१८७) अर्च्चेति।—अर्च्चा—पूजा, तस्यै बद्धं—संयमितम्, उद्धूयमानं—वातेन चाल्यमानं, धवलं—श्वेत, पुष्पदाम—कुसुममाल्य यत्र तथोक्ता, पतिव्रतापताकामिव—पातिव्रत्यसूचनी वैजयन्तीमिव, पत्युः,—भर्त्तुः, प्रासयष्टि—कुन्ताख्यास्त्रविशेषम्, इष्टा—प्रिया, भर्त्तुरिति शेष.; यद्वा,—भर्त्तुः प्रियत्वात् आत्मनः प्रियाम्, प्रियप्रियेषु प्रियवदुपचारवत्त्वात् इति भावः, उपगूहमानाम्—आश्लिष्यन्तीम्। बन्धोरिव—सुहृद इव, निजं—स्वीयं, चारित्रं—विशुद्ध चरितमिव, धवल—शुभ्रं तस्य, नृपातपत्रस्य—राजच्छत्रस्य, पुरः,—अग्रतः, नेत्रोदकं—वाष्पम्, उत्सृजन्ती—मुञ्चन्ती, स्वजनाग्रतः शोकस्य प्राबल्येन प्रकाशः स्वभावसिद्धः इति भाव', "स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इत्यादि महाकवि प्रयोगदर्शनात्।

(१८८) पत्युः,—स्वामिनः, पादपतने—चरणप्रणिपातकाले, समुद्गमता—समुच्छलताम्, अत्यधिकानाम्—अधिकाधिकाना, वाष्पाम्भसाम्—अश्रुजलानां, प्रवाहेण—स्रोतसा,, प्रतिरुद्धाः,—आवृताः, दृशः,—नेत्राणि येषा तान्, प्रतिपन्नादेशान्—आज्ञाकारिण इत्यर्थः, सचिवान्—अमात्यान्, कथमपि—अतिकष्टेण, शोकावेगेन रुद्धकण्ठत्वात् इति भावः, सन्दिशन्तीम्—एतत्परमेवमेव युष्माभिः वर्त्तितव्यमित्यादिशन्तीम्।

(१८९) अनुनयेति।—अनुनयेन—सान्त्वनेन, परलोकेऽपि परिचर्य्यार्थं पति-मनुयायिनां पुरोगमनस्य प्रवीणपण्डितसम्मतत्वात् मद्वियोगदुःखं म कुरुत, इत्येवंरूपेण

वृद्धबन्धुवर्गवर्द्धमानध्वनिभिः कष्टहाक्रन्दैः आक्रुष्यमाणश्रवणां, (१९०) भर्तृभाषितनिभैः पञ्जरसिंहबृंहितैः क्रियमाणहृदयां, धात्र्या भर्तृभक्त्या च निजया प्रसाधितां, जरत्या मूर्च्छया च संस्तुतया धार्य्यमाणां, सख्या पीड़या च व्यसनसङ्गतया समालिङ्गितां, परिजनेन सन्तापेन च (१९१) गृहीतसर्वा-

प्रबोधवाक्येन इति भावः, निवर्त्तितानां—स्थिरीकृतानां, विधुराणां—वियोगार्त्तानां, वृद्धानां—स्थविराणां, बन्धुवर्गाणां—सुहृद्गणानां, वर्द्धमानाः,—वृद्धिं गच्छन्तः, उच्चः रोदनादिति भावः, ध्वनयः,—विलापाचराणीत्यर्थः येषु तादृशैः, कष्टहाक्रन्दैः,—कष्टम् हम्मे रुदितरवैः, आक्रुष्यमाणं—बलपूर्व्वकं नीयमानमित्यर्थः, महाचीत्कारैः बधिरीक्रियमाणमिति भावः, श्रवणं—श्रोत्रेन्द्रियं यस्याः ताम्।

(१९०) भर्तृभाषितेति।—भर्त्तुः,—स्वामिनः, भाषितं—वचनं, तन्निभानि—तत्सदृशानि तैः, गम्भीरनिर्घोषवद्भिरिति भावः, पञ्जरसिंहबृंहितैः,—पञ्जराबद्धसिंहगर्ज्जनैः, क्रियमाणहृदयाम्—आक्रुष्यमाणचित्तां, भर्त्तुराह्वानसादृश्यत्वेन हृदयहारित्वात् इति भावः। धात्र्या—उपमात्रा, भर्तृभक्त्या च—पतिभक्त्या च, प्रसाधितां—प्रकर्षेण निवर्त्तनाय चेष्टिताम्, अलङ्कृताञ्च। जरत्या—वृद्धया, कयाचिदिति शेषः, मूर्च्छया च—मोहेन च, संस्तुतया—परिचितया, एकत्र,—आविवाहं सहावस्थानात्, अन्यत्र,—भर्त्तुरनिष्टाशङ्कया पुनःपुनरागमनात् इति भावः, धार्य्यमाणाम्—अवलम्ब्यमानां, गृह्यमाणाञ्च। सख्या—वयस्यया, पीड़या—आसन्नभर्तृवियोगजदुःखेनेत्यर्थः, व्यसनसङ्गतया—व्यसने—विपदि, सङ्गतया—सम्मिलितया, सहायभूतयेत्यर्थः, व्यसनात्—विपदः हेतोः समुपस्थितया च, समालिङ्गितां—समाश्लिष्टाम्, आक्रान्ताञ्च।

(१९१) गृहीतेति।—गृहीताः,—अवलम्बिताः, आक्रान्ताश्च, सर्वे—सकलाः, अवयवाः,—अङ्गानि येन तथोक्तेन। परीतां—वेष्टितां, युक्ताञ्च, [परिजनसन्तापादीनां प्रस्तुतानाम् एकक्रियाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कृतिः]। कुलपुत्रेति।—कुलपुत्राणां—सत्कुलजातानाम्, उच्छ्वसितैः,—दीर्घनिश्वासैः, महत्तरैः,—महामहिमशालिभिः पुरुषैश्च, ["कुलपुत्रोच्छ्वसितैः" इत्यत्र "कुलपुत्रैरुच्छ्वसितैश्च" इति पाठे,—कुलपुत्राः,—कुलीनतनयाः तैः, उच्छ्वसिताः,—ऊर्द्ध्वश्वासाश्च तैः, महत्तरैः,—अतिप्रबलैश्च] अधिष्ठितां—परिवृताम्, अभिभूतामित्यर्थश्च।

त्रयवेन परीतां, कुलपुत्रोच्छ्वसितैश्च महत्तरैः अधिष्ठितां, (१९२) कञ्चुकिभिः दुःखैश्च अतिवृद्धैः अनुगतां, भूपालवल्लभान् कौलेयकान् अपि सास्रमालोकयन्तीं, सपत्नीनामपि पादयोः पतन्तीं, (१९३) चित्रपुत्रिका अपि आमन्त्रयमाणां, गृहपतत्रिणामपि अञ्जलिं पुरस्तात् उपरचयन्तीं, पशूनपि आपृच्छमानां, भवनपादपानपि परिष्वजमानां मातरं ददर्श।

दूरादेव च (१९४) वाष्पायमाणदृष्टिः अभ्यधात्,—"अम्ब! त्वमपि मां मन्दपुण्यं त्यजसि? प्रसीद, निवर्त्तस्व" इत्यभिदधान एव च सस्नेहमिव (१९५) नूपुरमणिमरीचिभिः चुम्ब्यमान-

(१९२) कञ्चुकिभिः,—प्रागुक्तलक्षणैः अन्तःपुरचारिभिः द्विजविशेषैः, अतिवृद्धैः—अतिस्थविरैः, महद्भिश्च, अनुगताम्—अनुसृताम्, अभिभूताञ्च। भूपालवल्लभान्—राजप्रियान्, कौलेयकान्—सारमेयान्, कुक्कुरान् इत्यर्थः, सत्कुलसम्भूतान् जनान् वा, ("कौलेयकः सारमेये कुलीने" इति मेदिनी) सास्रं—सवाष्पं, त्वत्प्रियप्रभुः अचिरमेव इहलोकात् प्रस्थास्यति, त्वं निराश्रयः कुत्र गमिष्यसि? इति कारुण्यात् इति भावः। सपत्नीनामपि—समानपतिकानामपि, पादयोः पतन्तीम्—एतावन्तं कालं मया युष्मासु सपत्नीसुलभेर्ष्यया यत्किञ्चिदपराद्धं, मरणान्तानि वैराणि इति मत्वा इदानीमन्तिमकाले तत्सर्वं क्षम्यतामित्युक्त्वा चरणौ गृह्णतीम् इति भावः।

(१९३) चित्रपुत्रिकाः,—आलेख्यस्थाः पुत्तलिकाः, आमन्त्रयमाणां—सम्भाषमाणाम्। गृहपतत्रिणां—गृहपालितपक्षिणाम्। उपरचयन्तीं—कुर्व्वतीम्। पशून्—गवादीन्, आपृच्छमानां—सम्भाषमाणाम्, ["आङि नुप्रच्छ्योः" (वा०) इत्यात्मनेपदम्, अतः शानच्] भवनपादपान्—गृहप्राङ्गणरोपितवृक्षकान्, परिष्वजमानाम्—आलिङ्गन्तीम्।

(१९४) वाष्पायमाणदृष्टिः,—वाष्पायमाणा—वाष्पमुद्वमन्ती, दृष्टिः,—नेत्रं यस्य तथोक्तः, अश्रुपूर्णनयनः इत्यर्थः। अम्ब!—मातः! मन्दपुण्यं—क्षीणसुकृतं, पापिनमित्यर्थः, दुर्भाग्यमिति यावत्। निवर्त्तस्व—विरता भव, मरणाध्यवसायादिति भावः।

(१९५) नूपुरेति।—नूपुरयोः,—मञ्जीरयोः, मातुरिति भावः, ("मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः) ये मणयः,—रत्नानि, तेषां मरीचिभिः,—किरणैः,

चूडः चरणयोः न्यपतत्। (१९६) देवी तु यशोवती तथा तिष्ठति पादनिहितशिरसि विमनसि कनीयसि प्रेयसि तनये गुरुणा गिरिणा इव उद्वेगवेगेन अवष्टभ्यमाना, मूर्च्छाऽन्धतमसं बलात्तलमिव प्रविशन्ती, (१९७) बाष्पप्रवाहेण इव चिर-निरोधसम्पिण्डितेन स्नेहसम्भारेण निर्भराविर्भूतेन अभिभूय-माना, कृतप्रयत्नाऽपि निवारयितुं न शशाक बाष्पोत्पतनम्। (१९८) उत्कटकुचोत्कम्पप्रकटितासह्यशोकाकूता च, गद्गदिका-रुध्यमानगलविकला, निःश्वासान्धमन्थुतरलीक्रियमाणाधरोद्देशा,

---

चुम्ब्यमानचूड,—चुम्ब्यमाना—स्पृश्यमाना, चूडा—शिखा यस्य तथाभूतः चरणार्पितोत्तमाङ्गः इति भावः।

(१९६) "देवी तु" इत्यस्य "निवारयितुं न शशाक बाष्पोत्पतनम्" इत्यग्रेणा-न्वयः। तथा—तेन प्रकारेण, तदवस्थायामित्यर्थः, तिष्ठति—वर्त्तमाने। पाद-निहितशिरसि—चरणन्यस्तमूर्द्धनि। विमनसि—दुर्मनसि, पितुर्जीवननैराश्येन मातु-स्सादृशाध्यवसायदर्शनेन च चिन्ताभिभूतचेतसि इत्यर्थः। कनीयसि—कनिष्ठे। [ अल्प-शब्दात् "द्विवचन—" (५।३।५७ पा०) इत्यादिना ईयसुनि "युवाल्पयोः—" (५।३।६४ पा०) इत्यादिनाऽल्पस्य कनादेशः ] प्रेयसि—अतिप्रियतमे। गुरुणा—महता, गिरिणा इव—पर्वतेन इव, उद्वेगवेगेन—दुःखातिरेकेण, अवष्टभ्यमाना—आक्रम्यमाणा। मूर्च्छेति।—मूर्च्छा—मोह एव, अन्धतमसं—गाढान्धकारम्।

(१९७) बाष्पप्रवाहेण—अश्रुस्रोतसा। चिरनिरोधसम्पिण्डितेन—चिरं—बहुक्षणं व्याप्य, निरोधः,—अवरोधः, तेन सम्पिण्डितः,—पुञ्जीभूतः, एकत्र समवेतः इत्यर्थः, तेन, स्नेहसम्भारेण—स्नेहातिशयेन, निर्भराविर्भूतेन—समधिकमुदयमानेन, नितरामुच्छलितेन इत्यर्थः, अभिभूयमाना—बाध्यमाना, कृतप्रयत्ना—विहितो-द्यमा इत्यर्थः। बाष्पोत्पतनम्—अश्रुप्रवाहं, सवेगं प्रवहतां प्रवाहाणां दुर्वारत्वात् इति भावः।

(१९८) उत्कटेति।—उत्कटेन—उद्दामेन, अत्यन्तेन इत्यर्थः, कुचयोः,—स्तनयोः, उत्कम्पेन—उत्क्षेपणेन, प्रकटितं—प्रकाशितम्, असह्यं—दुःसहं, शोका-कूतं—शोकाभिप्रायः यया तथाभूता। गद्गदिकेति।—गद्गदिकया—गद्गदस्वरेण, रुध्यमानः,—अवरुध्यमानः इत्यर्थः, यः गलः,—कण्ठः, तेन विकला—विह्वला, तथा,

( १९९ ) पुनरुक्तस्फुरणनिपीड़ितनासापुटा, निमील्य नयने नयनाम्भःसेकप्लवेन प्लावयन्ती विमलौ कपोलौ, (२००) सञ्छाद्य करनखमयूखमालाखचितदशाऽन्तेन तनुना तन्वन्तर-निर्गच्छदच्छास्रस्रोतसा इव अंशुकपटान्तेन किञ्चित् उत्तानितं वदने दूयमानमानसा, ( २०१ ) स्मरन्ती प्रस्नुतस्तनी प्रसवदिवसात् आरभ्य सकलम् अङ्कशायिनः शैशवम् अस्य,

---

वीचीभाकुलत्वात् सगद्गदं भाषमाणा इत्यर्थः। निःसामान्येति।—निःसामान्येन—असाधारणेन, मन्युना—शोकेन, तरलीक्रियमाणः,—स्फूर्यमाणः, वेपमान इत्यर्थः, अधरोद्देशः,—अधरभागः यस्याः तथाभूता।

( १९९ ) पु रिति।—पुनरुक्तेन—पुनःपुनः प्रवृत्तेन, उत्तरोत्तरं वर्द्धमानेनेत्यर्थः, स्फुरणेन—स्पन्दनेन, निपीडित—विचलित, ["निपीडित—" इत्यत्र "निविडित—" इति पाठे,—निविडितं—घनीभूतं, सङ्कुचितमित्यर्थः.] नासापुट—नासिकायुगल यस्याः तथोक्ता। निमील्य—मुद्रयित्वा। नयनाम्भःसेकप्लवेन—वाष्पजलाभिषेकप्रसरेण, प्लावयन्ती—आपूरयन्ती, सञ्जयन्ती, सिञ्चन्ती वेत्यर्थ.।

( २०० ) सञ्छाद्य—आवृत्य। करेति।—करनखानां—हस्तनखराणां, मयूखमालाभिः,—किरणराजिभिः, खचितः,—व्याप्तः, दशाऽन्तः,—वस्त्रप्रान्तः, अञ्चलप्रान्त इत्यर्थः यस्य तथोक्तेन, तनुना—सूक्ष्मेण, ["करनख··तनुना" इत्यत्र "करनखमयूखमालाखचिततनुना" इति पाठे,—करनखमयूखमालाभिः खचितश्च तथा तनुश्च तेन, खचितः तनुः,—अवयवः यस्य तथोक्तेन इति वा अर्थः]। तन्वन्तरेति।—तन्वन्तरात्—अवयवमध्यात्, निर्गच्छत्—निःसरत्, अच्छ—निर्म्मलम्, अस्रस्रोतः,—अश्रुप्रवाहः यस्य तथाभूतेन इव, अंशुकपटान्तेन—वसनाञ्चलेन। उत्तानितम्—उन्नमित, वदनेन्दु—मुखचन्द्रम्। दूयमानमानसा—सन्तप्यमानचित्ता, प्रियात्मजं शोकविह्वलम् अनुशोचन्त्यत्र दृष्टेति भावः।

( २०१ ) स्मरन्ती—ध्यायन्ती। प्रस्नुतस्तनी—क्षरितपयोधरा, निःसृतस्तन्या इति यावत्, वात्सल्याविर्भावादिति भावः। प्रसवदिवसात्—गर्भमोचनवासरात्, हर्षस्योत्पत्तिदिवसादित्यर्थः, [ अत्र आरभ्यार्थकप्रभृत्यादिशब्दयोगे एव पञ्चमी अनुशिष्टा, न तु आरभ्येति क्रियायोगे, क्रियाक्रान्ततया "प्रसवदिवसात्" इत्यत्र द्वितीयाप्रसङ्गात् तथा च ल्यब्लोपे पञ्चमीं विधाय कथञ्चिदेतत्समाधातव्यम्, आरभ्येति

(२०२) ज्ञातिगृहगतहृदया, "अम्ब! तात! न पश्यतं पापां परलोकप्रस्थितां माम् एवम् अतिदुःखिताम्" इति मुहुर्मुहुः आक्रन्दन्ती पितरौ, "हा वत्स! (२०३) विश्रान्तभागधेयया न दृष्टोऽसि" इति प्रेष्ठं ज्येष्ठं तनयम् असन्निहितं क्रोशन्ती, "अनाथा जाता" इति श्वशुरकुलवर्त्तिनीं दुहितरम् अनुशोचन्ती, "निष्करुण! किम् अपराद्धं तव अमुना जनेन?" इति दैवम् उपालभमाना, "नास्ति मत्समा सीमन्तिनी दुःखभागिनी" इति निन्दन्ती बहुविधम् आत्मानं, (२०४) "मुषिताऽस्मि नृशंस! त्वया" इति अकाण्डे कृतान्तं

---

क्रियापदस्य कर्मान्तरस्योहनीयमिति पाठान्तः]। पाद्मायिनः,—उत्सङ्गवर्त्तिनः। अस्य—हर्षस्य।

(२०२) ज्ञातीति।—ज्ञातिगृहं—पितृभवनमित्यर्थः, गतं—प्रस्थितं, हृदयं—चित्तं यस्याः तथोक्ता, स्त्रीस्वभावसाधारण्यात् स्मृतपितृकुलेति भावः। अम्ब!—मातः। ["अम्बार्थ—" (७।३।१०७ पा०) इत्यादिना ह्रस्वे "एङ्ह्रस्वात्सम्बुद्धेः" (६।१।६९ पा०) इति सम्बुद्धिलोपः] तात!—पितः। पापां—दुष्कृतकारिणीं, दुरदृष्टामिति यावत्। परलोकप्रस्थितां—लोकान्तरं प्रस्थातुमुद्यताम्। आक्रन्दन्ती—रुदती, सविक्लवस्वरमाह्वयन्ती वा। पितरौ—मातरं पितरञ्च।

(२०३) विश्रान्तभागधेयया—निवृत्तभाग्यया, अभाग्यया इत्यर्थः, जीवत्येव स्वयं भर्त्तुर्लोकान्तरगमनसम्भावनादिति भावः। प्रेष्ठम्—अतिप्रियं, ज्येष्ठं—वृद्धतमं, तनयं—पुत्रं, राज्यवर्द्धनमित्यर्थः, असन्निहितं—दूरस्थमिति यावत्, क्रोशन्ती—तमुद्दिश्य रुदती, महार्त्तस्वरमाह्वयन्ती वा इत्यर्थः। अनाथा—अशरणा इत्यर्थः, ईदृशपितृवियोगेन कदाचिदापदि तथाभूतस्निग्धशरण्यलाभासम्भवादिति भावः। दुहितरं—कन्यां, राज्यश्रियम् इति यावत्, अनुशोचन्ती—सशोकं स्मरन्ती। निष्करुण!—निर्दय। किमपराद्धम्?—कोऽपराधः कृतः? अमुना जनेन—मया इत्यर्थः। दैवं—नियतिम्, उपालभमाना—तिरस्कुर्वती। सीमन्तिनी—नारी, ("नारी सीमन्तिनी वधूः" इत्यमरः)।

(२०४) मुषिता—विप्रलब्धा, जीवनेश्वरहरणोद्योगेन हृतसर्वस्वा इति यावत्। नृशंस!—निष्ठुर! अकाण्डे—सहसा। कृतान्तम्—अन्तकम्।

गर्हमाणा मुक्तकण्ठम् अतिचिरं प्राकृतप्रमदा इव प्नारोदीत्।

(२०५) प्रशान्ते च मन्युवेगे सस्नेहम् उत्थापयामास सुतम्। हस्तेन च अस्य प्ररुदितस्य (२०६) पक्ष्मपालीपुञ्ज्य-माननखकिरणनिवहां द्रुताम् इव अधिकतरं चरन्तीं दृष्टिम् उन्ममार्ज्ज। स्वयमपि (२०७) कठोररागपरिपीयमाणेन धवलिम्ना मुच्यमानोदरे (२०८) क्वथदस्रश्वयत्पर्य्यन्ते शुक्ल-शीकरतारतारकितपक्ष्मणी (२०९) सूक्ष्मतराश्रुविन्दुपरिपाटी-पतनानुबन्धविधुरे लोचने पुनः पुनः आपूर्य्यमाणे प्रमृज्य

---

गर्हमाणा—निन्दन्ती, मुक्तकण्ठम्—उच्चैरिति यावत्, प्राकृतप्रमदा इव—सामान्या नारी इव। "देवी तु" इत्यारभ्य अस्मिन् सन्दर्भे महाशोकगर्भाणां स्त्रीजातीयविलापा-दीनां यथावद्वर्णनात् कवीन्द्रचमत्कारातिशया स्वभावोक्तिः यथासम्भवस्थले च उत्प्रेक्षा-रूपकादिभिः सङ्कीर्णा इत्यवदातम्।

(२०५) प्रशान्ते—निवृत्ते, मन्युवेगे—शोकप्रसरे। सुतं—हर्षमित्यर्थः।

(२०६) पक्ष्मेति।—पक्ष्मणां—नेत्रलोम्नां, पालीषु—श्रेणीषु, पुञ्ज्यमानः,—पुञ्जीक्रियमाणः, सङ्कुच्यमानः इत्यर्थः, उन्मार्ज्जनकाले इति भावः, नखकिरणानां—कररुहमयूखानां, निवहः,—समूहः यस्यां तां, द्रुतामिव—द्रवीभूतामिव. चरन्तीं—स्रवन्तीं, दृष्टिं—नेत्रं, नेत्रजलमित्यर्थः, उन्ममार्ज्ज—विशोधयामास, प्रोञ्छितवती इत्यर्थः।

(२०७) कठोरेति।—कठोरेण—घनेन, गाढ़ेनेत्यर्थः, रागेण—लौहित्येन, रोदनवशादिति भावः, परिपीयमाणः,—आव्रियमाणः, निरस्यमान इत्यर्थः तेन, धवलिम्ना—धावल्येन, मुच्यमानं—चीयमाणम्, उदरम्—अभ्यन्तरं ययोः तथाभूते, अनवरतरोदनेन आताम्रे इत्यर्थः।

(२०८) क्वथदिति।—क्वथता—उष्णतां गच्छता, अस्रेण—नयनवारिणा, श्वयन्—स्फीततां गच्छन्, पर्य्यन्तः,—प्रान्तभागः ययोः तादृशे, शुक्लेति।—शुक्लेन—धवलेन, शीकरेण—वाष्पकणेन, तारम्—अत्यन्तं, तारकितानि—सञ्जाततारकाणि, पक्ष्माणि—लोमानि ययोः तथाविधे।

(२०९) सूक्ष्मेति।—सूक्ष्मतराणाम्—अतिसूक्ष्माणाम्, अश्रुविन्दूनां—नेत्रजल-

(२१०) वाष्पार्द्रगण्डगृहीताञ्च श्रवणशिखरम् आरोप्य शोकलम्बाम् अलककलताम्, (२११) अधःस्रस्तविलोलबालिकाव्याकुलिताञ्च समुत्सार्य्य तिरश्चीं चिकुरसटाम्, (२१२) अश्रुप्रवाहपूरितम् आर्द्रञ्च किञ्चित् च्युतमुत्क्षिप्य हस्तेन स्तनोत्तरीयं तरङ्गितमिव नखांशुपटलेन (२१३) मग्नांशुकपटान्ततनुताम्रलेखालाञ्छित-लावण्यकुञ्चिकावर्जित-राजतराजहंसास्य-

कणानां, परिपाट्याः,—परम्परायाः, पतनानुबन्धेन—चरणसातत्येन, अविच्छिन्नधारया पतनेन इत्यर्थः, विधुरे—कातरे। आपूर्य्यमाणे—क्रियमाणे, अश्रुभिरिति शेषः।

(२१०) वाष्पेति।—वाष्पेण—नेत्रोदकेन, आर्द्रः,—सिक्तः, गण्डः,—कपोलः, तेन गृहीता—धृता, तत्र सम्बद्धा इत्यर्थः तां, वाष्पार्द्रकपोलपतितामिति यावत्, श्रवणेति।—श्रवणशिखरे—कर्णाग्रं, कर्णोपरीत्यर्थः, आरोप्य—स्थापयित्वा, शोकलम्बां—शोकेन लम्बते इति तथोक्तां, मन्युवशात् प्रसाधन-संयमनादिराहित्यात् लम्बामित्यर्थः, अलककलतां—लतावत् लम्बमानं चूर्णकुन्तलम्।

(२११) अध इति।—अधःस्रस्ता—बन्धनशैथिल्यात् अधःपतिता, विलोला—विशीर्य्यन्ती, बालिकया—कयाचित् बालया, व्याकुलिता—आलुलायिता ताम्; यद्वा,—बालिकया—कर्णभूषणेन, व्याकुलिता—विपर्य्यस्ता तां, कतिचित् केशानां कर्णभूषणे आबद्धत्वादिति भावः, ("बालिका। बालायां बालुका-पत्रकाहले कर्णभूषणे" इति मेदिनी) तिरश्चीं—वक्रां, भङ्गिमतीमिति भावः, ["उगितश्च" (४।१।६ पा०) इति ङीप्] चिकुरसटां—केशराजिं, समुत्सार्य्य—अपनीय, मुखादिप्रदेशादिति भावः।

(२१२) अश्रुप्रवाहेति।—अश्रूणां—नयनाम्बूनां, प्रवाहेण—स्रोतसा, पूरितं—पूर्णम्, अत एव आर्द्रं—सिक्तं, च्युतं—स्खलितं, स्वस्थानादिति भावः, उत्क्षिप्य—उत्तोल्य, यथास्थाने अवस्थाप्य इत्यर्थः। स्तनोत्तरीयं—स्तनावरणभूतः यः उत्तरासङ्गः तत्। तरङ्गितमिव—सञ्जातभङ्गमिव, आकुञ्चितमिवेत्यर्थः। नखांशुपटलेन—नखरप्रभासमूहेन। ["नखांशुपटलेन" इति पाठस्तु क्वचित् पुस्तके न दृश्यते, तत्र तु अश्रुप्रवाहपूरितत्वेन स्वस्थानच्युतत्वेन च तरङ्गितमिवेति बोद्धव्यम्]।

(२१३) मग्नेति।—मग्नस्य—अश्रुप्लुतयोः कपोलयोः संसक्तस्य, अंशुकपटान्तस्य—उत्तरीयवसनाञ्चलस्य, तनूनाम्—अवयवानां, तनूनामिति भावः, ताम्रलेखाभिः,—रक्तरेखाभिः, लाञ्छितं—विलक्षणीकृतं, लावण्यं—कान्तिः यस्याः तथाभूता, या

भृङ्गारकास्यसमुद्गीर्णेन पयसा प्रक्षाल्य मुखकमलं, (२१४) कलमूकलोककरविधृते धौतवासःशकले शुचिनि समुन्मृज्य पाणी, (२१५) सुतवदनविनिहितनिभृतनयनयुगला चिरं स्थित्वा पुनः पुनः आयतं निश्वस्य अवादीत्,—"वत्स! नासि (२१६) न-प्रियो निर्गुणो वा परित्यागार्हो वा। स्तन्येन एव सह त्वया पीतं मे हृदयम्। अस्मिंश्च समये प्रभूतप्रभुप्रसादान्तरिता त्वां न पश्यति दृष्टिः। अपि च

---

कुब्जिका—उन्नतपृष्ठपरिचारिकाविशेषः, तया आवर्जितस्य—आनीतस्य, न्युब्जीकृतस्येत्यर्थो वा, राजतस्य—रौप्यमयस्य, राजहंसास्यभृङ्गारकस्य—राजहंसमुखाकाररचितस्य "गाडु" इति ख्यातस्य जलाधारविशेषस्य इत्यर्थः, आस्यं—मुखं, तस्मात् समुद्गीर्णेन—निर्गतेन, ["मग्नांशुक······समुद्गीर्णेन" इत्यत्र "मग्नांशुकपटान्ततनुताम्रलेखालाञ्छितलावण्यकुञ्जिकावर्ञ्जितराजतराजहंसास्यसमुद्गीर्णेन" इति पाठे,—मग्नः,—आच्छन्नः, वस्त्रेणेति भावः, अंशुकपटान्तस्य तनूनां ताम्रलेखाभिः लाञ्छितं लावण्यं यस्य तथाभूतस्य, तथा कुञ्जिकया—"चावि" इति ख्यातेन मञ्जूषाद्युद्घाटनयन्त्रभेदेनेत्यर्थः, आवर्ञ्जितः,—आयत्तीकृतः, उद्घाटित इत्यर्थः, राजतः,—रौप्यनिर्म्मितः, सः राजहंसः,—राजहंसाकृतिजलाधारविशेषः, तस्य आस्यसमुद्गीर्णेन इत्यर्थः], पयसा—जलेन॥

(२१४) कलेति।—कलमूकः,—जन्ममूकः, लोकः,—जनः, तस्य करेण—पाणिना, विधृतं—गृहीतं तस्मिन्, ["कलमूकलोककरविधृते" इत्यत्र "कलमूकलोकविधृते" इति पाठान्तरम्] धौतवासःशकले—प्रक्षालितवसनखण्डे, [पुस्तकान्तरे "धौत" इति पाठो न दृश्यते]। शुचिनि—धवले पवित्रे वा, पाणी—हस्तौ, समुन्मृज्य—शोधयित्वा, निर्जलीकृत्येत्यर्थः।

(२१५) सुतेति।—सुतस्य—हर्षस्य, वदने—मुखे, विनिहितम्—अर्पितं, निभृतं—निश्चलं, निर्निमेषमित्यर्थः, नयनयुगलं—नेत्रद्वयं यया तथाभूता, अतिस्नेहोदयात् निमेषालसपक्ष्मपङ्क्तिरिति भावः। आयतं—दीर्घम्।

(२१६) न-प्रियः,—अप्रियः, द्वेष्य इत्यर्थः, [इह नञ्शब्देन "सह सुपा" (२।१।४ पा०) इति समासः; समासे च हलि परतः नञः अकारस्यावश्यवैकल्पिकत्वात् अत्र तदभावपक्ष एवादृतः]। स्तन्येन—स्तनदुग्धेन। प्रभूतेति।—प्रभूतेन—समधिकेन, प्रभुप्रसादेन—स्वामिभक्त्या, अन्तरिता—आच्छादिता

पुत्रक! (२१७) पुरुषान्तरविलोकनव्यसनिनी राज्योपकरणा-करुणा वा न अस्मि लक्ष्मीः क्षमा वा। (२१८) कुलकलत्रम् अस्मि चारित्रधना धर्मधवले कुले जाता। (२१९) किं विस्मृतोऽसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केशरिण इव केशरिणीं गृहिणीम्? वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्य्यात्? एवंविधेन पित्रा ते भरत-भगीरथ-नाभागनिभेन नरेन्द्रवृन्दारकेण गृहीतः पाणिः।

---

यद्वा,—निरतिशयस्वाम्यनुग्रहेण तिरस्कृता, अकाले तेन परित्यक्ततया तदनुग्रहलाभ-वञ्चितेत्यर्थः।

(२१७) पुरुषान्तरेति।—पुरुषान्तरस्य—अपरपुरुषस्य, भर्तृव्यतिरिक्तस्य इत्यर्थः, विलोकने—दर्शने, व्यसनिनी—अत्यासक्ता, राज्योपकरणेति।—राज्यस्य—राजत्वस्य, उपकरणे—उपकारक्रियायाम्, अकरुणा—निर्द्दया। ["राज्योपकरणा-करुणा" इत्यत्र "राज्योपकरणमकरुणा" इति पाठे,—राज्योपकरणं—राज्यस्य अङ्गीभूता इत्यर्थः, शोभावर्द्धनार्थमिति भावः, "लक्ष्मीः क्षमा वा" इत्यन्वयः] क्षमा—पृथिवी, लक्ष्मीः क्षमा च यथा नित्यं चला—पुंश्चली इव बहुपुरुषासक्ता, राज्ञो जीवनरक्षणरूपोपकारकरणे च निर्द्दया, तथाभूता अहं नास्मि इति भावः।

(२१८) कुलकलत्रं—कुलाङ्गना, सत्कुलप्रसूता इति भावः। चारित्रधना—विशुद्धपतिपरायणतारूपाचारसर्व्वस्वा, पातिव्रत्यमेव धनवत् सततं रक्षणीयमिति अनिशं विभावयन्ती इत्यर्थः, तस्य ऐहिक-पारलौकिकाक्षयसौख्यसाधनत्वादित्याशयः। धर्म्म-धवले—अमलसतीधर्म्मोज्ज्वले इति भावः।

(२१९) किं विस्मृतः? कस्य पुत्री, कस्य पत्नी, कस्य जननी इति विस्मरण-मापन्नः किम्? समरशतशौण्डस्य—शतशतसङ्ग्रामसमत्तस्य, अनेकसङ्ग्रामकयुद्धविजयिन इत्यर्थः, पुरुषप्रकाण्डस्य—पुरुषश्रेष्ठस्य, केशरिणः,—सिंहस्य, केशरिणीं—सिंहीम्। वीरजा—वीरप्रसूता, वीरकन्या इत्यर्थः। वीरजाया—वीरपत्नी। वीर-जननी—वीरपुत्रा। पराक्रमक्रीता—वीर्य्यशुल्का। अन्यथा—अन्यप्रकारं, प्रोक्तविध-नारीविगर्हिताचरणमित्यर्थः, भर्त्तुरभावेऽपि जीवनधारणरूपमिति भावः। एवंविधेन—समरशतशौण्डेन पुरुषप्रकाण्डेन इत्यर्थः। भरत-भगीरथ-नाभागनिभेन—भरतादि-सदृशेन, लोकपालदुर्द्धर्षप्रभावशालिना चक्रवर्त्तिना इति भावः, नरेन्द्रवृन्दारकेण—

(२२०) आसेवितः सेवासम्भ्रान्तानन्तसामन्तसीमन्तिनीसमावर्जितजाम्बूनदघटाभिषेकः शिरसा। (२२१) लब्धो मनोरथदुर्लभो महादेवीपट्टबन्धसत्कारलाभो ललाटेन। आपीतौ पुत्रदुहितृभिः (२२२) पुत्रैः अमित्रकलत्रबन्दीवृन्दविधूयमानचामरमरुच्चलच्चीनांशुकधरौ पयोधरौ। सपत्नीनां शिरःसु

नरेन्द्रश्रेष्ठेन, पाणिः,—करः, ममेति शेषः, गृहीतः,—स्वीकृतः, अहमुपयेमे इत्यर्थः।

(२२०) आसेवितः,—लब्धः। सेवेति।—सेवार्थे—परिचर्य्यार्थे, सम्भ्रान्ताः,—अहमहमिकया व्यापृताः, अनन्ताः,—बह्व्य इत्यर्थः, सामन्तानाम्—अधीश्वराणां, याः सीमन्तिन्यः,—नार्य्यः, ताभिः समावर्ज्जितैः,—समाहृतैः, स्नपनार्थं मच्छिरसः उपरि पुञ्जीकृत्य धृतैर्वा, जाम्बूनदघटैः,—काञ्चनकलसैः, ("स्वर्णं सुवर्णं कनकं···। रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्" इत्यमरः) यः अभिषेकः,—स्नानमित्यर्थः, पट्टमहिषीसम्मानानुरूपम् इति भावः।

(२२१) लब्धः,—प्राप्तः, मनोरथदुर्लभः,—मनोरथैः,—अभिलाषैः, अपीति शेषः, दुर्लभः,—दुष्प्रापः, महासौभाग्यवतीलभ्यत्वात् इत्याशयः, महादेवीति।—महादेवी—राज्ञः प्रधानमहिषी, तस्याः यः पट्टबन्धः,—शिरोभूषणभूतकिरीटबन्धनं, तेन सत्कारलाभः,—पूजालाभः, सर्व्वराजदाराभ्यः सम्मानातिशय इत्यर्थः ; यद्वा,—महादेवीपट्टस्य—प्रधानमहिषीपदबोधकलेख्यपत्रस्य विशिष्टशिरोभूषणादिरूपस्येत्यर्थः, यो बन्धः,—धारणं, तेन यः सत्कारः,—सर्व्वत्र समादरः, तस्य लाभः,—प्राप्तिः, मुकुटधारणपूर्व्वकं नारीसमाजेषु यत्सर्व्वोन्नतपदलाभः इत्यर्थः, ललाटेन—भालदेशेन। एतया सर्वोच्चपदप्राप्त्या आशासान्तरं मे नास्ति, येन अतः परं जिजीविष्यते इति व्यज्यते।

(२२२) पुत्रैः,—पुत्रदुहितृभिः इत्यर्थः, [पुत्रौ च दुहिता च इति विग्रहे "भ्रातृपुत्रौ—" (१।२।६८ पा०) इत्यादिना एकशेषे रूपम्] अमित्रेति।—अमित्राणां—शत्रूणां, कलत्राणि—नार्य्य एव, बन्द्यः,—विजयहृताः स्त्रियः, तासां वृन्दानि—समूहाः, तैः विधूयमानानां—सञ्चाल्यमानानां, चामराणां—वालव्यजनानां, मरुता—वायुना, चलतः,—स्फुरतः, चीनांशुकस्य—सूक्ष्मवसनस्य, धरौ—धारकौ, एतेन सौभाग्योत्कर्षवत्त्वमस्याः द्योतितम् ; पयोधरौ—स्तनौ।

(२२३) निहितं नमन्निखिलकटककुटुम्बिनीकिरीटमाणिक्य-मालाऽर्चितं चरणयुगलकम् । (२२४) एवं कृतार्थसर्वावयवा किमपरम् अपेक्षे क्षीणपुण्या ? मर्तुम् (२२५) अविधवैव वाञ्छामि । न च शक्नोमि (२२६) दग्धस्य भर्त्तुः आर्य्यपुत्त्र-विरहिता रतिः इव निरर्थकान् प्रलापान् कर्त्तुम् । पितुश्च ते (२२७) पादधूलिः इव प्रथमं गगनगमनम् आवेदयन्ती बहुमता भविष्यामि शूरानुरागिणीनां सुराङ्गनानाम् ।

---

(२२३) निहितं—स्थापितम् । नमदिति ।—नमन्तीनां—प्रणिपतन्तीनां निखिलानां—समस्तानां, कटककुटुम्बिनीनां—सैनिकरमणीनां, किरीटेषु—मुकुटेषु शिरोभूषणेषु इत्यर्थः, या माणिक्यमालाः,—रत्नस्रजः, ताभिः अर्चितं—रञ्जितमित्यर्थः । सपत्नीनां शिरःसु निहितमित्यनेन स्वामिनः एवं हृदयप्रेयसी भूत्वा इदानीं तद्विरहित-प्राणान् धर्त्तुं कथमहमुत्सहे ? इति व्यज्यते ।

(२२४) एवम्—इत्थम् । कृतार्थेति ।—कृतार्थाः,—सिद्धकामाः, नरेन्द्र-श्रेष्ठग्रहणादितः इति भावः, सर्वे—समस्ताः, अवयवाः,—अङ्गानि, पाण्यादय इत्यर्थः यस्याः तथाभूता, अपरम्—अन्यत्, अपेक्षे ?—याचे ? आशां करोमि ? इत्यर्थः यतः क्षीणपुण्या—पुण्यक्षयवती, पूर्वोक्तभोगेन तत्क्षयानुमानात् इति भावः, पुण्यान्तरसद्भावे तु भर्त्तुरीदृशी दशा न स्यादिति तात्पर्य्यम् । भर्त्तुः महापीडादर्शनेन स्वस्य सुकृतक्षयोऽनुमीयते इत्यनुमानालङ्कृतिः व्यज्यते ।

(२२५) अविधवा—अननुभुक्तवैधव्येति यावत्, सधवेति भावः ।

(२२६) दग्धस्य—श्मशानानलेन हरकोपेन च प्लुष्टस्य, भर्त्तुः,—स्वामिनः, [ सम्बन्धविवक्षया षष्ठी ] आर्य्यपुत्त्रविरहिता—स्वामिवियुक्ता, मृतपतिका इति यावत्, रतिरिव—कामपत्नीव, निरर्थकान्—निष्प्रयोजनान्, प्रलापान्—अनर्थकवचांसि, ("प्रलापोऽनर्थकं वचः" इत्यमरः) तदा प्रतीकारोपायाभावादिति भावः, पुरा रतिर्यथा हरकोपानले भर्त्तुर्दाहानन्तरं तदर्थं बहुधा प्रलापं कृतवती, नाहं तथा कर्त्तुं शक्नोमीति निष्कर्षः । अत्र व्यतिरेको व्यज्यते ।

(२२७) पादधूलिः,—चरणरजः । गगनगमनं—स्वर्गगमनम्, आकाशगमनञ्च, आवेदयन्ती—निवेदयन्ती, बहुमता—बहुसत्कृता, शूरेति ।—शूरेषु—वीरेषु, अनुरागिण्यः,—आसक्ताः तासां, सुराङ्गनानां—देवमहिलानां, पदधूलिः पुरो

(२२८) प्रत्यग्रदृष्टदारुणदुःखदग्धायाश्च मे किं धक्ष्यति धूमध्वजः ? मरणाच्च मे जीवितम् एव अस्मिन् समये साहसम्। (२२९) अतिशीतलः पतिविरहशोकानलात् अक्षयस्नेहेन्धनात् अस्मात् अनलः। (२३०) कैलासकल्पे प्रवसति जीवितेश्वरे जरत्तृणकणिकालघीयसि जीविते लोभ इति क्व घटते ? अपि

---

धायिनी यथा कस्यापि आगमनं ज्ञापयति, तथा अहं तव पितुर्वीरस्य आगमनम् अग्रतः तासां निवेद्य बहु सम्मानं ताभ्यः लप्स्ये इति भावः।

(२२८) प्रत्यग्रेति।—प्रत्यग्रम्—अभिनवम्, अननुभूतपूर्व्वमिति यावत्, दृष्टम्—इदानीमनुभूतं, यत् दारुणं—भीषणं, दुःखं—क्लेशः, भर्त्तृपीड़ाजनितः शोक इति यावत्, तेन दग्धायाः,—भस्मीभूतायाः, [ "प्रत्यग्रदृष्ट—" इत्यत्र "प्रत्यक्ष-दृष्ट—" इति पाठे,—प्रत्यक्षं—साक्षात्, दृष्टम्—अवलोकितं, त्वयेति शेषः] धक्ष्यति ?—भस्मीकरिष्यति ? धूमध्वजः,—अग्निः। साहसं—सहसा—बलेन कृत, मरणस्य तापनिवृत्तिकरत्वेनाक्लेशकरत्वात्, जीवनस्य तु महायन्त्रणाप्रदत्वेन निरतिशय-क्लेशहेतुत्वात् जीवितुमिच्छा नास्तीति भावः।

(२२९) पतिविरहशोकानलात्—भर्त्तृवियोगशोकाग्नेः, [ "पतिविरहशोका-नलात्" इत्यत्र "पतिशोकानलात्" इति पाठान्तरम् ] अक्षयेति।—अक्षयम्—अविनाशि, स्नेहः,—प्रेम एव, इन्धनं—काष्ठं यस्य तथाभूतात्, अस्मात्—अनु-भूतादित्यर्थः, अनलः,—लौकिकः अग्निरित्यर्थः, अतिशीतलः,—अत्यर्थं शीतस्पर्शः, क्षणेनैव दग्धीकरणात् क्षयशीलेन्धनत्वाच्चेति भावः। अत्र विरहशोकानलात् लौकिकानलस्यातिशैत्यकथनात् तदुत्कर्षप्रतीतेः व्यतिरेकालङ्कारो व्यज्यते।

(२३०) कैलासकल्पे—कैलासपर्व्वतनिभे, महासारत्वादतिनिर्म्मलाशये इति ध्वनिः, जीवितेश्वरे—प्राणनाथे, ["जीवितेश्वरे" इत्यत्र "जीवेश्वरे" इति पाठान्तरम्] प्रवसति—परलोकं जिगमिषति इत्यर्थः, ["धातुसम्बन्धे प्रत्ययाः" (३।४।१ पा०) इति भविष्यति वर्त्तमानप्रयोगवत्त्वम् ] जरदिति।—जरन्ती—जीर्णा, शुष्का इत्यर्थः, या तृणकणिका—तृणलेशः, तद्वत् लघीयसि—अतिलघुनि, जीविते—जीवने, लोभः,—स्पृहेत्यर्थः, इति क्व—कुत्र, घटते ?—युज्यते ? न कुत्रापीत्यर्थः, जीवितेश्वरापगमे जीवितस्य स्थितिः न कथमपि सङ्गच्छते, आश्रयनाशे आश्रयिनाशस्यान्वयव्यतिरेक-सिद्धत्वात् इति भावः।

च जीवन्तीम् अपि मां (२३१) नरपतिमरणावधीरणमहापातकिनीं न स्पृक्ष्यन्ति पुत्र! पुत्त्रराज्यसुखानि। दुःखदग्धायाश्च हृदि भूतिः अमङ्गला च अप्रशस्ता च निरुपयोगा च भवति। वत्स! (२३२) विश्वस्तानां स्थास्नुना यशसा स्थातुम् इच्छामि लोके, न वपुषा। तत् अहमेव त्वां तावत् तात! (२३३) प्रसादयामि, न पुनः मनोरथप्रातिकूल्येन कदर्थनीया अस्मि" इत्युक्त्वा पादयोः अपतत्।

---

(२३१) नरपतीति।—नरपतेः,—राज्ञः, मरणं—मृत्युः, तस्य अवधीरणम्—अवज्ञानं, स्वजीवनरक्षणकामनया उपेक्षणमिति भावः, तेन यत् महत् पातकं—पापं, तत् विद्यतेऽस्या इति तथाभूतां, स्वामिमरणेऽपि जिजीविषुमिति भावः, न स्पृक्ष्यन्ति—न आश्रयिष्यन्ति इत्यर्थः, महापातकिस्पर्शनिषेधादिति भावः, पुत्रेति।—पुत्त्रस्य—तनयस्य, राज्ये—राजत्वे, पुत्रे राजासनाधिरूढे इत्यर्थः, यानि सुखानि—आनन्दाः तानि, स्वामिविरहे राजमाता भूत्वाऽपि नाहं सुखिनी भवेयम् अनाथत्वात् इति भावः। भूतिः,—स्थितिरित्यर्थः, यद्वा—भूतिः,—ऐश्वर्यं, भस्म च, अमङ्गला—अशिवा, मङ्गलानुष्ठानादौ योगदानानर्हत्वादिति भावः, अप्रशस्ता—प्रशंसाऽनर्हा, हीनत्वज्ञापिका इत्यर्थः, लोकैरवज्ञातत्वादिति भावः। निरुपयोगा—निष्प्रयोजना, कस्यापि उपकारादिकरणासामर्थ्यादिति भाव। भस्मापि अमङ्गलम् अप्रशस्तम् अप्रयोजनीयञ्च इति बोद्धव्यम्।

(२३२) विश्वस्तानां—विधवानां, ("विश्वस्ता-विधवे समे" इत्यमरः) स्थास्नुना—स्थिरतरेण, ["ग्लाजिस्थश्च ग्स्नुः" (३।२।१३९ पा०) इति ग्स्नुप्रत्ययः। "स्थास्नुना" इति पाठस्तु पुस्तकान्तरे नास्ति] यशसा—कीर्त्या, भर्त्तुः अनुगमनजनितेन इति भावः, स्थातुं—वर्त्तितुम्, अविनाशितया निरवच्छिन्नत्वात् इति भावः। वपुषा—देहेन, "कीर्त्तिर्यस्य स जीवति" इति स्मरणात् अक्षय्ययशसैव जीवितुमिच्छामि, न नश्वरदेहेन इति भावः।

(२३३) प्रसादयामि—प्रसन्नं कारयामि, मरणे अनुमोदनरूपां प्रसन्नतां प्रार्थये इत्यर्थः। मनोरथप्रातिकूल्येन—अभीष्टव्याहत्या, कदर्थनीया—क्लेशनीया। पादयोरपतदिति।—पुत्रस्य पदतले पतनं नीतिविगर्हितं तथा विज्ञत्वस्यापि तदानीं विवेकवैकल्यात् सम्भावितपतिवियोगं सोढुमसमर्थतया भर्त्तुः प्रागेव जीवनविसर्जने आग्रहातिशयद्योतनार्थं, तथा स्वाभिप्रेतविषये प्रतिबन्धकाचरणाशङ्कया अनुनयनार्थञ्च मन्तव्यम्।

( २३४ ) स तु ससम्भ्रमम् अपनीय चरणयुगलम् अवनमित-तनुः उभयकरविधृतवपुषम् ( २३५ ) अवनिगतशिरसम् उदनमयत् मातरम्। ( २३६ ) दुर्निवारतां च शुचः समवधार्य, कुलयोषिदुचितां च तामेव श्रेयसीं मन्यमानः क्रियां, कृतनिश्चयां च तां ज्ञात्वा तूष्णीम् अधोमुखोऽभवत्।

( २३७ ) अभिनन्दति हि स्नेहकातराऽपि कुलीनता देशकालानुरूपम्। देवी अपि यशोवती परिष्वज्य समाघ्राय च तं शिरसि, निर्गत्य चरणाभ्यामेव च अन्तःपुरात् ( २३८ ) पौराक्रन्दनिर्भराभिः उपरुध्यमाना इव दिग्भिः सरस्वतीतीरं ययौ। तत्र च स्त्रीस्वभावकातरैः दृष्टिपातैः

( २३४ ) सः,—हर्षः। ससम्भ्रमं—सत्वरं, सव्यग्रमिति यावत्, अपनीय—अपसार्य। अवनमिततनुः,—प्रणमितकायः, उभयेति।—उभयाभ्यां—द्वाभ्यां, कराभ्यां—हस्ताभ्यां, विधृतं—गृहीतं, वपुः,—शरीरं यस्याः तथोक्ताम्।

( २३५ ) अवनिगतशिरसं—भूतलपतितमस्तकाम्। उदनमयत्—उत्थापयामास।

( २३६ ) दुर्निवारतां—दुःसहताम्। शुचः,—शोकस्य। कुलयोषिदुचितां—कुलाङ्गनासदृशीं, तां क्रियाम्—अग्निप्रवेशरूपाम् इत्यर्थः, श्रेयसीं—प्रशस्ताम्। कृतनिश्चयां—दृढसङ्कल्पामित्यर्थः, तां—मातरमित्यर्थः, ज्ञात्वा—विभाव्य, क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ?" इत्यादि महाजनवाक्यात् इति भावः।

( २३७ ) अभिनन्दति—प्रशंसति, आद्रियते इत्यर्थः, लङ्घितुं न शक्नोतीति भावः। स्नेहकातरा—स्नेहव्याकुला, मातृवियोगशङ्कया विधुराऽपीति भावः, कुलीनता—सत्कुलजातता, देशकालानुरूपं—तत्तद्देशकालोचितम्, आचारम् इति शेषः, तत्काले तद्देशे च सत्कुलजातानां नारीणां पत्यनुगमनस्य सदाचारत्वेनावश्यानुष्ठेयतया अनिच्छन्नपि हर्षः मातुरग्निप्रवेशं प्रतिरोद्धुं न शशाक इति भावः। तं—हर्षम्। [पुस्तकान्तरे "तम्" इति पाठो न दृश्यते ]।

( २३८ ) पौरेति।—पौराणां—पुरवासिनाम्, आक्रन्देन—रोदनेन, निर्भराः,—आपूरिता इत्यर्थः ताभिः, उपरुध्यमाना इव—निरुध्यमाना इव, स्त्रीसुलभ-

(२३९) प्रविकसितरक्तपङ्कजपुञ्जैः इव अर्चयित्वा भगवन्तं भानु-मन्तमिव मूर्त्तिः ऐन्दवी चित्रभानुं प्राविशत्। (२४०) इतरो-ऽपि मातृमरणविह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात्, अपश्यच्च स्वल्पावशेषप्राणवृत्तिं परिवर्त्तमानतारकं तारकराज-मिव अस्तम् अभिलषन्तं जनयितारम्। (२४१) असह्यशोको-द्रेकाभिद्रुतश्च त्याजितः पितृस्नेहेन धैर्य्यम्। (२४२) आश्लिष्य अस्य सकलदुर्म्मदमहीपालमौलिमालालालितौ पादपद्मौ,

स्वभावादिति भावः। अत्र पौरजनानामाक्रन्दस्य दिगङ्गनासु आरोपात् कथम् अन्य-धर्मस्यान्यत्राधानमिति बिम्बप्रतिबिम्बभाववत्तया समाधानात् निदर्शना उत्प्रेक्षाऽङ्गम् इति सङ्क्षेपः।

(२३९) प्रविकसितेति।—प्रकर्षेण विकसितानां—सम्पूर्णप्रस्फुटितानां, रक्त-पङ्कजानां—रक्तपद्मानां, पुञ्जैः—राशिभिः इव, अविच्छिन्नरोदनेन चक्षुषोः रक्तवर्ण-तया रक्तपङ्कजपुञ्जौपम्यं बोद्धव्यम्। भानुमन्तमिव—सूर्य्यमिव, [अत्र भानुमता सह चित्रभानोरवैधर्म्यसाम्यावगमादुपमाऽलङ्कारः] भानुमन्तं—दीप्तिमन्तञ्च। ऐन्दवी—इन्दुः,—चन्द्रः, तत्सम्बन्धिनी, अमावस्यायाम् ऐन्दवी कला सूर्य्यं प्रविशतीति शास्त्रात्। चित्रभानुम्—अग्निम्, ("अग्निर्वैश्वानरो वह्निः···।···चित्रभानुर्विभावसुः॥" इत्यमरः)।

(२४०) इतरः,—हर्षः। स्वल्पेति।—स्वल्पः,—ईषत्, अवशेषो यस्याः तथाभूता, प्राणवृत्तिः,—जीवनव्यापारः, निश्वासप्रवृत्तिरित्यर्थः यस्य तथोक्तं, परिवर्त्तमानतारकं—परिवर्त्तमाने—ऊर्द्ध्वं नीयमाने, विकृतिं नीयमाने इत्यर्थः, तारके—कनीनिके यस्य तथाभूतम्; परिवर्त्तमानाः,—रूपान्तरं नीयमानाः, प्रभाविहीना इत्यर्थः, तारकाः,—नक्षत्राणि यस्य तथाभूतञ्च, तारकराजमिव—चन्द्रमिव, अस्तं—नाशम्, अस्ताचलञ्च। जनयितारं—पितरम्।

(२४१) असह्येति।—"असह्य" इत्यादिः "चिरं रुरोद" इति वक्ष्यमाणेना-न्वयः। असह्यस्य—दुःसहस्य, शोकस्य—मन्योः, उद्रेकेण—आवेगेन, अभिद्रुतः—अभिभूत इत्यर्थः, पितृस्नेहेन—पितृप्रेम्णा, असाधारणपितृभक्त्या इति यावत्, [क्वचित् "पितृस्नेहेन" इत्यत्र "स्नेहेन" इति पाठान्तरम्] धैर्य्यं—धीरत्वं, त्याजितः,—मोचितः, त्यक्तधैर्य्य इत्यर्थः।

(२४२) अस्य—पितुः, पादपद्मौ—चरणकमले, ["वा पुंसि प ᐧ नलिनम्"

(२४३) अन्तस्तापात् मुखचन्द्रमिव द्रवीभवन्तं, दशन-ज्योत्स्नाजालमिव द्रवतामापद्यमानम्, अक्षिलावण्यमिव विलीयमानं, (२४४) मुखचन्द्रसुधारसमिव स्यन्दमानम्, (२४५) अच्छाच्छम् अश्रुस्रोतसां सन्तानं महामेघमयविलोचन इव वर्षन् निरन्तरविमुक्तारावः चिरं रुरोद।

राजा तु तम् (२४६) उपरुध्यमानदृष्टिः अपि अविरत-

इत्यमरानुशासने सत्यपि प्रसिद्धकविभिः पद्मशब्दस्य पुंसि प्रयोगस्यानादृतत्वात् "शाति पद्मः सरोवरे" इतिवत् "पादपद्मौ" इति प्रयोगस्य अकविजुष्टत्वदोषग्रस्तत्वं ज्ञेयम्] आश्लिष्य -आलिङ्ग्य, वक्षसि स्थापयित्वा इत्यर्थः। पादपद्मे विशिनष्टि, सकलेति।—सकलैः,—सर्वैः, दुर्मदैः,—दुर्द्धर्षैः, उद्दामबलदुरन्तैरित्यर्थः, महीपालैः, —भूपालैः, मौलिमालया—किरीटश्रेण्या, क्षालितौ—सेवितौ, प्रतापप्रकर्षपराजितत्वात् इति भावः।

(२४३) अन्तस्तापात्—आभ्यन्तरसन्तापात्, मुखचन्द्रमिव—वदनसुधाकरमिव, द्रवीभवन्तं—गलन्तम्। दशनज्योत्स्नाजालमिव—दन्तकिरणनिचयमिव, द्रवतां—तरलताम्, आपद्यमानं—गच्छत, जलरूपेण परिणमदिव इति यावत्। ["द्रवताम्" अत्र "जलताम्" इति पाठान्तरम्]। अक्षिलावण्यं—नयनकान्तिम्, ["अक्षिलावण्यम्" इत्यत्र "लोचनलावण्यम्" इति पाठान्तरम्] विलीयमानं—विलीनतामापद्यमानम्।

(२४४) मुखेति।—मुखचन्द्रस्य—वदनसुधाकरस्य, सुधारसम्—अमृतद्रवं, ["मुखचन्द्रसुधारसमिव" इत्यत्र "मुखसुधारसमिव" इति पाठे,—मुखस्य, चन्द्रोपमस्य इति भावः] स्यन्दमानं—स्रवन्तम्।

(२४५) अच्छाच्छम्—अत्यच्छं, ["प्रकारे गुणवचनस्य" (८।१।१२ पा०) इति द्विभावः] अश्रुस्रोतसां—बाष्पवारिप्रवाहाणां, सन्तानं—समूहं, महेति।—महामेघमये—निविडजलधरात्मके, विलोचने—नयने यस्य तथाभूत इव, वर्षन्—मुञ्चन्, निरन्तरविमुक्तारावः,—अविरतनिःसृतनिनादः, मुक्तकण्ठ इत्यर्थः, सशब्द इति भावः। ["निरन्तर—" इत्यत्र "इतरवत्" इति पाठे,—नीचजनसदृश इत्यर्थः]।

(२४६) उपरुध्यमानदृष्टिः,—उपरुध्यमाना—आव्रियमाणा, विलुप्यमाना इत्यर्थः,

रुदितशब्दाश्रितश्रवणः प्रत्यभिज्ञाय शनैः शनैः अवादीत्,—"पुत्र! न अर्हसि (२४७) एवं भवितुम्। भवद्विधा न हि अमहासत्त्वाः महासत्त्वता हि प्रथमम् अवलम्बनं लोकस्य, पश्चात् राजबीजिता। सत्त्ववताञ्च अग्रणीः सर्वातिशयाश्रितः क्व भवान्? क्व वैक्लव्यम्? (२४८) 'कुलप्रदीपोऽसि' इति दिवसकरसदृशतेजसस्ते लघूकरणमिव। 'पुरुषसिंहोऽसि' इति

---

दृष्टिः,—दर्शनशक्तिः, नेत्रं वा, ज्ञानं वा यस्य तथाभूतः, ("दृष्टिर्ज्ञानेऽक्ष्णि दर्शने" इत्यमरः) क्षीयमाणजीवनशक्तित्वात् इति भावः। [क्वचित् "अपि" इत्यनेन हीनः पाठः दृश्यते, तत्र मार्यसौष्ठवम्, अशक्यकरणीयमरूपार्थबोधाभावात्]। अविरतेति।—अविरतम्—अविच्छिन्नं रुदितशब्दं—रोदनध्वनिम्, आश्रितं—स्पृष्टं, श्रुतमित्यर्थः, श्रवणं—कर्णः यस्य तथाभूतः, प्रत्यभिज्ञाय—पुत्रोऽयं रोदिति इति स्मृत्या विज्ञाय इत्यर्थः, चिरपरिचितकण्ठस्वरसंस्कारवत्त्वादिति भावः।

(२४७) एवम्—अधीर इति भावः। अमहासत्त्वाः,—अमहाऽनुभावाः, न हि—नैव, महाऽनुभावसम्पन्ना एवेत्यर्थः, महासत्त्वगुणसमन्विताः दृढचित्ता वा इति भावः। महासत्त्वता—महाऽनुभावत्वं, महासत्त्वगुणसमन्वितत्वं मनस्विता वा इत्यर्थः, प्रथमं—मुख्यम् आद्यं वा, अवलम्बनम्—आश्रयः, उदारचेतसां वसुधाकुटुम्बकत्वादिति भावः। राजबीजिता—राजा बीजी—बीजपुरुषः यस्य तस्य भावः, राजपुत्रत्वमित्यर्थः, पश्चात्—द्वितीयमवलम्बनमित्यर्थः, बहिःसाधनत्वात् इति भावः, केवलेन राजवंशजत्वेन लोकस्थितिः कर्त्तुं न शक्यते, तेन तु महाऽनुभावेन सता शक्यते एव इत्याशयः। सत्त्ववतां—सत्त्वगुणसम्पन्नानां मनस्विनां वा, ["यतश्च—" (२।३।४१ पा०) इत्यादिना निर्द्धारणे षष्ठी] अग्रणीः,—अग्रगण्यः, सर्वेति।—सर्वेभ्यः अतिशयः,—अतिरिक्तो गुणराशिरित्यर्थः, तम् आश्रितः, भवान् क्व? वैक्लव्यं—व्याकुलत्वञ्च, क्व? महासत्त्वेषु भवादृशेषु नैतयोः सङ्गतिः युज्यते इति भावः। अत्र विरूपसङ्घटनारूपः विषमालङ्कारः, क्वद्वयेन महतोऽन्तरस्य सूचनात्।

(२४८) कुलप्रदीपः,—वंशोज्ज्वलकर इत्यर्थः, इति, कथनमिति शेषः, एवमुत्तरत्र; दिवसकरसदृशतेजसः,—सूर्य्यसमप्रभावस्य, ते—तव, लघूकरणमिव—तुच्छीकरणमिव, दिवसकरसदृशतेजस्त्वात् कुलप्रदीपोऽसि इति उक्तौ तव लाघवं प्रतिभाति, तदग्रे तेषां निष्प्रभत्वेन प्रतीयमानत्वात् इति भावः।

( २४९ ) शौर्य्यपटुप्रज्ञोपबृंहितपराक्रमस्य निन्देव। 'क्षितिः इयं तव' इति ( २५० ) लक्षणाख्यातचक्रवर्त्तिपदस्य पुनरुक्तम् इव। 'गृह्यतां श्रीः' इति स्वयमेव ( २५१ ) श्रिया गृहीतस्य विपरीतमिव। ( २५२ ) 'अध्यास्यताम् अयं लोकः' इति उभयलोकविजिगीषोः अपुष्कलमिव। ( २५३ ) 'स्वीक्रियतां कोषः' इति शशिकरनिकरनिर्मलयशःसञ्चयैकाभिनिवेशिनो निरुपयोगमिव।

---

( २४९ ) शौर्य्येति।—शौर्य्येण—शूरत्वेन, पराक्रमप्रदर्शनेनेत्यर्थः, पट्वी—निपुणा, या प्रज्ञा—बुद्धिः, शौर्य्यातिशयशालिनी मतिः इत्यर्थः, तया उपबृंहितः,—वर्द्धितः, पराक्रमः,—विक्रमः, सामर्थ्यं वा यस्य तथाभूतस्य, ते इति शेषः, निन्दा इव—निन्दाकरणमिव, तस्य निर्विवेकपशुमात्रत्वात् इतोऽपि अधिकोक्तिः त्वयि सङ्गच्छते इति भावः।

( २५० ) लक्षणेति।—लक्षणेन—ध्वजादिचिह्नेन, आख्यातं—कथितं, चक्रवर्त्तिपदं—साम्राज्यं यस्य तथाभूतस्य, ते इति शेषः, पुनरुक्तमिव—लक्षणेनैव प्रागुक्तत्वात् आम्रेडितमिव, विधात्रैव चक्रवर्त्तित्वे अभिषिक्तस्य तव तादृशवचनस्य अनुवादमात्रत्वात् निरर्थकमिवेति भावः।

( २५१ ) श्रिया—लक्ष्म्या, गृहीतस्य—स्वीकृतस्य, पतित्वेनेति भावः, विपरीतमिव—असदृशमिव इत्यर्थः, तया प्राक् स्वयमेव स्वीकृतत्वेन तथाकथनं प्रमत्तनियोगवत् इति भावः।

( २५२ ) अध्यास्यताम्—अधिष्ठीयताम्, अयं लोकः,—मर्त्त्यलोकः, राजसिंहासनमिति भावः, ["अधिशीङ्—" (१।४।४६ पा०) इत्यादिना आधारस्य कर्म्मत्वम् उक्तत्वञ्च] उभयलोकविजिगीषोः,—स्वर्ग-मर्त्त्ययोः जयाभिलाषिणः, अपुष्कलमिव—अपूर्णमिव, स्वर्गस्यापि सिंहासनोचितस्य केवलमर्त्त्यसिंहासनारोहणोपदेशस्य सामान्यत्वेनानुचितत्वादिति भावः।

( २५३ ) स्वीक्रियतां—गृह्यतां, कोषः,—धनागारम्। शशीति।—शशिनः,—चन्द्रस्य, करनिकरः,—मयूखनिचयः, तद्वत् निर्म्मलानां—शुभ्राणां, पूतानामित्यर्थः, यशसां—कीर्त्तीनां, सञ्चये—सङ्ग्रहे, एकः,—केवलः, अभिनिवेशः,—साग्रहः मनोयोगः विद्यते यस्य तथाभूतस्य, ते इति शेषः, निरुपयोगमिव—निष्प्रयोजनमिव; यशस्विनो

(२५४) 'आत्मीक्रियतां राजकम्' इति गुणगणात्मीकृत-जगतो गतार्थमिव। (२५५) 'उह्यतां राज्यभारः' इति भुवनत्रयभारोचितस्य अनुचितनियोग इव। 'प्रजाः परिरक्ष्यन्ताम्' इति (२५६) दीर्घदोर्दण्डार्गलितदिङ्मुखस्य अनुवाद इव। 'परिजनः परिपाल्यताम्' इति लोकपालोपमस्य (२५७) आनुषङ्गिकमिव। 'शस्त्राभ्यासः कार्यः' इति (२५८) धनुर्गुणकिणकलङ्कालीकृतप्रकोष्ठस्य किम् आदिश्यते? (२५९) 'निग्राह्यतां चापलम्' इति नूतनतरवयसि

(२५४) आत्मीक्रियताम्—आयत्तीक्रियतां, राजकं—राजसमूहः, अकरणे कर्य्यादालङ्घनसम्भावनादिति भावः, गुणेति।—गुणानां—दयादाक्षिण्यादीनां, गणैः,—समूहैः, आत्मीकृतम्—आधीनीकृतं, जगत्—लोकः येन तथाभूतस्य, ते इति शेषः, गतार्थमिव—व्यर्थमिव, राजकानामपि जगदन्तर्निविष्टत्वादिति भावः।

(२५५) उह्यताम्—अवलम्ब्यतां, पाल्यतामित्यर्थः। भुवनत्रयभारोचितस्य—त्रिजगद्भारवहनयोग्यस्य, अनुचितनियोगः इव,—अयुक्तादेश इव, महाभारवहनोचितस्य अल्पभारवहनादेशे न्यूनत्वप्रतिपादनादिति भावः।

(२५६) दीर्घेति।—दीर्घेण—आयतेन, दोर्दण्डेन—भुजयष्ट्या, अर्गलितं—निरुद्धमिति यावत, दिङ्मुखं—दिगन्तरालं येन तथोक्तस्य, ते इति शेषः, अनुवादः इव—भाषाऽनुकरणमिव, आबाल्यात् अवलम्बितभुजेनैव प्रजापालनव्रतपरायणतायाः व्यक्तीभावादिति भावः।

(२५७) आनुषङ्गिकमिव—अनुषङ्गादागतमिव, [ "ठगायस्थानेभ्यः" (४।३।७५ पा०) इति ठक्] अवान्तरकार्य्यस्य उपदेश इव इत्यर्थः, नित्यसम्बन्धवत्त्वादनादेशेऽपि तत्कार्य्यस्य सिद्धत्वादिति भावः।

(२५८) धनुर्गुणेति।—धनुषः,—चापस्य, गुणाः,—मौर्व्यः, तैः, तदाकर्षणैरित्यर्थः,यः किणः,—चर्म्मादिग्रन्थिः,स एव कलङ्कः,—चिह्नं,तेन कालीकृतः,—श्यामीकृतः, प्रकोष्ठः,—कफोणि-मणिबन्धयोः अभ्यन्तरभागः यस्य तथाभूतस्य, आदिश्यते—आज्ञायते, निष्प्रयोजनादेश इत्यर्थः, नित्यमनादिष्ट एव तत्कार्य्यकरणेन तदुपदेशस्य वैयर्थ्यापातादिति भावः।

(२५९) निग्राह्यतां—निवर्त्यतां, परित्यज्यतामित्यर्थः, चापलं—चाञ्चल्यम्।

निगृहीतेन्द्रियस्य निरवकाशा इव मे वाणी। (२९०) 'निरवशेषतां शत्रवो नेयाः' इति सहजस्य तेजस एव इयं चिन्ता" इत्येवं वदन्नेव (२९१) अपुनरुन्मीलनाय निमिमील राजकुलसिंहो लोचने।

अस्मिन्नेवान्तरे (२९२) पूषा अपि आयुषा इव तेजसा व्ययुज्यत। ततश्च लज्जमान इव (२९३) नरपतिजीवितापहरणजनितात् आत्मापराधात् अधोमुखः समभवत्।

---

नूतनतरवयसि—नूतनतरम्—अतिशयेन नूतनं, वयः,—बाल्याद्यवस्थाविशेषः यस्य तादृशि, नवयौवने इत्यर्थः, निगृहीतेन्द्रियस्य—वशीकृतेन्द्रियस्य, निरवकाशा इव—अनवसरा इव, तरुणयौवने स्वयमनुपदिष्ट एव इन्द्रियनिग्रहकरणादिति भावः।

(२९०) निरवशेषतां—निःशेषताम्, [अत्र नयतेः द्विकर्मकत्वात् कर्मणि निरवशेषतायाश्च अकत्वात् तत्र द्वितीया; अन्यत्र मुख्यत्वात् प्रथमा; इह शत्रुषु निरवशेषता न नीयते, परन्तु निरवशेषतायामेव शत्रवः नीयन्ते इति वक्तुरभिप्रायः, तेनैतेषां मुख्यत्वं ज्ञेयम्] नेयाः,—प्रापणीयाः। सहजस्य—स्वाभाविकस्य, तेजसः,—प्रतापविशेषस्य, चिन्ता—भावना, तेजस्विनां तादृशाभिलाषस्य प्रकृतिसिद्धत्वात् तदुपदेशः निरर्थक इति भावः।

(२९१) अपुनरुन्मीलनाय—पुनरुन्मेषनिवृत्तये, चिराय इत्यर्थः, निमिमील—निमीलितवान्, मुद्रिते चकारेत्यर्थः। राजकुलसिंहः,—नृपश्रेष्ठ इत्यर्थः, प्रभाकरवर्द्धन इति यावत्, ["राजकुलसिंहः" इत्यत्र "राजसिंहः" इति पाठान्तरम्]।

(२९२) पूषा अपि—सूर्यः अपि; महीपतिप्रभाकरवर्द्धनवत् अहःपतिः सूर्योऽपीत्यर्थः, [अत्र अपिकारः समुच्चयार्थकः] आयुषेव—राज्ञः प्राणधारणकालेनेव, तेजसा—स्वप्रभावसमूहेन, किञ्चित्कालस्थायि-आयुःस्वरूपेणेति भावः, व्ययुज्यत—व्यहीयत, एकत्र अपराह्णभावात् अन्यत्र च जीवनपरित्यागात् निस्तेजा अभूदिति भावः।

(२९३) नरपतिरिति।—नरपतेः,—राज्ञः, जीवितस्य—जीवनस्य, अपहरणं—मोषणं, तेन जनितः,—उत्पन्नः तस्मात्, आत्मापराधात्—निजकृतात् दोषात्, स्वात्मजेन यत्नेन तत्कृतत्वात् निजापराधतुल्यत्वं मन्तव्यम्, "आत्मा वै जायते पुत्रः इति श्रुतेः; यद्वा,—स्वाधिकारसमये एवापहरणात् स्वयं रक्षितुमशक्यतया अन्यकृतमपि स्वकृतमिव मत्वा स्वस्मिन्नपराधः शङ्कितः इति विभाव्यम्, अधोमुखः —अवनतवदनः, अस्ताचलगमनोन्मुख इत्यर्थः॥

(२६४) भूपालाभावशोकशिखिना इव अन्तस्ताप्यमानः ताम्रतां प्रपेदे । मन्दं मन्दम् (२६५) अप्रियप्रश्नोत्तरपरिहारार्थमिव स्थितिमनुवर्त्तमानो लौकिकीम् अवातरद्दिवः । (२६६) दित्सुरिव जनेशाय जलाञ्जलिम् अपरजलनिधिसमीपमुपससर्प । (२६७) सद्योदत्तजलाञ्जलिः दुःखदहनदग्धमिव करसहस्रम् आलोहितम् अधत्त ।

(२६४) भूपालेति ।—भूपालस्य—राज्ञः, स्तुतिसेतुरत्नकस्य स्वप्रियसेवकस्य च इति भावः, अभावेन—निधनेन, यः शोकः,—मन्युः, स एव शिखी—अग्निः तेनेव, अन्तः,—अभ्यन्तरे, ताप्यमानः,—दाह्यमानः, ताम्रतां—रक्तवर्णतां, प्रपेदे—लेभे ।

(२६५) अप्रियेति ।—अप्रियप्रश्नस्य—राजविनाशरूपायाः अप्रीतिकरजिज्ञासायाः पृच्छायाः, उत्तरपरिहारार्थमिव—कथं राजा मृतः ? केन रोगेण वा ? इत्यादिजिज्ञासाया उत्तरपरिजिहीर्षया इव, स्वदोषापाकरणाय किमेतस्य कारणमिति तु प्राक् तत्त्वतः विदित्वा पुङ्खानुपुङ्खशः देवगणसमीपे उत्तरदानार्थमिव इति वा, ["अप्रियप्रश्नोत्तरपरिहारार्थमिव" इत्यत्र "अप्रियप्रश्नार्थमिव" इति पाठे,—अप्रीतिकरजिज्ञासानिमित्तमिव, कथं राजा मृतः ? इति ज्ञातुमिच्छयैवेति भावः । एतदुक्तोचरणे तु पूर्ववत् नार्थगौरवं परिलक्ष्यते, प्रत्यक्षादलौकिनां साक्षिणाम् अन्यतो जिज्ञासाऽनुपपत्तेः इति ज्ञेयम्] लौकिकीं—लोकसम्बन्धिनीं, स्थितिं—मर्य्यादां, व्यवहारमिति यावत्, अनुवर्त्तमानः,—अनुसरन्, यथा आत्मपरिजनेन आत्मना वा निहतं कमपि दृष्ट्वा कश्चित् जनसमीपे तद्विशेषविवरणगोपनेच्छया तस्मात् अन्तर्धत्ते, तथा सूर्य्योऽपीति भावः, ["अप्रियप्रश्नार्थमिव" इति पक्षे तु,—यथा आत्मीयलोकाः कस्यापि विनाशमुपश्रुत्य तद्बन्धुसमीपे तद्विशेषप्रश्नार्थमागच्छन्ति, तद्वदिति भावः] दिवः,—अन्तरीक्षात्, उच्चस्थानाच्च इति ध्वन्यते, लोकलोचनसमीपादिति भावः अवातरत्—अवारोहत् ।

(२६६) जनेशाय—नरपतये प्रभाकरवर्द्धनाय, जलाञ्जलिं—तर्पणजलपूर्णमञ्जलिं, दित्सुः,—दातुमिच्छुः, ["सनाशंसभिक्ष उः" (३।२।१६८ पा०) इति सन्नन्तात् उः प्रत्ययः] अपरजलनिधिसमीपं—पश्चिमसागरान्तिकम्, उपससर्प—उपजगाम । राज्यवर्द्धन-हर्षयोः पाल्यांशसम्भूतत्वेन तत्सम्बन्धापेक्षिजलाञ्जलियोगवर्णोत्प्रेक्षणम् इह अतिरम्यम् ।

(२६७) सद्य इति ।—सद्यः,—तत्क्षणं, दत्तः,—अर्पितः, जलाञ्जलिः,—पुष्पा-

(२६८) एवञ्च महानराधिपनिधननिधीयमानविपुल-वैराग्ये इव शान्तवपुषि विशति गिरिगुहागह्वरं गभस्ति-मालिनि, (२६९) समुपोह्यमानमहाजनाश्रुदुर्दिनार्द्रीकृते इव निर्वाति आतपे, (२७०) रोदनताम्रसकललोकलोचनरुचा इव लोहितायति जगति, (२७१) उष्णायमानानेकनरनिश्वाससन्ताप-प्लुष्टे इव च नीलायमाने दिवसे, (२७२) नृपानुगमनप्रचलितया

---

करपूर्णजलम् इत्यर्थः येन तथाभूतः, करसहस्रं—कराणां—किरणानां, हस्तानाञ्च, सहस्रं—दशशतसङ्ख्यकं, बहुसङ्ख्यकं वा, आलोहितम्—आरक्तम्, अधत्त—दधार, अस्तमगात् इत्यर्थः।

(२६८) "एवञ्च" इत्यस्य "नरेन्द्रः···हुताशनसत्क्रियया यशःशेषतामनीयत" इत्युत्तरेणान्वयः। महेति।—महानराधिपस्य—महाराजस्य, निधनेन—मरणेन, निधीयमानं—जन्यमानं, विपुलं—महत्, वैराग्यं—संसारेषु वीतस्पृहत्वमित्यर्थः यस्य तथाभूते इव, शान्तवपुषि—सौम्यकलेवरे, निस्तेजसीति भावः, गभस्तिमालिनि—अंशुमालिनि, सूर्ये इत्यर्थः, गिरिगुहागह्वरं—गिरेः,—अस्ताचलस्य, गुहा—विलम् एव, गह्वरं—निवरम्, एतेन वीतरागाचारः सूच्यते।

(२६९) समुपोह्यमानेति।—समुपोह्यमानैः,—सङ्गृह्यमाणैः, शरीरेषु पतनात् धार्यमाणैरिति भावः, वर्द्धमानैरित्यर्थो वा, महाजनानां—साधुजनानाम्, अश्रु-दुर्दिनैः,—अविरलधारं नेत्रवारिवर्षणैः, आर्द्रीकृते इव—आर्द्रतां नीते इव, आतपे—सूर्यालोके, निर्वाति—निर्वाणं गच्छति।

(२७०) रोदनेति।—रोदनेन—क्रन्दनेन ताम्राणि—आरक्तानि, सकलानां—सर्वेषां, लोकानां—जनानां, यानि लोचनानि—नेत्राणि, तेषां रुक्—प्रभा तया इव, लोहितायति—अलोहितं लोहितं भवति, ["लोहितादिडाज्भ्यः क्यष्" (३।१।१३ पा०) इति क्यषि "वा क्यषः" (१।३।९० पा०) इति पाक्षिकपरस्मैपदित्वात् शतृप्रत्ययः]।

(२७१) उष्णेति।—उष्णायमानैः,—उष्णा इव आचरद्भिः, अनेकेषां—बहूनां, नराणां—जनानां, निश्वासैः,—नासावायुभिः, यः सन्तापः,—सम्यक् तपनं, तेन प्लुष्टे इव—दग्धे इव, नीलायमाने—कृष्णायमाने, नैशान्धकारागमनादिति भावः।

(२७२) नृपेति।—नृपस्य—राज्ञः, अनुगमनं—पश्चात् प्रयाणं, सहगमनमिति

इव लक्ष्म्या मुच्यमानासु कमलिनीषु, (२७३) पतिशुचा इव परिहृतच्छायायां श्यामायमानायां भुवि, कुलपुत्रेषु इव परित्यक्तनिजकलत्रेषु कृतकरुणप्रलापेषु वनान्तान् आश्रयत्सु दुःखितेषु चक्रवाकेषु, (२७४) छत्रभङ्गभीतेषु इव निगूढकोशेषु कुशेशयेषु, स्फुटितदिग्वधूहृदयरुधिरप्लवे इव गलिते रक्तातपे,

---

भाव:, तस्यै प्रचलिता—प्रस्थिता तया इव, लक्ष्म्या—श्रिया, राजपत्न्येति भाव:, मुच्यमानासु—विहीयमानासु, कमलिनीषु—पद्मिनीषु, मुद्रितकमलिनीषु इति भावः।

(२७३) पतिशुचा इव—भर्तृमरणशोकेन इव, परिहृतच्छायायां—परिहृता—विपरीता, छाया—आतपप्रतिपक्षजातिः, कान्तिश्च यस्याः तथाभूतायां, श्यामायमानायां—श्यामा—वियामा, रात्रिरिति यावत्, अप्रसूताङ्गना च, काचिन्नायिका इति भाव:, तद्वदाचरन्त्यां, श्यामतामापद्यमानायामित्यर्थः, ("श्यामो वटे प्रयागस्य ……। स्त्री शारिवौषधी। अप्रसूताङ्गनायाञ्च प्रियङ्गावपि वागुजौ। यमुनायां त्रियामायाम्" इति मेदिनी) भुवि—पृथिव्याम्। [इहाचारक्यङ्योगवत्त्वात् धर्म-लुप्तोपमा, उत्प्रेक्षाया अङ्गम्]। कुलपुत्रेषु इव—सत्कुलजातेषु इव, परित्यक्तेति। —परित्यक्तानि—विसृष्टानि, राजमरणदुःखात् विधिनियोगाच्च इति भाव:, निज-कलत्राणि—निजस्त्रियः यैः तथोक्तेषु, ["परित्यक्तनिजकलत्रेषु" इत्यत्र "परित्यक्त-कलत्रेषु" इति पाठः पुस्तकान्तरसम्मतः]। कृतकरुणप्रलापेषु—करुणं विलपत्सु इत्यर्थः, वनान्तान्—जलान्तदेशान्, काननान्तांश्च, ("वनं नपुंसकं नीरे निवासा-लयकानने" इति मेदिनी) रात्रौ तेषां वियुक्तभावेन जलाशयतीरे अवस्थानस्य प्रकृतिसिद्धत्वादिति भावः।

(२७४) छत्रेति।—छत्रभङ्गः,—राजविनाशः, राजविनाशज उपद्रवः इति यावत्, ("छत्रभङ्गोऽपि वैधव्ये स्वातन्त्र्य-नृपनाशयोः" इति मेदिनी) छत्राकारपत्र-सङ्कोचश्च, तस्मात् भीतेषु—त्रस्तेषु इव, निगूढेति।—निगूढः,—गोपितः, सम्पुटितश्च, कोशः,—धनसञ्चयः, कर्णिका च,बीजकोश इत्यर्थः यैः तथोक्तेषु, कुशेशयेषु—कमलेषु, ["शयवास—" (६।३।१८ पा०) इत्यादिना सप्तम्याः अलुक्। "सहस्रपत्रं कमलं शतपत्रं कुशेशयम्" इत्यमरः]। स्फुटितेति।—स्फुटितानि—पतिशोकात् विदीर्णानि, दिशो वध्व इव, तासां यानि हृदयानि—वक्षांसि, तेषां रुधिरप्लवे इव—रक्तप्रवाहे इव, गलिते—निःसृते, रक्तातपे—अस्तकालिकारक्तसौरालोके।

क्रमेण च (२७५) लोकान्तरम् उपगतवति अनुरागशेषे जाते तेजसाम् अधीशे, गगनतलवितन्यमानबहलरागपाटलायां शेतपताकायाम् इव प्रवृत्तायां सन्ध्यायां, (२७६) शवशिविकाऽलङ्कारकृष्णचामरमालासु इव स्फुरन्तीषु दर्शनप्रतिकूलासु तिमिरलेखासु, (२७७) असितागुरुकालकाष्ठायां केनापि चितायाम् इव रचितायां रजन्यां, (२७८) दन्तामलपत्रप्रसाधितकर्णिकासु केशरमालाकल्पितमुग्धमालिकासु

(२७५) लोकान्तरम्-अस्ताचलं, परलोकञ्च, उपगतवति-प्राप्तवति, अनुरागशेषे—रक्तवर्णमात्रावशिष्टे, लोकानुरागमात्रावशिष्टे च, जाते—भूते, तेजसामधीशे—सूर्य्ये, राज्ञि च। गगनेति।—गगनतले—आकाशदेशे, वितन्यमानेन—विस्तीर्य्यमाणेन, बहलेन—प्रभूतेन, रागेण—लौहित्येन, पाटला—श्वेतरक्ता तस्यां, शेतपताकायामिव—मृतवैजयन्त्यामिवेत्युपमा, शवस्य दाहार्थं श्मशानभूमिनयनसमये तदानीं पताकादिभिः शोभायात्रा क्रियतेत्यनुमीयते, तेन तदनुकूलवर्णना परस्तात् दृश्यते इति विभाव्यम्; यद्वा,—श्वेतेति पदं राजशोकात् सर्व्वदैव निस्तब्धतया तदानीन्तनसन्ध्याया भीषणत्वद्योतनाय इति बोद्धव्यम्। प्रवृत्तायाम्—उपस्थितायाम्।

(२७६) शवेति।—शवस्य—मृतस्य, शिविका—यानविशेषः, तस्याः अलङ्काराः,—आभरणभूताः, कृष्णाः,—कृष्णवर्णाः, चामरमालाः,—बालव्यजनश्रेणयः तासु इव, स्फुरन्तीषु—द्योतमानासु। दर्शनप्रतिकूलासु—दृष्टिरोधिनीषु, अन्यत्र,—भीतिवहासु, तिमिरलेखासु—अन्धकारश्रेणिषु।

(२७७) असितेति।—असितानि—कृष्णानि, अगुरूणि—सुगन्धिकाष्ठविशेषा इव, कालानि—कृष्णवर्णानि, काष्ठानि—दारूणि, इन्धनानि इत्यर्थः, कालाः,—कृष्णवर्णाः, अन्धकारागमादिति भावः, काष्ठाः,—दिशश्च यस्यां यस्या सा तथाभूतायां, ("काष्ठा दारुहरिद्रायां···।···दिशि च स्त्री दारुणि स्यान्नपंसकम्" इति मेदिनी) चितायां—मृतदाहार्थकाष्ठचुल्ल्यामिव, परिदृश्यमानायामिति शेषः।

(२७८) दन्तेति।—दन्तवत्—गजदन्त इव, अमलं—शुभ्रं, पत्रं—दलम्; अन्यत्र—दन्तस्य—गजदन्तस्य, अमलं पत्रं—गजदन्तनिर्म्मितस्वच्छपत्रमित्यर्थः, तेन प्रसाधिताः,—अलङ्कृताः, शोभिता इति यावत्, कर्णिकाः,—वीजकोषाः, कर्णभूषणानि च यासां तासु। ("कर्णिका करिहस्ताग्रे···।···अब्जवराटे कर्णभूषणे"

अनुसर्तुमिव उद्यतासु प्रहसितमुखीषु कुमुदलक्ष्मीषु,
(२७९) अनवरतत्रिदशविमानकिङ्किणीक्वणिते इव श्रूयमाणे
(२८०) शाखिशिखरकुलायनिलीयमानशकुनिकुलकलकूजिते,
(२८१) नाकपथप्रस्थितपार्थिवप्रत्युद्गतपुरुहूतातपत्र इव

इति मेदिनी)। केसरेति।—केसराणां—किञ्जल्कानां, वकुलानाञ्च, ("केसरं हिङ्गुले क्लीवं किञ्जल्के न स्त्रियां पुमान्। सिंहसटायां पुन्नागे वकुले नागकेशरे" इति मेदिनी) मालया—श्रेण्या, स्रजा च, कल्पिता—रचिता, मुखमाला—शीर्षशोभिहारविशेषः याभिः तथाभूतासु, अनुसर्तुं—सहगमनाय इत्यर्थः, उद्यतासु—प्रवृत्तासु, पतिशोकादिति भावः, प्रहसितमुखीषु—प्रस्फुटितासु इत्यर्थः, हसन्मुखीषु च, स्वामिसहगमनामोदादिति भावः, कुमुदलक्ष्मीषु—उत्पलश्रीषु, राजमहिषीषु इति भावः।

(२७९) अनवरतेति।—अनवरतम्—अविच्छिन्नम्। ["अनवरत—" इत्यत्र "अवतरत्—" इति पाठे,—अवतरतः—अवरोहतः, व्योममार्गात् इति शेषः, अन्यदुभयसाधारणम् इति ज्ञेयम्] त्रिदशविमानस्य—देवव्योमयानस्य, देवरथस्य इत्यर्थः, राज्ञः स्वर्गनयनार्थम् आगतस्येति भावः, किङ्किणीनां—क्षुद्रघण्टिकानां, क्वणिते इव—निस्वने इव यद्वा,—अनवरतत्रिदशविमानानां—राज्ञः पारलौकिकावलोकनाय निरन्तरं समवेतानां सुरसङ्घातानां यानि आकाशयानानि तेषामित्यर्थः, किङ्किणीनां क्वणिते इव।

(२८०) शाखीति।—शाखिनां—वृक्षाणां, शिखरेषु—अग्रेषु, ये कुलायाः,—नीडानि, ("कुलायो नीडमस्त्रियाम्" इत्यमरः) तेषु निलीयमानानाम्—उपविशतां, निविशमानानामित्यर्थो वा, शकुनीनां—पक्षिणां, कुलस्य—वृन्दस्य, कलकूजितं—मधुरास्फुटध्वनिः तस्मिन्। ["निलीयमानशकुनिकुलकलकूजिते" इत्यत्र "लीयमानशकुनिकुलकूजिते" इति पाठे,—तत्र लीयमानानां—श्लिष्यतां, संश्लिष्टावयवानामित्यर्थः, नैशतमःसम्भ्रमात् इति भावः, शकुनिकुलानां कूजितम्—अव्यक्तशब्दः तस्मिन् इत्यर्थः]।

(२८१) नाकपथेति।—नाकपथं—स्वर्गमार्गं, प्रस्थितः,—प्रचलितः, यः पार्थिवः,—राजा, तं प्रत्युद्गतः,—प्राप्तः, तदभिनन्दनार्थम् उपस्थितः इत्यर्थः, यः पुरुहूतः,—इन्द्रः, ("इन्द्रो मरुत्वान् मघवा···।···पुरुहूतः पुरन्दरः" इत्यमरः) तस्य आतपत्रमिव—छत्रमिव तस्मिन्, अतिविशदे इति भावः, [सत्वत्र भावे

पूर्व्वस्यां दिशि दृश्यमाने चन्द्रमसि, नरेन्द्रः स्वयं समर्पितस्कन्धैः गृहीत्वा शवशिविकां शिविसमः सामन्तैः पौरैश्च पुरोहितपुरःसरैः सरितं सरस्वतीं नीत्वा नरपतिसमुचितायां चितायां हुताशनसत्क्रियया यशःशेषताम् अनीयत।

देवोऽपि हर्षः (२८२) पुञ्जीभूतेन सकलेनेव जीवलोकेन लोकेन राजकुलसम्बद्धेनाशेषेण शोकमूकेन परिजनेन च परिवृतः, अन्तर्वर्त्तिनाऽपि पितृशोकानलतप्तेन स्नेहद्रवेण बहिरिव सिच्यमानः, निर्व्यञ्जनायां धरण्याम् उपविष्ट एव तां निशी-

---

सप्तमी] नरेन्द्रः,—प्रभाकरवर्द्धनः, [उक्ते कर्म्मणि प्रथमा] स्वयं समर्पितस्कन्धैः,—राज्ञि बहुमानात् आत्मनैव दत्तस्कन्धैः। शवशिविकां—मृतवाहनीमित्यर्थः। शिविसमः,—शिविर्नाम नृपतिविशेषः तत्समः, अर्थिसार्थप्रार्थितार्थपूरणव्रतत्वयोगात् इति भावः। सामन्तैः,—अधीश्वरैः। पुरोहितपुरःसरैः,—पुरोहितः,—पुरोधाः, पुरःसरः,—अग्रगामी, और्द्ध्वदेहिककृत्यसम्पादनाय इति भावः येषां तैः। सरितं सरस्वतीं—सरस्वतीनदीतीरमित्यर्थः। नरपतिसमुचितायां—राजयोग्यायां, चन्दनकाष्ठादिरचितायामिति भावः। हुताशनसत्क्रियया—अग्निसत्कारेण, [“हुताशनसत्क्रियया” इत्यत्र “हुताशसत्क्रियया” इति पाठेऽपि स एवार्थः] यशःशेषतां—कीर्त्तिमात्रावशेषतां, भस्मीभूततामिति भावः, [नयतेः द्विकर्म्मकत्वेन कर्म्मणि गौणत्वादत्र द्वितीया ज्ञेया] अनीयत—प्रापित इत्यर्थः, दग्धदेहः कृत इति भावः।

(२८२) पुञ्जीभूतेन—एकत्र समवेतेन, सकलेन—कृत्स्नेन, जीवलोकेनेव—भुवनवासिप्राणिनेव, लोकेन—प्रजाजनेनेति यावत्, राजकुलसम्बद्धेन—राजवंशसम्भ्रान्तेन, अशेषेण—समस्तेन, शोकमूकेन—शोकातिशय्येन इत्यर्थः, परिजनेन—परिवारवर्गेण, [क्वचित् “परिजनेन च” इति पाठो न दृश्यते। तत्र “लोकेन” सह विशेषणसम्बन्धः, राजकुलसम्बद्धेन परिजनेन इति भावः] अन्तर्वर्त्तिना—अन्तःस्थितेन। [“पितृशोकानलतप्तेन” इत्यत्र “शोकानलतप्तेन” इति पितृपदविनिर्मुक्तः पाठः पुस्तकान्तरे विद्यते] स्नेहद्रवेण—स्नेहरसेन, पितृभक्त्या इति भावः, सिच्यमानः,—आर्द्रीक्रियमाणः, पितृशोकेन अतीवाकुल इति भावः, स्नेहद्रव्यं हि यथा अग्न्युत्तापेन समधिकं स्फीतं सत् प्रबलवेगेन आधारगर्भमतिक्रम्य तद्बहिरवयवमपि सिक्तीकरोति तथा सोऽपि महाशोकसन्तापरविकाया अन्तर्वर्त्तिन्या अपि पितृ-

थिनीं भीमरथीभीमाम् अखिलां सराजको जजागार; अजनि च अस्य चेतसि,—"ताते (२८३) दूरीभूते अनाथीभूतः सम्प्रति एतावान् खलु जीवलोकः। तथा हि लोकस्य भग्नाः पन्थानः, मनोरथानां खिलीभूतानि भूरिस्थानानि, स्थगितानि आनन्दस्य द्वाराणि, सुप्ता सत्यवादिता, लुप्ता लोकयात्रा, (२८४) विलीना बाहुशालिता, प्रलीना प्रियालापिता,

---

भक्त्या उच्छलिततया वहिः प्रकटितया अतीव विगलितहृदयः अभवदित्याशयः निर्व्यवधानायां—निरासनायामिति यावत्। निशीथिनीं—रजनीम्, [अत्र व्याप्त्यर्थे द्वितीया]। भीमरथीभीमां—भीमरथी—नरकनदी, कालरात्रिः वा, तद्वत् भीमा—भयङ्करी ताम्; केचित्तु—"सप्तसप्ततिमे वर्षे सप्तमे मासि सप्तमी। रात्रिर्भीमरथी नाम नराणामतिदुस्तरा॥" इत्युक्त्या सप्तसप्तत्यां वर्षेषु सप्तसङ्ख्यकमासेषु दिनेषु च अष्टसु गतेषु एका सप्तमी रात्रिर्भवति, सप्तसप्ततितमे वर्षे सप्तमे मासि सप्तमी रजनी एव सा वेदितव्या, सा भीमरथीत्युच्यते, तामतिक्रान्तो वर्षशतजीवी नरो भवति इति आचक्षते। अखिलां—सर्व्वाम्। सराजकः,—राजसमूहैः परिवृतः।

(२८३) दूरीभूते—परलोकं गते सति, सम्प्रति—अधुना, एतावान् खलु—एतत्पर्य्यन्त एव, सुविशाल इत्यर्थः, जीवलोकः,—संसारः, अनाथीभूतः,—प्रभुशून्यः, ["अनाथीभूतः" इति पाठः पुस्तकान्तरे न दृश्यते] इतः परं संसारसुखस्य अपगमात् लोकानामिति भावः। ["तथा हि" इति पाठः पुस्तकान्तरे नास्ति]। लोकस्य—जगतः, भुवनस्येति यावत्, ("लोकस्तु भुवने जने" इत्यमरः) पन्थानः,—स्थिति-मार्गाः, मर्य्यादा इत्यर्थः, भग्नाः,—विपर्य्यस्ताः। मनोरथानाम्—अभिलाषाणां, भूरि-स्थानानि—प्रभूता विषयाः, ["भूरिस्थानानि" इत्यत्र "भूतिस्थानानि" इति पाठे,—समृद्धिविषयाः, उच्चाभिलाषा इत्यर्थः] खिलीभूतानि—सङ्क्षिप्तीभूतानि, रुद्धीभूतानि इति यावत्, प्रार्थनाशतपूरकाभावात् शून्यानि इति भावः, ("खिलमप्रहते क्लीबं सारसङ्क्षिप्त-वेधसोः" इति मेदिनी)। आनन्दस्य—प्रमोदस्य, द्वाराणि—कपाटानि इति यावत्, स्थगितानि—निरुद्धानि इति यावत्। सत्यवादिता—तथ्यभाषणशीलता, सुप्ता—निद्रिता। लोकयात्रा—संसारयापनं, सुखेन संसारस्थितिः इति यावत्, लुप्ता—विनष्टा।

(२८४) बाहुशालिता—बाहुवीर्य्यमिति भावः, विलीना—विलयं गता। प्रियालापिता—मधुरभाषित्वं, प्रलीना—विध्वस्ता।

(२८५) प्रोषिताः पुरुषकारविहारविकाराः, समाप्ता समरशौण्डता, (२८६) ध्वस्ता परगुणप्रीतिः, विश्रान्ता विश्वासभूमयः, अपदानि अवदानानि, निरुपयोगानि शास्त्राणि, (२८७) निरवलम्बना विक्रमैकरसता, कथाऽवशेषा विशेषज्ञता, (२८८) ददातु जनो जलाञ्जलिम् और्जित्याय, प्रतिपद्यतां प्रव्रज्यां प्रजापालता, (२८९) बध्नातु वैशस्यवेणीं वरमनुष्यता, समाश्रयतु राजश्रीः आश्रमपदं,

---

(२८५) पुरुषेति।—पुरुषकारस्य—पौरुषस्य, विहारः,—विलसितं, तस्य विकाराः,—विविधरूपता इत्यर्थः, प्रोषिताः,—दूरं गता इति भावः। समरशौण्डता—रणमत्तता, आहवदक्षता वा, सङ्ग्रामे वीरत्वप्रकटनमित्यर्थः, समाप्ता—समाप्तिं गता।

(२८६) परगुणप्रीतिः,—अन्योत्कर्षाभिनन्दनमिति यावत्, ध्वस्ता—नाशं गता। विश्वासभूमयः,—प्रत्ययस्थानानि, विश्रान्ताः,—विश्रान्तिं गताः। अवदानानि—वृत्तकर्माणि, अनुष्ठितानि यशस्कराणि कर्माणि इत्यर्थः, [“अवदानं कर्म वृत्तम्” इत्यमरः। “अवदानानि” इत्यत्र “अपदानानि” इति पाठेऽपि स एवार्थः। इह अवदानापदानयोः [illegible]साम्यत्वेन वृत्त्यनुप्रास इति ज्ञेयम्] अपदानि—निराश्रयाणि। शास्त्राणि—आगमाः, हितानुशासनग्रन्था इति यावत्, [शासधातोः “सर्वधातुभ्यः ष्ट्रन्” (उ० ४ पा० १५८ सू०) इति ष्ट्रनि रूपम्] निरुपयोगानि—निष्प्रयोजनानि, नैगमसेतुपालकाभावेन शास्त्रविहितकर्माकरणादिति भावः।

(२८७) विक्रमेति।—विक्रमे—शौर्यप्रदर्शने एव, एकः,—मुख्यः, रसः,—रागो येषां तेषां भावः तत्ता, यद्वा—विक्रमः,—शौर्यमेव, एकः रसः तस्य भावः तत्ता, निरवलम्बना—निराश्रया। विशेषज्ञता—विशिष्टज्ञानं, कथाऽवशेषा—कथामात्रशेषा, विनष्टा इत्यर्थः। इह “भग्नाः प्रयाणं” इत्यारभ्य एतदवधि असम्बन्धे सम्बन्धरूपातिशयोक्तिः, मार्गविपर्यासादीनाम् असम्बन्धानां सम्बन्धत्वप्रतिपादनात् इति सङ्क्षेपः।

(२८८) जनः,—लोकः, और्जित्याय—ऊर्जितस्य—बलान्वितस्य भावः और्जित्यं तस्मै, तेजस्वितायै इत्यर्थः, [ऊर्जं जने चौरादिकस्य निष्ठायां भावे ष्यञि रूपम्] जलाञ्जलिं—तर्पणसलिलं, ददातु, और्जित्यं विलुप्तमिति भावः। प्रजापालता—प्रजापालनधर्मः, प्रव्रज्यां—सन्न्यासधर्मं, प्रतिपद्यताम्—आश्रयतु, स्वाश्रयाभावादिति भावः।

(२८९) वरमनुष्यता—मनुष्यश्रेष्ठता, वैशस्यवेणीं—विधवाप्राय्यां वेणीबन्ध-

(२९०) परिधत्तां धवले वाससी वसुमती, वहतु वल्कले विलासिता, तपस्यतु तपोवनेषु तेजस्विता, (२९१) प्रावृणोतु चीवरे वीरता, (२९२) क्व गम्यतां पुनस्तस्य कृते कृतज्ञतया ? क्व पुनः प्राप्स्यति तादृशान् महापुरुषनिर्म्माणपरमाणून् परमेष्ठी ? शून्याः संवृत्ता दश दिशो गुणानां, जगत् जातम् अन्धकारं धर्म्मस्य, निष्फलम् अधुना जन्म शस्त्रोपजीविनाम्। तातेन विना (२९३) कुतस्त्या दिवसम् असमसमर-

मित्यर्थ, वेश्मात्—गृहात्। राजश्रीः,—राजलक्ष्मीः, आश्रमपद—तपोवनमित्यर्थः, समाश्रयतु—गच्छतु।

(२९०) वसुमती—पृथ्वी, धवले—शुभ्रे, न तु रक्ते इति भावः, वाससी—वस्त्रे, परिधत्तां—धारयतु, वैधव्यादिति भावः। विलासिता—विलसनशीलता, वल्कले—तरुत्वचौ, वहतु—धारयतु, तपस्यां करोतु इति भावः। तेजस्विता—प्रतापशालित्व, तपोवनेषु—आश्रमेषु, तपस्यतु—तपश्चरतु।

(२९१) वीरता—वीरधर्म्मः, चीवरे—वसनखण्डे, कौपीनं तदुचितमुत्तरीयञ्च इति भावः, प्रावृणोतु—आच्छादयतु, परिदधातु इत्यर्थः।

(२९२) कृतज्ञतया—कृतोपकारवेदितया, तस्य—देवस्य, पितुरिति भावः, कृते—निमित्त, तन्मरणादेव कारणादित्यर्थः, पुनः क्व गम्यताम् ?—न कुत्रापि इति भावः, जगति स एक एव कृतज्ञ आसीत्, अतस्तदभावे कृतज्ञता निराश्रया जाता इति तात्पर्य्यम्। परमेष्ठी—विधाता, तादृशान्—तथाभूतान्, महेति।—महापुरुषनिर्म्माणस्य—नरश्रेष्ठरचनायाः, परमाणून्—द्व्यणुकभूतानां क्षित्यादीनां चतुर्णाम् आरम्भकान् अन्तिमावयवान्, भूतांशनिवहान् इत्यर्थः, क्व—कुत्र, पुनः प्राप्स्यति ?—न कुत्रापि इति भावः, तादृशमहापुरुषः पुनर्नोत्पत्स्यते इति निष्कर्षः। गुणानां—दयादाक्षिण्यादीनां, दश दिशः शून्याः,—रिक्ताः, संवृत्ताः,—जाताः। धर्म्मस्य—सुकृतस्य, जगत्—लोकः, अन्धकारं—तमोमयमिति यावत्, जातं—भूतम्। अधुना शस्त्रोपजीविनां—शस्त्रव्यवसायिनां, जन्म—उत्पत्तिः, निष्फलं—निरर्थकं, तन्निकषपस्य सज्जनस्य अपायत्वेन तद्गुणपरीक्षाया अयोगत्वादिति भावः।

(२९३) कुतस्त्याः,—कुत आगताः, न कुतोऽपि आगमिष्यन्तीति यावत्, न पुनः भविष्यन्तीति भावः। [ "अव्ययात्त्यप्" (४।२।१०४ पा॰) इत्यत्र "अमेहक्व-

रससमारब्धकलहकथाकण्टकितसुभटकपोलभित्तयो वीर-गोष्ठ्यः ? अपि नाम स्वप्नेऽपि दृश्येत दीर्घरक्तनयनं पुनः तन्मुखसरोजम् ? जन्मान्तरेऽपि पुनः (२९४) परिष्वज्येत तल्लोहस्तम्भाभ्यधिकगरिमगर्भं भुजयुगलम् ? लोकान्तरेऽपि (२९५) पुत्र ! पुत्र ! इति आलपतः श्रूयेत सा सुधारस-मुद्गिरन्ती मथ्यमानक्षीरसागरोद्गारगम्भीरा भारती ?" इति। एतानि च अन्यानि च चिन्तयत एव अस्य कथमपि सा क्षयम् इयाय यामिनी।

---

तसिलादिभ्य एव" (वा॰) इत्यनयेन तसेर्योगात्स्यप्] दिवसं—समस्त दिन व्याप्येत्यर्थः [ "कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा॰) इति सूत्रेण द्वितीया ] असमेति।—असमेन—अतुल्येन, अनुपमेयेन इत्यर्थः, समररसेन—सङ्ग्रामानुरागेण, समारब्धा—उपक्रान्ता, या कलहकथा—विग्रहवाक्य, युद्धविषयकालाप इति भावः, तया कण्टकिताः,—हर्षितलोमानः, सुभटानां—योद्धॄणां, कपोलभित्तयः,—गण्डतटाः यासु ताः, वीरगोष्ठ्यः,—वीरसभाः। इह स-म-र-कवर्णानां असकृदावृत्त्या वृत्त्यनुप्रासः। अपि—प्रश्ने। नाम—सम्भावनायाम्। दीर्घेति।—दीर्घे—आयते, रक्ते—रक्तवर्णे, नयने—लोचने यत्र तादृक्।

(२९४) परिष्वज्येत—आलिङ्ग्येत। तदिति।—तस्य—पितुः, लोहस्तम्भात्—आयसस्थूणातः, अभ्यधिकः,—अतिरिक्तः, गरिमा—गौरव, गर्भे—अभ्यन्तरे यस्य तथाभूत, भुजयुगल—बाहुद्वयम्।

(२९५) [ "पुत्र ! पुत्र !" इत्यत्र "पुत्र !" इति पाठः पुस्तकान्तरे दृश्यते, तत्रामन्त्रितसम्मतत्वाभावान्न तथाऽर्थसौष्ठवम् इति ज्ञेयम् ] आलपतः,—आभाष-माणस्य, सुधारसम्—अमृतद्रवम्, उद्गिरन्ती—वर्षन्ती, मथ्यमानेति।—मथ्य-मानस्य—विलोड्यमानस्य, क्षीरसागरस्य—क्षीरोदस्य, उद्गारवत्—निनादवत् इति यावत्, [ इहोद्गारशब्दस्य गौणार्थावलम्बनेन जुगुप्साव्यञ्जकत्वाभावात् अश्लीलत्वदोषस्य शङ्का न कार्य्येति ] गम्भीरा—गभीरा, भारती—वाणी। अस्य—हर्षस्य, [ अनादरे षष्ठी ] हर्षमनादृत्येत्यर्थः, क्षयम्—अस्तमित्यर्थः, इयाय—जगाम, असौ महाशोकेन चिन्ताकुलतया निशीथिन्या निमेषार्द्धमपि न निदद्रौ इत्याशयः।

(२९६) ततः शुचेव मुक्तकण्ठम् आरटत्सु कृकवाकुकुले गृहगिरितरुशिखरेभ्यः, पातयत्सु आत्मानं मन्दिरमयूरेषु, परित्यक्तनिजनिवासेषु च वनाय प्रस्थितेषु पतत्रथकुलेषु, सद्यस्तनूभूते ताम्यति तमसि, (२९७) मन्दीभूतात्मस्नेहेषु अभावम् अभिलषत्सु प्रदीपेषु, (२९८) स्फुरदरुणवल्कलप्रावृतवपुषि प्रव्रज्यामिव प्रतिपन्ने नभसि, (२९९) प्रभातसमयेन समुच्चीयमानासु

(२९६) "तत" इत्यस्य "चचाल देवी हर्षः" इत्यग्रेणान्वयः। शुचा इव—शोकेनेव, पदमेतत् कृकवाकुप्रभृतिष्वपि समुच्चयबलात् अन्वेतव्यं, वक्ष्यमाणसमुच्चयार्थकेन च-शब्देन योगात् सकृत्प्रयोगस्य सकृदर्थबोधकत्वेन तत्रैवान्वयः यद्यप्युचितः, तथाऽपि समुच्चयस्य तु पर्यवसाने सम्बन्धं विना चारितार्थ्याभावात् इति ज्ञेयम्, मुक्तकण्ठ—स्फुटगलम्, उच्चैरित्यर्थः, आरटत्सु—नदत्सु। कृकवाकुकुलेषु—ताम्रचूडवृन्देषु, ("कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः" इत्यमरः)। गृहेति।—गृह-गिरि-तरुणाः—भवन पर्वत-वृक्षाणां, शिखराणि—अग्रभागाः तेभ्यः, आत्मानं—स्वं, पातयत्सु—नक्षिपत्सु, अवरोहत्स्विति भावः, मन्दिरमयूरेषु—गृहमयूरेषु। परित्यक्तनिजनिवासेषु—उत्सृष्टनीडेषु, [ "परित्यक्तनिजनिवासेषु" इत्यत्र "परित्यक्तनिवासेषु" इति पाठान्तरम् ] वनाय—अरण्याय, अरण्यमित्यर्थः, [ "क्रियार्थोपपदस्य—" ( २।३।१४ पा० ) इत्यादिना अप्रयुज्यमानस्य तुमुन कर्म्मणि चतुर्थी ] प्रस्थितेषु—चलितेषु, पतत्रथकुलेषु—पक्षिवृन्देषु, [ "पतत्रथकुलेषु" इत्यत्र "पतत्रथेषु" इति पाठान्तरम् ]। सद्यः,—तत्क्षणं, तनूभूते—विरलीभूते, ताम्यति—अवसादं गच्छतीत्यर्थः, तमसि—अन्धकारे।

(२९७) मन्दीभूतेति।—मन्दीभूतः,—ह्रासं गतः, आत्मनः,—स्वस्य, स्नेहः,—तैलम्, आत्मनि—स्वस्मिन्, स्नेहः,—प्रेम च, ममता इत्यर्थः येषां तेषु, अभावं—नाशम्, अभिलषत्सु—वाञ्छत्सु, तैलाभावात् आत्मवैराग्याच्च निर्वाणोन्मुखेषु इति भावः।

(२९८) स्फुरदिति।—स्फुरन्—उद्गच्छन्, अरुणः,—सूर्यसारथिः, वल्कलमिव—वृक्षत्वगिव, स्फुरत्—दीप्यमानम्, अरुणं—रक्तवर्णं, वल्कलमिति च, तेन प्रावृतम्—आच्छादितं, वपुः,—शरीरं यस्य तथाभूते, प्रव्रज्यामिव—सन्न्यासधर्म्ममिव, प्रतिपन्ने—प्राप्ते, नभसि—आकाशे, अरुणोदयवेलायामिति भावः।

(२९९) प्रभातसमयेन—प्रातःकालेन, समुच्चीयमानासु—एकैकशः गृहीता

पार्थिवास्थिशकलकलासु इव कलविङ्ककन्धराधूसरासु तारकासु, (३००) भूभृद्धातुगर्भकुम्भधारिषु (३०१) विविध-सरःसरित्तीर्थाभिमुखेषु प्रस्थितेषु वनकरिकुलेषु, (३०२) श्याव-शुचिसिक्थपटलपाण्डुरे पिण्डे इवापरपयोनिधिपुलिनपरिसरे

निजपेटिकायां सञ्चीयमानासु इत्यर्थः, विलयं नीयमानास्विति भावः, [ 'समुच्चीय-मानासु" इत्यत्र "समुत्तीर्य्यमाणासु" इति पाठे,—अवतल्यमाणासु इत्यर्थः, प्रभावा-धिक्येन तेजस्तिरस्करणात् अदृश्यतां प्राप्यमाणासु इति भावः ] पार्थिवस्य—राज्ञः, अस्थां—कीकसानां, ("कीकसं कुल्यमस्थि च" इत्यमरः) शकलाः,—खण्डाः इव याः कलाः,—चन्द्रकलाः तास्विव ; यद्वा,—अस्थिशकलानां—कीकसखण्डानां, कलाः,—सङ्घाः तास्विवेत्युत्प्रेक्षा, कलविङ्कस्य—ग्रामचटकस्य, ("चटकः कल-विङ्कः स्यात्" इत्यमरः) कन्धरा—ग्रीवा इव, धूसराः,—ईषत्पाण्डुवर्णाः तासु, [ "कृधूमदिभ्यः कित्" (उ० ३ पा० ३ सू०) इति सरन्प्रत्ययस्य कित्त्वात् बाहुलक-ग्रहणेन षत्वाभावाच्च रूपम् ] तारकासु—नक्षत्रेषु। एतादृशात् परमस्थिसञ्चयनकृत्य-मुक्तं कात्यायनेन,—"अपरेद्युस्तृतीये वा अस्थ्नां सञ्चयनं स्मृतम्। ततो यज्ञीयवृक्षीयां शाखामादाय वाग्यतः॥ प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानिव॥" इति।

(३००) भूभृदिति।—भूभृतः,—पर्वतस्य, धातवः,—गैरिकादयः, गर्भे—मध्ये ययोः तादृशौ, कुम्भौ—कपोलपिण्डौ, धरन्तीति तथोक्तेषु ; अन्यत्र,—भूभृतः,—राज्ञः, धातवः,—पूर्वोक्तानि सञ्चितानि अस्थीनि, गर्भे—अभ्यन्तरे येषां तादृशान्, कुम्भान्—कलसान्, धारयन्तीति तथाविधेषु, जलेष्विति भावः ; एतास्थां कुम्भमध्ये रक्षणमुक्तं निर्णयसिन्धौ यथा,—"प्रक्षिप्य मृन्मये भाण्डे नवे साच्छादने शुभे। गृहीत्वा-ऽस्थीनि तद्भस्म नीत्वा तोये विसर्ज्जयेत्॥" इति।

(३०१) विविधेति।—विविधानि—बहूनि इत्यर्थः, सरांसि—सरोवराः, सरितः,—नद्यः, तीर्थानि—पुण्यक्षेत्रसलिलानि, तेषाम् अभिमुखाः,—सम्मुखाः तेषु, तान्युद्दिश्य इत्यर्थः, प्रस्थितेषु वनकरिकुलेषु—वन्यगजवृन्देषु।

(३०२) श्यावेति।—श्यावं—धूसरं, शुचि—शुक्लं, सिक्थं—मधूच्छिष्टं, तस्य पटलं—सङ्घः, तद्वत् पाण्डुरं—शुभ्रं तस्मिन्, अन्यत्र,—श्यावः,—शवसम्बन्धी, शुचि—शुक्लं, यत् सिक्थपटलं—भक्तग्राससमूहः, ("सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुं-सकम्" इति मेदिनी) पाण्डुरः,—गौरः यत्र तथाभूतः तस्मिन्, पिण्डे इव—प्रेत-देयगोलाकारान्ने इव अपरपयोनिधिपुलिनपरिसरे—पश्चिमसमुद्रसैकतदेशरूपाय-

पात्यमाने शशिनि, क्रमेण (३०३) नृपचितानलधूमविसर-धूसरीकृततेजसि इव नरपतिशोकपावकदाहकिणकलङ्ककालीकृतचेतसि इव (३०४) प्रोषितसमस्तान्तःपुरपुरन्ध्रिमुखचन्द्रवृन्दोद्वेगविद्राणवपुषि इव (३०५) प्रथमास्तमितरोहिणी-रणरणकविमनसि इव च अस्तमुपगते रजनिकरे, राजतीव देवे दिवम् आरूढे सवितरि, परिवृत्ते राज्ये इव रजनीप्रबन्धे, (३०६) प्रबुद्धराजहंसमण्डलप्रबोध्यमानः पङ्कजाकर इव

तने, पात्यमाने—क्षिप्यमाणे, दीयमाने च, शशिनि—चन्द्रमसि, अस्तोन्मुखे च चन्द्रमसि इति भावः।

(३०३) नृपेति।—नृपस्य—राज्ञः, चितानलस्य—शवदाहनवह्नेः, धूमविसरेण—धूमनिचयेन, धूसरीकृतम्—ईषत्पाण्डूकृतं, तेजः,—प्रभा यस्य तथाभूते इव, नरपतीति।—नरपतेः,—राज्ञः, शोकः,—मन्युः, पावक इव—अग्निरिव, तस्य दाहेन—सन्तापेन, यः किणकलङ्कः,—शुष्कव्रणचिह्नं, तेन कालीकृतं—मलिनीकृतं, चेतः,—हृदयम्, अन्तरदेश इति भावः यस्य तथाभूते इव।

(३०४) प्रोषितेति।—प्रोषितानां—पतिशोकात् परलोकं प्रस्थितानां, समस्तानां—समग्राणाम्, अन्तःपुरपुरन्ध्रीणाम्—अन्तःपुरमहिलानां, मुखानि—आननानि, चन्द्रवृन्दानि इव—शशधरसमूहा इव, तेभ्यः उद्वेगः,—त्रासः, तेन विद्राणं—पलायमानं, [ विद्रातेः निष्ठायां "संयोगादेरातो—" (८।२।४३ पा०) इत्यादिना निष्ठातस्य नत्वे "अट्कुप्वाङ्—" (८।४।२ पा०) इत्यादिना णत्वम् ] वपुः,—शरीरं यस्य तथाभूते।

(३०५) प्रथमेति।—प्रथमं—प्राक्, अस्तमिता—अस्तं गता, या रोहिणी—नक्षत्रविशेषः, स्वप्रेयसीति यावत्, तस्यां रणरणकेन—उत्कण्ठया, उद्वेगेन वा, विमनाः,—विकृतं मनो यस्य तथाभूते इव, रजनिकरे—चन्द्रे। राजतीव—विराजमाने इव, देवे—अमरे, राजनि प्रभाकरवर्द्धने च, दिवं—गगनं, स्वर्गञ्च, ("द्यौः स्त्री स्वर्गे च गगने दिवं क्लीवं तयोः स्मृतम्" इति मेदिनी) सवितरि—सूर्य्ये, जनके च। परिवृत्ते—परिवर्त्तः—विनिमयः, तत्प्राप्ते, विपर्य्यस्ते इत्यर्थः, रजनीप्रबन्धे—निशागमे।

(३०६) प्रबुद्धेति।—प्रबुद्धानां—जागरितानां, प्रागिति शेषः, राज्ञां—नृपाणां, हंसानामिव—श्वेतच्छदानामिव, मण्डलानि—समूहाः तैः, अन्यत्र,—प्रबुद्धानां राजहंसानां—"राजहंसास्तु ते चञ्चुचरणैः लोहितैः सिताः" इत्युक्तलक्षणानां

चचाल देवो हर्षः। (३०७) ततश्च नूपुररवविराममूकमन्द-मन्दिरहंसेषु शोकाकुलकतिपयकञ्चुकिमात्रावशेषेषु शुद्धान्तेषु, (३०८) पतितयूथपे इव वनगजचये कक्ष्यान्तरवर्तिनि पितृ-परिजने विषादिनि, उपरिरुदन्निषादिनि च स्तम्भनिषण्णे

---

हसविशेषाणा, सखलै.,—श्रेणीभि, प्रबोध्यमानः,—सान्त्व्यमानः; अन्यत,—जाग माण., पङ्कजाकर इव—कासार इव, चचाल—उत्तस्थौ, धरापृष्ठात् इति शेष.। इह नृपादिषु हसत्वारोपनियत रूपक, श्लिष्टपदनिबन्धनपदश्लेषस्याङ्गम्।

(३०७) "ततश्च"इत्यस्य "दह्यमानदृष्टि. निर्जगाम राजकुलात्"इत्युत्तरेण सम्बन्धः। नूपुरेति।—नूपुराणा—मञ्जीराणा, रवस्य—शब्दस्य, विरामेण—अपगमेन, नृपवियोग-शोकेन पुराङ्गनाभि भूषणादिपरित्यागादिति भावः, मूका,—निःशब्दा, हंसानां नूपुरशिञ्जनानुकरणस्य कविवर्णनीयवस्तुषु प्रसिद्धेरिति भाव, अत तदभावात् मूकत्व बोद्धव्यम्, मन्दा,—अपटव., मन्दिरहसा,—गृहमराला येषु तथोक्तेषु। शोकेति।—शोकेन—शुचा, आकुलानि,—विह्वलानि, कतिपयानि—अल्पानि, कञ्चुकि-मात्राणि—सौविदल्ला एव, ("मात्रा कर्णविभूषाया वित्ते माने परिच्छदे। अक्षरावयवे स्वल्पे क्लीब कार्त्स्न्येऽवधारणे॥" इति मेदिनी) अवशिष्यन्ते इति अवशेषा. येषु तथाविधेषु, राजप्रियाणां सर्वासा चिताऽऽरोहणात् परिजनाना परिचारिकाणामन्यासाञ्च हर्षेण सह स्नानाय गम ादिति भाव, केवलमन्त पुररक्षणार्थमेव तेषा तत्र स्थापनादिति तु फलितम्; शुद्धान्तेषु—अन्त.पुरेषु।

(३०८) पतितेति।—पतितः,—विनष्ट इत्यर्थः, यूथप,—यूथपतिः यस्य तादृशे इव, वनगजचये—आरण्यगजवृन्दे, ["वनगजचये" इत्यत्र "वनगजयूथे" इति पाठेऽपि स एवार्थः] अत्र वनगजोक्ति परिजनाना बहुलद्योतनार्थं भर्त्तरि एकान्तानुरक्तिप्रकटनार्थञ्च बोद्धव्या, कक्ष्यान्तरवर्तिनि—प्रकोष्ठान्तरस्थिते, पितृ-परिजने—पितु. परिचारकवर्गे, विषादिनि—विषाद गते। उपरीति।—उपरि—पृष्ठभागे, रुदन्—क्रन्दन्, निषादी—हस्तिपकः, हस्तिपाल इत्यर्थ यस्य तथोक्ते, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः) स्तम्भनिषण्णे—आलान-स्तम्भमाश्रित्य स्थिते इत्यर्थ, ["सदिरप्रते." (८।३।६६ पा॰) इति षत्वेन निषीदतेः निष्ठाया "रदाभ्या—" (८।२।४२ पा॰) इत्यादिना नत्वं, पूर्वदकारस्यापि नत्वं, तत. प्रथमस्य "रषाभ्या—" (८।४।१ पा ) इत्यादिना द्वितीयस्य च "ष्टुना ष्टु."

निष्पन्दमन्दे राजकुञ्जरे, (३०९) मन्दुरापालकाक्रन्दव्यथिते च अजिरभाजि राजवाजिनि, (३१०) विश्रान्तजयशब्द-कलकले च शून्ये च महास्थानमण्डपे दह्यमानदृष्टिः निर्जगाम राजकुलात्; अगाच्च सरस्वतीतीरं, (३११) तस्यां स्नात्वा पित्रे ददौ उदकम्। (३१२) अपस्नातश्च अनिष्पीडित-मौलिरिव परिधाय उद्गमनीयदुकूलवाससी, निश्वासपरः,

(पा४।४१ पा०) इति णत्वम्] निष्पन्दमन्दे—निस्तब्धे इति यावत्, राजकुञ्जरे—राजहस्तिनि।

(३०९) मन्दुरेति।—मन्दुरा—अश्वशाला, ("वाजिशाला तु मन्दुरा" इत्यमरः) तां पालयन्तीति ते मन्दुरापालकाः,—अश्वपाला इति यावत्, तेषाम् आक्रन्देन—रोदननिनादेन, व्यथिते—सन्तप्ते, ["मन्दुरापालकाक्रन्दव्यथिते" इत्यत्र "मन्दुरापालकाक्रन्दकथिते" इति पाठे,—मन्दुरापालकैः,—अश्वरक्षकैः, आक्रन्दः,—रोदनध्वनिः, कथितः,—व्यक्तीकृतः यत्र तस्मिन्नित्य :] अजिरभाजि—अङ्गनवर्त्तिनि, ("अङ्गनं चत्वराजिरे" इत्यमरः) राजवाजिनि—राजघोटके।

(३१०) विश्रान्तेति।—विश्रान्तः,—विरतः, [विश्राम्यतेः भूते कर्त्तरि क्तप्रत्ययः] जयशब्दः,—जयध्वनिरेव, कलकलः,—कोलाहलः यस्मिन् तथोक्ते, शून्ये—निर्जने इत्यर्थः, महास्थानमण्डपे—प्रशस्तसभागृहे, ("सभासमितिसंसदः। आस्थानी क्लीवमास्थानम्" इत्यमरः) दह्यमानदृष्टिः,—भस्मीभूयमाननेत्रः, नित्यं जनकोलाहलमुखरितस्य पित्रा अधिष्ठितस्य सभागृहस्य एकमात्रस्य नृपस्याभावेन जनविरहिततया निस्तब्धत्वेन शून्यसिंहासनदर्शनेन च पितृशोकानलोद्दीपनादिति भावः। राजकुलात्—राजभवनात् ("कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च ······॥" इति मेदिनी)।

(३११) तस्यां—सरस्वत्याम्। उदकं—तर्पणसलिलाञ्जलिं, ददौ—अर्पयामास।

(३१२) "अपस्नातः" इत्यस्य "भवनमाजगाम" इत्युत्तरेण सम्बन्धः। अपस्नातः,—प्रेतकार्य्यमुद्दिश्य कृतस्नानः, अनिष्पीडितमौलिः,—न निष्पीडितः,—निर्जलीकृतः, अप्रोञ्छित इत्यर्थः, मौलिः,—केशचयः येन तथोक्तः, ("चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः) उद्गमनीये—धौते, ("तत् स्यादुद्गमनीयं यत्

निश्चामरः, निरातपत्रः, निरुत्सारणः, समुपनीतेऽपि सप्तौ चरणाभ्यासेव (२१२) नासाऽग्रासक्तेन रक्ततामरसताम्रेण चक्षुषा हृदयावशेषस्य अपि पतुर्दाहशङ्कया शोकाग्निमिव उद्गिरन्, अताम्बूलस्यापि सुचिरप्रक्षालितस्य कल्पतरुकिशलयस्य इव स्वभावपाटलस्य अधरस्य अधरपल्लवस्य प्रभया मांसरुधिरकवलान् इव हृदयाभिघातात् उद्वमन् उष्णनिश्वासमोचैः भवनम् आजगाम।

---

क्षौतयोर्वस्त्रयोर्युगम्" इत्यमरः) दुकूले—सितांशुके एव, ("दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके" इति शब्दार्णवः) वाससी—वस्त्रे, परिधाय—परिहिते कृत्वा, निश्वासपरः,—पुन पुनरायतं निश्वसन् इत्यर्थ, शोकक्षोभात् इति भाव'। निश्चामरः,—चामरव्यजनरहित, ["निश्वासर." इति पाठः ग्रन्थान्तरे न दृश्यते, तत्राप्युतसिद्धसम्बन्धवत्त्वात् वक्ष्यमाणनिरातपत्रतयैव निश्चामरार्थप्रतीतेः इत्यनवद्यम्]। निरातपत्रः,—छत्रवर्ज्जितः, पितादिगुरुजनवियोगे छत्रचामरादिधारणनिषेधादिति भावः। निरुत्सारण.,—उत्सारणा—लोकानामपसारणं, तद्रहित इत्यर्थः, राज्ञा गमनकाले रक्षिभिः पुरस्थलोका अपसार्य्यन्ते इति नियमः, तदा तु सर्वेषामेव शोकविह्वलतया वान्धवबुद्ध्या भेदज्ञानाभावात्, महापदि शृङ्खलाभावाच्च तन्न कृतमिति भावः। समुपनीते—समुपस्थापिते, सप्तौ—अश्वे, ("……तुरङ्गाश्वतुरङ्गमाः।……हयसैन्धवसप्तयः॥" इत्यमरः) चरणाभ्यासेव—पादचारेणैव, मातापितृवियोगे ब्रह्मचर्य्यनियमपालनाय पादचारेण गमनस्य प्राशस्त्यादिति भावः।

(२१२) नासाऽग्रासक्तेन—नासिकाऽग्रलग्नेन, रक्ततामरसताम्रेण—रक्तकमललोहितेन। हृदयावशेषस्य—हृदयमात्रस्थितस्य, न तु वहिर्जगत्सु इति भावः। अताम्बूलस्य—वर्ज्जिततम्बूलस्य, सुचिरप्रक्षालितस्य—वहुक्षणधौतस्य, कल्पतरुकिसलयस्य इव—कल्पवृक्षपल्लवस्य इव, स्वभावपाटलस्य—सहजरक्तस्य, अधरपल्लवस्य—अधरः,—हीन', पराभूत इत्यर्थः, पल्लव',—किसलयः यस्मात् तथोक्तस्य, अधरस्य—निम्नोष्ठस्य, यद्वा,—अधरस्य—निम्नावस्थितस्य, अधरपल्लवस्य—अधर पल्लव इव तस्य, मांसरुधिरकवलान् इव—पिशितरक्तग्रासान् इव, सरक्तमांसपिण्डानिवेत्यर्थ', हृदयाभिघातात्—हृदये—चेतसि, अभिघातात्—आघातात्, शोकवज्रप्रहारजनित-

(३१४) राजवल्लभास्तु भृत्याः सुहृदः सचिवाश्च तस्मिन् एव अहनि निर्गत्य, प्रियं पुत्रदारम् उत्सृज्य, उत्ताप्यैः बन्धुभिः वार्य्यमाणा अपि (३१५) बहुनृपगुणगणहृत-हृदयाः केचित् आत्मानं भृगुषु बबन्धुः, केचित् तत्रैव तीर्थेषु तस्थुः, केचि (३१६) अनशनैः आस्तीर्णतृण-कुशा व्यथमानमानसाः शुचम् असमाम् अशमयन्, केचित् शलभा इव वैश्वानरं शोकावेगविवशा विविशुः, केचित्

---

त्वतादिति भाव.। उष्णनिश्वासमीचे.,—तप्तनिश्वासपातैः, [ "इत्थम्भूतलक्षणे" (२।३।२१ पा० ) इति विशेषणे तृतीया ]।

(३१४) राजवल्लभा.,—राजप्रिया.। निर्गत्य—बहिर्गत्वा, भवनादिति शेष.। पुत्रदारम्—अपत्यकलत्राणि। [ इह समाहारद्वन्द्वाविषयात् च्युतसंस्कारताख्यदोषः अदोषसमाधानन्तु "गवाश्वप्रभृतीनि च" ( २।४।११ पा० ) इत्यत्र महाकविप्रयोगेणा-कृतिगणत्व प्रकल्प्य कथञ्चिन्निर्वाहात् ज्ञेयम् ] उत्ताप्यै,—उत्कृष्टतप्तननिवारिभि.। वार्य्यमाणा—निषिध्यमाना।

(३१५) बह्विति।—बहुभि,—प्रभूतै., नृपस्य—राज्ञ, गुणगणै,—दया-दाक्षिण्यादिसमूहै., हृतानि—आकृष्टानि, हृदयानि—चेतांसि येषां तथाभूता· भृगुषु—प्रपातेषु पर्वतस्य उच्चप्रदेशेषु इत्यर्थ, ("प्रपातस्त्वतटो भृगु." इत्यमर.) आत्मान—स्व, बबन्धु,—स्थापयामासु, तेभ्य पतनाय कृतहस्तादिबन्धना तस्थुरित्यर्थ.। [ "बबन्धु" इत्यत्र "बभञ्जु" इति पाठे,—तेभ्य पतनेन आत्मानं चूर्णयामासुरित्यर्थ. ]। तत्रैव—तेष्वेव, भृगुष्वेव इत्यर्थ., तीर्थेषु—पुण्यक्षेत्रेषु, यद्वा,—तत्रैव—राजपुरे एव, तीर्थेषु—पुण्यक्षेत्रेषु न तु स्वदेशे स्थानान्तरे वा इति भाव.। महाप्रभावस्य सर्वभूत-हितैषिण राज्ञ. लीलाक्षेत्रत्वात् तस्या पुण्यक्षेत्रत्व बोद्धव्यम्।

(३१६) अनशनै,—अभोजनै, व्रतोपवासैरित्यर्थ., आस्तीर्णतृणकुशा,—आस्तीर्णा—आवर्जिता, तृणानि—नलादीनि, कुशा.,—दर्भाश्च यै. तथाभूताः, तृणकुशास्तीर्णभूमौ स्थिता इत्यर्थ, व्यथमानमानसा,—पीडितचित्ता., असमाम्—अतुल्यां, शुच—शोकम्, अशमयन्—शमयामासु, वनं गत्वा प्राणविसर्जनाय अनशने स्थिता इति भाव। शलभा इव—पतङ्गविशेषा इव, वैश्वानरम्—अग्निं, शोकेति। —शोक स—शुच आवेग—सम्भ्रम., उत्कण्ठा इत्यर्थ. तेन विवशा,—विह्वलाः।

(३१७) दारुणदुःखदहनदह्यमानहृदया गृहीतवाचः तुषारशिखरिणं शरणं ययुः, केचित् (३१८) विन्ध्योपत्यकासु वनकरिकुलकरशीकरासारसिच्यमानतनवः पल्लवशयनशायिनः सन्तापम् अशमयन्, केचित् (३१९) सन्निहितान् अपि विषयान् उत्सृज्य सेवाविमुखाः परिच्छिन्नैः पिण्डकैः अटवीभुवः शून्या जगृहुः, केचित् पवनाशना धर्म्मधना धमद्धमनयो मुनयो बभूवुः, केचित् गृहीतकाषायाः

(३१७) दारुणेति।—दारुणेन—उत्कटेन, दुःखदहनेन—शोकाग्निना, दह्यमानं—सन्तप्यमानं, हृदयं—चित्तं येषां तथाभूताः, गृहीतवाचः,—गृहीता—निगृहीता, संयमिता इत्यर्थः, वाग् यैः ते, मौनव्रतधारिणः इत्यर्थः, ["स्त्रियाः—" (६।३।३४ पा०) इत्यादिना पुंवद्भावे "शेषाद्विभाषा" (५।४।१५४ पा०) इति पाक्षिककबभावः] तुषारशिखरिणं—हिमाद्रिं, शरणम्—आश्रयं, ययुः,—गतवन्तः, आश्रितवन्तः इत्यर्थः, यतिनो जाताः इति भावः। दग्धा अपि दाहज्वालाप्रशमनार्थं शीतलस्थानमाश्रयन्ति।

(३१८) विन्ध्येति।—विन्ध्यस्य—तदाख्यगिरेः, उपत्यकासु—आसन्नभूमिषु, ("उपत्यकाऽद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः) वनेति।—वनकरिकुलानां—वन्यगजवृन्दानां, कराः,—शुण्डाः, तेषां शीकरासारैः,—अम्बुकणधाराभिः, सिच्यमानाः,—आर्द्रीक्रियमाणाः, तनवः,—शरीराणि येषां तथाभूताः, पल्लवशयनशायिनः,—किशलयशय्याशायिनः, सन्तापं—चित्तदाहं, शोकजमिति भावः, अशमयन्—निर्वापयामासुः, वानप्रस्थाश्रमं गृहीतवन्त इति भावः।

(३१९) सन्निहितान्—करस्थितानिति भावः, विषयान्—भोग्यवस्तूनि, उत्सृज्य—त्यक्त्वा, सेवाविमुखाः,—भोगपराङ्मुखाः, परिच्छिन्नैः,—परिमितैः, पिण्डकैः,—भक्तग्रासैः. तदुपलक्षिता इत्यर्थः; यद्वा,—परिच्छिन्नैः,—परिमितैः, खर्व्वैरित्यर्थः, कृशैरिति भावः, पिण्डकैः,—शरीरैः, तदुपलक्षिता इत्यर्थः, शून्याः,—जनविरलाः, अटवीभुवः,—वनभूमीः, जगृहुः,—आश्रिताः। पवनाशनाः,—वायुभोजिनः, धर्म्मधनाः,—धर्म्ममात्रधनकामा इत्यर्थः, धमद्धमनयः,—धमन्यः—कार्श्यात् वायन्त्यः, स्फुरन्त्य इत्यर्थः, धमन्यः,—शिराजालानि येषां तथाभूताः; अनेन व्रतकार्श्यं सूच्यते। गृहीतकाषायाः,—गृहीतम्—अवलम्बितं, काषायं—कषायेण रक्तं वस्त्रं

कापिलं मतम् अधिजगिरे गिरिषु, केचित् ( ३२० ) आचोटित-चूडामणिषु शिरःसु शरणीकृतधूर्जटयो जटा जघटिरे, अपरे ( ३२१ ) परिपाटलप्रलम्बचीवराम्बरसंवीताः स्वाम्यनुरागम् उज्ज्वलं चक्रुः, अन्ये ( ३२२ ) तपोवनहरिण-जिह्वाऽञ्चलोल्लिह्यमानमूर्त्तयो जरां ययुः, अपरे पुनः ( ३२३ ) पाणिपल्लवप्रमृष्टैः आताम्ररागैः नयनपुटैः कमण्डलु-भिश्च वारि वहन्तो गृहीतव्रता मुण्डा विचेरुः।

---

येः तथाभूताः, कापिलं—कपिलसम्मत साङ्ख्यशास्त्रम्, अधिजगिरे—अधीतवन्त, साङ्ख्यशास्त्रमधीत्य प्रकृतिपुरुषतत्त्वावगमात् योगिन' बभूवुरिति भाव.।

( ३२० ) आचोटितेति।—आचोटिता,—छेदिता, [ आङ्पूर्व्वकस्य चोटतेः णिचि निष्ठाया रूपम् ] अपसारिता इति भाव, चूडामणय',—चूडारत्नानि येभ्यः तथाभूतेषु, त्यक्तचूडारत्नालङ्कारेषु इति यावत, शिरःसु—[illegible]सु, शरणीकृत-धूजटय, शरणीकृत,—आश्रित इत्यर्थः, धूर्जटि,—हरः यैः तथाभूता, गृहीत-माहेश्वरव्रता इत्यर्थ । जघटिरे—बबन्धुः।

( ३२१ ) परिपाटलेति।—परिपाटलेन—परितो रक्तेन, प्रलम्बेन—आयतेन इत्यर्थ, चीवराम्बरेण—वसनखण्डेन, संवीता',—प्रावृता, आच्छादितदेहा इत्यर्थः, धृतमुनिवेशा इति भाव', स्वाम्यनुराग—प्रभुभक्तिम्, उज्ज्वल—भास्वर, प्रशस्त-मिति यावत्।

( ३२२ ) तपोवनेति।—तपोवनहरिणानाम्—आश्रममृगाणा, जिह्वाऽञ्चलैः,—रसनाप्रान्तै, उल्लिह्यमाना:,—आस्वाद्यमाना इत्यर्थः, मूर्त्तय,—शरीराणि येषां तथाभूताः, तापसा. सन्त इत्यर्थः, जरां—वार्द्धकम्।

( ३२३ ) पाणीति।—पाणि—कर, पल्लव—इव—किसलय इव, तेन प्रमृष्टा,—प्रमार्जन नीता, गृहीताश्च तैः, आताम्ररागै,—आरक्तप्रभैः. शोका-वेगजनितरोदनात् महापुरुषलक्षणत्वेन स्वभावसिद्धत्वाच्च इति भाव., नयनपुटै, —नेत्रगोलकै, कमण्डलुभि,—जलपात्रविशेषैः, वारि—अश्रुजलं, तीर्थजलञ्च। गृहीतव्रता —व्रतधारिण मुण्डा,—उपशिरस., विचेरु,—भ्रमन्ति स्म। वीत-रागा अपि चिराभ्यस्तसंस्कारेण परलोकस्थेऽपि राजनि अत्यन्तानुरागा आसन् इति शोकातिशय्यशालिनी नरेन्द्रस्य दानादसाधारणी भक्ति समर्थ्य इति वस्तुध्वनि.।

(३२४) देवमपि हर्षं तदवस्थं पितृशोकविह्वलीकृतं श्रियं शाप इति, महीं महापातकमिति, राज्यं रोग इति, भोगान् भुजङ्गा इति, (३२५) निलयं निरय इति, बन्धुं बन्धनमिति, जीवितम् अयश इति, देहं द्रोह इति, कल्यतां कलङ्क इति, आयुः अपुण्यफलमिति, आहारं विषमिति, विषममृतमिति, चन्दनं दहन इति, कासं क्रकच इति, हृदयः

(३२४) "देवमपि हर्षम्" इत्यस्य "कुलपुत्रादयः······पर्य्यवारयन्" इति अग्रेण सम्बन्धः। तं विशिनष्टि, तदवस्थमित्यादि।—श्रियं—राजलक्ष्मीं, शापः,—अभिसम्पातः, दुःखाकर इति भाव, भोगनिस्पृहत्वादिति तात्पर्य्यम्, इति मन्यमान-मित्यनेन सम्बन्धः, एवमुत्तरत्र। महीं—पृथ्वीं, महापातकं—महत् पापं, तदधि-कारस्य केवलपापबहुलत्वादिति भावः। रोगः,—व्याधिः, क्लेशबहुलत्वादिति भावः। भोगान्—सुखसाधनानीत्यर्थः, भुजङ्गाः,-सर्पाः, यातनाप्रदत्वादिति भावः।

(३२५) निलयं—गृहं, निरयः,—नरकं, पितृत्यक्तस्य गृहस्य दुःखा-करत्वादिति भावः। बन्धुं—स्वजनं, बन्धनं—बन्धनहेतुभूतः, तदनुरोधेन गृहं त्यक्तु-मसामर्थ्यादिति भावः। जीवितं—जीवनधारणम्, अयशः,—अकीर्त्तिकरम् इत्यर्थः, पितृशोकेनापि तदवलम्बनस्य निष्ठुरत्वबोधकत्वादिति भावः। देहं—शरीरं, द्रोहः,—अनिष्टचिन्तनम्, अनिष्टचिन्ताकर इति यावत्, कथमद्यापि न नश्यति? तन्नाशे असहनीयः सन्तापः मां न दग्धुं समर्थः भविष्यति इति भावः। कल्यतां—निरा-मयत्वम्, आरोग्यमित्यर्थः, ("वार्त्तो निरामयः कल्य." इत्यमरः) कलङ्कः,—अप-वादः, तादृशावस्थायां शोकजातीसारादिकठिनरोगाक्रान्तत्वस्यैवौचित्यादिति भावः। आयुः,—जीवितकालम्, अपुण्यफलं—दुष्कृतपरिणामः, जीवतः दुःखप्रतभोगस्य अपरिहार्य्यत्वादिति भावः। आहारं—भोजनं, विषं—गरलं, पितृशोकोद्दीपक-त्वेन विषवत् विषादहेतुत्वादिति भावः। विषं—गरलम्. अमृतं—सुधा, ("पीयूषममृतं सुधा" इत्यमरः) अमृतं यथा सन्तापनाशनं, तथा शोकादग्धजीवनस्य नाशेन सन्तापप्रशमनात् अनिष्टकरं विषरूपमपि वस्तु इष्टकरममृतप्रायममानि इति भावः। चन्दनं—श्रीखण्डं, दहनः,—अग्निः, प्रभूतचन्दनलेपनेनापि पितुर्दाहाप्रशमन-स्मरणात् विरक्तानाम उपभोगसाधनेषु स्पृहायाः ईप्सितप्रातिकूल्याकलनाद्वा इति भावः। क्रकचः,—करपत्रं, भोगविमुखतया करपत्रच्छेदनवत् यन्त्रणाप्रदत्वादिति

स्फोटनम् अभ्युदय इति च मन्यमाने, सर्व्वासु क्रियासु विमुखं (३२६) पितृपितामहपरिग्रहागताः चिरन्तनाः कुलपुत्राः, वंशक्रमाहितगौरवाश्च ग्राह्यगिरो गुरवः, श्रुतिस्मृतीतिहासविशारदाश्च जरद्विजातयः, (३२७) श्रुताभिजनशीलशालिनो मूर्द्धाऽभिषिक्ताश्च अमात्या राजानः, यथावत् अधिगतात्मतत्त्वाश्च संस्तुता मस्करिणः, समदुःखसुखाश्च मुनयः संसारासारत्वकथनकुशला ब्रह्मवादिनः, शोकापनयननिपुणाश्च पौराणिकाः पर्य्यवारयन्।

---

भाग., ("क्रकचोऽस्त्री करपत्रम्" इत्यमरः)। हृदयस्फोटनं—वक्षोविदारणम्, अभ्युदय,—मङ्गल, तस्य सर्व्वसन्तापप्रशमकत्वादिति भाव ; [ सर्व्वत्र निरङ्गं रूपकामलङ्कार. ]। विमुखं—पराङ्मुखं, विरतमित्यर्थः।

(३२६) पित्रिति।—पिता च पितामहश्च [ "मातृपितृभ्या पितरि डामहच्" (वा०) इति डामहच्। इह "आनङ् ऋतो द्वन्द्वे" (६।३।२५ पा०) इत्यत्र ऋतः इत्यस्य "ऋतो" (६।३।२३ पा०) इत्यादित. एवानुवृत्तिसम्भवेऽपि पुनस्तद्ग्रहणेन "विद्यायोनि सम्बन्धवाचिनामृदन्ताना द्वन्द्वे आनङ् स्यादुत्तरपदे परे" इति दीक्षितोक्त्या च सगोत्रे समानविधे च ऋकारान्तशब्दे परत एव आनङ. विधानात्, अत्र तु पितामहशब्दस्य ऋकारान्तत्वाभावात् पूर्व्वपदस्य न आनङ. शङ्का करणीयेति सङ्क्षेप. ] तयो परिग्रहेण—स्वीकारेण, आश्रयदानेन इत्यर्थ', आगताः,—वर्त्तमाना इत्यर्थ', पालिता इति यावत्, चिरन्तनाः,—पुरातना, प्राचीना इति यावत्, कुलपुत्राः,—सत्कुलजाता जना', हितैषिवृद्धा इत्यर्थ। वंशेति।—वंशस्य—कुलस्य, क्रमेण—पारम्पर्य्येण, आहितम्—अर्पित, गौरवं—सम्मानं येषा ते, ग्राह्यगिरः,—हितानुबन्धितया स्वीकार्य्यवाच, उपदेष्टार इत्यर्थ.। जरद्विजातय.,—स्थविरब्राह्मणाः, श्रुत्यादिविहितविविधज्ञानोपदेशेन प्रबोधदानकुशला इति भाव:।

(३२७) श्रुतेति।—श्रुत—शास्त्रज्ञानम्, अभिजनः,—कुलं, शीलं—चारित्र, तै शालन्ते—शोभन्ते इति तथोक्ताः, मूर्द्धाऽभिषिक्ता.,—मूर्द्धसु कृताभिषेकाः, राज्यप्रतिष्ठिता इत्यर्थ, क्षत्रिया वा, ("मूर्द्धाभिषिक्तो भूपाले मन्त्रिणि क्षत्रियेऽपि च" इति मेदिनी) अमात्याः,—मन्त्रिण', मन्त्रिभृता इत्यर्थ. राजान,—अधीश्वरनृपा.। यथावत्—यथाविधि। अधिगतेति।—अधिगत—विदितम्, आत्मतत्त्वम्,—आत्म

( ३२८ ) अस्वतन्त्रीकृतश्च तैः मनसाऽपि न अलभत शोकम् अनुप्रचरितुम्। अनुनीयमानश्च कथङ्कथमपि आहारादिकासु क्रियासु आभिमुख्यम् अभजत। भ्रातृगतहृदयश्च अचिन्तयत्,—"अपि नाम तातस्य मरणं महाप्रलयसदृशम् इदमुपश्रुत्य आर्य्यो बाष्पजलस्नातो न गृह्णीयात् वल्कले? न आश्रयेद्वा राजर्षिः आश्रमपदम्? न विशेद्वा पुरुषसिंहो गिरिगुहाम्? ( ३२९ ) अस्रसलिलनिर्भरभरितनयननलिनयुगलो वा न

ज्ञानमित्यर्थः येः तथोक्ताः, ब्रह्मविदः इत्यर्थः। संस्तुताः,—परिचिताः, ("संस्तवः स्यात् परिचयः" इत्यमरः) मस्करिणः,—भिक्षवः, सन्न्यासिनः इत्यर्थः, ("भिक्षुः परिव्राट् कर्मन्दो पाराशर्य्यपि मस्करी" इत्यमरः) जगद्धिताय वीतरागाणामपि भव्यपक्षपातित्वं लोकसिद्धमित्याशयः। समेति।—समे—तुल्ये, दुःख-सुखे—विषाद-सन्तोषौ येषां ते, सुख-दुःखयोः समज्ञानाः इत्यर्थः, मुनयः,—तापसाः। ब्रह्म-वादिनः,—वेदान्तिकाः। पौराणिकाः,—पुराणपाठकाः, ते तु पुराणोक्तनानाऽऽख्या-यिकावर्णनेन शोकानपनोदयितुमीशते। पर्य्यवारयन्—पर्य्यवेष्टन्त।

( ३२८ ) तैः,—कुलपुत्त्रादिभिः पौराणिकान्तैः सर्वैरित्यर्थः, अस्वतन्त्रीकृतः,—अस्वाधीनीकृतः, क्षणमपि अमुक्त इत्यर्थः, शोकं—पितृविनाशजनितं मन्युम्, अनुप्रचरितुम्—अनुशीलितुम्, अनुभवितुमित्यर्थः, न अलभत—अविन्दत, अवसरमिति शेषः। आभिमुख्यं—साम्मुख्यं, प्रवृत्तिम् इत्यर्थः। भ्रातृगतहृदयः,—सोदरार्पितचित्तः, भ्रातरं मनसि कृत्वेत्यर्थः। अपि—प्रश्ने। नाम—सम्भावनायाम्। तातस्य—पितुः। आर्य्य,—राज्यवर्द्धनः, बाष्पजलस्नातः,—अश्रुजलाप्लुतः, वल्कले—तरुत्वचौ, तपस्विपरिधेये इति भावः, न गृह्णीयात्?—न स्वीकुर्य्यात्? न पिदधीत? इत्यर्थः, पितृवियोगमाकर्ण्य शोकात् वल्कलवसने परिधाय वनं यास्यति इति सम्भावयामीति निष्कर्षः। एवमुत्तरत्रापि अपि नाम इत्यव्ययस्य अर्थः आकलनीयः। राजर्षिः,—राजा ऋषिरिव, पूतत्वात् जितेन्द्रियत्वाच्चेति भाव, आश्रमपदं—तपोवनम्। विशेत्—आश्रयेदित्यर्थः, [सर्वत्र "सम्भावनेऽलमिति—" (३।३।१५४ पा०) इति सूत्रेण सम्भावनायां लिङ्]। पुरुषसिंहः,—नरश्रेष्ठः।

( ३२९ ) अस्रेति।—अस्रसलिलेन—बाष्पवारिणा, निर्भरम्—अतिमात्रं यथा तथा, भरितं—पूरितं, नयननलिनयुगलं—नेत्रपद्मद्वयं यस्य तथाभूतः, ["ज

पश्येत् अनाथां पृथिवीम्? (२३०) प्रथमव्यसनविषमविष विह्वलः न स्मरेत् आत्मानं वा पुरुषोत्तमः? (२३१) अनित्यतया जनितवैराग्यो वा न निराकुर्य्यात् उपसर्पन्तीं राज्यलक्ष्मीम्? (२३२) दारुणदुःखदहनप्रज्वलितदेहो वा न प्रतिपद्येत अभिषेकम्? इहागतो वा राजभिः (२३३) अभिधीयमानो न पराचीनताम् आचरेत्? (२३४) अतिपितृपक्षपाती खलु आर्य्यः, सर्व्वदा तातशपथ। माम् अभिधत्ते,—

---

पश्येत्" इत्यत्र "पश्येत्" इति नञ्रहित पाठे,—पश्येत् किम? नैव द्रष्टुं शक्नुयात् इति सम्भावयामीति भाव.]। अनाथा—निराश्रया, पतिवियोगादिति भाव।

(२३०) प्रथमेति।—प्रथमम्—आद्यम्, अपूर्व्वमिति भ', व्यसनं—विपदेव, विषमं—दारुण, विषं—हलाहल, तेन विह्वलः,—अधीरः, आत्मान—स्व, वा न स्मरेत्? आत्मघाती भवेदिति भावः। [ "न स्मरेत्" इत्यत्र "स्मरेत्" इति नञ्रहितपाठे,—आत्मानं स्मरेत् वा? आत्मा अवश्यमेव रक्षणीय इति स्मरेत् किम्? नैव स्मरेत् इति सम्भावयामि, अत आत्मघाती भवेदिति भावः]। नारायणोऽपि प्रथमाविर्भूतमहागरलघोरातपेन विमूढः क्षणमात्मान विसस्मार इति पौराणिका। अत्र पुरुषोत्तमपदस्वरसात् उपमाध्वनि. शब्दशक्तिमूलक., पुरुषोत्तम इव पुरुषोत्तमः इति प्रतीति।

(२३१) अनित्यतया—क्षणिकतया, जनितवैराग्य,—उत्पन्ननिर्वेद'। उपसर्पन्तीम्—उपगच्छन्तीम्, आश्रयन्तीमित्यर्थ.। निराकुर्य्यात्—त्यजेदित्यर्थ., शोकेन विरागवता विषयादिषु निःस्पृहत्वदर्शनात् इत्याशय:।

(२३२) दारुणेति।—दारुणेन—उत्कटेन, दु.खदहनेन—शोकाग्निना,प्रज्वलित:,—सन्तप्तः, देह',—शरीर यस्य तथाभूत., अभिषेक—राज्याभिषेकमित्यर्थः, न प्रतिपद्येत वा?—न स्वीकुर्य्याद्वा? [ "न प्रतिपद्येत" इत्यत्र "प्रतिपद्येत" इतिमात्रपाठे—स्वीकुर्य्यात् किम्? इति काकुलभ्यार्थ., नैव प्रतिपद्येत इति सम्भावयामीति भावः]।

(२३३) अभिधीयमान.,—कथ्यमान, अनुरुध्यमान इति यावत्। पराचीनता—पराङ्मुख ।, प्रातिकूल्यं वा इत्यर्थ., राज्याभिषेके इति भाव.। ("पराङ्मुखः पराचीन." इत्यमर.)।

(२३४) अतिपितृपक्षपाती—अतिशयेन पितृवत्सल इत्यर्थः। तातशपथा—

(३३५) "तात! हर्ष! कस्यचित् अभूत् भविष्यति वा पुनः काञ्चनतालतरुप्रांशु कायप्रमाणम् इदम्? ईदृक् च दिवसकरप्रीत्या दिवसम् उन्मुखविकसितं मुखमहाकमलम्? एतौ च (३३६) वज्रस्तम्भभास्वरौ भुजकाण्डौ? एते च (३३७) हसितमदालसहलधरविभ्रमा विलासाः? कोऽन्यो मानी विक्रान्तो वदान्यो वा?" इति। एतानि च अन्यानि च चिन्तयन् दर्शनोत्सुकहृदयो भ्रातुः आगमनम् उदीक्षमाणः कथञ्चिदपि अतिष्ठत् इति।

इति श्रीबाणभट्टकृते हर्षचरिते प्रभाकरवर्द्धनमरणं नाम

पञ्चमः उच्छ्वासः ॥ ५ ॥

---

ताते—पितरि, या श्लाघा—आदरः तया, तद्गुणकर्म्मादीनां विशेषस्मरणात् इत्याशयः। अभिधत्ते—वक्ति।

(३३५) तात!—वत्स!। कस्यचित्, जनस्य इति शेषः। काञ्चनेति।—काञ्चनतालतरुः,—सौवर्णतालवृक्षः, तद्वत् प्रांशु—उन्नतं, कायप्रमाणम्?—देह-परिमाणम्? ईदृक्—एवम्प्रकारं, मत्पितुः सदृशमिति भावः, दिवसकरप्रीत्या—सूर्य्यभक्त्या, सूर्य्यप्रेम्णा च, दिवस—वासरं व्याप्य इत्यर्थः, [अत्यन्तसंयोगे द्वितीया] उन्मुख-विकसितम्—उन्मुखम्—उदयुक्तं, सूर्य्यप्रीतिकरकार्य्ये प्रवृत्तमित्यर्थः, तादृशञ्च तत् विकसितं—प्रफुल्लमित्यर्थः, भास्वरम् इति यावत्; अन्यत्र,—उन्मुखम्—ऊर्द्धमुखञ्च, तत् विकसितं—प्रस्फुटितं, मुखमहाकमलं—मुखमेव महत् पद्मं, मुखं महाकमलमिव वा, [इत्युपमितसमासः]।

(३३६) वज्रेति।—वज्रस्तम्भौ इव—कुलिशमयस्थूणे इव, भास्वरौ—प्रभा-न्वितौ, दृढत्वात् विशालत्वाच्च इति भावः, भुजकाण्डौ—भुजौ—बाहुयुग्मं, काण्डौ—दण्डौ इव तौ, बाहुदण्डौ इत्यर्थः, ("काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः)।

(३३७) हसितेति।—हसितेन—हासेन, मदालसस्य—मदविह्वलस्य, हल-धरस्य—बलदेवस्य, विभ्रमा इव विभ्रमाः,—विचेष्टितानि येषु तथाविधाः, विलासाः,—शोभाविशेषाः। [कथमन्यः अन्यस्य विभ्रमं दधातु इति इह बिम्बप्रतिबिम्ब-बोधात् तन्निबन्धननिदर्शनाऽलङ्कृतिः], अन्यः, मत्पितुरिति शेषः, मानी—मानो-न्नतः, विक्रान्तः,—शूरः, वदान्यः,—दानशौण्डः; ["स्युर्वदान्यस्थूललक्ष्यदानशौण्डा

# षष्ठ उच्छ्वासः ।

उच्चित्योच्चित्य भुवि प्रहितनिगूढात्मदूतनीतानाम् ।
विजिगीषुरिव कृतान्तः शूराणां सङ्ग्रहं कुरुते ॥ १॥

---

गहुप्रदे" इत्यमरः)। दर्शनेति।—दर्शनाय—अवलोकनाय, भ्रातुरिति भावः उत्सुकम्—उत्कण्ठितं, साग्रहम् इति यावत्, हृदयं—चित्तं यस्य तथाविधः उदीक्षमाणः,—प्रतीक्षमाणः।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना वि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोध-विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चामलाख्यायां श्रीहर्षचरितव्याख्यायां पञ्चम उच्छ्वासः ॥ ५ ॥

---

कृतान्ताचरणवर्णनव्यपदेशेन राज्यवर्द्धनस्य उपांशुहननं सूचयति, उच्चित्येति।—कृतान्तः,—अन्तकः; अन्यत्र,—कृतान्तः,—कृतः अन्तः,—नाशः, प्रतिवीरमिति भावः येन तथाभूतः, शशाङ्कनामा गौड़ाधिपतिरिति भावः, विजिगीषुः इव—विजयार्थी नृप इव, भुवि—पृथिव्याम्, उच्चित्य उच्चित्य—अन्विष्य अन्विष्य, प्रवरं प्रवरं विचित्य इति भावः, प्रहितनिगूढात्मदूतनीतानां—प्रहिताः,—प्रेषिताः निगूढाः—गुप्ताः, अदृश्या इत्यर्थः; अन्यत्र,—कपटचारिणः इति यावत्, आत्मनः—स्वस्य, दूताः,—किङ्कराः; अन्यत्र,—वार्त्तावहाः, निजचारा इति यावत्, तैः नीताः,—वशं प्रापिताः, आनीता इत्यर्थः, स्वभवनमिति भावः तेषां, शूराणां—बलवतां, वीराणां मानवानामिति यावत्; अन्यत्र—शूराणां—राज्यवर्द्धनानुगतानां प्रधानराजपुत्राणां, सङ्ग्रहम्—आयत्ततां, कुरुते—स्वालयं नयति, अन्यत्र,—स्ववशान् करोति इत्यर्थः। एतेन शशाङ्कः निजदूतैः अन्विष्य अन्विष्य शूराणां सङ्ग्रहं कृत्वा दूतमुखेन कन्याप्रदानप्रलोभितं राज्यवर्द्धनं स्वगेहानीतं विस्रब्धं भुञ्जानं छद्मना व्यापादितवानिति षष्ठोच्छ्वासार्थः सूचितः। अत्र विजिगीषुणा सह कृतान्तस्य विधर्म्य-साम्यप्रतीतेरुपमाऽलङ्कारः, कृतान्त इव कृतान्त इत्युपमाध्वनिश्च, एतेन विजिगीषुः कालवत् कठोराशयः इति वस्तु व्यज्यते। आर्या वृत्तम् ॥ १ ॥

विस्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः।
नवतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥ २ ॥

(१) अथ प्रथमप्रेतपिण्डभुजि भुक्ते द्विजन्मनि, गतेषु उद्वेजनीयेषु अशौचदिवसेषु, (२) चक्षुर्दाहदायिनि (३) दीयमाने द्विजेभ्यः शयनासनचामरातपत्रवस्त्रपत्रशस्त्रादिके नृप-

परापकृतिचेष्टा आत्मनाशाय भवति इति वर्णनप्रसङ्गेन विश्वासहन्तुः शशाङ्कस्य हर्षेण निर्यातनं सूचयति, विस्रब्धेति।—खलस्य—दुर्जनस्य, गौड़ाधमशशाङ्कस्येति भावः, विस्रब्धघातदोषः,—विश्वासितजनवधापराधः, राज्यवर्द्धनहननरूप इति भावः, वीरकोपकरं,—वीरस्य—वीर्य्यवतः, पराभिभवासहिष्णोः इत्यर्थः, हर्षस्येति भावः, कोपं—क्रोधं, करोति—जनयतीति तथाभूतः, अत एव हरेः,—सिंहस्य, निद्रायाः,—स्वापस्य, तस्करः,—चौरः, निद्राभङ्गकारीत्यर्थः, करिणः,—हस्तिनः, नवः,—अपूर्व्वः, तरोः,—वृक्षस्य, भङ्गध्वनिरिव—भञ्जनरव इव, स्ववधाय—निजनाशाय, भवतीति शेषः। एतेन यथा तरुभञ्जनरवेण प्रबोधितः सिंहः निद्राभङ्गकारिणं करिणं निपातयति, तथा विश्वस्तं भ्रातरं राज्यवर्द्धनं स्वालयं नीत्वा छद्मना तद्विनाशकारिणं शशाङ्कं नाम गौड़ाधिपं वीरो हर्षो व्यापादितवानिति सूचितम्। विस्रब्धघात-दोष-नवतरुभङ्गरूपधर्म्मयोः सादृश्यलक्ष्मीसमुल्लसनसम्बन्धेन उपमाऽलङ्कृतिः। आर्य्या वृत्तम् ॥ २ ॥

(१) अथेति।—"अथ" इत्यस्य "देवो हर्षः···मौलेन अकाले आत्मानं वेष्ट्यमानमद्राक्षीत्" इत्युत्तरेणान्वयः। प्रथमेति।—प्रथमम्—आद्यं, प्रेतपिण्डं—पितृभ्यो देयमन्नग्रासं, भुङ्क्ते—खादति इति तथाभूते, द्विजन्मनि—ब्राह्मणे, अग्रदानीये इति भावः, भुक्ते—भुक्तमस्यास्तीति भुक्तं तस्मिन्, प्रेतपिण्डं भुक्तवतीत्यर्थः, प्रेतस्य पारलौकिककार्य्ये महाब्राह्मणानामेव प्रथमसमर्च्चाया: विधियक्तत्वात् इत्याशयः। उद्वेजनीयेषु—उद्वेगजननेषु, अशौचदिवसेषु—द्वादशाहे इत्यर्थः, "शुध्येत् विप्रो दशाहेन द्वादशाहेन भूमिपः" इति स्मरणात्।

(२) चक्षुर्दाहेति।—चक्षुषोः,—नेत्रयोः, दाहः,—ज्वलनमित्यर्थः, तं ददाति—जनयतीति तथोक्ते, [ "सुप्यजातौ—" (३।२।७८ पा०) इत्यादिना ताच्छील्ये णिनिः ] दर्शनेन पितृशोकोद्दीपनात् अतीव व्यथाजनके इति भावः।

(३) शयनेति।—शयनं—शय्या, आसनं—पीठं, चामरे—व्यजने, आतपत्रं—छत्रं, वस्त्राणि—वसनानि [ "आतपत्रवस्त्र—" इत्यत्र "आतपत्रामत्र—" इति

निकटोपकरणकलापे, (४) नीतेषु तीर्थस्थानानि सह जन-हृदयैः कीकसेषु, (५) कल्पितशोकशल्ये सुधानिचयचिते चिताचैत्यचिह्ने, (६) वनाय विसर्जिते च महाजिजिति राज-गजेन्द्रे, क्रमेण मन्देषु आक्रन्देषु, विरलीभवत्सु च विलापेषु,

पाठे,—अमत्राणि—पात्राणि, राजव्यवहृतसौवर्णभाजनादीनीत्यर्थः, "पात्रामत्रञ्च भाजनम्" इत्यमर.] पत्राणि—वाहनानि, रथाश्वशिविकादीनि इति यावत्, ("पत्रं वाहन-पक्षयोः" इत्यमरः) अस्त्राणि—तलवार्य्यादीनि, एतानि आदीनि यस्य तथोक्ते, ["शेषाद्विभाषा" (५।४।१५४ पा०) इति समासान्तः पाक्षिकः कप्] नृपेति।—नृपस्य—राज्ञः, निकटानि—सततसन्निहितानि,. उपकरणानि—परिच्छदाः, तेषां कलापः,—समूहः तस्मिन्, द्विजेभ्यः,—ब्राह्मणेभ्यः, दीयमाने—समर्प्यमाणे।

(४) कीकसेषु—अस्थिषु, ("कीकसं कुल्यमस्थि च" इत्यमरः) जनानां—लोकानां, हृदयैः,—चित्तैः, सह—सार्द्धं, तीर्थस्थानानि—गङ्गादीनि, नीतेषु—प्रापितेषु।

(५) कल्पितेति।—कल्पितं—जनितं, शोकशल्यं—शोकः,—मन्युः, शल्यं—शङ्कुः, अस्त्रविशेष इवेत्यर्थः, मर्म्मपीड़ाकरत्वादिति भावः येन तादृशे, दर्शनमात्रेण शोकोद्दीपके इति यावत्, चिताचैत्यचिह्ने—चितायां—शवदाहार्थकाष्ठचुल्ल्यां, तदुप-लक्षितस्थाने वा, चैत्यस्य—दारुस्य, आयतनस्य वा, ("चैत्यमायतनं तुल्ये" इत्यमरः) चिह्नं—लक्ष्म, भस्मादिकं स्मारकरूपञ्चेत्यर्थः तस्मिन्, सुधानिचयेन—चूर्णद्रवसमूहेन चिते—व्याप्ते, लिप्ते इत्यर्थः, सुधाविधौते कृते इति भावः; यद्वा,—चिताचैत्यचिह्ने—चितायां—चितोपरि, शवदाहनस्थाने इत्यर्थः, यत् चैत्यं—चित्यमेव चैत्यं, मृतकचैत्य-मित्यर्थः, ("चित्यं मृतकचैत्ये स्यात्" इति मेदिनी) शवदाहस्थानस्योपरि मृतस्य स्मरणार्थम् आयतनविशेषः इति यावत्, तदेव चिह्नं—मृतस्य ज्ञापकविशेषः तस्मिन्, सुधानिचयचिते—चूर्णलेपेन धवलीकृते इत्यर्थः; यद्वा,—चिताचैत्यचिह्ने—स्मारक-मवारोपिताश्वत्थवृक्षादिकं तस्मिन्, सुधानिचयचिते—तन्मूलदेशमिष्टकया आवेष्ट्य दत्त-चूर्णलेपे इत्यर्थः।

(६) महाजिजिति—उत्कटसङ्ग्रामजेतरि, राजगजेन्द्रे—राज्ञः,—प्रभाकरवर्द्धनस्य, गजेन्द्रे—करिश्रेष्ठे, वाहनभूते इति भावः, वनाय—अरण्याय, विसर्ज्जिते—प्रेषिते, बन्धनविमुक्तीकृते इत्यर्थः, शोकजनकत्वेन द्रष्टुमशक्यत्वादिति भावः। ["विसर्ज्जिते च" इत्यत्र पुस्तकान्तरे "विसर्जिते" इति चकारहीनः पाठो दृश्यते। "क्रमेण"

(७) विश्राम्यति अश्रुणि, शिथिलीभवत्सु श्वसितेषु, अविस्पष्टेषु हा-कष्टाक्षरेषु, (८) उत्सार्य्यमाणासु च व्यसनशय्यासु उपदेशश्रवणक्षमेषु श्रोत्रेषु, (९) अनुरोधावधानयोग्ये ह्रदयेषु, गणनीयेषु नृपगुणेषु, प्रदेशवृत्तिताम् आश्रयति शोके, (१०) कृतेषु कविरुदितकेषु, जाते च स्वप्नावशेषदर्शने

इत्यत्र "क्रमेण च" इति चकारयुतश्च पाठान्तरम्] आक्रन्देषु—रोदनेषु, मन्देषु—शिथिलीभूतेषु, विलापेषु—खेदवचःसु; विरलीभवत्सु—ह्रासं गच्छत्सु, कालात्यये शोकस्य क्रमाद्ध्रासात् इति भावः।

(७) अश्रुणि—नेत्रवारिणि, विश्राम्यति—विरमति। श्वसितेषु—दीर्घनिश्वासेषु, शिथिलीभवत्सु—मन्दीभवत्सु। हा-कष्टाक्षरेषु—हा! कष्टम् इति वर्णेषु, अविस्पष्टेषु—अनुच्चेषु, प्रायेण अश्रुतेषु इत्यर्थः।

(८) व्यसनशय्यासु—मृतशय्यासु, यासु राजा मृतः, यासु वा पुरा राज्ञा शयितं तासु इत्यर्थः, मरणानन्तरमशौचकालिकस्वजनशय्यासु कम्बलास्तरणादिषु इति वा, उत्सार्य्यमाणासु—अपसार्य्यमाणासु; यद्वा,—व्यसनशय्यासु—व्यसने—विपदि, राज्ञः पीडाकाले इत्यर्थः, याः शय्याः,—शयनीयाः, शोकावसन्नदेहतया निरन्तरं स्वजनैरध्यासिताः शय्या इति यावत् तासु, उत्सार्य्यमाणासु—अपनीयमानासु, शोकशय्यां विहाय पुनः स्वकर्म्मणि प्रवृत्तेषु परिजनेषु इति भावः। श्रोत्रेषु—श्रवणेन्द्रियेषु, उपदेशश्रवणक्षमेषु—उपदेशग्रहणयोग्येषु इत्यर्थः, अविसनायमानेषु जनेषु इति भावः।

(९) ह्रदयेषु—चेतःसु, अनुरोधेति।—अनुरोधेन—निर्बन्धेन, आग्रहेणेत्यर्थः; यद्वा,—अनुरोधे—अनुवर्त्तने, कस्यचित् प्रार्थितेष्टसम्पादनेच्छायाम् इत्यर्थः, ("अनुरोधोऽनुवर्त्तनम्" इत्यमरः) अवधानं-मनोयोगः, तस्य योग्यानि—उचितानि तेषु। नृपगुणेषु—राजगुणेषु, गणनीयेषु—सङ्ख्येयेषु, अङ्कनीयेषु इत्यर्थः, मरणानन्तरमत्यधिकशोकावेगेन विह्वलैः मृतस्य गुणानामगण्यता क्रियते, क्रमेण शोकह्रासेऽनायासगण्यता इति भावः। शोके—शुचि, प्रदेशवृत्तितां—शयनगृहादिरुपदेशविशेषनिष्ठताम्, आश्रयति—अवलम्बमाने, क्वचित् किमपि दृष्ट्वा श्रुत्वा वा मृतस्य स्मरणात् सञ्जातशोके लोके इति भावः।

(१०) कविरुदितकेषु—कवेः,—काव्यरचयितुः, रुदितानीव रुदितकानि—रोदनानि, रोदनवर्णनानि इति भावः तेषु, कृतेषु, जनैरिति शेषः, कवीनां रुदितं

हृदयावशेषस्थाने चित्रावशेषाकृतौ काव्यावशेषनाम्नि नरनाथे, देवो हर्षः कदाचित् (११) उत्सृष्टव्यापारः पुञ्जीभूतवृद्धबन्धु-वर्गाग्रेसरेण अवनतमूकमुखेन सहाजनेन मौलेन अकाले आत्मानं वेष्ट्यमानम् अद्राक्षीत् ।

दृष्ट्वा च अकरोत् मनसि,—(१२) "किमन्यत् आर्य्यम् आगतम् आवेदयति अयं शोकपराभूतो (१३) लोकाकरः ?

यथा सहृदयादन्यः कोऽपि नावबुध्यते मर्मपि वा तदितरेषां मनसि समुदेति, तथा करुणविलपितेषु राज्ञः गुणग्राहिषु अतीवान्तरङ्गजनेषु प्रायशः समुदयमानेषु इति तात्पर्य्यम् ; यद्वा,—कविभिः अस्माभिरिवेति ध्वनिः, रुदितकेषु—रोदनेषु, स्वस्वकाव्येषु मृतराजविषयकरोदनोद्दीपकप्रबन्धेषु इत्यर्थः, कृतेषु—विरचितेषु ; यद्वा—कविभिः,—प्राज्ञैः, रुदितकेषु—क्रन्दनेषु, कृतेषु—पर्य्याप्तेषु, सङ्कोचं नीतेष्व इत्यर्थः, जातस्य हि ध्रुवो मृत्युः इति विचार्य्य इति भावः । ("युग-पर्य्याप्तयो कृतम्" इत्यमरः) नरनाथे—राज्ञि, स्वप्नावशेषदर्शने—कदाचित् स्वप्नावस्थायां मात्रदर्शनीये, कथामात्रावशेषतां गते इति तात्पर्य्यं, हृदयावशेषस्थाने—केवलं हृदयमात्रवासिनि इत्यर्थः, चाक्षुषप्रत्यक्षाभावात् इति भावः, चित्रावशेषाकृतौ आलेख्यमात्रस्थितमूर्त्तौ, काव्यावशेषनाम्नि—काव्यमात्रस्थितनामधेये, जाते—वृत्ते सति, ["यस्य भावेन—" (२।३।३७ पा०) इत्यादिना भावे सप्तमी ]।

(११) उत्सृष्टव्यापारः,—परित्यक्तराजकार्य्य इत्यर्थः । पुञ्जीभूतेति ।—पुञ्जीभूतः,—समवेतः, वृद्धः,—प्रवयाः, बन्धुवर्गः,—स्वजनसमूहः, तस्य अग्रेसरः,—पुरोवर्त्ती तेन अवनतमूकमुखेन—अवनतानि—अधःकृतानि, मूकानि वचनरहितानि, मुखानि येषां तादृशेन, अधोमुखेन मौनिना चेत्यर्थः, मौलेन—मूलायातेन, वंशपरम्परागतेन इति यावत्, सहाजनेन—सम्भ्रान्तजनगणेन, वेष्ट्यमानं—परिवार्य्यमाणम्, आत्मानं—स्वम् ।

(१२) आर्य्य—ज्येष्ठं भ्रातरम्, आगतम्—उपस्थितम्, अन्यत्—विना, किम् आवेदयति ?—ज्ञापयति ? आर्य्यागमनवार्त्तां विना एवंविधे अनुचितसमये किं कथयितुम् आगच्छति ? आर्य्य एव समागत इति सम्भावयामीति निष्कर्षः । शोकपराभूतः,—शोकेन विह्वलितः ।

(१३) लोकाकरः,—लोकसमूहः, ["लोकाकरः" इत्यत्र "लोकोत्करः" इति पाठे—उत्करशब्दस्य लक्षणया समूहार्थकत्वेन स एवार्थः ]।

इति (१४) वेपमानहृदयश्च पप्रच्छ प्रविशन्तम् अधिकातरप्रचारम् अन्यतमं पुरुषम्,—"अङ्ग! कथय किमार्य्यः प्राप्तः?" इति। स मन्दम् अब्रवीत्,—"देव! यथाऽऽदिशसि, द्वारि" इति। श्रुत्वा च (१५) सोदर्य्यस्नेहनिहितनिरतिशयमन्युमृदूकृतमनाः कथमपि न ववाम वाष्पवारिप्रवाहोत्पीड़ेन सह जीवितम्।

(१६) अनन्तरञ्च द्वारपालमुक्तेन प्रथमप्रविष्टेन परिजनेन

---

(१४) वेपमानहृदयः,—कम्पमानान्तःकरणः, चिरात् प्रवासप्रत्यागतप्रियदिदृक्षौत्सुक्येन, किं वाऽन्यदेते अशुभं कथयिष्यन्ति इत्युद्वेगेन वा इति भावः। अधिकातरप्रचारम्—अधिकातरः,—अतित्वरित इत्यर्थः, प्रचारः,—गतिर्यस्य तथाभूतम्। अङ्ग! इति सम्बोधनम्। मन्दं—शनैः, अनुच्चैरिति यावत्। यथा—यदित्यर्थः, आदिशसि—आज्ञापयसि, कथयसीत्यर्थः, अनुमिनोषीति यावत्, तथेति शेषः, आर्य्यः प्राप्त इति भावः। द्वारि—द्वारदेशे, वर्त्तत इति शेषः।

(१५) सोदर्य्येति।—सोदरस्य—सहोदरस्य अयं सोदर्य्यः, यः स्नेहः,—प्रणयातिशयः; यद्वा,—समाने उदरे शयितः सोदर्य्यः,—भ्राता, ["सोदराद्यः" (४।४।१०९ पा०) इति यप्रत्ययः] तस्मिन् यः स्नेहः,—प्रेम, तेन निहितः,—जनित, निरतिशयः,—अत्यन्तः, मन्युः,—शोकः, पितृमरणज इति भावः, "स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति कुमारसम्भवे कालिदासः; तेन मृदूकृतं—कोमलीकृतम्, आर्द्रीकृतमित्यर्थो वा, मनः,—चित्तं यस्य तथाभूतः, अतिविरसचित्त इत्यर्थः, विगलितहृदय इत्यर्थो वा, कथमपि—अतिकष्टेनेत्यर्थः, वाष्पेति।—वाष्पवारीणां—नेत्रजलानां, प्रवाहेण—स्रोतसा, अविरतप्रवृत्तनेत्रजलेनेत्यर्थः, यः उत्पीड़ः, पीड़नं तेन, जीवितं—जीवनं, न ववाम—न उज्जगार, कथमपि जीवनं दधारेति भावः। इह वाष्पवारिषु प्रवाहत्वाध्यवसायेन उक्तिप्रसिद्धिमतिक्रान्तया अतिशयोक्तिरलङ्कृतिः इति सङ्क्षेपः।

(१६) "अनन्तरम्" इत्यस्य "ज्येष्ठं भ्रातरमपश्यत्" इत्यग्रेण सम्बन्धः। तं विशिनष्टि, द्वारेत्यादि।—द्वारपालैः,—दौवारिकैः, मुक्तेन—त्यक्तेन, स्वकमार्गेणेति यावत्; यद्वा,—द्वारपालमुक्तेन—दौवारिककण्ठनिःसृतेनेत्यर्थः, द्वारपालकृतेनेति यावत्, पूर्व्वं शायन्न. तेषामेव दर्शनयोगात् इति भावः।

इव आक्रन्देन कथ्यमानं, (१७) दूरद्रुतागमनमुषितबाहुल्येन विच्छिन्नच्छत्रधारेण लम्बिताम्बरवाहिना (१८) भ्रष्टभृङ्गार-ग्राहिणा च्युताचमनधारिणा ताम्यत्ताम्बूलिकेन (१९) खञ्जत्-खड्गग्राहिणा कतिपयप्रकाशदासेरकप्रायेण (२०) बहुवासरान्त-रितस्नानभोजनशयनश्यामक्षामवपुषा परिजनेन परिवृतम्,

---

आक्रन्देन—रोदनध्वनिना, कथ्यमानम्—आगतो राज्यवर्द्धन इति निवेद्य-मानम्।

(१७) दूरेति।—दूरात्—दीर्घमार्गादित्यर्थः, द्रुतागमनेन—शीघ्रोपस्थित्या, मुषितं—विप्रलब्धं, त्यक्तमिति यावत्, बाहुल्यं—समवायः यत्र तेन, अल्पसङ्ख्यकेन इत्यर्थः, विच्छिन्नच्छत्रधारेण—अतिक्रान्तच्छत्रधारिपुरुषेण, पश्चात्कृतच्छत्रधारिणे-त्यर्थः; लम्बिताम्बरवाहिना—लम्बितं—वेगागमनात् स्रस्तमित्यर्थः, अम्बरं—वसनं, वहति—धत्ते इति तथोक्तेन।

(१८) भ्रष्टेति।—भ्रष्टः,—दूरपतितः, भृङ्गारग्राही—कनकालुकापरपर्य्या-यकजलपात्रविशेषवाही यत्र तेन, [ "भृङ्गार-भृङ्गारौ" (उ० ३ पा० १३६ सू०) इति भृञः आरन् मुम् गुक् ह्रस्वे च रूपम्। "भृङ्गारः कनकालुका" इत्यमरः ] च्युतेति। —च्युतः,—स्खलितः, पथि स्थितः इति यावत्, आचमनधारी—आचमनार्थजल-ग्राही यत्र तेन, ताम्यत्ताम्बूलिकेन—ताम्यन्—वेगगत्या क्लिश्यन्, ताम्बूलिकः,— ताम्बूलदायी ताम्बूलग्राही वा यत्र तेन।

(१९) खञ्जदिति।—खञ्जन्—द्रुतगमनेन विकलचरणः, खड्गग्राही—असि-वाही यत्र तेन, कतिपयेति।—कतिपये—अल्पे, प्रकाशाः,—अल्पुन्नतत्वात् दृश्य-माना इत्यर्थः, ये दासेरकाः,—उष्ट्राः, [ "मूलेरादयः" (उ०१ पा० ६२ सू०) इति दासतेः एरक्, ततः कन् ] यद्वा,—प्रकाशाः,—सुव्यक्ताः, पादचारित्वात् सुज्ञेया इति भावः, ये दासेरकाः,—दासीपुत्राः, [ "क्षुद्राभ्यो वा" (४।१।१३१ पा०) इति ढ्रक्, ततः कन्। "दासेरकस्तु करभे दासीपुत्रे च धीवरे" इति मेदिनी ] तेषां प्रायः,—बाहुल्यं यस्मिन् तेन।

(२०) बह्विति।—बहूनि—अनेकानि, वासराणि—दिवसान् व्याप्येत्यर्थः, अन्तरितेन—व्यवहितेन, परित्यक्तेन वा, अवज्ञातेनेत्यर्थः, स्नानेन—आप्लवेन, भोजनेन —आहारेण, शयनेन—निद्रया च, श्यामं—मलिनं, क्षामं—क्षीणञ्च, वपुः,—शरीरं यस्य तेन, परिजनेन—पार्श्वचरेण जनेन, परिवृतं—परिवेष्टितम्।

(२१) अविरलमार्गधूलिधूसरितशरीरतया शरणीकृतमिव अशरणया क्रमागतया वसुन्धरया, (२२) व्रणनिर्जयसमरशर-व्रणबद्धपट्टकैः दीर्घधवलैः समासन्नराज्यलक्ष्मीकटाक्षपातैः इव शबलीकृतकायम्, (२३) अवनिपतिप्राणपरित्राणार्थमिव च शोकहुतभुजि हुतमांसैः अतिकृशैः अवयवैः आवेद्यमानदुःख-भारम्, (२४) अपगतचूडामणिनि मलिनाकुलकुन्तले शेखर-शून्ये शिरसि शुचम् आरूढां मूर्त्तिमतीम् इव दधानम्,

(२१) अविरलेति।—अविरलाभिः,—सान्द्राभिः, मार्गधूलिभिः,—अध्व-रजोभिः, धूसरितम्—ईषत्पाण्डूभूतं, विवर्णमित्यर्थः, शरीरं—देहः यस्य तस्य भावः तत्ता तया हेतुना, अशरणया—अनाश्रयया, क्रमागतया—वंशपरम्परागतया, वसु-न्धरया—पृथ्व्या, शरणीकृतमिव—अशरणं शरणं कृतमिव, आश्रितमिवेत्यर्थः।

(२२) व्रणेति।—व्रणानां—तज्जातीयानां क्षत्रियाणां, निर्जयाय—निःशेषं विजयाय, यः समरः,—सङ्ग्रामः, तस्मिन् शरैः,—शरप्रहारैः इत्यर्थः, ये व्रणाः,—क्षतानि, तेषु बद्धानि—सन्नद्धानि, पट्टकानि—"पटी" इति वङ्गभाषया प्रसिद्धानि तैः, दीर्घधवलैः,—आयतश्वेतैः, कटाक्षपातोऽपि दीर्घधवलो ज्ञेयः। समासन्नेति।—समासन्ना—समुपस्थिता, या राज्यलक्ष्मीः, तस्याः कटाक्षपाताः,—अपाङ्गवीक्षणानि तैरिव, शबलीकृतकायं—चित्रितशरीरम्। अत्र व्रणपट्टकेषु राजलक्ष्मीकटाक्षपात-सम्भावनया उत्प्रेक्षया तद्गुणो व्यज्यते इति सङ्क्षेपः।

(२३) अवनीति।—अवनिपतेः,—राज्ञः, पितुरिति भावः, प्राणानां—जीवनस्य, परित्राणार्थम् इव—परिरक्षणार्थम् इव, शोकहुतभुजि—शोकाग्नौ, हुत-मांसैः,—हुतानि मांसानि—पिशितानि येषां तैः, अत एव अतिकृशैः,—अतिक्षीणैः, अवयवैः,—अङ्गैः, आवेद्यमानेति।—आवेद्यमानः,—ज्ञाप्यमानः, दुःखभारः,—शोकाति-शय्यमिति यावत् येन तं, क्षीणदेहानुमेयदारुणयन्त्रणमित्यर्थः।

(२४) अपगतेति।—अपगतः,—अपनीतः, चूडामणिः,—शिरोरत्नं यस्मात् तथाभूते, मलिनाकुलकुन्तले—मलिनाः,—मलदिग्धाः, रूक्षा इति यावत्, आकुलाः,—विस्रस्ताः, कुन्तलाः,—केशाः यत्र तादृशे, शेखरशून्ये—उष्णीषवर्ज्जिते, स्वग्दामालङ्कृतकिरीटवर्ज्जिते इति यावत्, आपीड़वर्ज्जिते वा, माल्यविरहिते इत्यर्थः, ("शिखास्वापीडशेखरौ" इति माल्यविवरणे अमरः) शुचं—शोकम्, आरूढाम्

(२५) आतपगलितखेदराजिना रुदता इव पितृपादपतनोत्कण्ठितेन ललाटपट्टेन लक्ष्यमाणं, (२६) प्रथीयसा वाष्पपयःप्रवाहेण अभिमतपतिमरणमूर्च्छितामिव महीम् अनवरतं सिञ्चन्तम्, (२७) अनल्पसन्तताश्रुप्रवाहनिपतननिम्नीकृतौ इव दुःखक्षामौ कपोलौ उद्वहन्तम्, (२८) अत्युष्णमुखमारुतमार्गगतेन द्रवता इव गलिततांम्बूलरागेण अधरविम्बेन उपलक्षितं,

—आश्रितां, सवर्णेषु सर्वानुरागसिद्धेः प्रायो दर्शनात् इत्याशयः, केशानां कार्ष्ण्यं प्रत्यक्षमेव, शोकस्य तु "कार्ष्ण्यञ्चाकीर्त्यघादिषु" इति कविसमयसिद्धत्वादिति ज्ञेयम्; मूर्त्तिमतीं—साक्षाद्दृश्यमानाम्। दधानं—धारयन्तम्।

(२५) आतपेति।—आतपेन—सूर्य्यमयूखेन, गलिता—निःसृता खेदराजिः,—घर्म्मपरम्परा यस्मात् तथोक्तेन, रुदता इव—अश्रूणि मुञ्चता इव, पितृपादेति।—पितुः,—जनकस्य पादपतनार्थं—चरणे प्रणिपातनिमित्तम्, उत्कण्ठितेन—उद्विग्नेन, ललाटपट्टेन—भालतटेन, [ कारणे तृतीया ] लक्ष्यमाणं—दृश्यमानम्।

(२६) प्रथीयसा—अतिविस्तृतेन, अतिप्रबलेनेत्यर्थः, वाष्पपयःप्रवाहेण—अश्रुस्रोतसा इत्यर्थः, अभिमतेति।—अभिमतस्य—इष्टस्य, पत्युः,—भर्त्तुः, राज्ञः इति भावः, मरणेन—मृत्युना, मूर्च्छितामिव—नष्टचेतनामिव, महीं—पृथिवीम्, अनवरतम्—अविच्छिन्नं यथा तथा, सिञ्चन्तं—वर्षन्तं, मूर्च्छाऽपनोदनार्थं नीरनिषेचनस्य शास्त्रलोकसम्मतत्वात् इति भावः।

(२७) अनल्पेति।—अनल्पेन—प्रभूतेन इत्यर्थः, सन्ततेन—विस्तृतेन, अविच्छिन्नेन इत्यर्थः, अश्रुप्रवाहनिपतनेन—वाष्पस्रोतोनिर्गमनेन, निम्नीकृतौ इव—निम्नतां नीतौ इव, उच्चस्थानपतज्जलं स्थलमपि निम्नीभवति, दुःखक्षामौ—दुःखेन क्षीणौ, कपोलौ—गण्डदेशौ, उद्वहन्तं—धारयन्तम्।

(२८) अत्युष्णेति।—अत्युष्णस्य—अतिसन्तप्तस्य, शोकवेगादिति भावः, मुखमारुतस्य—प्रश्वासस्य, मार्गं—पन्थानं, गतः,—प्रचलितः तेन, द्रवता—द्रवीभूतेन, सन्तापयोगादिति भावः, गलिततांम्बूलरागेण इव—गलितः,—प्रस्रुतः, ताम्बूलस्य—पर्णपत्रः रागः,—शोणिमा यस्मात् तथाभूतेन इव, अधरविम्बेन—विम्बफलाभेनौष्ठेन, उपलक्षितं—युक्तम्, आरक्तोष्ठमिति भावः; यद्वा,—द्रवता—पलायमानेनेव, सन्तापभयादिति भावः, गलितेति।—गलितः,—भ्रष्टः, विरहित इत्यर्थः

(२९) पवित्रिकामात्रावशेषेन्द्रनीलिकांशुश्यामायमानम् अचिर-श्रुतपितृमरणमहाशोकाग्निदग्धमिव श्रवणपाशम् उद्वहन्तम्, (३०) अस्फुटाभिव्यक्तव्यञ्जनेन अपि अधोमुख-स्तिमित-नयन-नील-तारक-मयूख-माला-खचितेन शोकप्ररूढश्मश्रुश्यामलेन इव मुखशशिना लक्ष्यमाणं, (३१) केशरिणम् इव महाभूभृद्विनिपातविह्वलनिरवलम्बनं, दिवसमिव तेजःपतिपतनपरि-

---

ताम्बूलरागः,—पर्णभक्षणजनितरक्तिमा इति यावत् यस्मात् तथाभूतेन, पितृशोकात् त्यक्तताम्बूलेन विवर्णेन इति भावः।

(२९) पवित्रिकेति।—पवित्रिकामात्रं—विशुद्धतामात्रम्, उज्ज्वलतामात्र-मित्यर्थः, न तु अलङ्कारार्थमिति भावः, अवशेषः यस्याः तथाभूता, या इन्द्रनीलिका—नीलकान्तमणिविशेषः, तस्या अंशुभिः,—किरणैः, दुःखातिरेकात् कर्णभूषणाना-मपसारणेऽपि इन्द्रनीलमणिमात्रावशेषतया तदुद्भूतैरिति भावः, श्यामायमानं—श्याममिव आचरन्तम्, अत एव अचिरेति।—अचिरश्रुतस्य—अल्पदिनमाकर्णितस्य, पितृमरणस्य—जनकात्ययस्य, महाशोकाग्निना—प्रबलमन्युवह्निना, दग्धमिव—भस्मीभूतमिव, श्रवणपाशं—शोभनकर्णं, ["पाशः केशादिपूर्व्वः स्यात्तत्सङ्घे कर्णपूर्व्वकः। सुकर्णे च·········॥" इति मेदिनी। "श्रवणपाशम्" इत्यत्र "श्रवणप्रदेशम्" इति पाठान्तरम्] उद्वहन्तं—दधानम्।

(३०) अस्फुटेति।—अस्फुटम्—अस्पष्टम्, ईषदित्यर्थः, अभिव्यक्तं—प्रकाशितं, व्यञ्जनं—लक्षणं, श्मश्रु इति यावत् यत्र तथाभूतेनापि, अधोमुखेति।—अधोमुखयोः,—अवनतयोः, स्तिमितयोः,—निश्चलयोः, नयनयोः,—चक्षुषोः, नीलानां—कृष्णानां, तारकमयूखानां—तारांशूनां, तारकमयूखानामिव तारक-मयूखानाम् इति निदर्शना; मालया—परम्परया, खचितः,—व्याप्तः तेन, अत एव शोकेति।—शोकेन——शुचा, प्ररूढं—सञ्जातं, प्रवृद्धमित्यर्थः, चौरकर्म्माभावादिति भावः, यत् श्मश्रु—कूर्च्चं, मुखलोम इति यावत्, तेन श्यामलः,—सकलङ्क इति यावत् तेन, मुखशशिना—वदनचन्द्रेण, [करणे तृतीया] लक्ष्यमाणं—दृश्यमानम्।

(३१) केशरिणमिव—सिंहमिव, महेति।—महान्—पराक्रान्त इत्यर्थः, उन्नतश्च, भूभृत्—राजा, गिरिश्च, तस्य विनिपातेन—विध्वंसेन, एकत्र,—मरणेन,

म्लानश्रियं श्यामीभूतं, नन्दनम् इव भग्नकल्पपादपं विच्छायं, दिग्भागमिव प्रोषितदिक्कुञ्जरशून्यं, गिरिम् इव गुरुवज्रपातदारितं कम्पमानं, (३२) क्रीतमिव कृशिम्ना, किङ्करीकृतमिव कारुण्येन, दासीकृतमिव दौर्मनस्येन, शिष्यीकृतमिव शोचितव्येन, (३३) आत्मीकृतमिव आधिना, मूकीकृतमिव मौनेन, पिष्टमिव पीड़या, खिन्नमिव सन्तापेन, उच्चितमिव चिन्तया, लुप्तमिव विलापेन, धृतमिव वैराग्येण, प्रत्याख्यातमिव प्रतिसङ्ख्या·

---

अन्यत्र,—पतनेन इत्यर्थः, विह्वल—व्याकुलं, निरवलम्बनं—निराश्रयञ्च। दिवनमिव—वासरमिव, तेज इति।—तेजःपतेः,—प्रतापवतो राज्ञः, सूर्य्यस्य च, पतनेन—नाशेन, अस्तंगमनेन च, परिम्लाना—मलिना, श्रीः,—शोभा यस्य तम्, अत एव श्यामीभूतं—मलिनकायम्, अन्धकारमयीभूतञ्च। नन्दनमिव—देवोद्यानमिव, भग्नकल्पपादपं—भग्नः,—विनष्ट इत्यर्थः, कल्पपादपः,—कल्पवृक्षवत् मनोरथपूरकः पिता यस्य तं, भग्नकल्पतरुञ्च, अत एव विच्छायं—विगतप्रभं, छायाशून्यञ्च। प्रोषितेति।—प्रोषितः,—विनष्टः, प्रवासं गतश्च, दिक्कुञ्जरः,—दिग्गजवत् बली पिता, दिग्गजश्च, तेन शून्यः,—विरहितः तम्। गुर्व्विति।—गुरुः,—पिता, वज्र इव—कुलिशमिव, शत्रुदारकत्वादिति भावः, तस्य पातेन—नाशेन, अन्यत्र,—गुरुणा—महता, वज्रपातेन—कुलिशपतनेन, दारितं—पाटितम्, अत एव कम्पमानं—वेपमानम्। मालोपमाऽलङ्कारः।

(३२) कृशिम्ना—कार्श्येन, क्रीतमिव—अधीनीकृतमिव, अतिकृशमित्यर्थः। कारुण्येन—शोकेन, किङ्करीकृतमिव—दासीकृतम् इव, अतिशोकातुरमित्यर्थः। दौर्मनस्येन—दुःखितमनस्कतया, दासीकृतं—भृत्यीकृतं, दुर्मनायमानमित्यर्थः। शिष्यीकृतमिव—अन्तेवासितां नीतमिव, शोचितव्येन—शोकेन, अतिदुःखिताकारमित्यर्थः।

(३३) आत्मीकृतमिव—आयत्तीकृतमिव, आधिना—मनःसन्तापेन, अतीव मनःपीड़ितमिति निष्कर्षः। मूकीकृतमिव—निर्वचनीकृतमिव, मौनेन—तूष्णीम्भावेन, निस्तब्धाकारमित्यर्थः। पिष्टमिव—पेषणं नीतमिव। खिन्नमिव—पक्वमिव, शोकविवर्णमित्यर्थः। उच्चितमिव—गृहीतमिव, सदा चिन्तापरमित्यर्थः। लुप्तमिव—अदृष्टमिव, विलापेन—परिदेवितेन, अविरतमनुशोचन्तमित्यर्थः। धृतमिव—आश्रितमिव, वैराग्येण—निर्वेदेन, अनासक्तमिति भावः। प्रत्याख्यातमिव—

नेन, अवज्ञातमिव प्रज्ञया, (३४) दूरीकृतमिव दुरभिभवत्वेन, (३५) अबोध्येन वृद्धबुद्धीनाम्, असाध्येन साधुभाषितानाम्, अगम्येन गुरुगिराम्, अशक्येन शास्त्रशक्तीनाम्, अपथेन प्रज्ञाप्रयत्नानाम्, अगोचरेण सुहृदनुरोधानाम्, अविषयेण विषयोपभोगानाम्, अभूमिभूतेन कालक्रमोपचयानां शोकेन कवलीकृतं ज्येष्ठं भ्रातरम् अपश्यत्। (३६) आवेगोद्गतकृतस्नेहोत्कलिकाकलापोत्क्षिप्यमाणकाय इव च परवशः समुद्गात्।

---

निराकृतमिव, प्रतिसङ्ख्यानेन—विवेकिन्या मत्या, विवेकविमूढमिति भावः। अवज्ञातमिव—तिरस्कृतमिव, प्रज्ञया—बुद्ध्या, हतधियमित्यर्थः।

(३४) दुरभिभवत्वेन—दुरपनेयत्वेन हेतुना; यद्वा,—दुः,—दुःखेन, अभिभवः,—पराजयः, तस्य भावः तत्त्वेन, दुर्जयत्वेनेत्यर्थः, दूरीकृतमिव—निराकृतमिव, सर्वाभिभवनीयाकारमिति भावः।

(३५) वृद्धबुद्धीनां—स्थविरमतीनां, प्राचीनत्वात् बहुदर्शिनीनामिति भावः, अबोध्येन—प्रबोधयितुमशक्येन इत्यर्थः। साधुभाषितानां—सज्जनवचनानां, सद्वाक्यानां वा, शान्तवचनानामित्यर्थः, असाध्येन—अनपनेयेन। गुरुगिरां—गुरुजनवचसाम्, अगम्येन—अविषयेण, अस्थानेन इति यावत्, गुरुजनप्रबोधवचसाऽपि अशमनीयेनेति भावः। शास्त्रशक्तीनां—शास्त्रज्ञानानामिति यावत्, अशक्येन—असाध्येन, शास्त्रतत्त्वज्ञानसद्भावेऽपि धैर्यस्खलनं प्रतिपादयतेति भावः। अपथेन—अविषयेण, प्रज्ञाप्रयत्नानां—प्रज्ञायाः,—बुद्धेः, प्रयत्नानां—प्रयासानां, विशिष्टज्ञाने सत्यपि अधैर्यं वर्द्धयता इति भावः। अगोचरेण—अचिवेण, बन्धुजनानुरोधेनापि अनपगच्छता इति भावः। अविषयेण—अगोचरेण, विषयोपभोगानां—स्रक्चन्दनवनिताद्युपसेवनानुरागाणां, विषयसम्भोगे अनासक्तिं जनयता इत्यर्थः। कालक्रमेति।—कालक्रमेण,—समयानुसारेण, ये उपचयाः,—वृद्धयः तेषाम्, अभूमिभूतेन—अनास्पदेन, कालवशेन समुदितः शोकः तादृक् हृदयविदारकः न भवति, यादृक् सपदि प्रवर्द्धितः इति तात्पर्य्यं, सद्य एव प्रवर्द्धमानेन, न तु कालक्रमेण उपचयं गच्छता इति वा भावः। कवलीकृतं—ग्रस्तम्।

(३६) आवेगेति।—आवेगेन—सम्भ्रमेण, उद्गतः,—उद्दीप्तः, कृतः,—समयः; स्नेहः,—प्रेमा, तेन य उत्कलिकाकलापः,—उत्कण्ठाऽतिशयः, तेन उत्क्षिप्यमाणः,—

अथ दूरादेव (३७) दृष्ट्वा देवो राज्यवर्द्धनः चिरकाल-कलितं वाष्पवेगं मुमुक्षुः सुदूरप्रसारितेन सङ्कलयन् इव सर्व्व-दुःखानि दीर्घेण दोर्दण्डद्वयेन गृहीत्वा कण्ठे मुक्ताकण्ठं पुनः पतितक्षौमे क्षामे वक्षसि, पुनः कण्ठे, पुनः स्कन्धभागे, पुनः कपोलोदरे निधाय तथा तथा रुरोद, यथा सबन्धनानि इव उदपाट्यन्त हृदयानि। (३८) स्मृतनृपतिना राजवल्लभे-नापि प्रतिशब्दनिभेन निर्भरमिव अरुद्यत। सुचिराच्च काथ-ञ्चिदपि निर्हृष्टनयनजलः पर्जन्य इव शरदि स्वयमेव उप-

ऊर्द्धं नीयमानः, उल्लाप्यमान इत्यर्थः, कायः,—देहः यस्य तथाभूत इव, परवशः,—विह्वलः. समुद्गात्—समुत्तस्थौ, समुज्जगाम वा।

(३७) दृष्ट्वा, हर्षमिति शेषः। चिरकालेति।—चिरकालकलितं—चिरधृतं, चिरनिरुद्धमिति यावत्. वाष्पवेगम्—अश्रुभरं, मुमुक्षुः,—त्यक्तुमिच्छुः, [ "सनाशंसभिक्ष उः" (३।२।१६८ पा०) इति सन्नन्तादुप्रत्ययः ] सुदूरात्—बहुदूरादेव, प्रसारितेन—विस्तारितेन, दीर्घेण—महता, आयतेनेत्यर्थः, दोर्दण्डद्वयेन—बाहुदण्डयुगलेन, सर्व्वदुःखानि—पितृशोकजनितसन्तापसमूहान्, सङ्कलयन्निव—चिन्तयन्निव। मुक्त-कण्ठम्—उच्चैरित्यर्थः। पतितक्षौमे—पतितं—स्खलितं, क्षौमं—पट्टोत्तरीयं यस्मात् तथाभूते, क्षामे—क्षीणे। निधाय—संस्थाप्य, हर्षमिति शेषः, हर्षस्य वक्षःस्थलादौ स्वमुखं संस्थाप्य इति वा। सबन्धनानि इव—ससन्धिबन्धनानि इव, सन्धिबन्धन-सहितानि इव इत्यर्थः। उदपाट्यन्त—उच्छेदं प्राप्तानि इत्यर्थः, स्वयमेवाच्छिद्यन्त इति भावः, [ पाटयतेः कर्म्मकर्त्तरि रूपम् ]।

(३८) स्मृतेति।—स्मृतः,—ज्ञानविषयतां नीतः, कृतस्मरण इत्यर्थः, नृपतिः,—राजा, प्रभाकरवर्द्धन इति यावत् येन तथाभूतेन, नृपतिं स्मरतेत्यर्थः, राजवल्लभेन—मृतस्य राज्ञः प्रियजनेन, का कथा वल्लभजनस्य, सर्वैरपि अविशेषेण इत्यपिकारार्थः। प्रतिशब्दनिभेन—प्रतिध्वनिसदृशेन, राज्यवर्द्धनरोदनस्येति भावः, निर्भरमिव—अतिमात्रमिव। सुचिराच्च इति चकारेण पूर्व्ववाक्ये सम्बन्धाभावेऽपि इतः पुनः राज्य-वर्द्धनस्यैव सम्बन्धवत्त्वं ख्याप्यते; निर्हृष्टनयनजलः,—निःशेषं यथा तथा, हृष्टानि—पातितानीत्यर्थः, नयनजलानि—नयनयोः,—नेत्रयोः, जलानि—अश्रूणि येन तथाभूतः; यद्वा,—निर्हृष्टानि नयनयोः जलानि अश्रूणि जलधरजलानीव येन, [ इत्युपमित-

शशाम। उपविष्टश्च (३९) परिजनोपनीतेन तोयेन तत्कर-नखमयूखपुञ्जतया महाजलप्लवजायमानफेनलेखमिव पुनः पुनः प्रमृष्टमपि (४०) पक्ष्माग्रसङ्गलद्बिन्दुवृन्दमन्दोन्मेषमुषित-दर्शनं कथञ्चयम् अपि चक्षुरक्षालयत्। (४१) ताम्बूलिकोप-स्थापितेन च वाससा चन्द्रातपशकलेनेव उष्णबाष्पदग्धं वदनम् उन्ममार्ज। तूष्णीमेव च चिरं स्थित्वा उत्थाय स्नानभूमिम् अगात्। तस्याञ्च स्थित्वा (४२) विभूषं विवस्तव्यस्तकुन्तलं मौलिम् अनादरात् निष्पीड्य, सावशेषमन्युस्फुरितेन

---

समास ] पर्जन्य इव—निःशेषनिर्दिष्टाम्बुमेघ इव, इन्द्र इव वा, स हि वर्षणं कारयति, ("पर्जन्यौ रसदब्देन्द्रौ" इति विश्वाख्यशेषः) उपशशाम—शान्तिं लेभे, वर्षणव्यापारात् न्यवर्त्ततेत्यर्थः।

(३९) परिजनोपनीतेन—परिचारकसमुपस्थापितेन, तोयेन—जलेन। तदिति। —तस्य—राज्यवर्द्धनस्य, करनखानां—हस्तनखराणां, मयूखपुञ्जः,—किरणराजिः, यत्र इति भावः यस्मिन् तस्य भावः तत्ता तया हेतुना, महेति।—महाजले—जलराशौ, नेत्रसलिले इति भावः, प्लवेन—सन्तरणेन, जायमाना—उत्पद्यमाना, फेनलेखा—फेनराजिः यस्मिन् तथोक्तमिव, प्रमृष्टमपि—प्रमार्ज्जनं नीतमपि।

(४०) पक्ष्मेति।—पक्ष्मणां—नेत्रलोम्नाम्, अग्रेभ्यः,—प्रान्तेभ्यः, सङ्गलन्तः,—निःसरन्तः, ये विन्दवः,—पृषताः, ("पृषन्तिविन्दुपृषताः पुमांसः" इत्यमरः) तेषां वृन्दैः,—समूहैः, मन्दः,—अल्पः, यः उन्मेषः,—उन्मीलनं, तेन मुषितं—हृतं, दर्शनम्—अवलोकनव्यापारः यस्य तत्। अक्षालयत्—प्रामार्जयत्, वेगवतां नेत्रप्रवाहाणां संस्तम्भनेन दर्शनं कथञ्चित् साध्यमासीदित्याशयः।

(४१) ताम्बूलिकेन—ताम्बूलवाहिना, उपस्थापितेन—उपनीतेन, वाससा—वस्त्रेण, चन्द्रातपशकलेनेव—चन्द्रमयूखखण्डेनेव, वितानखण्डेनेव वा, शुभ्रेण जलार्द्रतया शीतलेन चेति भावः, उष्णेन—तप्तेन, वाष्पेण—अश्रुणा, दग्धम्—उत्तप्तम् [ "उष्णवाष्पदग्धम्" इत्यत्र "उष्णोष्णवाष्पदग्धम्" इति पाठे,—उष्णोष्णेन—अतितप्तेनेत्यर्थः ] वदनं—मुखम्, उन्ममार्ज—प्रमृष्टवान्।

(४२) विभूषं—भूषारहितम्। विवस्तेति।—विवस्ताः,—ऊर्द्ध्वं क्षिप्ताः इत्यर्थः,

जिजीविषता इव (४३) जलधौतसुभगम् आत्मानमपि चुचुम्बिषता इव अधरेण, क्षालितस्य चक्षुषः (४४) श्वेतिम्ना च शारदशशिकरविकसितविषदकुमुदवनदलावलिबलिविक्षेपैः इव दिग्देवताऽर्च्चनकर्म्म कुर्व्वाणः, (४५) चतुःशालवितर्द्दिकायां नीचापाश्रयविनिहितैकोपवर्हायां पर्य्यङ्किकायां निपत्य जोषम् अस्थात्।

देवोऽपि हर्षस्तथैव स्नात्वा (४६) धरणितलनिहितकुथा-

---

व्यस्ताः,—विस्रस्ताः, कुन्तलाः,—केशाः यत्र तथोक्तं, मौलिं—शिरःसंयतकेशान्, धम्मिल्लकल्पान् इत्यर्थः, ("चूड़ा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः) अनादरात्—अयत्नात्, महागुरोर्निपातादिति भावः, निष्पीड्य—प्रोञ्छ्य, निर्जलं विधायेत्यर्थः, सावशेषमन्युस्फुरितेन—सावशेषेण—अवशिष्टेन, मन्युना—शोकेन, स्फुरितः,—स्पन्दित इत्यर्थः तेन, जिजीविषता इव—जीवितुमिच्छता इव, शोकाग्निदाहक्लेशादिति भावः।

(४३) जलेति।—जलेन—तोयेन, धौतः,—क्षालितः, अत एव सुभगः,—सुन्दरः तम्, आत्मानं—स्वम्, उत्तरोष्ठेन अधरोष्ठमिति भावः, चुचुम्बिषता इव—चुम्बितुमिच्छता इव।

(४४) श्वेतिम्ना—धावल्येन, शारदेति।—शारदः,—शरत्कालिकः, शशिकरः,—चन्द्रकरः, तद्वत् तेन वा विकसितानि—प्रस्फुटितानि, विषदानि—स्वच्छानि, शुभ्राणि इत्यर्थः, कुमुदानि—उत्पलानि, तेषां वनानि—समूहाः, तेषां दलावलयः,—पत्रराजय एव, वलिविक्षेपाः,—पूजोपहारप्रक्षेपाः तैः इव, दिग्देवताऽर्च्चनकर्म्म—दिग्देवतानां—दिगधिष्ठात्रीणां देवतानाम्, अर्च्चनकर्म्म—पूजनम्।

(४५) चतुःशालवितर्द्दिकायां—चतुःशाले—चतुर्दिगवस्थितगृहसमष्ट्यां, या वितर्द्दिका—वेदिका तस्यां, ("स्याद्वितर्द्दिस्तु वेदिका" इत्यमरः) नीचेति।—नीचेषु—निम्नेषु, तलभागेष्विति यावत्, अपाश्रयस्य—चन्द्रातपस्य, विनिहितः,—स्थापितः, एकः,—अद्वितीयः; यद्वा,—एकः,—केवलः, न तु आस्तरणादिकं किञ्चिदासीदिति भावः, उपवर्हः,—उपधानं यस्यां तथोक्तायाम्। ("उपधानन्तूपवर्हः" इत्यमरः) जोषं—तूष्णीं, ("तूष्णीमर्थे सुखे जोषम्" इत्यमरः) अस्थात्—स्थितः। इह यथावद्गुरुजनतिरोधाने महापुरुषकर्त्तव्यवर्णनदर्शनात् स्वभावोक्तिरलङ्कृतिः।

(४६) धरणीति।—धरणितले—भूतले, निहितायां—स्थापितायां, कुथायां

प्रसारितमूर्त्तिः अदूरे एव अस्य तूष्णीमिव समवातिष्ठत। दृष्ट्वा दृष्ट्वा दूयमानमानसम् अग्रजन्मानं समस्फुटदिव अस्य सहस्रधा हृदयम्। (४७) औरसदर्शनं हि यौवनं शोकस्य। शोकस्य तु नरपतिमरणदिवसादपि दारुणः स बभूव दिवसः। सर्व्वस्मिन् एव नगरे न केनचित् (४८) अपाचि, न केनचित् अस्नायि, न अभोजि, सर्वत्र सर्वेण अरोदि। केवलम् अनेन क्रमेण अतिचक्राम दिवसः। (४९) स च प्रत्यग्र-त्वष्टृटङ्कतष्टतनुः इव वहद्दहलरुधिररसमांसच्छविः अपर-

—वर्णकम्बले, चित्रितकम्बलविशेषे इत्यर्थः, ("कुथः स्त्रीपुंसयोर्वर्णकम्बले पुंसि वर्हिषि" इति मेदिनी) प्रसारिता—विस्तारिता, मूर्त्तिः,—तनुः येन तथाभूतः। अदूरे—निकटे। दूयमानमानसं—क्लिश्यमानचित्तम्। अग्रजन्मानं—ज्येष्ठम्। समस्फुटदिव—अदीर्य्यदिव, विदीर्णमभवदिवेत्यर्थः।

(४७) औरसदर्शनं—सहोदरदर्शनमिति भावः, यौवनम्—अत्युद्दीपकमिति भावः, शोकस्य—पितृमरणजस्य मन्योः। दारुणः,—भीषणः, क्लेशकर इत्यर्थः। स दिवसः,—राज्यवर्द्धनागमनदिनम् इत्यर्थः।

(४८) अपाचि—रन्धनं कृतम्। अस्नायि—स्नातम्। अभोजि—भुक्तम्। अरोदि—रुदितम्। क्रमेण—विधानेन, प्रकारेणेत्यर्थः, शोकविलापेनेति भावः, अतिचक्राम—गतः।

(४९) स च—प्रसिद्ध इत्यर्थः. प्रत्यग्रेति।—प्रत्यग्रम्—अभिनवं यथा तथा, त्वष्ट्रा—विश्वकर्मणा, देवशिल्पिना इत्यर्थः, ("देवशिल्पिन्यपि त्वष्टा" इत्यमरः) टङ्केन—पाषाणदारणास्त्रविशेषेण, ("टङ्कः पाषाणदारणः" इत्यमरः) तष्टा—घृष्टा, तनूकृता इत्यर्थः, [तक्षोतेः कर्मणि निष्ठायां रूपम्। "तष्ट-त्वष्टौ तनूकृते" इत्यमरः] तनुः,—शरीरं यस्य तथाभूत इव, निस्तेजा इवेत्यर्थः, पुरा विश्वकर्म्मणः सुता संज्ञा सूर्य्यगृहिणी पत्युस्तेजोऽतिरेकम् असहमाना विसोढुं पितरम् उपेत्य न्यवेदयत्। स तु कन्यायाः क्लेशपरिजिहीर्षया सूर्य्यं जामातरं शाणयन्त्रेण निशाय क्षीणतेजस्कम् अकरोत् इति पुराणवार्त्ता अत्र अनुसन्धेया; वहदिति।—वहन्—निःसरन्, वहलः,—वहुलः, रुधिररसः,—रक्तद्रवः यस्मात् तादृशं, यत् मांसं—पिशितं, तस्येव छविः,—कान्तिर्यस्य तथोक्तः, रक्तवर्ण इति यावत्, अतोत्क्षणकर इति भावः,

पारावारपयसि ममज्ज मञ्जिष्ठारुणोऽरुणसारथिः। (५०) मुकुलायमानकमलिनीकोषविकलं चकाण चञ्चरीककुलं कमलसरसि। (५१) सविधविरहव्याधिविधुरवधूबाध्यमानं बबन्धु बन्धौ इव विबुद्धबन्धूकभासि भास्वति सास्रां दृशं चक्रवाकचक्रवालम्। (५२) सञ्चरन्त्याः समधुकररवं कैरवाकरं कलहंसरमणीरमणीयं माणिक्यकाञ्चीकिङ्किणीजालमिव

---

मञ्जिष्ठाऽरुणः,—मञ्जिष्ठा—समङ्गा, रक्तवर्णलताभेदः इत्यर्थः, तद्वत् अरुणः,—रक्तः, अरुणसारथिः,—सूर्य्यः, अपरपारावारपयसि—पश्चिमसागरसलिले, ममज्ज—अवगाहिष्ट, अस्तम् अगमत् इत्यर्थः।

(५०) मुकुलेति।—मुकुलायमाने—मुकुलीभावमापन्ने, मुद्रिते इत्यर्थः, कमलिनीकोषे—पद्मिनीबीजकोषे, विकलं—विवशं, सुखाश्रयसङ्कोचात् विह्वलं वा इत्यर्थः, बद्धमिति भावः, सूर्य्यास्तमनेन सहसा पद्मानां निमीलनात् मकरन्दपानोन्मत्तानां बीजकोषगतानां भ्रमराणां पुटादिव ततः बहिरायातुमशक्यत्वादिति तात्पर्य्यं, चञ्चरीककुलं—भ्रमरवृन्दं, [ "फर्फरीकादयश्च" (उ० ४ पा० २० सू०) इति यङ्लुगन्तात् चरतेः ईकनि निपातनात् चञ्चरीकः ] कमलसरसि—पद्मसरोवरे, चकाण—आर्त्तस्वरं जुगुञ्ज, [ आर्त्तस्वरार्थकात् भौवादिकात् कणतेः लिटि रूपम् ]।

(५१) सविधेति।—सविधेन—सन्निहितेन, उपस्थितेन इत्यर्थः, निशागमनादिति भावः, विरहव्याधिना—विच्छेदपीड़या, विधुरया—कातरया, बध्वा—चक्रवाक्या इति यावत्, बाध्यमानम्—अनुचमानमिति भावः, चक्रवाकचक्रवालं—कोकमण्डलं, बन्धौ इव—सुहृदि इव, प्रियासङ्गमप्रदत्वादिति भावः, विबुद्धेति।—विबुद्धं—विकसितं, यत् बन्धूकं—तदाख्यपुष्पविशेषः, तद्वत् भासः,—दीप्तयः यस्य तथाभूते, भास्वति—रवौ, सास्रां—सवाष्पां, दृशं—नेत्रं, बबन्ध—निदधे, अन्योऽपि विपदि बन्धुमुखं निरीक्षते इति भावः। इह ब-ब-धानामसकृत् साम्यात् भकारस्य च सकृत् साम्यात् वृत्त्यनुप्रासः।

(५२) कलहंसेति।—कलहंसानां—कादम्बाख्यहंसविशेषाणां, रमणी—वधूः कलहंसीत्यर्थः, ("कादम्बः कलहंसः स्यात्" इत्यमरः) ताभिः रमणीयं—मनोज्ञं, समधुकररवं—मधुकराणां—भ्रमराणां, रवैः,—ध्वनिभिः, झङ्कारैरित्यर्थः, सह वर्त्तमानं, कैरवाकरं—कुमुदनिवहं कुमुदसरः वा, सञ्चरन्त्याः,—सञ्चरन्त्याः

आचक्राण श्रियः। (५३) प्रकटकलङ्कम् उदयमानं विशङ्कट-विषाणोत्कीर्ण-पङ्क-सङ्कर-शङ्कर-शकुर-शक्कर-ककुद-कूटसङ्काशम् अकाशत आकाशे शशाङ्कमण्डलम्।

अस्याञ्च (५४) वेलायाम् अनतिक्रमणीयवचनैः उपसृत्य प्रधानसामन्तैः विज्ञाप्यमानः कथञ्चिदपि अभुङ्क्त। (५५) प्रभातायाञ्च शर्व्वर्यां सर्वेषु प्रविष्टेषु राजसु समीपस्थितं हर्षदेवम् उवाच,—"तात! भूमिरसि गुरुनियोगानाम्। (५६) शैशव एव अग्राहि गुणवत्पताका इव भवता तातस्य

---

श्रियः,—लक्ष्म्याः, शोभाया इति भावः, माणिक्येति।—माणिक्यस्य—रत्नविशेषस्य, काञ्ची—रशना, तस्याः किङ्किणीजालं—क्षुद्रघण्टिकानिचयः, आचक्राणेव—रराणेव। तदानीं प्रदोषस्यागमात् कुमुदानां विकाशेन लक्ष्म्याः आविर्भावोऽभूत्, तेन हि तस्याः किङ्किणीरणनमुत्प्रेक्षितमिति वेदितव्यम्।

(५३) प्रकटकलङ्कं—प्रस्फुटलाञ्छनम्, उदयमानम्—उद्गच्छत्, विशङ्कटेति।—विशङ्कटं—विशालं, ("विशङ्कटं पृथु बृहत् विशालं पृथुलं महत्" इत्यमरः) विषाणं—शृङ्गं, तेन उत्कीर्णः,—उद्धृतः, यः पङ्कः,—कर्द्दमः, तेन सङ्करः,—सङ्गः यस्य तथाभूतं, शङ्करस्य—हरस्य, शकुरशक्करस्य—दान्तवृषभस्य, यत् ककुदकूटम्—अङ्गविशेषाग्रभागः, ग्रीवास्थमांसपिण्डमित्यर्थः, "झुँटी" इति वङ्गभाषया प्रसिद्ध, ("प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" इत्यमरः) तत्सङ्काशं—तत्सदृशं, मध्ये श्यामलं धवलवृषभककुदमिवेति भावः, शशाङ्कमण्डलं—चन्द्रविम्बम्, आकाशे—गगने, अकाशत—व्यद्योतत।

(५४) वेलाया—समये। अनतिक्रमणीयवचनैः,—अलङ्घ्यवाग्भिः। विज्ञाप्यमानः,—अनुरुध्यमानः। कथञ्चिदपि—अतिकृच्छ्रेण इत्यर्थः, अनिच्छायां सत्यामपि माननीयस्य पितुः प्रियसामन्तस्य शासनमनुल्लङ्घ्य इति भावः।

(५५) शर्व्वर्यां—निशायाम् ("अथ शर्व्वरी। निशा निशीथिनी रात्रिः" इत्यमरः) प्रभातायां—भातुं प्रवृत्तायाम्, अवसानायामिति भावः। राजसु—मित्रनृपसमूहेषु, सामन्तराजवृन्देषु च। उवाच, राज्यवर्द्धन इति शेषः। तात—वत्स भूमिः,—पात्रम्। गुरुनियोगानां—गुरुजनादेशानाम्।

(५६) शैशवे—बाल्ये, अग्राहि—गृहीता, विदितेति यावत्, गुणवत्पताका

चित्तवृत्तिः। यतो भवन्तमेवंविधं (५७) विधेयं विधिविधानोपनतनैर्घृण्यम् इदं किमपि बिभणिषति मे हृदयम्। (५८) न अवलम्बनीया बालभावसुलभा प्रेमविलोमा वामता। (५९) वैधेय इव मा कृथाः प्रत्यूहम् ईहितेऽस्मिन्। न खलु न जानासि लोकवृत्तम्। (६०) लोकत्रयत्रातरि मान्धातरि मृते किं कृतं पुरुकुत्सेन? (६१) भ्रूलतादिष्टाष्टादशद्वीपे दिलीपे वा रघुणा?

---

इव—गुणशालिनी वैजयन्ती इव, तातस्य—पितुः, चित्तवृत्तिः,—मनोऽभिप्रायः, हृदयस्थितिः वा, निरन्तरं तदनुमताचाराद्यनुवर्त्तनात् इति भावः।

(५७) विधेयं—वचनेस्थितं, ("विधेयो विनयग्राही वचनेस्थित आश्रवः" इत्यमरः) विधीति।—विधिः,—दैवस्य, विधानेन—विलसितेन, उपनतम्—उपस्थितं, नैर्घृण्यं—निष्कारुण्यं, वैराग्यमिति भावः यस्य तथाभूतम्, इदं मे—मम, हृदयं—चित्तं, किमपि—यत्किञ्चित् इत्यर्थः, बिभणिषति—भणितुमिच्छति।

(५८) बालभावसुलभा—शैशवसहजा। प्रेमविलोमा—प्रेम्णः,—भ्रातृवात्सल्यस्येति भावः, विलोमा—विरोधिनी, वामता—प्रतिकूलता, अवाध्यतेत्यर्थः, न अवलम्बनीया—न ग्रहणीया।

(५९) वैधेय इव—मूर्ख इव, ("मूर्खवैधेयबालिशाः" इत्यमरः) अस्मिन्—ईदृशे, ईहिते—चेष्टिते, प्रत्यूहं—विघ्नं, ("विघ्नोऽन्तरायः प्रत्यूहः स्यात्" इत्यमरः)। लोकवृत्तं—लोकाचारं, न जानासि—न वेत्सि, खलु—निश्चये, इति न, जानास्येवेत्यर्थः। विषयद्वार्थे नकारद्वयं वामनाभिसम्मतम् इति ज्ञेयम्।

(६०) लोकत्रयत्रातरि—त्रिलोकीत्राणक्षमे इति भावः, मान्धातरि—तदाख्य-प्रसिद्धनृपतौ। पुरुकुत्सेन—तत्पुत्रेण इत्यर्थः, किं कृतम्?—राज्यमेव गृहीतं, न तु वनमाश्रितमिति भावः। एवमुत्तरत्रापि बोध्यम्।

(६१) भ्रूलतेति।—भ्रूलतया—भ्रूभङ्गेति भावः, आदिष्टानि—आज्ञप्तानि, अष्टादशद्वीपानि येन तथाभूते, अष्टादशद्वीपाधिपतौ इति भावः; ननु सप्तद्वीपा हि पृथिवी श्रूयते, लवणादिभिः सप्तभिः समुद्रैः परिवेष्टितानि जम्बूप्रभृतीनि सप्त द्वीपानि भवन्तीति, सत्यप्येवं द्वीपानामष्टादशत्वे महाकविप्रयोगः यथा हि,—"अष्टादशद्वीपनिखातयूपः" इति रघौ कालिदासः; दिलीपे—तदाख्ये इक्ष्वाकुवंश्ये राजनि, मृते इति शेषः, रघुणा—तत्पुत्रेण इत्यर्थः, किं कृतम्? इति पूर्वेणान्वयः।

(६२) महासुरसमरमध्याध्यासितत्रिदशरथे दशरथे वा रामेण? (६३) गोष्पदीकृतचतुरुदन्वदन्ते दुष्यन्ते वा भरतेन? तिष्ठन्तु तावदेते, (६४) तातेनैव शतसमधिकाध्वरधूमविसरधूसरितवासववयसि (६५) सुगृहीतनाम्नि तत्रभवति परासुतां गते पितरि किं न अकारि राज्यम्? यत्तु किल शोकः (६६) समभिभवति, तं कापुरुषम्

(६२) महासुरेति।—महासुराणा—दैत्यप्रवराणा, समरमध्ये—रणाभ्यन्तरे, अध्यासित,—स्थापित, अधुषित इत्यर्थः, त्रिदशरथः—देवरथः येन तथाभूते, इन्द्रसाहाय्यार्थम् असुरान् हन्तुम् अध्यासितदेवरथे इति भाव., दशरथे, मृते इति शेष, रामेण—तत्पुत्रेण इत्यर्थ., किं कृतम्? इति पूर्वेणान्वय.।

(६३) गोष्पदीति।—गोष्पदीकृता.,—गो. पदं, प्रमाण, गाव. पद्यन्ते यस्मिन् देशे इति वा गोष्पद—गो. पदजात. गर्त्त इत्यर्थ., ["गोष्पद—" (६।१।१४५ पा०) इत्यादिना प्रमाणसेवितार्थयोरत्र निपातनम्] अगोष्पद गोष्पद कृता. गोष्पदीकृता,—गोष्पदवत् तुच्छीकृता इत्यर्थ., अवहेलयैव लङ्घिता इति भाव, चतुर्णाम् उदन्वतां—समुद्राणा, अन्ता,—सीमा. येन तथाभूते, ससागरधराऽधीश्वरे इत्यर्थ., दुष्यन्ते—चन्द्रवंशीयप्रसिद्धनृपविशेषे, मृते सति इति शेष, भरतेन—तत्पुत्रेण इति यावत्, किं कृतम्? इति पूर्वेणान्वय.। तिष्ठन्तु—दूरे सन्तु, तद्दतीतकालिकत्वादेतेषामिति भाव, एते—मान्धातादय।

(६४) तातेन—पित्रा, प्रभाकरवर्द्धनेन इति भाव:, शतेति।—शतात्—शतसङ्ख्याभ्य, समधिका.,—अतिरिक्ता:, अध्वरा.,—यज्ञा., अश्वमेधादय. इति यावत्, तेषा धूमविसरे,—धूमविस्तारै, यज्ञाग्निसमुत्थधूमैरित्यर्थ., धूसरित,—मलिनीकृत इत्यर्थ, वासव,—इन्द्र एव, वय.,—पक्षी येन तथाभूते, ("वय: पक्षिणि बाल्यादौ यौवने च नपुंसकम्" इति मेदिनी) धूमोद्गमेन हि पक्षिण: धूसरीक्रियन्ते, अस्य तु यज्ञाना तथा धूमोद्गति. जाता, यथा स्वर्गाधिपतिरपि धूसरताम् अयासीत् इति भाव.।

(६५) सुगृहीतनाम्नि—सुष्ठु गृहीतं, जनैरिति शेष., नाम यस्य तथाभूते, प्रात:-स्मरणीये इत्यर्थ, तत्रभवति—पूज्ये, पितरि—अस्मत्पितामहे इति भाव:, परासुता—पञ्चत्व, गते—प्राप्ते सति राज्य किं न अकारि?—न कृत किम्?

(६६) समभिभवति—परिभवति, आयत्तीकरोतीत्यर्थ.। कापुरुषं—पुरुषा:

आचक्षते शास्त्रविदः। स्त्रिणो हि विषयः शुचाम्। तथाऽपि किं करोमि, स्वभावस्य सेयं कापुरुषता वा, (६७) स्त्रैणं वा, यदेवम् आस्पदं पितृशोकहुतभुजो जातोऽस्मि। मम हि (६८) भूभृति पर्य्यस्ते निरवशेषतः प्रस्रवणानि इव स्रुतानि अश्रूणि, अस्तमिते (६९) महति तेजसि अन्धकारीभूतदशाशस्य प्रनष्टः प्रज्ञालोकः, प्रज्वलितं हृदयम्, (७०) आत्मदाहभीत इव स्वप्नेऽपि न उपसर्पति विवेकः, बलीयसा सन्तापेन (७१) जातुषमिव विलीनम् अखिलं धैर्य्यं, (७२) पदे पदे दिग्धरोपाहता इव हरिणी मुह्यति मतिः, पुरुषद्वेषिणी इव

---

षमम्। विषयः—देशः, पात्रमित्यर्थः, शुचां—शोकानां. स्त्रिय एव शोकविवशा भवितुमर्हन्ति न तु पौरुषभूषिताः पुरुषा इति भावः। तथाऽपि—स्त्रीणामिव शोकविषयत्वे सत्यपि। स्वभावस्य— प्रकृतेः। कापुरुषता—नीचता।

(६७) स्त्रैणं—स्त्रीसम्बन्धित्वम्। आस्पदं—पात्रं, चेत्रमित्यर्थः। पितृशोकहुतभुजः—पितृशोकानलस्य।

(६८) भूभृति—राज्ञि, पर्व्वते च, पर्य्यस्ते—विध्वस्ते, निरवशेषतः,—कार्त्स्न्येन, प्रस्रवणानि इव—निर्झरा इव, स्रुतानि—गलितानि।

(६९) महति—प्रभूते, तेजसि—तेजःसम्पन्ने पितरि सूर्य्ये च। अन्धकारीभूतदशाशस्य—अन्धकारीभूताः,—ध्वान्तसमाच्छन्ना इत्यर्थः, दश आशाः,—दिशो यस्य तादृशस्य, ममेति पूर्व्वेणान्वयः, दशापि दिशोऽन्धकारमयीः इव पश्यामि इत्यर्थः। प्रनष्टः,—अदर्शनं गतः, विलुप्त इत्यर्थः, प्रज्ञा—बुद्धिः एव आलोकः,—उद्योतः।

(७०) आत्मेति।—आत्मनः,—स्वस्य, दाहात्—ज्वलनात्, भीतः,—जातातङ्कः, प्रज्वलितहृदये उपस्थिया इति भावः। उपसर्पति—उपगच्छति, आविर्भवतीत्यर्थः, विवेकः,—पृथगात्मता, इदं तथ्यमिदमतथ्यम् इत्यादि विचारवती बुद्धिरित्यर्थः।

(७१) जातुषमिव—लाक्षानिर्म्मितमिव, [जतुनो विकारः अण् पुगागमः। "लाक्षा राक्षा जतु क्लीवे यावोऽलक्तो द्रुमामय" इत्यमरः] विलीनं—विलयं गतम्।

(७२) पदे पदे—प्रतिपदं, प्रत्येकशब्दोच्चारणे, प्रत्येकपदक्षेपणे च इत्यर्थः दिग्धेति।—दिग्धेन—विषाक्तेन, रोपेण—इषुणा, शरेणेत्यर्थः, ("कलम्बमार्गणशराः

दूरत एव भ्रमन्ती परिहरति स्मृतिः, अम्बा इव तातेनैव सह गता धृतिः, (७३) वार्द्धुषिकप्रयुक्तानि इव वित्तानि प्रतिदिवसं वर्द्धन्ते दुःखानि, (७४) शोकानलधूमसम्भारसम्भूताम्भोधरभरितमिव वर्षति नयनवारिधाराविसरं शरीरम्। सर्व्वः (७५) पञ्चजनः पञ्चत्वमुपरतः प्रयाति, वितथमेतद्वदति बालो

पत्नी रोप इषुर्द्वयोः" इत्यमरः) यद्यपि "बाणे विषाक्ते दिग्ध-लिप्तकौ" इत्यमरवचनात् दिग्धशब्देनैव विषाक्तो बाणो लभ्यते, तथाऽपि पुनः रोपग्रहणं तस्य अतिभीषणत्वद्योतनार्थमिति बोद्धव्यम्, आहतेव—विद्धेव, मुह्यति—मोहं गच्छति। पुरुषद्वेषिणी इव—पुरुषं दृष्ट्वा पलायनपरा कामिनी इव इत्यर्थः। भ्रमन्ती—चलन्ती, पलायमाना इत्यर्थः। परिहरति—परित्यजति, मामिति शेषः। अम्बा इव—माता इव। धृतिः,—सन्तोषः।

(७३) वार्द्धुषिकेति।—वृद्ध्या—ऋणादौ प्रयुक्तेभ्यः धनेभ्यः लाभरूपया, जीवतीति वार्द्धुषिकः,—वृद्ध्याजीवः, कुसीदजीविवणिक् इत्यर्थः, ["प्रयच्छति गर्ह्यम्" (४।४।३० पा०) इति वृद्धेः ठकि "वृद्धेर्वृधुषि-भावो वक्तव्यः" (वा०) इति वृधुषिः वृद्धौ रूपम्। "कुसीदिको वार्द्धुषिको वृद्ध्याजीवश्च वार्द्धुषिः" इत्यमरः] तेन प्रयुक्तानि —कस्मिंश्चित् कार्य्ये ऋणादिरूपे नियुक्तानि इव, वित्तानि—धनानि। वर्द्धन्ते—वृद्धिं गच्छन्ति।

(७४) शोकेति।—शोकानलस्य—शोकाग्नेः, धूमसम्भारेण—धूमनिवहेन, सम्भूतः,—सञ्जातः, योऽम्भोधरः—मेघः, तथा हि मेघदूते,—"धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः" इति कालिदासः; तेन भरितमिव—आपूरितमिव, शरीरं—देहः, अनेन विशेषणेन तात्पर्य्यवलात् गगनमिति च आयातम्; एतेन शरीरस्य उत्साहशक्त्यादिशून्यता व्यज्यते। नयनवारिधाराविसरं—वाष्पधारासन्तानं, वर्षति—मुञ्चति। [इहोत्प्रेक्षोत्थापितपूर्व्वपदार्थस्य उत्तरवाक्यगतत्वेन पदार्थहेतुकं काव्यलिङ्गमुत्प्रेक्षाङ्गमिति सङ्क्षेपः]।

(७५) पञ्चजनः,—पञ्चभूतनिर्म्मितो मानवः, ("स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः" इत्यमरः) उपरतः,—मृतः सन्, पञ्चत्वं—पञ्चानां क्षित्यादीनां भावः तत्त्वं, पञ्चसु पृथिव्यादिषु विलयरूपतामित्यर्थः, ("पञ्चत्वं पञ्चानां भावे प्राणानामत्ययेऽपि च" इति मेदिनी) प्रयाति—गच्छति। वितथम्—असत्यम्। बालः,—मूर्खः, अज्ञः इति यावत्, ("मूर्खेऽर्भकेऽपि बालः स्यात्" इत्यमरः)

श्लोकः; (७६) तातो हुताशनतामिव केवलमापन्नः, येनैवं दहति माम्। इदमसाम्परायिकमिव हृदयमवष्टभ्य व्युत्थितः शोको दुर्निवारः बाड़व इव वारिराशिं, पविरिव पर्व्वतं, क्षय इव क्षपाकरं, राहुरिव रविं, दहति दारयति तनू-करोति कवलयति। न शक्नोति मे हृदयं तादृशस्य सुमेरु-कल्पस्य महापुरुषस्य विनिपातम् अश्रुभिरेव केवलैः अतिवाह-यितुम्। राज्ये (७७) विषे इव चकोरस्य मे विरक्तं चक्षुः।

---

(७६) कथं वितथं वदति? इत्यत आह, तात इति।—तातः,—पिता, [ केचित्तु "तातः" इत्यत्र "ततः" इति पठित्वा "पञ्चसु पृथिव्यादिषु लयात् पुरुषः तादूप्यं प्रतिपद्यते इत्युक्तं यतः, ततः,—इत्यादिमावप्रतिबन्धकायदर्शनादित्यर्थः" इति व्याचख्युः ] हुताशनताम्—अग्नित्वमेव, न तु पृथिव्यादित्वमित्येवकारार्थः, आपन्नः, —प्राप्तः, केवलं हुताशने एव लयं गत इत्यर्थः, येन—हुताशनभावेन इत्यर्थः। इह दाहस्य साधनव्यापकत्वज्ञानात् अनुमित्यलङ्कृतिः प्रतीयमानोत्प्रेक्षाऽङ्गं चमत्कारातिशय्यात्। असाम्परायिकमिव—अयुक्तमिव, असाम्प्रतं वा; यद्वा,—असाम्परायिकं —साम्परायिकं—युद्धं, ("युद्धमायोधनं ..। ...समीकं साम्परायिकम्" इत्यमरः) तत्रार्हति इति असाम्परायिकं - युद्धानर्हं, सभयमित्यर्थः, इदं हृदयं—चित्तम्, अव-ष्टभ्य—आक्रम्य, व्युत्थितः,—विशेषेण उत्थितः, शोकः,—मन्युः, दुर्निवारः,—अनि-वार्य्यः, यो हि भीतः, स कथं व्युत्थितं निवारयितुमर्हेत्? इति भावः; बाड़व इव —वड़वानल इव, वारिराशिं—समुद्रं, पविरिव—वज्रमिव, ("ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः" इत्यमरः) क्षय इव—राजयक्ष्मा इव, क्षपाकरं— चन्द्रं, दहति—ज्वलयति, दारयति—भिनत्ति, छिनत्तीत्यर्थः, द्विधा विपाटयति वा, तनूकरोति—क्षीणीकरोति, कवलयति—ग्रसति, सर्व्वत्र मामिति शेषः। "बाड़वः" इत्यादिवाक्येषु "दहति" इत्यादिक्रियाणां क्रमेणान्वयः। सुमेरुकल्पस्य— सुमेरुपर्व्वतनिभस्य, सर्व्वगुणरत्नवत्त्वात्, आश्रिताभीष्टपूरकत्वाच्चेति भावः। अति-वाहयितु—यापयितुं, शमयितुमित्यर्थः, न्यग्भावयितुमिति वा; शोकप्रवाहैः न महागिरीन्द्राः परिचालनार्हाः इत्याशयः।

(७७) विषे इव—गरले इव, ["इवेन समासो विभक्त्यलोपश्च" (वा०) इति एकपदीभावः, सन्धिरेव केवलं पाठान्तरे दृश्यते इति ] चकोरस्य—पक्षिविशेषस्य,

( ७८ ) बहुस्मृतपटावगुण्ठनां रञ्जितरङ्गां जनङ्गमानामिव वंश-वाह्याम् अनार्य्यां श्रियं त्यक्तुमभिलषति मे मनः। क्षणमपि ( ७९ ) दग्धगृहे शकुनिरिव न पारयामि स्थातुम्। सोऽहमिच्छामि, मनसि (८०) वाससीव सुलग्नं स्नेहमलमिदम् अमलैः शिखरिशिखरप्रस्रवणस्वच्छस्रोतोऽम्बुभिः क्षालयितुम् आश्रमपदे।

---

विषे दृष्टे चकोरस्य अक्षिणी विरज्येते इति प्रसिद्धिः। विरक्तम्—अनासक्तं, रक्तिम-विरहितञ्चेत्यर्थः।

( ७८ ) बह्विति।—बहवः,—अनेके, मृतानां—शवानाम्; एकत्र,—युद्धे हतानां प्रतिपक्षवीराणाम्, अन्यत्र,—कारणान्तरेण गतजीवानां जनसामान्यानामिति भावः, पटाः,—वस्त्राणि, अवगुण्ठनानि,—मस्तकाच्छादनानि, शिरोवेष्टनानि च यस्याः तां, रञ्जितरङ्गां—रञ्जितः,—शोणितीकृतः, रङ्गः,—रणभूमिः यस्यै तां, ( "कार्म्मणेऽपि च रङ्गो ना रागे नृत्ये रणक्षितौ" इति मेदिनी ) अन्यत्र,—रञ्जितः,—अनुरक्तीकृतः, रङ्गः,—नृत्यसमाजः यया तथोक्तां, जनङ्गमानां—चाण्डालानां, [ "गमश्च" ( ३।२।४७ पा० ) इति खचि "अरुर्द्विषत्—" ( ६।३।६७ पा० ) इत्यादिना मुम्। "चण्डालप्लवमातङ्गदिवाकीर्त्तिजनङ्गमाः" इत्यमरः ] वंशवाह्यामिव—वंशानु-क्रमेण वहनीयामिवेत्युत्प्रेक्षा, अतिगर्हणीयामित्यर्थः, कौलीन्यवहिष्कृताञ्च; यद्वा,—वंशेन—वेणुदण्डेन, वाह्यां—प्राप्यां, वंशनिर्म्मितद्रव्यनयनोचितामित्यर्थः, अनार्य्याम्—असाध्वीं, नीचप्रकृतिमित्यर्थः; एकत्र,—बहुनरपतिभोग्यत्वात्, अन्यत्र,—नीचा-श्रयत्वात्, श्रियं—सम्पदं, राजलक्ष्मीमित्यर्थः, शोभाञ्च।

( ७९ ) दग्धगृहे—भस्मीभूतावासे, पितृपरित्यक्तत्वात् विगतश्रीके इति भावः, शकुनिरिव—गृहपालितपक्षीव, गृहचटकिकेव इत्यर्थः, [ "शकुनिरिव" इत्यत्र "शकुलिरिव" इति पाठेऽपि स एवार्थः; "गृहसारिका" इति केचित् ]।

( ८० ) वाससि इव—वसने इव, सुलग्नं—संसक्तम्, इदं स्नेहमलं—स्नेहः,—संसारेषु अनुरागः, मलमिव—पुरीषमिव, स्वेदश्लेष्मादिसञ्चयमिव वा; अन्यत्र,—स्नेहस्य—तैलादेः, वस्त्रलग्नस्येति भावः, मलं—मालिन्यम्, अमलैः,—निर्म्मलैः शिखरीति।—शिखरिणः,—पर्व्वतस्य, शिखरेषु—शृङ्गेषु, यानि प्रस्रवणानि—निर्झराः, तेषां स्वच्छानि—विशदानि, स्रोतांसि—प्रवाहाः, तेषाम् अम्बूनि—जलानि तैः, क्षालयितुं—शोधयितुम्, आश्रमपदे—तपोवने, यथा निर्म्मलप्रयोगैः

(८१) अतस्त्वम् अन्तरितयौवनसुखाम् अनभिमतामपि जरामिव पुरुः आज्ञया गुरोर्गृहाण मे राज्यचिन्ताम्। (८२) त्यक्तसकलबालक्रीडेन हरिणा इव दीयताम् उरो लक्ष्म्यै। परित्यक्तं मया शस्त्रम्" इत्येवमभिधाय खड्गग्राहिणो हस्तात् आदाय निजं निस्त्रिंशम् उत्ससर्ज धरण्याम्।

मलीमसं वासः शुध्यति, तथा निष्कामाराधनमेव मे अन्तर्मलशोधकं भविष्यतीत्याशयः।

(८१) अतः,—आश्रमगमनाभिलाषात्, [ "अतः" इत्यत्र "यतः" इति पाठे,—यस्या इच्छायाः, यस्मादभिलाषादित्यर्थः ]। अन्तरितेति।—अन्तरितं—व्यवहितं, दूरीकृतमित्यर्थः, यौवनसुखं—तादृग्योचितविषयोपभोगानन्दः यस्यां तथाविधां, वर्जितयौवनोचितविषयसम्भोगसुखामित्यर्थः; एकत्र,—प्रजानां हितचिन्तायां राज्यरक्षणचिन्तायाञ्च सदा अवधानतोचित्यात्; अन्यत्र, क्षीयमाणधातुकतया उपभोगसामर्थ्याभावादिति भावः, अत एव अनभिमताम्—अनभिलषिताम्, अप्रियामित्यर्थः, जरामिव—वलिपलितादिना कायशैथिल्यापादकदशाविशेषमिव, वार्द्धक्यमिवेति यावत्, पुरुः,—ययातिनृपतेः कनीयान् सुतः, स इव, गुरोः,—ज्येष्ठस्य भ्रातुः, पितुश्च। राज्यचिन्तां—राज्यभारम्। पुरा ययातिः शुक्राचार्य्यसुतां देवयानीम् अवगत्य, तस्या दासीभूतां वृषपर्व्वणोऽसुरराजस्य कन्यां शर्म्मिष्ठां निर्भरं कामयमानो दुहितृनिवेदितेन शुक्रेण, "जरां प्राप्स्यसि" इति शप्तः विषयभोगालम्पटः ज्येष्ठान् सुतान् यदुप्रभृतीन् "मदीयां जरां गृह्णीत" इत्यादिशन्नपि तैः अवमतः कनीयसे पुत्राय पुरवे जरां दत्तवान्, स तु पुरुः पितुराज्ञया तां जरां प्रतिपेदे इति भारती वार्त्ता।

(८२) त्यक्तेति।—त्यक्ता—उत्सृष्टा, सकला—समग्रा, बालक्रीड़ा—शैशवोचितखेला येन तथाभूतेन, बालभावं परित्यजता इत्यर्थः। हरिणेव—विष्णुनेव; हरिरपि द्वापरे कृष्णजन्मानि कंसवधानन्तरं तद्राज्ये उग्रसेनं संस्थाप्य शासनसौकर्य्यार्थं तत्रैव स्थित्वा सर्व्वा वृन्दावनलीलाः बालोचिताः परिजहार, लक्ष्म्यंशसम्भूतां रुक्मिणीञ्च उरसि अस्थापयत्; लक्ष्म्यै—राजश्रियै, कमलायै च, उरः,—वक्षःस्थलं, दीयतां—समर्प्यताम्। निस्त्रिंशम्—असिं, [ "सङ्ख्यायाः तत्पुरुषस्य वाच्यः" (वा०) इति निर्गतः त्रिंशतोऽङ्गुलिभ्यः इति विग्रहे डच् प्रत्ययः। "खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः" इत्यमरः ] उत्ससर्ज—परितत्याज।

अथ तच्छ्रुत्वा (८३) निशितशिखेन शूलेन इव आहतः अविदीर्णहृदयो देवो हर्षः समचिन्तयत्,—"किं नु खलु माम् अन्तरेण आर्य्यः केनचित् असहिष्णुना किञ्चिन्नाहितः कुपितः स्यात्? उत अनया दिशा परीक्षितुकामो माम्? उत (८४) शोकजन्मा चेतसः समाक्षेपोऽयमस्य? आहोस्वित् आर्य्य एव अयं न भवति? किं वा आर्य्येण अन्यदेवाभिहितम् अन्यदेव अश्रावि मया (८५) शोकशून्येन श्रवणेन्द्रियेण? आर्य्यस्य वा अन्यदेव विवक्षितम् अन्यदेव आपतितं मुखेन? अथवा सकलवंशविनाशाय विनिपातनोपायोऽयं विधेः? मम वा (८६) निखिलपुण्यपरिक्षयोपक्षेपः? कर्म्मणाम्

---

(८३) निशितशिखेन—तीक्ष्णाग्रेण। माम् अन्तरेण—विना, मयि असन्निहिते इत्यर्थः। असहिष्णुना—आवयोः सौभ्रात्रं सोढुमशक्नुवता इत्यर्थः। आहितः,—अवबोधितः, किञ्चित् मद्दुश्चेष्टितमिति भावः। उत—अथवा, अनया दिशा—मयेन इत्यर्थः, परीक्षितुकामः,—परीक्षार्थी, आत्मानं प्रति मदीयाभिप्रायज्ञानेच्छुरित्यर्थः।

(८४) शोकजन्मा—मन्युप्रभवः। समाक्षेपः,—समाकर्षणं, समाकुलता वा, विकृतिरिति यावत्। आहोस्वित्—अथवा।

(८५) शोकशून्येन—शोकेन—शुचा, शून्यं—स्वव्यापारहीनमित्यर्थः, विमनस्कतया सम्यगर्थग्रहणशक्तिविरहितमिति भावः तेन। विवक्षितं—वक्तुम् इष्टम्। आपतितम्—उपस्थित, निर्गतं वा। सकलेति।—सकलस्य—कृत्स्नस्य, वंशस्य—कुलस्य, अस्माकमिति भावः, विनाशाय—ध्वंसाय, अस्मान् निर्वंशीकर्त्तुम इत्यर्थः, आर्य्ये वनं गते अहमप्यवश्यमेव तमनुगमिष्यामि, मय्यपि गते वंशोऽयं कर्णधारविहीना नौरिव विपर्य्यासं प्राप्स्यति, तेन च अस्य लोपः अवश्यम्भावीति भावः। विनिपातनोपायः,—ध्वंसप्रयत्नः, ["विनिपातनोपायः" इत्यत्र "निपातनोपायः" इति पाठेऽपि स एवार्थः] विधेः,—नियतेः, प्रतिकूलस्य दैवस्य इति भावः, परमेष्ठिनो वा, विधातुर्वा इत्यर्थः, ("विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी)।

(८६) निखिलेति।—निखिलानां—समग्राणां, पुण्यानां—श्रेयसां, परिक्षयः,—प्रणाशः, तस्य उपक्षेपः,—प्रसङ्गः।

(८७) अननुकूलसमग्रग्रहचक्रवालविलसितं वा ? अथवा (८८) तातविनाशनिःशङ्ककलिकालक्रीड़ितम् ? येन अयं यः कश्चित् इव य[illegible]चनकारिणं मा अपुष्पभूतिवंशसम्भूतमिव, अताततनयमिव, (८९) अनात्मानुजमिव, अभक्तमिव, दृष्टदोषमिव,

(८७) अननुकूलेति।—अननुकूला,—प्रतिकूलाः, सम[illegible]—सर्वे, ग्रहा,—रव्यादय इति यावत्, तेषा चक्रवालस्य—समूहस्य, विलसित—विजृम्भित, विचेष्टितमिति यावत्, अनुकूले ग्रहमण्डले कथमेवं घटेत ? इत्याशयः।

(८८) तातेति।—तातस्य—पितु, विनाशेन—उपरमेण, निःशङ्कः,—निर्भयः, य कलिकाल,—चतुर्थयुगः, तस्य क्रीडितं—विलसितं, जीवति ताते अधर्म्मस्तीमाना शासितरि तच्छासनात् कलियुगः जनाना धर्म्मविगर्हितकर्म्मणि प्रवृत्तिरूप स्वप्रभावं विस्तारयितुं न प्राभवत्, इदानी तस्यापायात् निर्भयस्य निर्भरकलिकालस्य स्वप्रभावविस्तारफलमिदं भवेनु ? इति भाव ; येन—कलि[illegible]डितेन इत्यर्थ, कलिप्रभावेण इति यावत्, [illegible]यम्—आ[illegible]; यः कश्चिदिव—साधारणजन इव, यत्किञ्चनकारिणं—यथेच्छकारिणम्, उल्लङ्घितगुरुजनशासनमित्यर्थ, य गुरुजनादेशमतिक्रम्य यथेष्टमाचरति, स एव ईदृशकठोरवाक्यताडनं प्राप्तुमर्हति, न मद्विधः गु[illegible]जनानुरक्त इति भावः, यद्वा,—यत्किञ्चनकारिणम्—अकिञ्चनम्, अल्पबुद्धिसामर्थ्यादिकमिति यावत्, बाल्यसुलभक्रीडनाद्यनुरक्तम्, अत एव राज्यशासनादिदुरूहव्यापारानभिज्ञत्वात् अयोग्यमिति भाव.। अपुष्पभूतिवंशसम्भूतमिव—पुष्पभूतिः,—तन्नामा आदिराज, तस्य वंशे—अन्ववाये, असम्भूतमिव—अनुत्पन्नमिव, यः तादृशस्य सुनयस्य पुष्पभूते. वंशे समुत्पन्न, स कथमीदृशलनयमाचरितु शक्नुयादिति भाव। अताततनयमिव—अतातस्य—तातभिन्नस्य अन्यस्य, तनयमिव—पुत्रमिव, [ "बलिमलितनिभ्यः कयन्" (उ० ४ पा० ९९ सू०) इति तने. कयन्] प्रख्यातधार्मिकस्य पितुः पुत्रो भूत्वा ईदृशे धर्म्मविगर्हिते कर्म्मणि प्रवृत्ति. मे कदाऽपि न सम्भवेदिति भावः।

(८९) अनात्मानुजमिव—अनात्मन.,—आत्मभिन्नस्य, अनुजमिव—कनिष्ठभ्रातरमिव, एवं नि[illegible]रुहस्य अस्य भ्रातुर्मे ईदृशी दुराकाङ्क्षा असम्भवा एवेति भाव। अभक्तमिव—अननुरक्तमिव, अननुरक्ते एवंविधम् अप्रियमवश्य वक्तु युज्यते, न सर्व्वथाऽनुरक्ते मयि इति भाव.। दृष्टदोषमिव—ज्ञातापराधमिवेत्यर्थः, अपराधिनः भ्रातुः एवं मिषेण त्याग. कदाचित् युज्यते, न निर्दोषस्य ममेति भावः।

(९०) श्रोत्रियमिव सुरापाने, सद्भृत्यमिव स्वामिद्रोहे, सज्जनमिव नीचोपसर्पणे, सुकलत्रमिव व्यभिचारे, अतिदुष्करे कर्म्मणि समादिष्टवान्? (९१) तदेतत् तावत् अनुरूपं यत्, शौर्य्योन्माद-मदिरोन्मत्त समस्त-सामन्त-मण्डल समुद्र-मथन-मन्दरे तादृशि पितरि मृते तपोवनं वा गम्यते? वल्कलानि वा गृह्यन्ते? तपांसि वा सेव्यन्ते? या तु मयि (९२) राज्याज्ञा, सा दग्धे-

---

(९०) सुरापाने—मद्यपाने, श्रोत्रियमिव—छान्दसमिव, वेदपारगमिवेत्यर्थः, ("श्रोत्रियच्छान्दसौ समौ" इत्यमरः) केनचित् सुरां पातुमादिष्टेन श्रोत्रियेण यथा तत् कर्म्म अतिदुष्करं भवति, तथेति भावः। स्वामिद्रोहे—प्रभोरनिष्टाचरणे; सद्भृत्यमिव—उत्तमं किङ्करमिव, प्रभोरनिष्टाचरणे केनचित् नियुक्तेन प्रभुभक्तदासेन यथा तत् कर्म्म न सुकरं भवति, तथेति भावः। नीचोपसर्पणे—हीनानुगमने, प्राकृतजनसेवायामित्यर्थः; सज्जनमिव—साधुजनमिव, केनचित् बलात् नीचसेवायां प्रवर्त्तितेन उत्तमप्रकृतिकेन यथा तत् कर्म्म न सुकरं भवति, तथेति भावः। व्यभिचारे—परपुरुषप्रसक्तौ, सुकलत्रमिव—सतीं स्त्रियम् इव, केनचित् बलात् व्यभिचारे नियोजितया पतिव्रतया यथा तत् कर्म्म जीवनसंशयेऽप्यनादरणीयं भवति, तथेति भावः। अतिदुष्करे—अतिदुर्वहे, दुःखेनापि कर्त्तुमशक्ये इत्यर्थः, ज्येष्ठक्रमोल्लङ्घनरूपे इति भावः, कर्म्मणि—राजपद-ग्रहणरूपकार्य्ये, कनिष्ठानर्हराज्यचिन्तायामिति भावः। इह सन्दर्भे शङ्काऽसूयाऽधैर्य्य-वितर्कदैन्यविमोहादीनां शबलता विशङ्काग्रजविषयकरतिभावस्याङ्गम् इति भावशबलोऽलङ्कारः।

(९१) एतत्—वक्ष्यमाणतपोवनगमनादिरूपं कर्म्म इत्यर्थः, अनुरूपं—युक्तम्। शौर्य्येति।—शौर्य्योन्मादेन—पराक्रमजनितौज्ज्वल्येन, मदिरोन्मत्ता इव—सुरापानमत्ता इव ये समस्ताः,—सर्वे, सामन्ताः,—अधीश्वराः, तेषां मण्डलं—चक्रवालम् एव, समुद्रः,—सागरः; तस्य मथने—विलोडने, मन्दरः,—मन्दराख्यो गिरिः तस्मिन्, तादृशि—प्रख्याते धीरे, समुद्धतराजन्यगणविजेतरि इत्यर्थः, जडाशयान्तर्हितसाररत्न-समुच्चयानामुद्धर्त्तरि इत्यर्थश्च, एतेन उन्मत्तोन्मादभञ्जनपुरःसररत्नाविष्कारः, विजिगीषोः परलोकगतभूपालस्य लोकोपकारार्थकः, न तु हिंसार्थकः इति व्यज्यते। सेव्यन्ते—च[…]न्ते।

(९२) राज्याज्ञा—राजकार्य्यादेशः। दग्धे सन्तप्ते, पितृशोकेन प्रखरसूर्य्य-

ऽपि दाहकारिणी मयि अवग्रहग्लपिते धन्वनि इव अङ्गार-वृष्टिः। तत् असदृशम् इदम् आर्य्यस्य। यद्यपि च (९३) विभुः अनभिमानः, द्विजातिः अनेषणः, मुनिः अरोषणः, कपिः अचपलः, (९४) पण्डितः अमत्सरः, वणिक् अतस्करः, रम्यजानिः अकुहनः, साधुः अदरिद्रः, (९५) द्रविणवान् अखलः, कीनाशोऽनच्चिगतः, मृगयुः अहिंसः, (९६) पाराशरी

---

किरणेन च इति भावः। अवग्रहग्लपिते—अवग्रहः,—प्रतिबन्धः, पितृमरणरूपविघ्न इत्यर्थः, वृष्टिरोधश्च, ("अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके" इति मेदिनी) तेन ग्लपिते—ग्लानिं नीते, अवसन्ने विशुष्के च इति भावः। धन्वनि इव—मरौ इव, ("समानौ मरुधन्वानौ" इत्यमरः) अङ्गारवृष्टिः,—अग्निस्फुलिङ्गवर्षणम्। असदृशम्—अयुक्तम्, अनुचितमित्यर्थः, दग्धदाहनमप्रयोजनमित्याशयः।

(९३) विभुः,—प्रभुः, अनभिमानः,—निरहङ्कारः। द्विजातिः,—ब्राह्मणः, अनेषणः,—निरभिलाषः, अयाचक इत्यर्थः, अधिगतार्थतिरस्कर्त्ता इत्यपरो वा। मुनिः,—तापसः, अरोषणः,—अक्रोधनः। कपिः,—वानरः, अचपलः,—अचञ्चलः, धीर इत्यर्थः।

(९४) पण्डितः,—विद्वान्, ["पण्डितः" इत्यत्र "कविः" इति पाठेऽपि स एवार्थः] अमत्सरः,—अन्यशुभद्वेषरहितः। वणिक्—व्यवसायी, अतस्करः,—अचौरः। रम्यजानिः,—रम्या—मनोहारिणी सुन्दरीत्यर्थः, जाया—भार्य्या यस्य तथोक्तः, सुन्दरभार्य्य इत्यर्थः, ["रम्यजानिः" इत्यत्र "प्रियजानिः" इति पाठे—प्रिया—प्रियदर्शना, सुन्दरीत्यर्थः।] अकुहनः,—नास्ति—कुहना—ईर्ष्या शङ्का वा यस्य तथाभूतः, ("कुहना दम्भचर्य्यायामीर्ष्यालौ" इति मेदिनी) परपुरुषभयवर्ज्जित इत्यर्थः, स्त्रियाः पुरुषान्तरसन्निशङ्काशून्य "भार्य्या रूपवती शत्रुः" इत्यादिप्रामाण्यात् इति भावः। साधुः,—सुजनः, खलतावर्ज्जित इत्यर्थः, अदरिद्रः,—धनी।

(९५) द्रविणवान्—धनी, अखलः,—अदुर्जनः, सुजन इत्यर्थः। कीनाशः,—क्षुद्रः, नीचाशय इत्यर्थः, कृतान्तो वा, ("कृतान्ते पुंसि कीनाशः क्षुद्र-कार्षिकयोस्त्रिषु" इत्यमरः) अनच्चिगतः,—अद्वेष्यः, प्रिय इति यावत्, ("द्वेष्ये त्वच्चिगतः" इत्यमरः) मृगयुः,—व्याधः, [मृगं यातीत्यर्थे "मृगय्वादयश्च" (उ० १ पा० २८ सू०) इति कुप्रत्यये निपातनम्] अहिंसः,—हिंसावर्ज्जित इत्यर्थः।

(९६) पाराशरी—भिक्षुः, ("भिक्षुः परिव्राट् कर्म्मन्दी पाराशर्य्यपि मस्करी"

ब्राह्मण्यः, सेवकः सुखी, कितवः कृतज्ञः, (९७) परिव्राट् बुभुक्षुः, नृशंसः प्रियवाक्, अमात्यः सत्यवादी, (९८) राजसूनुः अदविनीतश्च जगति दुर्लभः, तथाऽपि मम आर्य्य एव आचार्य्यः। को हि नाम (९९) तद्विधे निपतिते राजगन्धकुञ्जरे जनयितरि, (१००) ईदृशे च विफलीकृतविशालशिलास्तम्भोरुभुजे भूभुजि भ्रातरि त्यक्तराज्ये ज्यायसि नववयसि तपोवनं गच्छति, (१०१) सकललोकलोचनजलपाताप्लाविते

इत्यमरः) ब्राह्मण्यः,—ब्राह्मणोचितानुष्ठानरतः। सेवकः,—भृत्यः। कितवः,—धूर्त्तः, द्यूतकृदित्यर्थः, ("धूर्त्तोऽक्षदेवी कितवोऽक्षधूर्त्तो द्यूतकृत् समाः." इत्यमरः) कृतज्ञः,—कृतोपकारवित्।

(९७) परिव्राट्—यतिः, बुभुक्षुः,—भोजनार्थी, प्रायः दृश्यते ब्रह्मसमाधिमग्नानां भोजनाभिलाषः कादाचित्कः आश्रितसेवकानुरोधेन, न तु स्वेच्छयेत्याशयः। ["परिव्राट् बुभुक्षुः" इत्यत्र "परिव्राडबुभुक्षुः" इति पाठे,—परितो व्रजति गच्छतीति परिव्राट्—पर्यटकः, दूराध्वविहरणशील इत्यर्थः, अबुभुक्षुः,—अभोजनेच्छुः, अक्षुधित इत्यर्थः]। नृशंसः,—निष्ठुरः, प्रियवाक्—मधुरभाषी। अमात्यः,—सचिवः, राजकर्मचारीति यावत्, सत्यवादी—सत्यभाषणशीलः, शासनतन्त्रे सर्व्वत्र सत्यशीलत्वेन न कार्य्यसिद्धिः इत्याशयः।

(९८) राजसूनुः—राजतनयः, अदविनीतः,—सुशील इत्यर्थः, राजपुत्रं मां दुर्विनीतं मत्वा यदेतदुक्तवान् तमार्य्य इति भावः। आचार्य्यः,—गुरुः, उपदेष्टा इत्यर्थः, आर्य्यः यथा माम् अशिक्षयत्, तथैव मया शिक्षितमिति भावः।

(९९) तद्विधे—तादृशे, निरुपमप्रतापशालिनि इति भावः, राजेति।—राजा एव गन्धकुञ्जरः,—गन्धद्विपः तस्मिन्, जनयितरि—पितरि।

(१००) ईदृशे—एवम्भूते, विफलीकृतेति।—विफलीकृतौ—व्यर्थीकृतौ इति यावत्, विशालौ,—विपुलौ, महाभारौ इत्यर्थः, शिलास्तम्भौ—प्रस्तरस्तम्भौ याभ्यां तादृशौ, उरू—महान्तौ, भुजौ—बाहू यस्य तथाभूते, भूभुजि—भूपतौ। ज्यायसि—अग्रजे। नववयसि—यौवने।

(१०१) सकलेति।—सकलानां—सर्वेषां, लोकानां—जनानां, लोचनजलस्य—वाष्पवारिणः, पातेन—वर्षणेनेत्यर्थः, आप्लाविते—समन्तात् व्याप्ते, पङ्किले इति

मृत्पीलके वसुधाऽभिधाने (१०२) धनमदखेलनिखिलखलसुख-विकारलक्षणाख्यायमाननीचाचरणां (१०३) सुभटकुटुम्ब-कर्म्मकुम्भदासीं श्रीसंज्ञिकां चण्डालः कामयेत? कथमिव सम्भावितम् अत्यन्तम् अनुचितम इदम् आर्य्येण? (१०४) किम् उपलक्षितम् अनवदातम् इदं मयि? किं वा ...स्य चेतसः च्युतः सौमित्रिः? विस्मृता वा वृकोदरप्रभृतयः?

---

यावत्, मृत्पीलके—मृत्पिण्डे, अतितुच्छे इति भावः, वसुधाऽभिधाने—पृथिव्याख्ये।

(१०२) धनमदेति।—धनमदेन—ऐश्वर्य्यगर्वेण, खेलाः,—क्रीडा येषां तथाभूताः, ये निखिलाः,—समग्राः, खलाः,—दुर्जनाः, तेषां मुखविकाराणां—वदनभङ्गीनां, लक्षणेन—चिह्नेन, आख्यायमानं,—कथ्यमानं, सूच्यमानमिति यावत्, नीचाचरणं—निकृष्टव्यवहारः यस्याः ताम्, आश्रयभूतानां दुष्टानां धनिनां नीचतासूचकविकृतमुखभङ्ग्यादिदर्शनेन तदाश्रितायाः लक्ष्म्याः अपि नीचाचारवत्त्वमनुमितम् आधाराधेययोः अभेदाध्यवसायात् इति बोद्धव्यम्।

(१०३) सुभटेति।—सुभटानां—सुवीराणां, शूराणामिति यावत्, कुटुम्बस्य—परिवारस्य, कर्म्म—सेवारूपं कार्य्यं, तत्र कुम्भदासी—जलवाहिनी किङ्करी ताम्, तस्याः पराक्रमलभ्यत्वात् वीरकुटुम्बानां किङ्करत्वं बोद्धव्यम्, श्रीसंज्ञिका—लक्ष्मीनाम्नी, कामयेत?—अभिलषेत्? अग्रजे तपोवनं गते नाहं राज्यलक्ष्मीम् अभिलषामि इति समग्रवाक्यार्थः, यद्यहं राजलक्ष्मीकामुकः, तदा मां चण्डालाधमं जानीयुर्लोका इति भावः। ["सकललोक...कामयेत" इत्यत्र "सकललोकलोचनजलपातापवित्रं मृत्पीलकं वसुधाऽभिधानं धनमदखेलनिखिलखलमुखविकारलक्षणाख्यायमाननीचाचरणां श्रीसंज्ञिकां सुभटकुटुम्बकर्म्मकुम्भदासीं चण्डालोऽपि कामयेत?" इति पाठे,—सकललोकलोचनजलपातेन अपवित्रं—दूषितं मृत्पीलकं श्रीसंज्ञिकाञ्च चण्डालोऽपि कामयेत? चण्डालोऽपि न कामयेत इत्यर्थः। अस्मिन् पक्षे उभयोरेव कर्म्मत्वम्, पूर्व्वपक्षे—"मृत्पीलके" इत्यस्य अधिकरणत्वं, मृत्पीलके स्थितं इति भावः]। सम्भावितम्—आशंसितम्। अनुचितम्—अन्याय्यं, साधुजनविगर्हितमित्यर्थः।

(१०४) किं—कथम्। उपलक्षितम्—अनुमितम्। अनवदातम्—अशुभ्रं, मलिनमित्यर्थः, अयशस्करमिति यावत्। चेतसः,—मनसः, च्युतः,—प्रभ्रष्टः,

(१०५) अनपेक्षितभक्तजना स्वार्थैकनिष्पादननिष्ठुरा न आसीत् इयमार्य्यस्य ईदृशी प्रभविष्णुता ? अपि च आर्य्ये तपोवनं गते जिजीविषुः को हि नाम महीं मनसाऽपि ध्यायेत् ? (१०६) कुलिशशिखरखरनखर-प्रचय-प्रचण्ड-चपेटापाटितमत्तमातङ्गोत्तमाङ्गमदच्छटाच्छुरितचारु केसरभारभास्वरमुखे केशरिणि वनविहाराय विनिर्गते

---

सौमित्रिः,—लक्ष्मणः। वृकोदरप्रभृतयः,—भीमसेनादयः, तेषां सौभ्रात्रं किमार्य्येण विस्मृतम् ? येनाहं भ्रातृद्रोहीव एवमादिष्टः ? इति भावः, यथा रामस्य अनुजो लक्ष्मणः, यथा वा युधिष्ठिरस्य अनुजा भीमादयः ज्येष्ठानुगामिन आसन्, तथा अहमपि ज्येष्ठमेव तम् अनुवर्त्ते इति तात्पर्य्यम्।

(१०५) अनपेक्षितेति।—न अपेक्षितः,—अनुरुद्धः, भक्तजनः,—सेवकजनः यया तथाभूता, अगणितानुगतजनसुखदुःखा इति यावत्, स्वार्थेति।—स्वार्थस्य—स्वकार्य्यस्य, एकं—केवलं, निष्पादनं—सम्पादनं, तेन निष्ठुरा—नृशंसा, स्वार्थमात्र-सम्पादनपरायणा, न तु परार्थपरा इति भावः, प्रभविष्णुता—प्रभुता। ["भुवश्च" (३।२।१३८ पा०) इति इष्णुच् छन्दस्येव, कथमत्र प्रयोगः तस्येति ? उच्यते,—"जगत्प्रभोरप्रभविष्णु वैष्णवम्" इत्यादिवत् लोकेऽपि तथा प्रयोगाः कवीन्द्रनिरङ्कुशत्वावलम्बनाः इति समाधेयम्। व्याकरणलक्षणहीनत्वात् च्युतसंस्कारतापददोषो व्याकलनीयः इति दिक्] आर्य्यस्य इयं प्रभविष्णुता ईदृशी अनपेक्षितभक्तजना स्वार्थैकसम्पादननिष्ठुरा न आसीदित्यन्वयः। जिजीविषुः,—जीवितुमिच्छुः।

(१०६) कुलिशेति।—कुलिशस्येव—वज्रस्येव, शिखरम्—अग्रं यस्य तथाभूतः यः, खरनखराणां—तीक्ष्णनखानां, प्रचयः,—राशिः, तेन प्रचण्डः,—दारुणः, यश्चपेटः,—प्रतलः, विस्तृताङ्गुलिः पाणिरित्यर्थः, करतलाघात इति यावत्, ("पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ" इत्यमरः) तेन आपाटितः,—निपातितः, यो मत्तमातङ्गः,—समदहस्ती, तस्य उत्तमाङ्गे—शिरसि, या मदच्छटाः,—दानधाराः, ताभिः छुरितेन—रञ्जितेन, आघातवेगेन उत्प्लुत्य लग्नत्वात् इति भावः, चारुणा—मनोहरेण, केसरभारेण—सटाजालेन, भास्वरं—दीप्तं, ["स्थेशभास—" (३।२।१७५ पा०) इत्यादिना वरच्] मुखं—वदनं यस्य तथाभूते, केशरिणि—सिंहे, वन-विहाराय—काननपर्य्यटनाय, तपोवननिवासायेति ध्वनिः।

(१०७) निवासं गिरिगुहां कः पाति पृष्ठतः? प्रतापसहाया हि सत्त्ववन्तः। (१०८) कः चपलां लक्ष्मीं प्रति अनुरोधोऽयम् आर्य्यस्य,—यत् इयमपि चीरान्तरितकुचा कुशकुसुमसमित्पलाशपूलिकां वहन्ती तत्रैव तपोवने वनमृगी इव न नीयते जराजालिनी? किं वा मम अनेन वृथा बहुधा

---

(१०७) निवासं—वासभूमिम्। पृष्ठतः,—पश्चात् स्थितामिति भावः, पाति?—रक्षति? स्वप्रतापपराजितपराक्रान्तप्रतिपक्षनृपतिचक्रे आर्य्ये तपोवनं गते तन्निवासभूतामिमां राजधानीं को रक्षति? इति ध्वनिः। पदार्थहेतुककाव्यलिङ्गालङ्कृति व्यङ्ग्या इति चमत्कारातिशय। सत्त्ववन्तः,—महानुभावाः, प्रतापसहायाः,—प्रतापः,—कोषदण्डजतेज एव, सहायः,—अनुकूलः येषा तथोक्ताः, सत्त्ववन्तो हि क्वापि दूरस्थाऽपि स्वप्रभावेणैव सर्व्वान् वशमानेतु प्र वन्ति इत्यर्थः। एतेन किमप्यकुर्व्वत्यपि ज्येष्ठे अत्र स्थिता एव राज्य सुरक्षित स्यास्यति, अन्यथा एतस्य रक्षणं दुष्करमिति व्यज्यते।

(१०८) चपलाम्—अस्थिरां, लक्ष्मी—राजश्रियं, प्रति आ स्य—ज्येष्ठस्येत्यर्थः, अयम्—एष, अनुरोधः,—उपरोधः, आग्रहः इत्यर्थः, कः?—कोऽर्थः? यत्—यदि, इय—लक्ष्मीः, चीरान्तरितकुचा—चीर—वल्कलं जीर्णवसनखण्ड वा, तेन अन्तरितौ—आवृतौ, कुचौ—स्तनौ यस्याः तथाभूता, [ "यत् इयमपि चीरान्तरितकुचा" इत्यत्र "यदि इयमपि न चीरान्तरितकुचा" इति पाठान्तरम् ] कुशेति।—कुशाः,—दर्भाः, कुसुमानि—पुष्पाणि, समिधः,—काष्ठानि, पलाशाः,—पत्राणि, तेषां पूलिका—समूहः तां, तापसीसुलभामिति भावः, मृग्यपि शृङ्गेण एतत् सर्वं वहति; वहन्ती—दधाना, तत्रैव तपोवने—आर्य्याधिष्ठिताश्रमे, न नीयते—न प्राप्यते, स्वयमेव न गम्यते इत्यर्थः, यदेर्न लक्ष्मीर्नानुसरति इति भावः; यद्वा,—न नीयते—नेतु न शक्यते, आर्य्येणेति शेषः, [ "न नीयते" इत्यत्र "नीयते" इति पाठान्तरम् ] जराजालिनी—जरायाः जाल—केशशुक्लतादिकम् अस्या अस्ति इति तथाभूता, अतिस्थविरा इत्यर्थः, पुरुषपरम्परया आगतत्वेन सनातनी इति भावः, मया दुर्वहा चिरन्तनी इय लक्ष्मीः तपोवने यदि न आर्य्यमनुसरति, तस्यास्तु तथा प्रकृतेः अभावात्, तदा तस्याः पालने कोऽयम् आग्रहः तत्रभवतः? इत्याशय.। यदि सा आर्य्यं नापेक्षते, तदा आर्य्येणापि तदपेक्षा निष्प्रयोजना इति निष्कर्षः।

(१०९) विकल्पितेन? तूष्णीमेव आर्य्यम् अनुगमिष्यामि। गुरुवचनातिक्रमकृतञ्च किल्बिषम् एतत् तपोवने तप एव अपास्यति" इति अवधार्य्य मनसा प्रथमतरं गतस्तपोवनम् अधोमुखः तूष्णीम् अवातिष्ठत।

(११०) अत्रान्तरे पूर्व्वादिष्टेन एव रुदता वस्त्रकर्मान्तिकेन समुपस्थापितेषु वल्कलेषु, (१११) निर्द्दय-करतलताड़नभिया इव क्वापि गतहृदये रटति राजस्त्रैणे, (११२) तारम् अब्रह्मण्यम् ऊर्द्धदोष्णि विरुदति विप्रजने,

---

(१०९) विकल्पितेन—पर्य्यालोचितेन, अनुशोचनेन इति यावत्। तूष्णीमेव—मौनमास्थाय एव इत्यर्थः, किमप्युत्तरमदत्त्वैवेति यावत्। गुर्व्विति।—गुरोः,—ज्येष्ठस्य, वचनातिक्रमेण—वाक्यलङ्घनेन, राज्यग्रहणरूपादेशाकरणेनेत्यर्थः, कृत—जनित, किल्बिष—पाप, ("पाप किल्बिषकल्मषम्" इत्यमरः) तपः,—चान्द्रायणादिक व्रत, ("… …तपो लोकान्तरेऽपि च। चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयो॥" इति मेदिनी) अपास्यति—खण्डयिष्यति, अपनेष्यति इत्यर्थ। अवधार्य्य—निश्चित्य। प्रथमतर—ज्येष्ठस्य गमनात् अतिपूर्बमित्यर्थ। अवातिष्ठत—अवर्त्तत।

(११०) "अत्रान्तरे" इत्यस्य "संवादको नाम…सदसि आत्मानमपातयत्" इत्यग्रेणान्वय। पूर्बादिष्टेन—पूर्बमाज्ञप्तेन, वस्त्रकर्म्मान्तिकेन—परिच्छदाधिकारिणा, समुपस्थापितेषु—समीपमानीतेषु, वल्कलेषु—तरुत्वक्षु, तापसोचितपरिधेयेषु इ[ति] यावत्।

(१११) निर्द्दयेति।—निर्द्दयं—निष्करुणम्, उत्कटमित्यर्थः, तत् यथा तथा, करतलेन—पाणितलेन, यत् ताडनम्—आघातः, तस्मात् भीः,—भय तया इव। गत-हृदये—गत—चलित, हृदय—चेतः यस्य तथाभूते, शून्यमनसि इ[त्य]र्थः, अचेतनप्राये इति भाव., [ "गतहृदये" इत्यत्र "गते हृदये" इति पाठान्तरम्] रटति—नदति, सा[र्त्त]स्वर रुदतीत्यर्थ., राजस्त्रैणे—राजान्तःपुरिकाजने।

(११२) तारम्—उच्चै यथा तथा, ऊर्द्धदोष्णि—उत्क्षिप्तबाहौ। अब्रह्मण्यम्—अवध्योक्तिविशेषः तत्, ("अब्रह्मण्यम् अवध्योक्तौ" इत्यमर। समुद्रो त्यध्याहृत-क्रियाया कर्म्मपदं द्वितीयान्तम्) मा अस्मान् परित्यागेन जहीत्येवरूप वचनपूर्व्वकमित्यर्थः, विरुदति—विशेषेण क्रन्दति।

( ११३ ) पादप्रणतिपरे फूत्कुर्व्वति पौरवृन्दे, विद्राति विद्रुतचेतसि चिरन्तने परिजने, परिजनावलम्बिते वेपमानवपुषि पर्य्याकुलवाससि शोकगद्गदवचसि गलितनयनपयसि निवारणोद्यतमनसि वर्षीयसि विशति बन्धुवर्गे, ( ११४ ) निराशेषु नखलिखितमणिकुट्टिमेषु अवाङ्मुखेषु निश्वसत्सु सामन्तेषु, सबालवृद्धासु तपोवनाय प्रस्थितासु सर्व्वासु प्रजासु, सहसा एव प्रविश्य ( ११५ ) शोकविक्लवः प्रचरितनयनसलिलो राज्यश्रियः परिचारकः संवादको नाम प्रज्ञाततमो विमुक्ताक्रन्दः सदसि आत्मानम् अपातयत्।

---

( ११३ ) पादप्रणतिपरे—चरणपतनपरायणे, पौरवृन्दे—पुरवासिवर्गे, फूत्कुर्व्वति—चीत्कारं कुर्वति इत्यर्थः, मुक्तकण्ठं रुदतीति यावत्। चिरन्तने—पुरातने, वंशपरम्परागते इत्यर्थः, [ "सायंचिर—" (४।३।२३ पा०) इत्यादिना ट्युः तुडागमश्च ] परिजने—परिचारकवर्गे, विद्रुतचेतसि—विचलितमनसि, विद्राति—धावति, परिजनावलम्बिते—परिवारगृहीतहस्ते इत्यर्थः, वार्द्धक्यात् स्वयमागन्तुमसामर्थ्यादिति भावः, वेपमानवपुषि—कम्पमानदेहे, पर्य्याकुलवाससि—विस्रस्तवसने, त्वराकुलसंवादश्रवणेन ससम्भ्रमागमनादिति भावः शोकेति।—शोकेन—मन्युना, गद्गदम्—अस्पष्टमित्यर्थः, बाष्पावरुद्धकण्ठत्वादिति भावः, वचः—वचनं यस्य तथाभूते, गलितनयनपयसि—चरितनेत्रवारौ, निवारणेति।—निवारणाय—प्रतिषेधाय, तपोवनगमनाग्रहस्य इति भावः, उद्यतम्—प्रवृत्तम्, ज्ञातीयमित्यर्थः मनः—चित्तं यस्य तथाभूते, वर्षीयसि—अतिस्थविरे, [ "वृद्धशब्दात्" "द्विवचन—" (५।३।५७ पा०) इत्यादिना ईयसुनि "प्रियस्थिर—" (६।४।१५७ पा०) इत्यादिना वृद्धस्य वर्षादेशः ] बन्धुवर्गे—ज्ञातिसमूहे।

( ११४ ) नखेति।—नखैः—कररुहैः, लिखितानि—अङ्कितानि, क्षतरेखाणीत्यर्थः, मणिकुट्टिमानि—रत्नखचितगृहाभ्यन्तरतलानि यैः तथोक्तेषु, अवाङ्मुखेषु—अधोमुखेषु, निश्वसत्सु—निश्वासं त्यजत्सु आयतमिति शेषः, सामन्तेषु—अधीनमित्रराजेषु, निराशेषु—हताशेषु। प्रस्थितासु—प्रस्थातुमुद्यतासु इत्यर्थः।

( ११५ ) शोकविक्लवः,—मन्युविह्वलः, प्रचरितेति।—प्रचरितम्—प्रकर्षेण स्रुतम्, नयनसलिलम्—नेत्रजलं यस्य तादृशः। राज्यश्रियः,—तदाख्याया राज्यवर्द्धन-

अथ (११६) सम्भ्रान्तो भ्राता सह स्वयं देवो राज्यवर्द्धनः तं पर्य्यपृच्छत्,—"भद्र! भण भण, किम् अस्मद्व्यसनव्यवसायवर्द्धनबद्धधृतिः (११७) अवनिपतिमरणमुदितमतिः अधृतिकरम् अपरम् अधिकतरम् इतः समुपनयति विधिः?" इति। स काथञ्चमपि अकथयत्,—"देव! पिशाचानामिव (११८) नीचात्मनां चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति; यतो यस्मिन् अहनि अवनिपतिः उपरत इति अभूत् वार्त्ता, तस्मिन्नेव देवो ग्रहवर्म्मा दुरात्मना मालवराजेन जीवलोकम् आत्मनः सुकृतेन

---

भगिन्या। प्रज्ञाततमः,—अतिपरिचित इत्यर्थः, इतः पूर्वं प्रभाकरवर्द्धनस्यैव परिचारकत्वादिति भावः। विमुक्ताक्रन्दः,—उच्चैः रुदन्नित्यर्थः। सदसि—सभायाम्।

(११६) सम्भ्रान्तः,—सभयोद्विग्नः। पर्य्यपृच्छत्—अन्वयुङ्क्त। अस्मदिति।—अस्माकं व्यसनानि—विपद एव, व्यवसायाः,—वाणिज्यानि; तेषां वर्द्धने—अभ्युन्नतिकरणे, बद्धा—निश्चला, धृतिः,—धैर्य्यं सन्तोषः वा येन तथाभूतः, अस्मद्विपद्वर्द्धनैकपर इत्यर्थः।

(११७) अवनीति।—अवनिपतेः,—राज्ञः प्रभाकरवर्द्धनस्य, मरणेन—मृत्युना, मुदिता—प्रहृष्टा, मतिः,—बुद्धिः यस्य तथाविधः, तत्सद्भावे स्वप्रभावं प्रकटयितुमक्षम इति भावः, विधिः,—दैवम्, इतः—अस्मात्, पितुः व्यसनादिति भावः, अधृतिकरम्—असन्तोषकरम्, अधैर्य्यकरं वा, समुपनयति?—समुपस्थापयति? इह प्रतिपक्षगतबलवत्त्वात्मगतदुर्बलत्वयोः समुन्मेषात् प्रत्यनीकालङ्कृतिः।

(११८) नीचात्मना—क्षुद्रचेतसां, दुरात्मनामित्यर्थः, चरितानि—स्वभावाः, छिद्रप्रहारीणि—छिद्रेषु—रन्ध्रेषु, प्राभृषु इति भावः, प्रहरन्ति—आघातयन्तीति तथाविधानि, अन्यदा प्रहारसाहसाभावात् इत्याकूतम्। अवनिपतिः,—राजा, प्रभाकरवर्द्धन इत्यर्थः, उपरतः,—मृतः। वार्त्ता—जनश्रुतिः, ("वार्त्ता वृत्तौ जनश्रुतौ" इत्यमरः)। ग्रहवर्म्मा—प्रभाकरवर्द्धनस्य जामाता। जीवलोकः—प्राणिपूर्णं जगत्, इहलोकमित्यर्थः। आत्मनः,—स्वस्य, मालवराजस्येति यावत्, सुकृतेन—पुण्येन, येन सुकृतेन स एतावन्तं कालं जीवितोऽस्ति, ग्रहवर्म्माभिनाशनेन तस्य

सह त्याजितः। (११९) भर्त्तृदारिकाऽपि राज्यश्रीः कालायसनिगड़युगलचुम्बितचरणा चौराङ्गना इव संयता कान्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती च, यथा किल अनायकं साधनं मत्वा जिघृक्षुः सुदुर्मतिः एतामपि भुवम् आजिगमिषति, इति विज्ञापिते प्रभुः प्रभवति" इति।

ततश्च तादृशम् (१२०) अनुपेक्षणीयम् असम्भावितम् आकस्मिकम् अपरं व्यतिकरम् आकर्ण्य, अश्रुतपूर्व्वत्वात् परिभवस्य, परपरिभवासहिष्णुतया च स्वभावस्य, दर्पबहुलतया

---

तत् सुकृतमपि क्षयं गत, क्षीणपुण्यस्य तस्य अचिरेणैव भवद्भिर्विनङ्क्ष्यमाणत्वा ति भाव.। त्याजित.,—हापितः, परलोक प्रापित इत्यर्थः।

(११९) भर्त्तृदारिका—राजसुता, ("राजा भट्टारको देवस्तत्सुता भर्त्तृदारिका" इत्यमर.)। कालेति।—कालायसनिगडयुगलेन—कृष्णलौहनिर्म्मित शृङ्खलाद्वयेन, चुम्बितौ—वेष्टितौ, चरणौ—पादौ यस्या. तथाभूता, चौराङ्गना इव—तस्करनारीव, संयता—बद्धा, कान्यकुब्जे—तदाख्यतद्देशीयप्रधाननगरविशेषे, कारायां—बन्धनागारे। किंवदन्ती—जनश्रुतिः। अनायकम्—अराजक, साधन—सैन्य, ("साधन मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ" इति मेदिनी)। जिघृक्षु.,—आचिक्रमिषु.। एतामपि भुव—राज्य, श्रीकण्ठजनपदमित्यर्थ, आजिगमिषति—आगन्तुमिच्छति। विज्ञापिते—निवेदिते, मयेति शेष.। प्रभवति—समर्थो भवति, सोदरप्रियग्रहवर्म्मविशसनप्रतिशोधने, भर्त्तृदारिकाया उद्धारे राज्यरक्षणे च यत् कर्त्तव्य, तत् कर्त्तुमर्हति इति भाव।

(१२०) अनुपेक्षणीयम्—अकर्त्तव्योपेक्षं, नावहेलनीयमित्यर्थ, असम्भावितम् —अतर्कितम्, आकस्मिक—सहसा उपस्थित, व्यतिकर—व्यसन, विपदमित्यर्थ, ("अथ व्यतिकर पुंसि व्यसन-व्यतिषङ्गयो." इति मेदिनी)। परिभवस्य—शत्रुकृतस्य अवमानस्य इत्यर्थ, अश्रुतपूर्व्वत्वात्—पूर्वं कदाऽपि अश्रुतत्वादित्यर्थः, ["भूतपूर्व्वे चरट्" (५।३।५३ पा०) इत्यत्र पूर्व्वनिपातनिर्द्देशात् सर्व्वत्र क्तान्ते. पूर्व्वशब्दस्य पूर्वनिपातनम् इति ज्ञेयम्]। परेति।—परात्—शत्रोः अन्यस्माद्वा, य. परिभव,—तिरस्क्रिया, अवमाननमित्यर्थ, ("परिभव. परीभावः तिरस्क्रिया" इत्यमरः) तस्य असहिष्णुतया—असहनशीलतया। दर्पब—लतया—

च नवयौवनस्य, (१२१) वीरक्षेत्रसम्भवत्वाच्च जन्मनः, कृपा-भूमिभूतायाश्च स्वसुः स्नेहात्, स तादृशोऽपि बद्धमूलोऽपि अत्यन्तगुरुः एकपद एव अस्य ननाश शोकावेगः; विवेश च सहसा केशरीव गिरिगुहागृहं गम्भीरं हृदयं भयङ्करः कोपावेगः। (१२२) केशिनिसूदनशङ्काऽऽकुलकालियकुलभङ्गुर-भ्रूभङ्गतरङ्गिणी श्यामायमाना यमस्वसा इव प्रथीयसि ललाट-

---

अहङ्कारप्रबलतया, नवयौवनस्य—अचिरोद्गततारुण्यस्य, नवयौवनसुलभदर्पबला-दित्यर्थः।

(१२१) वीरेति।—वीराणाम्—शूराणाम्, क्षेत्रम्—भूमिः, उत्पत्तिस्थानमित्यर्थः, वीरप्रसविनी भूमिरिति यावत्, यद्वा,—वीरस्य—शूरस्य, क्षेत्रम्—कलत्रम्, वीरपत्नीत्यर्थः, यशोवतीति भावः, यद्वा,—वीरस्य—प्रभाकरवर्द्धनस्य इत्यर्थः, क्षेत्रम्—शरीरम्, पुत्रस्य अङ्गजत्वादिति भावः, ("क्षेत्रं शरीरे केदारे सिद्धस्थान-कलत्रयोः" इति मेदिनी) तस्मात् सम्भवः,—समुत्पत्तिः यस्य तथाभूतः, तस्य भावः तस्मात्। कृपा-भूमिभूतायाः,—दयाऽर्हाया इत्यर्थः, स्वसुः,—भगिन्याः, राज्यश्रिय इत्यर्थः। बद्ध-मूलः,—सुदृढ इत्यर्थः। एकपदे एव—तत्काले एव, श्रवणक्षणे एव इत्यर्थः, ("एकपदं तत्काले नपुंसकम्" इति मेदिनी) अस्य—राज्यवर्द्धनस्य। ननाश—नाशं गतः। विवेश—दुढौके, आश्रयामासेत्यर्थः। केशरीव—सिंह इव।

(१२२) केशीति।—केशी—तन्नामा अश्वाकारः कश्चिदसुरविशेषः, तस्य निसूदनम्,—घातनम्, कृष्ण इत्यर्थः, तस्मात् शङ्का—भयं, तेन आकुलम्—विह्वलमित्यर्थः, कालियस्य—तदाख्यस्य नागविशेषस्य, यमुनावासिन इति भावः, कुलम्—वंशः, कालियस्य परिजन इत्यर्थः, तद्वत् भङ्गुराः,—कुटिलाः, आकुञ्चिता इत्यर्थः, ये भ्रूभङ्गाः,—भ्रूविकार-भेदाः, तेषां तरङ्गाः,—ऊर्मयः, भ्रूसङ्कोचनेन ललाटे वलिप्रादुर्भावात् तरङ्गवच्छेद-भत्त्वादिति भावः, सन्ति अस्यामिति तथाभूता, अन्यत्र,—केशिनिसूदनशङ्काकुलानि कालियकुलानि यस्याः सा, सा च भङ्गुरा—भङ्गप्रवणा, तटभङ्गशीला इत्यर्थः, वक्रतासमन्विता इत्यर्थो वा, सा चासौ भ्रूभङ्गतरङ्गिणी चेति कर्मधारयः, भ्रुवोः भङ्गाः इव—तिर्य्यक्चालनानीव, तरङ्गाः, इत्युपमितसमासः, ते सन्त्यस्यामिति भ्रूभङ्गतरङ्गिणी, श्यामायमाना—कृष्णकाया इत्यर्थः उभयत्रापि समानम् आचा-रार्थप्रत्ययवत्त्वात्, यमस्वसा इव—यमुना इव ("यमुना शमनस्वसा" इत्यमरः)

धट्टे भीषणा भ्रुकुटिः उदभिद्यत। (१२३) दर्पात् परामृशन् नखकिरणसलिलनिर्झरैः समरभारसम्भावनाऽभिषेकमिव चकार दिङ्नागकुम्भकूटविकटस्य बाहुशिखरकोषस्य वामः पाणिपल्लवः। (१२४) सङ्गलत्स्वेदसलिलपूरितोदरो निर्मूलं मालवोन्मूलनाय गृहीतकेश इव दुर्मदश्रीकचग्रहोत्कण्ठया

प्रथीयसि—अतिविस्तीर्णे। भीषणा—भयङ्करी, भ्रुकुटिः,—भ्रुकौटिल्यम्, उदभिद्यत—उद्भेदं गता इत्यर्थः, [ कर्म्मकर्त्तरि प्रयोगः ]। उद्रिक्तक्रोधानामुदात्ताशयानां प्राथमिकक्रोधोदयज्ञापकमेतत्, "व्योम्नीव भ्रुकुटिच्छलेन" इत्यादिष्वपि तथैवार्थसामञ्जस्यात् इत्याशयः।

(१२३) दर्पात्—अहङ्कारात्, परामृशन्—स्पृशन्, नखेति।—नखानां—कररुहाणां, किरणा एव—प्रभा एव, सलिलानि—जलानि, तेषां निर्झरैः,—प्रस्रवणैः, ("उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः" इत्यमरः) समरेति।—समरभारः,—सङ्ग्रामधुरा, तस्य सम्भावनं—ग्रहणं, तस्मिन् अभिषेकः,—स्नानं तमिव, दिङ्नागेति।—दिङ्नागस्य—ऐरावतस्य, कुम्भ एव—शिरःस्थमांसपिण्ड एव, मस्तकांश एवेति यावत्, ("कुम्भौ घटेभमूर्द्धांशौ" इत्यमरः) कूटः,—शृङ्गं, तद्वत् विकटः,—भीषणस्तस्य, बाह्विति।—बाहुशिखरमेव—भुजशिर एव, स्कन्धदेश एवेत्यर्थः, ("स्कन्धो भुजशिरोंऽसोऽस्त्री" इत्यमरः) कोषः,—खड्गपिधानं, सकोषः खड्ग इति भावः तस्य, ("कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः) पाणिपल्लवः,—करकिसलयः; वामः पाणिपल्लवः परामृशन् बाहुशिखरकोषस्य समरभारसम्भावनाऽभिषेकमिव चकार इत्यन्वयः।

(१२४) सङ्गलदिति।—सङ्गलता—निःस्रवता, अतिक्रोधोदयादिति भावः, स्वेदसलिलेन—घर्मोदकेन, पूरितं—भरितम्, उदरं—तलभागः यस्य तथोक्तः, निर्मूलं—निःशेषं यथा तथेत्यर्थः, मालवेति।—मालवस्य—तद्देशाधिपस्येत्यर्थः, उन्मूलनाय—विनाशाय, गृहीतकेश इव—केशाः गृहीताः यस्य स इव, [ निष्ठायाः बहुव्रीहौ पूर्वनिपातः ] केशेषु गृहीत इव इत्यर्थः, श्रिया इति शेषः, तूर्णं मालवः शिष्यताम् इति त्वरयितुमिति भावः, दुर्मदेति।—दुर्मदया—मदोद्धतया, श्रिया—राजलक्ष्म्या, यः कचग्रहः,—मां विहाय क्व यास्यसि? इति कृत्वा केशाकर्षणं, तेन या उत्कण्ठा—उत्कलिका, उद्वेग इत्यर्थः तया इव; यद्वा,—दुर्मदायाः,—मदोद्धतायाः, गर्व्वान्धाया इत्यर्थ, श्रियाः,—मालवराजलक्ष्म्या इत्यर्थः, कचग्रहः,—दण्डदानार्थम्

इव च कम्पमानः पुनरपि समुत्ससर्प भीषणं कृपाणं पाणिः अपरः। (१२५) शस्त्रग्रहणमुदितराजलक्ष्मीक्रियमाणदिष्टवृद्धिविधुतसिन्दूरधूलिः इव कपिलः कपोलयोः अदृश्यत रोषरागः। (१२६) समासन्नसकलमहीपालचूडामणिचक्राक्रमणजाताहङ्कार इव च समारुरोह वामम् ऊरुदण्डम् उत्तानितः चरणो दक्षिणः। (१२७) निष्ठुराङ्गुष्ठकषणनिष्ठ्यूत-

---

आत्माधीनीकरणार्थञ्च केशाकर्षणं, तस्मै उत्कण्ठा—उद्वेग इत्यर्थः, तयेव, स्त्रियाः केशाकर्षणस्य विगर्हिततया तत् कर्त्तुमुद्यतस्य कम्पोऽजनीति वेदितव्यम्; यद्वा,—कामिनीकचग्रहणं प्रति उत्कण्ठावान् कन्दर्पवशग्य स्विन्नाङ्गः कम्पते इति लोके दृश्यते। समुत्ससर्प—उपजगाम, ग्रहीतुम् इति शेषः। कृपाणं—खड्गम्। अपरः,—दक्षिणः। क्रोधस्थायिनः रौद्रस्य तदनुभावस्य स्वेदोद्गमस्य सात्त्विकविकारत्वसम्भावनया शृङ्गारानुकूलतोक्तेः परिपन्थिरसाङ्गपरिग्रहरूपो रसदोषः, "रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि" इत्यालङ्कारिकानुशासनात् इति ज्ञेयम्।

(१२५) शस्त्रेति।—शस्त्रस्य—असेः इत्यर्थः, प्राक् त्यक्तस्य इति भावः, [ "सर्व्वधातुभ्यः ष्ट्रन्" (उ० ४ पा० १५८ सू०) इति ष्ट्रन् ] ग्रहणेन—धारणेन, मुदिता—हृष्टा, स्वस्य नाथवत्त्वाशया इति भावः, या राजलक्ष्मीः,—राजश्री, प्रेयसी इति भावः, तया क्रियमाणा—विधीयमाना, या दिष्टवृद्धि,—आनन्दोत्सवः, तया विधुता—विक्षिप्ता, सहर्षं न्यस्ता इत्यर्थः, या सिन्दूरधूलिः,—नागसम्भवपरागः, स्वनामप्रसिद्धः सीसकोद्भूतरक्तवर्णचूर्णविशेष इति यावत्, ("सिन्दूरं नागसम्भवम्" इत्यमरः) सा इव, कपिलः,—पाटलः, रोषरागः,—कोपजनितशोणिमा।

(१२६) समासन्नेति।—समासन्नाना—समुपस्थितानां, सकलानां—सर्वेषां, महीपालानां—राज्ञां, चूडामणयः,—शिरोरत्नानि, तेषां चक्रेण—समूहेन, आक्रमणं—ग्रहणं, प्रणिपातावसरे इति भावः, तेन जातः,—उत्पन्नः, यः अहङ्कारः,—गर्व्वः स इव, मूर्त्तिमानहङ्कार इवेत्यर्थः, उत्तानितः,—उत्तोलित इत्यर्थः, दक्षिणः,—अपसव्यः, चरणः,—पादः, वामं—सव्यं, ऊरुदण्डम्—ऊरुः,—सक्थि, दण्डः इव—यष्टिरिव तं, समारुरोह—आचक्राम, आश्रितवान् इत्यर्थः, वामोरौ दक्षिणं चरणमवस्थाप्य आसाञ्चक्रे राज्यवर्द्धन इति भावः। शत्रुनिर्ज्जये निःसंशयत्वख्यापिका वीरत्वव्यञ्जिका च महासत्त्वपुरुषसाधारणी प्रौढासनमुद्रेयम्।

(१२७) निष्ठुरेति।—निष्ठुरं—दृढं यथा तथा, अङ्गुष्ठस्य—पादाङ्गुष्ठस्येत्यर्थः,

धूमलेखो निर्वीरोर्वीकरणाय विमुक्तशिख इव लिलेख मणि-कुट्टिमम् इतरः पादपद्मः। (१२८) दर्पस्फुटितसरसव्रणोच्छलित-रुधिरच्छटाऽवसेकैः शोकविषप्रसुप्तं प्रबोधयन् इव पराक्रमम् अनुजमवादीत्,—"आयुष्मन्! इदं राजकुलम्, असौ बान्धवाः, परिजनोऽयम्, इयं (१२९) भूमिः, भूपतिभुजपरिघ-पालिताश्च एताः प्रजाः; गतोऽहमद्यैव मालवराजकुल-

कषण—घर्षणं, भूमौ इति भावः, तेन हेतुना निष्ठ्यूता—निक्षिप्ता, उद्गता इति यावत्, धूमलेखा—धूमराजिः, रजोनिकर इति भावः येन तथाभूतः, निर्वीरोर्वीकरणाय—पृथिवीं निर्वीरां कर्तुमित्यर्थः, विमुक्तशिखः,—विमुक्ता—विसृष्टा, शिखा—ज्वाला येन तथोक्तः, धीराः किल रोषेण केशसंयमनं यतोः आपरिभवतिरस्कारं न कुर्वन्ति इति भावः, इतरः,—वाम इत्यर्थः, पादपद्मः,—चरणकमलम्; तथा तेजोवत्तया अग्निरूप इति भावः, ["वा पुंसि पद्मम्" इत्यमरानुशासनात् पद्मशब्दोऽत्र पुलिङ्गः प्रयुक्तः। कोषकारसम्मतोऽपि पुलिङ्गः पद्मशब्दः कवीन्द्रैः न क्वापि प्रयुक्तः, कविसमय-प्रसिद्धलिङ्गपरित्यागेन केनाप्यप्रयुक्तलिङ्गप्रयोगेण च दोषः अप्रयुक्तताख्यः अत्रास्ति इत्यवधेयम्] मणिकुट्टिमं—मणिखचितगृहतलं, लिलेख—सञ्चघर्ष।

(१२८) दर्पेति।—दर्पेण—क्रोधवेगजनितेन सरम्भेण इति भावः, स्फुटितेभ्यः,—स्फुटनं प्राप्तेभ्यः, विदीर्णेभ्य इत्यर्थः, अत एव सरसेभ्यः,—आर्द्रेभ्यः, व्रणेभ्यः,—क्षतेभ्यः, भूतपूर्वसङ्ग्रामे प्रतिवीरप्रहितशस्त्राघातजनितेभ्य इति भावः, उच्छलितानां—वेगेन निर्गलितानां, रुधिराणां—रक्तानां, छटाभिः,—धाराभिः, ये अवसेकाः,—अभिषेकाः तैः, शोकेति।—शोकः,—मन्युः, एव, विषं—गरलं, तेन प्रसुप्तः,—आच्छन्न इत्यर्थः, विमोहं गतः इति यावत् तं, पराक्रमं—शौर्यमित्यर्थः, प्रबोधयन्निव—जागरयन्निव, रुधिरसलिलसेचनैः अपनीतमोहं कुर्वन्निव इत्यर्थः, शोक-विषेण विगतसञ्ज्ञत्वेन पराक्रमस्य प्रत्युज्जीवनार्थं शोणितच्छटाभिरभिषेकः पराक्रमस्योपरि अकारीति भावः दृश्यते हि विषविमुग्धस्य उपरि सलिलेन सेचनमिति, अनुजं—हर्षमित्यर्थः। शोके विषत्वारोपेण रुधिरच्छटायामवसेकत्वारोपात् परम्परितं रूपकमलङ्कारः, प्रबोधयन्निवेति क्रियोत्प्रेक्षया सङ्कीर्यते।

(१२९) भूमिः,—देशः, राज्यमित्यर्थः। भूपतीति।—भूपतेः,—राज्ञः, पितुरिति भावः, भुजः,—बाहुरेव, परिघः,—लौहमुद्गरविशेषः, तेन पालिताः,—रक्षिताः, प्रजाः,—प्रकृतिपुञ्जा इत्यर्थः, स्थिता इति शेषः, राजकुलादिकमेतत् सर्व

प्रलयाय। (१३०) इदमेव तावत् वल्कलग्रहणम्, इदमेव तपः, शोकापगमोपायश्च अयमेव, यत् अत्यन्ताविनीतारिनिग्रहः। (१३१) सोऽयं कुरङ्गकैः कचग्रहः केशरिणः, भेकैः करपातः कालसर्पस्य, वत्सकैः वन्दिग्रहो व्याघ्रस्य, अलगर्दैः गलग्रहो गरुड़स्य, दारुभिः दाहादेशो दहनस्य, तिमिरैः तिरस्कारो रवेः, यो मालवैः परिभवः पुष्पभूतिवंशस्य। (१३२) अन्तरितः तापो

---

तवैव अधिकारे मुखापेक्षितया स्थितं, त्वमिदानीमेतत् शत्रुभ्यो रक्षयित्वा यथायथं राजधर्म्ममनुवर्त्तयस्व इति भावः। मालवेति।—मालवराजानां—मालवाधिपानां, कुलस्य—वंशस्य, प्रलयाय—अत्ययाय, विनाशाय इत्यर्थः।

(१३०) इदमेव—अरिनिग्रहणमेवेत्यर्थः, वल्कलग्रहणं—वृक्षत्वक्परिधानं, तादृशव्रतविशेष इत्यर्थः। तपः,—तपश्चरणम्। शोकापगमोपायः,—शोकविनाश-साधनम्। अत्यन्तेति।—अत्यन्तम्—अत्यधिकम्, अविनीतस्य—दुर्विनीतस्य, उद्धतस्य इत्यर्थः, अरेः,—शत्रोः, निग्रहः,—व्यापादनम्, अरिनिग्रहणमेवास्माकं विधिबोधितं मुख्यं व्रतं विनोदनोपायभूतञ्च इति भावः।

(१३१) सोऽयं—मालवकृतपरिभव इत्यर्थः, कुरङ्गकैः,—क्षुद्रमृगैः, केशरिणः,—सिंहस्य, कचग्रहः,—केशाकर्षणरूपम् एवेति रूपकालङ्कारः, एवमुत्तरत्र। भेकैः,—दर्दुरैः, करपातः,—हस्तक्षेपः, करतलप्रहार इत्यर्थः, कालसर्पस्य—कृष्णसर्पाख्यस्य सद्योमारकविषधरविशेषस्य, शिरसि इति शेषः। "करपातश्चपेटाघातः" इति केचित्। वत्सकैः,—गोशिशुभिः, व्याघ्रस्य—शार्दूलस्य, वन्दिग्रहः,—काराबद्धरूप-तया नयनमित्यर्थः। अलगर्द्दैः,—जलव्यालैः, जलसर्पैरित्यर्थः, विषशून्यैरिति भावः, ("अलगर्द्दो जलव्यालः" इत्यमरः) गलग्रहः,—गले ग्रहणं, कण्ठवेष्टनमित्यर्थः। दारुभिः,—काष्ठैः, अग्निदाह्यैरिति भावः, दहनस्य—अग्नेः, स्वभक्षकस्य इति भावः, दाहादेशः,—दाहस्य आज्ञादानम्। तिमिरैः,—अन्धकारैः, रवेः,—सूर्य्यस्य, तिमिरारेरिति भावः, तिरस्कारः,—निर्भर्त्सनम्, आच्छादनमिति भावः। मालवैः—मालववंशीयैः राजभिरित्यर्थः, परिभवः,—तिरस्कारः, अवमानन-मित्यर्थः। इहैकस्य पुष्पभूतिवंशस्य मालवैः परिभवे बहुष्वेवोपमानभूतेषु तादात्म्या-रोपात् मालारूपकालङ्कृतिः इति ज्ञेयम्।

(१३२) अन्तरितः,—व्यवहितः, आच्छादित इत्यर्थः, तापः,—शोक

मे महीयसा मन्युना। तिष्ठन्तु सर्वे एव राजानः करिणश्च त्वया एव सार्द्धम्, अयमेको (१३३) भण्डिः अयुतमात्रेण तुरङ्गमाणाम् अनुयातु माम्" (१३४) इत्यभिधाय च अनन्तरमेव प्रयाणपटहम् आदिदेश।

(१३५) तञ्च तथा समादिशन्तम् आकर्ण्य जामिजामातृवृत्तान्तविज्ञानप्रकोपाधानदूयमाने मनसि (१३६) निवर्त्तनादेशेन दूरप्ररूढ़प्रणयपीड़ इव प्रोवाच देवो हर्षः,—"कमिव

---

ज्वलनम्। महीयसा—अतिमहता, मन्युना—क्रोधेन। तिष्ठन्तु, अत्रैवेति शेषः। राजानः,—अस्मदीयसामन्तनृपाः। करिणः,—गजाः। सार्द्धम्—सह, विपक्षैः चेत् राजधानी आक्रान्ता भवेत्, तदा तद्रक्षणायेत्याशयः।

(१३३) भण्डिः,—राज्यवर्द्धनस्य मातुलपुत्रः। अयुतमात्रेण—दशसहस्रसङ्ख्यामात्रेण, सहेति शेषः, तुरङ्गमाणाम्—अश्वानाम्, दशसहस्राश्वारोहिसैन्यसमेतो भण्डिरित्यर्थः। अनुयातु—अनुसरतु, शक्तिमत परिवृढाना सेनायाः परिच्छदस्वरूपतयैव नियोगः, न साहाय्यायेति निगूढाशयः।

(१३४) इति—इत्थम्, अभिधाय—आख्याय, चकारोऽत्र विनियोगे, परत्र सम्बन्धत्वात् इति सङ्क्षेपः। प्रयाणपटह—युद्धार्थं यात्रासूचकं वाद्यविशेषम्।

(१३५) त—राज्यवर्द्धनं, तथा—पूर्व्वोक्तप्रकारं, सराजकद्विरदादिसङ्गमेतस्य हर्षस्य तत्रैवावस्थानमित्यर्थः, समादिशन्तम्—आज्ञापयन्तम्। जामीति।—जामिः,—स्वसा, भगिनीत्यर्थः, ("जामिः स्वसृ-कुलस्त्रियोः" इत्यमरः) जामाता—तत्पतिः, [जाया माति इति विग्रहे, "नप्तृनेष्टृ—" (उ० २ पा० ९६ सू०) इत्यादिना तृच्] अतिप्रिय इत्यर्थः, तत्र कन्यकापतिसम्बन्धाभावात् तयोः, यद्वा,—जामिः,—भगिनी, तस्याः जामाता—भवः, पतिरित्यर्थ, भगिनीपतिरिति यावत्, ("जामाता दुहितुः पत्यौ सूर्य्यावर्त्ते धवे पुमान्" इति मेदिनी) तस्य वृत्तान्तस्य—कारावासोपरमरूपवार्त्तायाः, विज्ञानेन—अवगत्या, यः प्रकोपः,—प्रबलक्रोधः, तस्य आधानेन—आवेगेन, दूयमान—सन्तप्यमानं तस्मिन्, मनसि—चित्ते, चित्तस्य तादृशावस्थायामित्यर्थः।

(१३६) निवर्त्तनादेशेन—निवर्त्तनम्—अनुगमननिवृत्तिः, तस्य आदेशेन—आज्ञया, दूरेति।—दूरम्—अत्यन्त यथा तथा, प्ररूढा—जाता, प्रणयपीडा—

स्तोषं पश्यति आर्यो मम अनुगमनेन? (१३७) यदि बाल इति,—नितरां तर्हि न त्याज्योऽस्मि। (१३८) रक्षणीय इति,—भवद्भुजपञ्जरं रक्षास्थानम्। (१३९) अशक्त इति,—क्व परीक्षितोऽस्मि? संवर्धनीय इति,—वियोगः तनूकरोति। (१४०) अक्लेशसह इति,—स्त्रीपक्षे निक्षिप्तोऽस्मि। सुखम् अनुभवतु इति,—त्वया एव सह तत् प्रयाति। महान् अध्वनः

आर्थनाभङ्गः, अभिमानजदुःखमित्यर्थः यस्य तथाभूतः, सोदरैकशरणस्य आत्मनः स्वादृशीकार्त्ततादृशायां भ्रातुस्तथाविधौदासीन्यसूचकादेशश्रवणात् क्षतात्यधिकाभिमान प्रश्न इत्यर्थः।

(१३७) यदि बालः,—शिशुः, इति—इति धिया इत्यर्थः, अनुगमने निवर्त्तयति आर्य्य इति शेषः, तर्हि—तदा, मम बालत्वे सति इति भावः, नितराम्—अतिशयेन, कथनपीति भावः, न त्याज्योऽस्मि—हातव्योऽस्मि, भवता इति शेषः, बालकं मां परित्यज्य पितृस्थानीयेन भवता कुत्रापि न गन्तव्यमिति भावः, सहैव नेतव्योऽहम् इति फलितम्।

(१३८) रक्षणीयः,—पालनीयः, इति—इति धिया, चेदिति शेषः, तदपि न वक्तव्यमिति भावः, यतः भवदिति।—भवतः,—तव, भुजपञ्जरं—बाहुपिञ्जरं, पञ्जरमध्ये अवस्थितस्य विपत्तेरभावादिति भावः, रक्षास्थानं—शरणास्पदं, भवद्भुजपञ्जरे निर्भयं स्थितिरेव मम औचित्यमिति भावः, त्वयि गते को मां रक्षिष्यति? अतः त्वया सहैव मे गन्तव्यमिति निष्कर्षः।

(१३९) अशक्तः,—अक्षमः, इति धियेति चेत्? तत्रोत्तरं,—क्व—कुत्र, विषये इति शेषः, परीक्षितोऽस्मि—समर्थो वा असमर्थो वा इति निरूपितोऽस्मि, भवतेति शेषः, न कुत्रापि विषये अशक्तोऽहमिति परीक्षितवान् आर्य्य इति भावः। संवर्द्धनीयः,—पोषणीयः, देहस्य पुष्टिः सम्पादनीया इत्यर्थः, इति, धियेति चेत्, वियोगः, —भवद्विच्छेद इत्यर्थः, तनूकरोति—कृशीकरोति, निरुत्साहं करोति वा, मामिति शेषः, त्वद्वियोगात् जीवनसंशये कुतो वर्द्धनमिति भावः।

(१४०) अक्लेशसहः,—न क्लेशं सोढुं शक्यः, इति—धियेति चेत्? तत्रोत्तरं,—स्त्रीपक्षे—नारीस्थाने, निक्षिप्तोऽस्मि—पातितोऽस्मि, क्लेशासहतया नारीरूपत्वेनाहं भवता परिगणितोऽस्मीति भावः। सुखम्—आनन्दम्, अनुभवतु—भुङ्क्ताम्, इति

क्लेश इति,—विरहोऽविषह्यतरः। (१४१) कलत्रं रक्षतु इति,—श्रीस्ते निस्त्रिंशेऽधिवसति। पृष्ठतः तिष्ठतु इति,—तिष्ठति एव प्रताप.। (१४२) राजकम् अनधिष्ठितमिति,—तत् सुबद्धम् आर्य्यगुणैः। न बाह्यः सहायो महत इति,—व्यतिरिक्तमिव मां गणयति। प्रलघुपरिकरः प्रयामि इति,—

---

भियेति चेत्? तत्रोत्तरं,—तत्—सुखं, त्वयि गते नाहं सुखेन स्थास्यामि, मद्दुःखजननार्थैव तव गमनप्रवृत्तिरिति भावः। अध्वनः,—पथः। विरहः,—तव विच्छेदः, अविषह्यतरः—अतिशयेन सोढुमशक्य इत्यर्थः, त्वद्वियोगक्लेशात् अध्व-पर्य्यटनक्लेशः अतीव सुवह इति भावः।

(१४१) कलत्र—स्त्रियं, स्त्रीलोकमित्यर्थः। श्रीः,—लक्ष्मीः, स्त्रीति भावः, निस्त्रिंशे—असौ, [अधिपूर्वकात् वसतेरधिकरणस्य कर्मत्वानुशासनात् "निस्त्रिंशं" इत्यस्य कर्मत्वापत्तिः, अत तदकरणात् व्याकरणलक्षणहीनत्वेन च्युत-संस्कारत्वरूपः दोषः विज्ञेयः।] अधिवसति—तिष्ठति, तव खड्गबलेनैव तत् सुरक्षितं भवति, न तत्र मम किमपि उपयोगित्वं सामर्थ्यं वा इति भाव। पृष्ठत,—पृष्ठशत्रु-निवारणायेति भावः। प्रतापः,—कोषदण्डज तेज., अरातिपरिभाविशक्त्युत्कर्षो वा, तवेति शेषः, येन पृष्ठशत्रवः दूरात् निरस्यन्ते इति भाव., तत्रापि न मे काऽपि आवश्यकता इति फलितम्।

(१४२) राजक—राजन्यवर्गः, अनधिष्ठितम्—अनाश्रितम्, अनायकमिति यावत्, त्वया मदनुगामिना इति शेषः, अन्यमाश्रयिष्यतीति भाव, इति विचार्य्यते चेत्? तत्रोत्तर,—तत्—राजकम्, आर्य्यगुणै,—आर्य्यस्य—भवत इत्यर्थ, गुणाः,—शौर्य्यदाक्षिण्यादय तैः, सुबद्ध—सुसंयतम्, अतिशयेन अधीनीकृतमिति यावत्, दृढानुरागरूपाभुग्रप्रतापशृङ्खलासंयतानां परिस्खलननाशङ्काऽपि न वर्त्तते इत्याशयः। महत,—महानुभावस्य, बाह्य—बहिः स्थितः, स्वेतर इत्यर्थः, सहाय,—सह-कारीत्यर्थः, न, उपयुज्यते इति शेषः, स्वेनैव सर्वार्थसाधनादिति भाव., इति—इत्यत्रमत्प्रश्नो चेत्? तत्रोत्तर—व्यतिरिक्तमिव—भिन्नमिव, अनात्मीयमिवेत्यर्थः, मा गणयति—विचारयति, आर्य्य इति शेषः, नाहम् आर्य्याङ्गिनः, तवैवाङ्गभूत इति भाव.। प्रलघुपरिकरः,—स्वल्पपरिच्छदः, अल्पपरिजन इति यावत्, आडम्बरा-नुष्ठिके गमनविलम्बादिति भावः, प्रयामि—गच्छामि, इत्याग्रहेण चे?

पादरजसि कोऽतिभारः ? (१४३) द्वयोः गमनम् असाम्प्रतमिति,—माम् अनुगृहाण गमनाज्ञया। कातरो भ्रातृस्नेह इति,—सदृशो दोषः। (१४४) का इयम् आत्मम्भरिता भुजस्य ते, यत् एकाकी क्षीरोदफेनपटलपाण्डुरम् अमृतमिव यशः पिपासति ? (१४५) अवञ्चितपूर्व्वोऽस्मि प्रसादेषु।

तवोत्तरं,—पादरजसि—चरणधूलौ, तत्सदृशे मयि इति भावः, अतिभारः—गुरुत्वबोध इति यावत्, पादसंसक्तं रजः यथा नातिभारभूतं भवति, तद्वत् अहमपि ज्ञातव्यः त्वयेति भावः।

(१४३) द्वयोः,—उभयोः, भ्रात्रोरिति भावः। असाम्प्रतम्—अयुक्तं, नगरस्य रक्षिभावादिति भावः। अनुगृहाण—अनुकम्पस्व, मामेव गमनाय अनुमन्यस्व, त्वमिहैव तिष्ठ इति समुदितवाक्यार्थः। उत्तरमिदम् आत्मन एव प्राथमिकाभियानप्रार्थनरूपमित्यवधातव्यम्। एतेन सिंहासनादिरक्षा भवत्प्रतापेन सुसाध्या, तेन हि विपक्षनिग्रहः ममैवानायाससाध्यः इति व्यज्यते। कातरः,—भीतः, विपदाशङ्कया आकुल इत्यर्थः, विपत्सङ्कुले रणक्षेत्रे त्वां नेतुं बिभेमि इति चेत् इति भावः, सदृशः,—तुल्यसम्बन्धवतः सोदरद्वयस्य इत्यर्थः, भावाभावयोः उभयत्र समानसुखदुःखदायकत्वात् इति भावः; यद्वा,—सदृशः,—तुल्यः, दोषः,—दूषणम्, अनिष्टशङ्का इत्यर्थः, मयि भ्रातरि स्नेहात् तव यादृशी दोषाशङ्का, त्वयि भ्रातर्य्यपि सहजभक्तिभावात् ममापि तादृशी एव अनिष्टाशङ्का इति भावः।

(१४४) [ "का इयम्" इत्यत्र "का चेयम्" इति पाठान्तरम् ]। आत्मम्भरिता—स्वार्थैकपरतेति भावः। [ "फलेग्रहिरात्मम्भरिश्च" (३।२।२६ पा०) इत्यात्मनो मुमागमः भृञ इन् निपात्यते ] क्षीरोदेति।—क्षीरोदस्य—क्षीरसागरस्य, फेनपटलं—फेनराशिः, तद्वत् पाण्डुरं—शुभ्रं, यशः,—कीर्त्तिं, शत्रुनाशजनितमिति भावः, एकाकी—एक एव, पिपासति ?—पातुमिच्छति ? अनुजीविजनं वञ्चयित्वा एकाकी एवाहं तादृशयशःपीयूषं पास्यामि इति पिपासुता तव भुजस्य अतीव स्वार्थपरता, इत्यहो ! ईदृशी स्वार्थपरता तु नोचिता इति भावः।

(१४५) भवत्वेकाकिन एव पिपासुता, तत्र को दोषः ? इत्यत्राह, अवञ्चितेति।—प्रसादेषु—अनुग्रहेषु, अवञ्चितपूर्व्वः,—अप्रतारितपूर्व्वः, प्राक् त्वया कदाऽपि न प्रतारित इत्यर्थः, इतः पूर्वं सदैव तव प्रसादमुपभुज्य कृतार्थोऽस्म्यहम्, इदानीमपि तदधिकारात् मा वञ्चयस्व इति भावः।

तत् प्रसीदतु आर्य्यः, नयतु मामपि" इत्यभिधाय क्षितितल-विनिहितमौलिः पादयोः अपतत् ।

(१४६) तम् उत्थाप्य पुनः अग्रजो जगाद,—"तात ! किमेवम् अतिमहारम्भपरिग्रहणेन गरिमाणम् आरोप्यसे बलात् अतिलघीयानपि अहितः ? (१४७) हरिणार्थम् अतिक्लेपणः सिंहसम्भारः । तृणानाम् उपरि कति कवचयन्ति आशुशुक्षणयः ? अपि च तव (१४८) अष्टादशद्वीपाष्टमङ्गलक-मालिनी मेदिनी अस्ति एव विक्रमस्य विषयः । न हि कुल-

(१४६) तं—हर्षम्, उत्थाप्य—उत्तोल्य । अग्रजः—ज्येष्ठः, राज्यवर्द्धन इत्यर्थः । तात !—वत्स ! अतीति ।—अतिमहान्—भूयान् इत्यर्थः, आरम्भ,—उद्योगः, तस्य परिग्रहणम्—आश्रयणं तेन, अतिलघीयानपि—अतिक्षुद्रोऽपि, अहितः,—शत्रुः, बलात्—बलमाश्रित्य, निरर्थकमिति भावः, गरिमाणं—गौरवम्, आरोप्यते—नीयते, त्वयेति शेषः, महारम्भेण लघुसत्त्वे सदृशप्रतिभटता समारोपिता भवेत् इति निगूढाशयः ।

(१४७) हरिणार्थं—मृगवधार्थमित्यर्थः, सिंहसम्भारः,—सिंहस्य—मृगेन्द्रस्य, सम्भारः,—विशिष्टप्रयास इत्यर्थः, अतिक्लेपणः,—अतिलज्जाकरः, क्षुद्रहरिणवधार्थं सिंहस्य सायासक्रमबन्धः यथा लज्जाजनकः निष्प्रयोजनश्च, तथा अतिलघुसालव-विनाशाय उभयोरेव गमनमतीव लज्जाकरं निष्प्रयोजनञ्चेति निष्कर्षः । कति—कियन्मानाः, [ "किमः—" (५।२।४१ पा०) इत्यादिना सङ्ख्यापरिमाणार्थे डतिप्रत्ययः ] आशुशुक्षणयः,—अग्नयः, ("अग्निर्वैश्वानरो वह्निः··· । ···शिखावानाशुशुक्षणिः ॥" इत्यमरः) कवचयन्ति—सन्नह्यन्ति, तृणदाहनार्थं कवचावृतशरीराः सन्तः सज्जिता भवन्तीत्यर्थः, स्फुलिङ्गमात्रसंयोगेनैव तृणानि अवलीलया अनलेन भस्मावशेषाणि क्रियन्ते, अतः तृणवल्लघुमालवविनाशाय विपुलायोजनं दीप्ततेजसस्ते गमनञ्च निरर्थकमेवेति भावः ।

(१४८) अष्टादशेति ।—अष्टादशद्वीपान्येव अष्टमङ्गलकानि—कङ्कणानि, स्त्रीणां माङ्गल्यालङ्कारः कङ्कणम् इति भावः, तेषां माला—श्रेणिः विद्यतेऽस्याः तथाभूता ; यद्वा,—अष्टादशद्वीपानि, "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः ॥" इत्युक्तानि अष्टमङ्गलकानि च, तेषां माला विद्यते अस्याः तादृशी । विषयः,—स्थानम्, अष्टादशद्वीपाष्टमङ्गल-

शैलनिवहवाहिनो वायवः सन्नह्यन्ति अतितरले तूलराशौ ॥ (१४९) न सुमेरुवप्रप्रणयप्रगल्भा वा दिक्करिणः परिणमन्ति अणीयसि वल्मीके। (१५०) ग्रहीष्यसि सकलपृथ्वीपतिप्रलयोत्पातमहाधूमकेतुं मान्धाता इव चारुचामीकरपत्रलताऽलङ्काराङ्ककायं कार्मुकं ककुभां विजये। मम तु

समन्विता मेदिन्यपि त्वया जेतुं समर्था, अतः अतितुच्छमालवजये तव प्रयाणं स्वयं सप्तसागर तर्त्तुं समर्थस्य गोष्पदीत्तरणाय तरणीसङ्ग्रह इव प्रतिभाति इति भाव। कुलेति।—कुलशैलाना—महेन्द्रादीना प्रागुक्ताना सप्तानां कुलपर्वताना, निवहान् —समूहान्, सप्त इति यावत्, वहन्ति—प्रापयन्ति, स्थानात् स्थानान्तरं नेतुं प्रभवन्तीत्यर्थः ये तथाभूता। अतितरले—अतिचपले,अतिलघौ इत्यर्थः। सन्नह्यन्ति—कवचयन्ति, कवचेन स्वदेह सम्बध्नन्तीत्यर्थः, पराक्रम प्रदर्शयन्तीति भावः, तूलराशिवत् निःसारमालवोन्मूलनाय कुलाचलवद्दृढसत्त्वनृपचक्रोन्मूलनसमर्थस्य तव गमन निष्प्रयोजनमेव इति निष्कर्षः।

(१४९) सुमेर्विति।—सुमेरोः,—काञ्चनाद्रेः, वप्रेषु—तटेषु, ("वप्रस्तातै पुमानस्त्री रेणौ चैते चये तटे" इति मेदिनी) यः प्रणयः,—समासक्तिः, तत्र वप्रक्रीडायामिति भाव, तेन प्रगल्भाः,—धृष्टाः, दुर्ललिता इति भाव, दिक्करिण,—दिग्गजाः, अणीयसि—अतिक्षुद्रे, वल्मीके—"उयीढिपि" इति बङ्गभाषया प्रसिद्धे वल्मीकाख्यकीटनिर्मिते अतितुच्छे मृत्पिण्डे इत्यर्थः, न परिणमन्ति—न तिर्य्यग्भावेन दन्तप्रहारकारिणो भवन्तीत्यर्थ, ("तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मत." इति कोषात्) तदा न वप्रक्रीडामाचरन्तीति भावः, सुमेरुतटभञ्जनसमर्थस्य दिग्गजस्य वल्मीकस्तूपोन्मूलनप्रयास इव अवलीलया महासुरराजन्यसङ्घविनाशनसमर्थस्य ते प्रलघुमालवविनाशाय गमनेच्छा न साधीयसी इति निष्कर्ष।

(१५०) मान्धाता इव—युवनाश्वतनयप्रवीरचक्रवर्त्तिनृपविशेष इव, सकलेति। —सकलाना—सर्वेषा, पृथ्वीपतीना—भूपालाना, प्रलये—सहारे, य उत्पातः,—उपद्रवव्यञ्जकः इति यावत्, महान्—दारुण इत्यर्थ, धूमकेतु,—उपग्रहविशेषः त, तन्निभमिति भाव, चार्विति।—चारुभिः,—मनोज्ञैः, चामीकरपत्रलताऽलङ्कारैः,—सौवर्णपत्रभङ्गिरचितभूषाभिः, अङ्कः,—चिह्नं यस्य तादृश, काय,—अवयवो यस्य तथाभूत, कार्मुक—धनुः, ककुभा—दिशा, विजये—विजयार्थम् इत्यर्थः, ग्रहीष्यसि इत्यन्वयः, दिग्विजयार्थैव तव प्रयाणमुचित, न तु क्षुद्रशत्रुविजयार्थेति भाव,। कियदनन्तरमेव विजयलक्ष्मीवधूकरग्रहणप्रयाण भवतैव सम्पाद्य

(१५१) दुर्निवारायाम् अस्यां विपक्षक्षपणक्षुधि क्षुभितायां क्षम्यताम् अयम् एकाकिनः कोपकवल एकः। तिष्ठ भवान्" इत्यभिधाय च तस्मिन् एव वासरे निर्जगाम अभ्यमित्रम्।

अथ (१५२) तथा गते भ्रातरि, उपरते च पितरि, प्रोषितजीविते च भगिनीपतौ, मृतायाञ्च मातरि, संयतायाञ्च स्वसरि, स्वयूथभ्रष्ट इव वन्यः करी देवो हर्षः कथङ्कथमपि एकाकी कालं तम् अनैषीत्। (१५३) अतिक्रान्तेषु बहुषु वासरेषु कदाचित् तथैव भ्रातृगमनदुःखासिकया दत्तप्रजागरः

---

नीयम् इति राज्यवर्द्धनवाक्याशय.। सन्दर्भेऽस्मिन् हरिणाद्यर्थे सिंहसभारादीनाम् अप्रस्तुताना समुपन्यस्ताना प्रस्तुते गमननिषेधरूपे एव कार्य्ये पर्य्यवसानात् निमित्तकार्य्य-व्यङ्ग्यचमत्कृतिनिचयाऽप्रस्तुतप्रशंसाऽलङ्कृति. सान्धातेवेत्युपमया सङ्कीर्णेत्यवगन्तव्यम्।

(१५१) दुर्निवारायां—कथमपि निवारयितुमशक्यायां, क्षुभितायाम्—उद्दीप्तायां, विपक्षक्षपणक्षुधि—शत्रुविध्वंसनरूपायां क्षुधायाम्, एकाकिनः,—अद्वितीयस्य, मम इति शेषः, एकः,—एकमात्रः, कोपकवलः,—क्रोधग्रास, क्षम्यतां—सह्यताम्, एकमात्र. ममैव कोपकवलविषयी मालवकुलपासनो भवतु, न तव गमनमत्यावश्यकम् आकलयामि इति भाव.। वासरे—दिवसे। अभ्यमित्रम्—अभिशत्रु, शत्रु प्रति इत्यर्थ.। [ "लक्षणेनाभिप्रती—" (२।१।१४ पा॰) इत्यादिना समास ]।

(१५२) तथा—युद्धार्थमिति यावत्। उपरते—मृते। भगिनीपतौ—ग्रहवर्म्मणि इत्यर्थ., [ "भगिनीपतौ" इत्यत्र "जामातरि" इति पाठेऽपि स एवार्थः व्यङ्ग्यत्वेनापादनीय। दुहितृपत्यर्थे प्रयुक्तस्य जामातृशब्दस्य भगिनीपत्यर्थे प्रयोगस्य यद्यपि न समीचीनता, तथाऽपि असाधारणपरिचायकतया लोकव्यवहारदर्शनात् तथाविध प्रयोग न दोषाय इति समाधानीयम्, ज्येष्ठभ्रातु पितृतुल्यत्वात् तथाविधः प्रयोगो वा इति ] प्रोषितजीविते—गतासौ इत्यर्थ.। स्वसरि—भगिन्या राज्यश्रीनाम्न्यां, संयतायां—कारारुद्धायाम्। स्वयूथभ्रष्ट.,—निजसङ्घच्युत., वन्यः करीव—आरण्यगजः इव। अनैषीत्—अतिवाहयामास।

(१५३) अतिक्रान्तेषु—अतीतेषु। तथैव—प्रागनुभूतयैवेत्यर्थ., भ्रातृगमन-क्षणे यद्दुःखमनुभूत, तेनैव दुःखेनेत्यर्थ., भ्रातृगमनदुःखासिकया—भ्रातु.,—सोदरस्य, गमन—प्रयाणं, स्वपरित्यागेन इति भाव., तेन या दुःखासिका—

त्रिभागशेषायां त्रियामायां यामिकेन गीयमानाम् इमाम् आर्यां शुश्राव,—

द्वीपोपगीतगुणमपि समुपार्ज्जितरत्नराशिसारमपि ।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति ॥ ३ ॥

(१५४) तां च श्रुत्वा सुतराम् अनित्यताभावनया दूयमान-

---

दुःखावस्थानं तेन, दत्तेति।—दत्तः,—जनितः इत्यर्थः, प्रजागरः,—दीर्घजागरणं यस्य तथाभूतः, त्रिभागेति।—त्रिभागः,—तृतीयः अंशः, चरमप्रहर इत्यर्थः, शेषः,—अवशिष्टः यस्याः तथाभूतायां, त्रियामायां—रात्रौ, "त्रियामां रजनीं प्राहुः त्यक्त्वाऽद्यन्तचतुष्टयम्" इति समयनिर्णयकाराः; यामिकेन—प्रहरिणा, प्रहरपालेन इति यावत्। इमां—वक्ष्यमाणामित्यर्थः।

यामिकेन यदृच्छया पठितं विधिविलसितवर्णनमाश्रित्य राजकुलस्य भावि अशुभं सूचयन्नाह, द्वीपेति।—विधिः,—दुर्दैवमिति यावत्, पवनः,—प्रतिकूलवायुरिति भावः, पोतमिव—नावमिव, अर्णवयानमिव इत्यर्थः, ["हसिचृगिण्—" (उ० ३ पा० ८६ सू०) इति पुनातेः पवते इत्यस्य वा तन्] द्वीपेषु—द्वयोरेव दिशोः अद्भिः परिवेष्टितेषु स्थलेषु, ("द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्" इत्यमरानुशासनात्) जलमध्यस्थ-स्थलभागार्थकतया समन्तात् जलवेष्टितभूभागेषु इत्यर्थः, ["ऋक्पूर—" इत्यप्रत्यये कृते, ततः "द्व्यन्तरुपसर्गेभ्योऽप ईत्" (६।३।९७ पा०) इति सूत्रेण अपस्य ईत्, तथा हि, द्वौ द्विता: द्विर्गता आपो यस्मिन्निति द्वीपम्] तेषां सप्तसु अष्टादशसु वा इति भावः, उपगीताः,—कीर्त्तिताः, गुणाः,—शौर्य्यदाक्षिण्यादयः, अभङ्गुरत्व-मनोज्ञत्वा-दयश्च यस्य तथाभूतमपि, समुपार्ज्जितरत्नराशिसारमपि—समुपार्ज्जितः,—अराति-जयेन लब्धः, वणिग्वाहितत्वात् स्ववचसि गृहीत इत्यर्थश्च, रत्नराशीनां—मणसमूहानां, सारः,—उत्कृष्टांशः, उभयत्रापि समानं, येन तथाविधमपि, पुरुषं—नरश्रेष्ठमिति यावत्, अकाण्डे—सहसा, निपातयति—विनाशयति। एतेन राज्य-वर्द्धनस्य मरणं सूचितम्। इह पोतेन सह पुरुषस्य साम्यबोधनात् उपमा, द्वीपोप-गीतगुणादिरूपविशेषणस्य श्लिष्टत्वादर्थश्लेषसङ्कीर्णा, अकाण्डे इत्यादिशब्दशक्त्या राज्य-वर्द्धनस्यावश्यं पतनम् आशु भविष्यति इत्यलङ्कारोत्थापितं वस्तु व्यङ्ग्यम् इति सङ्क्षेपः। आर्य्या वृत्तम् ॥ ३ ॥

(१५४) ताम्—आर्य्याम्। सुतराम्—अतिशयेन, अनित्यताभावनया-

हृदयः प्रक्षीणभूयिष्ठायां क्षपायां क्षणमिव निद्राम् अलभत; स्वप्ने च अभ्रंलिहं लोहस्तम्भं भज्यमानम् अपश्यत्। (१५५) उत्कम्पमानहृदयश्च पुनः प्रत्यबुध्यत, अचिन्तयच्च,—"किं नु खलु माम् एवम् अमी सततम् अनुबध्नन्ति दुःस्वप्नाः? स्फुरति च दिवानिशम् अकल्याणाख्यानविचक्षणम् अदक्षिणम् अक्षि। (१५६) सुदारुणाश्च अक्षुद्रक्षितिपक्षयम् आचक्षाणाः क्षणमपि न शाम्यन्ति पुनरुत्पाताः। प्रत्यहं (१५७) राहुः अविकल-

---

संसारोऽयम् अनित्यः, तेन हि अवस्थाः सर्वे नियतमेव जराव्याध्यादिभिः पीड्यन्ते, कति च महापुरुषाः अकाले कालकवलिता भवन्ति, नास्ति तेषामियत्ता, न केचिदपि अत्र स्थिराः इत्यादि चिन्तया, दूयमानहृदयः,—सन्तप्यमानचित्तः, प्रक्षीणभूयिष्ठायां—प्रायेण क्षयं गतायामित्यर्थः, अत्यल्पमेवावशिष्टायामिति भावः, क्षपायां—रात्र्यां, क्षणमिव—अत्यल्पकालमिव, [व्याप्त्यर्थे द्वितीया] इवशब्दोऽत्र वाक्यालङ्कारे। अभ्रंलिहं,—गगनचुम्बिनम्, अत्युन्नतमित्यर्थः, मेघमार्गभेदितया गगन-स्पृशमिति यावत्। ["वहाभ्रे लिहः" (३।२।३२ पा०) इति खश्प्रत्ययः] भज्यमानं—खण्ड्यमानं, द्विधा क्रियमाणमित्यर्थः, केनापि इति शेषः। एतद्धि दुःस्वप्नदर्शनं भाव्यनिष्टसूचकमिति ज्ञेयम्।

(१५५) उत्कम्पमानहृदयः,—वेपमानवक्षा इत्यर्थः। प्रत्यबुध्यत—अजागः। किं नु—वितर्के। एवम्—अनेन प्रकारेण। अनुबध्नन्ति—अनुसरन्ति। दिवानिशम्—अहोरात्रम्, अकल्याणेति।—अकल्याणम्—अशुभम्, आख्यानं—कथनं, तत्र विचक्षणं—निपुणम्, अशुभसूचकमित्यर्थः, अदक्षिणं—वामं, प्रतिकूलञ्च, अक्षि—चक्षुः, स्फुरति च—स्पन्दते च।

(१५६) पुनः,—पक्षान्तरे, अपि चेत्यर्थकं वा, सविशेषपर्य्यालोचनानुभूतत्वात् पितृपरलोकवासात् प्राक् पर्य्यवेक्षणाच्च इति ज्ञातव्यं, सुदारुणाः,—अतिभयङ्कराः, अक्षुद्रेति।—अक्षुद्रस्य—महतः, श्रेष्ठस्य इत्यर्थः, क्षितिपस्य—राज्ञः, क्षयः,—नाशः तम्, आचक्षाणाः,—कथयन्तः, सूचयन्त इत्यर्थः, उत्पाताः,—उत्पतन्ति—अशुभ-सूचनार्थम् आविर्भवन्तीति तथोक्ताः, अशुभनिदानभूता भूकम्पोल्कापातादयः इत्यर्थः, न शाम्यन्ति—न विरमन्ति।

(१५७) राहुः,—सिंहिकासुतः, अविकलेति।—न विकलः,—विपर्य्यस्तः,

कायबन्ध इव कबन्धवति ब्रध्नबिम्बे घटमानो विभाव्यते। (१५८) तपःकरणकालकवलितानिव धूसरितसमग्रग्रहान् उद्गिरन्ति धूमोद्गारान् सप्तर्षयः। दिने दिने दारुणा दिशां दाहा दृश्यन्ते। (१५९) दिग्दाहभस्मकणनिकर इव निपतति नभस्तलात् तारागणः।

---

कायबन्ध,—शरीरसंयोग यस्य तथाभूत., यद्वा,—न विकल,—ईषद्विकल', कायबन्धः,—शरीरसंस्थानं यस्य तथाविध.,सशिर.शरीरवान् इत्यर्थ,कबन्धे शिरोमात्रस्या-दर्शनात्, अपमूर्द्धदेहवत: सूर्य्यबिम्बस्य शिरोमात्रस्य एव स्वस्य च परस्परयोगात् राहुरपि इदानीं लब्धकाय इव आभाति इति भाव:, कबन्धवति—छिन्नशिर कायरूपिणि इत्यर्थ, ब्रध्नबिम्बे—सूर्य्यमण्डले, ("सूरसूर्य्यार्य्यमादित्यद्वादशात्मदिवाकरा.। भास्कराहस्करब्रध्नप्रभाकरविभाकरा.॥" "बिम्बोऽस्त्री मण्डल त्रिषु—" इति चामर.) घटमान,—सङ्गच्छमान', विभाव्यते—लक्ष्यते, आकालिकराहुग्रस्त इव सू बिम्ब: प्रतीयते इति तात्प म्। सूर्य्यमण्डले कबन्धदर्शनस्य अतीव अशुभसूचकत्वं बोद्धव्यम्।

(१५८) सप्तर्षय',—सप्त च ते ऋषय: च इति तथोक्ता., मरीच्यत्र्यङ्गिर पुलस्त्यपुलहक्रतुवशिष्ठा इत्यर्थ, [ "ऋत्यक." (६।१।१२८ पा॰) इति प्रकृतिभावविकल्पात् पक्षे गुण ] तप.करणेति।—तपस,—ऊर्द्धपादाधोमुखीभावेन स्थित्वा धूमपानरूपस्य व्रतस्य, करणकाले—अनुष्ठानसमये, कवलितानिव—ग्रस्तानिव, धूसरितेति। —धूसरिता:, —पाण्डूभूता:, निष्प्रभा' इति यावत्, ये समग्रा.,—सर्वे ग्रहा',—आकाशचारिणो ज्योतिपदार्था: तान्, धूमोद्गारान्—कवलितधूमनिवहान्, निष्प्रभतया धूममयान् इत्यर्थ, उद्गिरन्ति—उद्वमन्ति, सर्वा दिशो धूमाच्छन्ना: ज्योतिर्गणाश्च निष्प्रभा बभूवुरिति निष्कर्ष.। दिने दिने—प्रतिदिनं, दिशा—ककुभा, दाहा.,—ज्वलनानि, दिक्समूह: अग्निव्याप्त इव दृश्यते इत्यर्थ., [ "कर्तृकर्मणो. कृति" (२।३।६५ पा॰) इति कर्मणि षष्ठी इति ज्ञेयम् ]।

(१५९) दिगिति।—दिशां—काष्ठानां, दाहे—ज्वलने, [ षष्ठीसमास', "कर्मणि च" (२।२।१४ पा॰) इति षष्ठीसमासप्रतिषेधस्य आशङ्का न करणीया, कर्तृका णोरुभयत्र षष्ठीप्राप्तिस्थले एव तन्निषेधात्. इह तु तदभावादिति विभाव्यम् ], यद्वा,—दिक्षु दह्यते इति दाह: तस्मिन्, [ "तत्पुरुषे—" (६।३।१४ पा॰) इत्यादिना पाक्षिक. सप्तमीलोप: ] ये भस्मनां—भूतीनां, कणा:,—बिन्दव:, तेषां निकर इव—समूह इव। नभस्तलात्—आकाशात्।

(१६०) तारापातशुचेव निष्प्रभः शशी। (१६१) निशि निशि इतस्ततः प्रज्वलिताभिः उल्काभिः उग्रं ग्रहयुद्धमिव वियति विलोकयन्ति विलोलतारकाः ककुभः। (१६२) राज्यसञ्चारसूचकः सञ्चारयति इव क्ष्मां क्वापि (१६३) वहद्बहलरजःपटलकलिलशर्कराशकलसूत्कारी मारुतः। (१६४) न कुशलमिव पश्यामि लग्नस्य। अस्मिन् अस्मद्वंशे करिण इव करीरं कोमलमपि कलयतः

---

(१६०) तारेति।—ताराणां—नक्षत्राणां, पातेन—पतनेन, या शुक्—शोकः तयेव, निष्प्रभः,—निस्तेजाः, ताराणां खस्य स्त्रीरूपत्वेन तद्वियोगादिति भावः।

(१६१) निशि निशि—प्रतिनिशं, प्रज्वलिताभिः,—ज्वलन्तीभिः, उल्काभिः,—रेखाकाराभिः गगनात् पतन्तीभिः तेजःकणिकाभिः, उग्रं—दारुणं, ग्रहयुद्धं—ग्रहयोः ग्रहाणां—रव्यादीनां वा, युद्धं—सङ्ग्रामं, विरुद्धसमागमसङ्घर्षरूपमिति भावः, वियति—आकाशे। विलोलतारकाः,—विलोलाः,—प्रस्खलन्त्यः, चञ्चलाश्च, तारकाः,—नक्षत्राणि, अक्ष्णां कनीनिकाः च यासु यासां वा ताः, ककुभः,—दिशः; काश्चित् स्त्रियश्च इति ध्वनिः। सङ्गरावलोकनात् कोमलाबलानां चक्षुषी विलोलत्वं जायते।

(१६२) राज्यसञ्चारसूचकः,—राज्यस्य सञ्चारः,—संहार इत्यर्थः, अन्यत्र सङ्क्रमणमित्यर्थो वा, तस्य सूचकः,—व्यञ्जकः। सञ्चारयतीव—सम्यक् चालयतीव। क्ष्मां—पृथ्वीम्।

(१६३) वहदिति।—वहता—प्रसरता, वहलेन—प्रभूतेन, रजसां—धूलीनां, पटलेन—समूहेन, कलिलानि—गहनानि, व्याप्तानि इत्यर्थः, ("कलिलं गहनं समे" इत्यमरः) शर्कराशकलानि—कर्परखण्डानि, ("शर्करा कर्परांशेऽपि" इत्यमरः) सुष्ठु—प्रबलं यथा तथा, उत्किरति—उत्क्षिपतीति तथाभूतः, मारुतः,—झञ्झावायुरिति यावत्।

(१६४) लग्नस्य—राशीनामुदयस्य, ("राशीनामुदयो लग्नम्" इत्यमरः) कुशलं—शुभं, विविधदुर्निमित्तदर्शनेन अशुभलग्नं समुदितमिति मन्ये इति निष्कर्षः। अस्मद्वंशे—अस्माकं कुले, वेणुस्तम्बे च, कोमलमपि—मृदुलमपि

कृतान्तस्य कः परिपन्थी ? सर्वथा (१६५) स्वस्ति भवतु आर्य्याय" इति चिन्तयित्वा च अन्तर्भिन्नभ्रातृस्नेहकातरं द्रवत् इव हृदयं कथञ्चयमपि संस्तभ्य उत्थाय यथाक्रियमाणं क्रियाकलापम् अकरोत् ।

(१६६) आस्थानगतश्च सहसा एव प्रविशन्तम्, अनुप्रविशता विषण्णवदनेन लोकेन अनुगम्यमानम्, असह्यदुःखोष्णनिश्वासधूमरक्ततन्तुना इव मलिनेन पटेन प्रावृतवपुषं,

सुकुमारमपि च ; का कथा बलवत इति अपिशब्दार्थः, करीरं—वंशाङ्कुरं, ("वंशाङ्कुरे करीरोऽस्त्री" इत्यमरः) वंशसन्तानस्य बीजभूतमित्यर्थश्च, अत्र स्ववंशीयानां शक्त्युत्कर्षमाविष्कर्तुम् अत्युक्तिरूपाया सम्भावनायाम् अपिशब्दः प्रयुक्तः, प्रासङ्गिकतात्पर्य्ययोगात्, तेन हि स्ववंशीयानामणीयसा निम्बेऽपि नास्ति कृतान्तस्य करुणा इति सूचितम् ; कलयतः,—भञ्जतः, नाशयतश्च, करिणः इव,—गजस्य इव, कृतान्तस्य—यमस्य, दैवस्य वा, ("कृतान्तो यम-दैवयोः" इत्यमरः) परिपन्थी—प्रतिबन्धी, कः ?—न कोऽपि इत्यर्थः अनुकूलदैवम् अन्तरा अस्मद्वंशविनाशैषिणः कृतान्तात् कोऽपि न् त्रायेत ? इति भावः ।

(१६५) स्वस्ति—मङ्गलम् । अन्तरिति ।—अन्तर्भिन्नेन—अन्तः,—अभ्यन्तरे, हृदये इत्यर्थः, भिन्नेन—सङ्गतेन, हृदयस्थेन इत्यर्थः ; यद्वा,—अन्तः भिन्नं—दलितं, विदारितमित्यर्थः, अमङ्गलाशङ्कासम्भूतशोकेन कारणेन इति भावः येन तादृशेन, अन्तर्भेदकेन इत्यर्थः,("भिन्नं स्यान्विषु दारिते । सङ्गतेऽन्यवत् फुल्ले च" इति मेदिनी ) भ्रातृस्नेहेन—सोदरप्रेम्णा, कातरं—व्याकुलम् । द्रवदिव—गलदिव, चिन्तोष्मणा इति भावः ; कथञ्चयमपि—अतिकष्टेण, संस्तभ्य—स्थिरीकृत्य,उत्थाय, शयनादिति शेषः, यथाक्रियमाणं —नित्यमाचर्य्यमाणं, शौचसन्ध्यादिकमिति यावत्, क्रियाकलापं—कार्य्यजातम् ।

(१६६) "आस्थानगतश्च" इत्यस्य "सहसा एव प्रविशन्तं ……कुन्तलं नाम बृहदश्ववारं ……ददर्श" इति उत्तरेण सम्बन्धः । आस्थानगतः,—सभागतः, ("आस्थानी क्लीबमास्थानं सभासमितिसंसदः" इत्यमरः) सहसा—असमये इति यावत् । असह्येति ।—असह्येन—सोढुमशक्येन, दुःखेन—सन्तापेनेत्यर्थः, ये उष्णनिश्वासाः,—सन्तप्तनासावायवः, तेषां धूमेन रक्ताः,—प्राप्तरागाः, धूम्राभा इत्यर्थः, मलिनरागा इति भावः, तन्तवः,—सूत्राणि यस्य तेन, पटेन—वसनेन, प्रावृतवपुषम्—आच्छादितदेहम् । दुःखोष्णनिश्वासे धूमासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः, उत्प्रेक्षाऽङ्गम् इति सङ्करः ।

(१६७) जीवितधारणलज्जया इव अवनतमुखं, नासावंशस्य अग्रे ग्रथितदृष्टिं, (१६८) दुःखदूरप्ररूढलोम्ना मूकेनापि मुखेन (१६९) स्वामिव्यसनम् अविच्छिन्नैः अश्रुविन्दुभिः विज्ञापयन्तं, कुन्तलं नाम बृहदश्ववारं राज्यवर्द्धनस्य प्रसादभूमिम् अभिजाततमं ददर्श। दृष्ट्वा च (१७०) जाताशङ्कः चक्षुषि सलिलेन, मुखशशिनि श्वसितेन, हृदये हुताशेन, उत्सङ्गे भुवा, दारुणाप्रियश्रवणसमये सममिव सर्व्वेषु अङ्गेषु अगृह्यत लोकपालः।

---

(१६७) जीवितेति।—जीवितस्य—प्राणाना, धारण—रक्षणमित्यर्थः, तेन या लज्जा—त्रपा तया इव, प्रभोर्जीवनरक्षणासामर्थ्यात् तस्मिन् विनष्टेऽपि स्वजीवनापरित्यागादिति वा भाव'। नासावंशस्य अग्रे—नासिकाग्रस्थपरिभागे, ग्रथितदृष्टि—निबद्धचक्षुष, महालज्जया किमप्यन्यदपश्यन्तमिति भावः।

(१६८) दु खेति।—दुःखेन—क्लेशेन हेतुना, दूरम्—अत्यन्त, प्ररूढानि—जातानि, चौरकर्म्माकरणात् प्रवर्द्धितानि इति भावः, लोमानि—श्मश्रुराजय यस्मिन् तेन, ["दु खदूरप्ररूढलोम्ना" इत्यत्र "दुःखदूरप्ररूढरोम्णा" इति पाठेऽपि स एवार्थः, रवर्णस्यासकृदावृत्त्या वृत्त्यनुप्रासोऽलङ्कार.] मूकेनापि—वाग्व्यापाररहितेनापि, किमपि अकथयन्तमपीति भाव.।

(१६९) स्वामिव्यसनं—स्वामिनः,—प्रभोः, राज्यवर्द्धनस्येति यावत्, व्यसन—विपत्ति, विनाशम् इत्यर्थ', ("व्यसन विपदि भ्रंशे ·····"इत्यमर.)। अविच्छिन्नै.,—अविरलप्रवृत्तै, धारावाहिभिरित्यर्थः। बृहदश्ववारं—महान्तमश्वारोहिसैनिकमित्यर्थः, भूतपूर्व्वप्रकृष्टरणकौशलप्रदर्शनजनितपरितोषप्राप्तोच्चाधिकारमित्याशय.। प्रसादभूमिं—कृपापात्रम्। अभिजाततम—महाकुलसम्भूतम्।

(१७०) जाताशङ्क.,—भीत.। सलिलेन—जलाधिपतिना वरुणेन इत्यर्थ', सलिलस्य जडतया कस्यचिद्ग्रहणशक्त्यसम्भवात्, शब्दशक्त्या स्वाधीश्वरदिव्यपुरुषप्रत्यायनादिह लक्षणा वृत्ति. अङ्गीकृता इति सङ्क्षेप, अविच्छिन्नधाराभिरभीक्ष्ण रुरोद इति तात्पर्यम्। श्वसितेन—निश्वासवायुना। हुताशेन—अग्निना। उत्सङ्गे–क्रोडे, देहे इति भावः, भुवा—पृथिव्या। दारुणेति।—दारुणस्य—भीषणस्य, कठोरस्येत्यर्थः, अप्रियस्य—अशुभवार्त्ताया., श्रवणसमये—श्रवणकाले, सममिव—युगपदिव। लोकपाल.,—राजा, हर्ष इत्यर्थः। ["लोकपाल." इत्यत्र "लोकपालै." इति

(१७१) तस्माच्च हेलानिर्जितमालवानीकमपि गौड़ाधिपेन मिथ्योपचारोपचितविश्वासं मुक्तशस्त्रम् एकाकिनं विश्रब्धं स्वभवन एव भ्रातरं व्यापादितम् अश्रौषीत्।

श्रुत्वा च महातेजस्वी (१७२) प्रचण्डकोपपावकप्रसर-परिचीयमानशोकावेगः सहसैव प्रजज्वाल। (१७३) ततश्च अमर्षविधुतशिरोविशीर्य्यमाणशिखामणिशकलाङ्गारितम् इव

पाठे,—लोकपालैः,—वरुणादिभिः, अग्टह्यत, हर्ष इति शेषः] तादृग्दारुणा-प्रियश्रवणसमये युगपदेव चक्षुः वाष्पाकुलं, मुखं दीर्घनिश्वासवाहि, हृदयं शोकाग्नि-सन्तप्तम्, उत्सङ्गदेशः भूतलपतित आसीदिति भावः।

(१७१) तस्मात्—कुन्तलाभिधानात् अश्ववारात्, हेलेति।—हेलया—अव-ज्ञया, निर्जितं—पराभूतं, मालवानीकं—मालवसैन्यं येन तथाभूतम्। गौड़ाधिपेन—गौड़राजेन, तत्सामयिकेन शशाङ्कनाम्ना केनचित् आवङ्गभुवनेशान्तवसुन्धराऽधिपतिना इत्यर्थः, "वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे!। गौड़देशः समाख्यातः……॥" इत्यादि अभिधानकारोद्धृततन्त्रोक्तप्रमाणात् इत्याशयः। मिथ्येति।—मिथ्या—अलीकं, कपट इत्यर्थः, उपचारः,—प्रलोभनं, तेन उपचितः,—जनितः, वर्द्धितः इति यावत्, विश्वासः,—प्रत्ययः यस्य तथोक्तम्, अत एव मुक्तशस्त्रं—त्यक्तायुधं, निरस्त्रमित्यर्थः। विश्रब्धं—विश्वस्तम्। व्यापादितं—निहतम्।

(१७२) प्रचण्डेति।—प्रचण्डस्य—अत्युग्रस्य, कोपपावकस्य—क्रोधाग्नेः, प्रसरेण—आविर्भावेण, परिचीयमानः,—सङ्गच्छमानः, प्रवर्द्धमानः इत्यर्थः, शोकावेगः,—मन्युप्रसरः यस्य तथोक्तः, शोकामर्षाभ्यां सममेव अभिभूयमान इत्यर्थः। प्रजज्वाल—उद्दिदीपे। प्रागेवोद्दीप्तस्य प्रचण्डशोकानलस्य पुनः सजातीयेन कोपकृशानुना सम्बन्धात् नरेन्द्रस्याकस्मिकप्रज्वलतातिशय्यप्रतिपादनेन पदार्थहेतुकं काव्यलिङ्गम्।

(१७३) "ततश्च" इत्यस्य "परां भीषणतामयासीत्" इत्युत्तरेणान्वयः। अमर्षेति।—अमर्षात्—क्रोधात्, विधुतात्—कम्पितात्, शिरसः,—मस्तकात्, विशीर्य्यमाणं—खण्डमेव भश्यमानं, ["शिरोविशीर्य्यमाण—"इत्यत्र "शिरःशीर्य्य-माण—" इति पाठेऽपि स एवार्थः] शिखामणिशकलं—चूड़ारत्नखण्डं, तेन अङ्गा-रितः,—जाताङ्गारः तमिव, ज्वलदङ्गारमिव इति भावः। ["अङ्गारितम्" इत्यत्र अङ्गारक्षितम्" इति पाठेऽपि स एवार्थः]। अत्रोत्साहस्थायिभावकः वीररसः कोपस्थायिना स्वानुकूलेन रौद्रेण अङ्गभूतेन किञ्चिद्योगात वर्णनातीतचमत्कृतिः

(१७४) रोषाग्निम् उद्वमन्, अनवरतस्फुरितेन पिबन् इव सर्वतेजस्विनाम् आयूंषि रोषनिर्भुग्नेन दशनच्छदेन, (१७५) लोहितायमानलोचनालोकविक्षेपैः दिग्दाहान् इव दर्शयन्, रोषानलेन अपि (१७६) असह्यसहजशौर्य्योष्मदहनदह्यमानेन इव वितन्यमानस्वेदसलिलशीकरासारदुर्दिनः, (१७७) स्वावयवैः अपि अदृष्टपूर्वप्रकोपभीतैः इव कम्पमानैः उपेतः, हर इव (१७८) कृतभैरवाकारः, हरिरिव प्रकटितनरसिंहरूपः,

---

द्योतक इति ज्ञेयम्, अन्यथा उत्तमप्रकृतिकधीरोदात्ते कोऽपि विरोधारोपः स्यात् इत्यवधातव्यम्।

(१७४) रोषाग्निं—क्रोधानलम्, उद्वमन्—उद्गिरन्। अनवरतस्फुरितेन—अविरतस्पन्दितेन, रोषनिर्भुग्नेन—क्रोधदष्टेन इत्यर्थः, क्रोधवक्रीकृतेन वा, दशनच्छदेन—ओष्ठेन, सर्वतेजस्विनां—सकलप्रतापवतां, प्रतिपक्षवीरसमूहानामित्यर्थः, आयूंषि—जीवितकालान्।

(१७५) लोहितायमानेति।—लोहितायमानयोः,—रक्ततामापद्यमानयोः,लोचनयोः,—नयनयोः, आलोकविक्षेपैः,—प्रभाविसरणैः। दर्शयन्—प्रकटयन्।

(१७६) असह्येति।—असह्यस्य—सोढुमशक्यस्य, सहजस्य—स्वाभाविकस्य, शौर्य्यस्य—वीर्य्यस्य, उष्मा—सन्तापः, गर्व्व इत्यर्थः, स एव दहनः,—अग्निः, तेन दह्यमानः,—प्रज्वल्यमानः तेन इव, वितन्यमानेति।—वितन्यमानः,—विस्तीर्य्यमाणः, स्वेदसलिलानां—घर्म्मजलानां, शीकरासारः,—विन्दुधारासम्पात एव, दुर्दिनं—वर्षणं यस्मिन् तथाभूतः, स्वयं क्रोधानलोऽपि तस्य वीर्य्यवह्निना दह्यमानः स्वदाहज्वालाशमनार्थं तस्मात् स्वेदसलिलं निःसार्य्य तेन आत्मानं सिञ्चति इव इति भावः; दृश्यते च लोके दह्यमानः जलेनात्मानम् अभिवर्षति इति, स्वेदाप्लुतकलेवरो जात इति निष्कर्षः।

(१७७) स्वावयवैः,—निजाङ्गैः, अदृष्टेति।—अदृष्टपूर्वात्—पूर्व्वमदृष्टात्, कदाऽपि क्रोधाकरणादिति भावः, प्रकोपात्—प्रबलरोषात्, भीताः,—शङ्किताः तैः इव, उपेतः,—युक्तः क्रोधकम्पितकलेवर इत्यर्थः।

(१७८) कृतेति।—कृतः,—जनित इत्यर्थः, भैरवः,—भीषणः, आकारः,—मूर्त्तिः; अन्यत्र,—कृतः,—धृतः, भैरवस्य—स्वमूर्त्तिभेदस्य, आकारः येन तथाभूतः। प्रकटितेति।—प्रकटितं—प्रकाशितं, नरसिंहस्य—नरः सिंह इव इत्युपमितसमासात्

(१७९) सूर्य्यकान्तशैल इव अपरतेजःप्रसरदर्शनप्रज्वलितः, (१८०) चयदिवस इव उदितद्वादशदिनकरदुर्निरीक्ष्यमूर्त्तिः, महोत्पातमारुत इव सकलभूभृत्कम्पकारी, विन्ध्य इव (१८१) विवर्द्धमानविग्रहोत्सेधः, महाऽऽशीविष इव दुर्नरेन्द्राभिभवरोषितः, (१८२) पारिक्षित इव सर्वभोगिदहनोद्यतः,

प्रशस्तो नरः नरसिंहः तस्य, (तथा चामरः,—"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥" इति) यद्वा,—वपुषि नरः मुखे च सिंह इव तस्य, नृसिंहाकारमूर्त्तिभेदस्य च, [नीललोहितवत् समासः] रूपम्—आकारः येन तथोक्तः।

(१७९) सूर्य्यकान्तशैल इव—सूर्य्यकान्तमणिमयपर्व्वत इव, अपरेति।—अपरस्य—विपक्षस्य, सूर्य्यस्य च इति भावः, तेजसां—प्रतापानां, प्रभाणाञ्च, प्रसरस्य—विकासस्य, दर्शनेन—अवलोकनेन, प्रज्वलितः,—प्रदीप्तः, सूर्य्यकान्तमणिः सूर्य्यकिरणसम्पर्कात् प्रज्वलति इति प्रसिद्धिः।

(१८०) चयदिवस इव—कल्पान्तदिनमिव, ("चयः कल्पान्त इत्यपि" इत्यमरः)। उदितेति।—उदितानाम्—उदयं गतवतां, द्वादशानां—द्वादशसङ्ख्यकानां, दिनकराणां—सूर्य्याणामिव, दुर्निरीक्ष्या—निरीक्षितुमशक्या, लोकैरिति भावः, मूर्त्तिः,—आकारः यस्य तथाभूतः। महोत्पातमारुत इव—प्रचण्डझञ्झावात इव, सकलेति।—सकलानां—सर्वेषां, भूभृतां—राज्ञां, पर्व्वतानाञ्च, कम्पकारी—वेपनहेतुः; भयात् सञ्चालनाच्चेति भावः।

(१८१) विवर्द्धमानेति।—विवर्द्धमानः,—विशेषेण वृद्धिं गच्छन्, क्रोधेन उन्नमनेन च इति भावः, विग्रहस्य—सङ्ग्रामस्य, देहस्य च, उत्सेधः,—उद्योग इति भावः, उच्छ्रायश्च यस्य तथाभूतः। महाऽऽशीविष इव—महान् भुजङ्ग इव, दुर्नरेन्द्रेति।—दुर्नरेन्द्रस्य—दुर्विनीतस्य राज्ञः, गौड़ाधिपतेः इत्यर्थः, अनभिज्ञस्य विषवैद्यस्य च, ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम्" इति मेदिनी) अभिभवेन—पराजयेन, भ्रातृवधरूपेण, गारुड़ादिमन्त्रप्रयोगरूपेण च इति भावः, रोषितः,—कोपितः।

(१८२) पारिक्षित इव—परिक्षितः अपत्यं पुमान् पारिक्षितः,—जनमेजयः स इव, ["तस्यापत्यम्" (४।१।८२ पा०) इत्यण्] सर्वेति।—सर्वेषां—समस्तानां, भोगिनां—सुखभोगरतानां परिपन्थिराजानामित्यर्थः, सर्पाणाञ्च, ("भोगी भुजङ्गमेऽपि स्यात् ग्रामपाले नृपे पुमान्" इति मेदिनी) दहने—भस्मीकरणे, शस्त्रानलैः

( १८३ ) वृकोदर इव रिपुरुधिरपानतृषितः, सुरगज इव प्रतिपक्षवारणप्रधावितः, ( १८४ ) पूर्व्वागम इव पौरुषस्य, उन्माद इव मदस्य, ( १८५ ) आवेग इव अवलेपस्य, तारुण्यावतार इव तेजसः, सर्व्वोद्योग इव दर्पस्य, ( १८६ ) युगागम इव यौवनोष्मणः, राज्याभिषेक इव समररसस्य, नीराजनदिवस इव असहिष्णुतायाः परां भीषणताम् अयासीत्।

---

सर्पमेधयज्ञेन च इति भावः, उद्यतः,—प्रवृत्तः। पुरा पितरि परिक्षिति तक्षकेण नागेन दष्टे मृते च सति क्रुद्धो जनमेजयः सर्पकुलजिघांसया सर्पमेधयज्ञमन्वतिष्ठत् इति वार्त्ता भारतीया अत्र अनुसन्धेया।

( १८३ ) वृकोदर इव—भीमसेन इव, रिपुरिति।—रिपोः,—शत्रोः, गौडाधिपस्य, द्रौपद्याः वेण्याः कर्षकस्य दुःशासनस्य च इत्यर्थः, रुधिरपाने—रक्तपाने, तृषितः,—तृष्णान्वितः, शत्रुवधार्थी इति यावत्। [ "रिपुरुधिरपानतृषित." इत्यत्र "रिपुरुधिरतृषितः" इति पाठे,—रिपोः रुधिराय—रक्तपानायेत्यर्थः, तृषितः,—पिपासित., जाताकाङ्क्ष इत्यर्थः ]। सुरगज इव—ऐरावत इव, प्रतिपक्षेति।—प्रतिपक्षस्य—शत्रोः, वारणाय—दमनाय, प्रतिपक्षवारणाय—प्रतिद्वन्द्विगजाय च, प्रधावितः,—चलितः। अत्र भूयसां साम्यप्रदर्शनात् श्लिष्टा मालोपमाऽलङ्कारः।

( १८४ ) पौरुषस्य—पुरुषकारस्य, पराक्रमस्य इत्यर्थः, पूर्वागम इव—प्रथमोपस्थितिः इव, प्रथमः मूर्त्तिमान् पराक्रम इव इत्यर्थः। मदस्य—सौभाग्ययौवनादिजनितावलेपस्य, उन्माद इव—उन्मत्तभाव इव. समुद्धतो मद इव इत्यर्थः।

( १८५ ) अवलेपस्य—गर्व्वस्य, आवेग इव—त्वरा इव, विग्रहवान् गर्व्वप्रसर इव इत्यर्थः। तेजसः,—प्रतापस्य, तारुण्यावतार इव—यौवनाविर्भाव इव, अभिनवोत्पन्नः मूर्त्तिमान् प्रताप इव इत्यर्थः। दर्पस्य—अहङ्कारस्य, सर्वोद्योग इव—पूर्णोद्यम इव, सर्वथा समुद्धतस्य मूर्त्तिमती दर्पस्य प्रयत्नसङ्ग इव इत्यर्थः।

( १८६ ) यौवनोष्मणः,—यौवनस्य—तारुण्यस्य, उष्मा—उष्णत्वं तस्य, युगागम इव—नवयुगावतार इव, देहधारी यौवनगर्व्व इवेत्यर्थः। समररसस्य—सङ्ग्रामानुरागस्य, [ "समररसस्य" इत्यत्र "रणरसस्य" इति पाठेऽपि स एवार्थः ] राज्याभिषेक इव—राजकर्म्मणि अभिषेचनमिव, नवे राज्येऽभिषिक्तः सङ्ग्रामरस इव कायवान् इत्यर्थः। असहिष्णुतायाः,—अक्षमायाः, शत्रुनिधने कालविलम्बासहनशीलतायाः इत्यर्थः, नीराजनदिवस इव—शान्तिकर्म्मविशेषवासर इव तनुमान् इत्याशय , राज्ञो

अवादीच्च,—(१८७) "गौड़ाधिपम् अपहाय कः तादृशं महापुरुषं तत्क्षण एव (१८८) निर्व्याजभुजवीर्य्यनिर्जित-समस्तराजकं मुक्तशस्त्रं कलसयोनिमिव कृष्णवर्त्मप्रसूतिः ईदृशेन (१८९) सर्वलोकविगर्हितेन मृत्युना शमयेत् आर्य्यम्?

युद्धयात्राकाले नीराजना क्रियते इति व्यवहारः; विजिगीषोः यात्राकाले तद्दिनं यथा भीषणं दृश्यते, तद्वद्भीषण इत्यर्थः, परां—महतीं, भीषणतां—भयङ्करताम्। इह बह्वनामुत्प्रेक्षितानाम् एकस्मिन् वस्तुनि सम्बन्धवत्त्वात् यथायथं जातिद्रव्यगुणरूपोत्प्रेक्षा, स्वेदसलिलशीकरासारेण दुर्दिनासम्बन्धेऽपि तत्सम्बन्धकथनात् अतिशयोक्तिः, क्रतः भैरवाकारादिश्लिष्टपदार्थयोगात् श्लेषः इति, क्रोधोद्वेगादयः अग्रजविषयकानुरागाङ्गभूताः इति रसाभासः, एतेषां पारस्परिकाश्रयाश्रयित्वेन स्थिततया सङ्करः; बहुरत्नाङ्गुरीयसौन्दर्यवत् चमत्कृत्यातिशयद्योतकः इति सङ्क्षेपः।

(१८७) गौड़ाधिपं—शशाङ्कनामधेयम्, अपहाय—परित्यज्य, तं विना इत्यर्थः। तत्क्षण एव—तदानीमेव, दृष्टिपातक्षणे एव इत्यर्थः, आयासं विनैवेति भावः।

(१८८) निर्व्याजेति।—निर्व्याजेन—अकपटेन, कूटव्यवहारविमुखेन इति भावः, भुजवीर्य्येण—बाहुबलेन, निर्जितं—पराभूतं, समस्तं—सकलं, राजकं—राजन्यवर्गः, एकत्र,—मालवादिप्रतिपक्षराजाः, अन्यत्र,—युधिष्ठिरादिपाण्डवाः येन तथाभूतं, मुक्तशस्त्रं—त्यक्तायुधं, निरस्त्रमित्यर्थः, युद्धापगमात् पुत्रशोकाच्च इति भावः, कलसयोनिमिव—कुम्भयोनिमिव, द्रोणाचार्य्यमिव इत्यर्थः ("कुम्भयोनिरगस्त्ये स्याद्वसिष्ठ-द्रोणयोः पुमान्" इति मेदिनी) कृष्णवर्त्मप्रसूतिः,—कृष्णस्य—कृष्णवर्णपापस्य, अन्याय्यस्य इत्यर्थः, वर्त्म—मार्गः, दुराचार इत्यर्थः, तस्य प्रसूतिः,—योनिः, उत्पत्तिहेतुरित्यर्थः, ["स्त्रियां क्तिन्" (३।३।९४ पा०) इति क्तिन्] अन्यत्र,—कृष्णवर्त्मा—अग्निः, ("कृष्णवर्त्मा पुमानग्नौ दुराचारे विधुन्तुदे" इति मेदिनी) प्रसूतिः,—योनिः यस्य सः, यज्ञाग्निसमुद्भूतः, धृष्टद्युम्नः इत्यर्थः; कुतश्चित् कारणात् द्रोणाचार्य्येणावमानितेन द्रुपदेनानुष्ठितस्य यज्ञस्य फलभूततया द्रोणघातकः होमकुण्डाग्रे उत्थितः असौ इत्यामनन्ति पौराणिकाः।

(१८९) सर्व्वलोकविगर्हितेन—सर्व्वजननिन्दितेन, विश्वासघातपूर्व्वकमुपांशुहननादिति भावः, मृत्युना—मरणेन, कूटप्रयोगजनितेन इति भावः, शमयेत्?—निर्वापयेत्? लोकान्तरं नयेत्? इत्यर्थः, नीचाशयं विश्वस्तहन्तारं गौड़ाधिपं विना इह ईदृशः पापकारी कोऽपि नास्ति इति समुदितार्थः अत्र स्फुटावगत्यर्थं विशदीकृत्य

(१९०) अनार्य्यञ्च तं मुक्त्वा भागीरथीफेनपटलपाण्डुराः केषां (१९१) मनःसु सरःसु राजहंसा इव परशुरामपराक्रमस्मृति-कृतो न कुर्य्युः आर्य्यशौर्य्यगुणाः पक्षपातम्? (१९२) कथमिव

---

पुराणमतमुपन्यस्यते; तथा हि—पुरा द्रोणेन निर्ज्जितः पञ्चालाधिपतिर्द्रुपदः तत्कृतावमाननाप्रतिक्रियार्थं द्रोणनाशनं यागमन्वतिष्ठत्, सम्पूर्णे च यज्ञे यज्ञकुण्डात् सखड्गः पुरुषः एकः कन्या चैवापरा उदतिष्ठताम्; स च पुमान् धृष्टद्युम्नः, कन्या च द्रौपदीति नाम्ना विख्यातौ अभूताम्। ततश्च प्रवृत्ते कुरुक्षेत्रसमरे सेनापतिना द्रोणाचार्य्येण महता रयेण पाण्डवसैन्यं हन्यमानं दृष्ट्वा कृष्णेन प्रेरितो युधिष्ठिरः अनिच्छन्नपि "अश्वत्थामा हतः" इति उच्चैः "इति गजः" इति च अनुच्चैः तमवादीत्। स च "इति गजः" इति वाक्यस्य मृदुस्वरेण उच्चरितत्वात् श्रोतुमशक्नुवन् सत्यवादिनो युधिष्ठिरस्य प्रथमोक्तेन वचनेन पुत्रमरणे दृढप्रत्ययः द्रोणाचार्य्यः शोकात् अस्त्रं परित्यज्य रथस्योपरि विषण्णः उपविवेश। धृष्टद्युम्नश्च तदा तत्रागत्य तं खड्गेन निजघान इति।

(१९०) अनार्य्यम्—असज्जनं, नीचमित्यर्थः, अतिथौ अपि पापाचरणादिति भावः, तं—गौड़ाधिपं शशाङ्कं, मुक्त्वा—विहाय, तं विना इत्यर्थः, भागीरथीति।—भागीरथ्याः,—गङ्गायाः, फेनानां—डिण्डीराणां, पटलानि—पुञ्जाः, तद्वत् पाण्डुराः,—शुभ्राः।

(१९१) परशुरामेति।—परशुरामस्य—भार्गवस्य, यः पराक्रमः,—शौर्य्यं, तस्य स्मृतिः,—स्मरणं, तां कुर्वन्ति—जनयन्तीति तथोक्ताः, शौर्य्यविशेषेण जामदग्न्यस्मारकाः इत्यर्थः, आर्य्येति।—आर्य्यस्य—ज्येष्ठस्य, शौर्य्याणि—पराक्रमाः एव, गुणाः,—उत्कर्षाः, मनःसु—चित्तेषु, निर्म्मलाशयत्वात् इति भावः, सरःसु—जलाशयेषु, राजहंसक्रीड़ासद्मसु च मानसाख्येषु इति भावः; राजहंसा इव, "भागीरथी—" इत्यादि "परशुराम—" इत्यादि च विशेषणद्वयं राजहंसेऽपि योजनीयम्; पुरा भगवतः शङ्करात् धनुर्विद्यामधीयानेन परशुरामेण किल कैलासैकदेशं क्रौञ्चं शिखरिणं स्कन्दस्य स्पर्द्धया अतिनिशितविशिखमुखेन मृत्पिण्डमेदं भित्त्वा हंसमार्गः कृतः इति श्रूयते, अतः हंसानां तत्पराक्रमस्मृतिकृत्त्वमुक्तमित्यवधेयम्; पक्षपातम्—अनुरागं, पक्षैः,—पतत्रैः, पातः,—पतनम्, उड्डीय क्रौञ्चरन्ध्रपथेन मानसे सरसि गमनमित्यर्थश्च।

(१९२) कथमिव—केन प्रकारेण इव, ["किमश्च" (५।३।२५ पा०) इति थमु-

अत्युग्रस्य अस्य आर्य्य जीवितहरणे निदाघरवेरिव (१९३) कमलाकरसलिलशोषणेऽनपेक्षितप्रीतयः प्रसृताः कराः? कां नु (१९४) गतिं गमिष्यति? कां वा योनिं प्रवेक्ष्यति? कस्मिन् वा नरके निपतिष्यति? श्वपाकोऽपि क इदम् आचरेत्? नामापि गृह्णतोऽस्य पापकारिणः पापमलेन लिप्यत इव मे जिह्वा। (१९५) किं वा अङ्गीकृत्य कार्य्यम् आर्य्यः तेन क्षुद्रेण अनुप्रविश्य विगतघृणेन घुणेन इव (१९६) सकलभुवनाह्लादनचतुरः चन्दनस्तम्भः क्षयम् उपनीतः?

---

प्रत्ययः] अत्युग्रस्य—अतिदारुणस्य, अतिप्रखरस्य च, अस्य—शशाङ्कस्य, आर्य्येति। —आर्य्यस्य—पूज्यस्य, जीवितं-जीवनं, तस्य हरणं—मोषणं, हननमित्यर्थः तस्मिन्, निदाघरवेरिव—ग्रीष्मसूर्य्यस्येव।

(१९३) कमलाकरसलिलशोषणे—पद्मसुशोभितसरोवरजलशुष्कीकारणे, अनपेक्षितेति।—न अपेक्षिता—नानुरुद्धा, प्रीतिः,—स्नेहः; एकत्र,—शौर्य्यतारुण्य-प्रियदर्शनत्वादिगुणसहस्रसमलङ्कृतत्वात्, अन्यत्र,—सौरभादिगुणशतभूषितायाः स्वप्रियायाः पद्मिन्याः आश्रयभूतत्वात् इति भावः यैः तथाभूताः, कराः,—हस्ताः, किरणाश्च, प्रसृताः,—प्रवृत्ताः; एतेन निदाघरविसाम्येन गौड़ाधिपतेः भीषणत्वं शौर्य्यशालित्वं स्वकार्य्यसाधने निर्म्ममत्वञ्च ध्वन्यते।

(१९४) गतिं—दशामित्यर्थः। कां वा योनिं प्रवेक्ष्यति—जनुर्ग्रहणाय कीदृशीं योनिमाश्रयिष्यति इत्यर्थः। "गमिष्यति" इत्यादौ "निपतिष्यति" इत्यन्तक्रियासु स इति कर्तृपदमूहनीयम्। श्वपाकः,—चाण्डालः। पापमलेन—पापं—निन्दितं कर्म्म एव, मलं—शकृत्, मालिन्यजननं वा तेन, जिह्वया पापकारिणो नामोच्चारणात् तत्सम्पर्केण तस्याः मललिप्तत्वम्; "कथाऽपि खलु पापानामलमश्रेयसे यतः" इत्याद्याप्तानुमोदितानुशासनस्मरणात् इत्याशयः।

(१९५) किं वा कार्य्यम् अङ्गीकृत्य—आश्रित्य, कस्य कार्य्यस्य व्यपदेशेन इति भावः। क्षुद्रेण—नीचेन, क्रूरेणेत्यर्थः, अणुना च, तेन—गौड़ाधिपेन शशाङ्केन, अनुप्रविश्य—अभ्यन्तरं प्रविश्य, विश्वास्य इति भावः, अन्तरं गत्वा च। विगतघृणेन निर्दयेन, घुणेन इव—घुणाख्यकाष्ठच्छेदककीटविशेषेण इव।

(१९६) सकलेति। सकलानां—समग्राणां, भुवनानां—जगताम्, आह्लादने

(१९७) नूनं न अनेन मूढेन मधुरसास्वादलुब्धेन मधु इव आर्य्यजीवितम् आकर्षता भावी दृष्टः शिलीमुखसम्पातोपद्रवः। (१९८) निजगृहदूषणं जालमार्गप्रदीपकेन कज्जलमिव अतिमलिनं केवलम् अयशः सञ्चितं गौड़ाधमेन। न तु (१९९) आशु एव अस्तम् उपगतवत्यपि त्रिभुवनचूडामणौ सवितरि (२००) वेधसा आदिष्टः सत्पथशत्रोः अन्धकारस्य निग्रहाय ग्रह-

—प्रीणने, एकत्र,—दयादाक्षिण्यपरोपकारित्वादिगुणेन, अन्यत्र,—शैत्यसुगन्धित्वदर्शनीयत्वादिगुणेन इत्यर्थः, चतुरः,—प्रवण, चन्दनस्तम्भः,—चन्दनतरुनिर्म्मिता गृहावलम्बनभूता स्थूणा इत्यर्थः, क्षयम् उपनीतः,—नाशं गमितः, न जाने, किं कार्य्यमुद्दिश्य निरस्तः विस्रब्धः आर्य्यः तेन पापिन शत्रुणा न वृथैव घातितः, अहो! नैष्ठुर्य्यमिति समुदितार्थः।

(१९७) नूनं—निश्चितम्, उत्प्रेक्षे वा। मध्विति।—मधुनः—पुष्परसस्य, रसः,—माधुर्य्यमित्यर्थः, तस्य आस्वादे—स्वादग्रहणकर्म्मणि, लुब्धः,—लोलुपः तेन। आकर्षता—आक्षिपता, विनाशयता, सङ्कुचता च इत्यर्थः। भावी—भविष्यन्, कियदनन्तरमेवात्मन उपरि प्रपतिष्यन् इत्यर्थः, शिलीमुखेति।—शिलीमुखानां—बाणानाम्, अलीनाञ्च, भ्रमराणाञ्च इत्यर्थः, ("अलिबाणौ शिलीमुखौ" इत्यमरः) सम्पातः,—सम्पतनमेव, उपद्रवः,—अत्याचारः, दृष्टः,—अवलोकितः, तर्कित इति यावत्, स्वार्थलोलुपतया मूढाशयाना न भविष्यदत्याहितज्ञानं वर्त्तते इति निष्कर्षः।

(१९८) निजगृहदूषणं—स्वगृहक्षयहेतु इत्यर्थः, मत्कोपेन तस्य राजधान्याः अचिरादेव विनङ्क्ष्यमाणत्वादिति भावः, स्वगृहस्य शोभानाशनम् इत्यर्थश्च, जालमार्गप्रदीपकेन—जालस्य—दम्भस्य, कपटताया इत्यर्थः, ("जालं वृन्दगवाक्षयोः। क्षारकानायदम्भेषु—" इति रभसः) मार्गं—पन्थानं, व्यवहारमिति यावत्, प्रदीपयति—प्रकाशयति यः तेन, कूटवर्त्मप्रवर्त्तकेन गवाक्षमार्गस्थितेन दीपेन इत्यर्थश्च। केवलम् अयशः,—अकीर्त्तिमात्रं, न तु कृतस्य कर्म्मणः किमपि इष्टं फलमिति भावः, तस्य अचिरादेव मया यमसदनप्रापणादिति हृदयम्।

(१९९) त्रिभुवनचूडामणौ—त्रिलोकीशिरोरत्ने, एकत्र,—जगत्प्रकाशकत्वात्, अन्यत्र—शौर्य्यदाक्षिण्यादिगुणोत्कर्षादिति भावः, सवितरि—सूर्य्ये, तत्सदृशे तेजस्विनि राज्यवर्द्धने च इति भावः, आशु—शीघ्रम्, अल्पकालमेवेत्यर्थः, अस्तम्—अस्ताचलं, नाशञ्च, उपगतवति—प्राप्तवति।

(२००) वेधसा—विधात्रा, सत्पथशत्रोः—सन्—शोभनः विद्यमानो वा

ग्रहखण्डविहारैकहरिणाधिपः शशी ? (२०१) विनयविधायिनि अग्नेऽपि चाङ्कुशे विद्यत एव व्यालवारणस्य विनयाय सकल-

पन्थाः,—मार्गः, सदाचारश्च. [ "ऋक्पू—" (५।४।७४ पा०) इत्यादिना समासान्तः अप्रत्यय. ] तस्य शत्रौः,—रिपोः ; एकत्र,—निबिडप्रदीर्घान्धकारेण आवृततया मार्ग-दर्शनाक्षमत्वात्, अन्यत्र,—कुत्सिताचारप्रवर्त्तनेन सदाचारविनाशादिति भावः, अन्ध-कारस्य—तिमिरस्य, तम प्रकृते. महापापगौडाधमस्य इत्यर्थश्च, निग्रहाय—विध्वंसनाय, ग्रहेति।—ग्रहखण्डेषु—मङ्गलादिग्रहवृन्देषु मध्ये,विहाराय—विचरणाय, एक एव हरिणः,—मृगः, वाहनभूत इति भाव', तस्य अधिपः,—प्रभु', तदारूढ इति यावत्, यद्वा—ग्रहखण्डेषु मध्ये विहरतीति तादृशः, एक',—एकमात्रः, हरिणाधिपः,—हरिण',—मृग', शरणागत इति यावत्, शरणागतत्वात् स्वाङ्के धृतः इति भाव., तम् अधिपाति—सम्यक् रक्षति यस्तादृशः , पक्षे,—ग्रहाः,—दण्डेन ग्रहणीया', दमनयोग्या इत्यर्थ., उद्दामा इति यावत्, ये षण्डा ,—वृषभाः, वृषभवत् दुर्मदाः गौडा इति भाव , तेषां विहारे—विशेषेण हरणे, नाशने इत्यर्थः ; यद्वा,—तेषु विहारः,—निःशङ्कपर्य्यटनं, षण्डसद्देषु सिंहानां यथा निर्भीकतया गमनप्रसिद्धेरिति भावः, तत्र एकः,—एकमात्रः, हरिणाधिप ,—मृगराज., सिंह इत्यर्थ', शशी—चन्द्रः, चन्द्र इव अहमिति च भाव', न तु आदिष्ट ? —आज्ञप्त' ? अपि तु आदिष्ट एव इत्यर्थः, तेजस्विनि राज्यवर्द्धने मृतेऽपि हर्ष' जीवति, स एव तस्य शास्ता भविष्यति, एषो विधिनियोग एव इति भाव.। अत्र अप्रस्तुतात्, र्‍ः अस्तगमनोत्तरं चन्द्रस्य तिमिरध्वसनात्, प्रस्तुतं राज्यवर्द्धनध्वसनोत्तर तत्सोदरेण हर्षेण गौडाधिपसंहरणरूपं वस्तु गम्यते इति अप्रस्तुतात् प्रस्तुतप्रतीतिरूपा अप्रस्तुतप्रशसाऽलङ्कार , तदुक्त दर्पणे,—"क्वचिद्विशेष सामान्यात् सामान्य वा विशेषत.। कार्य्यान्निमित्त कार्य्यञ्च हेतोरथ समात् समम्॥ अप्रस्तुतात् प्रस्तुतं चेत् गम्यते पञ्चधा तत.। अप्रस्तुतप्रशसा स्यात् ·· ··॥" इति। ग्रहपण्डेति विशेषणेन शशिन खल्पमात्रसाधनस्यापि ग्रहगणमध्ये वैशिष्ट्योक्ति, हर्षस्य खल्पसाधनस्यापि अरिजयसामर्थ्यं सूच्यते। [ "आशु एव" इत्यत्र "आशु इव" इति पाठे, इवशब्दस्य शशिना सह अन्वये न अप्रस्तुतप्रशसा, परन्तु उपमैव ; तथा हि,—रविप्रतिमे ज्यायसि सहोदरे दिवं गतेऽपि यवीयसि भ्रातरि हर्षे शशिसमे समुदयति सति किमु खलु सत्ता सम्भवति गौडाधिपस्य अन्धकारसन्निभस्य ? इत्यौपम्य-पर्य्यवसितार्थः इत्यवधेयम् ]।

(२०१) विनयविधायिनि दण्डविधानसमर्थे। अङ्कुशे—सृणौ, हस्ति-ताड़नास्त्रविशेषे इति यावत् , अङ्कुशरूपे राज्यवर्द्धने इति प्रस्तुतम्। व्यालवारणस्य

मत्तमातङ्गकुम्भस्थलस्थिरशिरोभागभिदुरः खरतरः केसरि-नखरः। तादृशाः (२०२) कुवैकटिका इव तेजस्विरत्न विनाशकाः कस्य न वध्याः? क इदानीं यास्यति दुर्बुद्धिः?"।

(२०३) इत्येतत् अभिदधत एव अस्य पितुरपि मित्रं, सेनापतिः, समग्रविग्रहप्राग्रहरः, (२०४) हरितालशैलावदातदेहः,

---

—दुष्टगजस्य, क्रूरशशारस्येति च प्रस्तुत, विनयाय—दण्डनाय, शासनायेत्यर्थः। सकलेति।—सकलाना—सर्वेषा, मत्ताना—मदोत्कटाना, मातङ्गाना—हस्तिना, कुम्भस्थलमेव—शिरस्थोभयवीन्नतमासपिण्डभाग एव, स्थिरः,—कठिन, दुर्भेद्य इति भाव य शिरोभागः,—मूर्द्धदेशः, यद्वा,—मत्तमातङ्गाना यत् कुम्भस्थल, तथाभूतः य स्थिर शिरोभागः, तस्य भिदुरः,—विदारणः, स्वय विपाटनपटु इति वा अर्थ, "[ विदिभिदि—" (३।२।१६२ पा०) इत्यादि। कर्त्तरि कुरच्, मुख्यकर्त्तर्य्यपि स्वीकृत इति, तथा हि काशिका,—"विदादिभ्यो धातुभ्यस्तच्छीलादिषु कर्त्तृषु कुरच् प्रत्ययो भवति, विदुर पण्डित, भिदुरं काष्ठं, छिदुरा रज्जुः। भिदिच्छिद्यो कर्म-कर्त्तरि प्रयोगः" इति] खरतरः,—अतितीक्ष्णः, केसरिनखरः,—सिंहनख, केशरिनखररूपः हर्ष इति च प्रस्तुतम्। अत्रापि अप्रस्तुतेन प्रस्तुतस्य प्रतीते. पूर्व्ववदप्रस्तुतप्रशसाऽलङ्कारः।

(२०२) कुवैकटिका इव—कुत्सिता वैकटिकाः,—प्रकृतिवैकल्यकारिण इव, "कुत्सिता स्वर्णकारा इव" इति केचित्, "वैकटिको रत्नवन्धकः" इत्यपरे, तेजस्वि-रत्नविनाशकाः,—तेजस्विना—प्रभाववता, दीप्तिमताञ्चेत्यर्थः, रत्नानाम्—उत्कृष्टवस्तूना, ("जातौ जातौ यदुत्कृष्ट तद्रत्नमिह कथ्यते" इति कोषः) विनाशकाः,—विध्वस-कारिण इत्यर्थः, कस्य न वध्याः?—मारणीयाः? सर्व्वस्यैव वध्या इति भावः, सद्रत्ननाशका गुणानामपरीक्षका मूढा इव कपटपरिक्षपितमहातेजसः नीचाः कथ-मपि न मर्षणीयाः इत्याशय।

(२०३) "इत्येतत्" इत्यस्य "सेनापतिः······सिंहनादनामा······समररसम् आनयन् विज्ञापितवान्" इति अग्रेण सम्बन्धः। अभिदधत,—कथयत, विलपत इत्यर्थः, सेनापति विशिनष्टि, समग्रेति।—समग्राणा—सकलाना, विग्रहाणा—युद्धाना, तथाविधेषु युद्धेषु वा, प्राग्रहर,—अग्रेसर, सेनानीतया समराग्रयायी इत्यर्थः।

(२०४) हरीति।—हरितालस्य—स्वनामख्यातोपरसविशेषस्य, शैल,—पर्व्वतः, तद्वत् अवदात—गौरः, देह—शरीर यस्य तथाभूत कमनीयसुगौरकान्ति-

परिणतप्रगुणसालप्रकाण्डप्रकाशः प्रांशुः, अतिशौर्य्योष्मणा इव परिपाकम् आगतः, गतभूयिष्ठे वयसि वर्त्तमानः, (२०५) बहुशरशयनसुप्तोत्थितोऽपि हसन्निव शान्तनवम् अति-दीर्घेण आयुषा, (२०६) दुरभिभवशरीरतया जरयाऽपि भीत-भीतया इव प्रकटितप्रकम्पया परामृष्टः, कथमपि (२०७) सार-मयेषु शिरोरुहेषु शशिकरनिकरसितसरलशिरोरुहसटालां

रित्यर्थः। परिणतेति।—परिणतः,—प्रवृद्धः, प्रगुणः,—शोभनः, सालप्रकाण्डः,—सालवृक्षस्तम्भः इव, प्रकाशते—द्योतते इति तथोक्तः, प्रांशुः,—उन्नतः, शालवृक्ष इव समुन्नतशरीर इत्यर्थः। अतिशौर्य्योष्मणेव—अतिशौर्य्येण—पराक्रमातिशय्येन, य उष्मा—अन्तःसारस्य उष्णत्वं तेन इव, परिपाकं—परिणतिं, प्राचीनत्वमित्यर्थः. आगतः,—प्राप्तः, दृढवृद्धकाय इति भावः। गतभूयिष्ठे—अतीताधिकांशे, अल्पावशिष्टे इत्यर्थः, वयसि—जीवनकाले इत्यर्थः, अतिवार्द्धके इति यावत्।

(२०५) बह्विति।—बहवः,—अनेके, शराः,—बाणाः, शत्रुप्रहिताः इति भावः, तैः शयनं—शराघातेन भूमौ पतनमिति भावः, तेन सुप्तः,—पूर्वं मोहं गत इति यावत्, पश्चात् उत्थितः,—तत्तत्प्रहारवेदनाम् अपनीय पुनर्युद्धार्थमुद्गत इत्यर्थः; अन्यच,—बहवः,—प्रचुराः, शराः,—इषवः एव, शयनं—शय्या, तत्र सुप्तः,—निद्रितः, उत्थितः,—प्रबुद्धश्च तम, इति विभक्तिं विपरिणमय्य योजनीयं, शान्तनवं—भीष्मं, हसन्निव—परिहासास्पदं कुर्व्वन्निव, भीष्मस्तु शरशयने स्थित एव निधनं गतः, अयन्तु तस्मात् उत्थितः पुनः सङ्ग्रामाय अवातरत् इति हासकारणमिति भावः। इहोपमेयस्य उपमानादाधिक्योत्प्रेक्षणात् व्यतिरेकसङ्कीर्णोत्प्रेक्षाऽलङ्कारः इति ज्ञेयम्।

(२०६) दुरभिभवशरीरतया—दुर्जयदेहतया, जरयाऽपि—विस्रसयाऽपि, वलिपलितादिना कायशैथिल्यापादकावस्थाभेदेनापीत्यर्थः, वार्द्धकेनापीति भावः, भीतभीतया—अतिभीतयेत्यर्थः, अत एव प्रकटितप्रकम्पया—प्रकटितः,—आविष्कृतः, प्रकम्पः—वेपथुः यया तथोक्तया, भीतत्वात् कम्पितदेहया इत्यर्थः, वार्द्धक्यसहजकम्पमान-देहतया इति भावः, परामृष्टः,—स्पृष्टः, जरसः कम्पितकायत्वोत्प्रेक्षणात् अतिवार्द्धके स्थितः इत्यर्थः।

(२०७) सारमयेषु—दृढेषु, केशपतनाभावात् इति भावः, शिरोरुहेषु—केशेषु, शशीति।—शशिनः,—चन्द्रस्य, करनिकराः,—किरणचयाः, तद्वत् सिता—धवला काशस्तवकनीकाशा इत्यर्थः, सरला—अकुटिला, शिरोरुहसटा—

सैंहीमिव (२०८) निष्कपटपराक्रमरसरचितां सङ्क्रान्तो जीवन्नेव जातिम्, (२०९) अपरस्वामिमुखदर्शनमहापातकपरिजिहीर्षया इव भ्रूयुगलेन (२१०) वलितशिथिलप्रलम्बचर्मणा स्थगितदृष्टि, (२११) धवलस्थूलगुञ्जापिच्छप्रच्छादितकपोलभागभास्वरेण वमन् इव विक्रमकालम् अकालेऽपि (२१२) विकाशिकाशकाननविशदं शरदारम्भं भीमेन मुखेन,

शिरस्सु जटा विद्यतेऽस्या इति तथोक्ता, सैंहीमिव— सिंहस्य इय सैंही ताम् इव, सिंहसम्बन्धिनीमित्यर्थः।

(२०८) निष्कपटेति।—निष्कपटः,—कापट्यरहितः, यथार्थ इति भावः, यः पराक्रमः,—शौर्य्यं, तस्मिन् रसेन—अनुरागेण, रचिता—निर्म्मिता ता, जाति—सिंहत्वमित्यर्थः, जीवन्नेव—प्राणन् एव इत्यर्थः, सङ्क्रान्तः,—अधिगतः। केशरोपमकेशकलापेन सिंहविक्रमतया च साक्षात् सिंह इव विराजमान इत्युत्प्रेक्षा।

(२०९) अपरेति।—अपरः,—अन्यः, प्रभाकरवर्द्धनवंशादिति भावः, स्वामी—प्रभुः, तस्य मुखदर्शनं—मुखावलोकनमेव, महत्—घोरं, पातकं—पापं, तस्य परिजिहीर्षयेव—तत्परिहर्त्तुमिच्छन् इवेत्यर्थः।

(२१०) वलितेति।—वलितं—वलियुक्तम्, आकुञ्चितमिति भावः, शिथिलं—श्लथीभवत्, प्रलम्बं—लम्बमानं, चर्म—त्वक् यस्य तथाभूतेन। स्थगितदृष्टिः,—आवृतनेत्रः, अतीव प्रभुभक्त लोलचर्म्मा च इति भावः।

(२११) धवलेति।—धवला—शुभ्रा, स्थूला—पीवरा, घना दीर्घा चेत्यर्थः, या गुञ्जा—उत्तरोष्ठस्योपरि रोमराजि, "गोँफ" इति बङ्गभाषया प्रसिद्धा इति भावः, तस्याः पिच्छं—पङ्क्तिः, परम्परा वा, तेन प्रच्छादितः,—आवृतः, यः कपोलभागः,—गण्डदेशः, तेन भास्वरेण—प्रदीप्तेन, मुखेनेत्यनेनान्वयः। वमन्निव—उद्गिरन्निव। विक्रमकालं—पराक्रमप्रदर्शनोचितसमयं, शरदारम्भमित्यस्य विशेषणं, तत्र विजिगीषुभिः युद्धयात्रा क्रियते इति शास्त्रात्। अकालेऽपि—असमयेऽपि, शरदारम्भस्य इति शेषः, शरदतिरिक्ते ग्रीष्मादिष्वृतौ इति भावः।

(२१२) विकाशीति।—विकाशिना—विकस्वरेण, काशकाननेन—पीटगलाख्यतृणविशेषवनेन, काशाना भूयस्तया शरदि कुसुमानि विकसन्ति, विशदं—धवलं, शरदारम्भ—शरत्कालागमम्। भीमेन—भीषणेन, [विभेत्यस्मात् इति

न्तमपि (२१३) हृदयस्थितं स्वामिनम् इव सितचामरेण वीजयन् नाभिलम्बेन कूर्चकलापेन, परिणामेऽपि धौतासिधाराजलपानतर्षितैः इव विवृतवदनैः बहुभिः व्रणविदरैः विषमितविशालवक्षाः, (२१४) निशितशस्त्रटङ्ककोटिकुट्टितबहुदीर्घव्रणाक्षरपङ्क्तिनिरन्तरतया च (२१५) सकलसमरविजयपर्वगण-

नुवृत्त्या "भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इति भियः अपादाने मक्] काशकुसुमगुच्छशोभितवदनेन शरद्विलासं जनयन्नित्यर्थः।

(२१३) हृदयस्थितम्—अन्तर्वर्तिनं, गुणावलिनिर्जितहृदयत्वादिति भावः, स्वामिनं—प्रभाकरवर्द्धनमिति यावत्, सितचामरेण—श्वेतवालव्यजनेन, सितच्छत्रचामरादीनां सम्राडुचितोपकरणत्वादिति भावः। नाभिलम्बेन—नाभिदेशपर्यन्तविलम्बिना, कूर्चकलापेन—श्मश्रुनिचयेन, ("कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे" इति मेदिनी)। परिणामेऽपि—वार्द्धकेऽपि, धौतेति।—धौता—विशोधिता, शाणिता इति भावः, असिधारा—खड्गस्य निशितमुखम् एव, जलं—सलिलं, तस्य पानाय तर्षिताः,—पिपासाऽऽकुलाः तैरिव, विवृतवदनैः,—व्यात्तमुखैः, व्रणविदरैः,—शत्रुकृतशस्त्रक्षतस्फोटैः, ("विदरः स्फुटनं भिदा" इत्यमरः) विषमितम्—उन्नतानतं, बन्धुरमित्यर्थः, विशालं—विस्तृतं, वक्षः,—उरःस्थलं यस्य तथाभूतः। नाभिलम्बितश्मश्रुमण्डलेन सुशोभितकायस्य सेनापतेः विशाले वक्षसि प्राक् पतन्निशितखड्गधाराचिह्नगताः एवमनुमीयते यत् सङ्ग्रामे शत्रुभिः कृतैः उरःक्षतैः पिपासितैः इव जलपानाय विवृतमुखैः अद्यापि स्थीयते इति समुदितार्थः, असौ सङ्ग्रामशतविजयी आसीत्, तथा नाभिलम्बितश्मश्रुतः वार्द्धकेऽपि अनिर्वापितरणोत्साहश्च भवति इति भावः। इह धौतासिधारायां जलस्यैव केवलं रूपणात् निरङ्गं रूपकम् इत्यलङ्कारान्तरीयत्वेन उत्प्रेक्षाया चमत्कृत्यतिशयः प्रतिपादितः इति सङ्क्षेपः।

(२१४) निशितेति।—निशितानि—तीक्ष्णानि, शस्त्राण्येव—आयुधान्येव, टङ्काः,—पाषाणदारणास्त्रविशेषाः, तेषां कोटिभिः,—कोणैः, अग्रैः इत्यर्थः, ("कोणस्तु स्त्रियः पाल्यश्रिकोटयः" इत्यमरः) कुट्टितानि—दलितानि, बहूनि—अनेकानि, दीर्घाणि—आयतानि इत्यर्थः, व्रणानि एव—क्षतानि एव, अक्षरपङ्क्तयः,—वर्णावलयः, ताभिर्निरन्तरतया—व्याप्ताङ्गतया इत्यर्थः।

(२१५) सकलेति।—सकलेषु—सर्वेषु, समरेषु—सङ्ग्रामेषु, विजया एव—जयलाभा एव, पर्वाणि—क्षणाः, उत्सवाः इत्यर्थः, ("तिथिभेदे क्षणे पर्व

नाम् इव कुर्व्वन्, पूर्व्वपर्व्वत इव पादचारी, (२१६) विविध-वीररसवृत्तान्तरामणीयकेन महाभारतमपि लघयन् इव, (२१७) प्रतिपक्षक्षपणातिनिर्बन्धेन परशुराममपि शिक्षयन् इव, (२१८) अब्भ्रमणेन अनादरश्रीसमाकर्षणविभ्रमेण मन्दर-

---

इत्यमरः) तेषाम्, यद्वा—सकलसमरविजयानां पर्व्वभिः,—ग्रन्थिभिः, अङ्गुलिग्रन्थिभिरिव व्रणग्रन्थिभिरिति भावः, गणनामिव—सङ्ख्यानमिव, बहुसमरविजयी इति भावः। पूर्व्वपर्व्वत इव—उदयगिरिः इव, पादचारी—चरणसञ्चरणशीलः, अत्युन्नतकायत्वात् तदानीमेव उदितत्वाच्चेति भावः, पूर्व्वपर्व्वतोऽपि बहुभिः पादैः,—, प्रत्यन्तपर्वतैः, चरति—भुवं समाक्रम्य तिष्ठति इत्यर्थः, ("पादाः प्रत्यन्तपर्वताः" इत्यमरः)।

(२१६) विविधेति।—विविधानां—बहुप्रकाराणां, वीररसानाम्—उत्साह-स्थायिभावानाम् उत्तमप्रकृतिकसमास्वाद्यमानवस्तुविशेषाणां, प्रकारभेदेन बहु-भेदाख्यापनाभीप्सिततया अत्र रसबहुत्वोक्तिः न दोषाय इत्यवधातव्यम्, यद्वा—विविधेन—नानाप्रकारेण, वीररसस्य; पक्षे,—विविधाः,—अनेके, वीराः,—भीष्मद्रोणादयः शूराः तेषां, तथा रसस्य च—युद्धानुरागस्य च, वृत्तान्तेन—प्रक्रियया, अनुष्ठानेनेत्यर्थः, प्रस्तावेन च, विवरणेन च इत्यर्थः, ("वृत्तान्तः प्रक्रियायां स्यात् कार्त्स्न्यवार्त्ताप्रभेदयोः। प्रस्तावे……॥" इति मेदिनी) रामणीयकं—रमणीयत्वं तेन कारणेन। लघयन्निव—लघूकुर्वन्निव, महाभारतवर्णितवीररसादपि अधिकवीरकर्म्मानुष्ठायीति भावः।

(२१७) प्रतिपक्षेति।—प्रतिपक्षाणां—शत्रूणां, क्षपणे—संहारे, अतिनिर्बन्धेन—अत्याग्रहेण, परशुरामं—परशुधारी रामः तं, भार्गवमित्यर्थः, ["शाकपार्थिवानां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम्" (वा०) इति समासः] शिक्षयन्—उपदिशन्, परशुरामस्यापि शत्रुनिर्य्यातनात्याग्रहविषये आचार्य्यकर्म्म कुर्वन् इत्यर्थः, अत्रायमाशयः,—तथा हि, भोः भृगुनन्दन। त्वमेकविंशतिवारं क्षत्रियान् हत्वाऽपि तान् निःशेषान् कर्त्तुं नाशक्नोः, तेन हि तव तथैव रणकर्म्मणि अनभिज्ञता प्रतिभाति, अहं यथा समूलघातं शत्रून् विनाशयामि, तत् दृष्ट्वा अप्रमत्तः शत्रूणां समूलोन्मूलनकौशलं शिक्षयतु भवान् इति वदन् इवेति।

(२१८) अब्भ्रमणेनेति—अब्भ्रमणम्—अद्भिः अप्सु वा भ्रमणं, समुद्रयात्रा इत्यर्थः युद्धार्थं साङ्ग्रामिकपोतमारुह्य द्वीपान्तरस्थशासनाय इति भावः, जलदस्युकृतकठोरोत्पात-प्रशमनाय वा इत्याशयः, जले पुनः पुनः आवर्त्तनञ्च तेन, मना रेति।—अनादरेण—

अपि मन्दयन् इव, (२१९) वाहिनीनायकमर्य्यादाऽनुवर्त्तनेन अम्भोधिमपि अभिभवन् इव, (२२०) स्थैर्य्यकार्कश्योन्नतिभिः अचलानपि क्लेपयन् इव, (२२१) सहजप्रचण्डतेजःप्रसरपरिस्फुरणेन सवितारमपि तृणीकुर्व्वन्निव,

अवहेलेन, यत् श्रीसमाकर्षण—श्रियाः,—राजलक्ष्म्याः, कमलायाश्च, समाकर्षण—बलादायत्तीकरणं, समुद्धरणञ्च, भवुभ्य समुद्राच्च इति भावः, तेन विभ्रमः,—विलसितं यत्र तेन, मन्दर—मन्दरगिरि, समुद्रमन्थनदण्डभूतमिति भाव, मन्दयन्—लघयन्, मन्दरगिरिः असकृदेव अप्सु परिभ्रम्य एका श्रियं समाजहार, असौ पुनः सकृत् तथा कृत्वा बहुना राज्ञा श्रियं समाजहार इति भावः। अन्यस्य श्रियो हर ासम्भवेऽपि श्रीरिव श्री हृता इति बिम्बप्रतिबिम्बभावबोधात् असम्भ द्वस्तुसम्बन्धरूपा निदर्शना, उपमानाध.करणात् तस्मादपि सोत्कर्षप्रतीतेश्च व्यतिरेकालङ्कारश्च, इत्येतयो साङ्कर्य्यम्।

(२१९) वाहिनीति।—वाहिनीना—सेनाना, तरङ्गिणीनाञ्च, नदीनाञ्चेत्यर्थः, ("वाहिनी स्यात् तरङ्गिण्या सेना-सैन्यप्रभेदयो." इति मेदिनी) नायकमर्य्यादा—पतिसम्मानना, सेनापतित्व सरित्पतित्वञ्च इति यावत्, तस्या अनुवर्त्तनेन—अनुगमनेन, अम्भोधिं—सागरमपि, अभिभवन्निव—जयन्निव, नदीना परिमिततया सेनानान्तु अपरिमिततयेति भाव.; यद्वा,—नदीना प्रत्यक्प्रस्थानशक्त्यभावात्, सेनाना यथेप्सित यत्र तत्र प्रस्थानशक्तिसत्त्वेन इत्याशय। अत्र सरित्पतित स्वस्याधिक्यप्रतिप दनात् पूर्ववत् व्यतिरेकालङ्का ।

(२२०) स्थैर्य्येति।—स्थैर्य्य—सङ्ग्रामादपरावर्त्तित्वमित्यर्थः, एकत्रावस्थायित्वञ्च, कार्कश्य—काठिन्यम्, अङ्गस्येति भाव, उभयत्रापि समानम्; यद्वा—कार्कश्य—शत्रौ निर्द्दयत्वम्, उन्नतिः,—उच्छ्रायः ताभिः, अचलानपि—पर्वतानपि, क्लेपयन्निव—लज्जयन्निव। अचलादपि स्थैर्य्यादिमानासीत् इति व्यतिरेकः।

(२२१) सहजेति।—सहजस्य—स्वाभाविकस्य, प्रचण्डस्य—उग्रस्य, तेज.प्रसरस्य—तेजसा—प्रभावाणा, प्रसरस्य—विस्तारस्य, परिस्फुरणेन—उद्योतेन, तृणीकुर्वन्निव—तुच्छीकुर्वन्निव, सवितुः तेजसा प्रसरः दिवा एव, अस्य तु रात्रिन्दिवमपि इति स्वतेजसामधिककालिकत्वमेव तृणीकरणे हेतुरिति भाव, यद्वा,—तत्र दाहिकाशक्तेरेवाधिक्यप्रतीतिः, इह तु दाहिकोज्जीविकयोरुभयोरपि समानोत्कर्षवत्त्वम् इत्यातिशय्य विस्पष्टमेव।

(२२२) ईश्वरभारोद्वहनघृष्टपृष्ठतया हरवृषभमपि हसन्निव, (२२३) अरणिः अमर्षाग्नेः, ऐश्वर्यं शौर्य्यस्य, मदो मदस्य, विसर्पो दर्पस्य, हृदयं हठस्य, जीवितं जिगीषुतायाः, उच्छ्वसितम् उत्साहस्य, अङ्कुशो दुर्मदानां, नागदमनो दुष्टभोगिनां, (२२४) विरामो वरमनुष्यतायाः, कुलगुरुः वीरगोष्ठीनां,

---

(२२२) ईश्वरेति।—ईश्वरस्य—हरस्य, स्वामिनश्च, [ "अश्नोतेराशुकर्म्मणि वरट् च" (उ० ४ पा० ५७ सू०) इति वरट्। तत्रैव "चकारादुपधाया ईत्वम्" इति ज्ञेयम्, आशुवरटावर्थकत्वे एवैतत्, ईष्टे प्रभवति इत्यर्थकत्वे तु अादादिकस्य ईशेः कर्त्तरि वरचि "ईश्वर" इति पदं सिध्यति, तथा च सू०,—"स्थेशभासपिसकसो वरच्" (३। २।१७५ पा०) इति ] भारोद्वहनेन—पृष्ठस्योपरि आरोपणरूपेण, आदेशपालनरूपेण च इत्यर्थः, घृष्ट—दलित, विगतरोमत्वक्कमित्यर्थः, पृष्ठ—पश्चाद्देशः यस्य तथाभूतः, तस्य भावः तत्ता तया, का ं चुक लोके घृष्टपृष्ठ' कथ्यते, हरवृषभ—शङ्करवृष, हसन्निव—अवजानन्निव, हरवृषभस्य भारोद्वहनेन पृष्ठस्य घृष्टत्वम्, अस्य तु स्वामिभारोद्वहनेन न तथेति हासहेतुरिति भाव., यद्वा—तव वनवासिन ि गगिणश्च लघुभारेण पृष्ठं घृष्ट, इह साम्राज्यरक्षातन्त्रभारोऽपि अकिञ्चित्करः इति परिहासे निगूढ कारणम् इत्याशय.।

(२२३) अमर्षाग्नेः—क्रोधानलस्य, अरणि,—अग्निमन्थनदारु, ("निर्मन्थ्यदारुणि त्वरणिर्द्वयो." इत्यमर.) घर्षणमात्रेणैव अरणितो यथा अग्निरुत्पद्यते, तथा स्वल्पेनैव शत्रुकृतविमर्द्देन स्य क्रोधप्रदीप्तिः भवति इत्यर्थ, परिभवासहिष्णुरिति भाव.। ऐश्वर्य्य—विभूतिभूत. सर्वस्वमिति भावः, महाशूर इति निष्कर्षः। मदस्य,—गर्वस्य, मद.,—गर्व, अभिमानी इत्यर्थ, महा ेजस्वीति भाव। विसर्प',—प्रसर। हठस्य—साहसस्य, हृदय—वक्षःस्थल, सततमुत्साहसमन्वित. निर्भीकश्च इत्यर्थ। जिगीषुतायाः,—शत्रुविजयाभिलाषस्य, शत्रुमनिर्जित्य अपराङ्मुख इति यावत्। उच्छ्वसित—जीवित, महोत्साहीत्यर्थः। दुर्मदाना—दुर्विनीतानामित्यर्थः, मत्तगजानाञ्च, अङ्कुश,—सृणि', दमनकारकास्त्रविशेष इत्यर्थ', दुर्जनशास्ता इति यावत्। दुष्टभोगिना—दुष्टाना राज्ञा, क्रूरसर्पाणाञ्च, नागदमनः,—गजमर्द्दन, प्रमत्तनृपतिशासनो वा, गरुडश्च।

(२२४) वरमनुष्यतायाः,—श्रेष्ठमानुषत्वस्य, विराम —पराकाष्ठेत्यर्थः, औदार्य्यादिगुणवत्त्वादिति भावः। वीरगोष्ठीना—शूरसमाजाना, सर्ववीरवरेण्य

तुला शौर्य्यशालिनां, सीमान्तदृश्वा शस्त्रग्रामस्य, निर्वोढा प्रौढवादानां, (२२५) संस्तम्भयिता भग्नानां, पारगः प्रतिज्ञायाः, मर्मज्ञो महाविग्रहाणाम्, आघोषणापटहः समरार्थिनां, सन्निधौ एव समुपविष्टः सिंहनादनामा स्वरेण एव दुन्दुभिघोषगम्भीरेण (२२६) सुभटानां समररसम् आनयन् विज्ञापितवान्,—

"देव। (२२७) न क्वचित् कृताश्रयया मलिनया मलिनतराः कोकिलया काका इव कापुरुषा हतलक्ष्म्या विप्रलभ्यमानम्

---

इति यावत्। तुला—उपमा, महावीराणां सङ्ग्रामे प्रायः सर्वाग्रकीर्त्तितनामा इति भावः। शस्त्रग्रामस्य—आयुधसमूहस्य, सीमान्तदृश्वा—पारदर्शी, सर्वशस्त्रकोविद इत्यर्थः। प्रौढवादानां—प्रगल्भवचनानां, शत्रुप्रयुक्तानामिति भावः, निर्वोढा—निर्वाहकः, समुचितप्रतिकारक इत्यर्थः।

(२२५) भग्नानां—शत्रुभयात् पलायितानां, संस्तम्भयिता—आश्वासयिता। प्रतिज्ञायाः,—शपथस्य, पारगः,—पारगामी, अवन्ध्यप्रतिज्ञ इति भावः। महाविग्रहाणां—महतां सङ्ग्रामाणां, मर्मज्ञः,—सारवित्, कदा केन विधिना सङ्ग्रामे कृते अवश्यमेव जयो भवेत् इत्यादिनिर्द्धारणे कुशलः, परपक्षच्छिद्रोद्घाटननिपुणश्चेति भावः। आघोषणापटहः,—युद्धयात्रायां ताड्यमानवाद्यविशेष इत्यर्थः, युद्धोत्साहवर्द्धक इति भावः, यथा आघोषणापटहः समरोत्साहमुद्दीपयति, तथा अयमपीति भावः। सन्निधौ एव—ह्रस्वे निकटएवेत्यर्थः। दुन्दुभीति।—दुन्दुभिः—भेरी, तस्य घोषः,—शब्दः, तद्वत् गम्भीरः,—गभीरः तेन, प्रगल्भाहतभेरीघोरमन्द्ररवसमेन इत्यर्थः।

(२२६) सुभटानां—सुयोद्धॄणां, समररसं—सङ्ग्रामोत्साहं, आनयन्—जनयन्, उद्दीपकवाक्यैः वर्द्धयन् इत्यर्थः।

(२२७) न क्वचिदिति।—न क्वचित्—कुत्रापि, कृताश्रयया—चापल्यात् चिरं कुत्रापि अतिष्ठन्त्याऽपि कियत्कालमाश्रयन्त्या इत्यर्थः, अन्यत्र,—काककुलाया-दपरत्र कुत्रापि अनाश्रितया इत्यर्थः, मलिनया—पापया इत्यर्थः, कृष्णवर्णया इत्यर्थश्च। मलिनतराः,—अतिदुष्टाशया इत्यर्थः, अतिकृष्णवर्णा इत्यर्थश्च कापुरुषाः,—कुत्सितपुरुषाः, हतलक्ष्म्या—दुष्टया श्रिया, विप्रलभ्यमानं—प्रतार्यमाणम्।

आत्मानं न चेतयन्ते। (२२८) श्रियो हि दोषान्धतादयः कामला विकाराः। (२२९) छत्रच्छायान्तरितरवयो विस्मरन्ति अन्यं तेजस्विनं जडधियः। किं वा करोतु वराकः, येन अतिभीरुतया नित्यपराङ्मुखेण न तु दृष्टानि एव

चेतयन्ते—अवबोधयन्ते, [ज्ञानार्थकतया चेतने णिचि अणिकर्त्तुं आत्मन कर्म्मत्वं ज्ञेयम्] कोकिलया प्रसवानन्तरमेव निजशावका काको ीडे संस्थाप्य ताभि पोष्यन्ते, काक्य अपि वर्णसाम्यात स्वशावकधिया तान् पालयन्ति, अतस्तेषां परैः प्रतिपालनात् परभृदिति सञ्ज्ञा समजनि। तत जाते तु उड्डयनसामर्थ्ये शावका तत्समाजा-दपसृत्य स्वसमा सङ्गच्छन्ते, इत्थं काकीन कोकिलया विप्रलभ्यत्व लो प्रसिद्धमेव।

(२२८) कस्मात् तान् हृतलक्ष्मीर्विप्रलभते ? इत्याह, श्रिय इति।—श्रिय,—लक्ष्म्या, दोषान्धतादयः,—दोषैः,—कुपुरुषानुरागादिभि. वातादिभिश्च इति व्यज्यते, अन्धतादय,—अन्धता एव आदिर्येषा ते, सदसत्कार्य्यानालोचनादय इति यावत्, दृष्टिहीनत्वादयश्च इति व्यज्यते, कामला,—कमलसम्बन्धिन, कमलात् आगता वा. विकारा —तस्याः कमलालयत्वात् नियतकमलवासेन आश्रयदोषात् जाता रोगा इत्यर्थ, "कामला" इति प्रसिद्धा पाण्डुरोगभेदजा इत्यपि व्यज्यते, तस्मिन् रोगे जाते सति रुग्णस्य शङ्खादौ पीतत्वादिज्ञानम् अन्धतादयश्च दोषा जायन्ते, कमलस्य यथा दोषा—रात्रौ, [अव्ययमेतत्, "दोषा रात्रौ च तन्मुखे" इति अव्ययवर्गे मेदिनी] अन्धतादय —सूर्य्यस्यास्तमनात् सङ्कोचादय विकारा जा न्ते, तथा लक्ष्म्या अपि तन्निवासात् समजायन्त दोषान्धतादय,—दोषा एव अन्धतादय —सत्पुरुषासत्पुरुषयोर्विचाराक्षमत्वम् इति भाव।

(२२९) छत्रेति।—छत्रस्य—आतपत्रस्य, छायया—आतपप्रतिपक्षभूतया, अनातपेनेत्यर्थ. अन्तरित,—व्यवहित तिरस्कृतो वा, छत्रावरितदर्शनत्वात् इति भाव, रवि,—सू र्यो. तयोक्ता ["अच इ" (उ० ४ पा० १३८ सू०) इति गत्यर्थकरुधातो: इ] जडधिय,—मूर्खा, लक्ष्मीमदमत्ततया इष्टानिष्टानभिज्ञा. इति भाव, तेजस्विनं—प्रतापवन्तम्. अन्यम्—अपरं पुरुष, विस्मरन्ति—न चिन्तयन्ति, न पश्यन्तीति भाव, आत्मानमेव एकमात्र तेजस्विन मन्यन्ते, नान्य कमपि,छत्रेण महाप्रभावतसू किरणानामपि तिरस्कारणात, कोऽन्येषा कथाप्रसङ्ग इति तात्पर्य्यम्, एवम् अनुश्रूयते यथा,—घनाच्छन्नदृष्टि अर्कमपि घनाच्छन्नमिति मन्यते। वराक,—तपस्वी, दुर्बलप्रकृतिः इति यावत्। येन—वरा ए, गौड़त्वरेण जडधियेत्यय.। नित्यपराङ्मुखेण—

(२३०) सर्वातिशायिशौर्य्यातिशयश्वयथुकपिलकपोलपुलकपल्लवितकोपानलानि कुपितानां तेजस्विनां मुखानि। नासौ तपस्वी जानाति एवं, यथा (२३१) अभिचारा इव विप्रकृताः सद्यः सकलकुलप्रलयम् उपहरन्ति मनस्विनः। जलेऽपि ज्वलन्ति ताड़िताः तेजस्विनः। (२३२) सकलवीरगोष्ठीबाह्यस्य तस्यैव इदम् उचितम् अनुत्तारनिरयनिपातनिपुणं

---

नियतविमुखेन, साहसकर्म्मणि कदाऽप्यप्रवृत्तत्वेन युद्धारम्भे एव रणभीत्या प्रदर्शितपृष्ठेन इति भावः, न तु दृष्टानि—अवलोकितानि, द्रष्टुं पारितानि इत्यर्थः।

(२३०) सर्वेति।—सर्व्वातिशायिना—सर्व्वपरिभाविना, शौर्य्यातिशयेन—पराक्रमाधिक्येन, श्वयथुः,—स्फीतिः, वर्द्धनमित्यर्थः, विकाश इति यावत्, देवस्य राज्यवर्द्धनस्य महावीराणां वा इति भावः येषु तथाविधाः, कपिलाः,—आरक्ताश्च, ये कपोलाः,—गण्डदेशाः, तेषां पुलकेन—रोमहर्षेण, अप्रतिहतात्मशक्तिसमुत्कर्षस्मृतिसुखोदयात् इति भावः, पल्लवितः,—विस्तृतः, प्रकटीभूतो वा, कोपानलः,—क्रोधवह्निः येषु तानि। तेजस्विनां—महातेजसाम्, अस्मत्प्रभूणामिति विजिगीषुनृपाणां वा इति भावः।

(२३१) अभिचारा इव—आथर्व्वणा मारणादयो विधय इव, विप्रकृताः,—निकृताः, अवमानिताः इति यावत्, ("निकृतः स्याद्विप्रकृतः" इत्यमरः) विप्रैः,—ब्राह्मणैः, कृताश्च, मनस्विनः,—प्रशस्तमनसः, महावीरा इत्यर्थः, [ "अस्मायामेधास्रजो विनिः" (५।२।१२१ पा०) इति विनिप्रत्ययः] सद्यः,—अचिरादेव इत्यर्थः, सकलकुलप्रलयं—सर्ववंशविनाशम्, उपहरन्ति—उपायनीकुर्वन्ति, जनयन्तीति यावत्। जलेऽपि—सलिलेऽपि, आत्मसम्भूतेऽपीति भावः, "आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी" इति स्मरणात्, जड़ेऽपि च, ताड़िताः,—वैद्युताः, प्रहृताश्च, तेजस्विनः—अग्नयः, प्रतापवन्तश्च। अत्र मनस्विभिः तेजस्विभिश्च समं सकलकुलप्रलयजननत्व-ज्वलनत्वादिधर्म्मैः स्वस्य विम्बप्रतिविम्बभावबोधात् दृष्टान्तालङ्कारः; "दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिविम्बनम्" इति दर्पणलक्षणात्।

(२३२) सकलेति।—सकलानां—कृत्स्नानां, वीराणां—शूराणां, गोष्ठी—समाजः, तस्याः बाह्यः,—वहिष्कृतः, ततो निष्कासित इत्यर्थः तस्य, कापुरुषतादिदोषैः वीरसमाजेषु अगण्यस्य इति भावः, गोष्ठीबाह्यश्च अनुपासितवृद्धत्वात् धर्म्मं न जानाति, अतस्तस्य तथाभूतस्य निरयोचितमिदं कर्म्म युज्यते इति सङ्गतिः;

कर्म्म। (२३३) मनस्विनां हि प्रधनप्रधानधने धनुषि ध्रियमाणे, सति च कमलाकलहंसीकेलिकुवलयकानने कृपाणे, कृपणोपायाः पयोधिमथनप्रभृतयोऽपि श्रीसमुत्थानस्य; किं पुनः ईदृशाः? (२३४) येषाञ्च धात्रा धरित्रीं त्रातुं नियुक्ताः

---

तस्य—गौडाधिपस्य, अनुत्तारेति।—नास्ति उत्तारः,—उद्धारः यस्मात् तादृशे, निरये—नरके, निपातः,—निपतनं, तत्र तस्य वा निपुण—समर्थम्, उचितमित्यर्थः, इदं—विश्वस्तहननरूपं, कर्म उचित—सदृशं, "मित्रद्रोही कृतघ्नश्च ये च विश्वासघातकाः। ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ॥" इत्युक्तेः। उपायं कूटप्रयोगेण महाराजराज्यवर्द्धनस्य विशसनं वीरसद्धन्यकृतस्य गौडाधमस्यैवानुरूपम्, इति तस्य सामाजिकसद्घात् बहिर्भाव एव तथाविधानुष्ठाने हेतुः, इति पूर्वपदार्थस्य हेतुभूततया निर्देशात् पदार्थहेतुकं काव्यलिङ्गम् इति ज्ञेयम्।

(२३३) मनस्विना—वीराणां, हि इहावधारणेऽर्थे, प्रधनेति।—प्रधनस्य—युद्धस्य, ("युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्" इत्यमरः) प्रधानं—श्रेष्ठं, धन—महामूल्यवद्वस्तु, साधनमिति भावः तस्मिन्, धनुषि—कार्म्मुके, ध्रियमाणे—गृह्यमाणे। कमलेति।—कमला—लक्ष्मीरेव, कलहंसी—राजहंसी, कमलायाः कलहंस्याश्च उभयोरेव कुवलयवनसञ्चारित्वेनाभेदारोपात् रूपकालङ्कारः; नृपश्रेष्ठमहिषी वा, ("कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति मेदिनी) तस्याः केलिः,—क्रीडा यत्र तादृशं, कुवलयकानन—नीलोत्पलवनं तस्मिन्, तथाभूते इत्यर्थः, निशितानां कृपाणानां नीलोज्ज्वलप्रभावत्त्वादिति भावः, कृपाणे—करवाले, सति च—विद्यमाने च, ध्रियमाणे इत्यनुषङ्गेणान्वयो वा, तेन ध्रियमाणे सतीत्यर्थः, वीराणां कृपाणे एव कमला प्रतिवसतीति भावः, श्रीसमुत्थानस्य—लक्ष्मीसमाहरणस्य, पयोधिमथनप्रभृतयोऽपि—मन्दरगिरिणा क्षीरसागरविलोडनादयोऽपि, कृपणोपायाः,—दीनचेष्टाः, कापुरुषाचारा इति भावः। एतेन क्षीरसागरविलोडनचेष्टा तु वृथैव, पौरुषमेव लक्ष्मीलाभे हेतुः, इति पौरुषस्य सर्व्वोत्कृष्टत्वप्रतिपादनात् व्यतिरेकालङ्कारः व्यज्यते। ईदृशाः,—विश्वस्तहननादयः इत्यर्थः, किं पुनः?—दीनोपायाः इति किं वक्तव्यम्? इत्यर्थः, विश्वासहन्तृत्वादयः कापुरुषाचारा एवेति भावः।

(२३४) येषां—मनस्विनां वीराणामित्यर्थः, [सम्बन्धविवक्षया षष्ठी] धात्रा—ब्रह्मणा, धरित्री—पृथिवी, त्रातं—रक्षितुं, नियुक्ताः,—आदिष्टा इत्यर्थः, गिरीणां

स्वयम् असमर्था इव (२३५) कुलिशकर्कशभुजपरिघ-प्रहरणहेतोः उद्गिरन्ति गिरयोऽपि लोहानि, ते कथमिव बाहुशालिनो मनसाऽपि विमलयशोबान्धवा ध्यायेयुः अकार्य्यम्? (२३६) सर्व्वग्रहाभिभवभास्वराणां हि सुभटकराणाम् अग्रतो दिग्ग्रहणे पङ्गवः पतङ्गकराः।

---

शीतसत्त्वादिति भावः असमर्था इव—अक्षमा इव, अबलत्वादिति भावः। ["असमर्था इव" इत्यत्र "असमर्था एव" इति पाठान्तरम् ]।

(२३५) गिरयः,—पर्वता अपि, अचेतनप्रस्तरमया अपीति भावः, कुलिशेति।—कुलिशवत्—वज्रवत्, कर्कशः,—कठिनः, भुजः,—बाहुः, तत्र यत् परिघप्रहरणं—मुद्गरास्त्रं, तस्य हेतोः,—तन्निमित्तं, परिघनिर्म्माणार्थमित्यर्थः, लोहानि—तदाख्यधातुविशेषान्, उद्गिरन्ति—उद्वमन्ति, प्रसूयन्ते इति यावत्, बाहुशालिनः,—प्रशस्तबाहवः, भुजवीर्य्यसमन्विता इत्यर्थः, विमलेति।—विमलानि—शुभ्राणि, यशांसि—कीर्त्तय एव, बान्धवाः,—मित्राणि येषां तथाभूताः, पूतयशोधना इत्यर्थः, ते—येषामर्थे अचेतना बाहुविरहिता गिरयोऽपि लोहान्युद्गीर्य्य धर्म्मानुसारेण पृथिवी त्रात सहायकं कुर्व्वन्ति, तादृशा राजान इत्यर्थः, गिरीणां परिघप्रहरणार्थोद्गिरणासम्बन्धेऽपि इह सम्बन्धः प्रतिपादितः इत्यतिशयोक्तिः असमर्थत्वरूपगुणोत्प्रेक्षाऽङ्गम्; कथमिव—किमर्थमित्यर्थः, मनसाऽपि—चेतसाऽपि, किं पुनर्बहिरनुष्ठानेनेति भावः, अकार्य्यं—दुष्कार्य्यं, ध्यायेयुः?—चिन्तयेयुः? नैव कदाऽपि चिन्तयन्ति इत्यर्थः, येषां किञ्चिदपि बाहुबलमस्ति, ते मनसाऽपि न एतादृशं गर्हितमाचरन्तीति भावः।

(२३६) सर्वेति।—सर्व्वस्य—सकलवस्तुनः, ग्रहाभिभवः,—ग्रहः,—बलात् ग्रहणमेव, अभिभवः,—तिरस्कारः, तं स्वामिनामिति भावः, पक्षे—सर्वे ग्रहाः,—चन्द्रादयः, तेषामभिभवः,—महता तेजसा विम्लानताजननरूपतिरस्कारः, तेन भास्वराणां—दीप्यमानानाम्; भास्वराः,—उज्ज्वलाश्च, इति लिङ्गविपरिणामेन "पतङ्गकराः" इत्यत्र योजनीयम्; सुभटकराणां—वीरबाहूनाम्, अग्रतः,—पुरतः, पतङ्गकराः,—सूर्य्यकिरणाः, ("पतङ्गौ पक्षि-सूर्य्यौ च" इत्यमरः) कराः—हस्ताश्च इति ध्वनिः, दिग्ग्रहणे—दिशोः,—पूर्वपश्चिमात्मिकयोः दिशोः, ग्रहणे—ज्ञाने, अवलम्बने वा, पङ्गवः,—अचलाः, दिग्बोधाक्षमाः, दिग्ग्रहणासमर्था वा इत्यर्थः; तासां स्त्रीत्वेन मत्तावीरसङ्घर्षाशङ्कयेति ध्वनितम्, यदा महावीराः अस्त्राणां दृष्टिभिः गगनमाच्छादयन्ति,

(२३७) महामहिषशृङ्गतरङ्गभङ्गभङ्गुरभीषणान्तराला लोकप्रवादमात्रेण दक्षिणाशा, परमार्थतो भटभ्रूकुटिः अधिवासो यमस्य। (२३८) चित्रञ्च यत्, उन्मुक्तसिंहनादानां सहसा साहसरसरोमाञ्चकण्टकनिकरेण सह न निर्य्यान्ति सटाः शूराणां रणेषु।

---

तदा सर्व्वा दिश समा एव इति मत्वा का दिशमाश्रयेदिति, दिग्वधूनायकः सुभटः समाक्रामेत् चेत् अत्याहित भवेत् इत्याशङ्कया वा चिन्ताकुलाः सूर्य्यरश्मयो भवन्तीति भाव, यद्वा,—वीरबाहव एव दिशा चतुर्णा ग्रहणे निरायासं समर्थाः, न तु पतङ्गस्य—अग्निकीटविशेषस्येव, अतितुच्छस्येति भाव., पतङ्गस्य—सूर्य्यस्य, करा',—हस्ता इति यावत्, तेषा पूर्व्वपश्चिमयोर्द्वयोरेव दिशो. विशेषतः ग्रहणादिति भावः, यद्वा,—पतङ्गस्य—"जोनाकी पोका" इति वङ्गभाषया प्रसिद्धस्य खद्यो तारव्यकीटविशेषस्य, कराः, अकारप्रश्लेषेण अपपङ्गव,—प्रभाविकाशेऽप्यपरा‍ङ्मुखाः भवन्ति, वीरकररूपकरैः सर्व्वेषा सूर्य्यादिग्रहाणामभिभवात्, एतेन वीराणा सर्व्वतेजोऽभिभाविल गौडाधिपस्यापि प्रकाशमानत्वञ्च ध्वनितम्। अत्र पतङ्गकरादपि वीरकरस्य आधिक्यप्रतीते व्यतिरेकालङ्कारः।

(२३७) महेति।—महामहिषस्य—यमवाहनस्य इत्यर्थ' यमस्य दक्षिणदिगधिपतित्वात् इति भाव', शृङ्गयो.,—विषाणयो, तरङ्गभङ्गवत्—ऊर्म्मिच्छेदवत्, भङ्गुर—भङ्गिमत् कुटिल वा, वहुलपर्वतादिमत्त्वादिति भाव'; यद्वा,—शृङ्गाभ्या तरङ्गभङ्गवत् भङ्गुर, दर्पातिरेकाच्छिरोविधूननात् इति भाव, भीषण—भयानकम्. अन्तराल—मध्य यस्या. सा, दक्षिणाशा—द‍क्षि णा दिक्, लोकप्रवादमात्रेण—जनश्रुतिमात्रेण इति यावत्, यमस्य—कृतान्तस्य, अधिवास.,—वसति., वासभूमिरित्यर्थ', परमार्थत.,—वस्तुत, भटभ्रुकुटि,—भटस्य—योद्धृपुरुषस्य, भ्रुकुटि',—भ्रूभङ्गिरित्यर्थः, यमस्य अधिवास इति शेष., तत्रैव सर्व्वदा प्रत्यक्षत्वेन प्रतीयमानत्वात् इत्याशयः। यमस्य वासभूमि. दक्षिणा दिक् इति वचनन्तु प्रवादमात्रपरतया अलीकमेव, परमार्थतस्तु वीराणा सरोषभ्रूभङ्गिरेव यमावासभूमिः इति भटभ्रुकुटौ यमाधिवासासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिरलङ्कार.।

(२३८) चित्रञ्च—आश्चर्य्यञ्च। रणेषु—सङ्ग्रामेषु, सहसा—अकस्मादित्यर्थ., उन्मुक्तसिंहनादाना—सिंहनाद कुर्व्वतामित्यर्थ', शूराणा—वीराणा. साहसेति।—साहसरसेन—वलसम्पाद्यकर्म्मसु अतिप्रणयितया, ("साहसन्तु वलात्कारकृतकार्य्ये दमेऽपि च" इति मेदिनी) ये रोमाञ्चा.,—रोमहर्षा., भीषणकर्म्मसम्पादनादिति

द्वयमे च (२३९) चतुःसागरसम्भूतस्य भूतिसम्भारस्य भाजनं प्रतिपक्षदाहि दारुणं बडवामुखं वा महापुरुषहृदयं वा। (२४०) तेजस्विनः सकलान् अनवाप्य पयोराशिसहजस्य कुतो निवृत्तिः उष्मणः? (२४१) वृथावितत-विपुलफणाभारो भुजङ्गानां भर्त्ता, बिभर्त्ति यो भोगेन क्षितिखण्ड-

---

भाव', ते एव काष्ठकानि—क्षुद्रशवव:, सूच्यग्ररूपाणि वा, तेषा निकर,—समूह: तेन, सटा:,—केसरा', सिंहानामिव इति भाव:, न निर्यान्ति—न निर्गच्छन्ति; वीराणा रोमहर्षसिंहनादेनैव दुर्बलप्रकृतय. शवबो निधन गच्छन्ति, परन्तु सिंहान्यूनानामपि शूराणा सिंहानाम् इव केशरा यत् न विद्यन्ते इत्येव चित्रम् इति समुदितार्थ:। वीरास्तु अकेशरा केशरिण एव, अतस्तदाक्रान्ताना रिपूणा कुतो जीवनाशा? इति भाव।

(२३९) चतुःसागरेति।—चतुर्णा सागराणा—समुद्राणा समाहार: चतु:सागरम्, [ अत्र "अकारान्तोत्तरपदो द्विगु स्त्रियामिष्ट:" (वा०) इति न प्रवर्त्तते, "पात्राद्यन्तस्य न" (वा०) इति निषेधात् न ङीप्] तस्मात् तत्र वा, यद्वा,—चत्वार. सागरा चतु:सागरा, तेभ्य' तेषु वा सम्भूतस्य—समुत्पन्नस्य, भूतिसम्भारस्य—भस्मनिचयस्य, वाडवानलतेजसा तत्रत्यवस्तुजाताना दग्धीभूतत्वात् इति भाव., रत्नादिसम्पत्समूहस्य च, ("भूर्भस्मनि सम्पदि" इत्यमर:) भाजन—स्थानम्। प्रतिपक्षा। —विरोधिना, जलानामित्यर्थ., अपित्तापराख्यस्य वाडवानलस्य सलिलशोषकत्वात्, शत्रूणाञ्च इत्यर्थ., दाहि—दाहकं, दारुण—तीव्र, बडवामुखम्—अश्वामुखं, तदुद्भूतत्वेनातिदेशात् बडवानल इत्यर्थ:, महापुरुषहृदय—महानुभावचित्त, क्षुद्राशया भीरवश्च न सम्पद्भाजनानि भवन्ति, अत: तादृश: गौडाधिप. अवश्यम् अचिरादेव विनङ्क्ष्यति इत्याशय:।

(२४०) तेजस्विन इति।—पयोराशिसहजस्य—पयोराशौ—समुद्रे, सहज',—स्वत उत्पन्न. ¯स्य, समुद्रसदृशस्य च, गाम्भीर्यातिशयादिति भाव, तेजस्विन,—बडवानलस्य, वीरपुरुषस्य च, उष्मण,—तेजस, प्रतापस्य च, सकलान्—कृत्स्नान्, शत्रून्, दाह्यानिति च शेष, अनवाप्य—अनिर्जित्य इति यावत्, कुतो निवृत्ति?—शान्ति:? नैव कथमपि निवृत्तिर्भवेदित्यर्थ।

(२४१) वृथेति।—वृथा—निष्फल यथा तथा, वितत,—विस्तृत, विपुल,—महान्, फणाभार,—फटासहस्रं यस्य तथाभूत, भुजङ्गा।—नागाना, भर्त्ता—

मेव केवलम् । ( २४२ ) अप्रतिहतशासनाक्रान्त्युपभोगसुखरसन्तु रसायाः ( २४३ ) दिकुञ्जरकरभारभास्वरप्रकोष्ठा वीरबाहव एव जानन्ति । ( २४४ ) रविरिव उन्मुखपद्माकरगृहीतपादपल्लवः सुखेन अखण्डिततेजा दिवसान् नयति शूरः ।

---

प्रभु , शेषाहि इत्यर्थ, पृथ्वीभारधारीति भाव, यः,—भुजङ्गाधिपति., भोगेन—देहेन, फणमण्डलेन वा. ( "भोग. सुखे स्त्र्यादिभृतावहेश्च फण-काययो." इत्यमरः ) केवल मृत्पिण्डमेव—मृत्तिकाराशिमेव, बिभर्त्ति—धत्ते, केवल मृत्पिण्डवहनार्थमेतादृक् प्रयासो न तस्य उचित इत्यर्थः, शशाङ्कसदृशनि.सारमृत्पिण्डमात्रधारिण्या पृथिव्याः धारणार्थं तस्य सहस्रफणावर्द्धनक्लेशस्वीकार. व्यर्थ, अतो भारस्यास्य परित्याग एव उचित इति भाव: ।

( २४२ ) रसायाः,—भुव, ( "भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा" इत्यमर ) अप्रतिहतेति ।—अप्रतिह न—प्रतिघातवर्ज्जितेन, अनतिक्रमणीयेन इत्य :, शासनेन—आज्ञया, प्रतापेनेति यावत्, या आक्रान्ति,—आक्रमणं, प्रभावविस्तार इत्यर्थ , तया य उपभोग ,—सम्भोग , तेन यः सुखरस ,—सुखास्वाद. तम् ।

( २४३ ) दिकुञ्जरेति ।—दिकुञ्जरस्य—दिग्गजस्य, करभारः,—शुण्डाभोग., तद्वत् भास्वर ,—दीप्यमान., प्रकोष्ठ.,—कूर्पर-मणिबन्धयोः अभ्यन्तरभाग येषा तथाभूताः, ( "प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी ) वीरबाहव.,—वीराणा—सुभटाना, बाहव ,—भुजा एव, जानन्ति—अनुभवन्तीत्यर्थः, वीरभोग्या एव वसुन्धरा, न तु शशाङ्कसदृशकापुरुषाः निमेषार्द्धमपि तदधिनायकत्वेन रक्षणीयाः इति भाव: ।

( २४४ ) रविरिति ।—शूर ,—वीरपुरुषः, रवि. इव—सू  इव, अखण्डिततेजा.,—अखण्डितम्—अप्रतिहत, तेज.,—प्रताप , ज्योतिश्च यस्य तथाभूत., अत एव उन्मुखेति ।—उन्मुखया—उत्सुकया, तत्परया इत्यर्थः, सानुरागयेति भाव., पद्मया—लक्ष्म्या, करेण—हस्तेन, गृहीत ,—सेवितः, पादपल्लव.,—चरणकिसलय. , अन्यत्र,—उन्मुखै —ऊर्द्ध्वमुखै , पद्माकरैः,—कमलसमूहै , पद्मसरोभि. वा, गृहीता ,—स्वविकाशकालेन प्राप्ता इत्यर्थ , पादपल्लवा ,—किरणसञ्चया यस्य तथाभूत., दिवसान्—वासरान्, नयति—अतिवाहयति, यापयति च, करोतीत्यर्थ', रवे. दिवसकारत्वात्, अखण्डिततेजसो वीरा भवादृशा एव निर्भयं सुखेन स्थातुं

(२४५) कातरस्य तु शशिन इव हरिणहृदयस्य पाण्डुरपृष्ठस्य कुतो चिरावमपि निश्चला लक्ष्मीः ? (२४६) अपरिमितयशःप्रकरवर्षी विकासी वीररसः। (२४७) पुरःप्रवृत्तप्रतापप्रहताः पन्थानः पौरुषस्य। (२४८) शब्दविद्रुतविघ्नन्ति भवन्ति द्वाराणि दर्पस्य।

---

योग्याः, न भीरव कृतमहापराधाः गौडाधमाः इति भावः, शशाङ्कस्य महद्भयं समुपस्थितम् इति फलितम्।

(२४५) कातरस्य—दीनस्य, भीतस्येत्यर्थः, कापुरुषस्य इति भावः, शशिन इव—चन्द्रस्य इव, हरिणहृदयस्य—हरिणस्य इव—तदाख्यपशोरिव इत्य विवेकः विच्युतस्य इव, अतिभीतस्येव इति वा भाव, हरिणाना भीरुत्व प्रसिद्ध लोके, हृदय—मन यस्य तथाविधस्य, दुर्बलान्तःकरणस्य इति यावत्, अन्यत,—हरिणः,—मृग', हृदये—उत्सङ्गे यस्य तथाभूतस्य, मृगलाञ्छनस्येत्यर्थ, पाण्डुरपृष्ठस्य पाण्डुर—धवलं, पृष्ठम्—उपरिभाग, बहिःप्रदेश इति यावत् यस्य तथाभूतस्य, बहिर्निर्मलावभासस्य किन्तु अन्तर्मलिनस्य अत एव विषगर्भस्य पयोमुखस्य इति भावः, देशभाषया निर्लज्जस्येति वा भाव., अन्यत,—शुभ्रोपरिभाग, लक्ष्मी,—श्री, शोभा च चिरावमपि—एकरात्रा-दूर्ध्वमपीत्यर्थ निश्चला—स्थायिनीत्यर्थ, कुत. ?—नैव इत्यर्थः यथा शशिन केवल पौर्णमास्यामेव एकस्या रात्रौ शोभाऽतिशय., न तु अन्यस्या तिथौ, तथा कातरस्य क्रूरहृदयस्य चणिका श्रीरिति भाव., अत. शशाङ्कस्यापि लक्ष्मीश्चचला भूता इति फलितम्।

(२४६) अपरिमितेति।—अपरिमितानां—परिमातुमशक्यानां, प्रभूताना-मित्यर्थ, यशसा—कीर्त्तीना, प्रकर—सञ्चयं, वर्षति—ददातीति यावत् तथोक्त, अत एव विकासी—विकासशील, सर्व्वत्रामोदवान् इत्यर्थ., वीरत्वप्रकटनेनैव यशसः सर्व्वव्यापित्व जायते, न तु कापुरुषतया नृशसाचारतया वा इति भाव, नीतिविगर्हितेन अनेन कर्म्मणा कापुरुषोचितेन तस्य दुष्कीर्त्तिरेव सर्व्वत्र प्रख्याता, अत. दुष्कृतिनः निस्तेजसस्तस्य विनाशने न काऽपि बाधा इति फलितम्।

(२४७) पौरुषस्य—पुरुषकारस्य, विक्रमस्येत्यर्थः, पन्थानः,—मार्गाः, पुर इति।—पुर प्रवृत्तेन—अग्रतः प्रसृतेन, प्रतापेन—तेजसा, प्रहताः,—चुण्णाः, परिष्कृता इति यावत् अविहता इति भाव पौरुषशालिनस्ते सिद्धिः निश्चिता एव इत्याशय.

(२४८) दर्पस्य—शौर्य्याभिमानस्य, द्वाराणि—अवकाशाः, शूरत्वख्यापनानि

(२४९) शस्त्रालोकप्रकाशिताः शून्या दिशः शौर्य्यस्य। (२५०) रिपुरुधिरशीकरासारेण भूरिव श्रीरपि नुरज्यते। (२५१) बहुनरपतिमुकुटमणिशिलाशाणकोणकषणेन चरणनखराजिः इव राजताऽपि उज्ज्वलीभवति।

---

इत्यर्थः, शब्देति।—शब्देन—शौर्य्याभिमानिनः ध्वनिना इत्यर्थः, विद्रुताः,—पलायिताः, विषन्नाः—शवः येभ्यः तथाभूतानि, "व प्रयाणवार्त्ताश्रवणेनैव भीरु' स लायिष्यते, अतस्तूर्णं जिगीषुर्भव, अन्यथा न सम्यक् का सिद्धिः, पलायने यथोचितप्रतिशोध नाप्रसङ्गात् इति भाव, यद्वा,—दर्पस्य—वीरोचितगर्वातिरेकस्य, द्वाराणि—प्रवेशस्थानानि, तल्लाभोपाया इत्यर्थः, शब्देति।—शब्देन—दर्पसूचकनिनादेन, विद्रुताः,—विवस्ताः सन्तः अपसृताः, विषन्नाः,—विपक्षाः येभ्यः तथाभूतानि, भवन्ति, दर्पोद्रेकात् महाशौर्य्यसूचकादृते शत्रूणां निर्जयः कदाऽपि न सम्भवति, अतः शौर्य्यदर्प एव प्रागाश्रयणीय इति तात्पर्य्यम्।

(२४९) शस्त्रेति।—शस्त्राणाम्—आयुधानाम्, [शसतेः "सर्व्वधातुभ्यः ष्ट्रन्" (उ० ४ पा० १५८ सू०) इति ष्ट्रनि रूपम्] आलोकेन—उद्योतेन, प्रकाशिताः,—उद्भासिताः, शौर्य्यस्य—वीर्य्यप्रकटनस्य, दिशः,—ककुभः, पन्थान इति यावत, शून्याः,—अनावृताः, जनरहिता इत्यर्थः, तत्रागमनवार्त्ताश्रवणेनैव पलायितप्रतिपक्षत्वादिति भावः, निशितकृपाणप्रभाभिर्विना शौर्य्यरूपाः दिशो हि न ज्योतिष्कादिभिः उद्भासिताः भवन्ति इति तात्पर्य्यम्।

(२५०) रिपिति।—रिपूणा—शत्रूणां, रुधिराणि—शोणितानि, तेषां शीकरासारः,—बिन्दुधारासम्पात तेन, भूरिव—रणभूमिरिवेत्यर्थः, श्रीरपि—लक्ष्मीरपि, अनुरज्यते—अनुरक्ता भवति, हस्तगता भवतीति भावः, अनुलिप्ता भवति इत्यर्थश्च, अवश्यमेव विजयलक्ष्मीस्त्वामाश्रयिष्यतीत्याशयः, रिपूणां समूलोन्मूलनमन्तरेण श्रीर्दुर्लभैवेति तात्पर्य्यम्। वीरानुरक्ताः हि राजश्रियः भवन्ति इति उपमया ध्वन्यते।

(२५१) बह्विति।—बहूनाम्—अनेकेषां, नरपतीनां—राज्ञां, चरणपतितानामिति भावः, मुकुटेषु—किरीटेषु,—या मणिशिलाः,—रत्नानि इत्यर्थः, ताः शाणाः,—निकषशिला इव, ("शाणस्तु निकषः कषः" इत्यमरः) तासां कोणैः,—अस्रिभिः, कषणं—घर्षणं तेन, चरणनखराजिरिव—पादनखश्रेणिरिव, राजताऽपि—राजत्वमपि, साम्राज्यमिति भावः, उज्ज्वलीभवति—उज्ज्वलतामापद्यते इत्यर्थः,

(२५२) अनवरतशस्त्राभ्यासेन करतलानि इव रिपुमुखानि श्यामीभवन्ति। (२५३) विविधव्रणबद्धपट्टकशतैः शरीरमिव यशोऽपि धवलीभवति। (२५४) कवचिषु रिपूरःकवाटेषु पात्यमानाः पावकशिखामिव श्रियमपि वमन्ति निष्ठुरा निस्त्रिंशप्रहाराः। (२५५) यत्राहितहतस्वजनो मनस्विजनो

---

भूषणीभवति इत्यर्थश्च, नृपचक्रसेवितपादपद्माः हि भवन्ति सम्राजः इति भावः। विजितनरपालचूडामणिमरीचिभिः विजेतुः राज्ञः यथा चरणनखराजयः राजन्ते, तथा साम्राज्यमपि, इति साम्यात् उपमाऽलङ्कृतिः।

(२५२) अनवरतेति।—अनवरतेन—सन्ततेन, शस्त्राणाम्—आयुधानाम्, अभ्यासेन—अनुशीलनेन, सञ्चालनेन इत्यर्थः, करतलानि इव—हस्ततलभागा इव, रिपूणां—शत्रूणां, मुखानि—वदनानि, श्यामीभवन्ति—सञ्जातकिणानि, मलिनानि च भवन्ति इत्यर्थः, प्रबलप्रतिपक्षस्य शस्त्राभ्यासजनितपराक्रमस्मरणेन बिभ्येतु जीवने अपि च नैराश्योदयादिति भावः।

(२५३) विविधेति।—विविधेषु—बहुप्रकारेषु, व्रणेषु—सङ्ग्रामव्यापारेणोत्पादितेषु शस्त्रक्षतेषु इत्यर्थः, बद्धानि—व्रणसन्धानार्थं संयतानि यानि पट्टकशतानि—शुभ्रनववस्त्रखण्डसमूहाः तैः। धवलीभवति—शुभ्रीभवति, उज्ज्वलीभवति च, तेषां बहुयुद्धनिदर्शनतया वीर्यातिशय्यप्रकटनपरत्वादिति भावः।

(२५४) कवचिषु—वर्मावृतेषु इति यावत्, ("तनुत्रं वर्म दंशनम्। …जगरः कवचोऽस्त्रियाम्" इत्यमरः) रिपूरिति।—रिपूणाम्—अरीणाम्, उरःकवाटेषु—द्वारावरणकाष्ठफलकवत् दृढेषु प्रशस्तेषु च वक्षःस्थलेषु, पात्यमानाः—क्षिप्यमाणाः, निष्ठुराः,—निर्दयं प्रहृताः, प्रगाढा इत्यर्थः, निस्त्रिंशप्रहाराः,—असिताडनानि, पावकशिखामिव—अग्निज्वालाम् इव इत्यर्थः, वमन्ति—उद्गिरन्ति, जनयन्ति च इत्यर्थः, ददति इति यावत्, सानुरागा कारयन्ति इति भावः, कठोरचन्द्रहाससम्पाताः शत्रुनिपातनेन राजलक्ष्मीं स्ववशमानयन्तीति निष्कर्षः, शत्रूणां शिलासमेषु दृढेषु वक्षःस्थलेषु जिगीषुणा निर्दयं निपातितेभ्यः करवालेभ्यः तीक्ष्णेभ्यः समुद्भूताः हेतिततयः जयश्रियः इवाभान्ति इति तात्पर्यम्; तेनात्र ज्वालसमप्रभायाः लक्ष्म्याः समाश्लेषार्थमुरःस्थलप्रणयित्वात् साम्यमभ्याहृतमेवेति बोध्यम्।

(२५५) यत्रेति।—मनस्विजनः,—वीरपुरुषः। अहितहतस्वजनः,—अहितेन—शत्रुणा, हतः,—नष्टः, स्वजनः,—बन्धुजनः यस्य तथाभूतः सन्; यदा,—

द्विषद्योषिदुरस्ताड़नेन कथयति हृदयदुःखं, परुषासिलतानिपातपवनेन उच्छ्वसिति, (२५६) निरुच्छ्वसितशत्रुशरीराश्रुधारापातेन रोदिति, (२५७) विपक्षवनिताचक्षुषा ददाति जलं, स श्रेयान्, नेतरः।

---

अहितानां—रिपूणां, हताः,—विनाशिताः, स्वे—आत्मीयाः, जनाः,—लोका अपि येन, समूलोत्पाटितशत्रुरित्यर्थः, द्विषदिति।—द्विषतः,—अहितस्य, येन येषां वा स्वजनानां नाशितः, तस्येति भावः, योषितां—नारीणाम्, उरस्ताडनेन—वक्षःस्थलाघातेन, भर्त्तृनिधनशोकजनितेन इति भावः, हृदयदुःखं—मनोदुःखं, शत्रुकृतबन्धुजननिधनजनितमिति भावः, कथयति—प्रकाशयति, स्वजनजीवननाशे यादृशः शोकः प्रदर्शनीयः, प्रत्यर्थिङ्गनीरस्ताडनैरेव तमावेदयति, न तु दीनवत् विक्षोभकरक्रन्दनादिभिः इत्यर्थः, शत्रून् विनाश्य तदङ्गनानां प्रबलशोकसमुत्पादनेन प्रतिशोधपिपासां शमयतीति भावः। परुषेति।—परुषाणां—निष्ठुराणाम्, असिलतानां—खड्गवल्लीनां, लतावद्दीर्घतरत्नानामसीनामित्यर्थः, निपातः,—सञ्चालनं, तेन यः पवनः,—वायुः तेन उच्छ्वसिति—प्राणिति, आयतं निश्वसिति इत्यर्थः, आत्मीयविनाशशोकादिति भावः, असिसञ्चालनेन शोकप्रतिकारं करोतीति, न तु कापुरुषवत् स्वयमुष्णोच्छ्वासमोचनैः वृथा प्राणान् वहति इति फलितम्।

(२५६) निरुच्छ्वसितेति।—निरुच्छ्वसिताः,—उच्छ्वासरहिताः, निहता इति भावः ये शत्रवः,—द्विषन्तः, तेषां शरीराणि—देहाः, विशेषतः चक्षुरादय इत्यर्थः, तेभ्यः अश्रुधारापातेन—धारासारवर्षणेन, मृत्युपूर्वक्षणे अनुभूताघातवेदनया पुनःकलत्रादिस्त्रीवियोगाशङ्कया वा प्रतिवीरमनिहत्याकाले वीरलोकप्रस्थानेन वा हेतुना सपदि विगलितेन इति भावः, यद्वा,—शरीराणि—देहाः, तेषु अश्रुधारापातेन—पतितेन नयननीरासारेण, निहतभर्त्तृकाणां रिपुपत्नीनामिति भावः।

(२५७) विपक्षेति।—विपक्षाणां—शत्रूणां, वनिताः,—कान्ताः, तासां चक्षुषा—नेत्रेण, अञ्जलिभूतेन इति भावः, जलं—तर्पणसलिलमिति यावत्, ददाति—अर्पयति, अहितनिहताय स्वजनाय इति भावः। श्रेयान्—श्रेष्ठः, प्रशस्ततमः इति यावत्, नेतरः,—इतरः,—अन्यः, य उक्तरूपप्रतिकारं न कर्त्तुं समर्थः, स इत्यर्थः, न, श्रेयानिति शेषः, स कापुरुषः निन्दनीयश्च इति भावः; भवताऽपि अचिरमेव एतादृशं प्रतिविधातव्यम्, अन्यथेतरपक्षीयकलङ्कपङ्कप्रपाताऽवश्यम्भावित्वम् इति फलितम्।

(२५८) न च स्वप्नदृष्टनष्टेषु इव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धुबुद्धिं प्रबुद्धाः। (२५९) स्थायिनि यशसि शरीरधीः वीराणाम्। (२६०) अनवरतप्रज्वलिततेजःप्रसर-भास्वरस्वभावञ्च मणिप्रदीपमिव कलुषः कज्जलमलो न स्पृशति एव तेजस्विनं शोकः। (२६१) स त्वं सत्त्ववताम् अग्रणीः, प्राग्रहरः प्राज्ञानां, प्रथमः समर्थानां, प्रष्ठोऽभि-

---

(२५८) प्रबुद्धाः,—प्रकृष्टज्ञानिनः, सौगतसिद्धान्तविदः वा, "यत्तत् सत् क्षणिकम्" इत्याद्यैः यत् सत्, तत् क्षणिकमिति क्षणभङ्गवादस्य तेषां सिद्धान्तेन निर्णीयमानत्वात् इति भावः; जागरितास्व स्वप्नेति।—स्वप्नेषु—निद्राऽवस्थायां विषयानुभवेषु, दृष्टानि—अवलोकितानि, नष्टानि—समनन्तरम् एव अदर्शनं गतानि इत्यर्थः तेषु इव, क्षणिकेषु—क्षणमात्रस्थायिषु,कियत्समयानन्तरमेव भङ्गरेष्वित्यर्थः, बन्धुबुद्धिम्—आत्मीयत्वज्ञानं, निबध्नन्ति—स्थापयन्ति, स्वप्नदृष्टानीवालीकानि खलु भवन्ति शरीराणि, अतो ममत्वबुद्ध्या नश्वरशरीरनाशभयात् रणपराङ्मुखता नोचिता इति भावः।

(२५९) स्थायिनि—अविनश्वरे, चिरन्तने इति भावः, ["नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (३।१।१३४ पा०) इति स्थाधातोः णिनिः]। शरीरधीः,—देहबुद्धिः, वीरा यशःशरीरमेव अक्षयत्वबुद्ध्या रक्षितं यतन्ते, न पाञ्चभौतिकं क्षणिकमिति भावः। इह भवादृशानां वीरव्रतचर्य्योपार्ज्जितयशःशरीराभिरुचिरेव श्रेयस्करी इति विशेषे वक्तव्ये साधारणवीररूपसामान्यमभिहितम् इत्यप्रस्तुतप्रशंसाभेदोऽलङ्कारः।

(२६०) अनवरतेति।—अनवरतं—सततं,प्रज्वलितेन—अतैलपूरतयाऽपि भास्वता, तेजसां—प्रतापानां, ज्योतिषाञ्च, प्रसरेण—प्रकाशेन, भास्वरः,—दीप्तिमान्, स्वभावः,—प्रकृतिः यस्य तथाभूतं, तेजस्विनं—प्रतापवन्तं, प्रज्वलन्तञ्च, मणिप्रदीपमिव—रत्नदीपमिव, स्वभावोज्ज्वलमिति भावः, कलुषः,—कृष्णवर्णः, पापपरिणामभूतश्च, तमोबहुल इत्यर्थः, कज्जलमलः,—कज्जलम्—अञ्जनम्, अग्निशिखोद्भूतधूमसञ्चयसम्भूतम् इत्यर्थः, तदेव मलः,—मालिन्यम्; कज्जलवत् मलः,—मलिनः इत्यर्थश्च। न स्पृशति—नाशयति, प्रतिकारस्पृहायाः बलवत्त्वात् शोकप्रतिपक्षक्रोधोद्रेकाच्च इति भावः; अन्यत्र,—मणिमयत्वेन धूमसम्बन्धाभावादिति भावः।

(२६१) स त्वं—सर्व्वविभवसम्पन्नो भवान् इत्यर्थः, एतेन सर्व्वकार्य्याणामना

जातानाम्, अग्रेसरः तेजस्विनाम्, आदिः असहिष्णूनाम्॥ (२६२) एताश्च सततसन्निहितधूमायमानकोपाग्नयः सुलभासिधारातोयतृप्तयो विकटबाहुवनच्छायोपगूढ़ा धीरतायाः निवासशिशिरभूमयः स्वायत्ताः सुभटानाम् उरःकवाटभित्तयः॥

---

यासस्साधनत्वमलं हर्षस्य सूचितम्। सत्त्ववतां—महाप्राणशालिनाम् अग्रणीः,—अग्रगण्यः। प्राज्ञानां—प्रकृष्टबुद्धिशालिनां, प्राग्रहरः,—प्रधानं, वरेण्य इति यावत्, ("क्लीवे प्रधानं···। मुख्यवर्य्यवरेण्याश्च···। पराद्ध्यीग्रप्राग्रहर···॥" इत्यमरः)। समर्थानां—शक्तिमतां, प्रथमः,—आद्यः। अभिजातानां—महाकुलीनानां प्रष्ठः,—श्रेष्ठः, ("प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे" इति मेदिनी)। तेजस्विनां—प्रतापवताम्, अग्रेसरः,—मुख्यः, ["तत्पुरुषे कृति बहुलम्" (६।३।१४ पा०) इति सप्तम्याः पाक्षिकोऽलुक्]। असहिष्णूनाम्—अहितविक्रमासहनशीलानामिति यावत्, आदिः,—प्रथमः, मुख्य इत्यर्थः, एतादृशस्य सर्व्वगुणवतश्च ते विपक्षदमने न कालातिक्रमः करणीय इत्याशयः॥

(२६२) एताश्चेति।—एताः,—परिदृश्यमानाः, त्वत्कार्य्यार्थमवरुद्धा इति यावत्, सततेति।—सततसन्निहिताः,—नियतसमीपस्थिताः, धूमायमानाः,—धूममुद्वमन्त इत्यर्थः, सोत्साहभवदिङ्गितानुकूलपवनाभावेन असम्यग्ज्वलिततया निर्व्वाणोन्मुखा इति भावः, कोपाग्नयः,—क्रोधानलाः यासु तथोक्ताः, भवदभिलाषमात्रेणैव युद्धाय प्रस्थानेच्छवः इति भावः, सुलभेति।—सुलभा—सुप्रापा, ईप्सिता इति यावत्, असिधारातोयेन—शत्रुनिपातितनिस्त्रिंशधाराजलेन, तृप्तिः,—सौहित्यं, पिपासानिवृत्तिरित्यर्थः, आनन्द इति यावत् यासां तथाविधाः, रणाङ्गने शत्रूणाम् असिप्रहारान् आकाङ्क्षमाणाः इति भावः, विकटेति।—विकटानि—विशालानि, दुरवगाहानीत्यर्थः, बाहव एव—भुजाः एव, वनानि—अरण्यानि, तेषां छायाभिः,—अनातपैः इत्यर्थः, बाहुवीर्य्यैरिति भावः, उपगूढ़ाः,—आलिङ्गिताः, सङ्गता इत्यर्थः, धीरतायाः,—धैर्य्यशालितायाः, निवासेति।—निवासस्य—अवस्थानस्य, शिशिरभूमयः,—शीतलप्रदेशाः, न केवलम् उद्दामवीर्य्यशालिनः, किन्तु धीरा अपि इत्यर्थः, दुष्प्रधर्षबलसम्पन्नत्वेऽपि विवेकवन्तः, न तु हठकारिणः इति भावः, सुभटानां—महायोद्धृणाम्, उरः इति।—उरांसि—वक्षःस्थलानि एव, कवाटभित्तयः,—कवाटवत् दृढ़प्रशस्तवक्षःस्थलानीत्यर्थः स्वायत्ताः,—स्वस्य—आत्मनः,भवतः इति भावः, आयत्ताः,—अधीनाः।

(२६३) यतः किं गौड़ाधिपेन एकेन, (२६४) तथा कुरु,—यथा न अन्योऽपि कश्चिदाचरति एवं भूयः। (२६५) सर्व्वोर्व्वीश्रद्धाकामुकानाम् अलीकविजिगीषूणां सञ्चारय चामराणि अन्तःपुरपुरन्ध्रिनिश्वसितैः। (२६६) उच्छिन्धि रुधिरगन्धान्धगृध्रमण्डलच्छादनैः छत्रच्छायाव्यसनानि। (२६७) अपाकुरु कदुष्णशोणितोदकखेदैः कुलक्ष्मीकुलटा-

(२६३) "यत" इत्यत्र "अत." इति पाठो युक्त इत्यवधेयम्, अथवा पूर्व्वया ेन सहास्य अन्वयं कृत्वा, यतः एताः सुभटानामुर कवाटभित्तय. तव स्वायत्ता, अत किं गौडाधिपेन इत्येवं सङ्गमथ्यार्थः कारणीय। एकेन—केवलेन, ("एके मुख्यान्यकेवला." इत्यमर.)।

(२६४) तथा—ता श । यथा—येन कारणेन, यादृशदण्डदानेन इत्यर्थ। अन्योऽपि—गौडाधिपात् अपरोऽपि। एवम्—ईदृशम्, अधर्म्ममिति भाव। भूय,—पुन। सर्वानेव दुर्विनीतान् राज्ञः दण्डेन शिक्षय इति भावः, अविलम्बमेव दिग्विजयप्रयाण कारणीयम् इति तात्पर्य्यम्।

(२६५) सर्वेति।—सर्वा—सकला, उर्वी—पृथ्वी, तस्या श्रद्धा—अनुरागविशेष, ता कामयितु शीलमेषामिति तथोक्तानां, तस्याः कामुकाना वा, साम्राज्यार्थिनामिति भावः, अलीकविजिगीषूणा—वृथा जेतुमिच्छूनामिति यावत् अन्तःपुरपुरन्ध्रिनिश्वसितः,—अन्त पुरपुरन्ध्रीणाम्—अवरोधकामिनीना, निश्वसित,—निश्वा ः, भर्तृनिधनशोकात् दीर्घैरिति भावः. चामराणि—चमरीवालव्यजनानि, सञ्चारय—सञ्चालय, समरेषु निहतेषु विपक्षेषु इति शेष, सम्राड् भव इति भाव.।

(२६६) रुधिरेति।—रुधिराणा— ोणिताना, गन्धेन—घ्राणग्राह्येण गुणभेदेन, अन्धाना—दिग्विदिग्ज्ञानरहिततया व्याकुलानाम् इति यावत्, गृध्राणा—शकुनाख्यपक्षिभेदाना, यानि मण्डलानि—सङ्घा, तेषा छायने एभिरिति छादनानि—पक्षाः तैः, छत्रेति।—छत्रस्य—आतपत्रस्य, छाया,—अनातपाः, तासु व्यसनम्—आस ि, अवस्थानानुराग इति भाव. तानि, उच्छिन्धि—उत्सादय, नाशय इत्यर्थ, प्रागुक्तानाम् अलीकविजिगीषूणाम् इति शेष., छत्रच्छायासु सततमासीना. ते रणभूमौ पतिता गृध्रपक्षच्छाया सेवन्तामिति भाव।

(२६७) कदुष्णेति।—कदुष्णानि—कवोष्णानि, ईषदुष्णानि इत्यर्थः, ["कोः

कटाक्षचक्षूरागरोगान्। (२६८) उपशमय निशितशर-शिरावेधैः अकार्य्यशौर्य्यश्वयथून्। (२६९) उन्मूलय लोह-निगड़ापीड़मालामलमहौषधैः पादपीठदोहददुर्ललितपाद-

---

रूत् तत्पुरुषेऽचि" (६।३।१० पा०) इतीषदर्थकस्य कुशब्दस्य कदादेशः] निशितशस्त्राघातेन सद्यो निर्गलिततयेति भावः,शोणितानि—रुधिराणि एव, अहितानामिति भावः, उदकानि —जलानि, किञ्चिदुष्णानीति भावः, तैः स्वेदाः,—स्वेदनानि, तापविशेषा इति यावत् तैः कुलक्ष्मीति।—कु—कुत्सिता, चपलेति भावः, लक्ष्मीरेव—श्रीरेव, कुलटा—पुंश्चली, दुश्चारिणी नारी इत्यर्थः, स्वेच्छया बहुपुरुषगामित्वादिति भावः, तस्याः, कटाक्षाः,—पुरुषान्तरं प्रीणयितुम् अपाङ्गप्रेक्षितानि यानि विक्षितानि तत्प्रधानाः इत्यर्थः, ये चक्षूरागाः,—दर्शनप्रीतयः, [ शाकपार्थिववत् समासः ] ते एव रोगाः,—व्याधयः तान्, यद्वा,—चक्षूरागरोगाः,—दर्शनानुरागरूपा व्याधयः, नेत्रयोः रक्तवर्णतारूपा व्याधयश्च तान्, अपाकुरु—उपशमय, यथा कुलटा नारी पुरुषान्तररूपदर्शनेन जातचक्षूरागा तं प्रति स्वाभिलाषद्योतकान् कटाक्षान् निक्षिपति, चपला लक्ष्मीरपि तथा, अतः तत्तत्पुरुष-निधनेन लक्ष्मीम् अचपलां कुर्व्विति भावः, निःशेषं शत्रून् जहि इति तात्पर्य्यम्। चक्षुः-पीडायां सञ्जातायां तादृशव्याधुपशमाय उष्णोदकेन स्वेदः क्रियते इत्यायुर्व्वेदप्रसिद्धिः।

(२६८) निशितेति।—निशितैः,—तीक्ष्णैः, शरैरेव —बाणभूतैरित्यर्थः, शिराणां —नाडीनां, शत्रुसम्बन्धिनीनामिति भावः, ("नाडी तु धमनिः शिरा" इत्यमरः) वेधैः,—व्यधनसाधनैः, यद्वा—निशितैः शरैः,—बाणैः, बाणकरणक इत्यर्थः, य[illegible]रावेधः,—दुष्टरक्तमोक्षणार्थं शिराणां व्यधनं तैः, अकार्य्येति।—अकार्य्येषु—अन्याय्यकर्म्मसु, विश्वस्तघातनादिरूपेषु इति भावः, शौर्य्याणि—प[illegible]क्रमप्रकटनानि एव, श्वयथवः,—शोथ-रोगविशेषाः तान्, उपशमय—शान्तिं नय; श्वयथुरोगे व्याधेर्निर्मूलनाय शिरावेधनेन रक्तादिक्लेदानां निःसारणं क्रियते इति प्रसिद्धिः। अत्र अकार्य्यशौर्य्येषु श्वयथूनामारोपः निशितशरेषु शिरावेधत्वारोपस्य निमित्तभूततया उक्त इति परम्परितरूपकम्।

(२६९) लोहेति।—लोहनिगडाः,—लोहशृङ्खलान्येव, आपीडमालाः,—शिरो-भूषणभूतमाल्यश्रेणयः, रत्नहाररूपालङ्कारविशेषाः इति भावः, ता एव अमलानि—निर्दोषाणि इति यावत्, महौषधानि—उत्कृष्टभेषजानि तैः, पादेति।—पादपीठेषु—चरणासनेषु, दोहदानि—न्यासार्थमत्यभिलाषाः, तैः दुर्ललिताः,—अदम्याः, कृतस्पृ

पटुमान्द्यानि। (२७०) क्षपय तीक्ष्णाज्ञाक्षरक्षारपातैः जयशब्दश्रवणकर्णकण्डूः। (२७१) अपनय चरणनखमरीचिचन्दनचर्चाललाटलेपैः अनमितस्तिमितमस्तकस्तम्भविकारान्। (२७२) उद्धर करदानसन्देशसन्दंशैः द्रविणदर्पोष्मायमाण-

---

निरोद्धुमशक्या इत्यर्थः, ये पादाः,—चरणानि, विद्विषामिति भावः, तेषां पटूनि—विदग्धानि, मान्द्यानि—जड़त्वानि, आलस्यानि इत्यर्थः रोगविशेषाश्च तानि, उन्मूलय—अपाकुरु, समूलोत्पाटनेन शान्तिं नय इत्यर्थः, अहितानां पादपीठोचितानि गत्यलसानि पदानि लौहशृङ्खलैः संवेष्ट्य कारायां स्वचरणोचितानि कुर्य्यिति भावः। यद्यपि लौहनिगडाः पादेषु धार्य्यन्ते, आपीडमालास्तु शिरसि इति, तथाऽपि तत्र अनलमर्हे पद्मत्वरूपणात् अत्याग्रहसहकारेण धार्य्यत्वसम्भावनया न रूपकविधौ कश्चिद्विरोध इति प्रत्येतव्यम्।

(२७०) तीक्ष्णेति।—तीक्ष्णानि—तीव्राणि, कठोराणीत्यर्थः, आज्ञाक्षराणि—आदेशवचनानि एव, क्षाराः,—लवणविशेषाः, तेषां पाताः,—प्रयोगाः, तैः, जयेति।—जयशब्दानां—विजयकोलाहलानामिति यावत्, स्वपक्षीयाणामिति भावः, श्रवणे—आकर्णने, याः कर्णकण्डूः,—श्रुतिकण्डूयनानि, ता एव कर्णरोगविशेषा ताः, क्षपय—अपनय, विजितान् शत्रून् प्रति तथाऽऽज्ञाक्षराणि प्रयुज्यन्तां, यथा तानि श्रुत्वा तेषां स्वानुजीविगणे, प्रोच्यमानानां जयशब्दानां श्रवणे अत्याकाङ्क्षा झटिति विरमेदिति भावः। कर्णकण्डूरोगे क्षारप्रयोग, चिकित्साशास्त्रप्रसिद्धः।

(२७१) चरणेति।—चरणानां—पादानां, नखाः,—नखराः, तेषां मरीचयः,—मयूखा एव, चन्दनचर्चाः,—चन्दनानुलेपाः, शुभ्रत्वसाधर्म्यादिति भावः, ता एव ललाटलेपा —भालतटनिहितप्रलेपाः, प्रणिपातावसरे संलग्ना इत्यर्थः शिरोरोगशमनार्थं न्यस्ताश्चेति भावः तैः, अनमितेति।—अनमितानाम्—अविधेयीभूतानाम्, अप्रणिपातितानामिति यावत्, गर्वितानामिति भावः, स्तिमितानां—निश्चलानां, मस्तकानां—शत्रुशिरसामिति भावः, स्तम्भविकाराः,—अनत्या स्तम्भभावेन अवस्थानरूपा इति यावत्, शिरःस्तम्भरूपरोगाश्च तान्, अपनय—दूरीकुरु, यथा शत्रव त्वरितमेव चरणतलेषु प्रणिपतन्ति तथा कुर्विति भावः। शिरःपीडायां ललाटे चन्दनप्रलेपः औषधम् इति दृश्यते।

(२७२) करेति।—करस्य—बलेः, राजग्राह्यांशस्येत्यर्थः, ("बलिहस्तांशवः कराः," इत्यमरः) दानम्—अर्पणं, प्रेरणमिति यावत्, तस्य सन्देशाः,

दुःशीलकीलाशल्यानि। (२७३) भिन्धि मणिपादपीठ-दीधितिप्रदीपिकाभिः शुष्कसुभटाटोपभ्रुकुटिबन्धान्धकारान्। (२७४) जय चरणलङ्घनलाघवगलितशिरोगौरवारोग्यैः मिथ्या-

---

—वाचिकानि, त्वया एवमस्मदर्थं कार्यं देयं इत्येवमादेशवचनानि इति यावत्, ("सन्देशवाग्वाचिकं स्यात्" इत्यमरः) ते एव सन्दंशाः,—"साँड़ाशी" इति बङ्ग-भाषया प्रसिद्धाः शल्याकर्षणयन्त्रविशेषाः तैः, द्रविणेति।—द्रविणदर्पेण—धनाहङ्कारेण, उष्मायमाणाः,—उष्माणम् उद्‌वमन्त्य, या दुःशीलाना—दुर्विनीतानाम्, अहितानामिति यावत्, कीलाः,—विवेष्टितानि, ता एव शल्यानि—कीलाः तानि, उद्धर—उत्पाटय, निहतावशेषान् विद्विषतः करदानाज्ञाप्रेषणेन विगतदर्पान् कुर्विति भावः। सन्दंशयन्त्रेण शल्यमाकर्षति लोकः इति दृश्यते।

(२७३) मणीति।—मणिमय—रत्नमयमित्यर्थः, मणीना वा यत् पादपीठं—स्वचरणविन्यासासनं, तस्य दीधितयः,—मयूखा एव, प्रदीपिकाः,—आलोकसाधनानि ताभिः, शुष्केति।—शुष्काः,—नीरसाः इत्यर्थः, सङ्ग्रामस्याप्राप्तेः अभ्यासरक्षणार्थं केवलं रचिता इति भावः, सुभटाना—सुयोद्धॄणाम्, आटोपेन—सरम्भेण, क्रोधावेगेन इत्यर्थः, भ्रुकुटिबन्धाः,—भ्रूभङ्गा एव, अन्धकाराः,—तमांसि तान्, भिन्धि—विदारय, नाशयेत्यर्थः, रणकण्डूमताम् अहितानां सर्वेषामेव विजयेन सम्प्रति स्वसैनिकवीरान् क्रोधवर्ज्जितान् नाममात्रेण सुभटान् कुर्विति भावः, यद्वा,—शुष्कसुभटानाम्—स्वधर्म्मपथप्रवृत्ताना वीराणाम्, आटोपभ्रुकुटिबन्धाः,—सरम्भभ्रूसञ्चाराः, निर्भयकृतभ्रूभङ्गा वा, त एव अन्धकाराः,—तमःसङ्घाः तान्, पापयोद्धॄन् तथादर्पोन्धान् उन्मथ्य सदसत्पथपरिदर्शनक्षमान् विधेहीत्याशयः। अन्धापसारः प्रदीपस्तोमैः साध्यते इत्यनवद्यम्।

(२७४) चरणेति।—चरणयोः,—पादयोः, लङ्घनं—प्रणिपतनमित्यर्थः, तदेव लाघवं—लघुत्वं, शिरसः स्वभावरूपाभिमानापगमादिति भावः, तेन गलितानि—अपनीतानीत्यर्थः, शिरोगौरवाणि—मूर्द्धगुरुत्वानि, कुत्राप्यनवनतमस्तकरूपता इति भावः, तान्येव आरोग्याणि—अरोगाय हितानि, रोगापनयनकुशलानि औषधानि इत्यर्थः तैः, अन्यत्र,—लङ्घनेन—अभोजनेन, यत् लाघवं—लघुत्वं, शिरस इति भावः, तेन गलितं—विलीनं, दूरीभूतमित्यर्थः, यत् शिरसो गौरवं—जाड्यं, तदेव आरोग्यं—रोगोपशमनम्, औषधमित्यर्थः तैः, मिथ्येति।—

ऽभिमानमहासन्निपातान्। (२७५) म्रदय सततसेवाऽञ्जलिमुकुलितकरसम्पुटोष्मभिः इष्वसनगुणकिणकार्कश्यानि। (२७६) येन एव ते गतः पिता पितामहः प्रपितामहो वा, तस्मिन्नेव मा हासीः त्रिभुवनस्पृहणीयं पन्थानम्। अपहाय कुपुरुषोचितां शुचं प्रतिपद्यस्व कुलक्रमागतां केसरी इव कुरङ्गीं राजलक्ष्मीम्। देव! देवभूयं गते नरेन्द्रे, (२७७) दुष्टगौड़भुजङ्गजग्धजीविते च राज्यवर्द्धने, वृत्तेऽस्मिन् महाप्रलये

---

मिथ्याभिमानाः,—वृथा गर्वाः, अहितानामिति भावः, ते एव सन्निपाताः,—असाध्यरोगविशेषाः तान् जय—पराभव, अपनय इत्यर्थः, शत्रवः चरणयोः निपात्य निरभिमानाः क्रियन्तामिति भावः। सन्निपाते शिरसो गौरवं भवति,तच्च लङ्घनादिना प्रशाम्यति इति ह्यूयते।

(२७५) सततेति।—सतत—निरन्तर क्रियमाण इत्यर्थः, सेवायाः—परिचर्य्यायाः, मच्चरणयोरिति शेषः, यः अञ्जलिः,—युतौ करौ इत्यर्थः, ("तौ युतावञ्जलिः पुमान्" इति करविवरणे अमरः) तेन मुकुलितस्य—मुकुलतां गतस्य, संहतस्य इत्यर्थः, करसम्पुटस्य—युक्तकरद्वयस्य इत्यर्थः, उष्मभिः,—सन्तापैः, सततकरद्वयसङ्घर्षजनितैरिति भावः, इष्विति।—इषवः,—शराः, अस्यन्ते—क्षिप्यन्ते अनेन इति इष्वसनं—धनुः, तस्य गुणः,—मौर्वी, तेन ये किणाः,—कलङ्कचिह्नानि, अविरतज्याऽऽकर्षणेन इति भावः,तेषां कार्कश्यानि—काठिन्यानि, शत्रुकराणाम् इति शेषः, म्रदय—शिथिलय, कोमलानि कुरु इत्यर्थः, उष्मस्वेदेन किणकार्कश्यम् अपनीयते इति प्रसिद्धिः, शत्रून् धनुर्ज्याऽऽस्फालनत्याजनेन सेवकान् कुर्विति भावः। इह किणाङ्कमार्दवविधानेन विप्रचाणः सार्वकालिकशस्त्रवर्जनव्यापारदर्शनात् हर्षस्य सम्राज असाधारणविक्रमशालित्वं प्रदर्शितम् इति संक्षेपः।

(२७६) येन, पथा इति शेषः। त्रिभुवनस्पृहणीयं—जगत्त्रयलोभनीयं, पन्थानं—मार्गं वीरोचितमिति भावः, मा हासीः,—मा त्याक्षीः। कुपुरुषोचिता—कापुरुषयोग्या, शुचं—शोकम्, अपहाय—परित्यज्य, केसरी—सिंहः, कुरङ्गीमिव—मृगीमिव, कुलक्रमागता—वंशपरम्पराप्राप्ता, राजलक्ष्मीं प्रतिपद्यस्व—गृहाण। नरेन्द्रे—राजनि, प्रभाकरवर्द्धने इति यावत् विषवैद्ये च, ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम्" इति मेदिनी) देवभूयं—देवत्वम्।

(२७७) दुष्टेति।—दुष्टः,—दुर्वृत्तः, क्रूरश्च, गौडः,—गौडाधिप एव, भुजङ्गः,—आशीविषः, तेन जग्धं—भक्षितं, निहतं दष्टञ्चेत्यर्थः जीवितं—जीवनं यस्य तथाभूते।

धरणीधारणाय अधुना त्वं शेषः। (२७८) समाश्वासय अशरणाः प्रजाः। (२७९) क्ष्मापतीनां शिरःसु शरत्सविता इव ललाटन्तपान् प्रयच्छ पादन्यासान्। (२८०) अहितानाम् अभिनवसेवादीक्षादुःखसन्तप्तश्वासधूमसमण्डलैः नखम्पचैः प्रचलित-चूडामणिचक्रवालबालातपैश्च आयाहि कल्माषपादताम्॥

महाप्रलये—स ङ्कटे, समररूपे इति भाव', कल्पान्ते च, शेषे—उदरिक्ते, धरणीधारणाय—पृथ्वीपालनाय, पृथ्वीभारवहनाय च, शेषः,—अवशिष्टः, अनन्तनागश्च। इह श्लिष्टपदोपन्यासेनानेकार्थप्रतीते, श्लेषानुप्राणितं व्यस्तरूपकम्।

(२७८) समाश्वासय—सान्त्वय। अशरणाः,—निराश्रया', प्रभाकरवर्द्धन-राज्यवर्द्धनयोः अकाले कालेन दुरात्मना कवलनात् सम्प्रति निरवलम्बा इत्याशय'।

(२७९) क्ष्मापतीना—राज्ञा, विद्विषामिति भाव', गीवाणाञ्च, पर्व्वतानामित्यर्थः। शरत्सविता इव—शारदीय' सू' इव, ललाटन्तपान्—भालतापिनः, पादन्यासावमाननात् शिर पीडाकरानित्यर्थः, अतिप्रचण्डानित्यर्थश्च, ["असूर्य्य-ललाटयोर्दृशि-तपोः" (३।२।३६ पा०) इति खश्, "अरुर्द्विषद्—" (६।३।६७ पा०) इत्यादिना मुमागमश्च] पादन्यासान्—चरणरूपन्यासवस्तूनि, स्वचरणपातानित्यर्थ', किरणविक्षेपांश्च, प्रयच्छ—निधेहि, सर्व्वान् विद्विषः स्वचरणे प्रणतान् कुरु इत्यर्थः। अत्र विशेषणश्लेषात् श्लिष्टोपमाऽलङ्कारः।

(२८०) अहिताना—शत्रूणाम्, अभिनवेति।—अभिनवा',—अपूर्वा, अननु-ष्ठितपूर्व्वतयेति भाव', याः सेवा',—चरणसंवाहनानि, ताः एव दीक्षाः,—अवश्यक' न-व्रतविशेषा, तासु यत् दुःखं—क्लेश, वह्निरूप इति भाव, तेन सन्तप्तानाम्—उष्णाना, श्वासधूमाना—निश्वासरूपाणामनलजन्याना द्रव्यविशेषाणामित्यर्थः, मण्डलानि—समूहा तै, नखम्पचै,—नखान्—पादनखरानिति यावत्, पचन्ति—तपन्तीति नखम्पचाः तै', ["मितनखे च" (३।२।३४ पा०) इति खश्] प्रणतिकाले दुःखानलसन्तप्त-श्वासवायुसंयोगान् चूडामणिसमूहातपतापसम्बन्धाच्चेति भाव, प्रचलितेति।—प्रचलिताना—प्रलुण्ठिताना, चूडामणीना—शिरोरत्नाना, पादपतितानाम् अहितानामिति भाव', चक्रवालानि—मण्डलानि, तेषां बालातपा',—नवोदितसूर्य्यकिरणकल्पावभासाः तैश्च, कल्माषपादता—चित्रचरणत्व, धूमेन आतपेन च योगात् कृष्णपाण्डुरचरणत्व-मित्यर्थः, ("चित्र किर्म्मीरकल्माषशबलैताश्च कर्बुरे" "कल्माषो यातुधाने च कृष्ण-पाण्डरकृष्णयोः," इत्यमर मेदिन्यौ) तदाख्यराजर्षिप्रवरत्वञ्च। इह शोकोत्थधूमैः चरण-

अपि च (२८१) हते पितरि एकाकी तपस्वी मृगैः सह संवर्द्धितः, सहजब्राह्मण्यमार्दवसुकुमारमनाः, कृतनिश्चयः (२८२) चण्डचापवनाटनिटाङ्कारनादनिर्मदीकृतदिग्गजं (२८३) गुञ्जज्ज्याजालजनितजगज्ज्वरं समग्रम् उद्यत एकविंशतिकृत्वःकृत्तवंशम् उत्खातवान् राजन्यकं परशुरामः

पतितनरपतिचूडामणिचक्रवालबालातपैश्च धूमैश्चकिततया महार्हरत्नभासुरतया चित्रचरणत्वापादनेन स्वगुणत्यागपूर्वकः अत्युत्कृष्टगुणग्रहोऽभूत् इति तद्गुणः अलङ्कारः।

(२८१) पितरि—जमदग्नौ, हते—व्यापादिते, कार्त्तवीर्य्येण इति शेषः एकाकी—असहायः, साधनविवर्ज्जित इति यावत्, ["एकादाकिनिच्चासहाये" (५।३।५२ पा०) इत्याकिनिच्] तपस्वी—तापसः, शान्तात्मा इति भावः। संवर्द्धितः—पालितः, स्वभावभीरुकाकुरङ्गसङ्गात् प्रकृत्या कातरोऽपीति भावः सहजेति।—सहजस्य—स्वाभाविकस्य, ब्राह्मण्यस्य—ब्राह्मणानां भावो ब्राह्मण्यं तस्य, ब्रह्मवर्चसस्य विप्रत्वस्य वा, मार्दवेन—मृदुत्वेन, ब्राह्मणसुलभेनेत्यर्थः, सुकुमारम्—अतिकोमलं मनः—चित्तं यस्य तथाभूतः, सौम्यप्रकृतिरिति यावत्, कृतनिश्चयः—पितृघ्नान् निर्हन्मि एवेति कृतप्रतिज्ञः सन्।

(२८२) चण्डेति।—चण्डानाम्—उग्रदर्शनानां, भीतिप्रदानामित्यर्थः, चापवनानां—धनुःसङ्घानाम्, अटनयः—कोटयः, अग्रभागा इत्यर्थः, ("कोटिरस्याटनिः" इति धनुःप्रकरणे अमरः) तासां टाङ्कारनादेन—टङ्कारध्वनिना, गुणाकर्षणकालिकेनेत्यर्थः, निर्मदीकृताः—मदशून्यीकृताः, दिग्गजाः—ऐरावतादयः येन तथाभूतं, दिग्गजमदशोषणधनुष्टङ्कारमिति यावत्, महाशूरमिति भावः।

(२८३) गुञ्जदिति।—गुञ्जद्भिः—नदद्भिः ज्याजालैः—धनुर्मौर्वीनिचयैः, गुणाकर्षणनिर्तैरिति भावः, जनितः—उत्पादितः, जगतां—भुवनानां, ज्वरः—सन्तापः येन तथोक्तं, समग्रं—सकलम्, उद्यतम्—सङ्ग्रामप्रवृत्तमित्यर्थः, एकेति।—एकविंशतिकृत्वः—एकविंशतिवारान्, ["सङ्ख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्" (५।४।१७ पा०) इति सङ्ख्यावाचकाच्छब्दात् अभ्यावृत्तिगणनेऽर्थे कृत्वसुच्]: कृत्तः—छिन्नः वंशः—कुलं यस्य तथाभूतं, राजन्यकं—क्षत्रियसमूहम्, उत्खातवान्—उन्मूलितवान्। पुरा कार्त्तवीर्य्यार्ज्जुनो हैहयाधिपतिः तपोवनं मृगयाप्रसङ्गादागतः जमदग्निना मुनिना कामधेनुप्रभावेण सत्कृतः। दृष्ट्वा च नृपतिः अतीव प्रीतः कामधेनुं तां गृहीतुमनाः मुनिं ययाचे। मुनिस्तु देवतापितृतिथिक्रियार्थां त

किं पुनः (२८४) नैसर्गिककायकार्कश्यकुलिशायमानमानसो मानिनां मूर्द्धन्यो दे:? तदर्थ एव (२८५) कृतप्रतिज्ञो गृहाण गौड़ाधमजीवितध्वस्तये जीवितसङ्कलनाकुलकाला-काण्डदण्डयात्राचिह्नध्वजं धनुः। न हि अयम् (२८६) अराति-रक्तचन्दनचर्चाशिशिरोपचारमन्तरेण शाम्यति परिभवानल-

---

दातुमैच्छत्। तेन हि दृष्टो राजा बलात्ता जहार। मुनिरपि जीवितसौन तव बाधामज्ञनयत्, एवमन्योऽन्ययो सङ्घर्षे समुत्पन्ने राजा मुनि निहत्य धेन त बलात् स्वगृहमानिनाय। प्रवासप्रत्यागत परशुराम श्रुत्वा तु पितृनिधन महारोषकषायित-चेता हैहयाधिप कार्त्तवीर्य्य प्राक् निहत्य एकविंशतिवार पृथिवीमुत्खातक्षत्रिया कृत्वा तेषा रुधिरप्रवाहेण पितृन् तर्पयामासेति पौराणिकी वार्त्ताऽत्रानुसन्धेया।

(२८४) नैसर्गिकेति।—नैसर्गिकेण—स्वाभाविकेन, काय्कार्कश्येन—देहकाठिन्येन, कुलिशायमानं—कुलिश—वज्रं, तद्वदाचरत्, अतिकठिनतया कुलिशोपममिति भाव, मानस—चित्त यस्य तथाभूत, क्षत्रियत्वादिति भाव, मानिनां—मानवता, मानधनाना-मिति यावत्, मूर्द्धन्य,—शिर स्थित इत्यर्थ,मुख्य इति यावत्, यदि तादृश स्वभावकोमल: ब्राह्मण परशुरामोऽपि अमर्षेण घातकान् शत्रून् निःशेषमुन्मूलितवान्, तर्हि किं पुनः प्रकृतिकठोरक्षत्रवंशसम्भूतस्य भवत सम्बन्धे वक्तव्यम्? अवश्यमेव भवता गौडाधमादय: शत्रव समूलघातं हन्तव्या इत्याशय.। एतेन परशुरामादपि आधिक्यप्रतिपादनात् व्यतिरेकालङ्कार।

(२८५) कृतप्रतिज्ञ,—गृहीतसन्ध, तमहत्वा न प्रत्यावर्त्तिष्ये इत्येवं विहिताङ्गी-कार इत्यर्थ., गौडेति।—गौडाधमस्य—गौडापसदस्य, जीवितध्वस्तये—जीवनध्वंसनाय, जीवितेति।—जीवितानां—प्राणाना, प्राणिनामिति भाव, सङ्कलना—सङ्ग्रहणाय, आकुल,—व्यापृत य: काल,—अन्तकः, यम इत्यर्थ, तस्य अकाण्डे सहसा, दण्डयात्रा—युद्धप्रयाणं, तस्या. चिह्न—लक्ष्म , ध्वज—पताका, तत्स्वरूप मित्यर्थ:, दृश्यते हि भटा युद्धयात्रायां पताकादिभिरुपशोभिता. भवन्ति, भवास्तु असङ्ख्यै: धनुर्भि प्रतिदिश तथाऽयुता, यथा जनानां भवत: धनुष्काण्डेषु प्राणिप्राणहरणपटीयसः यमस्य विडम्बन प्राणहरणप्रयाणे विजयपताकाभ्रान्तिर्भवेदिति तात्पर्य्यं, धनुः,—कार्म्मुकं, गृहाण—प्रतिपद्यस्व, अचिरमेव तस्य प्राणान् नाशय इति समुदितार्थः।

(२८६) अरातीति।—अरातीनां—विद्विषा, शत्रूणामित्यर्थः, रक्तानि—रुधिराणि

पच्यमानदेहस्य देवस्य दुःखदाहज्वरः सुदारुणः। (२८७) निकारसन्तापशान्त्युपायपरिचये हि हिडिम्बाचुम्बनास्वादितमिव रिपुरुधिरामृतम् अमन्दरोपायम् अपायि पवनात्मजेन। (२८८) जामदग्न्येन च शाम्यन्मन्युशिखिशिखा-

एव, चन्दनानि—रक्तचन्दनानि इति यावत्, तेषां चर्चा—चार्चिक्यं, स्वदेहे अङ्गलेपभूतानां तेषां विन्यास इत्यर्थः, स एव शिशिरोपचारः,—शैत्यक्रिया तम्, अन्तरेण—विना, परिभवेति।—परिभवः,—अवमानना, भ्रातृवधरूप इति भावः, स एव अनलः,— अग्निः, तेन पच्यमानः,—दह्यमानः, देहः,—शरीरं यस्य तथाभूतस्य। सुदारुणः,—अतितीव्रः, दुःखेति।—दुःखं—भ्रातृविनाशशोकः इत्यर्थः, स एव दाहज्वरः,—समधिकसन्तापप्रबलः रोगविशेषः; चन्दनलेपनादिशीतोपचारेण दाहज्वरः प्रशाम्यति इति दृश्यते लोके।

(२८७) निकारेति।—निकारेण—स्वेषां परिभवेण, स्वजननिकारजनितः वा, यः सन्तापः,—उष्मा, तस्य शान्तिः,—उपशमः, तस्य उपायः,—साधनं, स एव परिचयः,—रिपूणां निहिंसनं तस्मिन् विषये इत्यर्थः, अरीणां हननेन प्राक् तैः कृतं स्वनिकारं परिशोधयितुम् इति भावः, पवनात्मजेन—भीमेन, हिडिम्बेति।—हिडिम्बा—तन्नामराक्षसी, स्वप्रेयसीति भावः, तस्याश्चुम्बनेन—श्रोष्ठाधरसाश्रपानव्यापारेण इत्यर्थः, आस्वादितमिव—पीतमिव, इत्युत्प्रेक्षा, स्वप्रेयस्याः हिडिम्बायाः राक्षसीत्वात् नूनं तदधरं रुधिररञ्जितमासीत्, भीमसेनेन तच्चुम्बनादवश्यमेव रुधिरस्वादः पूर्वमपि अनुभूत इति भावः, अमन्दरोपायः—नास्ति मन्दररूपः उपायः यस्मिन्निति विग्रहः, मन्दररूपोपायविनाकृतमिति तदर्थः, तथा हि,—मन्दराद्रिः अमृतोद्धरणे उपायभूतः आसीत्, तद्रहितं, मन्दराद्रिणा अनुत्थापितमित्यर्थः, अत एव ततोऽप्युत्कर्षप्रतीतेः व्यतिरेकालङ्कारः, रिपुरिति।—रिपोः,—शत्रोः, दुःशासनस्य इति भावः, रुधिरं—रक्तम्, अमृतमिव—सुधेव, अपायि—पीतम्, दुःसहपराभवस्य साधारणशासनेन प्रतिशोधो नैव भविष्यति इति मत्वा मनुष्योऽपि वृकोदरः राक्षसायमानः दुःशासनस्य वक्षःशोणितममृतमिव अपिबत्, तदनुसृत्य वैरनिर्यातनार्थं त्वयाऽपि कोमलता परित्यक्तव्या, भीषणोपायश्च अवलम्बनीय इति भावः।

(२८८) जामदग्न्येन—परशुरामेण, ["गर्गादिभ्यो यञ्" (४।१।१०५ पा०) इति गोत्रापत्यार्थे यञ्] शाम्यदिति।—शाम्यन्—उपशमं गच्छन्, शत्रुनिधनेनेति भावः, यः मन्युः,—क्रोधः, स एव शिखी—अग्निः, तस्य शिखा—ज्वाला, यस्याः

ईज्ज्वरसुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजह्रदेषु अस्नायि” इत्युक्त्वा व्यरंसीत् ।

देवस्तु हर्षस्तं प्रत्यवादीत्,—“करणीयमेव इदम् अभिहितं (२८९) मान्येन । इतरथा हि मे गृहीतभुवि भोगिनाथेऽपि दायाददृष्टिः ईर्ष्यालोः भुजस्य । (२९०) उपरि गच्छति इच्छति निग्रहाय ग्रहगणेऽपि भ्रूलता चलितुम् । अनमत्सु शैलेषु अपि कचग्रहम् अभिलषति दातुं करः ।

---

ऋज्वरा,—सन्तापा, तैः सुखायमाना,—सुखं वेदयमाना, सुखं निरन्तरमुत्पादयन्त इत्यर्थः, सुखप्रदा इति भावः, [“सुखादिभ्यः कर्तृवेदनायाम्” (३।१।१८ पा०) इति सुखशब्दात् कर्तरि क्यङि शानचि च रूपम्] स्पर्शेन शीतलाः—हिमस्पर्शाः तेषु, [तृतीयासमासोत्तरं विशेषणसमासः.] क्षत्रियेति ।—क्षत्रियाणां—राजन्यानां, क्षतजानि—रुधिराणि, तेषां ह्रदाः,—अगाधजलजलाशयवत् अगाधशोणितपूर्णशरविशेषाः तेषु, अस्नायि—स्नातं, स्वभावकोमलब्राह्मणोऽपि परशुरामः शत्रुरुधिरे स्नात्वा परिभवप्रतीकारं कृतवान्, कठोरप्रकृतिक्षत्रियेण त्वया तदवश्यकर्त्तव्यमेव इत्यत्र न काऽपि विचिकित्सा इति तात्पर्य्यम् । व्यरंसीत्—विरराम, मौनमवलम्बितवानित्यर्थः ।

(२८९) मान्येन—आर्य्येण । इतरथा हि—अन्यथैव, करणीयत्वोपदेशाकीर्त्तनेऽपि इति भावः, यद्वा,—इतरथा हि—अन्यथाऽपि, अरिनिग्रहार्थं काङ्क्षाननुस्वने इत्यर्थः, गृहीतभुवि—भूभारग्राहिणि इत्यर्थः, भोगिनाथे—शेषाहौ, नरनाथे च, दायाददृष्टिः,—दाय—पैतृकं धनं, तत् आदत्ते इति दायादः,—पैतृकस्वत्वहर इत्यर्थः, तस्मिन्निव दृष्टिः,—विरुद्धदर्शनमिति यावत्, मत्तोऽन्योऽपि भूभारग्राही अस्ति इति प्रतिपक्षबुद्धिरिति भावः, ईर्ष्यालोः,—परोत्कर्षासहिष्णोः, परान् विद्वेष्टुरित्यर्थः, [ईर्ष्यां लाति इति विग्रहे “मृगय्वादयश्च” (उ० १ पा० ३८ सू०) इति कुप्रत्ययान्तो निपात्यते] ।

(२९०) उपरीति ।—उपरि—ऊर्द्ध्वदेशे, अन्तरीक्षे इत्यर्थः, गच्छति—चरति, ग्रहगणे—ज्योतिर्गणेऽपि, निग्रहाय—कथं मे उपरि गच्छतीति रोषात् दण्डदानाय, भ्रूलता—भ्रूवल्ली, चलितुं—कुटिलीभवितुमित्यर्थः, इच्छति—अभिलषति, आस्ताम् अन्यस्य येन केन भावेन कश्चिदपि गमिष्यति इति तु दूरत एवेति भावः । शैलेषु—पर्वतेषु, अनमत्सु—नतिमकुर्वत्सु इत्यर्थः, प्राकृतिकजाड्येन, न चाभिमानादिनेति

(२९१) तेजोदुर्विदग्धान् अर्ककरान् अपि चामराणि ग्राहयितुमीहते हृदयम्। (२९२) राजशब्दरुषा मृगराजानामपि शिरांसि वाञ्छति पादः पादपीठीकर्त्तुम्। (२९३) स्वच्छन्दलोकपालस्वेच्छागृहीतानाम् आक्षेपादेशाय दिशाम् अपि स्फुरति अधरः, किं पुनः ईदृशे दुर्जाते जाते? जातामर्षनिर्भरे च मनसि नास्त्येव अवकाशः

---

भावः, करः,—हस्तः, ममेति शेषः, कचग्रहं—केशाकर्षणं, दातुं—कर्त्तुमिति यावत्, मदग्रे सर्वैरेव नतमूर्द्धभिर्भवितव्यमित्येवाभिलषामि इति भावः।

(२९१) तेज इति।—तेजोभिः,—ज्योतिर्भिः, दुर्विदग्धान्—दुर्विनीतान्, दुःशीलानिति यावत्, प्रचण्डानिति भावः, अर्ककरान्—सूर्यकिरणान्। ईहते—चेष्टते, मदन्यः तेजस्विसंज्ञकः कश्चिदपि न स्थितिमान् भवितुमर्हतु लोके; तेन हि सर्वे एव तेजस्विनः निगृहीताः करैः चामरादिकं गृहीत्वा मां सेवन्तामित्येव मे सततसङ्कल्प इति भावः।

(२९२) राजशब्दरुषा—राजेति शब्दः,—मृगराजेत्याख्या, तत्र या रुट्—रोषः तया, मदन्योऽपि राजेति क्रोधेन इत्यर्थः, मृगराजानां—सिंहानां, तत्र पशुजातिभ्य उत्कृष्टसत्त्वादिसम्बन्धात् राजशब्दप्रयोग इति भावः। पादः,—चरणः, ममेति भावः, पादपीठीकर्त्तुम्—अपादपीठानि पादपीठानि कर्त्तुं पादपीठीकर्त्तुं—चरणविन्यासासनीकर्त्तुं ["कृभ्वस्ति—" (५।४।५० पा०) इत्यादौ "अभूततद्भाव इति वक्तव्यम्" (वा०) इति च्विः] सर्व्वे एव राजानः मच्चरणे प्रणमन्तु, न कश्चित् मदन्यः राजशब्दभाक् भवतु इत्याशयः।

(२९३) स्वच्छन्देति।—स्वच्छन्दैः,—स्वाधीनैः, लोकपालैः,—इन्द्रादिभिः, स्वेच्छया—स्वाभिलाषेण, गृहीताः,—आश्रिताः, पाल्यत्वेन स्वीकृता इति यावत् तासां, दिशां—ककुभां, नारीणामिति ध्वनिः; आक्षेपादेशाय—हरणाज्ञायै अपि; अधरः,—रदनच्छदः, स्फुरति—स्पन्दते, दिगधिपतीनामिन्द्रादीनामपि लोकपालत्वमपहृत्य स्वयमेव सर्व्वदिगाधिपत्यं कर्त्तुमिच्छतीव मे मनः इति भावः; यद्वा—आक्षेपादेशाय—निर्भर्त्सनाज्ञार्थं, कथं यूयमेतादृशेष्वननुरूपेषु नायकेषु सुयोग्यं मां विहाय अनुरक्ताः इति ताः तिरस्कर्त्तुमिति भावः। ईदृशे—एवंविधे, दुर्जाते—व्यसने, भ्रातृवधरूपपरिभवे इति भावः, ("दुर्जातं व्यसने क्लीवे" इति मेदिनी) जाते—वृत्ते किं

शोकक्रियाकरणस्य। अपि च (२९४) हृदयविषमशल्ये मुसल्ये जीवति जाल्मे जगद्विगर्हिते गौडाधिपाधमचण्डाले जिह्रेमि शुष्काधरपुटः पोटेव प्रतिकारशून्यं शुचा सूत्कर्त्तुम्। (२९५) अकृतरिपुबलाबलाविलोललोचनोदकदुर्दिनस्य मे कुतः करयुगलस्य जलाञ्जलिदानम्?

---

पुन वक्तव्यमिति शेष, भवदुपदेशात् ईदृशदुर्घटनापातात्वा प्रागेव मे एवंविध अभिलाषः प्रादुर्भूत, अधुना ईदृशदुर्जातजननानन्तर तत्साधने किं पुनर्वक्तव्यम? अवश्यमेव तत् साधयिष्यामि इति भावः। जातामर्षनिर्भरे—अमर्षेणापूरिते इत्यर्थ.। शोकक्रियाकरणस्य—शोकसूचककर्माचरणस्य, अवकाश,—अवसरः, नास्त्येव—न किञ्चिदपि वर्त्तते, अथवा,—किं पुनः इति परत्र अन्वेतव्यम्, तथा च,—ईदृशे दुर्जाते जाते जातामर्षनिर्भरे च मनसि, शोकक्रियाकरणस्य अवकाश नास्त्येव इत्यत्र किं पुन वक्तव्य, प्रागेव तथाविध अभिला जात, अधुना भ्रातुस्तादृशशोचनीयमृत्युना सर्वानेव दुर्विनीतान् दण्डयिष्यामि, नास्ति मे शोकावसर., क्रोध एव शोकस्थानमध्यकार्षीत् इति भाव.।

(२९४) हृदयविषमशल्ये—अन्तरिन्द्रियनिदारुणव्यथाजनके, यद्वा,—हृदये—चेतसि, विषम—दुःसहमित्यर्थः, शल्य—शङ्कु यस्मात् तथाभूते, मनःपीडादायके इत्यर्थ, हृदयनिखातविषमशल्यभूते इत्यर्थो वा, अतिदारुणशल्यास्त्रभूते इति यावत्, मुसल्ये—मुसलेन—अयोऽग्रेण, अस्त्रविशेषेण इत्यर्थ., वध्य,—नाश्य तस्मिन् ["विष्यो विषेण यो वध्यो मुसल्यो मुसलेन य." इत्यमर। मुसलम् अर्हति इति विग्रहेण "दण्डादिभ्यो यत्" (५।१।६६ पा०) इति यत्] जाल्मे—पामरे, ("जाल्म स्यात् पामरे क्रूरेऽसमीक्ष्यकारिणि त्रिषु" इति मेदिनी) जगद्विगर्हिते—त्रिभुवननिन्दिते इत्यर्थ, गौडाधिपाधमचण्डाले—हीनश्वपचसदृशे गौडराजे, जीवति—प्राणिति सति, पोटेव—पुलक्षणयुता स्त्रीव, स्तनश्मश्रुादिमती नारीवेत्यर्थ., ("पोटा स्त्रीपुंसलक्षणा" इत्यमर) शुचा—शोकेन, सूत्कर्त्तुं—सूत्कारम्—अस्पष्टशब्दविशेषं कर्त्तुमित्यर्थ, जिह्रेमि—लज्जे, तादृशसूत्कृत्यादिभि. शोकसूचकाव्यक्तध्वनिविकारा. क्रियन्ते अधमै. पुरुषै, न तु वीरैरिति हृदयम्।

(२९५) अकृतेति।—न कृत—न जनितं, रिपुबलावलाना—शत्रुसैनिकाङ्गनाना, विलोलाना—चञ्चलाना, लोचनाना,—नयनाना उदकै,—अश्रुभिः, दुर्दिन—मेघाच्छन्नमह, येन तथाभूतस्य, रिपुरमणीना नयनासारैरजनितमेघा-

(२९६) अदृष्टगौडाधमचिताधूममण्डलस्य वा चक्षुषः स्वल्पमपि अश्रुसलिलम्? श्रूयतां मे प्रतिज्ञा,—शपामि आर्य्यस्यैव पादपांशुस्पर्शेन, यदि परिगणितैः एव वासरैः (२९७) सकलचापचापलदुर्ललितनरपतिचरणरणरणायमाननिगडां निर्गौडां न करोमि मेदिनीं, ततः तनूनपाति पीतसर्पिषि पतङ्ग इव

कृतवाहस्येत्यर्थः, मे—मम, [ कर्त्तरि षष्ठी ] बाहुयुगलस्य—भुजद्वयस्य, [ शेषे षष्ठी, जलाञ्जलिना सहास्यान्वयः ] जलाञ्जलिदानं—तर्पणार्थम् उदकाञ्जलिदानं, भावे इति भावः, कुतः? न कुतोऽपि जलात् तस्मादन्यस्मादित्यर्थः, रिपुनारीणां हतभर्त्तृकाणां नयनसलिलैरेव अञ्जलिं पूरयित्वा भ्रातरं तर्पयिष्यामि इति भावः ।

(२९६) अदृष्टेति।—न दृष्टं—नावलोकितं, गौडाधमस्य—पापगौडाधिपस्य, चिताधूममण्डलं—शवदाहार्थविरचितप्रज्वलत्काष्ठपुञ्जोद्गतवह्निध्वजसमूहः येन तथाभूतस्य, चक्षुषः,—नेत्रस्य, मे इति शेषः, स्वल्पमपि—किञ्चिदपीत्यर्थः, अश्रुसलिलं—बाष्पवारि, कुतः इति पूर्वेणान्वयः, शत्रोः शवदेहमदृष्ट्वा नैव अस्रुजलं कियदपि पातयिष्यामीत्यर्थः। [ अत्र "अस्रुनेत्राम्बुरोदनञ्चास्रमश्रु च" इत्यमरोक्तेः अश्रुशब्देनैव गतार्थत्वात् सलिलपदमधिकमिति अधिकपदत्व दोषः इत्यवधेयम् ]। पादपांशुस्पर्शेन—चरणरजःस्पर्शेन, तत्स्पर्शं कृत्वेत्यर्थः, शपामि—शपथं करोमि, [ अत्र "शप उपालम्भे" इति वार्त्तिकबलात्, आक्रोशार्थकात् शपतेः आत्मनेपदमेव नियमितम्, इह तु तल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्व दोषः इत्यवधेयम् ] परिगणितैः,—सङ्ख्यातैः, कृतसङ्ख्यतया स्वल्पैरित्यर्थः, वासरैः,—दिवसैः, [ "अपवर्गे तृतीया" (२।३।६ पा०) इति फलप्राप्तेः द्योतितत्वात् कालवाचकात् वासरशब्दादत्यन्तसंयोगे तृतीया ज्ञेया ]।

(२९७) सकलेति।—सकलानां—समग्राणां, चापचापलेन—धनुश्चापल्येन, धनुर्द्धरा एव वयमित्यभिमानेनेति भावः, दुर्ललितानां—दुर्विनीतानां, नरपतीनां—राज्ञां, चरणेषु—पादेषु, रणरणायमानाः,—रणरणशब्द इव आचरन्तः, रणरणस्वनं कुर्व्वन्तः इत्यर्थः, [ रणशब्दस्य "नित्यवीप्सयोः" (८।१।४ पा०) इति द्वित्वे पश्चात् "कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति उपमानात् कर्त्तुः रणरणशब्दात् क्यङि शानचि च रूपमेतदिति ज्ञेयम् ] निगडाः,—लौहशृङ्खलानि यस्याः तथाभूतां, तथा निर्गौडां—निहतगौडपतिं, गौडाधिपवर्ज्जितामित्यर्थः, दुष्टगौडेश्वरं निहत्य सर्व्वानेव अन्यान् दुर्विनीतान् नृपान् विजित्य च लौहशृङ्खलनियमितपादान् यदि तान् कारागा

पातकी पातयामि आत्मानम्" इत्युक्त्वा च (२९८) महा-सन्धिविग्रहाधिकृतम् अवन्तिम् अन्तिकस्थम् आदिदेश,—"लिख्यताम् । आ रविरथचक्रचीत्कारचकितचारणमिथुन-मुक्तसानोः उदयाचलात्, (२९९) आ त्रिकूटकटक-कुट्टाकटङ्कलिखितकाकुत्स्थलङ्कालुण्ठनव्यतिकरात् सुवेलात्,

न निक्षिपामि इति समुदितार्थ, ततः,—तर्हि, पीतसर्पिषि—स्वादितहव्ये, दत्त-हविषीत्यर्थ, घृतप्रक्षेपेण अतिप्रज्वलिते इति भावः, तनूनपाति—अग्नौ, ("अग्नि-र्वैश्वानरो वह्नि······ । ······जातवेदास्तनूनपात् ॥" इत्यमर.)।

(२९८) महासन्धिविग्रहाधिकृत—सन्धिविग्रहेषु—राजकीयसम्मेलन-सङ्ग्राम्य-स्तरविनिर्णयव्यापारेषु, अधिकृत,—अधिकारवान्, महाश्चासौ सन्धिविग्रहाधिकृत-श्चेति तथाविध, कदा सन्धि. कर्त्तव्यः? विग्रहो वा विधेय? इत्यादिसन्त्रणाया-मधिकृतेषु मन्त्रिषु प्रधानमित्यर्थः, सन्धिविग्रहविषयकादेशनिषेधादौ स्वतन्त्राधिकारवन्तम् इत्यर्थो वा, यद्वा,— महति—प्रधाने चासौ सन्धौ—विपक्षैः सह मिलनोपायभूते मैत्रीकरणरूपे व्यापारे इत्यर्थः, विग्रहे— युद्धे च, अधिकृतः,—तत्तत्कर्मसम्पादनार्थं राज्ञा नियुक्तः तम्, अन्तिकस्थ—समीपोपविष्टम्, अवन्तिं—तदाख्यं राजपुरुषम्, अवन्तिदेशवासिनं वा। आ—इति अभिविधौ, स चेह दैशिकः इति नेयं, रवीति।—रवे,—सूर्य्यस्य, यत् रथचक्रं—रथाङ्गं, तस्य चीत्कारेण—घर्घररवेण, चकितै,—भीतैः, चारणमिथुनै.,—गन्धर्वदम्पतिसमूहै., कीर्त्तिसञ्चारकनटवन्दैर्वा, मुक्तः,—त्यक्तः, सानुः,—प्रस्थदेश', समतलभूमिरित्यर्थ. यस्य तथाभूतात्, उदयाचलात्—पूर्व्वपर्व्वतात्, प्राच्यां दिशि उदयाचलपर्य्यन्तमित्यर्थः, ["आङ् मर्यादावचने" (१।४।८९ पा॰) इति कर्मप्रवचनीयतया "पञ्चम्यपाङ्परिभि." (२।३।१० पा॰) इति आङ्शब्दयोगे पञ्चमी]।

(२९९) त्रिकूटेति।—त्रिकूटस्य—लङ्कापुरसन्निहितस्य सुवेलाख्यस्य गिरे, शृङ्गत्रयशोभितपर्व्वतविशेषस्य इत्यर्थ., ये कटका.,—नितम्बभागा', मध्यदेशा इत्यर्थः, ("कटकोऽस्त्री नितम्बोऽद्रे" इत्यमरः) तेषां कुट्टाकेन—कुट्टनकारिणा, छेदकेनेत्यर्थः, ["जल्पभिक्षकुट्टलुण्टवृङः षाकन्" (३।२।१५५ पा॰) इति सूत्रेण कुट्टयति—छिनत्तीति विग्रहे कुट्टयतेः चौरादिकात् कर्त्तरि षाकन्] टङ्केन—पाषाणदारणास्त्रविशेषेण, लिखित.,—खोदितः, काकुत्स्थस्य—रामस्य, लङ्कालुण्ठनव्यतिकरः,—लङ्का—सुवेलगिरिस्थिता स्वनामप्रसिद्धा रावणपुरी, तस्या लुण्ठनमेव—विध्वंसनमेवेति यावत्, व्यतिकरः,—घटना यस्य तथाभूतात्, सुवेलात्—त्रिकूटाख्यगिरेः, दक्षिणस्याः

(२००) आ वारुणीमदस्खलितवरुणवरनारीनूपुररवमुखर-कुहरकुक्षेः अस्तगिरेः, (२०१) आ गुह्यकगेहिनीपरिमल-सुगन्धिगन्धपाषाणवासितगुहागृहाच्च गन्धमादनात् सर्वेषां राज्ञां,—(२०२) 'सज्जीक्रियन्तां कराः करदानाय शस्त्रग्रह-

स्थितादिति शेष, त्रिकूट-सुवेलयोरेकत्वेन गिरेर्वाचकतया, भगवतो रामस्य विजय-वार्त्ता या त्रिकूटगिरिगात्रे टङ्केन अङ्कापिता सा सुवेलगिरावपि, तेन दक्षिणस्यां दिशि श्रीरामचन्द्र-विजयवार्त्ताङ्कितसुवेलगिरिपर्य्यन्तमिति समुदितार्थः। तथा च वाल्मीकीये "ततस्तमक्षोभ्यबलं लङ्कायां नृपतेश्चराः। सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥" रा० यु० ३१ स० १ श्लो०।

(२००) वारुणीति।—वारुणी—सुराभेदः, तस्याः मदे —तत्पानजनित-विकारेणेत्यर्थः, स्खलिताः,—मत्ततया प्रभ्रष्टचरणा इति भाव, या. वरुणस्य—पश्चिम-दिक्पालस्य, वराः,—उत्तमाः, नार्य्यः,—स्त्रियः, तासां नूपुररवेण—चरणनिहितानां मञ्जीराणां निनादेन, मुखरः,—सशब्दः, कुहरकुक्षिः,—गह्वराभ्यन्तरं यस्य तथाभूतात्, अस्तगिरेः,—अस्ताचलात्, पश्चिमदिगवस्थितादिति भाव, यस्मिन्नस्तगिरौ पश्चिमाशा-ऽधिपतेः वरुणस्य वरवर्णिन्यः वारुणीं सुरां निपीय मत्ततया पतित्वा सतत मञ्जीररवेण गह्वरं मुखरयन्ति, पश्चिमायां दिशि तदस्ताचलपर्य्यन्तमिति समुदितार्थः।

(२०१) गुह्यकेति।—गुह्यकाणां—देवयोनिविशेषाणां, निधिरक्षकयक्षविशेषाणा-मित्यर्थ, याः गेहिन्यः,—नार्य्यः, तासां परिमलेन—अतिमनोहरगन्धेन, गात्रानुलेपन-घृष्टकुङ्कुमादिगन्धेनेत्यर्थः, ("स्यात् परिमलोऽतिमर्दोतिमनोहरगन्धयोश्चापि" इति मेदिनी) सुगन्धयः,—सौरभवन्त, ये गन्धपाषाणाः,—गन्धप्रधाना शिला, गन्धकधातुमय्यः शिला वा, तैर्वासितानि—सुरभितानि,गुहाः,—कन्दराः, गृहाणीव—भवनानीव यत्र तथाभूतात्, गन्धमादनात्—तदाख्यपर्व्वतात्, उत्तरस्यां दिशि गन्धमादनपर्व्वतपर्य्यन्तमित्यर्थ [सर्वत आङ्योगे पञ्चमी]। अत्रायमाशयः,—गन्धमादनशैलो हि निसर्गगन्धवासिताभि शिलाभिः सङ्कीर्ण, तत्रापि गुह्यकगेहिन्यः शयाना अनुलेपनभूतघृष्टकुङ्कुमादिसमुद्भूतेन निधुवन-विलासजनितेन वा परिमलेन गुहागृहाणि निरन्तरं सुगन्धीनि कुर्वन्तीति, अपूर्वविलास-भूमिरेष भवति हि. तेन तत्पर्य्यन्तमिति भाव, सर्वेषां राज्ञां—समस्तानां नराधिपानां, [ "षष्ठी शेषे" (२।३।५० पा०) इति सम्बन्धमात्रविवक्षायां षष्ठी] लिख्यताम् इति योजना, एवमिति शेषः।

(२०२) किं तत् यल्लिखितुमुपदिश्यते इत्याशङ्कायामाह, सज्जीत्यादि।—

णाय वा ; रुद्ध्यन्तां दिशः चामराणि वा ; नम्यन्तां शिरांसि धनूंषि वा ; कर्णपूरीक्रियन्ताम् आज्ञा मौर्व्यो वा ; (२०३) शेखरीभवन्तु पादरजांसि शिरस्त्राणि वा ; घटन्ताम् अञ्जलयः करिघटाबन्धा वा ; (२०४) मुच्य[न्ता]ं भूमय इषवो वा ; समालम्ब्यन्तां वेत्रयष्टयः कुन्तयष्टयो वा ; (२०५) सुदृष्टः क्रियताम् आत्मा मच्चरणनखेषु

करा —हस्ता , करदानाय—राजभागदानाय, ( इति सन्धिप्रस्ताव' ), शस्त्रग्रहणाय—युद्धकरणायेति भाव , ( इति विग्रहप्रस्ताव' ) सज्जीक्रियन्ता—प्रवर्त्यन्ता, त्वर्यन्तामित्यर्थ', सर्वे एव मदधीनता स्वीकृत्य सम्राजे मह्य कार ददतु, तदन्यथा चेत् युद्ध कुर्वन्तु इति समुदितार्थ ; मा सम्राट्त्वेन न स्वीकुरुथ चेत् तदा युद्धे युष्मान् विजित्याचिरादेव मदधीनता नेष्यामीत्याशय: । एवमुत्तरत्रापि । दिश',—आशा', रुद्ध्यन्ता—राज्य विहाय पलाय्य आश्रीयन्ता, चामराणि वा—वालव्यजनानि वा, रुद्ध्यन्ता—धा[र्य]न्ता, मत्सेवा[र्थ]मि[ति] भाव, युष्माभिरिति शेष' । शिरासि—मस्तकानि, नम्यन्ता—मच्चरणयो: प्रणिपत्यन्ता, धनूषि—चापा. वा, नम्यन्ता—ज्यारोपणेन आकृष्यन्ता, तानि युद्धाय सज्जितानि क्रियन्ताम् इत्यर्थ', युष्माभि इति शेष । आज्ञा',—आदेशा'. मदीया इति शेष , कर्णपूरीक्रियन्ता—श्रवणानामलङ्कारीक्रियन्ता, कर्णभूषण यथा सतत कर्णे स्थित शोभते तथा मदीयाज्ञा नियत कर्णेन्द्रिये सादर निशीयतामिति भाव , अथवा मौर्व्य,—शिञ्जिन्य, धनुर्गुणा इत्यर्थ, ( "मौर्वी ज्या शिञ्जिनी गुण" इत्यमर. ) कर्णपूरी[क्रि]यन्ताम्—आकर्णमाकृष्यन्ता, युद्धार्थम् इति भाव । इह आज्ञाना मौर्वीणाञ्च कर्णपूरीकरणयो' सन्धिविग्रहोपध.यकयोरेकदा कर्तुमशक्यत्वाद्विरोध, स चैकपक्षा-श्रयणपर्यवसान , तुल्यवत्त्वमिहाज्ञामौर्वीकर्णपूरीकरणयो द्वयोरपि, तेन तयोरेकशेष कर्तुमशक्यत्वात् सन्देहस्यैव पर्यवसानतया विकल्पालङ्कृति इत्यवधातम् ।

(२०३) पादरजासि—पदधूलय , मदीयानीति भाव , शेखरीभवन्तु—शिरोभूषण-भूतानि भवन्तु, शिरस्त्राणि वा—युद्धकाले शिरोरक्षार्थ शिरोबन्धनविशेषा वा शेखरी-भवन्त्वित्यन्वय; युष्माकमिति शेष' । अञ्जलय ,—युक्तकरा', युक्तकरद्वयम् इत्यर्थ., घटन्ता —जायन्ता, प्रणतये करद्वय सयोजयन्ताम् इत्यर्थ , करिघटाबन्धा वा—हस्तिव्यूहरचना: वा, घटन्ता—भवन्तु इत्यर्थ: ।

(२०४) भूमय:,—राज्यानीति यावत्, इषव',—शरा वा, मुच्यन्ता—त्यज्यन्ताम् । वेत्रयष्टय.,—वेत्रलता', समालम्ब्यन्ता—गृह्यन्ता, राजगृहेषु भृत्यभावेन स्थीयतामिति भाव., कुन्तयष्टय.,—कुन्ताख्यास्त्राणि वा,समालम्ब्यन्ता, युष्माभिरिति शेष ।

(२०५) मच्चरणनखेषु—मम पादनखरेषु, स्वच्छतया दर्पणरूपेष्विति

कृपाणदर्पणेषु वा। (२०६) परागतोऽहम्'। पङ्गोः इव मे कुतो निवृत्तिः तावत्, यावन्न कृतः सर्वद्वीपान्तरसञ्चारी सकलनरपतिमुकुटमणिशिलालोकमयः पादलेपः" इति कृतनिश्चयश्च (२०७) मुक्तास्थानो विसर्जितराजलोकः स्नानारम्भाकाङ्क्षी सभाम् अत्याक्षीत्। उत्थाय च स्वस्थवन्निःशेषम् आह्निकम् अकार्षीत्; अगलच्च दर्पप्रसर इव श्रुतप्रतिज्ञस्य शास्यदुत्था दिवसः त्रिभुवनस्य।

---

भावः, आत्मा—स्वः, सुदृष्टः,—सुष्ठु निरीक्षितः, प्रतिविम्बित इत्यर्थः, मयि प्रणिपातः क्रियतामिति फलितार्थः, कृपाणाः,—असय एव, दर्पणाः,—मुकुराः, तेषु वा, आत्मा सुदृष्टः क्रियतां, युद्धार्थं रणे गृहाणेति भावः, एता विकल्पपरम्पराप्रतिपादितोक्तयः युयुत्सोः हर्षस्य लोकाधिकसत्त्ववत्त्वज्ञापिकाः, तेन तु सामरिकनीत्यनुसारतः स्वकीयशूरसङ्घहृदयोल्लासनाय समीरिता, नाभिमानप्रदर्शनाय इति बोद्धव्यम्।

(२०६) परागतः,—प्रस्थितः, विजयार्थमिति शेषः। पङ्गोरिव—पादविकलस्येव, मे—मम, कुतः,—कथमित्यर्थः, निवृत्तिः,—समरप्रयाणात् विरतिः, प्रत्यावर्त्तनमित्यर्थः, भवेदिति शेषः। सर्वेति।—सर्वेषां—सकलानां, सप्तानामष्टादशानां वा इति भावः, द्वीपानां—जम्बूशाकादीनामित्यर्थः, अन्तरे—मध्ये, सञ्चरति—भ्राम्यति इति तथोक्तः, सर्वद्वीपाभ्यन्तरविहारीत्यर्थः, सकलेति।—सकलानां—सर्वेषां, नरपतीनां—राज्ञां, मुकुटेषु—किरीटेषु, या मणिशिलाः,—रत्नानि इत्यर्थः, तासाम् आलोकमयः,—मयूखमयः, अगण्यराजन्यवरेण्यमुकुटमणिमरीचिचयचर्चित इति यावत्, पादलेपः,—चरणप्रलेपः, यद्वा,—पादलेपः,—पादौ लिप्येते—वेष्ट्येते अनेनेति तथोक्तः, पादुका इत्यर्थः, कृतः, मयेति शेषः, यावत् सर्वे नरपतयः मच्चरणयोः न प्रणिपतेयुः, तावन्नाहमस्मात् व्यापारात् विरमेयमिति भावः। अत्र "सर्वद्वीपान्तरसञ्चारिसकलनरपति—" इत्यादि समस्तपाठः युक्तियुक्ततया प्रतिभाति, "सर्वद्वीपान्तरसञ्चारी" इत्यत्र सञ्चारीति पादविशेषणस्य कर्तृगामितया मुख्यार्थबाधं विना अन्यत्रान्वयस्य व्युत्पत्तिविरुद्धत्वात् इति दिक्।

(२०७) मुक्तास्थानः,—त्यक्तसभः, ("आस्थानी क्लीबमास्थानं सभासमितिसंसदः" इत्यमरः)। स्नानारम्भाकाङ्क्षी—स्नानक्रियामभिलषन्। स्वस्थवत्—प्रकृतिस्थ इव, निःशेषं—सकलम्, आह्निकं—दैनिकं, सन्ध्यावन्दनादिक्रियाकलापव्यापार-

(३०८) ततश्च निजाधिकारापहारभीत इव भगवति अपि क्वापि गते गततेजसि अहिमभासि, तामरसवनेषु अपि निगूढशिलीमुखालापेषु त्रासादिव सङ्कुचत्सु, (३०९) विहगगणेषु अपि समुपसंहृतनिजपक्षविक्षेपनिश्चलेषु भिया इव

---

मित्यर्थः। अगलत्—अतिचक्राम, अक्षीणोदित्यर्थः, सायमभवत् इति यावत्। दर्पप्रसर इव—अहङ्कारावेग इव। श्रुतप्रतिज्ञस्य—शपथं श्रुतवत इत्यर्थः। शाम्यदुष्मा—शाम्यन्—अपगच्छन्, क्षयोन्मुख इत्यर्थः, उष्मा—तेजः, औष्ण्यञ्च यस्य तथाभूतः, ("उष्मो घर्मोऽंशुणि ज्यैष्ठे पुमानुष्मा स्त्रिया त्विषि" इति कोषात्) उषमशब्दो नान्तोऽदन्तश्च दृश्यते, तेन नान्तस्यैवोषमशब्दस्यायं प्रयोग इति ज्ञेयम्। यो हि राज्ञः हर्षस्य एव दर्पोद्दीप्तं वचनमश्रौषीत्, तस्य गर्व्वः सपदि विलुप्तोऽभूत्, का कथा अन्येषां, स्वयं दिवसोऽपि स्वाभाविकमुष्म विहाय भयात् शशामेति तात्पर्य्यम्।

(३०८) "ततश्च" इत्यस्य "प्रदोषास्थाने नातिचिरं तस्थौ" इति परेण सम्बन्धः। निजेति।—निजस्य—आत्मनः, अधिकारस्य—स्वामित्वस्य, जगत्प्रतपनरूपे कर्म्मणि इति भावः, अपहारात्—अपहरणकरणात्, भीते इव—त्रस्ते इव, हर्षं त्रिलोक्याः दर्पोन्मूलनाय बद्धपरिकरं दृष्ट्वेति भावः, गततेजसि—निष्प्रभे इत्यर्थः, अहिमभासि—उष्णरश्मौ, रवौ इत्यर्थः, क्वापि गते—अदर्शनं प्राप्ते इत्यर्थः, अस्तमिते इति भावः। निगूढेति।—निगूढाः,—गुप्ताः, नायकस्य प्रभाकरस्य अस्तमनमवलोक्य विरहदुःखादिव पद्मानां मुकुलीभावेन तद्रसपिपासूनां भ्रमराणां सपदि तत्रावरुद्धत्वादिति भावः, शिलीमुखानां—भ्रमराणां, वाणानाञ्च, ("अलि-वाणौ शिलीमुखौ" इत्यमरः) आलापाः,—गुञ्जनानि इत्यर्थः, शब्दपु पातशब्दा इत्यर्थश्च येषु तथाभूतेषु, तामरसवनेषु—पद्मकाननेषु, ("अथ तामरसं पद्मे ताम्र-काञ्चनयोरपि" इति मेदिनी) त्रासादिव—भयादिव, सङ्कुचत्सु—निमीलत्सु, अन्तराले स्थित्वा गुप्तभावेन मन्त्रणाकरणात् कथमेते एवं जल्पन्ति, किमेषां मनसि वर्त्तते इति विविच्य इति भावः, भ्रमराः शरपतनभयादिव कमलाभ्यन्तरमन्तर्गृहमशिश्रियन्नित्यपि व्यज्यते, लोकेऽपि गृहाभ्यन्तरे प्रच्छन्नं मन्त्रयतां केषाञ्चित् अव्यक्तगुञ्जनमाकर्ण्य गृहाधिकारी भयात् सङ्कुचितो भवतीत्यपि दृश्यते।

(३०९) विहगगणेषु—विहायसा—आकाशमार्गेण गच्छन्ति इति विहगाः, ["डे च विहायसो विहादेशो वक्तव्यः" (वा०) इति डः] तेषां गणाः तेषु, पक्षिवृन्देषु इत्यर्थः, समुपेति।—समुपसंहृतः,—सङ्कुचितः इत्यर्थः, निजपक्षाणां—स्वपतत्राणां,

अप्रकटीभवत्सु, भुवनव्यापिनीं सन्ध्यां प्रतिज्ञामिव मानयति नतशिरसि घटिताञ्जलिवने जने सकले, (२१०) स्वपदच्युतिचकितदिक्पालदीयमानाभ्रंलिहलोहप्राकारवलयासु इव बहलतिमिरमालातिरोधीयमानासु दिक्षु प्रदोषास्थाने न अतिचिरं तस्थौ। (२११) नमन्नृपलोकलोलांशुकपवनकम्पितशिखैः दीपिकाचक्रवालैः अपि प्रणम्यमान् इव प्राहिणोत् लोकं, प्रतिषिद्धपरिजनप्रवेशश्च शयनगृहं

---

विक्षेप,—चालनमित्यर्थः यैः तथाभूताः, अत एव निश्चलाः,—अचञ्चलाः, स्थिरा इत्यर्थः तेषु, [ विशेषणसमासः ] अन्यत,—समुपसंहृत,—समाप्तिं गत, सपदि स्वयमेव विनष्ट इत्यर्थ, समाज. हर्षस्याभ्युदयं दृष्ट्वेति भाव, निजपक्षाणाम्—स्वाश्रसहायाना, यः विक्षेपः,—प्रसार इत्यर्थः, तेन निश्चला: तथाभूतेषु इत्यर्थः, भियेव—त्रासेनेव, हर्षादिति शेष, एकत्र,—स्वपक्षसङ्कोचात्, अथवा—स्वसहायाल्पलाच इति भावः, अप्रकटीभवत्सु—अप्रकाशता गच्छत्सु। भुवनव्यापिनी—तमसा जगदावरणकारिणी, जगति ख्यातिमापन्नामित्यर्थश्च, प्रतिज्ञामिव—शपथमिव, हर्षस्य इति भावः। मानयति—पूजयति, आद्रियमाणे इत्यर्थ। नतशिरसि—प्रणतमस्तके इत्यर्थः। घटिताञ्जलिवने—कृताञ्जलिसमूहे, सन्ध्यासमागमात् शिरसि अञ्जलिं बद्धा उपासितुं प्रवृत्ते इत्यर्थः।

(२१०) दिक्षु—आशासु, स्वपदेति।—स्वस्य—आत्मनः, पदात्—अधिकारात्, लोकपालकत्वरूपात् इति भाव, च्युतिः,—भ्रंशः, तस्मात् तेन वा चकिता,—शङ्किता, ये दिक्पालाः,—दिगधिपतय इन्द्रादयः, तैः दीयमानं—निर्मीयमानम्, अभ्रंलिहं—गगनस्पर्शि, [ "वहाभ्रे लिहः" (३।२।३२ पा०) इति खश् ] लोहप्राकारवलयम्—आयसवरणमण्डलं यासु तथाविधासु इव, ("प्राकारो वरणः सालः" इत्यमरः) बहलेति।—बहलया—प्रभूतया, तिमिरमालया—अन्धकारपटलेन, तिरोधीयमानासु—आव्रियमाणासु सतीषु, प्रदोषास्थाने—रजनीमुखीयसभाभवने, सायमुपवेशनार्हसभामण्डपे इत्यर्थः।

(२११) नमदिति।—नमता—प्रणिपतता, नृपलोकानां—राजजनानां, लोलस्य—चञ्चलस्य, सम्भ्रमनमनक्षोभादिति भाव, अंशुकस्य—वसनस्य, पवनेन—वायुना, कम्पिता,—सञ्चालिताः, शिखाः,—ज्वालाः येषां तैः, दीपिकाचक्रवालैः,—दीपमण्डलैः। लोकं—परिजनमिति भावः, प्राहिणोत्—विससर्ज, स्वसमीपादिति

प्राविशत्, उत्तान सुप्तोच अङ्गानि शयनतले। दीपद्वितीयञ्च तम् अभिसर इव लब्धावसरस्तरसा भ्रातृशोको जग्राह। जीवन्तमिव हृदये निमीलितलोचनो ददर्श अग्रजम्। (२१२) उपर्य्युपरि भ्रातृजीवितान्वेषिण इव प्रसस्रुः श्वासाः। धवलांशुकपटान्तेन इव च अश्रुजलप्लवेन मुखम् आच्छाद्य निःशब्दम् अतिचिरं रुरोद; चकार च चेतसि,—(२१३) "कथं नाम आकृतेः तादृश्या युक्तः परिणामोऽयम् ईदृशः? पृथुशिलासङ्घातकर्कशकायबन्धात् तातात् अचलात् इव लोहधातुः

---

शेषः, यथास्थानं वा। प्रतिषिद्धेति।—प्रतिषिद्धः,—निवारितः, परिजनानां—भृत्यानामिति यावत्, प्रवेशः,—अन्तर्गमनं येन तथाभूतः। उत्तानः,—ऊर्द्धमुखशायी, ("उत्तानमगभीरे स्यादूर्द्धास्यशयिते त्रिषु" इति मेदिनी) शयनतले—शय्यायां, मुमोच—प्रससारेत्यर्थः। दीपद्वितीयं—दीपमात्रसहचरमित्यर्थः, एकाकिनमिति भावः, तं—हर्षम्, अभिसर इव—दस्युरिव, लब्धावसरः,—प्राप्तावकाशः, एकाकित्वादिति शेषः, तरसा—बलेन जग्राह—आचक्राम, तदानीं भ्रातृशोकः समुदियाय इति भावः। भीषणो दस्युः यथा कमप्येकाकिनं दृष्ट्वा बलादाक्रामति, तथैव शोकः सपदि तद्धृदयमधिचकारेति समुदिततात्पर्य्यम्।

(२१२) उपर्य्युपरि—अविरतमित्यर्थः, ["उपर्य्यध्यधसः सामीप्ये" (८।१।७ पा०) इति सामयिकसामीप्ये द्विर्वचनं] भ्रातृजीवितान्वेषिण इव—भ्रातृजीवनस्यानुसन्धायिन इव, श्वासाः,—निश्वासमरुतः, अन्वेषणजश्रमेणेति भावः, प्रसस्रुः,—निर्गच्छन्ति स्म। धवलांशुकपटान्तेन इव—श्वेतवसनाञ्चलेन इव, अश्रुजलप्लवेन—बाष्पवारिपूरेण, अश्रुजलमेव तस्य क्रन्दनकालिकमुखाच्छादनवस्त्रकार्य्यं चकार इति भावः, लोकोऽपि सह्ययन्त्रणोदये वस्त्राञ्चलेन मुखमावृत्य रोदिति इति दृश्यते।

(२१३) नाम—वितर्के। तादृश्याः,—रमणीयायाः, सुदृढायाश्चेत्यर्थः, ईदृशः,—एवंविधः, शोच्यः इत्यर्थः, परिणामः,—विपाकः, अपमृत्युरित्यर्थः, युक्तः,—उचितः। पृथ्विति।—पृथुः,—विशालः, ["प्रथिम्रदि—" (उ० १ पा० २९ सू०) इत्यादिना कुः सम्प्रसारणञ्च] शिलासङ्घातः,—पाषाणस्तूप इत्यर्थः, तद्वत्, तेन च कर्कशः,—कठिनः, कायबन्धः,—कलेवरघटनं यस्य तथाविधात्, तातात्—पितुः, अचलात्—पर्वतात्, लोहधातुरिव—लोहनामा खनिजः पदार्थविशेषः इव,

कठिनतर आसीत् आर्य्यः। कथञ्च अस्य मे (३१४) हत-हृदयस्य आर्य्यविरहे सकृदपि युक्तम् उच्छ्वसितुम्? (३१५) इयं सा प्रीतिर्भक्तिः अनुवृत्तिर्वा? बालिशोऽपि कः सम्भावयेत् आर्य्यमरणे सञ्जीवितम्? (३१६) तत् तादृशम् ऐक्यम् एकपद एव क्वापि गतम्? अयत्नेन एव हतविधिना पृथक् कृतोऽस्मि। (३१७) दग्धरोषान्तरितशुचा सुचिरं रुदितमपि न मुक्तकण्ठं गतघृणेन मया!! सर्वथा (३१८) लूतातन्तुच्छटाच्छिदुराः तुच्छाः प्रीतयः प्राणिनाम्।

---

कठिनतरः,—अतिकठिनः; पाषाणोत्पन्नमपि लौहं पाषाणादपि कठिनं भवतीति प्रत्यक्षमिति भावः, अचलादुद्भूतोऽपि लौहधातुर्यथा ततोऽपि कठिनतरः दृश्यते, तथैव पितुरपि अग्रजः दृढ़कायः आसीदिति तात्पर्य्यम्।

(३१४) हतहृदयस्य—भग्नोरस्कस्य, भ्रातृसमसहायवञ्चितत्वादिति भावः, सकृदपि—एकं क्षणमपि, उच्छ्वसितुं—प्राणितुम्।

(३१५) इयमिति।—सा प्रीतिः,—तथाविधः दृढ़तरः उभयोः प्रणयः, सा भक्तिः,—पूज्यतया अकपटः अनुरागः, सा अनुवृत्तिः,—आनुगत्यम्, इयम्—ईदृशभावं प्राप्तेत्यर्थः। बालिशोऽपि—मूर्खोऽपि। सम्भावयेत्?—आशंसेत?।

(३१६) तत्—तातजीवद्दशायां परोत्कर्षमागतम्, आ बाल्यादेकत्र शयनासनादिना प्रवृद्धमिति भावः, तादृशं—सर्व्वलोकविदितमित्यर्थः, ऐक्यम्—एकीभावः, अभिन्नभावः इत्यर्थः, एकपद एव—तत्काल एव, आर्य्यस्य मरणादनन्तरमेवेत्यर्थः ("एकपदं तत्काले नपुंसकं वर्त्मनि स्त्री स्यात्" इति मेदिनी)। अयत्नेन—यत्नं विना एव, अनायासेनैवेत्यर्थः, हतविधिना—दुर्दैवेन, पृथक् कृतः,—विभिन्नः कृतः, वियोजित इति भावः।

(३१७) दग्धेति।—दग्धेन,—हतेन, अतिहेयेनेति भावः, रोषेण—अरातिं प्रति कोपेन, अन्तरिता—व्यवहिता, तिरोहितेति यावत्, शुक्—शोकः यस्य तथा-भूतेन, अरातिनिधनाय क्रोधोदयात् शोकं विस्मरतेत्यर्थः, गतघृणेन—निर्दयेन, ("घृणा दयाऽनुकम्पा स्यात्" इत्यमरः) मया मुक्तकण्ठम्—उच्चैः, सुचिरं—दीर्घकालं, न रुदितमपि—न क्रन्दितमपि।

(३१८) प्रीतयः,—प्रणयाः, लूतेति।—लूतातन्तुच्छटा—लूता—ऊर्णनाभः

(३१९) लोकयात्रामात्रनिबन्धना बान्धवता, यतोऽहमपि नाम पर इव आर्य्ये स्वर्गस्थे स्वस्थ इव आसे। किञ्च दैव-हतकेन फलम् आसादितम् ईदृशि परस्परप्रीतिबन्धनिर्वृत-हृदये सुखभाजि भ्रातृमिथुने विघटिते? (३२०) तथा चन्द्र-मया इव जगदाह्लादिनो लोकान्तरीभूतस्य लग्नचिताग्नय इव आर्य्यस्य त एव दहन्ति गुणाः" इत्येतानि च अन्यानि च

---

जालकरः कीटविशेषः इति यावत्, ("लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः" इत्यमरः) तस्याः तन्तुच्छटा—सूत्रनिचयः, तद्वत् छिद्राः,—अक्लेशेन छेदार्हा इत्यर्थः, अत एव तुच्छाः,—हेयाः, असारत्वेन गर्हणीया इत्यर्थः।

(३१९) लोकयात्रामात्रनिबन्धना—लोकव्यवहारमात्रफला, संसारयापनैक-मात्रप्रयोजना इति यावत्. बान्धवता—बन्धुत्वम्; स्वार्थसाधनार्थमेव लोके बन्धुत्वं क्रियते, न तु अविकृतगाढ़ानुरागेण परोपकरणार्थम् इति भावः। नाम—कुत्सायां, विस्मये वा। पर इव—अन्य इव, सोदरभिन्न इव इत्यर्थः। स्वस्थ इव—प्रकृतिस्थ इव, यथावत् नित्यक्रियाकरणात् सुखित इव इत्यर्थः, आसे—तिष्ठामि। ईदृशि—एवम्प्रकारे, परस्परेति।—परस्परेषाम्—अन्योऽन्येषां, प्रीतिबन्धेन—प्रणयभरेणेत्यर्थः, निर्वृतं—सुस्थं, सुखितमिति यावत्. ("निर्वृतिः स्वस्थितावस्तं गमने च सुखे स्त्रियाम्" इति मेदिनी) हृदयं—चेतः यस्य तथाभूते, सुखभाजि—सुखभोगनिरते, भ्रातृमिथुने—सोदरयुगले, विघटिते—विच्छिन्ने, जाते सति इति शेषः, दैवहतकेन—दग्धविधिना, किं फलं—को लाभः, आसादितम्?—प्राप्तम्? अस्मत्सम्बन्धनाशं सम्पाद्य दुष्टविधेः कः फललाभोऽभूदिति भावः; दुर्जना हि फलमनपेक्ष्यैव कौतुकमात्रविनोदाय परेषामनिष्ट-सम्पादने प्रवर्त्तन्ते इति तात्पर्य्यम्। "स्त्रीपुंसौ मिथुनं द्वन्द्वम्" इत्यमरोक्तेः मिथुन-शब्दस्य स्त्रीपुंसयोरभिधायकतया, अत्र सामान्यतो युगलार्थे प्रयोगे अवाचकत्वदोषग्राह-ग्रस्त इति विभाव्यम्।

(३२०) लोकान्तरीभूतस्य—परलोकप्रस्थितस्य, मृतस्येत्यर्थः, आर्य्यस्य—ज्येष्ठस्य, चन्द्रमया इव—इन्दुमयूखव्याप्ता इव, सन्तापादिहरणेन प्रीणनादिति भावः, तथा—तादृशाः, सर्व्वलोकानुभूताः इत्यर्थः, जगदाह्लादिनः,—भुवनवासिजनानाम् आनन्दवर्द्धना इत्यर्थः, ते एव—जीवति आर्य्ये ये तदीया गुणाः सर्व्वसन्तापनाशकाः स्युः, ते एवेत्यर्थः, गुणाः,—वात्सल्यशौर्य्यदाक्षिण्यादयः, लग्नेति।—लग्नाः,—संसक्ताः, चिताग्नयः,—चितानलाः, मृतस्य तस्य दाहकालिका इति भाव येषु तथाभूता इव,

हृदयेन पर्य्यदेवयत्। प्रभातायाञ्च (३२१) शर्व्वर्य्यां प्रातरेव प्रतीहारम् आदिदेश अशेषगजसाधनाधिकृतं स्कान्दगुप्तं द्रष्टुम् इच्छामि इति।

(३२२) अथ युगपत् प्रधावितबहुपुरुषपरम्पराऽऽहूयमानः, स्वमन्दिरात् (३२३) अप्रतिपालितकरेणुः चरणाभ्यामेव सम्भ्रान्तः, ससम्भ्रमैः दण्डिभिः उत्सार्य्यमाणजानपदः,

चिताग्निभिः सह संयुक्ता इव इति यावत्, दहन्ति—भस्मीकुर्व्वन्ति, इदानीमिति शेषः, सर्व्वलोकजीवनभूताः दाहनाशनाः शीतस्पर्शा जलादयोऽपि अग्निसम्पर्कादुत्तप्ता यथा दहन्ति, तथा तर्पयितारः मृतस्य तस्य आर्य्यस्यापि गुणाः चितानलसम्पर्कादुष्णाः सन्तः इदानीं निरतिशयं मां दहन्तीति भावः; तस्य गुणराशीनां स्मृत्या शोकाः अतीव प्रज्वलिताः सन्तः मां सन्तापयन्तीति तात्पर्य्यम्। पर्य्यदेवयत्—परिदेवितवान्, विललापेत्यर्थः।

(३२१) शर्व्वर्य्यां—रात्रौ। प्रतीहारं—दौवारिकम्, [ "उपसर्गस्य—" (६।३।१२२ पा०) इत्यादिना पाक्षिको दीर्घः अमनुष्ये इति निषेधात् कथमिह प्रयुक्तः? इत्याशङ्कायाम् उट्टङ्कितं ज्ञानेन्द्रसरस्वतीभिः,—"कथं तर्हि दौवारिके प्रतीहारशब्दप्रयोग इति चेत्, अत्राहुः,—प्रतिहारो द्वारं, तात्स्थ्यात्तच्छब्दमिति" ]। अशेषगजसाधनाधिकृतं—समस्तगजारोहिसैन्याध्यक्षम्।

(३२२) "अथ" इत्यस्य "स्कान्दगुप्तः विवेश राजकुलम्" इति परेण सम्बन्धः। तं विशिनष्टि, युगपदित्यादि।—युगपत्—समकालं, प्रधावितानां—ससम्भ्रमं प्रद्रुतानां, बहूनाम्—अनेकेषां, पुरुषाणां—भृत्यजनानामिति यावत्, परम्पराभिः,—श्रेणिभिः, आहूयमानः,—आकार्य्यमाणः, महाराजहर्षादेशगौरवात् इति भावः।

(३२३) अप्रतिपालितकरेणुः,—अनपेक्षितगजवाहन इत्यर्थः। सम्भ्रान्तः,—सत्वरः। ससम्भ्रमैः,—सत्वरैः, आदरातिशयवद्भिर्वा, गजसेनाऽधिपतौ सम्मान-प्रदर्शनार्थमिति भावः, दण्डिभिः,—याष्टीकैः, सेनापतेः शरीररक्षिभिः सैनिकैरिति यावत्, उत्सार्य्यमाणजानपदः,—उत्सार्य्यमाणाः,—अपसार्य्यमाणाः, जानपदाः,—जनसङ्घाः, पुरःसमागता इति भावः यस्मात् यस्य वा तथोक्तः। [ "उत्सार्य्यमाणजान-पदः" इत्यत्र "उत्सार्य्यमाणजनपदः" इति पाठेऽपि स एवार्थः, "भवेज्जनपदो जान-पदोऽपि जन-देशयोः" इति मेदिनीवचनात् ]।

(३२४) पदे पदे प्रणमतः प्रतिदिशमिभभिषग्वरान् वरवारणानां विभावरीवार्त्ताः पृच्छन्, (३२५) उच्छ्रितशिखिपिच्छलाञ्छितवंशलतावनगहनगृहीतदिगायामैः विन्ध्यवनैः इव (३२६) वारणबन्धविमर्दोद्योगागतैः पुरःप्रधावद्भिः अनायत्तमण्डलैः आधोरणगणैश्च, (३२७) मरकतहरितघासमुष्टीश्च दर्शयद्भिः, नवग्रहगजपतींश्च प्रार्थयमानैश्च,

(३२४) पदे पदे—प्रतिपदविक्षेपमित्यर्थः। प्रतिदिशं—दिशि दिशि, चतसृभ्यः दिग्भ्यः समागतान्,चतुर्दिगवस्थितान् वा इति भावः. इभभिषग्वरान्—गजवैद्यप्रवरान्, वरवारणानां—श्रेष्ठगजानां, विभावरीवार्त्ताः,—रात्रिवृत्तान्तान्, रात्रौ ते कीदृशाः आसन् इत्यादिप्रकारानित्यर्थः,पृच्छन्—जिज्ञासमानः ; रात्रिवृत्तजिज्ञासया गजेन्द्रचक्रादिनचर्य्यावृत्तम् आप्रदोषं तस्य सम्यक् ज्ञातमेवेति गम्यते, एतेन चास्य स्वकर्त्तव्यकर्म्मणि अनौदासीन्यं प्रकटीकृतम् ।

(३२५) उच्छ्रितेति।—उच्छ्रितानि,—उन्नतानि, शिखिनां—मयूराणां, पिच्छैः,—बर्हैः, लाञ्छितानि च—मण्डितानि च, वंशलतावनानि—वेणुवल्लीकाननानि, मयूराणां सर्वदा तत्र सञ्चारादिति भावः येषु तथाविधैः, गहनैः,—अरण्यैः, गृहीताः,—अधिकृताः, व्याप्ता इत्यर्थः, दिशां—ककुभाम्, आयामाः,—आभोगाः यैः तादृशैः, विन्ध्यवनैरिव—विन्ध्याचलकाननैरिव, परिदृश्यमानैरिति शेषः ; कृष्णवर्णोन्नतदेहत्वात् निविड़श्मश्र्वादिधारित्वाच्चेति भावः ।

(३२६) वारणेति।—वारणानां—हस्तिनां, बन्धे—धारणे, रोधने इति यावत्, बन्धाय इति वा, यो विमर्दः,—प्रयासः, तस्य उद्योगात्—उपक्रमात्, उद्योगाय वा, आगताः,—उपस्थिताः तैः, हस्तिनां वशीकरणार्थं सङ्ग्रहार्थं वा देशान्तरात् समागतैरिति समुदितार्थः, पुरः,—अग्रतः, प्रधावद्भिः,—प्रद्रवद्भिः, अनायत्तमण्डलैः,—न आयत्तं—वशीभूतं, मण्डलं—सङ्घः येषां तैः, अनधीनानुचरैरित्यर्थः, अचिरागमनादिति भावः, ["अनायत्तमण्डलैः" इत्यत्र "अनायतमण्डलैः" इति पाठे—अनायतं—न दीर्घं, मण्डल—सङ्घशः गमनादिव्यवस्था येषां तथाविधैः, सम्भ्रमविपर्य्यस्तपरिधानत्वात् इति भावः] आधोरणगणैः,—निषादिगणैः, हस्तिपालकवृन्दैरित्यर्थः, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः)।

(३२७) मरकतेति।—मरकतवत्—तदाख्यहरिद्वर्णमणिवत्, हरितानां—श्यामलानां, घासानां—यवसानां, मुष्टीः,—कवलान्, मुष्टिगृहीतघासानित्यर्थः, दर्शयद्भिः,—ईक्षयद्भिः, ईदृशोः घासमुष्टीर्दातुं शक्यते न वा इति जिज्ञासयेति भावः ।

(३२८) लब्धाभिमतमत्तमातङ्गमुदितमानसैश्च सुदूरम् उपसृत्य नमस्यद्भिः, (३२९) आत्मीयमातङ्गमदागमांश्च निवेदयद्भिः, डिण्डिमाधिरोहणाय च विज्ञापयद्भिः, (३३०) प्रमादपतितापराधापहृतद्विरददुःखकृतदीर्घश्मश्रुभिः अग्रतो गच्छद्भिः, (३३१) अभिनवोपस्थितैश्च कर्पटिभिः वारणाप्तिसुखप्रत्याशया धावमानैः गणिकाऽधिकारिगणैः,

नवेति।—नव,—नूतन', ग्रह.,—ग्रहणं, धारणमित्यर्थ. येषा तादृशा', ये गजपतयः, —प्रधानहस्तिन तान्, प्रार्थयमानैः,—एतान् बन्यवारीन्द्रान् शिक्षणाय अस्मदधीनान् कुर्वन्ति याचमानैः इत्यर्थः।

(३२८) लब्धेति।—लब्धाः,—प्राप्ता', पार्थिवेनेति भाव', अभिमताः,—इष्टा', प्रार्थिता इति भाव, मत्ता.,—मदोत्कटा, मातङ्गा,—हस्ति ., तै हेतुभि मुदितानि —हृष्टानि, मानसानि—मनांसि येषा तैः. अत एव सुदूरं-दूरत एव, सम्भ्रमातिशयादिति भाव, नमस्यद्भि,—प्रणिपतद्भिः। ["नमोवरिवश्चित्रङः क्यच्" (३।१।१९ पा०) इति क्यजन्तात् शतृप्रत्ययः]।

(३२९) आत्मीयेति।—आत्मीया',—स्वाधिकृता इति यावत्, ये मातङ्गा., —गजा, तेषा मदागमान्—दानवारिस्रावसञ्चारान्, निवेदयद्भि,—विज्ञापयद्भि, तेषां पार्श्वणि नियोज्यत्व ख्यापयद्भि. इति भाव.। डिण्डिमाधिरोहणाय—गजस्योपरि पटहवादित्रविधानाय इत्यर्थ ।

(३३०) प्रमादेति।—प्रमादेन—अनवधानतया, पतितं—पतन, हस्तिपृष्ठादिति, विषममार्गे चालनात् हस्तिन इति वा भाव, [भावे क्तप्रत्यय] तदेव अपराधः —दोष, तेन हेतुना, अयुक्तोऽयं हस्तिचालनायेति धिया इति भाव , यद्वा,—प्रमादात्— अनवधानात्, हस्तिपालने अवहेलनादिति यावत्, पतित.,—उपस्थित, सञ्जात इत्यर्थः, य अपराध तेन हेतुना, हस्तिपालनानुपयुक्तोऽयमिति धिया इति भावः, अपहृत,— आच्छिद्य नीत इत्यर्थ, यो द्विरद,—गज, स्वाधिकृत इति भाव. तस्य दुःखेन— क्लेशेन, तदपहरणजनितेन इति भावः, कृतानि—रचितानि इत्यर्थ, दीर्घाणि—प्रलम्बानि, श्मश्रूणि—कूर्चा ये तथाभूतैः।

(३३१) अभिनवोपस्थितै,—अल्पदिनमागतैः, कर्पटिभि,—जीर्णमलिनवसनधारिभि, वारणेति।—वारणस्य—गजस्य, आप्तौ—लाभे, यत् सुखम्— आनन्द, तस्य प्रत्याशया—लाभेच्छया, धावमानै,—प्रद्रवद्भिः, गणिकाऽधिकारिगणैः,

(२३२) चिरलब्धान्तरैः उच्छ्रितकरैः कर्मण्यकरेणुका-सङ्कथनाकुलैः, (२३३) उल्लासितप वचिह्नाभिः अरण्य-पालपङ्क्तिभिश्च निष्पादितनवग्रहनागनिवहनिवेदनोद्यताभिः उत्तम्भिततुङ्गतोत्रवनाभिः, (२३४) महामात्रपेटकैश्च प्रकटितकरिकर्मचर्मपुटैः, (२३५) अभिनवगजसाधन-

—गणिका—इभी, गजाना प्रलोभनार्था हस्तिनीत्यर्थः, यया प्रलोभ्य हस्तिनो ध्रियन्ते इति भावः, ("गणिका यूथीवेश्येभीतर्कारीषु—"इति मेदिनी) ःतस्या अधिकारिगणाः,—अध्यक्षवर्गाः तैः।

(२३२) चिरलब्धान्तरैः—चिरेण—दीर्घकालानन्तरमित्यर्थः,लब्धं—प्राप्तम्, अन्तरम्—अवकाशः, करेणुकावार्त्ताविज्ञापने स्वान्दगुप्तदर्शने वा इति भावः यैः तथोक्तैः, उच्छ्रितकरैः,—उद्धृतहस्तैः, करेणुसान्त्वनाय स्कान्दगुप्ते सम्मानप्रदर्शनाय वा इति भावः। कर्मण्येति।—कर्मण्या—करिग्रहणकुशला, या करेणुका—हस्तिनी, तस्याः सङ्कथने—समालपने, आकुलाः,—व्यापृताः तैः, गजसेनापतिना सह करेणुविषयकालापपरैरित्यर्थः।

(२३३) उल्लासितेति।—उल्लासिताः,—उद्धृताः, पल्लवा एव—किसलयान्येव, चिह्नानि—लक्षणानि, वयमारण्यपाला इति सूचकानीति भावः याभिः तथोक्ताभिः, निष्पादितेति।—निष्पादितः,—सम्पादितः, यः नवग्रहाणां—नवधृतानां, नागानां—गजाना, निवहः,—समूहः, तस्य निवेदने—विज्ञापने, उद्यताभिः,—प्रवृत्ताभिः, उत्तम्भितेति।—उत्तम्भितम्—उल्लासितं, तुङ्गम्—उन्नतं, तुदति अनेनेति तोत्रं—वेणुकं, हस्तिशासनचर्मदण्डविशेष इति भावः, ("तोत्रं वेणुकम्" इत्यमरः) ["दाम्नी—" (३।२।१८२ पा॰) इत्यादिना ष्ट्रन्, "तितुत्र—" (७।२।९ पा॰) इत्यादिना इडभावः] तदर्थं वनम्—अरण्यजातं दारु इत्यर्थः याभिः तथोक्ताभिः; यद्वा,—उत्तम्भितानि—ऊर्द्धमुत्तोलितानि, तुङ्गतोत्रवनानि—अत्युच्चवेणुवारण्यानि, प्रभूतत्वादिति भावः याभिः तादृशीभिः, अरण्यपालपङ्क्तिभिः,—गजबन्धनार्थं वनरक्षिवर्गैरित्यर्थः।

(२३४) प्रकटितेति।—प्रकटितानि—आविष्कृतानि, प्रदर्शितानीत्यर्थः, करिणां—हस्तिनां, कर्मणे—युद्धादिशिक्षायै इत्यर्थः, चर्मपुटानि—चर्मनिर्मिता हस्त्याकारा यैः तथोक्तैः,महामात्रपेटकैः,—हस्तिपकाधिपकदम्बकैः,प्रधानहस्तिपकवृन्दैरित्यर्थः,("महामात्रः सन्दृद्धे चामात्ये हस्तिपकाधिपे" "पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके"इत्युभयत्र मेदिनी)।

(२३५) अभिनवेति।—अभिनवं—नूतनं, गजानां—करिणां, साधनं—वशी-

सञ्चरणवार्त्तानिवेदनविसर्जितैश्च नागवनवीथीपालदूतवृन्दैः, (२३६) प्रतिक्षणप्रत्यवेक्षितकरिकवलकूटैः काटभङ्गसङ्ग्रहं ग्रामनगरनिगमेषु निवेदयमानैः (२३७) कटककदम्बकैः क्रियमाणकोलाहलः, (२३८) स्वामिप्रसादसम्भूतेन महाऽधिकाराविष्कारेण स्वाभाविकेन च अवष्टम्भाभोगेन उदासीनोऽप्यादिशन् इव, (२३९) असङ्ख्यकरिकर्णशङ्खसम्पत्सम्पादनाय

सञ्चरणं, तस्मै सञ्चरणं—समुद्योगः, तस्य वार्त्तानिवेदनाय—वृत्तान्तज्ञापनाय, तान् तान् गजान् वशीकर्त्तुं प्रवृत्तोऽस्मि इत्यादिसंवादनिवेदनाय इति भावः, विसर्जितैः,—प्रेषितैः, केनचित् अरण्यानीरक्षवाध्यक्षेण इति भावः, नागेति।—नागानां—हस्तिनां, वनवीथी—अरण्यश्रेणी, तस्याः पालाः,—अध्यक्षाः, तेषां दूतवृन्दैः,—वार्त्तावहनिवहैः।

(२३ ) प्रतिक्षणेति।—प्रतिक्षणं—क्षणे क्षणे, मुहुर्मुहुरिति यावत्, प्रत्यवेक्षितानि—परिदृष्टानि, करिणा— जानां,कवलकूटानि —ग्राससमूहा. यै. तथाभूतैः, ग्रामनगरनिगमेषु—ग्रामः,—संवसथः,नगरादल्पसङ्ख्यकजनवसतिस्थानमित्यर्थः,नगरं—बहुजनवासभूतं समृद्धं स्थानं, निगम.,—पुरं पु, ( वणिक्पथः पुरं वेदो निगमाः" इत्यमरः) काटभङ्गसङ्ग्रहं—हस्तच्छिन्नशस्यसञ्चयं, प्रत्यग्रगोधूमादिसङ्ग्रहमिति यावत्, करिणां भोजनार्थमिति भावः; ("काटभङ्गस्तु शस्यानां हस्तच्छेदे नृपात्यये" इति मेदिनी) निवेदयमानैः,—विज्ञापयद्भिः, राजद्वारे चैवपतीनां शस्यमूल्यावाप्तये इति भावः, एतेन प्रतारणबलात्कारचौर्य्यादिभिः तृणशस्यादीनामप्यानयनं हर्षनिषिद्धम् इति सूच्यते।

(२३७) कटककदम्बकैः,—कटकाः,—हस्तिकर्मनियुक्ताः, तेषां कदम्बकानि—वृन्दानि तैः, क्रियमाणेति।—क्रियमाणः,—विधीयमानः, कोलाहलः,—कलरवः यस्य सः, यं प्राप्य एतैः स्वस्वव्यापारसंसिद्धये कोलाहलः कृत इति भावः। इह यथावद्वस्तुवर्णने विच्छित्तिविशेषप्रदर्शनात् स्वभावोक्तिरलङ्कृतिः।

(२३८) स्वामीति।—स्वामिनः,—प्रभोः, प्रसादः,—अनुग्रहः, तेन सम्भृत,—जनितः तेन, महेति।—महाऽधिकारस्य—उन्नतपदस्य, गजसेनाऽध्यक्षतारूपस्य इति भावः, आविष्कारेण—प्रकटनेन, स्वाभाविकेन—स्वतःसिद्धेन, अवष्टम्भाभोगेन—गर्वावेशेन, गाम्भीर्य्यभरेण इत्यर्थो वा, उदासीनोऽपि—मध्यस्थोऽपि, किञ्चिदनादिशन्नपि इत्यर्थः, आदिशन्निव—आज्ञापयन्निव, अनादिशन्नपि प्रभाववदाकारेङ्गितादिना समर्थ्यमान इवेत्यर्थः, अनु"ीविन इति भावः।

(२३९) असङ्ख्येति।—असङ्ख्यानां—बहूनामिति यावत्, करिणां—गजानां,

समुद्रान् आज्ञापयन् इव, (२४०) शृङ्गारगैरिकपङ्काङ्गराग-सङ्ग्रहाय गिरीन् मुष्णन् इव, (२४१) दिग्गजाधिकारं ककुभाम् ऐरावतमिव अपहरन्, हरेर्हरपदभरनमितकैलासगिरि-गुरुभिः पादन्यासैः गुरुभारग्रहणगर्वमुर्व्याः संहरन्निव,

कर्णेषु—श्रुतिमूलेषु इत्यर्थः, याः शङ्खा,—कम्बव एव, शङ्खनिर्म्मितालङ्कारा एवेत्यर्थः, सम्पदः,—भूषणानीति भावः, तासां सम्पादनाय—सङ्ग्रहाय, समुद्रान्—सागरान्, आज्ञापयन् इव—आदिशन् इव, हस्तिकर्णशोभासम्पादनाय तूर्णं स्वगर्भस्थितान् शङ्खान् उद्धृत्यानेतु समुद्रानपि आज्ञापयन्निव इति भाव। एतेन तस्य समुद्रेभ्योऽपि गाम्भीर्य्यवत्त्वं सूचितम्। असङ्ख्येयानां करिणां कर्णेषु एतावत्यः शङ्खराजयः तेन विनि-वेशिताः, यथा समुद्रगर्भस्थिताः शङ्खनिवहाः निःशेषाः एवाभूवन्नित्युत्प्रेक्षितम्।

(२४०) शृङ्गारेति।—शृङ्गारः,—गजमण्डनं, हस्तिनामलङ्करणार्थमित्यर्थः, ["शृङ्गारः सुरते नाट्यरसे च गजमण्डने" इति मेदिनी। "शृङ्गार-भृङ्गारौ" (उ० ३ पा० १३६ सू०) इति शृधातोः आरन् नुम् गुक् ह्रस्वे च रूपम्] यः, गैरिकपङ्कः,—गैरिकद्रवः, स एव अङ्गरागः,—गजानामङ्गरञ्जनार्थं लेपविशेषः, तस्य सङ्ग्रहाय—सञ्चयाय, गिरीन्—पर्व्वतान्, मुष्णन् इव—अपहरन् इव, गैरिकाणीति शेषः, गजाङ्गरागसम्पादनाय गिरेरपि गैरिकक्षयोऽकारि इति भावः, एतेन तस्य पर्व्वतादपि दैहदार्ढ्यं सूचितम्। सर्व्वत्र गजानामातिशय्यद्योतनाय एवमुत्प्रेक्षेति ज्ञेयम्।

(२४१) ककुभां—दिशां, दिग्गजाधिकारं—दिग्गजाधिकारित्वं, सर्व्वदिग्गजश्रेष्ठ-मित्यर्थः, ऐरावतम्—अभ्रमातङ्ग, पूर्व्वदिग्गजमिति यावत्, अपहरन्निव—मुष्णन् इव, गजवीर्य्येण तत्सम्पदा च ऐरावतमपि अतिक्रामन्निवेत्यर्थः, यद्वा,—केवलमस्य गजाधिकारित्व-मैरावतम् असङ्ख्यगजेन्द्राधिकारप्रदर्शनेन न्यक्कुर्वन् इव इत्याशयः। हरेति।—हरस्य—शिवस्य, पदभरेण—चरणभारेण, चरणस्थापनरभसेनेत्यर्थः, नमितः,—आवर्जितः, भाराक्रान्ततया अधोगत इत्यर्थः, यः कैलासगिरिः,—कैलासपर्व्वतः, तद्वत् गुरुभिः,—भारवद्भिः, पादन्यासैः,—पदविक्षेपैः, हरेः,—वराहरूपिणः नारायणस्य इति भावः, उर्व्याः,—पृथिव्याः, गुरुभारग्रहणगर्व्वं—महाभारोद्वहनाहङ्कारं, संहरन्निव—सङ्कोचय-न्निव, गुरुपादन्यासेन वराहरूपिणो नारायणस्यापि दन्तयोः व्यथा जनयन्निवेति भाव। पदभरेण वराहदन्तस्यापि नमनोत्प्रेक्षणादस्य महासारवत्त्वं सूचितम्। इहोर्व्वीनमनेन भगवतः वराहस्यापि दन्ताद्वलनमनं समुत्प्रेक्षितम्, अपि चोपमेयगतोत्कर्षदर्शनात् व्यतिरेकोऽपि व्यज्यते।

( ३४२ ) गतिवशविलोलस्य च आजानुलम्बस्य बाहुदण्डद्वयस्य विक्षेपैः आलानशिलास्तम्भमालामिव उभयतो निखनन्, ईषदुत्तुङ्गलम्बेन अधरविम्बेन अमृतरसस्वादुना नवपल्लवकोमलेन कवलेन इव श्रीकरेणुकां विलोभयन्, ( ३४३ ) निजनृपवंशदीर्घं नासावंशं दधानः, अतिस्निग्धमधुरधवलविशालतया पीतक्षीरोदेन इव पिबन् ईक्षणयुग्मायामेन दिशाम् आयामं, ( ३४४ ) मेरुतटादपि विकटविपुलालिकः, सततम्

---

( ३४२ ) गतीति।—गतिवशेन—गमनवेगेनेत्यर्थः, विलोलस्य—चञ्चलस्य। विक्षेपैः,—सञ्चालनैः, आलानेति।—आलानानि—गजबन्धनानि, गजबन्धनार्था इत्यर्थः, ये शिलास्तम्भाः,—पाषाणस्थूणाः, तेषां मालामिव—श्रेणिमिव, उभयतः,—उभयोः पार्श्वयोः, निखनन्—प्रोथयन्, पाषाणकठिनप्रलम्बभुजशालीति भावः। ईषदुत्तुङ्गलम्बेन—अल्पोन्नतलम्बिना, अमृतेति।—अमृतरसवत्—सुधाऽऽस्वाद इव, स्वादुना—सुरसेन, सरसेन नारीलोभनीयेन वा इति भावः, नवेति।—नवपल्लववत्—अभिनवोद्गतकिसलयवत्, कोमलेन—सुकुमारेण, मृदुना च अधरविम्बेन—विम्बोष्ठेन, एतेन अधरस्य आरक्तत्वमपि सूचितम्; कवलेनेव—ग्रासेनेव, श्रीकरेणुकां—लक्ष्मीहस्तिनीं, सुलक्षणां हस्तिनीमिति यावत्, विलोभयन्—आकर्षयन्।

( ३४३ ) निजेति।—निजः,—स्वीयः, नृपवंशः,—राजकुलं, स्वस्य राजवंशस्याद्भुतत्वेनेति भावः, तद्वत् दीर्घम्—आयतम्, इत्युपमितसमासाश्रयणात् आर्थीयमुपमाऽलङ्कारः; स्वकीयवंशः सुदीर्घः आसीत् इत्यावेदयितुमिव सुदीर्घां नासिकां धृतवानिति भावः, नासावंशं—नासिकादण्डम्। अतीति।—अतिस्निग्धम्—अतिकोमलमित्यर्थः, मधुरं—मनोहरं, धवलं—शुभ्रं, विशालम्—आयतं तस्य भावः तत्ता तया, पीतक्षीरोदेन—दुग्धसागरपायिना, ईक्षणयुग्मायामेन—नेत्रयुगलविस्तारेण। आयामं—दैर्घ्यं, पिबन् इव—ग्रसन्निव, आयतनेत्र इति भावः।

( ३४४ ) मेरुतटादपि—सुमेरुतटादपि, सुमेरोरौन्नत्यादपीत्यर्थः, विकटेति।—विकटम्—अत्यन्तं, विपुलं—विशालम्, अलिकं—भालदेशः, ललाटतट इत्यर्थः यस्य तथाभूतः, ( "ललाटमलिकं गोधिः" इत्यमरः )।

(३४५) अविच्छिन्नच्छत्रच्छायाप्ररूढ़िवशादिव नितान्तायत-नीलकोमलच्छविसुभगेन स्वभावभङ्गुरेण कुन्तलबालवल्लरी-वेल्लितविलासिना लुनन्निव लुप्तालोकान् अर्ककरान् वर्व्वरकेण, (३४६) अरिपक्षपरिक्षयपरित्यक्तकार्मुककर्माऽपि सकलदिगन्त-श्रूयमाणगुरुगुणध्वनिः, आत्मस्थसमस्तमत्तमातङ्गसाधनोऽपि

---

(३४५) अविच्छिन्नेति।—अविच्छिन्ना—विच्छेदरहिता, या छत्रच्छाया—आतप-त्रेण सौरतापावरणम् इत्यर्थः, ["विभाषा सेना—" (२।४।२५ पा०) इत्यादिना क्लीवत्वस्य पाक्षिकत्वात् अत्र तदभावः] तस्याः प्ररूढ़िः,—आतिशय्यं, मुहूर्त्तमपि छत्रशून्यतया अनवस्थानमित्यर्थः, तद्वशादिव—तत्सम्पर्कादिवेत्यर्थः, नितान्तेति।—नितान्तम्—अत्यन्तम्, आयता—दीर्घा, नीला—कृष्णा, कोमला—अकर्कशा, स्निग्धा इत्यर्थः, सुखस्पर्शा इति भावः, या छविः,—कान्तिः, तया सुभगं—रम्यं तेन, आतपसंस्पर्शजनितरूक्षता-ऽभावादिति भावः, स्वभावभङ्गुरेण—सहजभङ्गिमता, स्वत एव कुञ्चितेनेत्यर्थः, ["भञ्जभास-मिदो घुरच्" (३।२।१६१ पा०) इति घुरच्] कुन्तलेति।—कुन्तलाः,—केशाः, लम्बमानाः कतिपयकेशगुच्छा इति भावः, बालवल्लर्य्यः इव—नूतनमञ्जर्य्यः इव, तासां वेल्लितेन—स्फुरणेन, विलसति—उल्लसते इति तथोक्तेन, वर्व्वरकेण—केशेन, केशबन्धेन इत्यर्थः, ("वर्वरः पामरे केशे चक्रले नीवृदन्तरे" इति मेदिनी) लुप्तालोकान्—लुप्ताः,—विनष्टाः, आलोकाः,—उद्योता येषां तान्, अर्ककरान्—सूर्य्यमयूखान्, लुनन्निव—खण्डयन्निव, कुञ्चितगाढ़कृष्णकेशपाशेन सूर्य्यकिरणान् मलिनयन्निवेत्यर्थः।

(३४६) अरीति।—अरिपक्षाणां—शत्रुसहायानां, परिक्षयेण—समूलनाशेन, परित्यक्तम्—उत्सृष्टं कार्मुककर्म्म—धनुराकर्षणादिकं येन तथाभूतोऽपि, न चासामर्थ्या-दौदासीन्याद्वा इत्याशयः, सकलेति।—सकलेषु—सर्व्वेषु, दिगन्तेषु—आशाप्रान्तेषु, श्रूयमाणः,—आकर्ण्यमानः, गुरुः,—महान्, गुणानां—मौर्व्वीणां, शौर्य्यादीनाञ्च, ध्वनिः,—शब्दः यस्य तथाभूतः; अत्र परित्यक्तकार्मुककर्म्माऽपि श्रूयमाणगुरुगुणध्वनिः इति आपाततः विरोधः, स च शौर्य्यादिगुणध्वनिश्रवणरूपार्थान्तरपर्य्यवसानः इति विरोधा-भासोऽलङ्कारः। आत्मस्थेति।—आत्मस्थानि—आयत्तानि, स्वाधिकृतानीति यावत्, समस्ताः,—सर्व्वे मत्तमातङ्गाः,—मदोत्कटगजा एव, साधनानि—सैनाऽङ्गानि यस्य तथाभूतोऽपि; आत्मस्थानि समस्तमत्तमातङ्गसाधनानि—निखिलमदस्राविगजारोहिसैन्यानि

अस्पृष्टो मदेन, (३४७) भूतिमानपि स्नेहमयः, पार्थिवोऽपि गुणमयः, करिणामिव (३४८) दानवताम् उपरि स्थितः, स्वामितामिव स्पृहणीयां भृत्यतामपि अपरिभूताम् उद्वहन्, (३४९) एकभर्तृभक्तिनिश्चलां कुलाङ्गनामिव अनन्यगम्यां प्रभुप्रसादभूमिम् आरूढः, (३५०) निष्कारणबान्धवो विदग्धानाम्, अभृतभृत्यो भजताम्, अक्रीतदासो विदुषां स्कन्दगुप्तो विवेश राजकुलम्। दूरादेव च

---

यस्य तथाभूतोऽपि इत्यर्थो वा, मदेन—दानवारिणा, मद्यपानजनितेन विकारेण—, गर्वेण च वा, अस्पृष्ट,—अनाक्रान्त' आत्मस्थमत्तमातङ्गसाधनोऽपि मदेन अस्पृष्ट, इति विरोध, समाधानन्तु प्रदर्शितार्थभेदेनोन्नेयम्।

(३४७) भूतिमान्—ऐश्वर्यसम्पन्न', भस्ममयश्च स्नेहमय,—प्रेममय', तैलादिस्नेहमयश्च, य भस्ममय, कथ भवति स तैलादिस्नेहमय इति विरोध। पार्थिव,—क्षित्यात्मक, मृन्मय इत्यर्थ, राजा च, गुणमयः,—तन्तुमय, शौर्य्यादिगुणसमन्वितश्च, यो हि मृन्मयो भवति, स कथ तन्तुमय' पटादिरूप स्यादिति विरोधः।

(३४८) दानवता—दानशीलाना, मदस्राविणाञ्च, उपरि स्थित,—शिरोदेशे वर्त्तमान, दातृश्रेष्ठ इत्यर्थ। अपरिभूताम्—अनवमता, भृत्यता—भृत्यभावमपि, स्पृहणीया—लोभनीयामित्यर्थ, स्वामितामिव—प्रभुतामिव, उद्वहन्—स्वीकुर्व्वन्, भृत्यत्वेऽपि प्रभुप्रसादाधिगमात् प्रभाववान्, दु:साहसिककर्मसाधनेन राजप्रियत्वादिति भाव।

(३४९) एकेति।—एकस्मिन् एव भर्त्तरि—प्रभौ, उपोढरि च, भक्ति',—अनुराग, निश्चला—स्थिरा यस्या ताम्, अनन्यगम्याम्—अन्यदुर्लभा, पुरुषान्तरसङ्गशून्याञ्च, प्रभुप्रसादभूमि—राजानुग्रहपात्रता, पतिप्रीतिपात्रताञ्च, आरूढ,—अधिगत.। इह स्वामिप्रसादलाभे कुलाङ्गनासाम्योक्तेः श्लेषानुप्राणितोपमाऽलङ्कार.।

(३५०) विदग्धाना—विदुषाम्, अतिकठोराभि: कल्पनाकोटिरूपज्वालाभि अपारतर्कतृणाना निःशेषत. दग्धीकरणात् तेषा विदग्धत्वम् इति भाव निष्कारणबान्धव,—अकृत्रिममित्रम्। भजता—सेवमानानाम्, अभृतभृत्य, भ्रियते असौ इति भृत.,—भृतिभुक्, वैतनिक इत्यर्थ, ["बिभर्त्ति कर्म्माणि निष्ठा स्तु भवतीति अभृत, भृत्य,,—सेवक', अवैतनिककिङ्कर इत्यर्थः। अक्रीतदास,,

(३५१) उभयकरकमलावलम्बितं स्पृशन् मौलिना महीतलं नमस्कारम् अकरोत्।

उपविष्टं (३५२) नातिनिकटे तं तदा जगाद देवो हर्षः,—"श्रुतो विस्तर एव अस्य आर्य्यव्यतिकरस्य अस्मच्चिकीर्षितस्य च; अतः शीघ्रं प्रवेश्यन्तां प्रचारनिर्गतानि गजसाधनानि। न क्षाम्यति अतिस्वल्पम् अपि आर्य्यपरिभवपीडापावकः प्रयाणविलम्बम्" इत्येवम् अभिहितश्च प्रणम्य व्यज्ञापयत्,—(३५३) "कृतम् अवधारयतु स्वामी समादिष्टं किन्तु स्वल्पं

---

क्र"त.—क्रयेण निष्पन्न, दास',—सेवकः, स न भवतीति, [नञ्समास] भृतिमगृहीत्वाऽपि सता परिचर्य्याविधौ निरतः इत्यर्थ ।

(३५१) उभयेति।—उभाभ्या—द्वाभ्याम्, ["उभादुदात्तो नित्यम्" (५।२।४४ पा०) इति सूत्रस्य योगविभागमाश्रित्य, "उभशब्दात् वृत्तिविषये नित्यमयच् स्यात् स्वार्थे" इत्युक्त तत्त्वबोधिनीकारै., एवञ्च समासे उभशब्दस्य उभयरूपत्वे परिणतिरिति सूक्ष्ममीक्षणीयम्] करकमलाभ्या—पाणिपद्माभ्याम्, अवलम्बित—धृत, महीतल—भूतलम्। मौलिना—शिरसा।

(३५२) नातिनिकटे—अनतिदूरे इत्यर्थ.। आर्य्यव्यतिकरस्य—आर्य्यव्यसनस्य, तस्य गुप्तहत्याया. इत्यर्थः, ("अथ व्यतिकर पुंसि व्यसन-व्यतिषङ्गयो" इति मेदिनी) अस्मच्चिकीर्षितस्य—अस्माभि. कर्त्तुमिष्टस्य च, विस्तर,—वाक्प्रपञ्च ["स च शब्दस्य विस्तर" इत्यमरोक्ते "ऋदोरप्" (३।३।५० पा०) इत्यप्] प्रचारनि[र्ग]तानि—प्रचाराय—सञ्चरणाय, ग्रामनिगमादौ भक्ष्यसङ्ग्रहार्थं, वन्यकरिग्रहणार्थं वा इति भाव, निर्गतानि—निष्क्रान्तानि, गजसाधनानि—करिसैन्यानि, प्रवेश्यन्ताम्—आनीयन्तां, राजधानीमिति शेष, युद्धयात्रार्थमिति भाव, यद्वा,—प्रवेश्यन्तां—रणभूमौ प्रेष्यन्तामिति भाव। आर्य्येति।—आर्य्यस्य—ज्येष्ठस्येत्यर्थ, परिभवेण—तिरस्कारेण अन्याय्यहननेनेत्यर्थः, [य]ा पीडा—व्यथा, सैव पावक,—अग्नि, प्रयाणविलम्बं—युद्धयात्राकालातिक्रमणं, न क्षाम्यति—न सहते ["शमामष्टाना दीर्घ श्यनि" (७।३।७४ पा०) इति दीर्घ]।

(३५३) स्वामी—प्रभु', भवानिति शेष, समादिष्टम्—आज्ञप्तं, भवता यत् [इ]ति शेष., तत्, कृत—सम्पादितमेव, अस्माभिरिति शेष., इति अवधारयतु—निश्चि-

विज्ञप्यमस्ति भर्तृभक्तेः; तत् आकर्णयतु देवः,—देवेन हि पुष्पभूतिवंशसम्भूतस्य अजात्यस्य सहजस्य तेजसः, दिक्करिकर-प्रलम्बस्य बाहुयुगलस्य, असाधारणस्य च सोदरस्नेहस्य सर्वं सदृशम् उपक्रान्तम्। काकोदराभिधानाः कृपणाः कृमयोऽपि न मृष्यन्ति विकारं, किमुत भवादृशाः तेजसां राशयः? केवलं (३५४) देवराज्यवर्द्धनोदन्तेन कियदपि दृष्टमेव देवेन दुर्जनदौरात्म्यम्। ईदृशाः खलु लोकस्वभावाः, प्रतिग्रामं प्रति-नगरं प्रतिदेशं प्रतिद्वीपं प्रतिदिशञ्च भिन्ना वेशाश्च आकाराश्च

नोतु, भवदाज्ञा अपरिहार्य्यैव, तेनेदानीमकृतमपि कृतमेव तदित्यवधारयतु स्वामी इति तात्पर्य्यम्। भर्तृभक्तेः,—स्वाम्यनुरागाद्धेतोः। अजात्यस्य—जातौ भवं जात्यं, तन्न भवतीति तथोक्तस्य, क्षत्रियजात्यतिशायिन इति भावः। सहजस्य—स्वाभाविकस्य, प्रकृतिसिद्धस्य इत्यर्थः। दिगिति।—दिक्करिणां—दिग्गजानां, करवत्—शुण्डादण्डवत्, प्रलम्बस्य—दीर्घस्येत्यर्थः, आजानुलम्बितस्येति भावः। सदृशम्—अनुरूपम्, उपक्रान्तम्—आरब्धम्। काकोदराभिधानाः,—भुजङ्गनामानः, ("...भुजङ्गोऽहिर्भुजङ्गमः। ...काकोदरः फणी" इत्यमरः) कृपणाः,—दुर्बलाः, कृमयोऽपि,—कृमिसदृशाः कीट-विशेषाः अपि, विकारं—परपरिभवं, न मृष्यन्ति—न क्षाम्यन्ति, न सहन्ते इत्यर्थः; अत्र भुजङ्गानामपि दुर्बलकीटविशेषत्वाभिधानेन अस्य महातेजस्वित्वं प्रकटितम्। किमुत—किं पुनः, भवादृशानां तादृशविकारासहने वक्तव्यतैव नास्तीत्याशयः।

(३५४) देवेति।—देवस्य—राज्ञः, राज्यवर्द्धनस्य उदन्तेन—उत्—उद्गतः, अन्तः,—निर्णयो यस्मात् तादृशेन, वृत्तान्तेन इत्यर्थः, ("वार्त्ता प्रवृत्तिर्वृत्तान्तः उदन्तः स्यात्" इत्यमरः) देवेन—राज्ञा, भवता इति भावः, दुर्जनदौरात्म्यं—दुर्जनानां—खलानां, दौरात्म्यं—दुर्वृत्तता, कियदपि—अल्पमात्रमित्यर्थः, अपिरत्र सम्भाव्यार्थकः इत्यवधेयम्, ("अपिः पदार्थसम्भाव्यगर्हाऽनुज्ञासमुच्चये" इत्युक्तेः) दृष्टं—ज्ञातमित्यर्थः। लोकस्वभावाः,—जनानां प्रकृतयः, खलु—निश्चये, ईदृशाः,—एवंविधाः, दौर्जन्य-प्रधाना इति भावः। प्रतिग्रामं—"विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा॥" इत्युक्तलक्षणं विप्रादीनां वासस्थानं ग्रामः। ग्रामे ग्रामे इत्यर्थः, ["अव्ययम्—" (२।१।६ पा०) इत्यादिना वीप्सायां

आहाराश्च व्यवहाराश्च जनपदानाम्। तत् इयम् (३५५) आत्म-देशाचारोचिता स्वभावसरलहृदयजा त्यज्यतां सर्वविश्वासिता॥ (३५६) प्रमाददोषाभिषङ्गेषु श्रुतबहुवार्त्त एव प्रतिदिनं देवः। (३५७) यथा,—नागकुलजन्मनः सारिकाश्रावित-मन्त्रस्य आसीत् नाशो नागसेनस्य पद्मावत्याम्। (३५८) शुक-श्रुतरहस्यस्य च श्री. अशोर्य्यंत श्रुतवर्मणः श्रावस्त्याम्।

---

धाचिकोऽव्ययीभावः]। एवं परत्राप्यालोचनीयम्। भिन्नाः—पृथग्विधाः। वेशाः,—परिच्छदाः। व्यवहाराः,—आचरणानि इत्यर्थः। जनपदानां—जनानां, ("भवेज्जन-पदो जानपदोऽपि जन-देशयो" इति मेदिनी)।

(३५५) आत्मेति।—आत्मनः,—स्वस्य, ["सातिभ्यां मनिन्मनिणौ" (उ० ४ पा० १५२ सू०) इत्यतेः मनिण्] यः देशाचारः,—देशप्रचलितरीतिः, सर्व्वविश्वासिताऽप इति यावत्, तस्य उचिता—अनुरूपा, स्वभावेति।—स्वभावेन—प्रकृत्या, सरलम्—अकुटिलम्, उदारमित्यर्थः, यत् हृदयम्—अन्तःकरणं, तस्मात् जायते—उद्भवति इति तथाभूता, प्रकृतिसरलोदारचित्तप्रभूता इत्यर्थः, सर्व्वविश्वासिता—सर्वेषु जनेषु विश्वास-सस्थापनम्। यद्यपि पवित्रोदाराशया. श्रीकण्ठजानपदवास्तव्याः, तथाऽपि अन्ये मानवाः प्रवञ्चकपिशाचाचाराः भवितुमर्हन्ति इति वक्तुराशयः।

(३५६) प्रमादेति।—प्रमाददोषेण—अनवधानताऽपराधेन, अभिषङ्गाः,—पराभवाः तेषु, श्रुतेति।—श्रुताः,—आकर्णिताः, बह्वः,—अनेकाः, वार्त्ताः,—वृत्तान्ताः येन तथाभूतः॥

(३५७) प्रतिग्राममित्यादिभिरुपक्रान्तं निदर्शयितुमाह,—यथेति। नागकुल-जन्मनः,—नागः,—तन्नामा कश्चिद्राजा, तस्य कुले—वंशे, जन्म—उत्पत्तिः यस्य तथाविधस्य, सारिकेति।—सारिका,—पक्षिविशेषः, तया श्रावितः,—तन्मुखेन आकर्णितः प्रकाशित इत्यर्थः, मन्त्रः,—गुप्तमन्त्रणं यस्य तथाभूतस्य, नागसेनस्य—तदाख्यस्य नृपस्य, पद्मावत्यां—तदाख्यायां नगर्य्यामित्यर्थः, नाशः,—निधनम्। पुरा पद्मावत्यां नागसेनो नाम राजा मन्त्रिणम् अहंराज्यहरणदोषेण ताडयितुं सारिकां समक्षं मन्त्रणामकरोत्, स च मन्त्री सारिकामुखात् तद्विज्ञाय विश्वासघातकतापूर्व्वकं तं नागसेनं हतवानिति वार्त्ता।

(३५८) श्रावस्त्यां—धर्म्मपत्तनापराख्यमगधान्तर्गतायां नगर्य्यां, ["श्रावस्त्याम्" इत्यत्र "श्रावन्त्याम्" इति पाठान्तरम्] शुकेति।—शुकात्—कीराख्यपक्षिणः, श्रुतम्—आकर्णितं, रहस्यं—गुप्तमन्त्रणं यस्य तथाभूतस्य, श्रुतवर्म्मणः,—तदाख्यस्य नृपतेः

(३५९) स्वप्नायमानस्य च मन्त्रभेदोऽभूत् मृत्यवे मृत्तिकावत्यां स्वर्णचूडस्य। (३६०) चूडामणिलग्नलेखप्रतिबिम्बवाचिताक्षरा च चारुचामीकरचामरग्राहिणी यमतां ययौ यवनेश्वरस्य। (३६१) लोभबहुलञ्च बहुलनिशि निधानम् उत्खनन्तम्

---

श्री',—लक्ष्मी', अग्रीग्रीयत—व्यनशत्, शुकामुखेन मन्त्रभेदात् प्रकाशय'। इह शुकेत्यादिवाक्यस्यपदजातेषु शकारस्यावृत्त्या वृत्त्यनुप्रासः। पुरा श्रावस्तीश्वरो श्रुतवर्म्मापि पूर्ववत् शुकमुखात् विभिन्नमन्त्रो राज्यभ्रष्टोऽभूदिति वार्त्ता। ए न आख्यानद्वयेन विजिगीषुणा यत्नात् गूढमन्त्रेण भाव्यमित्युक्तम्।

(३५९) स्वप्नायमानस्य—स्वप्न,—स्वप्नवान्, स इव आचरत, निद्रितावस्थाया गुप्तमन्त्र प्रकाशयत इत्यर्थ, छन्दस्दीर्घत्वात् स्वप्नायमानस्य इति भाव., स्वर्णचूडस्य—तदाख्यस्य राज्ञ, मृत्तिकावत्या—तदाख्याया नगर्य्या, मन्त्रभेद,—रहस्यप्रकाश, मृत्यवे—निधनाय, निधनकारणमित्यर्थ, अभूत्। पुरा मृत्तिकावत्या नगर्य्या स्वर्णचूडो नाम राजा कश्चित् विमर्शपूर्वक निरूपयन् मन्त्रितवान्, तदेव तस्य निद्रितावस्थायाम् स्फोर। तत्र अवगम्य शत्रुप्रयुक्तेन केनचित् एतच्छिरोग्रचक्रेण भूत्वा असौ निभृत व्यापादित इति वार्त्ता। अनेन अज्ञातकुलशीलो भृत्यो न नियोज्य इत्युक्तम्।

(३६०) चूडामणीति।—चूडामणि,—शिरोरत्न, तत्र लग्न—सङ्क्रान्त, यत् लेखप्रतिबिम्ब—लिपिप्रतिच्छाया, तेन वाचितानि—पठितानि इत्यर्थ, अक्षराणि—वर्णा, लेखस्थानि इति शेष यया तथाभूता, चूडामणिप्रतिफलितलेखाक्षराणि पठित्वेति भाव. चारुचामीकरचामरग्राहिणी—मनोहरकाञ्चनदण्डवालव्यजनहस्तेत्यर्थ तादृशेन चामरेण बीजयन्तीति भाव, यवनेश्वरस्य—यवनाधिपस्य, यमता—मृत्युता, ययौ—प्राप। पुरा यवनेश्वर. केनचित् शत्रुणा व्यापादयितुमिष्ट इति स्वसुहृदा तद्वृत्तान्त लेखेन बोधित: लेखपृष्ठे च तेन लिखित, स्वय वाचयितव्यमिति। तच लेख स्वय वाचयत यवनेश्वरस्य चूडामणिप्रतिबिम्बितानि अक्षराणि शत्रुप्रयुक्ता काचित् चामरग्राहिणी निगूढ वाचयित्वा स्वस्वामिने सर्व व्यजिज्ञपत्, तत. तेनोपजप्ता सा निभृत त जघान इति वार्त्ता। अनेन सूक्ष्मोऽपि मन्त्रभेदोपाय परिहर्त्तव्य इति सूचितम्।

(३६१) लोभेति।—लोभबहुलम्—अतिलुब्ध, बहुलनिशि—कृष्णपक्ष-

उत्खातखड्गप्रमाथिनी ममन्थ माथुरं बृहद्रथं विदूरथवरूथिनी। (३६२) नागवनविहारशीलञ्च मायामातङ्गाङ्गात् निर्गता महासेनसैनिका वत्सपतिं न्ययंसिषुः। (३६३) अतिदयितलास्यस्य च शैलूषमध्यमध्यास्य मूर्द्धानम् असिलतया मृणालमिव अलुनात् अग्निमित्रात्मजस्य सुमित्रस्य मित्रदेवः।

रजन्या, निधान—भूगर्भस्थितं रत्नम, उत्खननम्—उद्धरन्तं, माथुरं—मथुराऽधिप, बृहद्रथ—तदाख्यं राजानं, विदूरथवरूथिनी—विदूरथस्य—तदाख्यस्य सूर्य्यवंशीयराजस्य, वरूथिनी—सेना, ("ध्वजिनी वाहिनी सेना ··। वरूथिनी बल सैन्यम्···" इत्यमर) उत्खातेति।—उत्खातेन—उत्पाटितेन, कोषात् उद्धृतेन इत्यर्थ', खड्गेन—असिना, प्रमथ्नाति—ताडयतीति तथाभूता सती, ममन्थ—जघान। विदूरथमन्त्रितेन गूढप्रयुक्तराजन्यवृन्देन प्रलोभितो बृहद्रथो नाम राजा कृष्णपक्षनिशाया विदूरथविवादविषयीभूतखनितो रत्नजातमुद्धर्त्तुं प्रवृत्तः तत्सैनिकै निहत इति वार्त्ता। एतेन सुविमृश्य कर्त्तव्यमित्युक्तम्, "सहसा विदधीत न क्रियाम्" इत्याद्यार्षोक्तेः।

(३६२) नागेति।—नागाना—गजाना, वन—कानन, हस्तिबहुलमरण्यमित्यर्थ, तत्र विहारे—भ्रमणे, शील—स्वभाव यस्य तथाभूत वत्सपति—वत्सराजम्, उदयनमिति यावत्, महासेनस्य—महासेनाह्वयस्य वासवदत्तापितु उज्जयिनीराजस्य, सैनिका', —सैन्यानि, मायामातङ्गाङ्गात्—मायया—कपटेन रचित, मातङ्गः,—हस्ती तस्याङ्गम् —अवयवः तस्मात्, निर्गता,—निःसृता. सन्त., न्ययंसिषु,—बबन्धुः। पुरा महासेनो नाम उज्जयिनीपति स्वां दुहितरं वासवदत्ताम् उदयनाय दित्सु अन्तर्निगूढसैनिक मायामातङ्गं वने सस्थाप्य छद्मप्रयुक्तैश्चरै नागवनविहाराय त प्रलोभितवान्, सोऽपि गजव्यसनितया अविचार्य्यैव कतिपयपरिजनपरिवृतः वीणा वादयन् तत्र गत.। ततश्च सिद्धाभिप्राय महासेन. मायामातङ्गशरीरान्निर्गतैः स्वसैनिकै तं नियम्य स्वगृहमानीय कन्या ददौ इति वार्त्ता। एतेन नाल्पसाधनै सवीक्ष्य च विश्वस्तैर्भाव्यमित्युक्तम्।

(३६३) अतीति।—अतिदयितम्—अतिप्रिय, लास्य—नृत्य यस्य तथोक्तस्य, अत्यर्थं नृत्यप्रियस्य इत्यर्थ ("लास्य नृत्यञ्च नर्त्तने" इत्यमर)। शैलूषमध्य—नटमध्यं, ("शैलूषो नट-बिल्वयो." इति मेदिनी) अध्यास्य—अधिष्ठाय, नटच्छद्मना इति भाव, ["अधिशीङ्स्थासा कर्म्म" (१।४।४६ पा॰) इत्याधारस्य कर्मसञ्ज्ञा]। अलुनात् —चिच्छेद। मित्रदेव',—तन्नामा कश्चित् सुमित्ररिपुः। पुरा सुमित्रो नाम राजा नृत्यव्यसनी नटजने विश्वस्त, मित्रदेवेन नटरूपिणा व्यापादित, तेन च योगचर्ण-

(२६४) प्रियतन्त्रीवाद्यस्य अलाबूवीणाभ्यन्तरशुषिरनिहित-निशिततरवारयो गान्धर्वच्छात्रच्छद्मानः चिच्छिदुरश्मकेश्वरस्य शरभस्य शिरो रिपुपुरुषाः। (२६५) प्रज्ञादुर्बलञ्च बलदर्शन-व्यपदेशदर्शिताशेषसैन्यः सेनानीः अनार्यो मौर्यं बृहद्रथं पिपेष पुष्यमित्रः स्वामिनम्। (२६६) आश्चर्यकुतूहली च चण्डीपतिः दण्डोपनतयवननिर्मितेन नभस्तलयायिना यन्त्रयानेन अनीयत

---

प्रयोगतिरोहितरूपेण बभूवे इति वार्ता। अनेन च व्यसनिता प्राकृतजने विश्वस्तता च सर्वथा नोचिता इति प्रकटितम्।

(२६४) अलाब्विति।—अलाबूः,—तुम्बी, तद्रचिता वीणा—विपञ्ची, तस्याः अभ्यन्तरशुषिरे—मध्यस्थरन्ध्रे, निहिताः,—स्थापिताः, निशिताः,—तीक्ष्णाः, तरवारिः,—असिः यैः तथोक्ताः, गान्धर्वच्छात्रच्छद्मानः,—गान्धर्वं—सङ्गीतं, तस्य छात्राः,—शिष्याः, तदेव छद्म—कपटं येषां तथाभूताः, वयं भवत्सकाशे गान्धर्वं शिक्षितुमागता इति छलेन समुपस्थिता इति भावः, रिपुपुरुषाः,—शत्रुप्रयुक्ताः पुरुषाः, प्रियेति।—प्रियं—दयितं, तन्त्रीवाद्यं—वीणावाद्यं यस्य तथाभूतस्य, तन्त्रीवाद्यप्रियस्येत्यर्थः, अश्मकेश्वरस्य—अश्मकाख्यजनपदाधिपस्य, शरभस्य—तदाख्यस्य नृपतेः, शिरः,—मूर्द्धानं, चिच्छिदुः,—चकृतुः। शरभो नाम राजा वाद्यविद्याविशारदानाम् अवारितद्वारं प्रवेशमदात्, तेनासौ शिष्यच्छद्मना प्रविष्टैः गूढायुधैः शत्रुपुरुषैः निहत इति वार्त्ता। एतेन व्यसनासक्तिलेशोऽपि सर्व्वथैव परिहर्त्तव्यः इति पूर्व्वोक्तिरेव दृढीकृता।

(२६५) बलेति।—बलानां—सैन्यानां, दर्शनम्—अवलोकनमेव, व्यपदेशः,—छलं, तेन दर्शितानि—अवलोकितानि, अशेषाणि—अतिबहूनि इत्यर्थः, सैन्यानि—बलानि, स्वाधिकृतानि इति भावः येन तथाभूतः, अनार्य्यः,—असाधुः, सेनानीः,—सेनापतिः, प्रज्ञादुर्बलं—बुद्धिबलहीनं, मौर्य्यं—मौर्य्यवंशोद्भवं, स्वामिनं—प्रभुं, बृहद्रथं पिपेष—जघान। एतेन कोऽपि न सर्व्वाधिकारिणः कर्त्तव्या इति व्यक्तीकृतम्।

(२६६) आश्चर्य्येति।—आश्चर्य्ये—विस्मयकरव्यापारे, तद्दर्शने इत्यर्थः, कुतूहली—कौतुकवान्, चण्डीपतिः,—चण्डीनाम नगरी, तस्याः पतिः,—प्रभुः, दण्डेति।—दण्डेन—सङ्ग्रामेण, उपनताः,—निर्जिता इति यावत्, ये यवनाः,—तद्देशवासिनो म्लेच्छविशेषा इत्यर्थः, तैः निर्मितं—रचितं तेन, नभस्तलयायिना—आकाशगामिना, गगनमार्गे भ्रमणोपयोगिना इत्यर्थः, यन्त्रयानेन—विमानविशेषेण, यन्त्रचालितरथेन

क्वापि। (३६७) काकवर्णः शैशुनागिश्च नगरोपकण्ठे कण्ठे निचकृते निस्त्रिंशेन। अतिस्त्रीसङ्गरतम् अनङ्गपरवशं (३६८) शुङ्गम् अमात्यो वसुदेवो देवभूतिदासीदुहिता देवीव्यञ्जनया वीतजीवितम् अकारयत्। (३६९) असुरविवरव्यसनिनं चापजङ्कः अपरिमितरमणीमणिनूपुरझणझणाक्रादरम्यया मागधं गोधनगिरिसुरङ्गया स्वविषयं मेकलाधिपमन्त्रिणः।

---

इत्यर्थः, क्वापि—कुत्रापि, अनिर्द्दिष्टदेशमिति यावत्, अनीयत—प्राप्यत, अदर्शनं गमित इत्यर्थः। पुरा चण्डीपतिः यवनान् विजित्य तैः उपायनीकृतेन छद्मरचितेन यन्त्रयानेन परदारान् गच्छेति प्रलोभ्य स्वदेशं नीत्वा व्यापादित इति वार्त्ता। एतेन शत्रुषु तत्प्रदत्तोपायनेषु च न विश्वासः विधेयः इति प्रकटीकृतम्।

(३६७) शैशुनागिः,—शिशुनागाख्यजनपदाधिपतिः,काकवर्णः,—तन्नामा कश्चिद्राजा, नगरोपकण्ठे—पुरीसमीपे, ("समीपे निकटासन्न···। उपकण्ठान्तिकाभ्यर्णा···" इत्यमरः) निस्त्रिंशेन—खड्गेन, कण्ठे निचकृते—निकृत्तः, चिच्छिदे इत्यर्थः, केनचित् शत्रुणेति शेषः।

(३६८) देवीव्यञ्जनया—देवी—राज्ञी एव, व्यञ्जनं—छद्म यस्याः तथाभूतया, महिषीवेशधारिण्येत्यर्थः, देवभूतिदासीदुहिता—देवभूतेः,—तन्नामप्रसिद्धस्य कस्यचित्, दासी—काचित् परिचारिका, तस्याः दुहिता—तनयया, [प्रयोज्यकर्त्तरि तृतीया, करोतेः णिचि प्रयोज्यकर्त्तुः कर्म्मत्वस्य पाक्षिकत्वादिति ज्ञेयम्] शुङ्गं—तदाख्यं नृपं, वीतजीवितम् —अपगतजीवनं, विनष्टमित्यर्थः। अनेन वनितादिविषयेषु अत्यासक्तिः दूरतः परिहार्य्या इति बोधितम्।

(३६९) मेकलाधिपमन्त्रिणः,—मेकलाधिपस्य—तदाख्यपर्व्वतवेष्टितदेशस्वामिनः, "मेकलो विन्ध्याद्रिः" इति कश्चित्,मन्त्रिणः,—सचिवाः,अपरिमितेति।—अपरिमितानां—बह्वीनां, रमणीनां—नारीणां,मणिनूपुराणां—रत्नमञ्जीराणां,झणझणाक्रादः,—झणत्कारशब्दः, तेन रम्या—मनोज्ञा तया,श्रवणसन्तर्पणशिञ्जितसुषमयेत्यर्थः, गोधनगिरिसुरङ्गया—गोधनाख्यपर्व्वतान्तःकृतविवरवर्त्मना, "गोधनगिरिः सूर्य्याख्यः पर्व्वतः" इति कश्चित्, असुरविवरव्यसनिनम्—असुराणां—दानवानां, ["असेरुरन्" (उ० १ पा० ४३ सू०) इति उरन्] विवरम्—आवासरन्ध्रं, पातालम् इत्यर्थः, तत्र व्यसनी—कुतूहलीत्यर्थः तं, पातालदर्शनाय प्रलोभितमित्यर्थः, मागधं—मगधराज, स्वविषयं—स्वजन-

( २७० ) महाकालमहे च महामांसविक्रयवादवातूलं वेतालः तालजङ्घो जघान जघन्यजं प्रद्योतस्य पौणकिं कुमारं कुमारसेनम्। ( २७१ ) रसायनरसाभिनिवेशिनश्च वैद्यव्यञ्जनाः सुबहुपुरुषान्तरप्रकाशितौषधगुणा गणपतेः विदेहराजसुतस्य

---

पदम्, अपजह्रुः,—अपहृतवन्तः, स्वविषयं नीत्वा व्यापादयामासुरिति भावः। मेकलाधिपसन्निभिः छद्मचारिभिः मागधः इत्थं प्रलोभितः यत्, अस्माभिः तपोबलेन पातालविवरद्वारमाविष्कृतं, तत्र च अविरतं सञ्चरन्तीनां नागरमणीनां नूपुरशब्दः श्रूयन्ते इति। मागधोऽपि तादृशलोभनीयरमणीदर्शनाकृष्टः तत्सङ्गानुवर्त्ती तत्र प्रविशन् तैः स्वदेशं नीतः निहतश्च इति वार्त्ता। एतेन मानवीयशक्याशक्यतामविमृश्य यत्र कुत्र प्रयाणमश्रेयसे भवति इति प्रतिपादितम्।

( २७० ) महाकालमहे—महाकालस्य—महाकालाख्यशिवमूर्त्तिभेदस्य, महः,—उत्सवः तस्मिन्, ( "मह उद्धव उत्सवः" इत्यमरः ) महेति।—महामांसस्य—नरमांसस्य, विक्रयवादः,—महामांसमहं विक्रीणे इति भाषणम् इत्यर्थः, तत्र वातूलः,—मत्तः तं [ "वातात् समूहे च" ( वा० ) इति ऊलप्रत्ययः ] प्रद्योतस्य—तदाख्यस्य राज्ञः, पौणकिं—पुणकस्य अपत्यं पुमान् तं, पुणकगोत्रीयमित्यर्थः, पुणकी नाम काचित् दासी तस्याः सुतं वा, जघन्यजं—कनिष्ठं, शूद्रं वा, ( "शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः" इत्यमरः ) दासीगर्भसम्भूतमिति भावः, तालजङ्घो नाम वेतालः,—मल्लविशेषः, भूताधिष्ठितशवभेदो वा, जघान—हतवान्, पूर्व्वप्रतिश्रुतनरामिषाप्राप्तेरिति भावः। आत्मशक्तिमनालोच्य असाध्यसाधनस्पर्द्धाऽपि कदाचित् प्रलयाय सम्पद्यते इत्यवगन्तव्यम्।

( २७१ ) रसायनेति।—रसायनरसः,—विषादिनिर्मित औषधविशेषः, तत्र अभिनिवेशिनः,—कृतप्रयत्नाः; यद्वा,—रसायनं—विशुद्धरसरक्तादीनां लाभोपायभूतः, जराव्याधिविध्वंसीति यावत्, रसः,—पारदादिधातुविशेषः, तत्र अभिनिवेशिनः,—वयम् उत्कृष्टरसायनयोगमाविष्कर्त्तुं चेष्टामहे इत्यादि प्रकाशयन्तः इति भावः, वैद्यव्यञ्जनाः,—चिकित्सकच्छद्मानः, कपटभिषज इत्यर्थः, सुबह्विति।—सुबहुभिः,—अतिबहुलैः पुरुषान्तरैः,—अन्यजनैः, स्वपक्षीयैरिति भावः, प्रकाशिताः,—ख्यापिताः, औषधगुणाः,—भेषजोत्कर्षाः यैः तथाभूताः, एषामौषधानि सद्यः-फलानि, न क्वचित् विफलानि भवन्ति इत्यादि छन्नस्वगणैः वाचयन्त इति भावः, शत्रुनियुक्ताः केचित् पुरुषा

राजयक्ष्माणम् अजनयन् । (३७२) स्त्रीविश्वासिनश्च महादेवीगृहगूढभित्तिभाक् भ्राता भद्रसेनस्य अभवत् मृत्यवे कालिङ्गस्य वीरसेनः । (३७३) मातृशयनीयतूलिकातलनिषण्णश्च तनयोऽन्यं तनयम् अभिषेक्तुकामस्य दध्रस्य कारूषाधिपतेः अभवत् मृत्यवे । (३७४) उत्सारकरुचिश्च रहसि ससचिवमेव दूरीचकार चकोरनाथं शूद्रकदूतः चन्द्रकेतुं जीवितात् ।

---

इति शेषः, गणपतेः,—तदाख्यस्य राजपुत्रस्य, राजयक्ष्माणं—क्षयरोगविशेषम्, अजनयन् उदपादयन्, कुभेषजं पाययित्वा इति भावः ; एतेन अविज्ञातमौषधं न पातव्यमित्युक्तम् ।

(३७२) स्त्रीविश्वासिनः,—नारीषु विश्वासं कुर्वतः, कालिङ्गस्य—कलिङ्गदेशाधिपस्य, भद्रसेनस्य—तदाख्यस्य, भ्राता—अनुजः इत्यर्थः, वीरसेनः, महादेवीति ।—महादेव्याः,—राजमहिष्याः, देवरेण पूर्वमुपजप्तायाः इति भावः, गृहे—कक्षमध्ये इत्यर्थः, गूढं - सुगुप्तं यथा तथा, भित्तिं—कुड्यं, भजते—आश्रयते इति तथाभूतः सन्, मृत्यवे—मृत्युं घटयितुं, निधनायेत्यर्थः, [ "क्रियार्थोपपदस्य—" (२।३।१४ पा०) इत्यादिना चतुर्थी ] अभवत्, ज्यायांसं भ्रातरं निधनमकरोदिति भावः । एतेन स्त्रीष्वपि विश्वासः नैव कर्त्तव्यः इति व्यञ्जितम् ।

(३७३) मातृेति ।—मातुः,—जनन्याः, शयनीयतूलिका—तूलगर्भशयनोपकरणं, "गदी" इति वङ्गभाषया प्रसिद्धा, तस्याः तले—निम्नदेशे, निषण्णः,—स्थितः, तनयः,—पुत्रः, कनिष्ठः इति भावः, अन्यं तनयम्—अपरपुत्रं, ज्येष्ठमिति भावः, अभिषेक्तुकामस्य—राज्ये अभिषिक्तं कर्त्तुमिच्छोः, दध्रस्य—तदाख्यस्य, कारूषाधिपतेः,—करूषजनपदाधिपस्य, मृत्यवे—मरणाय, अभवत्—अजायत, निधनमकरोदित्यर्थं, पितृहत्यां चकारेति भावः। एतेन राजभिः शय्यादिकमपि सविशेषं परीक्ष्य शयितव्यं, तथा पुत्रोऽपि नैव विश्वसनीयः इति प्रकटीकृतम् ।

(३७४) उत्सारकरुचिम्—उत्सारके—दूरीकरणे, रुचिः,—अभिलाषो यस्य तथाभूतं, शूद्रकं नृपं दूरीकर्त्तुकाममिति भावः ; उत्सारकः,—द्वारपालः, तेन हि प्रभुद्वारतो जनाः दूरीक्रियन्ते इति वाचस्पतीयाभिधाने दर्शनात्, तस्मिन् रुचिः,—प्रीतिः यस्य तथाविधं, समागतं शूद्रकदूतमनादृत्य द्वारपालवचसि दत्तावधानमित्यर्थो वा,

( ३७५ ) मृगयाऽऽसक्तस्य च मथ्नतो गण्डकान् उद्दण्डनड्वलनल-वननिलीनाश्च चम्पाधिपचमूचरभटाः चामुण्डीपतेः आचेमुः प्राणान् पुष्करस्य। ( ३७६ ) वन्दिरागपरञ्च परप्रयुक्ता जय-शब्दमुखरमुखा मल्ला मौखरिं मूर्खं क्षत्रवर्माणम् उदखनन्। ( ३७७ ) अरिपुरे च परकलत्रकामुकं कामिनीवेशगुप्तश्च

सखचिवं—सन्निसहितं, चकोरनाथ—चकोराख्यजनपदाधिप, चन्द्रकेतु तदाख्य, शूद्रकदूत',—तदाख्यनृपते' वार्त्तावह' छिद्रितदृचान्त इति भाव., रहसि—विजने, जीवितात्—प्राणेभ्य', दूरीचकार—अपसारयामास, निजघान इत्यर्थः। एतेन सन्त्री नैव प्रकाशनीय' इति सूचितम्।

( ३७५ ) उद्दण्डेति।—उद्दण्डानि—उन्नतनालानि, नड्वलेषु—नडभूयिष्ठदेशेषु, यानि नलवनानि—नलाख्यतृणवनानि इत्यर्थ, [ "नडप्राये नड्वान् नड्वल इत्यपि" इत्यमर। "नडशादाड्ड्वलच्" ( ४।२।८८ पा० ) इति ड्वलच्] तेषु निलीना',—सुगूढ स्थिता, चम्पेति।—चम्पाधिपस्य—तदाख्यनगरीपतेः, चमूषु—सेनासु, चरन्ति—भ्रमन्ति, तिष्ठन्तीति यावत् तथोक्ता, भटा',—वीरा', चम्पाधिपसैनिका इत्यर्थः, मृगयाऽऽसक्तस्य—आखेटव्यसनिन, गण्डकान्—"गण्डार" इति वङ्गभाषया प्रसिद्धान् खड्गिन, ( "गण्डके खड्ग-खड्गिनो" इत्यमर ) मथ्नत',—व्यापादयत इत्यर्थ, चामुण्डी-पते,—चामुण्डीनाम नगरी, तस्याः पति,—ईश्वर तस्य, पुष्करस्य—तदाख्यस्य राज्ञ, प्राणान्—जीवनमित्यर्थ, आचेमु',—भक्षयामासु', त निजघ्नुरित्यर्थ'। एतेन मृगयायाम-मपि अत्यासक्तिः परिहर्त्तव्या इति प्रदर्शितम्। वाक्येऽस्मिन् म-ड-न-ल-चानामसकृदा-वृत्त्या वृत्त्यनुप्रासोऽलङ्कार. इति ज्ञेयम्।

(३७६) परप्रयुक्ता,—शत्रुप्रहिता, जयेति।—जयशब्देन—विजयतां विजयताम् इत्याकारध्वनिना, मुखराणि—शब्दायमानानि, मुखानि—वदनानि येषा तथाभूताः मल्ला,—तदाख्या' क्षत्रिया, वैतालिकच्छद्मना जयशब्दमुच्चारयन्त इति भाव; [ "मल्ला" इत्यत्र "मल्ला." इति पाठान्तरम् अयौक्तिक, मवर्णशृङ्खलाया सकारस्य विजातीयतया वृत्त्यनुप्रासाननुकूलत्वात् इति सङ्क्षेप] वन्दीति।—वन्दिन,—स्तुतिपाठका, वैतालिका इति यावत्, तेषु राग,—अनुरागः. प्रीतिरिति यावत्, स एव पर',—प्रधान यस्य तथाविध, तदासक्तमित्यर्थ', मौखर—मुखरवंशसम्भूत, मूर्खं—निर्बोधं, क्षत्रवर्माण—तदाख्यं राजानम्, उदखनन्—उदपाटयन्, निजघ्नुरित्यर्थ.। एतेनापि आसक्तिः सर्व्वत्रैव परित्यक्तव्या इति प्रकटीकृतम्।

चन्द्रगुप्तः शकपतिम् अशातयदिति। (३७८) प्रमत्तानां प्रमदाकृताः प्रमादाः श्रुतिविषयम् आगता एव देवस्य। यथा —(३७९) मधुमोदितं मधुरकसंलिप्तैः लाजैः सुप्रभा पुत्रराज्यार्थं महासेनं काशिराजं जघान। (३८०) व्याजजनितकन्दर्पदर्पा च दर्पणेन क्षुरधारा पर्य्यन्तेन अयोध्याधिपतिं परन्तपं रत्नवती

---

(३७७) चन्द्रगुप्त',कामिनीति।—कामिनीवेशेन—स्त्रीपरिच्छदं गृहीत्वेत्यर्थः,गुप्त',—गोपायितस्वरूप, छद्मचारी सन्नित्यर्थः, अरिपुरे—शत्रुनगरे, परकलत्रकामुकं—परस्त्रीसमासक्त,शकपति—शकाख्यक्षत्रियविशेषराजम्, अशातयत्—न्यवधीत्। चन्द्रगुप्तभ्रातृवधूं ध्रुवदेवीं कामयमानः शकाधिपतिः ध्रुवदेवीवेशिना चन्द्रगुप्तेन गूढं व्यापादित इति वार्त्ता। एतेन कैरपि परकलत्रं नैव द्रष्टव्यं,विशेषतो लोकशासकराजै' इति व्यक्तीकृतम्।

(३७८) प्रमत्ताना—प्रमादशालिना, प्रमदाकृता',—प्रमदाभिः,—कामिनीभिः, कृ ताः,—सम्पादिता इत्यर्थः, प्रमादाः,—अनवधानतानिबन्धना विपदः इत्यर्थ, देवस्य —भवतः इति भावः, श्रुतिविषयं—कर्णपथम्, आगताः,—प्राप्ता., भवता श्रुता इत्यर्थ., तथाऽपि कार्य्यान्तरव्यासक्तचित्ततया ते विस्मृतियेत् स्यादिति मत्वा अनुजीविभिरवश्य-कर्त्तं तया एवं स्मार्य्यते, न त्वश्रुतपूर्व्वाय ते विज्ञाप्यते इत्याशय.। एतेन प्रभोः समक्षम् आत्मलाघवख्यापनमेवाधिकारिणा प्रभुपरायणतायाः परिचायकम् इत्यावेदितम्।

(३७९) सुप्रभा—तन्नामप्रसिद्धा स्वमहिषी, पुत्रराज्यार्थं—तनय राज्ये अभिषेक्तुमित्यर्थः, मधुमोदितं—मधुना—मद्येन, मोदितम्—उल्लासित, जनितचित्तविकारमिति यावत्, महासेन—तन्नामानं, काशिराजं—वाराणसीपति, मधुरकसलिप्तैः,—मधुरकेण —मधुरमेव मधुरक तेन, विषविशेषेण इत्यर्थ., ("मधुरा शतपुष्पाया · । क्लीब विषे पुंसि रसे···" इति मेदिनी) संलिप्तैः,—दिग्धैः, लाजैः,—भृष्टधान्यैः, जघान—निहतवती। ("लाजैर्नूपुरैरित्यर्थः; तथा च,—'विषप्रदिग्धेन च नूपुरेण देवी विरक्ता किल काशिराजम्' इति मनुटीकायां कुल्लूकभट्टधृतवचनम्" इति केचित्)।

(३८०) व्याजेति।—व्याजेन—छलेन, जनित',—उत्पादित', कन्दर्पस्य—कामस्य, दर्पः,—आवेशातिशय इत्यर्थः यया तथाविधा, छलिकस्वकामभावप्रदर्शनेन जारस्थस्य काममुद्दीपयन्तीति भाव., रत्नवती—तन्नाम काचित् कामिनी, क्षुरेति।—क्षुरधारा—क्षुरस्येव—स्वनामप्रसिद्धास्त्रविशेषस्येव, धारा—तीक्ष्णता इत्यर्थ., पर्य्यन्ते—प्रान्तदेशे यस्य तादृशेन, क्षुराग्रवन्निशितेनेत्यर्थ., दर्पणेन—आदर्शेन, अयोध्याऽधिपतिम्—

जारूथम्; (३८१) विषचूर्णचुम्बितमकरन्देन च कर्णेन्दीवरेण देवकी देवरानुरक्ता देवसेनं सौह्मम्; (३८२) योगपरागविरसवर्षिणा च मणिनूपुरेण वल्लभा सपत्नीरूपा वैरन्त्यं रन्तिदेवम्; (३८३) वेणीनिगूढेन च शस्त्रेण विन्दुमती वृष्णिं विदूरथम्; (३८४) रसदिग्धमध्येन च मेखलामणिना हंसवती सौवीरं वीरसेनम्;

---

अयोध्याराजं, परन्तपं—शत्रुतापिनं, [ "द्विषत्परयोस्तापेः" (३।२।३९ पा०) इति खच् "खचि ह्रस्वः" (६।४।९४ पा०) इत्युपधाया ह्रस्वः ] जारूथं—तदाख्यं नृपं, जघानेति पूर्वेणान्वयः। एवमुत्तरत्र।

(३८१) देवरानुरक्ता—देवरे—पत्युः कनीयसि भ्रातरि, अनुरक्ता—आसक्ता, विषचूर्णेन—गरलक्षोदेन, चुम्बितः,—स्पृष्टः, मकरन्दः,—मधु यस्य तादृशेन, कर्णेन्दीवरेण—कर्णपूरनीलोत्पलेन, सौह्मं—सुह्मदेशाधिपं, देवसेनं—तदाख्यम्।

(३८२) वल्लभा—प्रिया, महिषीत्यर्थः, सपत्नीरूपा—सम्माननादृत्य सपत्नीं प्रति समासक्त इति क्रोधिनेति भावः, योगेति।—योगपरागः,—अभिचारार्थं कल्पितः मन्त्रपूतौषधचूर्णविशेषः, तेन विरसं—विरुद्धं, वर्षतीति तथोक्तेन; यद्वा,—विरसः,—विषमं विषं, ( "…रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः॥" इति मेदिनी ) तद्वर्षिणा—तत्स्राविणा, सविषपरागलिप्तमुखेनेत्यर्थः, मणिनूपुरेण—रत्नमञ्जीरेण, वैरन्त्यं—वैरन्ती नाम नगरी तस्या अधिपः वैरन्त्यः तं, [ "वृद्धेत्कोसला—" (४।१।१७१ पा०) इत्यादिना ञ्यङ् ] रन्तिदेवं—तन्नामानं नृपम्।

(३८३) विन्दुमती—तन्नाम महिषी, वेणीनिगूढेन—केशपाशे गोपायित्वा निहितेन, वृष्णिं—वृष्णिवंशप्रसूतं, विदूरथं—तन्नामानं राजानम्; तथा च—"शस्त्रेण वेणीविनिगूहितेन विदूरथं वै महिषी जघान" इति मनुटीकायां कुल्लूकभट्टधृतवचनम्।

(३८४) हंसवती—तन्नाम्नी राजमहिषी, रसदिग्धमध्येन—रसः,—विषं, ( "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः ) तेन दिग्धं—लिप्तं, मध्यम्—अभ्यन्तरं यस्य तथाविधेन, मेखलामणिना—काञ्चीदाममध्यनिबद्धरत्नेन, सौवीरं—तदाख्यजनपदाधिपतिं, वीरसेनं—तदाख्यं नृपम्। एतैः प्रबन्धैः स्त्रियस्तोऽपि स्वार्थान्धाः कदाचित् कालसर्पिण्यः भवन्ति इति विभाव्य नरेन्द्रैः सततं सावहितैः स्थातव्यम् इति प्रदर्शितम्।

(३८५) महत्त्वागदलितवदना च विषवारुणीगण्डूषपायनेन पौरवी पौरवेश्वरं सोमकम्" इत्युक्त्वा (३८६) विरराम स्वाम्यादेशसम्पादनाय च निर्जगाम।

देवोऽपि हर्षः (३८७) सकलराज्यस्थितीश्चकार। ततश्च तथा कृतप्रतिज्ञे (३८८) प्रयाणं विजयाय दिशां समादिशति देवे हर्षे, गतायुषां प्रतिसामन्तानाम् उदवसितेषु बहुरूपाणि उपलिङ्गानि वितेनिरे। तथा हि (३८९) अविप्रकृष्टाः कालदूतहृदय इव इतस्ततः चेरुः चटुलाः कृष्णसारश्रेणयः।

---

(३८५) महत्त्वेति।—महत्त्वेन—गूढेन, अगदेन—तदाख्यौषधेन, आत्म-रक्षार्थं विषनाशकेन इति भावः, दलितं—दीर्णं, वदनं—मुखं, मुखकुहरमित्यर्थः यस्याः सा तथाभूता, अविभाव्यगण्डूषपायनेन राजानं जिघांसन्ती राज्ञी तेन स्वप्राणवियोगो भवेत् चेत् इति मत्वा विषनाशकौषधं स्वमुखाभ्यन्तरे स्थापितं दिति विभाव्यम्; पौरवी—तन्नाम्नी महिषी, विषेति।—विषवारुणी—गरलयुक्ता सुरा, तस्या गण्डूषं—मुखपूरणं, तस्य पायनेन—पायनक्रियया, स्वभर्तारं राजानं पाययित्वा इत्यर्थः, पौरवेश्वरं—पुरुवंशीयानामधिपं, सोमकं—तदाख्यं नृपम्। उक्तैः वचनजातैः स्त्रीचरित्रगहनत्व-प्रदर्शनेन संहारकुशलस्य वह्निगम्भीरत्नप्रसूनानां करस्थरूपाः स्त्रियो हि सदैव परिवर्जनीया इति प्रतिपादितम्।

(३८६) विरराम—तूष्णीम्बभूव। स्वाम्यादेशसम्पादनाय—प्रभोराज्ञां पालयितु-मित्यर्थः।

(३८७) सकलराज्यस्थितीः,—समस्तराज्यव्यवस्थाः, राजकार्यस्य सुष्ठु निर्वाह विधाना इत्यर्थः, विजिगीषुभिः प्रयाणकाले प्रथमं स्वाधिकाररक्षणस्य अवश्यकर्तव्य-त्वादिति भावः।

(३८८) दिशां विजयाय—दिग्विजयाय, प्रयाणं—यात्रां, समादिशति—आज्ञापयति सति इत्यर्थः। गतायुषां—निःशेषजीवितकालानां, प्राप्तकालानामिति भावः, प्रतिसामन्तानां—हर्षवर्द्धनस्य विपक्षनृपाणाम्, उदवसितेषु—गृहेषु, उपलिङ्गानि—उपलिङ्ग्यन्ते—अनुमीयन्ते अशुभानि यैः तानि, अनिमित्तानि इत्यर्थः, उत्पातचिह्नानीति यावत्, वितेनिरे—जाजम्भिरे, विस्तारं प्रापुः इति भावः।

(३८९) कालेति।—कालस्य—यमस्य, दूताः,—अनुचरा इत्यर्थः, तेषां हृदय

( ३९० ) प्रचलितलक्ष्मीनूपुरप्रणादप्रतिमा मधुसरघासङ्घात-झङ्कारा जज्ञादिरेऽजिरे। ( ३९१ ) विवृतविकृतवदनविवर-विसृतवह्निविसरा वासरेऽपि विरसं विरेसुः चिरम् अशिवा-र्थम् अशिवाः शिवाः। ( ३९२ ) शवपिशितप्ररूढप्रणया इव कपिपोतकपोलकपिलपक्षतयः काननकपोताः पेतुः।

---

इव—नेत्राणि इव, चटुलाः,—चञ्चलाः, कृष्णशारश्रेणयः,—कालसाराख्यमृगनिवहाः, अविप्रकृष्टाः,—सन्निहिताः सन्तः, चेरुः,—भ्रमन्ति स्म ; जनविरले कानने शान्ते चाश्रमपदे नियतं विहरणशीलानां भीतप्रकृतिकानां तेषां जनपदादौ निर्भयं पर्य्यटनस्य अचिरादेव बहुलजनक्षयेण जनपदादीनामरण्यीभवनसूचकत्वादिति भावः।

( ३९० ) प्रचलितेति।—प्रचलितायाः,—प्रस्थितायाः, तेषां भवनं परित्यज्य इति भावः, लक्ष्म्याः,—श्रियाः, नूपुराणां—मञ्जीराणां, प्रणादप्रतिमाः,—निस्वनसदृशाः, मधुसरघाणां—मधुमक्षिकाणां, ("सरघा मधुमक्षिका" इत्यमरः) सरघाशब्देनैव मधुमक्षिकायामुक्तायामपि पुनः मधुपदं मधुसञ्चयासक्तत्वद्योतनं ज्ञातव्यम् ; सङ्घातस्य—समूहस्य, झङ्काराः,—गुञ्जनानि, अजिरे—अङ्गने, जज्ञादिरे—व्यजृम्भन्त, मधुकराः जुगुञ्जुः इत्यर्थः। सदनादौ मधुकरखण्डं विमुच्य निरन्तरम् उड्डीयमानानां सरघाणां संरावोऽप्यनर्थज्ञापकः इत्याशयः।

( ३९१ ) विवृतेति।—विवृतानां—व्यात्तानाम्, अत एव विकृतानां—विकटानां, वदनानां—मुखानां, विवरेभ्यः,—कुहरेभ्यः, विसृतः,—निर्गतः, वह्निविसरः,—अग्नि-प्रसरः यासां तथाभूताः, व्यात्तवदनैः अग्निमुद्गिरन्त्य इति यावत्, अशिवाः,—अमङ्गल-सूचिकाः, शिवाः,—शृगालाः, उल्कामुख्य इति यावत्, अशिवार्थम्—अमङ्गलार्थं, वासरेऽपि—दिवसेऽपि, का कथा निशायाम् इति अपिशब्दार्थः, विरसं—विकटं, विरेसुः,—शब्दायन्ते स्म, निशायां प्रतियामं शिवाः शब्दायन्ते, अतः तद्व्यतिरिक्ते काले क्रोष्टूनां निनादाः अशुभसूचकाः इति ज्ञेयम्। [इह व-स-र-शानामसकृदावृत्त्या वृत्त्यनुप्रासः]।

( ३९२ ) कपीति।—कपिपोतानां—वानरशावकानां, कपोलाः,—गण्डदेशा इव, कपिलाः,—पिङ्गलाः, पक्षतयः,—पक्षा येषां तथाविधाः, काननकपोताः,—आरण्यपारा-वताः, "गृध्राः" इति केचित्, शवेति।—शवानां—मृतदेहानां, पिशितेषु—मांसेषु, प्ररूढः,—प्रवृद्धः, प्रणयः,—स्पृहा येषां तथाभूता इव, शवपिशिताशनकाङ्क्षिण इवेति यावत्, पेतुः,—पतन्ति स्म, नगरवासानभ्यस्तानां वन्यकपोतानां वन्यफलमूलनिरतानाम्

(३९३) आमन्त्रयमाणा इव दधुः अकालकुसुमानि समम् उपवनतरवः। (३९४) तरलकरतलप्रहारप्रहतपयोधरा रुरुदुः प्रसभं सभाशालभञ्जिकाः। ददृशुः (३९५) आसन्नकचग्रहभयोद्भ्रान्तोत्तमाङ्गमिव आत्मानं कबन्धम् आदर्शोदरेषु योधाः। (३९६) चूडामणिषु चक्रशङ्खकमललक्ष्माणः प्रादुरभवन् पादन्यासा राजमहिषीणाम्। (३९७) चेटीचामराणि

अकस्मात् नगरीषु शल्यसम्पातः हर्षनृपतिरिपिशितभक्षणेच्छया इव इत्युत्प्रेक्षातात्पर्य्यम्; तेषां तथाविध-प्रडीनं महोत्पातज्ञापकम् इति शाकुनिकाः।

(३९३) उपवनतरवः,—आरामस्थवृक्षाः, आमन्त्रयमाणा इव—शिष्टालापं कुर्व्वन्त इव, भोगीवशेषं सपदि सम्पादयितुमभिनन्दयन्त इवेत्यर्थः, समं—युगपत्, अकाल-कुसुमानि—असामयिकपुष्पाणि, पुष्पोद्गमायोग्यकालेऽपि पुष्पाणि इत्यर्थः, दधुः,—धारयन्ति स्म, जनयन्ति स्मेति भावः। दोहददानप्रयत्नादिकमन्तरेणापि आकालिक-कुसुमाद्युद्गमः देशोपद्रवसूचक इत्याशयः।

(३९४) तरलेति।—तरलेन—चञ्चलेन, करतलेन—पाणितलेन, यः प्रहारः,—आघातः, तेन प्रहतौ—ताड़ितौ, पयोधरौ—स्तनौ याभिः तथाविधाः, सभाशाल-भञ्जिकाः,—सभापुत्तलिकाः, प्रसभं—सहसा, रुरुदुः,—रुदन्ति स्म, इवेति शेषः; ताः भाविवियोगशोकात् वक्षःस्थलं करतलैः प्रहृत्य भृशं चक्रन्दुरिवेत्युत्प्रेक्षा बोद्धव्या, प्रतिमास्पन्दने प्रबललोकदुर्निमित्तज्ञापकम् इति ज्ञेयम्।

(३९५) योधाः,—सैनिकाः, आसन्नेति।—आसन्नात्—अतिसन्निहितात्, अचिरभाविन इत्यर्थः, कचग्रहात्—केशाकर्षणात्, हर्षेण हर्षभटैर्वा इति भावः, भयेन—त्रासेन, उद्भ्रान्तं—विघूर्णितम्, उत्तमाङ्गं—शिरो यस्य तथाभूतमिव, आत्मानं—स्वदेहम्, आदर्शोदरेषु—मुकुराभ्यन्तरेषु, कबन्धम्—अशिरस्कं, ("कबन्धस्तु क्रियायुक्तमपमूर्द्ध-कलेवरम्" इत्यमरः)। आदर्शादौ आत्मनः कबन्धदर्शनं त्वरितमृत्युज्ञापकमिति बोध्यम्।

(३९६) राजमहिषीणां—प्रतिपक्षनृपवनितानां,चूडामणिषु—मुकुटस्थरत्नेषु,चक्रेति।—चक्रादीनां—रथाङ्गादीनां, पादस्थितानां सम्राड्व्यञ्जनानामिति भाव, लक्ष्माणि—चिह्नानि येषु तथाभूताः,पादन्यासाः,—चरणनिक्षेपाः, श्रीजेतुश्चक्रवर्त्तिन इति भावः, प्रादुर-भवन्—समपतन्,राज्ञः हर्षस्य रथाङ्गादिशोभितं पदं हनिष्यमाणरिपुरमणीनां शिरोमणिषु प्रतिबिम्बितमिदानीमेवाभूदिति फलितम्। चरणादीनामभावेऽपि तच्चिह्नप्रतिबिम्बनात् विभावनाऽलङ्कारः, विजिगीषोर्दिव्यविभूतिमत्त्वमनेन द्योतितम् इत्यलङ्कारेण वस्तुध्वनिः।

अकस्मात् अधावन्त पाणिपल्लवात्। प्रणयकलहेऽपि दत्तपृष्ठाः चिरम् अभवन् भटाः पराङ्मुखा मानिनीनाम्। (३९८) करिकपोलेषु व्यघटन्त मधुलिहां मधुमदिरापानगोष्ठ्यः। (३९९) समाघ्रातयममहिषगन्धा इव ताम्यन्तः स्तम्बकरिम् अपि हरयो हरितं नवयवसं न चेरुः।

---

(३९७) चेटीति।—चेटीनां—दासीनां, वीजनकारिणीनामिति भावः, चामराणि—बालव्यजनानि, पाणिपल्लवात्—करकिसलयात्, अधावन्त—अच्यवन्त। दत्तपृष्ठाः,—दत्तं—प्रदर्शितमित्यर्थः, पृष्ठं—पश्चाद्देशः यैः तथाभूताः, प्रणयकलहे पराजिततया पृष्ठप्रदर्शनं कृतवन्त इति भावः, भटाः,—वीराः, चिरं पराङ्मुखाः,—चिरं विमुखाः, पलायनपरा इति भावः, अभवन्—अजायन्त, अबलाकृतकृतककलहेऽपि पराजयः तेषां भाविमहासङ्ग्रामे अवश्यं पराभवं बोधयति इति भावः।

(३९८) करिकपोलेषु—करिणां—हस्तिनां, कपोलेषु—गण्डेषु, अस्रुतमदेषु इति भावः, मधुलिहां—भ्रमराणां, मध्विति।—मधु—मदजलरूपः पुष्परसः एव, मदिरा—मद्यं, तस्याः पानगोष्ठ्यः,—पानसभाः, व्यघटन्त—व्ययुज्यन्त, विलुप्ताः भूताः इत्यर्थः, मकरन्दलोलुपा अपि मधुपाः कुसुमनिकरवसतिं परित्यज्य स्रवन्मदकरिकपोलेषु प्राक् नितरामवसन्, इदानीन्तु रिपुकरिणां मदस्राविलाभावात् अलीनां सभाः पूर्ववत् तत्र नासन्निति भावः; मतङ्गजात् निस्तेजसः मदवारि न अस्रवत् इति समुदितार्थः। कुञ्जराणां कपोलादिदेशात् भ्रमराणां पलायनस्य दुर्निमित्तसूचकत्वादिति भावः।

(३९९) हरयः,—वाजिनः, घोटका इत्यर्थः, ("यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥" इत्यमरः) समाघ्रातेति।—समाघ्रातः,—सम्यक् आघ्राणं प्राप्त इत्यर्थः, यममहिषस्य—कृतान्तवाहनस्य इति यावत्, गन्धः,—घ्रेयः यैः तथाभूता इव, ताम्यन्तः,—क्लिश्यन्तः, आसन्नमृत्युसम्भावनया इति भावः, स्तम्बकरिं—स्तम्बं—गुच्छं करोति यस्तं, व्रीहिमित्यर्थः, तथा हरितं—श्यामलं, नवयवसमपि—नूतनं घासमपि; यद्वा,—इह समुच्चयार्थकोऽपिशब्दः, तेन श्यामलं नवयवसं स्तम्बकरिमपि इत्यन्वयः, अन्यथा ["स्तम्बशकृतोरिन्" (३।२।२४ पा०) इत्यत्र "व्रीहि-वत्सयोरिति वक्तव्यम्" (वा०) इति व्रीह्यर्थे एव इनः विधानात्] यद्वा,—स्तम्बफलप्रसवोन्मुखमपि सुरसं यवसं वाजिनः न अभुञ्जत इति अन्वयलभ्यार्थः, न चेरुः,—न भक्षयामासुरित्यर्थः।

(४००) चलवलयावलीवाचालबालिकातालिकाऽऽतोद्यलालिता अपि न ननृतुः मन्दा मन्दिरमयूराः। निशि निशि (४०१) रजनिकरहरिणनिहितनयन इव उन्मुखः तारम् उपतोरणम् अकारणम् अकाणीत् कौलेयकगणः। (४०२) गणयन्तीव गतायुषः तर्जनतरलया तर्जन्या दिवसम् आट वाटकेषु कोटवी।

---

(४००) मन्दिरमयूराः,—गृहपालितशिखिनः, चलेति।—चलाभिः,—तरलाभिः, तालदानप्रसङ्गेन चञ्चलाभिरित्यर्थः, वलयावलीभिः,—कङ्कणश्रेणीभिः, वाचालाः,—मुखराः, सशब्दा इत्यर्थः, या बालिकाः,—कन्याः, तासां तालिका—करतलध्वनिरेव, आतोद्यं—वाद्यभेदः, ("वादित्रातोद्यनामकम्" इत्यमरः) तेन लालिता अपि—नर्त्तिता अपि, उत्तेजिता अपीति भावः, करतालमन्द्रध्वनिश्रवणसमकालं प्राक् सहर्षं नृत्यन्तः अपीति तात्पर्य्यं, मन्दाः,—विमनसः, सपालकानां राज्ञां भाविवियोगाशङ्कया इति भावः।

(४०१) कौलेयकगणः,—कुक्कुरसमूहः, ("कौलेयकः सारमेयः कुक्कुरो मृगदंशकः" इत्यमरः) उपतोरणं—बहिर्द्वार समीपे, ("तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः) रजनीति।—रजनिकरस्य—चन्द्रस्य, यो हरिणः,—मृगः, अङ्कस्थित इति भावः, तस्मिन् निहिते—निक्षिप्ते, नयने—नेत्रे येन तथाभूत इव, दंशनेच्छया, तस्य मृगदंशकात्वलादिति भावः, उन्मुखः,—ऊर्द्धमुखः सन्, अकारणम्—अहेतुकं, तारम्—उच्चैः, अकाणीत्—व्यरावीत्, चीत्कार इत्यर्थः। कुक्कुराः हि भवन्ति पिशितप्रियाः, तेन हि ते मृगयायां यथा उन्मुखीभूय मृगाननुयान्ति, तथैव शशाङ्काङ्कस्थं कुरङ्गमाक्रमितुमिव उन्मुखीभूय अकस्मात् सर्व्वत्र धावितुमारेभिरे इत्युत्प्रेक्षितार्थतात्पर्य्यम्, अत्रायं समुदिताशयः, प्रतिनिशं सतारं रुवतां शुनां शब्देनानुमीयते यदेते भावि राजवियोगमाशङ्क्य उन्मुखीभूय निर्भरमरुदन्निवेति।

(४०२) कोटवी—नग्ना स्त्री, उन्मत्ता इति भावः, ("स्त्री नग्निका कोटवी स्यात्" इत्यमरः) तर्जनतरलया—तर्जनं—निर्भर्त्सनं, तत्र तरला—चञ्चला तया, तर्जन्या—अङ्गुष्ठानन्तरवर्त्तिन्या अङ्गुल्या, गतायुषः,—गतजीवितान्, गणयन्तीव—सङ्ख्यां कुर्वन्तीव, के के गतायुषो जाता इति गणनां कुर्व्वन्तीवेत्यर्थः. दिवसं—दिनं व्याप्येत्यर्थः, [व्याप्त्यर्थे द्वितीया] वाटकेषु—वाटः,—मार्गः, स एव वाटकः तेषु, पथिषु इत्यर्थः, ("वाटो मार्गे वृतिस्थाने" इति मेदिनी) आट—बभ्राम। अपरिहार्य्यभाविपतिवियोगमनिशं

(४०३) कुट्टिमेषु कुटिलहरिणखुरवेणीतरङ्गिण्यः शष्पराजयोऽजायन्त। (४०४) जनितवेणीबन्धानि निरञ्जनरोचनारोचींषि चषकमधुनि मुखकमलप्रतिबिम्बानि अदृश्यन्त भटीनाम्। (४०५) समासन्नात्मापहारचकिता इव चकम्पिरे भूमयः। (४०६) वध्यालङ्काररक्तचन्दनरसच्छटा इव अलक्ष्यन्त शूराणां पतिताः शरीरेषु विकसितबन्धूककुसुमशोणितशोचिषः

---

क्षावयन्त्यः उन्मत्ताः अत एव विवस्त्राः रिपुप्रमदाः सोद्वेगं प्रकाशराजपथेषु पर्य्यटुः, तेनानुमीयते यत् ताः प्रतिपन्नवियोगतया विधुराः प्रमत्ताश्च जाता इति।

(४०३) कुट्टिमेषु—गृहाभ्यन्तरतलेषु, कुटिलेति।—कुटिलाभिः,—वक्राभिः, हरिणानां—मृगाणां, खुरवेणीभिः,—शफपरम्पराभिः, तरङ्गिण्यः,—भङ्गवत्यः, सञ्जाततरङ्गा इव प्रतीयमाना इति भावः, शष्पराजयः,—अभिनवतृणश्रेणयः, रिपूणां राजश्रीविहीनानि गृहाणि वन्यहरिणानां प्रचरणयोग्यानि अरण्यानीव प्रतीयिरे इति भावः।

(४०४) भटीनां—सैनिकनारीणां, जनितेति।—जनितः,—कृतः, वेणीबन्धः, —केशसंयमनं येषां येषु वा तानि. एकवेणीधराणीत्यर्थः, प्रोषितभर्तृकाणां वेणीबन्धनियमस्य शास्त्रीयत्वादिति भावः; निरञ्जनेति।—निरञ्जनानि—कज्जलवर्ज्जितानि, अत एव रोचनावत्—गोरोचना इव. रोचींषि—प्रभा येषां तथाभूतानि, पीताभनयनानीति भावः, चषकमधुनि—पानपात्रवर्त्तिनि मद्ये; तैलमद्यप्रभृतिषु प्रतिच्छायादर्शनस्य अमङ्गलसूचकत्वादिति भावः। वीतनाथानामिव तासामात्मप्रतिबिम्बादौ तथाविधमलक्षणदर्शनं झटिति समुत्पत्स्यमानस्य दौर्भाग्यस्य ज्ञापकम् इत्याशयः।

(४०५) समासन्नेति।—समासन्नः,—अतिसन्निकृष्टः, आत्मनः,—स्वस्य. यः अपहारः,—अपहरणं, परहस्तगमनमिति भावः, तेन चकिता इव—शङ्किता इव, भूमयः,—भुवः, तत्तद्देशा इति भावः, चकम्पिरे—प्रवेपन्ते स्म; अरात्यधिकृतजनपदेषु भूकम्पोऽभूदिति भावः।

(४०६) वध्येति।—वध्यानां—वधार्थं वध्यस्थानं नीयमानानां जनानाम्, अलङ्काराः,—भूषणीभूताः, या रक्तचन्दनरसच्छटाः,—रक्तचन्दनद्रवानुलेपाः ता इव, राजदण्डेन वध्याः रक्तचन्दनैरनुलिप्यन्ते इति प्रसिद्धिः। शूराणां—भटानाम्। विकसितेति।—

शोणितवृष्टयः। (४०७) पर्य्यग्नीकुर्वाणा इव विनश्वरीं श्रियम्, अविरलस्फुरत्स्फुलिङ्गाङ्गारोद्गारदग्धतारागणा गणशः पतन्तः प्रज्वलन्तो न व्यरंसिषुः उल्कादण्डाः। प्रथममेव (४०८) प्रतीहारीव अपहरन्ती प्रतिभवनं चामरातपत्रव्यजनानि परुषा बभ्राम वात्येति।

इति श्रीबाणभट्टकृते हर्षचरिते प्रयाणप्रतिज्ञावर्णनं नाम
षष्ठ उच्छ्वासः॥ ६॥

---

विकसितानि—प्रस्फुटानि, बन्धूककुसुमानीव—बन्धुजीवपुष्पाणि इव, ("बन्धूको बन्धुजीवकः" इत्यमरः) शोणितानि—रक्तानि, शोचींषि—प्रभाः यासां तथाविधाः, शोणितवृष्टयः,—रक्तवर्षाणि; रक्तचन्दनैः चर्चिताः रक्तकरवीरदामभिश्च विभूषिताः वध्याः इव रिपवोऽपि सर्व्वत्र समदृश्यन्त इति समुदितार्थः; शत्रुनगरीषु महोत्पातसूचकरुधिरवृष्टयो बभूवुरिति तु सङ्क्षेपः।

(४०७) पर्य्यग्नीति।—विनश्वरीं—विनाशिनीं, नाशोन्मुखीमित्यर्थः, श्रियं—लक्ष्मीं, पर्य्यग्नीकुर्वाणा इव—अग्नये परिग्लाना पर्य्यग्निः, ["पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या" (वा०) इति चतुर्थीतत्पुरुषः] अग्निसंयोगात् दग्धशरीरेत्यर्थः, ततः अपर्य्यग्निं पर्य्यग्निं कुर्वाणा इति अभूततद्भावे च्विः करोतियोगात्; या हि श्रीः प्राक् अग्निना परिग्लाना नासीत्, तामिदानीं परिग्लानां कुर्वन्तः इव इत्यर्थः, अग्निना परिवेष्टयन्त इवेति भावः, "विनष्टम् अग्निना दहेत्" इति शास्त्रादित्याशयः, अविरलेति।—अविरलं—निरन्तरं यथा तथा, स्फुरन्तः,—दीप्यमानाः, स्फुलिङ्गाः,—अग्निकणा येषां तथाभूताः, ये अङ्गाराः,—ज्वलदुल्मुकाः, ("अङ्गि-मदि-मन्दिभ्य आरन्" (उ० ३ पा० १३४ सू०) इत्यारन्] तेषाम् उद्गारेण—निःसारणेन, दग्धाः,—भस्मीकृताः, तप्ताः वा, तारागणाः,—नक्षत्रवृन्दानि यैः तथाविधाः, गणशः,—सङ्घशः, बहुश इत्यर्थः, पतन्तः उल्कादण्डाः,—दण्डाकारा अग्निरेखाः, न व्यरंसिषुः,—न विरताः, अविरतमपतन्; इत्यर्थः। अजस्रोल्कापातः राजविनाशसूचकः इति बोध्यम्। निरन्तरं गगनात् रेखाकारेण पतन्तः तेजसां पुञ्जाः उल्कारूपाः प्रज्वलत्स्फुलिङ्गोद्गारैः तारकाराजिं दग्धीकर्त्तुमारेभिरे इव, तेनैतदनुमीयते यत्, रिपूणामाशुविनाशिनीं श्रियमेते स्वज्वालाभिः भस्मीकर्त्तुमिव समुदिताः इति समुदितोत्प्रेक्षितवाक्यतात्पर्य्यम्।

(४०८) परुषा—कर्कशा, वात्या—वायुसङ्घातः, ["पाशादिभ्यो यः" (४।२।४९ पा०) इति समूहार्थे यप्रत्ययः] प्रतीहारी इव—दौवारिकी

# सप्तम उच्छ्वासः ।

अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य ॥ १ ॥

---

इव, विजयिनृपस्येति भावः, चामरैति ।—चामराणि—प्रकीर्णकानि, वालव्यजनानीत्यर्थः, आतपत्राणि—छत्राणि, नृपलक्षाणीति यावत्, व्यजनानि—तालवृन्तानि तानि, अपहरन्ती—अपसारयन्ती, रिपुपुरीषु प्रचण्डः पवनः विजिगीषोः प्रतिहारी इव विचेरः इत्युत्प्रेक्षा, विजेता प्रतीहारीभिः स्वप्रतापविजितानां विपक्षाणां छत्रचामरादीनि स्वतन्त्रनृपव्यञ्जनानि अपहार्य्यन्ते इति लोकव्यवहारः । सततं प्रतिकूलमरुतः एवमेव ववुः, येन प्रतिहार्य्यः विपक्षाणां राज्ञां शिरसि छत्रादिकं धारयितुमपि नाशकन्निति भावः ।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोध-
विद्यारत्नाभ्यां परिवर्ज्जितायां प्रतिसंस्कृतायाञ्चामलाख्यायां
श्रीहर्षचरितव्याख्यायां षष्ठ उच्छ्वासः ॥ ६ ॥

---

अथ हर्षस्य युद्धयात्रां विवर्णयिषन् कविः, कदाचित् कोऽपि एवमाशङ्केत चेत् यत् सम्भावितात्मभुवनविजेतृबलस्यापि हर्षस्य ईदृशी असम्भाव्या प्रतिज्ञा सर्व्वथैवानुचिता, रिपवश्चेत् दुर्गमदेशे पलायिता भवेयुः, तदा कथं स प्राक् कृतां प्रतिज्ञां पूरयितुमीशीत ? कथं वा वहुराज्ञीं पृथ्वीमेक एव जयेत् ? इत्याशंसायां समाधत्ते, अङ्गनेति ।—कृतप्रतिज्ञस्य—शपथमारूढ़स्य, शत्रून् समूलपेषं पेष्टुं धृतपरिकरस्येत्यर्थः, सत्त्वौर्जित्येन एवं करिष्याम्येव इति दृढ़सङ्कल्पस्य इति भावः, वीरस्य—शूरस्य, वसुधा—पृथ्वी अङ्गनवेदी—अजिरवर्त्तिनी परिष्कृता भूमिः एवेत्यर्थः, शूराः पृथिव्या असीमत्वं तुच्छीकृत्य विजित्य च तां स्वगृहप्राङ्गणवत् लीलयैव तत्र यथासुखं विचरन्तीति भावः ; जलधिः,—समुद्रः, कुल्या—अल्पा कृत्रिमा सरिदेवेत्यर्थः, ( "कुल्याऽल्पा कृत्रिमा सरित्" इत्यमरः ) दुष्पारं समुद्रं क्षुद्रजलाशयवत् सुपारं मत्वा तत्परपारस्थमपि

धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्य्यम्।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ?॥ २॥

(१) अथ व्यतीतेषु च केषुचित् दिवसेषु, मौहूर्त्तिकमण्डलेन शतशः सुगणिते सुप्रशस्तेऽहनि

---

शत्रुम् अनायासेनैव विनिघ्नन्ति इति भावः; पातालम्—अधोभुवनं, स्थली—अकृत्रिमभूमिभूतं, ["जानपद—" (४।१।४२ पा०) इत्यादिना ङीष्] अत्तुङ्गभूभाग इति भावः, दुर्गमं पातालमपि समतलभूभागवत् अनायासेन रिपुजयार्थं प्रविशन्ति इति भावः; सुमेरुः,—हेमाद्रिः, स्वर्गराज्यमिति भावः, वल्मीकः,—कीटविशेषरचितमृत्तिकास्तूप इत्यर्थः, तुङ्गशृङ्गं सुमेरुमपि वल्मीकस्तूपवत् अवलीलया आक्रामन्तीति भावः; शूरा हि निजशौर्य्यप्रभावेण त्रिभुवनं करतलगतफलमिव अनुमिन्वन्ति, न तु स्ववीर्य्यगुणानां तेषां साधनान्तरप्रयोजनमिति निष्कर्षः। अत्र केवलायाः वसुधायाः अङ्गनवेदीरूपत्वोक्तेः, तथा जलधेः कुल्यारूपतया पातालस्य स्थलीभूततया सुमेरोः वल्मीकरूपतयोक्तेश्च निरङ्गाणां रूपकाणां सजातीयानां संसृष्टिः। आर्य्या वृत्तम्॥ १॥

वीराणां प्रभावमाह, धृतेति।—बाहुशालिनि—भुजवीर्य्यवति इत्यर्थः, जने इति शेषः, धृतधनुषि—धनुष्पाणौ सति, त्रिभुवनमेव जेष्यामि इति प्रतिज्ञाय गृहीतचापे सतीत्यर्थः, [अत्र समासान्तविधेरनित्यत्वात् "धनुषश्च" (५।४।१३२ पा०) इति बहुव्रीहेरनङादेशाभावः इति ज्ञेयम्, अन्यथा धृतधन्वनि इति स्यादिति विभाव्यम्] शैलाः,—पर्व्वताः, न नमन्ति—न तं प्रणमन्ति, आत्मविनाशभयादिति भावः, इति यत्, तत्—अनमनमिति यावत्, आश्चर्य्यं—चित्रं, पर्व्वतानपि वीरा धनुर्बलेन नमयितुं शक्नुवन्तीति भावः; रिपुसंज्ञकेषु—शत्रुनामधारिषु, वराकेषु—दीनेषु, काकेषु—सन्तत्रजःसु, तत्तुल्यनिर्वीर्य्येषु स्वल्पवीर्य्येषु वा; यद्वा,—कर्णकठोररटनमात्रपराश्रयोच्छिष्टभोजिषु इति भावः, कैव गणना ?—क आदरः ? इत्यर्थः, अन्ये वायससमाः शत्रवस्तस्य बाहुबलशालिनः सकाशे नगण्याः, तान् हि असौ तृणाय मन्यते च इति भावः। एतेन हर्षस्य भावि त्रिभुवनविजयित्वं सूच्यते। अत्र रिपुषु काकरूपत्वोक्तेः निरङ्गं रूपकम्। आर्य्या वृत्तम्॥ २॥

(१) अथेति।—"अथ" इत्यस्य "भवनान्निर्जगाम" इति परेण सम्बन्धः। क्रमेण विवृणोति, व्यतीतेषु इति।—व्यतीतेषु—अतिक्रान्तेषु। मौहूर्त्तिकमण्डलेन—ज्योतिर्विद्गणेन, शतशः,—पुनः पुनरित्यर्थः, सुगणिते—सुष्ठु गणनया निरूपिते।

(२) दत्ते चतसृणामपि दिशां विजययोग्ये दण्डयात्रालग्ने, सलिलमोक्षविशारदैः शारदैरिव अम्भोधरैः कालधौतैः शातकौम्भैश्च कुम्भैः स्नात्वा, (३) विरचय्य परमया भक्त्या भगवतो नीललोहितस्य अर्चाम्, उदर्चिषं हुत्वा प्रदक्षिणावर्त्तशिखाकलापम् आशुशुक्षणिं, दत्त्वा द्विजेभ्यो रत्नवन्ति राजतानि जातरूपमयाणि च सहस्रशः तिलपात्राणि,

(२) दण्डयात्रालग्ने—दण्डः,—सैन्यं, चतुरङ्गं बलमिति भावः, ("दण्डोऽस्त्री लगुडे पुमान्। सैन्ये काले मानभेदे……" इति मेदिनी) तस्य, यद्वा,—दण्डाय—युद्धाय, तुरीयोपायभूतायेत्यर्थः, यात्रा—प्रयाणं, तस्याः लग्नम्—अनुकूलराश्युदयः, शुभक्षणः इत्यर्थः तस्मिन्, दत्ते—निर्दिष्टे। सलिलेति।—सलिलस्य—जलस्य, मोक्षे—निःसारणे, उद्गिरणे इत्यर्थः, विशारदाः,—पटवः तैः, सुखनिःसार्यजलैरिति यावत्, प्रशस्तमुखैरिति भावः; अन्यत्र,—सलिलानां मोक्षेण—वर्षासु वर्षणेन, विशारदाः,—शुभ्राः तैः, शारदैः,—शरत्कालिकैरिव, अम्भोधरैः,—जलधरैः, जलपूर्णैरित्यर्थः, मेघैश्च, कालधौतैः,—राजतैः, ("कलधौतं रौप्य-हेम्नोः" इत्यमरः) अन्यच्च,—कालेन—वर्षाऽपगमेन, धौताः,—निर्दुष्टाः श्वेता वा तैः, शातकौम्भैः,—कानकैः, स्वर्णमयैरित्यर्थः, ("स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्। तपनीयं शातकुम्भम्" इत्यमरः)। अम्भोधरैः सह कुम्भानामवैधर्म्यसाम्योक्तेः श्लेषानुप्राणितोपमाऽलङ्कारः।

(३) नीललोहितस्य—नीलः कण्ठे, लोहितः जटायां तस्य, हरस्येत्यर्थः, ["वर्णो वर्णेन" (२।१।६९ पा०) इति समासः। "धूर्जटिर्नीललोहितः। हर स्मरहरः…" इत्यमरः) अर्चां—पूजां, विरचय्य—विधाय, उदर्चिषम्—उन्नतशिखं, प्रदक्षिणेति।—प्रदक्षिणं—दक्षिणभागमनुसृत्येत्यर्थः, आवर्त्तते—उच्छलति यः तथाविधः, शिखाकलापः,—ज्वालासमूहः यस्य तथाभूतं, दक्षिणावर्त्तवह्निः शुभसूचकत्वादिति भावः, आशुशुक्षणिम्—अग्निम्, ("अग्निर्वैश्वानरो वह्निः……शिखावानाशुशुक्षणिः" इत्यमरः) हुत्वा—तर्पयित्वा, पावके हविः प्रक्षिप्येति भावः; द्विजेभ्यः,—ब्राह्मणेभ्य, रत्नवन्ति—रत्नभूयिष्ठानि, राजतानि—रौप्यमयाणि, जातरूपमयाणि—स्वर्णमयाणि, ("स्वर्णं सुवर्णं……। चामीकरं जातरूपम्……॥" इत्यमरः) सहस्रशः,—बहुशः, अनेकसङ्ख्यकानीति यावत्, ["सङ्ख्यैकवचनाच्च वीप्सायाम्" (५।४।४३ पा०) इति शस्] तिलपात्राणि—तिलपूर्णानि भाजनानि,

(४) कनकपत्रलताऽलङ्कृतशफशृङ्गशिखरा गाश्च अर्ब्बुदशः, समुपविश्य विततव्याघ्रचर्म्मणि भद्रासने, (५) विलिप्य प्रथम-विलिप्तायुधो निजयशोधवलेन आ चरणतः चन्दनेन शरीर, परिधाय राजहंसमिथुनलक्ष्मणी सदृशे दुकूले, (६) परमेश्वर-चिह्नभूतां शशिकलाम् इव कल्पयित्वा सितकुसुममुण्डमालिकां शिरसि, नीत्वा कर्णाभरणमरकतमयूखमिव कर्णगोचरतां गोरोचनाच्छुरितम् अभिनवं दूर्व्वापल्लवं, विन्यस्य सह

(४) कनकेति।—कनकपत्रलताभिः,—सुवर्णपत्रभङ्गिभिः, अलङ्कृतानि—मण्डितानि, शफानि—खुराः, शृङ्गशिखराणि—विषाणाग्राणि च यासां तथाभूताः, गाः,—धेनूः, अर्बुदशः, दशकोटिशः, बहुसङ्ख्यका इत्यर्थः। विततेति।—विततं—विस्तृतं, व्याघ्रचर्म—शार्दूलत्वक् यस्मिन् तथोक्ते, भद्रासने—नृपासने, हैमसिंहासने इति यावत्, ("नृपासनं यत्तद्भद्रासनं सिंहासनन्तु तत्। हैमम्" इत्यमरः) राज्ञां व्याघ्रचर्म्मासनस्य चक्रवर्त्तियोग्यत्वज्ञापकत्वादिति भावः।

(५) निजयशोधवलेन—निजेन—स्वकीयेन, यशसा—कीर्त्त्या, धवलं—समधिकं श्वेतं तेन; यद्वा,—निजयशोवत् धवलेन, चन्दनेन—श्रीखण्डेन, श्वेतचन्दनेनेति यावत्, प्रथमेति।—प्रथमम्—अग्रे एव इत्यर्थः, विलिप्तानि—अनुरञ्जितानि, आयुधानि—कोदण्डगदाशक्तिचन्द्रहासादीनि येन तथाभूतः, आ चरणतः,—चरणपर्य्यन्तं, शरीरं—देहं, विलिप्य—उपदिह्य। राजेति।—राजहंसमिथुनं—रक्तचञ्चुचरण-श्वेतवर्णहंसविशेष-दम्पतीत्यर्थः, ("राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः) लक्ष्म—चिह्नं ययोः तथाभूते, ("चिह्नं लक्ष्म च लक्षणम्" इत्यमरः) सदृशे—अनुरूपे, राजयोग्ये इत्यर्थः, दुकूले—वसने, उत्तरीयाधोंऽशुके इत्यर्थः, परिधाय—परिहित्य, यथोपयुक्ताचारेण इत्याशयः।

(६) परमेश्वरचिह्नभूतां—परमेश्वरस्य—महाराजस्य, हरस्य च, चिह्नभूतां—लक्ष्मरूपां, सार्व्वभौमलक्षणां,अथ हरप्रसादीकृताच्च इत्यर्थः; नैष्ठिकोपासकैः इष्टदेवसमर्पण-मन्तरेण माल्यवसनभूषणादयः नैव स्वीक्रियन्ते इति भावः, सितकुसुममुण्डमालिकां—श्वेतपुष्पहारविशेषं,शिरसि कल्पयित्वा—धृत्वा। कर्णाभरणमरकतमयूखमिव—श्रवणभूषण-हरिन्मणिकिरणमिव, गोरोचनाच्छुरितं—गोरोचनया—माङ्गल्यद्रव्यविशेषेण, छुरितं—प्रलिप्तम्,अभिनवम्—अम्लानं, हरिद्वर्णमिति यावत्,दूर्व्वापल्लवं—शतपर्व्विकाकिसलयं,

(७) शासनवलयेन गमनमङ्गलप्रतिसरं प्रकोष्ठे, (८) परिपूजित-प्रहृष्ट-पुरोहित-करप्रकीर्य्यमाण-शान्तिसलिलशीकरनिकराभ्युक्षितशिराः सम्प्रेष्य महार्हाणि वाहनानि, (९) बहलरत्नालोकलिप्तककुम्भि च भूषणानि भूभुजां संविभज्य, (१०) क्लिष्टकार्पटिककुलपुत्त्रलोकमोचितैः प्रसाददानैश्च विमुच्य

---

कोमलदूर्व्वादलमित्यर्थः ; दूर्व्वाश्च पल्लवानि च तत्समुदायम् इति वा, [ "विभाषा—" (२।४।१२ पा०) इत्यादौ "फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्" (वा०) इति बहुवचनान्तसर्व्वावयवके एकवद्भावः ] कर्णगोचरतां—श्रुतिविषयतां, कर्णदेशमित्यर्थः, नीत्वा—प्रापय्य, कर्णयोः संस्थाप्य इत्यर्थः ।

(७) शासनवलयेन—मुद्राकटकेन, "मोहर" इति वङ्गभाषया प्रसिद्धेन राजकीयलिखादीनामुपरि दत्तशाङ्काङ्कितेन राजानुमोदनज्ञापकचिह्नविशेषयुक्तेन करभूषणेनेति यावत्, सह गमनमङ्गलप्रतिसरं—यात्रिकशुभहस्तसूत्रं, विद्विषां विजयाय युद्धयात्रायाः साफल्यार्थं वा रक्षार्थं मन्त्रपूतं सूत्रविशेषमित्यर्थः, ("हस्तसूत्रे प्रतिसरोऽस्त्रियाम्" इत्यमरः) प्रकोष्ठे—कूर्पर-मणिबन्धयोः अन्तरे ।

(८) परिपूजितेति ।—परिपूजितेन—समर्च्चितेन, अत एव प्रहृष्टेन—प्रीतेन, पुरोहितेन—पुरोधसा, करेण—हस्तेन, प्रकीर्य्यमाणानां—विक्षिप्यमाणानां, शान्तिसलिलानां—शान्त्युदकानां, शीकरनिकरैः,—कणसमूहैः, अभ्युक्षितं—सिक्तं, शिरः,—मस्तकं यस्य तथाभूतः ; पूजाप्रीतपुरोहितशान्तिनीराभिषेकात् अन्तरायाः शरीरच्छाया अपि न स्प्रष्टुमर्हन्ति इति विवेकः ; महार्हाणि—बहुमूल्यानि, वाहनानि—हस्त्यादीनि ।

(९) बहलेति ।—बहलानां—प्रभूतानां, रत्नानां—मणीनाम्, आलोकेन—प्रभया, लिप्ताः,—रञ्जिताः, ककुभः,—दिशः यैः तानि, भूषणानि—अलङ्कारान्, भूभुजां—राज्ञां, स्वपक्षाश्रितसामन्तानामिति भावः, संविभज्य—सम्यक् विभागेन दत्त्वा इत्यर्थः, दानरूपद्वितीयोपायप्रयोगेण भिन्नराजानां वशीकरणायेति भावः ; एतेनास्य नीतिकुशलता प्रदर्शिता ।

(१०) क्लिष्टेति ।—क्लिष्टकार्पटिकाः,—जीर्णमलिनवसनाः, अतीव दरिद्राः इत्यर्थः, ये कुलपुत्रलोकाः,—सत्कुलजातजनाः, सत्पात्राणीत्यर्थः, तेषु मोचितैः,—वितीर्णैः, दारिद्र्यक्लेशविघटनपटीयोभिः इति भावः, प्रसाददानैः,—अनुग्रह

बन्धनानि, (११) नियुज्य तत्कालस्मरणस्फुरणेन कथितात्मानमिव च अष्टादशद्वीपजेतव्याधिकारे दक्षिणं भुजस्तम्भम्, अहमहमिकया सेवकैः इव सुनिमित्तैः अपि समग्रैः अग्रतो भवद्भिः, (१२) प्रमुदितप्रजाजन्यमानजयशब्दकोलाहलो हिरण्यगर्भ इव ब्रह्माण्डात् कृतयुगकरणाय भवनात् निर्जगाम।

(१३) नातिदूरे च नगरात् उपसरस्वति निर्मिते महति तृणमये, समुत्तम्भिततुङ्गतोरणे, वेदीविनिहितपल्लवललामहेम-

वितरणैः, बन्धनानि—दारिद्र्यनिगड़सन्दानानि, अखिलाभावयन्त्रणाबहुलानि बन्धनवत् पीड़ाकराणि दारिद्र्यदुःखानि वा इति भावः, विमुच्य—अपाकृत्येत्यर्थः, कुलपुत्रलोकाना-मिति भावः।

(११) तत्कालस्मरणस्फुरणेन—तत्कालस्य—तात्कालिकस्य तत्प्राप्तस्य, भ्रातृपरिभव-रूपस्य इति भावः, स्मरणेन—मनसि उदयेन, यत् स्फुरणं—बाहोः स्पन्दनम्, उद्दीपन-मिति भावः तेन, कथितः,—निवेदितः, आत्मा—स्वरूपं यस्मै तथाभूतमिव, निवेदित-प्रतिहिंसाऽभिप्रायमिव इति भावः; अष्टादशेति।—अष्टादशानाम्—अष्टादशसङ्ख्यकानां, द्वीपानां—जम्बूप्लक्षादीनां, जितव्यानां—विजेतुमर्हाणां, यः अधिकारः,—आयत्ती-करणं, सैनापत्यमिति यावत् तस्मिन्; पुंसां दक्षिणभुजस्पन्दनस्य शुभसूचकत्वादिति भावः। अहमहमिकया—अहमग्रे अहमग्रे इत्येवं स्पर्द्धया, ("अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कारः" इत्यमरः)। सुनिमित्तैः,—शुभसूचकैः लक्षणैः। अग्रतो भवद्भिः,—पुरतो गच्छद्भिः; तस्य गमनकाले बहूनि सुलक्षणानि प्रादुरासन् इति भावः।

(१२) प्रमुदितेति।—प्रमुदिताभिः,—प्रहृष्टाभिः, प्रजाभिः,—प्रकृतिवर्गैः, जन्यमानः,—क्रियमाणः, जयशब्दकोलाहलः,—जय जयेति कलरवः यस्य तथाभूतः, ब्रह्माण्डात्—हैमाण्डात्, हिरण्यगर्भ एव—ब्रह्मा इव, कृतयुगकरणाय—सत्ययुग-स्थापनाय; कृतस्य—आचरितस्य, अनुजनितस्य भ्रातृद्रोहस्य इति भावः, युगकरणाय—प्रतीकाराय इत्यर्थः. दुर्जनाम् समूलं विनाश्य कृतयुगवत् सुजनानां स्थापनाय इत्यर्थो वा। इह हिरण्यगर्भ-हर्षयोः साहश्यावबोधादुपमा, ब्रह्माण्डेन सह भवनस्याभेदारोपाच्च रूपकमिति सङ्करः।

(१३) उपसरस्वति—सरस्वत्या नद्याः समीपे, [इत्यव्ययीभावः]। तृणमये—तृण-प्रचुले,तृणरचिते इत्यर्थः। समिति।—समुत्तम्भितः,—समुत्थापितः, [उत्पूर्वकत्वात् सम्भस्य

कालशे, (१४) बद्धवनमालादाम्नि, धवलध्वजमालिनि, भ्रमच्छुक्लवाससि, पठद्द्विजन्मनि मन्दिरे प्रस्थानम् अकरोत्। तत्रस्थस्य च अस्य (१५) ग्रामाक्षपटलिकः सकलकरणिपरिकरः

---

सकारलोपः] तुङ्गः,—उन्नतः, तोरणः,—बहिर्द्वारं यस्य तथाभूते। वेदीति।—वेद्यां—परिष्कृतभूमौ, विनिहितः,—स्थापितः, पल्लव एव—नवकिसलय एव, आम्रादीनामिति भावः,ललामं—लाञ्छनं,चिह्नमित्यर्थः,माङ्गल्यबोधकमिति भावः; यद्वा,—ललामं—भूषणं यस्य तथाभूतश्च, पल्लवभूषितश्चेत्यर्थः, ("ललामं लाञ्छने ध्वजे। शृङ्गे प्रधाने भूषायाम्" इति मेदिनी) हेमकलसः,—स्वर्णकुम्भः, मङ्गलघट इति भावः यस्मिन् तथोक्ते।

(१४) बद्धेति।—बद्धं—विरचितं, वनमालादाम—वनपुष्पमालाप्रसरः; यद्वा,—"आजानुलम्बिनी माला सर्व्वर्त्तुकुसुमोज्ज्वला। मध्यस्थूलदलाढ्या च वनमालेति कीर्त्तिता॥" इत्युक्तलक्षणकं पुष्पपत्रप्रतियोजितं माल्यं यस्मिन् तथोक्ते। धवलध्वजानां—शुक्लपताकानां, माला—श्रेणिः अस्ति अस्मिन्निति तथाभूते। भ्रमदिति।—भ्रमन्ति—इतस्ततः चलन्ति, वायुवेगादिति भावः, शुक्लानि—शुभ्राणि, वासांसि—पताकानां वस्त्राणि, द्वारादौ आवरणभूतानि वेति भावः; यद्वा,—भ्रमन्तः,—इतस्ततः सञ्चरन्तः, शुक्लवाससः,—शुभ्रवसनपरिधायिनः परिचारकजनाः यस्मिन् तथोक्ते। पठदिति।—पठन्तः,—अधीयानाः, सतारं वेदान् धर्म्मशास्त्राणि वा समुच्चारयन्त इति भावः, द्विजन्मानः,—ब्राह्मणा यस्मिन् तथोक्ते। प्रस्थानं—स्थितिमित्यर्थः।

(१५) ग्रामाक्षपटलिकः,—अक्षाणां—भूतानां, पटले—समूहे नियुक्तः अक्षपटलिकः, ग्रामस्य अक्षपटलिकः ग्रामाक्षपटलिकः, ग्रामवासी वेतालसाधकः, तान्त्रिकविधानवेत्ता वा इति भावः; यद्वा,—अक्षाणां—व्यवहाराणां, विवादानामित्यर्थः; अक्षाणां—द्यूताङ्गानां, द्यूतसाधनपाशकादीनामित्यर्थौ वा, ("अक्षाक्षमिन्द्रिये। ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे" इत्यमरः) पटले नियुक्तः अक्षपटलिकः, ग्रामस्य अक्षपटलिकः, ग्राम्यव्यवहारदर्शक इत्यर्थः ग्रामीणानां विवादमीमांसायां राजनियुक्तः अधिकरणिकविशेष इति यावत्, ग्राम्यद्यूतकराध्यक्षो वा, सकलकरणिपरिकरः,—सर्व्वप्रकारलेख्यरचनानिपुण इति यावत्, ["करणिः,—कायस्थः" इति कश्चित्, तथात्वे सर्व्वकायस्थपरिवृत इत्यर्थः]

"करोतु देवो (१६) दिवसग्रहणम् अद्यैव अवन्ध्यशासनः शासनानाम्" इति अभिधाय (१७) वृषाङ्काम् अभिनवघटितां हाटकमयीं मुद्राम् उपनिन्ये, जग्राह च तां राजा। समुपस्थापिते च प्रथमत एव मृत्पिण्डे परिभ्रश्य करकमलात् अधोमुखी महीतले पपात मुद्रा। (१८) मन्दाश्यानपङ्कपटले मृदुमृदि सरस्वतीतीरे स्फुटं व्यराजन्त राजयो वर्णानाम्। अमङ्गलाशङ्किनि च (१९) विषीदति परिजने नरपतिः अकरोत् मनसि एतत्,—"अतत्त्वदर्शिन्यो हि भवन्ति अविदग्धानां

---

(१६) अवन्ध्यशासनः,—अप्रतिहताज्ञः, शासनानां—राज्यपालनानामिति यावत्, दिवसग्रहणं—सामयिकसङ्केतनिरूपणम् इत्यर्थः, अद्य प्रभृति भवान् प्रजाशासनाधिकारे नियुक्त इत्येवं निश्चयार्थं भवन्नामाङ्कितमुद्राग्रहणमिति भावः।

(१७) वृषाङ्कां—धर्मचिह्नाम्, अभिनवघटितां—नवरचितां, हाटकमयीं—काञ्चनमयीं, मुद्रां—वर्णावलिखचितकाञ्चनपट्टकाविशेषम्, उपनिन्ये—अर्पयामास। करकमलात्—पाणिपद्मात्, हर्षस्येति भावः, प्रथमतः—आदौ एव, समुपस्थापिते—समानीते. केनचिदिति भावः, मृत्पिण्डे—मृत्तिकागोलके, परिभ्रश्य—निपत्य, अधोमुखी—स्वयं राजशासनाङ्कनायावनतपूर्व्वभागा इत्यर्थः।

(१८) मन्देति।—मन्दाश्यानम्—ईषच्छुष्कं, पङ्कपटलं—कर्दमचयः यस्मिन् तथोक्ते, अत एव मृदुमृदि—मृद्वी—कोमला, मृत्—मृत्तिका यस्मिन् तथाभूते सरस्वतीतीरे—तदाख्यनदीतटे, वर्णानां—मुद्राऽक्षराणां, राजयः,—श्रेणयः,स्फुटं—स्पष्टं, व्यराजन्त—बभासिरे, मुद्राऽक्षरपङ्क्तयः सरस्वतीतीरस्थकोमलमृत्तिकायामङ्किता अभवन्निति निष्कर्षः। एतेन ससमुद्रमुद्रितनिखिलवसुधया स्वयमादराद्राजशासनमुद्राग्रहणं कृतमिति द्योतितं, तच्च विशिष्टदैवप्रसादपरिचायकम् इति निगूढाशयः।

(१९) विषीदति—विषण्णीभवति, प्रेम पश्यति भयान्यपदेऽपीति भावः। अतत्त्वदर्शिन्यः,—अयाथार्थ्यप्रेक्षिण्यः, अदीर्घदर्शिन्य इति यावत्, कुसंस्काराच्छन्ना इति भावः। ["अतत्त्वदर्शिन्यः" इत्यत्र "तत्त्वदर्शिन्यः" इति पाठे,—स्वरूपदर्शिन्यः, स्थूलदर्शिन्य इति यावत्, उपस्थितदर्शिन्यः अन्तःपर्य्यवेक्षणशक्त्यभावात् इति भावः] अविदग्धानाम्—अज्ञानाम्।

धियः। तथा हि (२०) एकशासनमुद्राङ्का भूर्भवतो भविष्यतीति निवेदितमपि निमित्तेन अन्यथा गृह्णन्ति ग्राम्याः" इति (२१) अभिनन्द्य मनसा महाऽनिमित्तं तत् सीरसहस्रसम्मितसीम्नां ग्रामाणां शतमदात् द्विजेभ्यः, निनाय च तत्र तं दिवसम्। प्रतिपन्नायां शर्वर्य्यां सम्मानितसर्वराजलोकः सुष्वाप।

(२२) अथ गलति तृतीये यामे सुप्तसमस्तसत्त्वनिःशब्दे दिक्कुञ्जरबृंहणगम्भीरध्वनिः अताड्यत प्रयाणपटहः

---

(२०) एकेति।—एका—अद्वितीया एव, शासनमुद्रा—राजनामाङ्कितः आज्ञासूचकः पट्टविशेष इति यावत्, अङ्कः,—चिह्नं, अङ्के—क्रोड़े वा यस्याः तथाभूता, एकच्छत्रा इति भावः। भूः,—पृथिवी। निमित्तेन—लक्षणा, शुभशकुनेन इत्यर्थः, अधोमुखेन पतनादङ्कनरूपेण शुभचिह्नेनेति भावः, ("निमित्तं हेतु-लक्षणोः" इत्यमरः) निवेदितमपि—कथितमपि, अन्यथा—अनिमित्तमित्यर्थः। ग्राम्याः,—अविदग्धा इत्यर्थः।

(२१) तत्—पूर्वोक्तम्, अधोमुखेन पतनरूपमित्यर्थः, महाऽनिमित्तं—ग्राम्यैः महादुर्लक्षणतया अवधारितमिति यावत्, अभिनन्द्य—प्रशस्य, वस्तुतस्तु तस्य सुनिमित्तरूपतया इति भावः। सीरेति।—सीराणां—हलानां, लाङ्गलानामित्यर्थः, [ "शुसिचिमीनां दीर्घश्च" (उ० २ पा० २५ सू०) इति क्रन् ] सहस्रेण—दशशतसङ्ख्यया, सहस्रलाङ्गलेनेत्यर्थः, सम्मिताः,—परिच्छिन्नाः, परिमिता इत्यर्थः, सीमानः—मर्य्यादा येषां तथाभूतानां, सहस्रसङ्ख्याकहलवाह्यमानपर्य्यन्तानामिति यावत्। निनाय—अतिवाहयामास। शर्व्वर्य्यां—रात्रौ, प्रतिपन्नायाम्—उपस्थितायां, सम्मानितेति।—सम्मानिताः,—समादृताः, सर्वे राजलोकाः,—नृपजनाः येन तथोक्तः, प्रियभाषणादिना सन्तोषितराजन्यवृन्द इत्यर्थः, सुष्वाप—निदद्रौ, निःसंशयत्वादित्याशयः; युद्धयानस्यादि आखेटकाभिसरणस्येव महाशक्तिशालिनोऽस्य प्रमोदविषयत्वादिति भावः।

(२२) सुप्तेति।—सुप्तैः,—निद्रितैः, समस्तैः,—समग्रैः, सत्त्वैः,—प्राणिभिः निःशब्दे—नीरवे, तृतीये यामे—तृतीयप्रहरे, गलति—अतिक्रामति दिक्कुञ्जरेति।—दिक्कुञ्जराणां—दिग्गजानां, बृंहणवत्—बृंहितमिव इत्यर्थः, गम्भीरः,—गभीरः, [ "गभीर-गम्भीरौ" (उ० ४ पा० ३५ सू०) इतीरन्, गमेर्भः पचे नुम् च ]

(२३) अग्रतः स्थित्वा च मुहूर्त्तमिव पुनः प्रयाणक्रोशसङ्ख्यापकाः स्पष्टम् अष्टौ अदीयन्त प्रहाराः पटहे पटीयांसः ।

(२४) ततो रटत्पटहे, नन्दन्नान्दीके, गुञ्जत्कुञ्जे, कूजत्काहले, शब्दायमानशङ्खे, (२५) क्रमोपचीयमानकटककल-

---

ध्वनिः,—निनादः यस्य तथाभूतः, [ "दिक्कुञ्जरबृंहणगम्भीरध्वनिः" इत्यत्र दिक्कुञ्जरजृम्भमाणगम्भीरध्वनिः" इति पाठे,—दिक्कुञ्जराणां जृम्भमाणः,—प्रवर्द्धमान इत्यर्थः, गम्भीरध्वनिरिव ध्वनिः यस्य तथाभूतः ] प्रयाणपटहः,—युद्धयात्राकालिकवाद्यभेद इत्यर्थः, ! अताड्यत—अवाद्यत इत्यर्थः, पाटहिकैरिति शेषः ।

(२३) अग्रतः,—अग्रे, अनन्तरमिति भावः, मुहूर्त्तमिव—मुहूर्त्तमात्रमित्यर्थः, इव शब्दोऽत्र अवधारणे, स्थित्वा—विरम्येत्यर्थः, प्रयाणेति ।—प्रयाणस्य—यात्रायाः, क्रोशाः,—"चतुर्विंशत्यङ्गुलिभिर्हस्तं तन्त्रविदो विदुः । सहस्रैरष्टभिः ख्यातं हस्तकैः क्रोशनामकम् ॥" इत्युक्तलक्षणा अष्टसहस्रहस्तमिताः अध्वान इत्यर्थः ; केचित्तु सहस्रहस्तमाना इत्याहुः, तेषां सङ्ख्यापकाः,—सङ्ख्याज्ञापकाः अष्टौ—अष्टसङ्ख्याकाः, अद्य अष्टौ क्रोशा गन्तव्या इत्येवं सङ्ख्यासंख्यापकाः इत्यर्थः, पटीयांसः,—अतिपटवः, [ "द्विवचनविभज्योपपदे—" ( ५।३।५७ पा० ) इत्यादिना ईयसुन् ] प्रहाराः,—ताडनानि ।

(२४) "ततः" इत्यस्य "प्रयाणसमये······राजभिः आपुपूरे राजद्वारम्" इत्यग्रेणान्वयः । प्रयाणसमये इति विशिनष्टि, रटत्पटहे इत्यादि ।—रटन्तः,—ध्वनन्तः, पटहाः,—आणकाख्यवाद्यविशेषाः यस्मिन् तथोक्ते । नन्दन्नान्दीके—नन्दन्त्यः,—राजलोकान् उत्साहयन्त्य इति यावत्, नान्द्यः,—भेरीसदृशमाङ्गल्यवाद्यभेदाः, आशीर्वचनसंयुक्ताः स्तुतयो वा, "आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते ॥" इति लक्षणात्, ताः यस्मिन् तथोक्ते । गुञ्जत्कुञ्जे—गुञ्जन्तः,—ध्वनन्तः, कुञ्जाः,—शङ्खभेदाः यस्मिन् तथोक्ते, ते तु "सन्नाः" इति नाम्ना प्रसिद्धाः, पृष्ठे च तेषां जतु परिकलितं भवतीति विज्ञानम् । कूजत्काहले—कूजन्त्यः,—स्वनन्त्यः, काहलाः,—वाद्यभेदा यस्मिन् तादृशे, ( "काहला वाद्यभाण्डस्य भेदे चाप्सरसां भिदि" इति मेदिनी ) । शब्दायमानशङ्खे—शब्दायमानाः,—धमन्तः, शङ्खाः,—कम्बवः, "मुण्डशङ्खाः" इति प्रसिद्धाः यस्मिन् तथोक्ते । शङ्खनादानां सुभटहृदयोल्लासकत्वात् माङ्गलिकत्वाच्च युद्धकार्य्यादौ विशेषव्यवहारः सदातनः इति ज्ञेयम् ।

(२५) क्रमेति ।—क्रमेण—शनैः शनैरिति यावत्, उपचीयमानः,—वृद्धिं

काले, परिजनोत्थापनव्यापृतव्यवहारिणि, (२६) द्रुतद्रुघण-घातघट्यमानकोणिकाकीलकोलाहलकलितककुभि, (२७) बलाधिकृतबध्यमानपाटीपतिपेटके, जनज्वलितोल्कासहस्रालोकलुप्यमानत्रियामातमसि, (२८) यामचेटीचरणचलनोत्थाप्यमानकामिमिथुने, (२९) कटुककटुकनिर्देशनश्यन्निद्रोन्मिष-

---

गच्छन्, कटकानां—सैनिकानामिति यावत्, कलकलः—कोलाहलः यस्मिन् तथोक्ते। परिजनेति।—परिजनानां—पार्श्वचराणां, निद्रितानाम् इति भावः, उत्थापने—प्रबोधने, व्यापृताः,—प्रसक्ताः, व्यवहारिणः,—कर्मचारिणः यत्र तथाभूते।

(२६) द्रुतेति।—द्रुतं—सत्वरं, द्रुघणस्य—मुण्डकम् इति प्रसिद्धस्य शस्त्रभेदस्य, घातेन—ताडनेन, घट्यमाना—चाल्यमाना, या कोणिका—ताडनयष्टिविशेषः, तस्याः कीलस्य—अग्रभागस्य, कोलाहलेन—निनादेन, कलिताः—पूरिताः, ककुभः,—दिशो यत्र तथोक्ते; यद्वा—द्रुतं द्रुघणस्य—मुद्गरस्य, ("द्रुघणो मुद्गरेऽपि स्यात्" इति मेदिनी) घातेन—ताडनेन, घट्यमानाः—चाल्यमाना, ये कोणिकाकीलाः,—कोण एव कोणिका—वाद्यभेदः, वस्त्रगृहैकदेशो वा, ("कोणो वाद्यप्रभेदः स्यात् वीणादीनाञ्च वादने। एकदेशे गृहादीनामस्त्री च लगुडेऽपि च॥" इति मेदिनी) तत्र ये कीलाः—शङ्कवः, चर्मपट्टनिबद्धाः वस्त्रगृहधारणार्थं तन्निबद्धा वा, तेषां कोलाहलैः कलिताः ककुभः यत्र तथोक्ते; क्षिप्रमुद्गराघातोत्पाट्यमानानन्तकीलककठोररावः भुवनव्यापी सञ्जातः एतेन वस्त्रगृहाणाम् आनन्त्यं सूचितम् इत्यवगम्यते।

(२७) बलेति।—बलाधिकृतैः,—सैन्याधिकारिभिः, बध्यमानं—ताड्यमानं, पाटीपतिपेटकं—प्रतिनियतरक्षकवर्गः, प्रमादीति भावः यत्र तथोक्ते। जनेति।—जनैः,—परिजनैरिति यावत्, ज्वलितानां—प्रज्वालितानाम्, उल्कासहस्राणाम्—उल्कासहस्राणां, दीपसमूहानामिति यावत्, आलोकेन—प्रभया, लुप्यमानं—विनाश्यमानं, त्रियामातमः,—रात्रितिमिरं यस्मिन् तथोक्ते।

(२८) यामेति।—यामचेटीभिः,—प्राहरिकदासीभिः, प्रहरिणीभिरित्यर्थः, चरणचलनेन—पदसञ्चालननादेन इति यावत्, पादस्पर्शेनेत्यर्थो वा, उत्थाप्यमानं—प्रबोध्यमानं, कामिमिथुनं—कामियुगलं यस्मिन् तथोक्ते।

(२९) कटुकेति।—कटुकानां—हस्तिपकनिषादिनां, कटुकेन—रूक्षेण, निर्देशेन—आज्ञया, नश्यन्ती—अपगच्छन्ती, या निद्रा—स्वापः, तया उन्मिषन्तः,—

न्निषादिनि, (३०) प्रबुद्धहास्तिकशून्यीक्रियमाणशय्यागृहे, (३१) सुप्तोत्थिताश्वीयविधूयमानसटे, (३२) रटत्कटकमुखरखनित्रखन्यमानक्षौणीपाशे, (३३) समुत्कील्यमानकीलशिञ्जानहिञ्जीरे, (३४) उपनीयमाननिगड़तालकलरवोत्तालतुरङ्गतरङ्ग्यमाणखुरपुटे, (३५) लेशिकमुच्यमान-

उन्मीलन्नयना इत्यर्थः, निषादिनः,—हस्तिपकाः यस्मिन् तथोक्ते, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः)।

(३०) प्रबुद्धेति।—प्रबुद्धैः,—जागरितैः, हास्तिकैः,—गजताभिः, हस्तिसमूहैः इत्यर्थः, ("हास्तिकं गजता वृन्दे" इत्यमरः) शून्यीक्रियमाणं—रिक्तीक्रियमाणं, शय्यागृहं—हस्तिशाला इति भावः यस्मिन् तथोक्ते।

(३१) सुप्तेति।—सुप्तोत्थितैः,—भग्ननिद्रैः, अश्वीयैः,—अश्वसमूहैः, [ "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" (४।२।४८ पा०) इति छः। "वृन्दे त्वश्वीयमाश्ववत्" इत्यमरः] विधूयमाना—कम्प्यमाना, सटा—जटा यस्मिन् तथोक्ते।

(३२) रटदिति।—रटद्भिः,—शब्दायमानैः, कटकैः,—वलैः, (कर्तृभिः) मुखरेण—अस्पष्टं नदता, खनित्रेण—खननसाधनेन अस्त्रविशेषेण, (करणेन) खन्यमानाः,—विदार्य्यमाणाः, क्षौणीपाशाः,—भूरज्जवः इत्यर्थः, पटमण्डपरचनायां रज्जुनिबद्धशङ्कव इति भावः यत्र तथोक्ते।

(३३) समुत्कील्यमानेति।—समुत्कील्यमानेन—समुत्खन्यमानेन, कीलेन—शङ्कुना, शिञ्जानं—खनत्, हिञ्जीरं—लौहशृङ्खलं, गजादिबन्धनसाधनमिति भावः यस्मिन् तथोक्ते।

(३४) उपनीयमानेति।—उपनीयमानस्य—परिधीयमानस्य, निगड़तालस्य—बन्धनार्थं तालपत्रविशेषस्य, "नाल" इति ख्यातस्य खुराध आबध्यमानस्य लौहपत्रविशेषस्य इति वा, कलरवेण—शब्दविशेषेण; यद्वा,—उपनीयमाने निगड़े यः तालः,—कराम्फालनं, हस्तसञ्चार इत्यर्थः, ("तालः करतले ··· । ···करास्फाले द्रुमान्तरे" इति मेदिनी) तेन यः कलरवः,—झणझणाध्वनिविशेषः तेन, [ "निगड़तालः लौह एवाश्वबन्धनविशेषः" इत्यन्ये ] उत्तालम्—उत्कटं यथा तथा, तुरङ्गैः,—अश्वैः, [ "गमेः सुपि वाच्यः" (वा०) इति खच् मुम् च, "खच्च डिद्वा वाच्य" (वा०) इति वैकल्पिकं डित्त्वम् ] तरङ्ग्यमाणाः,—कुटिलीक्रियमाणाः, खुरपुटाः,—शफसमूहाः यस्मिन् तथोक्ते।

(३५) लेशिकेति।—लेशिकैः,—घासिकैः, हस्तिभ्यो घासदायिभिः इति;

मदस्यन्दि-दन्ति-सन्दान-शृङ्खला-खनखन-निनाद-निर्भर-भरितदश-दिशि, (३६) घासपूलकप्रहारप्रमृष्टपांशुलकरिपृष्ठप्रसार्य्यमाणप्रस्फोटितचर्म्मणि, (३७) गृहचिन्तकचेटकसंवेष्ट्यमान-पटकुटीकाण्डपटमण्डपपरिवस्त्रावितानके, (३८) कौल-कलापापूर्य्यमाणचिपिटचर्म्मपुटे, (३९) सम्भाण्डायमान-भाण्डागारिणि, भाण्डागारवहनवाह्यमानबहुबलीवर्द्दिके,

भावः, मुच्यमानाः,—परिक्रियमाणाः, मदस्यन्दिनां—दानजलस्राविणां, दन्तिनां—गजानां, ये सन्दानशृङ्खलाः,—बन्धनशृङ्खलाः, तेषाम् आ—सम्यक्, खनखननिनादेन—खनखन इति शब्दविशेषेण, निर्भरम्—अत्यन्तं यथा तथा, भरिताः,—पूरिताः, दश दिशः,—दशसङ्ख्यकाः ककुभः यस्मिन् तथोक्ते।

(३६) घासेति।—घासपूलकाः—यवसस्तवकाः, प्रहारेण—ताडनेन, मार्ज्जनेनेति यावत्, प्रमृष्टं—परिष्कृतं, पांशुलं—रजोबहुलं, खेनैव विकीर्णत्वादिति भावः, यत् करिपृष्ठं—हस्तिपृष्ठं, तत्र प्रसार्य्यमाणम्—आसनार्थं विस्तार्य्यमाणं, प्रस्फोटितं—प्रमृष्टं, ताड़ितं वा, धूल्याद्यपनयनार्थमिति भावः, ("प्रस्फोटनन्तु सूर्पे स्यात् ताड़ने च विकाशने" इति मेदिनी) चर्म्म—अजिनं यस्मिन् तथोक्ते।

(३७) गृहेति।—गृहाणां—भवनानां, सैनिकावासशिविरादीनामित्यर्थः, चिन्तकाः,—कार्य्यदर्शिन इत्यर्थः, ये चेटकाः,—भृत्याः, तैः संवेष्ट्यमानाः,—परिक्रियमाणाः, सङ्कुच्यमाना इत्यर्थो वा, पटकुट्यः,—पटैः,—वस्त्रैः, कुट्यः,—सूक्ष्मगृहभेदाः, स्कन्धावारसरणिभेदाः इत्यर्थः. काण्डपटमण्डपानि—काण्डपटाः,—काण्ड इव पटाः, "कानात्" इति प्रसिद्धाः पटभेदाः, तस्य सङ्कोचनेन दृढकाण्डरूपता सम्भरूपता वा जायते इत्यतः काण्डपट इति संज्ञा, तद्रचितमण्डपानि—गृहाः, परिवस्त्राः,—जवनिकाः, वितानकाः,—उल्लोचाः, चन्द्रातपभेदाः इति यावत् यत्र तथोक्ते, ("अस्त्री वितानमुल्लोचः" इत्यमरः)।

(३८) कौलेति।—कौलानां—शङ्कूनां, कलापैः,—समूहैः, आपूर्य्यमाणाः,—भ्रियमाणाः, पथि पुनः स्कन्धावारसंस्थापनार्थमिति भावः, चिपिटाः,—ह्रस्वाः, क्षुद्रा इति यावत्, चर्म्मपुटाः,—चर्म्मनिर्म्मितभाजनविशेषाः यस्मिन् तथोक्ते।

(३९) सम्भाण्डेति।—सम्भाण्डायमानाः,—भाण्डानि सञ्चिन्वन्तः, सद्रव्योपस्करान् एकत्रीकुर्व्वन्त इत्यर्थः, ["भाण्डात् समाचयने" (वा०) इति णिङ्, ङित्त्वा-

(४०) निषादिनिश्चलानेकानेकपारोप्यमाणकोशकलसपीडापीड़सङ्कटायमानसामन्तलोकसि, (४१) दूरगतदक्षदासेरकक्षिप्रप्रक्षिप्यमाणोपकरणसम्भारम्रियमाणदुष्टदन्तिनि, (४२) तिर्य्यगानमज्जाघनिक-कर-कृच्छ्राकृष्ट-लम्बमान-परतन्त्र-तुन्दिल-चुन्दी-

द्रात्मनेपदं, ततः शानच्] भाण्डागारिणः,—भाण्डपूर्णगृहरक्षका इत्यर्थः यस्मिन् तथोक्ते। भाण्डेति।—भाण्डागारस्य—"भाण्डार" इति प्रसिद्धस्य सद्रव्यपात्रसमूहाव-स्थानगृहस्य इत्यर्थः, वहनाय—प्रापणाय, स्थानान्तरनयनाय इत्यर्थः, वाह्यमानाः,—नीयमानाः, बहवः,—अनेके, बलीवाहिकाः,—बलीवर्द्दाः यस्मिन् तथोक्ते। ["बली-वाहिके" इत्यत्र "नालीवाहिके" इति पाठे,—नालीवाहिकाः,—करिणां घासग्रहणा-नियुक्ता हस्तिपकविशेषाः, "मेट्" इति प्रसिद्धाः। करिवरसैन्यमहामात्रादिपरि-चर्य्यानिरतानां राजकीयभाण्डागारवहननियोगः न तथा सदर्थपरिचायकः इत्येष पाठः न सर्व्वादृतः इति ज्ञेयम्।

(४०) निषादीति।—निषादिभिः,—आरोहिभिः, चतुरहस्तिपकैः वा, तदभावे प्रमादाशङ्कापातात् इति भावः, निश्चलेषु—स्थिरेषु, तिष्ठत्सु इत्यर्थः, अनेकेषु—बहुषु, अनेकपेषु—हस्तिषु, ["सुपि स्थः" (३।२।४ पा०) इति सूत्रे सुपीति योगो विभज्यते, तेन सुप्युपपदे आदन्तात् कः इति कप्रत्ययः। "........हस्ती द्विरदोऽनेकपो द्विपः" इत्यमरः] तत्पृष्ठेषु इति भावः, आरोप्यमाणानां—निधीयमानानां, कोशकलसानां—धनपूर्णकुम्भानां, पीडापीड़ेन—सङ्कीर्णतया स्थापनेन इति भावः, सङ्कटाय-मानानि—सङ्कीर्णानि इति यावत्, सामन्तानां—राज्ञाम्, अध्यासिनामिति भावः, लोकांसि—स्थानानि यत्र तथोक्ते।

(४१) दूरेति।—दूरगतैः,—विप्रकृष्टस्थानस्थैः, अतीव इत्यर्थो वा, दक्षैः,—भारवहनक्षमैः इति यावत्; यद्वा,—दूरगते—दूरगमने, दक्षाः,—शक्ताः, दासेरकैः,—उष्ट्रैः, क्षिप्रं—सहसेति यावत्, प्रक्षिप्यमाणाः,—भूमौ पात्यमानाः, ये उपकरणसम्भाराः,—परिच्छदसमूहाः, तैः म्रियमाणाः,—पूरितपृष्ठाः इति यावत्, दुष्टाः,—दुर्दान्ताः, लोकानां वहने दोषकारिण इत्यर्थः, उत्कटा इति यावत्, दन्तिनः,—गजा यस्मिन् तथोक्ते।

(४२) तिर्य्यगिति।—तिर्य्यक्—कुटिलं यथा तथा, आनमन्—आनतीभवन्, येन कोऽपि न पश्यतीति भावः, यः जाघनिकः,—जघनस्पर्शी, कामुक इति भावः, ["जाघनिक" इत्यत्र "जाघनि" इति पाठेऽपि स एवार्थः] तेन करेण—हस्तेन,

जनजनितजनहासे, ( ४३ ) पीड्यमानशारशारिवरत्रागुणग्राहितगात्रविहारबृंहद्बहुबृहदुन्मदकारिणि, ( ४४ ) करिघटाघटमानघण्टाटाङ्कारक्रियमाणकर्णज्वरे, पृष्ठप्रतिष्ठाप्यमानकण्ठालककदर्थितकूजत्करभे, ( ४५ ) अभिजातराजपुत्त्रप्रेष्यमाण-

कृच्छ्रेण—कष्टेन, आश्लिष्टा—आलिङ्गितेति भावः, लम्बमाना—अपसरन्तीति भावः, अथ च परतन्त्रा—पराधीना, अपसर्तुमक्षमेति यावत्, तुन्दिला—बृहत्कुक्षिः, स्थूलोदरीत्यर्थः, स्थूलाङ्गी इति भावः, ( "तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः" इत्यमरः ) या चुन्दी—कुट्टनी, सा एव जनः,—लोकः, तेन जनितः,—उत्पादितः, जनानां—लोकानां, तत्रत्यानामिति भावः, हासः,—हास्यं यस्मिन् तथोक्ते, तथाभूतां कुट्टनीं दृष्ट्वा हसज्जने इत्यर्थः ।

( ४३ ) पीड्यमानेति ।—पीड्यमाना—जीर्णतादिदोषेण छिद्यमानेत्यर्थः, शारा—शबला, चित्रिता इत्यर्थः, ( "शारः स्यात् शबले वाच्यलिङ्गः पुंसि समीरणे" इति मेदिनी ) या शारिः,—रणहस्तिपर्य्याणं, पृष्ठदेशे स्थाप्यमानास्तरणविशेष इति यावत्, ( "शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे। युद्धार्थगजपर्य्याणे व्यवहारान्तरेऽपि च ॥" इति मेदिनी ) तस्या वरत्रागुणैः,—कक्ष्यारज्जुभिः, कक्षबन्धनरज्जुभिरित्यर्थः, नद्धीरज्जुभिर्वा. चर्म्मरज्जुभिरित्यर्थः, ( "चूषा कक्ष्या वरत्रा स्यात्" "नध्री वध्री वरत्रा स्यात्" इति चामरः ) ग्राहितानि—संयमितानि, गात्राणि—शरीराणि, तेषां विहारेण—कम्पेन, बृंहन्तः,—नदन्तः, बहवः,—अनेके, बृहन्तः,—महान्तः ,उन्मदाः,—मदमत्ताः, कारिणः,—हस्तिनः यत्र तथोक्ते ।

( ४४ ) करीति ।—करिणां—हस्तिनां, घटासु—घटनासु, श्रेणिषु इत्यर्थः, ( "करिणां घटना घटा" इत्यमरः ) घटमानानां—संलगन्तीनां, घण्टानां—वाद्यविशेषाणां, टाङ्कारेण—टाङ्गिति निनादेन, क्रियमाणः,—जन्यमानः, कर्णज्वरः,—श्रवणपीड़ा यस्मिन् तथोक्ते । पृष्ठेति ।—पृष्ठेषु—उपरिदेशेषु इत्यर्थः, प्रतिष्ठाप्यमानेन—आरोप्यमाणेन, कण्ठालकेन—गोणीभेदेन, द्रोणीभेदेन वा इत्यर्थः, [ "कण्ठाला तु द्वयोर्द्रोणीप्रभेदे ना क्रमेलके" इति मेदिनी । अल्पार्थे क-प्रत्ययः ] कदर्थिताः,—क्लेशिताः, अत एव कूजन्तः,—रुवन्तः, भारासहिष्णुतया इति भावः, करभाः,—क्रमेलकशावका यस्मिन् तथोक्ते ।

( ४५ ) अभिजातेति ।—अभिजातैः,—कुलीनैः, अनभ्यस्तवाहपरिचालनव्यापारैरिति भावः, राजपुत्त्रैः,—नृपकुमारैः, प्रेष्यमाणानि—चाल्यमानानि, अत एव

कुप्रयुक्ताकुलकुलीनकुलपुत्रकलत्रवाहने, (४६) गमनवेलाविप्रलब्धवारणाधोरणान्विष्यमाणनवसेवके, (४७) प्रसादवित्तपत्तिनीयमाननरपतिवल्लभवरवाजिनि, (४८) चारुचारभटसैन्य-न्यस्यमाननासीरमण्डलाडम्बरस्थूलस्थासके, (४९) स्थानपाल-पर्य्याण-लम्बमान-लवणकलापीकिङ्किणी-नालीसनाथ-सङ्कलिततल-

कुप्रयुक्तेन—असद्व्यसञ्चालनेन, आकुलानां—व्यस्तानां, कुलीनानां—सज्जनानां, कुलपुत्रकलत्राणां—कुलीनकुलाङ्गनानां, वाहनानि—यानानि यस्मिन् तथोक्ते। इह्याद्रोण्योऽस्यमानवाचिस्थनिमित्ताभावात् "वाहनमाहितात्" (८।४।८ पा०) इति न णत्वम्]।

(४६) गमनेति।—गमनवेलायां—यात्राकाले, विप्रलब्धाः,—प्रतारिताः, अविदितगमनवेला इत्यर्थः, अत एव वारणानां—हस्तिनाम्, आधोरणैः,—निषादिभिः, पालकैरित्यर्थः, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः) अन्विष्यमाणाः,—अनुसन्धीयमानाः, नवसेवकाः,—नूतनभृत्या यस्मिन् तथोक्ते, कार्य्यानभिज्ञतया नवनियुक्ताः प्रायः प्रतारिताः भवन्ति इत्याशयः।

(४७) प्रसादेति।—प्रसादेन—राजानुग्रहेण, वित्ताः,—ख्याताः, ("प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः" इत्यमरः) ये पत्तयः,—पदातिसैन्यानि, तैः नीयमानः,—प्राप्यमाणः, चाल्यमान इत्यर्थः, नरपतेः,—राज्ञः, वल्लभः,—प्रियः, वरः,—श्रेष्ठः, वाजी—अश्वः यस्मिन् तथोक्ते, [ "वरवाजिनि" इत्यत्र "वारवाजिनि" इति पाठे,—नरपतेः वल्लभाः, वारवाजिनः,—वारे—अवसरे, अनुग्रहयोग्यकाले इत्यर्थः, प्राप्ताः इति भावः, ("निवहावसरौ वारः" इत्यमरः) वाजिनः यस्मिन् तथोक्ते, राजप्रसादलब्धघोटकारूढसैनिके इत्यर्थः]।

(४८) चार्विति।—चारुः,—मनोज्ञः, चारः,—गतिर्येषां तथाभूतानि, भटसैन्यानि—योधबलानि, ("भटा योधाश्च योद्धारः" इत्यमरः) तैः न्यस्यमानाः,—निधीयमानाः, नासीरमण्डलाडम्बरस्य—सेनाऽग्रगामिसैन्यनिवहस्य, स्थूलाः,—महान्त इत्यर्थः, स्थासकाः,—अलङ्करणानि यस्मिन् तथोक्ते; यद्वा,—चारुचारभटसैन्यैः न्यस्यमानाः,—आत्मन एव क्रियमाणाः, नासीरेण—कर्पूरेण, मण्डलाडम्बराय—सैन्यसमूहशोभावर्द्धनाय, स्थूलाः,—महान्तः, दीर्घा इति यावत्, स्थासकाः,—चर्चाः, तिलकविशेषाः इत्यर्थः यस्मिन् तथोक्ते, ("चर्चा तु चार्चिक्यं स्थासकः" इत्यमरः)।

(४९) स्थानेति।—स्थानपालानाम्—अश्वपालानां, पर्य्याणेषु—पल्ययनेषु,

सारिके, (५०) कुण्डलीकृतावरचिर्णीजालजटिलवल्लभपालाश्व-घटानिवेश्यमानशाखामृगे, (५१) परिवर्द्धकाक्रम्यमाणार्द्धजग्ध-प्राभातिकयोग्याशनप्रारोहके, (५२) व्याक्रोशीजृम्भमाण-घासिकघोषे, (५३) गमनसम्भ्रमभ्रमदुत्तुण्डतरुणतुरङ्गमतन्य-

---

अश्वसज्जायामित्यर्थः, लम्बमाना—दोलायमाना, लवणकलापी—द्रव्यविशेषः, सा च मृगाकृतिर्दारुमयी क्रियते इति. ("लवणकलापी" इत्यत्र "लवणकलायी" इति पाठोऽपि स एवार्थः ] किङ्किणी—क्षुद्रघण्टिका, नाली—वैणवी यष्टिः, ताभिः सनाथा—सहिता इत्यर्थः, सङ्कलिता—विरचिता. तलसारिका—ऊर्णादिचित्रसूत्रमयी मुखपट्टिका "उरःपट्टिका" इति केचित्, यत्र तथोक्ते, सुषमाविशेषार्थम् अवलम्बनार्थञ्च तुरगपल्ययने तथाकृतिव्यवहारात् इति भावः ।

(५०) कुण्डलीति ।—कुण्डलीकृतैः,—वलयितैरित्यर्थः, अवरचिर्णीजालैः,—बन्धनरज्जुभिरित्यर्थः, जटिलः,—संयमितः. [ "लोमादि—" (५।२।१०० पा०) इत्यादिना पिच्छादित्वादिलच् ] वल्लभपालैः,—सुलक्षणाश्वपालकैः, ("वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे" इति मेदिनी ) केचित्तु "बलवता येन वृहदाकारेण तुरगोपकरणं घासचणकादिकं नीयते स वल्लभपालोऽश्वपालः" इति व्याचख्युः; अश्वघटासु—तुरङ्गवृन्देषु, तत्पृष्ठेष्विति भावः, निवेश्यमानः,—आरोप्यमाणः, शाखामृगः,—वानरः यत्र तथोक्ते. ("कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः । मर्कटो वानरः" इत्यमरः ) स च अश्वानां रोगादिप्रतिषेधार्थं मन्दुरायां स्थाप्यते इति लोकव्यवहारः ।

(५१) परिवर्द्धकेति ।—परिवर्द्धकेन—अश्वपालेन, आक्रम्यमाणः,—आकार्ष्यमाण इत्यर्थः, अर्द्धजग्धम्—अर्द्धभक्षितं, प्राभातिकं—प्रभातकालिकं, योग्यम्—उपयुक्तं, भोजनार्हमित्यर्थः, अशनं—भक्ष्यद्रव्यं येन तादृशः, प्रारोहकः,—अश्वारोहिसैन्यमित्यर्थः यस्मिन् तथोक्ते ।

(५२) व्याक्रोशीति ।—व्याक्रोशीषु—परस्पराह्वानेषु, जृम्भमाणाः,—वर्द्धमानाः, घासिकानां—घासदायिनां, घोषाः,—निनादा यस्मिन् तथोक्ते, त्वरितगमनाऽऽशात् इति भावः ।

(५३) गमनेति ।—गमनेषु—यात्रासु, यः सम्भ्रमः,—त्वरा, तेन भ्रमन्तः,—घूर्णन्तः, उत्तुण्डाः,—उन्नमितमुखाः, तरुणाः,—युवानः, ये तुरङ्गमाः,—अश्वाः,

---

मानानेकमन्दुराविमर्दे, (५४) सज्जीकृतकरेणुकारोहाह्वानसत्वर-सुन्दरीदीयमानमुखालेपने, (५५) चलितमातङ्गतुरङ्गप्रधावितप्राकृतप्रातिवेश्यकलोकलुण्ठ्यमाननिर्घासशस्यसञ्चये, सञ्चरच्चेलचक्राक्रान्तचक्रीवति, (५६) चक्रचीत्कारिगन्त्रीगणगृह्यमाण-

---

ते: तन्यमानः,—क्रियमाणः, अनेकानां—बहूनां, मन्दुराणां—वाजिशालानां, ["मन्दिवाशि—" (उ० १ पा० ३९ सू०) इत्यादिना उरच्। "वाजिशाला तु मन्दुरा" इत्यमरः] विमर्दः,—विध्वंसः यत्र तथोक्ते।

(५४) सज्जीकृतेति।—सज्जीकृतासु—कृतकल्पनासु, आरोहणार्थम् आस्तरणादिना अलङ्कृतासु इत्यर्थः, ("कल्पना सज्जना समे" इति गजप्रकरणे अमरः) करेणुकासु—क्षुद्रहस्तिनीषु, ("करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे" इति मेदिनी) आरोहाय—आरोहणार्थमित्यर्थः, आह्वाने—आकारणायां, कस्यचित् सामन्तस्येति भावः; यद्वा,—सज्जीकृतकरेणुकारोहाह्वानेन—सज्जीकृतायाः करेणुकायाः आरोहः,—निषादी, तेन आह्वानम्—उच्चैराकारणं, तेन सत्वरा—त्वरावती, अलङ्कृतहस्तिनीनिषादिताररवेण त्वरान्विता इत्यर्थः, या सुन्दरी—कामिनी, हस्तिपकस्य इति भावः, तया दीयमानं—निधीयमानं, मुखालेपनं—सिन्दूरादिना मुखानुलेपः, करेणुकाये इति भावः यस्मिन् तथोक्ते।

(५५) चलितेति।—चलितेषु—प्रस्थितेषु. मातङ्गेषु—हस्तिषु, तुरङ्गेषु—अश्वेषु च, प्रधावितैः,—सत्वरमापतितैः, प्राकृतैः,—साधारणैः, प्रातिवेश्यकलोकैः,—प्रतिवेशिजनगणैः, समीपवासिमनुष्यैरित्यर्थः, लुण्ठ्यमानाः,—क्रियमाणाः, निर्घासशस्यसञ्चयाः,—निः,—निसृष्टाः, त्यक्ता इत्यर्थः, भुक्तावशिष्टा इति यावत्, घासाः,—यवसानि, शस्यानि च—यवगोधूमादीनि च, तेषां सञ्चयाः.—समूहा यत्र तादृशे। सञ्चरदिति।—सञ्चरन्तः,—इतस्ततो भ्रमन्तः, तथा चेलचक्रेण—वस्त्रसमूहेन, ("चेलं वस्त्रेऽधमे त्रिषु" इत्यमरः) "चेलचक्रेण बालकसङ्घेन" इति कश्चित्, आक्रान्ताः,—आपूरितपृष्ठाः, समाकीर्णपृष्ठा इत्यर्थः, चक्रीवन्तः,—गर्दभा यत्र तथोक्ते, ["आसन्दीवत्—" (८।२।१२ पा०) इत्यादिना मतुपि निपातनात् सिद्धम्। "चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः" इत्यमरः। "चक्रीवन्तः,—उष्ट्राः" इति केचित्]।

(५६) चक्रेति।—चक्रैः,—रथाङ्गैः, चीत्कारिणः,—उच्चैः कूजन्तः, ये गन्त्रीगणाः,—वृषभवाह्यशकटवृन्दानि, ) "गन्त्री कम्बलिवाह्यकम्" इत्यमरः। अत्र कम्बलिवाह्यकं—वृषभवहनीयशकटमित्यर्थः) तैः गृह्यमाणानि—आक्रम्यमाणानि, अत

प्रहतवर्त्मनि, (५७) अकाण्डदीयमानभाण्डभरितानडुहि, (५८) निकटघासलाभलुभ्यल्लम्बमान-प्रथमप्रसार्य्यमाण-सारसौरभेये, (५९) प्रमुखप्रवर्त्त्यमानमहासामन्तमहानसे, पुरःप्रधावद्ध्वजवाहिनि, (६०) प्रियशतोपलभ्यमानसङ्कटकुटीरकान्तरालनिःसरणे, (६१) करिचरण-दलित-मठिकोत्थितलोकलोष्टा-

---

एव प्रहतानि—चुम्बानि, शकटचक्रेण सञ्जातखातानीत्यर्थः,, वर्त्मानि—मार्गाः यत्र तथोक्ते।

(५७) अकाण्डेति।—अकाण्डे—सहसा, दीयमानेन—आरोप्यमाणेन, भाण्डेन—द्रव्यपूर्णपात्रेण, भरितः,—पूरितपृष्ठ इति यावत्, अनड्वान्—वृषः यस्मिन् तथोक्ते; ( "अनड्वान् सौरभेयो गौः" इत्यमरः )।

(५८) निकटेति।—निकटे—समीपे; घासस्य—यवसस्य, लाभेन—प्राप्त्या, लुभ्यन्तः,—लोलुपता गच्छन्त, लम्बमानाः,—प्रलम्बदेहाः, घासग्रहणेच्छया इति भावः, प्रथमम्—अग्रे, प्रसार्य्यमाणाः,—प्रस्थाप्यमानाः, सारसौरभेयाः,—बलवद्बलीवर्द्दा यस्मिन् तथोक्ते।

(५९) प्रमुखेति।—प्रमुखे—अग्रे, प्रथममेवेत्यर्थः, प्रवर्त्त्यमान—प्रस्थाप्यमानम्, आगामिस्कन्धावारसन्निवेशस्थानमुद्दिश्येति भावः, महासामन्तानां—प्रधानसामन्तनृपतीनाम, अधीननृपतिषु प्रधानानामित्यर्थः, महानसः—रसवती, रन्धनशाला इत्यर्थः, यस्मिन् तथोक्ते, ("रसवत्यान्तु पाकस्थानमहानसम्" इत्यमरः)। पुर इति।—पुरः,—अग्रतः, प्रधावन्तः,—प्रचलन्तः, ध्वजवाहिन्यः,—पताकाधारिण सेनाविशेषा यत्र तथोक्ते।

(६०) प्रियशतेति।—प्रियशतैः,—चाटुवाक्यसमूहैः, उपलभ्यमानं—ज्ञायमानं, सङ्कटात्—सङ्कीर्णात्, कुटीरकाणां—क्षुद्रगृहाणाम्, अन्तरालात्—मध्यात्, निःसरणं—मुखं, निर्गमनमार्ग इत्यर्थः यस्मिन् तथोक्ते; यद्वा,—प्रियशतैः,—प्रीतिकरवचनैः, उपलभ्यमानं—प्राप्यमाणं, सङ्कटकुटीरकान्तरालात्—सङ्कीर्णक्षुद्रनिकेतनमध्यात् इत्यर्थः, निःसरणं—मोक्षः, मुक्तिरित्यर्थः यस्मिन् तथोक्ते, ("मुखं निःसरणम्" "अथ निःसरणं मृत्यूपायमोक्षेषु निर्गमे" इत्यमर-मेदिन्यौ। "प्रियशतोपलभ्यमानसङ्कट—" इत्यत्र "प्रियशतोपलभ्यमानासङ्कट—" इति पाठे,—आसङ्कटात्—ईषत् सङ्कीर्णात् इत्यर्थः ]।

(६१) करीति।—करिणा—हस्तिना, चरणैः,—पादैः, दलितायाः,—

हन्यमानाऽऽधोरणक्रियमाणासन्नसाक्षिणि, (६२) सङ्घट्टविघट्टमानव्याधकुटीपलायमानक्षुद्रकुटुम्बके, (६३) कलकलोपद्रवद्रवद्द्रविणबलीवर्दविद्राणवणिजि, (६४) पुरःसरदीपिकाऽऽलोकविरलायमान-लोकोत्पीड़सुख-प्रस्थितान्तःपुर-करिणी-कदम्बके,

---

मर्दितायाः, मठिकायाः,—क्षुद्रगृहात्, उत्थितैः,—उद्गतैः, लोकैः,—तद्गृहवासिभिः जनैः, लोष्टेन—कठिनमृत्खण्डेन, आहन्यमानैः,—ताड्यमानैः, गृहभङ्गात् इति भावः, आधोरणैः,—हस्तिपकैः, [ "करि…लोष्टाहन्यमानाधोरण…" इत्यत्र "करि…लोष्ट-हन्यमानमेण्ठ…" इति पाठे,—लोष्टेन—मृत्खण्डेन, हन्यमानैः,—प्रक्रियमाणैः, मेण्ठैः,—"मेठ्" इति प्रसिद्धैः करिणां यवसतण्डुलादिवाहिपरिचारकविशेषैरित्यर्थः, "मेण्ठैः,—जागरिकैः" इति केचित् ] क्रियमाणाः,—विधीयमानाः, आसन्नाः,—समीपस्थाः, लोका इति शेषः, साक्षिणः,—प्रत्यक्षदर्शिनः, राजद्वारे अभियोगार्थमिति भावः यत्र तथोक्ते ।

(६२) संघट्टेति ।—संघट्टेन—संघर्षणेन, सैनिकानाम् अश्वगजादिवाहनानां वा इति भावः, विघट्टमाना—विनश्यन्ती, या व्याधकुटी—तृणनिर्मितकुटीभेदः, [ "व्याध-कुटी" इत्यत्र "व्याघ्रपल्ली" इति पाठेऽपि स एवार्थः ] तस्याः पलायमानं—प्रद्रवत्, क्षुद्रकुटुम्बकं—स्वल्पपरिजनः यस्मिन् तथोक्ते ।

(६३) कलकलेति ।—कलकलोपद्रवेण—कलरवरूपोत्पातेन, द्रवन्ति—पतन्ति, द्रविणानि—धनानि, द्रव्याणि इति यावत् येभ्यः तथाविधाः, ये बलीवर्दाः,—वृषाः, तैः विद्राणाः,—पलायमानाः सशोका वा, वणिजः,—पण्याजीवा यस्मिन् तथोक्ते ।

(६४) पुर इति ।—पुरःसरैः,—अग्रगैः, दीपिकानाम्—आलोकवर्त्तिकानाम्, आलोकैः,—प्रभाभिरित्यर्थः, विरलायमानेन—स्वल्पीभवता, अपसरतेति भावः, लोकोत्पीड़ेन—जनसम्मर्द्देन, सुखप्रस्थितानि—अनायासप्रचलितानि, जनसम्मर्द्दापसरणेन अनिरुद्धमार्गतयेति भावः, [ "पुरःसर…लोकोत्पीड़सुखप्रस्थिता—" इत्यत्र "पुरःसर……लोकोत्पीड़प्रस्थिता—" इति पाठान्तरम् ] अन्तःपुराणाम्—अन्तःपुरवासिनीनां नारीणामिति यावत्, करिणीकदम्बकानि—हस्तिनीवृन्दानि, अन्तःपुरिकाणां वाहनभूतानीति यावत् यस्मिन् तथोक्ते ।

(६५) हयारोहाह्वयमानलम्बितश्वनि, (६६) सरभसचरण-निपतन-निश्चलगमन-सुखायमान-खक्खट-स्तूयमान-तुङ्गतुङ्गणगुणे, (६७) स्रस्तवेसरविसंवादिसीददाक्षिणात्यसादिनि, (६८) रजोध्वस्तजगति प्रयाणसमये, (६९) प्रतिदिशमागच्छद्भिः

(६५) हयेति।—हयारोहैः,—अश्वारोहिभिः, आह्वयमानाः,—आकार्यमाणाः, लम्बिताः,—पश्चात् स्थिताः, श्वानः,—कुक्कुरा यस्मिन् तथोक्ते, गुप्तभावेन विपक्षैः कृतनैशाक्रमणसूचनाय मृगयासाहाय्याय च सारमेयाणामावश्यकत्वादिति भावः।

(६६) सरभसेति।—सरभसेन—सवेगेन, चरणनिपतनेन—पादक्षेपणेन, निश्चलगमनेन च—धीरचलनेन इति भावः, सुखायमानाः,—सुखमनुभवन्तः, ये खक्खटाः,—वृद्धाः, परिहासकथाप्रसङ्गैः वीराणां रणश्रमापनेतारः, अन्यथा सङ्ग्रामोन्मुखवाहिनीषु वर्षीयसामभिनिवेशः निष्प्रयोजनो भवेत् इति गूढाशयः, [ "शकादिभ्यो ऽटन्" ( उ० ४ पा० ८१ सू० ) इति हासार्थकखक्खतेरटन् ] तैः स्तूयमानः,—प्रशस्यमानः, तुङ्गानाम्—उन्नतानां, तुङ्गणानाम्—अश्वानां, तदाख्यदेशजाश्वानां वा, [ "तुङ्गण" इत्यत्र "तङ्गण" इति पाठान्तरम् ] गुणः,—गतिसौष्ठवाद्युत्कर्षविशेषः यस्मिन् तथोक्ते।

(६७) स्रस्तेति।—स्रस्तान्—भ्रष्टान्, पश्चात् पतितानिति भावः, वेसरान्—अश्वतरान्, विसंवदन्ति—परिशीलयन्ति, अनुशोचन्तीति भावः तथोक्ताः विसंवादिनः,—अनुशोचन्तः इत्यर्थः, द्रुतगमनाक्षमत्वेन अश्वीयसङ्घभ्रष्टत्वात्, दक्षिणापथे वेसरा न वर्त्तन्ते इत्यनभ्यस्तवेशरारोहणतया द्रुतगमनाक्षमत्वेन पश्चात् पतनात् पथिश्रान्तिशङ्कया वा इति भावः, अत एव सीदन्तः,—अवसादं गच्छन्तः, दुःखिता इति भावः, दाक्षिणात्याः,—दक्षिणापथजाताः, सादिनः,—अश्वारोहाः यस्मिन् तथोक्ते, ( "अश्वारोहास्तु सादिनः" इत्यमरः )।

(६८) रज इति।—रजोभिः,—धूलिभिः, ध्वस्तानि—विनष्टानि, अदर्शनं गतानीत्यर्थः, आपूरितानीति यावत्, जगन्ति—भुवनानि यस्मिन् तथोक्ते। [ "रजोध्वस्तजगति" इत्यत्र "रजोजग्धजगति" इति पाठे,—रजोभिः,—धूलिभिः, जग्धानि—ग्रस्तानीत्यर्थः, आच्छन्नानीति यावत्, जगन्ति—भुवनानि यत्र तथोक्ते ]। इह सैनिकधूलिस्तोमैर्जगतामाच्छादनमित्यसम्बन्धे सम्बन्धत्वाध्यवसायसिद्धेः तद्रूपातिशयोक्तिः सान्दर्भिकाखभावोक्तेरङ्गम्।

(६९) प्रतिदिशमागच्छद्भिः,—समन्तात् प्रसृतैः, [ "अव्ययं—" ( २।१।६ पा० )

गजवधूसमारूढैः, आधोरणोर्द्ध्वध्रियमाणहैमपत्रभङ्गशारशार्ङ्गैः अन्तरासनासीनान्तरङ्गगृहीतासिभिः, ताम्बूलिकविधूयमान-चामरपल्लवैः, (७०) पश्चिमासनिकाऽर्पितभस्त्राभरणभिन्दि-पालपूलिकैः, (७१) पत्रलताकुटिलकलधौतनलकपल्लवित-पर्य्याणैः, (७२) पर्य्याणपक्षकपरिक्षेपपट्टिकाबन्धनिश्चल-

---

इत्यादिना प्रतियोगे वीप्सायामव्ययीभावः] गजवधूसमारूढैः,—करिणीपृष्ठस्थैः । आधोरणेति ।—आधोरणैः,—हस्तिपालैः, ऊर्द्ध्वे—उपरिभागे, आरोहिणां पतनप्रतिरोधार्थं पृष्ठोपरि स्थापितस्य धातुनिर्म्मितस्य वेष्टनीविशेषस्य "हाओदा" इति प्रसिद्धस्य इति भावः, ध्रियमाणानि—स्थाप्यमानानि, हैमपत्रभङ्गेण—काञ्चनपत्ररचनया, शाराणि—चित्राणि, शार्ङ्गाणि—धनूंषि येषां तैः, ["शार्ङ्गं कार्म्मुकमात्रेऽपि विष्णोरपि शरासने" इति मेदिनी । "आधोरणोर्द्ध्व—"इत्यत्र "आधोरणैरूर्द्ध्व—" इति व्यस्तपाठे,—प्रतिदिशमागच्छद्भिः गजवधूसमारूढैराधोरणैरित्येकवाक्यतयाऽन्वयः, एतत्पक्षे सापेक्षत्वेऽपि गमकत्वात् समासः] । अन्तरेति ।—अन्तरासनेषु—मध्यवर्त्तिषु पीठेषु, समीपेषु इति भावः, आसीनैः,—उपविष्टैः, अन्तरङ्गैः,—स्वजनैः, गृहीताः,—धृताः, असयः,—करवालाः येषां तैः । ताम्बूलिकेति ।—ताम्बूलिकैः,—ताम्बूलदायिभिः परिजनैः, ["तदस्य पण्यम्" (४।४।५१ पा०) इति ठक्] विधूयमानाः,—सञ्चाल्यमानाः, चामरपल्लवाः,—किसलयकोमलबालव्यजनानि येषां तैः ।

(७०) पश्चिमेति ।—पश्चिमासनिकायां—पश्चाद्वर्त्तिनि आसने, अर्पितानि—स्थापितानि, भस्त्राभरणानि—तूणभेदा इति यावत्, भिन्दिपालाः,—हस्तक्षेप्यनालिकाऽस्त्रविशेषाः, ("तोमराः" इति केचित्, तत् कोशकारासम्मतार्थवत्त्वादयुक्तम्) तेषां पूलिकानि—समूहा येषां तैः ।

(७१) पत्रेति ।—पत्रलतया—पत्रावलिरचनया, कुटिलानि—भङ्गिमन्ति, कलधौतनलकेन—काञ्चननिर्म्मितनलाकारेण, पल्लवितानि—रञ्जितानि इति भावः, पर्य्याणानि—पल्ययनानि, आसनविशेषा इति भावः येषां तैः ।

(७२) पर्य्याणेति ।—पर्य्याणस्य—पल्ययनस्य, पक्षकः,—प्रान्तः, पार्श्वं वा, ("पक्षकस्तु पुमान् पार्श्वद्वारे च पार्श्वमात्रके" इति मेदिनी); यद्वा,—पर्य्याणपक्षकः,—पर्य्याणालङ्कृतहस्तिपार्श्वभागः, ("पक्षभागः पार्श्वभागः" इति गजावयवविवरणे अमरः) तस्य परिक्षेपपट्टिका—वेष्टनपट्टी, तया बन्धेन—संयमनेन, निश्चलम्—अचञ्चलं,

पट्टोपधानस्थिरावधानैः, (७३) प्रचल-पादफलिकाऽऽस्फालन-स्फायमान-पदबन्ध-मणिशिलाशब्दैः, (७४) उच्चित्रनेत्र-सुकुमारस्वस्थापनस्थगितजङ्घाकाण्डैश्च, (७५) कार्द्दमिक-पटकल्माषितपिशङ्गपिङ्गैः, अलिनीलमसृणप्रान्तसमुत्पादित-सितसमायोगपरभागैश्च (७६) अवदातदेहविराजमानराजा-

---

यत् पट्टोपधानं—"बालिश" इति वङ्गभाषया प्रसिद्धं पट्टवसननिर्म्मितम् उपधानं, तस्मिन् स्थिरं—निश्चलम्, अवधानम्—अभिनिवेश, निर्भरभावेन देहभारसन्निवेश इति भावः येषां तैः।

(७३) प्रचलेति।—प्रचला—लम्बमाना इत्यर्थः, या पादफलिका—उभयोः पार्श्वयोः पर्य्याणे पादस्थापनार्थं या क्रियते "रेकाव" इति वङ्गभाषया प्रसिद्धा इति भावः, "आगुल्फं पादत्राणम्" इत्यन्ये; तस्या आस्फालनेन—चालनेन, स्फायमानः,—प्रवर्द्धमानः, पदबन्धमणिशिलानां—पादकटकखचितरत्नानामित्यर्थः, शब्दः,—ध्वनिः येषां तैः।

(७४) उच्चित्रेति।—उच्चित्रेण—उत्कीर्णालेख्येन, नेत्रेण—पट्टवसनविशेषेण, उच्चित्रनेत्रे—कारुखचितपल्ययनपटे इत्यर्थो वा, ("नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च" इति मेदिनी) सुकुमारं—सुकोमलं, यत् स्वस्थापनं—स्वरचरणस्थानमित्यर्थः, ["स्वस्थापन—"इत्यत्र "स्वस्थगन" इति पाठेऽपि स एवार्थः] तस्मिन् स्थगिताः,—निहिताः, जङ्घाकाण्डाः,—जङ्घादण्डा यैः तथोक्तैः।

(७५) कार्द्दमिकेति।—कर्द्दमेन रक्तः कार्द्दमिकः,—धूसरवर्णरञ्जित इत्यर्थः, यः पटः,—वसनभेदः, तेन कल्माषिताः,—रञ्जिताः, चित्रिता इत्यर्थः, पिशङ्गाः,—कपिलाः, स्वभावत एवेति भावः, पिङ्गाः,—जङ्घा येषां तैः; यद्वा,—पिशङ्गाः,—पिङ्गलवर्णाः, पिङ्गाः,—जाङ्घिकाः, दूतविशेषा इति यावत्; यद्वा,—पिङ्गाः,—जङ्घालाः, द्रुतगामिनोऽनुचरविशेषा इति यावत् येषां तैः। अलीति।—अलिनीलः,—भ्रमरकृष्णः, मसृणः,—श्लक्ष्णः, चिक्कण इत्यर्थः, यः प्रान्तः,—निम्नभाग इत्यर्थः, परिहितकञ्चुकस्येति भावः, ["अलिनीलमसृणप्रान्त—" इत्यत्र "अलिनीलमसृणसतुला—" इति पाठे,—अलिनीलमसृणा च या सतुला—अर्द्धजङ्घिका इत्यर्थः, अधःपरिधानीया वीरवस्त्रविशेषा "जाङ्घिया" इति प्रसिद्धा तया] तेन समुत्पादितः,—सञ्जातः, सितस्य—शुभ्रस्य, समायोगस्य—संयोगस्य, परभागः,—वर्णोत्कर्षः येषां तैः।

(७६) अवदातेति।—अवदातेषु—गौरेषु, ("अवदातः सितो गौरः" इत्यमरः)

वर्त्तमेचकैः कञ्चुकैश्च, उपचितचीनचोलकैश्च, (७७) तारमुक्तास्तवकित-स्तवरकवारबाणैश्च, नानाकषायकर्ब्बुरकूर्पासकैश्च, (७८) शुकपिच्छच्छायाऽऽच्छादनकैश्च, (७९) व्यायामोल्लुप्तपार्श्वप्रदेशप्रविष्टचारुशस्त्रैश्च, (८०) गतिवशवेल्लितहारलतालग्नलोलकुण्डलोन्मोचनप्रधावितपरिजनैः, (८१) चामीकरपत्राङ्कुर-

देहेषु—शरीरेषु, विराजमानाः,—शोभमानाः, राजावर्त्तवत्—कृष्णपाषाणवत्, मेचकाः,—श्यामलाः तैः, कञ्चुकैः,—वर्म्मभिः, उपलक्षितैः इति योजनीयम्, [ "इत्थम्भूत—" (२।३।२१ पा०) इत्यादिना तृतीया ]। उपचितेति।—उपचितं—शोभितम्, [ "उपचितम्" इत्यत्र "अपचितम्" इति पाठे,—पूजितम्, उत्कर्षतां गतमित्यर्थः ; यद्वा,—अपचितं—व्ययितं, क्षयितमित्यर्थः, कञ्चुकघर्षणादिति भावः। "भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु" इति मेदिनी ] चीनं—चीनदेशोद्भवं, सूक्ष्ममिति यावत्, चोलकं—वसनं येषां तैः।

(७७) तारेति।—ताराः,—विशुद्धाः, मुक्ताः,—मौक्तिकानि, ("तारो वानरभिन्मुक्ताविशुद्धौः शुद्धमौक्तिके" इति मेदिनी ) ताभिः स्तवकिताः,—सञ्जातपुष्पगुच्छाकाराः, स्तवरकाः,—वस्त्रभेदाः, वारबाणाः,—कञ्चुकाश्च येषां तैः। नानेति।—नानाकषायेण—विविधनिर्य्यासविशेषेण, रञ्जनसाधनेनेत्यर्थः, कर्ब्बुराः,—चित्राः, रञ्जिता इत्यर्थः, कूर्पासकाः,—चोलकाः, वस्त्रभेदा इति यावत् येषां तैः।

(७८) शुकेति।—शुकस्य—पक्षिभेदस्य, पिच्छं—बर्हं, पक्ष इत्यर्थः, तस्य छाया—कान्तिरिव कान्तिः येषां तादृशानि, आच्छादनानि—उत्तरीयाणि येषां तैः, हरिद्वर्णोत्तरीयैरित्यर्थः।

(७९) व्यायामेति।—व्यायामेन—अङ्गचालनाविशेषेण, उल्लुप्तेषु—प्रनष्टेषु, क्षीणेषु इत्यर्थः, पार्श्वप्रदेशेषु—कक्षयोरधोभागेषु, कटिदेशेषु इति यावत्, प्रविष्टानि—स्थितानि इत्यर्थः, चारूणि—रम्याणि, शस्त्राणि—आयुधानि येषां तैः।

(८०) गतीति।—गतिवशेन—द्रुतगत्येति यावत्, वेल्लितायां—दोलितायां, हारलतायां—मुक्ताऽऽवलीयष्ट्यां, शिरःस्थितायामिति भावः, लग्नं—संसजत्, [ "लग्न—" इत्यत्र "गलत्—" इति पाठे,—पतत्, सङ्गच्छमानमित्यर्थः ] यत् लोलं—तरलं, गतिवशादेव इति भावः, कुण्डलं—कर्णभूषणं, तस्य उन्मोचनाय—निष्कासणाय, प्रधावितः,—द्रुतीपसृतः इत्यर्थः, परिजनः,—परिचारक इति यावत् येषां तैः।

(८१) चामीकरेति।—चामीकरः,—सौवर्ण इत्यर्थः, पत्राङ्कुरः,—दलप्ररोहः

कर्णपूरकविघट्टमानवाचालबालपाशैश्च, (८२) उष्णीष-पट्टावष्टब्धकर्णोत्पलनालैश्च, (८३) कुङ्कुमरागकोमलोत्तरी-यान्तरितोत्तमाङ्गैश्च, (८४) चूडामणिखण्डखचितक्षौम-चोलैश्च, (८५) मायूरपत्रायमाणशेखरोड्डीयमानषट्-पदपटलैश्च, (८६) मार्गागतशारिकशारिवाहवेगदण्डैः,

एस्य तथाभूतं, यत् कर्णपूरकं—कर्णभूषणं, तत्र विघट्टमानः,—सङ्घर्षं गच्छन्, अत एव वाचालः,—मुखरितः, "ठं-ठङ्" इति शब्दं कुर्व्वन् इत्यर्थः, बालपाशः,—अपर-कर्णाभरणविशेषः येषां तैः।

(८२) उष्णीषेति।—उष्णीषपट्टेन—शिरोवेष्टनवस्त्रेण, ("अप्युष्णीषः शिरोवेष्ट-किरीटयोः" इत्यमरः) अवष्टब्धानि—आक्रान्तानि, संसक्तानीत्यर्थः, कर्णोत्पलनालानि—कर्णभूषणीकृतनीलोत्पलदण्डानि येषां तैः।

(८३) कुङ्कुमेति।—कुङ्कुमेन—काश्मीरजेन, रागः,—रञ्जनं, तेन कोमलैः,—पटुलैः, मनोज्ञैरिति यावत्, उत्तरीयैः,—उत्तरासङ्गैः, अन्तरितं—वेष्टितम्, उत्तमाङ्गं—शिरः येषां तैः।

(८४) चूडामणीति।—चूडामणीनां—शिरोरत्नानां, खण्डेन—शकलेन, खचितं—बद्धं, संयुक्तमित्यर्थः, क्षौमचोलं—दुकूलवसनं, शिरःस्थमिति भावः येषां तैः।

(८५) मायूरेति।—मयूरस्य इदं मायूरं—मयूरसम्बन्धि इत्यर्थः, ["तस्येदम्" (४।३।१२० पा०) इत्यण्] पत्रं—पिच्छमित्यर्थः, तदिव आचरत्, मयूरपिच्छवत् दृश्यमानमित्यर्थः, यत् शेखरं—शिरोभूषणं, तस्मिन् उड्डीयमानानाम्—उड्डयनं कुर्व्वतां, षट्पदानां—भ्रमराणां, पटलं—समूहः येषां तैः। ["मायूरपत्रायमाण-शेखरोड्डीयमानषट्पदपटलैः" इत्यत्र "मायूरपत्रायमाणशेखरषट्पदपटलैः" इति पाठे,—मायूरपत्रायमाणशेखरे षट्पदपटलम्, उड्डीयमानमिति भावः येषां तैः]।

(८६) मार्गागतेति।—मार्गागताः,—पथिप्राप्ताः, शारिकशारिवाहवेगानां—हयभेदानां, दण्डाः,—लगुडाः यैः तथोक्तैः; यद्वा,—मार्गागतानां—पथि द्रुतगमनार्थ-मानीतानामित्यर्थः, अश्वपालैरिति भावः, शारिकशारिवाहाणां—शारिणः,—शरत्रण-सम्बन्धिन्यः, याः कशाः,—अश्वताड़न्यः, ताः अरयः,—शत्रवः, प्रहरणत्वादिति भावः येषां तादृशाः, ये वाहाः,—अश्वाः, तेषां वेगार्थं—द्रुतचालनार्थं, दण्डाः,—ताड़न्यः, हस्ते इति भावः येषां तैः; यद्वा,—मार्गागताः,—सरणमनुसर्त्तारः, प्रमत्तत्वादिति भावः, शारः,—युद्धार्थपर्य्याणमेव शारिका, ("शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे।

(८७) पुरश्चञ्चच्चामरकिर्मीरकार्द्दरङ्गचर्ममण्डलमण्डनोड्डीयमानचटुलडामरचारभटभरितभुवनान्तरैः, (८८) आस्कन्दत्काम्बोज-वाजिशत-शिञ्जान-जातरूपायान-रव-मुखरित-दिङ्मुखैश्च, (८९) निर्दयप्रहतलम्बापटहशतपटुरवबधिरीकृतश्रवणविवरैः, (९०) उद्घोष्यमाणनामभिः, उन्मुखपादातप्रतिपाल्यमानाज्ञापातैः राजभिः आपुपूरे राजद्वारम् ।

---

युद्धार्थगजपर्य्याणे व्यवहारान्तरेऽपि च ॥" इति मेदिनी ) तस्याः शारिः,—श्रेणिः येषां ते तथोक्ताः, [ "स्त्रियाः,—" ( ६।३।३४ पा० ) इत्यादिना पुंवद्भावः ] ते च ते वाहाः तथोक्ताः, वेगदण्डाः,—तरुणहस्तिनः येषां तथोक्तैः ।

(८७) पुर इति ।—पुरः,—अग्रतः, चञ्चद्भिः,—चलद्भिः, चामरैः,—वालव्यजनैः, किर्म्मीराणि—शबलानि, कार्द्दरङ्गाणि—कार्द्दरङ्गदेशोद्भवानि, चर्ममण्डलानि—अजिनसमूहा एव, मण्डनानि—भूषणानि, बहुसुवर्णसूत्ररचितत्वादिति भावः, तैः सह उड्डीयमानानि—नभसि उत्प्लवमानानि, चटुलानि—तरलानि, डामराणि—विशालानि, उत्कटानि इत्यर्थः, चारभटानि—तदाख्यदेशीयसैनिकानि, गूढपुरुषच्छद्मसैनिकानि इत्यर्थो वा, तैः भरितम्—आपूरितं, भुवनान्तरं—भूमण्डलावकाशः येषां तथोक्तैः ।

(८८) आस्कन्ददिति ।—आस्कन्दताम्—आस्फालयतां, वल्गतामित्यर्थः, काम्बोजवाजिनां—काम्बोजदेशीयाश्वानां, शतानि—समूहा इत्यर्थः, तेषु शिञ्जानानि—रणन्ति, यानि जातरूपाणि—सौवर्णानि, आयानानि—अश्वभूषणविशेषाः, [ अत्र "आयान—" इति पाठः लिपिकरप्रमादपठितः इति प्रतीयते, "आदान—" इत्येव सङ्गतः पाठः, "आदानं ग्रहणेऽपि स्यादलङ्कारे च वाजिनाम्" इति मेदिनीवचनात् ] तेषां रवेण—झणत्कारेण, मुखरितं—ध्वनितं दिङ्मुखं—ककुभान्तरालमित्यर्थः येषां यैः वा तैः ।

(८९) निर्दयेति ।—निर्दयं—दृढं यथा तथा, प्रहतानां—ताड़ितानां, लम्बापटहानां—देशविशेषे "तामिला" इति प्रसिद्धानां पटहाख्यवादित्रभेदानां, शतानि—समूह इत्यर्थः, तेषां पटुरवैः—विकटशब्दैः, बधिरीकृतं—श्रवणशक्तिहीनीकृतं, पूरितमिति यावत्, श्रवणविवरं—कर्णरन्ध्रं येषां यैः वा तैः ।

(९०) उद्घोष्यमाणेति ।—उद्घोष्यमाणं—कीर्त्त्यमानं, वन्दिभिरिति भावः, नाम—आख्या येषां तैः, राज्ञां बहिर्गमनसमये वन्दिनां तादृशाचारस्य अवश्य-

उदिते च भगवति दिनकृति राज्ञः (८१) समायोगग्रहणसमयशंसी सस्वान संज्ञाशङ्खो मुहुर्मुहुः। (८२) अथ न चिरादिव प्रथमप्रयाण एव दिग्विजयाय दिग्गजसमागममिव (८३) गमनविलोलकर्णतालदोलाविलासैः कुर्व्वाणया करेणुकया उह्यमानः, (८४) वैदूर्य्यदण्डविकटेन उपरि

---

कर्त्तव्यत्वादिति भावः। उन्मुखेति।—उन्मुखैः,—ऊर्द्धमुखैः, आदेशग्रहणार्थमिति भावः, पादातैः,—पदातिसैन्यैः, ["तस्य समूहः" (४।२।३७ पा०): इत्यण्] प्रतिपाल्यमानः,—प्रतीक्ष्यमाणः, आज्ञापातः,—आदेशवचनमिति यावत् येषां तैः, राजभिः,—सामन्तनृपतिभिरित्यर्थः, राजद्वारं—हर्षशिविरप्रवेशतोरणम्, आपुपूरे—व्याप्तमित्यर्थः। इह "ततो रटत्पटहे" इत्यारभ्य एतदवधि हर्षशिविरद्वारे समाश्रितसामन्तवाहिनीनां यथावद्वर्णनकविवेद्यविच्छित्तितया स्वभावोक्तिरलङ्कारः अङ्गी, वृत्त्यनुप्रासातिशयोक्त्यादय. अङ्गानि इत्यवधेयम्।

(८१) समायोगेति।—समायोगः,—संविधानं, सन्नाह इति यावत्, कवचादिरिति भावः; यद्वा,—समायोगः,—प्रयोजनं, प्रयोजनीयं वस्तु इत्यर्थः, यात्रिकपरिच्छदादिकमिति भावः, ("समायोगस्तु संयोगे समवाये प्रयोजने" इति मेदिनी) तस्य ग्रहणं—स्वीकारः, परिधानादिरूप इत्यर्थः, तस्य समयः,—कालः, तं शंसति—सूचयतीति तथोक्तः, संज्ञाशङ्खः,—सङ्केतकम्बुः, सस्वान—दध्वान, यात्रासमयः समागतः, अत एव सज्जितो भव इति ज्ञापनार्थं शङ्खध्वनिं चक्रुः तत्कर्म्माधिकृताः इति निष्कर्षः।

(८२) अथेति।—"अथ" इत्यस्य "दिग्विजयाय···निर्जगाम नरपतिः" इति परेण सम्बन्धः। ["न चिरादिव" इत्यत्र समस्तपाठे नञर्थक-न-शब्देन "सहसुपा" (२।१।४ पा०) इति समासः]। प्रथमप्रयाण एव—प्रथमयात्रायामेव, दिग्गजसमागममिव—ऐरावतसङ्गमिव।

(८३) गमनेति।—गमनेन—गतिवशादित्यर्थः, विलोलाः,—चञ्चलाः, ये कर्णतालाः,—कांस्यतालवत् कर्णदेशाः, साम्यमनुसृत्य चालितकर्णौ इत्यर्थौ वा, तेषां दोलाविलासैः,—कम्पनविभ्रमैः। करेणुकया—हस्तिन्या, उह्यमानः,—नीयमानः, अत्युच्चकरिणीपृष्ठसमारूढ़ इत्यर्थः।

(८४) वैदूर्य्येति।—वैदूर्य्यं—विदूरपर्व्वतजो मणिः, तस्य दण्डः,—तन्निर्मितनालः इत्यर्थः, तेन विकटम्—उज्ज्वलं तेन।

(९५) प्रत्युप्तपद्मरागखण्डखचिततया सूर्य्योदयदर्शनकोपादिव लोहितायतया ध्रियमाणेन मङ्गलातपत्रेण, (९६) कदलीगर्भाभ्यधिकम्रदिम्ना नवनेत्रनिर्मितेन द्वितीय इव भोगिनाम् अधिपतिः अङ्गलग्नेन कञ्चुकिना, (९७) अमृतमथनदिवस इव क्षीरोदफेनपटलधवलाम्बरवाही, बाल एव पारिजातपादप इव आखण्डलभूमिम् आरूढः,

---

(९५) प्रत्युप्तेति।—प्रत्युप्तैः,—निबद्धैः, पद्मरागाणां—रक्तमणिविशेषाणां, खण्डैः,—शकलैः, खचितं—घटितं, तस्य भावः तत्ता तया, सूर्य्योदयदर्शनकोपादिव—भास्करप्रकाशावलोकनक्रोधादिव, लोहितायतया—लौहित्यरूपधृक्तयेत्यर्थः, [ अलोहिती लोहिती भवतीत्यर्थे "लोहितादिडाज्भ्यः क्यष्" (३।१।१३ पा०) इति क्यषि, लोहितायनामधातोः कर्त्तरि पचादित्वादचि लोहिताय इति सिद्धे, ततः भावे तलि रूपम्; "लोहितायमानेन" इति प्रकल्प्यपाठस्तु अर्थसौकर्य्यात् समीचीन एवेति प्रतीयते ] ध्रियमाणेन—गृह्यमाणेन, छत्रधारिणेति शेषः, मङ्गलातपत्रेण—राजलक्षणच्छत्रेण, [ "इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति तृतीया, करणे वा ]।

(९६) कदलीति।—कदली—रम्भातरुः, तस्या गर्भः,—उदरम्, अभ्यन्तरभाग इत्यर्थः, तस्मादभ्यधिकः,—अतिशयः, म्रदिमा—मार्दवं यस्य तेन, नवनेत्रनिर्मितेन—नूतनपट्टवस्त्रविशेषकल्पितेन, ( "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च" इति मेदिनी ) अङ्गलग्नेन—देहसंसक्तेन, कञ्चुकेन—वर्म्मणा, गात्रावरणविशेषेण इत्यर्थः, निर्मोकेण च, ( "कञ्चुको वारबाणे स्यान्निर्मोके कवचेऽपि च। वर्द्धापकगृहीताङ्गस्थितवस्त्रे च चोलके॥" इति मेदिनी ) भोगिनां—सर्पाणाम्, अधिपतिः,—प्रभुः, अनन्तनाग इत्यर्थः।

(९७) क्षीरोदेति।—क्षीरोदस्य—दुग्धसागरस्य, फेनपटलं—डिण्डीरपुञ्जः, तद्वत् धवलं—शुभ्रम्, अम्बरं—वस्त्रम्, अन्तरीक्षञ्च, वहति—परिधत्ते इति तथोक्तः, अत एव अमृतमथनदिवस इव—अमृताय—पीयूषाय, मथनं—विलोडनं, क्षीरोदस्येति भावः, तद्दिवस इव—तद्दिनमिव, परिदृश्यमान इति शेषः। बाल एव—क्षीरोदधेः नवोद्भूत इत्यर्थः, उत्तरोत्तरसमृद्धिमानिति भावः; एवञ्च अमृतमथनकालिकत्वज्ञापनाय अवैधर्म्यसाम्यप्रतिपत्तये पारिजातपादपे बालत्वधर्म्मोऽव्यपदेश इत्यवगन्तव्यम्। आखण्डलभूमिम्—इन्द्रस्थानं, नन्दनोद्यानमित्यर्थः, इन्द्रसदृशनेपथ्यञ्च, ऐरावतोपम-

(९८) विधूयमानचामरमरुद्विधूतकर्णपूरकुसुममञ्जरीरजः सकलभुवनवशीकरणचूर्णेन इव दिशः छुरयन्, (९९) अभिमुखचूड़ामणिघटमानपाटलप्रतिबिम्बम् उदयमानं सवितारमपि पिबन् इव तेजसा, (१००) बहलताम्बूलसिन्दूरच्छुरितया विलभमान इव द्वीपान्तराणि ओष्ठमुद्रया, (१०१) अनुराग स्फुरन्महाहारमरीचिचक्रवालानि चामराणि इव दिशोऽपि

---

गजवराधिष्ठितत्वादिति भावः; यद्वा,—आखण्डलभूमिम्—इन्द्रस्थानं, राजेन्द्रमर्य्यादामित्यर्थः, भूलोकाधिकारित्वात् इति भावः, आरूढ़ः,—अधिष्ठितः।

(९८) विधूयमानेति।—विधूयमानयोः,—चाल्यमानयोः, चामरयोः,—बालव्यजनयोः, मरुता—वायुना, विधूतायाः,—कम्पितायाः, कर्णपूरकुसुममञ्जर्य्याः,—कर्णभूषणीकृतपुष्पवल्लर्य्याः, रजः,—परागः तेन, सकलेति।—सकलानां—कृत्स्नानां, भुवनानां—जगतां, वशीकरणाय—जयाय, चूर्णं—रजः, मन्त्रपूतौषधविशेष इति यावत् तेनेव, छुरयन्—व्याप्नुवन्।

(९९) अभिमुखेति।—अभिमुखे—सम्मुखवर्त्तिनि इत्यर्थः, चूड़ामणौ—शिरोरत्ने, घटमानं—प्रतिफलत्, पाटलं—श्वेतरक्तम्, अरुणवर्णमित्यर्थः, प्रतिबिम्बं—प्रतिच्छाया यस्य तम्, उदयमानम्—उद्गच्छन्तं, सवितारं—सूर्य्यं, सूर्य्यादपि अधिकतेजस्वीति भावः।

(१००) बहलेति।—बहलेन—प्रभूतेन, ताम्बूलसिन्दूरेण—पर्णरागेण, छुरिता—व्याप्ता, रञ्जिता इत्यर्थः तया, ओष्ठमुद्रया—रदनच्छदविभागेन। विलभमान इव—विलोभयन् इवेत्यर्थः, आत्मानं भजयितुं मुद्राप्रदर्शनेन द्वीपान्तराणि प्रलोभयन्निवेति भावः; एतेनास्य सप्तद्वीपाधिपतित्वं प्रकटीकृतम्। केचित्तु—"विलभमानः अर्थिसात् कुर्वन्। मुद्रया हि ससिन्दूरया विलभ्यते" एवं व्याख्यानयन्ति; व्याख्यानेनानेन अस्य अतीव दातृत्वम् अखण्डभुवनशासकत्वञ्च सूचितम्।

(१०१) स्फुरदिति।—स्फुरन्—विकसन्, यो महाहारः,—उत्कृष्टमुक्तावलीकलापः, तस्य मरीचीनां—मयूखानां, चक्रवालानि—मण्डलानि, अनुरागस्य—प्रीतेः, रूपं प्रतीति शेषः, चामराणि—बालव्यजनानीव, दिशोऽपि—दिग्वधूरपीति यावत्, अनुरागात् दिग्वध्वोऽपि तं वीजयन्त्य इवासन्निति भावः; एतेनास्य सर्व्वदिगाधिपत्यं सूचितम्।

क्षाहयन्, (१०२) राजकेक्षणोत्क्षिप्तविभागया त्रीन् अपि लोकान् करदानाय आज्ञापयन् इव संविभ्रम भ्रूलतया, द्राघीयसा बाहु-प्राकारेण परिक्षिपन् इव रिरक्षया सप्तापि सागरमहाखातान्, अखिलमिव क्षीरोदमाधुर्य्यम् आदाय उन्नतया लक्ष्म्या समुपगूढः गाढम्, अमृतमय इव (१०३) पीयमानः कुतू-हलोत्तानकटकलोकलोचनसहस्रैः, स्नेहार्द्रेषु राज्ञां हृदयेषु गुणगौरवेण मज्जन्निव, लिम्पन्निव सौभाग्यद्रवेण द्रष्टृणाम्,

(१०२) राजकेति।—राजकानां—राजन्यानाम्, ईक्षणे—दर्शने, उत्क्षिप्तः,—उन्नमितः, विभागः,—तृतीयो भागः यस्याः तथाभूतया, [ क्वचित् संख्याशब्दानां पूरणार्थत्वमपि दृश्यते ] संविभ्रमं—सविलासं, हेलयैव इति यावत्, एतेन तस्य लोकत्रयाधिपत्यर्हत्वं प्रकटीकृतम्। द्राघीयसा—अतिदीर्घेण, [ "द्विवचने—" (५।३।५७ पा०) इत्यादिना ईयसुन्, ततः "प्रियस्थिर—" (६।४।१५७ पा०) इत्यादिना दीर्घस्य द्राघादेशः ] बाहुप्राकारेण—भुजप्राचीरेण, रिरक्षया—रङ्क्तुमिच्छया, सुशासनगुणेन स्वस्मिन् अनुरक्तीकरणेच्छया इत्यर्थः, [ लिपिकरप्रमादात् ङ्कारलोपेण रिरङ्क्षयेत्यत्र रिरक्षया जाता, तत्र रञ्जतेः सन्नन्तात् भावे अ-प्रत्यये टापि च रूपमेतदिति ज्ञेयम् ] सागरमहाखातान्—सागराः,—समुद्रा एव, महान्ति—दुरुत्तराणि इत्यर्थः, खातानि—पुष्करिण्यः प्राकारवेष्टनानीत्यर्थः येषां तान्, ( "पुष्करिण्यान्तु खातं स्यात्" इत्यमरः ) दोर्भ्यां [illegible] परिक्षिपन्निव—परिवेष्टयन्निव ; एतेनास्य आजानुलम्बि-बाहुत्वं सूचितम्। अखिलं—सम्पूर्णं, क्षीरोदमाधुर्य्यं—दुग्धसमुद्रस्य रमणीयतां, आदाय—गृहीत्वा, उन्नतया—उच्छ्रितया। गाढम्—अशिथिलं यथा तथा, समुपगूढः,—समालिङ्गितः, दुग्धधवलकान्तिः सुश्रीकश्च इति भावः।

(१०३) कुतूहलेति।—कुतूहलेन—आश्चर्य्यरूपमिदमिति कौतुकेन, उत्तानानाम्—उत्क्षिप्तानां, कटकलोकलोचनानां—सैनिकजननयनानां, सहस्राणि—समूहा इत्यर्थः तैः, पीयमानः,—सादरं दृश्यमान इति भावः। स्नेहार्द्रेषु—स्नेहेन—प्रीत्या, आर्द्रेषु—सरसेषु, प्रीतिरससिक्तेषु इत्यर्थः, राज्ञां—सामन्तनृपाणां, हृदयेषु—अन्तः-करणेषु, गुणगौरवेण—गुणानां—शौर्य्य-दाक्षिण्यादीनां, गौरवेण—भारेण, मज्जन्निव—बुडन्निव, अन्तःप्रविशन्निवेत्यर्थः, गुणानुरक्तानां राज्ञां हृदये कृतदृढासन इति भावः ; भारवद्वस्तु अपि आर्द्रस्थलेषु मज्जतीति दृश्यते। द्रष्टृणां—दर्शनकर्तॄणां जनानां, सौभाग्यद्रवेण—सौभाग्यं—शुभादृष्टं, तद्दर्शनहेतुभूतमिति भावः, तदेव

( १०४ ) अमरपतिरिव अग्रजवधकलङ्कप्रक्षालनाकुलः, पृथुरिव पृथिवीपरिशोधनावधानसङ्कलितसकलमहीभृत्समुत्सारणः, पुरःसरैः आलोककारकैः सहस्रसङ्ख्यैः अर्क इव किरणैः, ( १०५ ) अधिकारचातुर्यचञ्चलचरणैः व्यवस्थास्थापननिष्ठुरैः ( १०६ ) भयपलायमानलोकोत्पीड़ान्तरिता दशापि दिशो ग्राहयद्भिः

---

द्रवः,—रसः, कुङ्कुमचन्दनादिपङ्कद्रव इति भावः तेन, लिम्पन्निव—उपदिहन्निव; तद्दर्शनं सौभाग्यनिमित्तकं मत्वा दृष्टिभिरनिमेषनयनेन दृश्यमान इति भावः।

( १०४ ) अग्रजेति।—अग्रजस्य—ज्येष्ठस्य, अन्यत्र,—अग्रजन्मनः, ब्राह्मणस्येत्यर्थः, वध एव—नाश एव, कलङ्कः,—कालिमा, अन्यत्र,—अपवाद इत्यर्थः, तस्य प्रक्षालनाय—शोधनाय, आकुलः,—उत्सुकः, अमरपतिरिव—इन्द्र इव, पुरा त्वष्टृतनयः असुरपक्षपाती ब्राह्मणः त्रिशिराः तद्भ्राता वृत्रश्च शक्रेणाघानिषातां, तेन पातकं तमशिश्रियत् इति वार्त्ता। पृथुरिव—वेणतनय इव, पृथिवीति।—पृथिव्याः,—धरण्याः, परिशोधनं—संस्करणं, तस्मिन् अवधानेन—मनोनिवेशेन, सङ्कलिताः—ज्ञाताः; व्यवस्थापिताश्च, सकलानां—सर्वेषां, महीभृतां—राज्ञां, पर्व्वतानाञ्च, समुत्सारणा—उचितस्थाने प्रतिष्ठापनं, सञ्चालनञ्च येन तथोक्तः। पुरःसरैः,—अग्रगामिभिः, सहस्रसङ्ख्यैः,—अनेकैः, दशशतसङ्ख्याकैश्च, आलोककारकैः,—आलोकः,—वन्दिभाषणं, स्तुतिवाक्यमित्यर्थः, "आलोकस्तु पुमान् द्योते दर्शने वन्दिभाषणे" इति मेदिनी ) तं कुर्व्वन्तीति तथोक्तैः, "आलोकशब्दं वयसां विरावैः" इति रघुः, तत्र "आलोकशब्दं जयशब्दम्" इति मल्लिनाथः; तेन हि स्तुतिपाठकैरित्यर्थः, उद्योतकारैश्च।

( १०५ ) अधिकारेति।—अधिकारस्य—नियोगस्य, चातुर्य्येण—नैपुण्येन, कर्म्मपाटवेन इत्यर्थः, चञ्चलाः,—सत्वरा इत्यर्थः, चरणाः,—पदनिक्षेपा इति यावत् येषां तैः, "दण्डिभिः" इत्यग्रस्थवाक्येनान्वयः। व्यवस्थेति।—व्यवस्था—लोकस्थितिः, तस्याः स्थापने—रचणे, निष्ठुराः,—निर्दयाः तैः, राज्ञः पुरोयायिनां दण्डप्रदर्शनेन निर्भर्त्सनादिना च समुत्सारणादिति भावः।

(१०६) भयेति।—भयेन—त्रासेन, पलायमानाः,—इतस्ततो विद्रवन्तः, ये लोकाः,—जनाः, तेषाम् उत्पीड़ैः,—समूहैः, अन्तरिताः,—व्यवहिताः, आच्छन्ना इत्यर्थः, ग्राहयद्भिरिव—आनयद्भिरित्यर्थः, राजान्तिके दिक्समूहानामपि बलपूर्व्वकं समुपस्थापनार्थं सैनिकजनान् प्रेरयद्भिरिवेति भावः, एतेन हर्षस्य महाप्रतापवत्त्वं सूचितम्।

इव (१०७) चलितकदलिकासम्पातपीतप्रचारं पवनमपि विनये स्थापयद्भिः इव (१०८) द्रुतचरणोद्धूतधूलिपटलावधूतान् दिनकरकिरणान् अपि उत्सारयद्भिः इव कनकवेत्रलताऽऽलोक-विक्षिप्यमाणं दिनमपि दूरीकुर्वद्भिः इव दण्डिभिः इतस्ततः समुत्साध्यमाणजनसमूहो निर्जगाम नरपतिः।

(१०९) अवनमति च विनयनमितवपुषि, भयचकितमनसि, चलनशिथिलमणिकनकमुकुटकिरणनिकररुचिरशिरसि, (११०) विलुलितकुसुमशेखररजसि राजचक्रे, प्रभामुचां चूड़ामणीनाम् अवाञ्चः तिर्य्यञ्च उदञ्चश्च चञ्चन्तो मरीचयः चाप-

(१०७) चलितेति।—चलितानां—कम्पितानां, पताकाधारिभिः स्थानान्तरे नयनादिति भावः, कदलिकानां—पताकानां, ("रम्भायाञ्चेऽथ कदली पताका-मृगभेदयोः" इति मेदिनी) सम्पातेन—सञ्चारेण, वायुवेगेन इतस्ततो धावनादिति भावः, पीतः,—ग्रस्तः, रुद्ध इत्यर्थः, प्रचारः,—चलनं यस्य तथाभूतम्। विनये—नम्रतायां, स्थापयद्भिः,—रचयद्भिरित्यर्थः, हर्षस्याग्रतः पवनमपि नम्रतां नयद्भिरिति भावः, एतेनास्य असङ्ख्येयपताकावाहिसैन्यसन्तानवत्त्वं प्रकटीकृतम्।

(१०८) द्रुतेति।—द्रुतैः,—शीघ्रगतिभिरित्यर्थः, चरणैः,—पादैः, उद्धूतानि—उत्क्षिप्तानि, यानि धूलिपटलानि—रजःसङ्घाताः, तैः अवधूताः,—तिरस्कृताः, आच्छन्ना इत्यर्थः तान्। उत्सारयद्भिः इव—निराकुर्वद्भिरिव। कनकेति।—कनकवेत्रलता—स्वर्णमयी वेत्रयष्टिः, दण्डिधार्य्या इति भावः, तस्याः आलोकेन—उद्योतेन, प्रभया इति यावत्, विक्षिप्यमाणं—तिरस्कुर्व्वन्तम्, अवधीरयन्तमित्यर्थः, दिवालोकादपि प्रभावद्वेत्रयष्टिधारिभिरिति समुदितार्थः। दण्डिभिः,—राजपुरीयायिभिः दण्डधारिपुरुषैः।

(१०९) विनयेति।—विनयेन—अनौद्धत्येन, विनयप्रदर्शनार्थमिति भावः, नमितम्—आवर्जितं, प्रणामकाले इति भावः, वपुः,—शरीरं येन तथोक्ते। चलनेति।—चलनेन—अवनतिकाले दोलनेन, शिथिलाः,—विश्लथाः, मणयः,—रत्नानि यस्य तादृशस्य, कनकमुकुटस्य—काञ्चनकिरीटस्य, किरणनिकरेण—मयूखचयेन, रुचिरम्—उज्ज्वलं, शिरः,—मस्तकं यस्य तथोक्ते।

(११०) विलुलितेति।—विलुलितं—प्रसृतं, शिरोनमनवेगोद्भूतपवनेन इति भावः, कुसुमशेखरस्य—शिरोभूषणपुष्पस्य, रजः,—परागः यस्य तथाभूते, राजचक्रे—

चापराशय इव सुशकुनसम्पादनाय चेलुः। (१११) मेघायमाना रेणुमेदुरं मन्दिरशिखण्डिन इव खमुड्डीयमानाः कोमल-कल्पपादपपल्लवचन्दनमालाकलापा इव आवध्यन्त। (११२ दिग्द्वारेषु दिक्पालैः प्रणम्यमानश्च, नेत्रविभागैश्च कटाक्षैः समग्रेक्षितैः भ्रूवञ्चितैश्च अर्द्धस्मितैश्च परिहासैश्च छेकालापै

नृपतिवृन्दे, अवनमति—प्रणमति। प्रभामुचाम्—आलोकवर्षिणाम्॥ अवाञ्चः, अधःप्रसरन्तः। तिर्यञ्चः,—पार्श्वेषु चरन्तः। उदञ्चः,—उद्गच्छन्तः, ऊर्द्ध्वं प्रसरन्त इत्यर्थः। चञ्चलः,—स्फुरन्तः। चापराशय इव—नीलकण्ठाख्यपक्षिसमूहा इव, सुशकुन सम्पादनाय—सुनिमित्तप्रकटनाय, चेलुः,—भ्रमन्ति स्म॥ विजिगीषुराजैः चापप विजयादशमीदिवसे सर्व्वत्र विजयकामनया दृश्यते इति व्यवहारः॥

(१११) मेघेति।—मेघायमानाः,—मेघा इव आचरन्तः, अन्तरीक्षाच्छादना-दिति भावः, ये रेणवः,—रजांसि, तैः मेदुरं—स्निग्धं, समाच्छन्नमिति भावः; ["भञ्जभास-मिदो घुरच्" (३।२।१६१ पा०) इति घुरच्] खम्—आकाशम्, उड्डीयमानाः,—उद्गच्छन्तः, मरीचय इति शेषः, मन्दिरशिखण्डिन इव—गृहमयूरा इव, परिलक्ष्य-माणा इति शेषः, सितपीतनीलादिविविधवर्णानां मणीनां प्रभापटलानि कर्बुरपिच्छवर्हिण इव परिलक्ष्यन्ते इति निष्कर्षः, तथा कोमलेति॥—कोमलाः,—मृदुलाः, कल्पपादपस्य—देवतरुविशेषस्य, ये पल्लवाः,—किसलयाः, तेषु चन्दनमालाकलापा इव—चन्दनधारा-रचनानि इव, आवध्यन्त—समतन्यन्त, समसज्यन्त इत्यर्थः, स्वयमेवेति शेषः।

(११२) दिग्द्वारेषु—दिङ्मुखेषु इत्यर्थः, दिक्पालैः,—इन्द्रादिभिः, आशापालका-सामन्तप्रवीरैश्च, हर्षाज्ञया माङ्गल्यसम्पादनाय नानादिग्भ्यः विदिग्भ्यश्च समुपस्थितै-रिति भावः; एतेन भूलोकनाथस्य दिक्पालेष्वप्याज्ञा अखण्डितैवेति गम्यते; प्रणम्यमानः,—नमस्क्रियमाणः, दशानामपि दिशामधिपत्य सम्राजो हर्षस्य समीपे एकैकदिगधिपानां सामन्तानामिवेन्द्रादीनां देशविशेषाधीश्वराणां वा प्रणामस्य अवश्यकर्त्तव्यत्वादिति भावः। नेत्रविभागैः,—विभागोन्मीलितदृष्टिभिरित्यर्थः, सङ्कुचित-दर्शनैरिति यावत्, कांश्चिद्राज्ञ इति शेषः, एवमुत्तरत्र; कटाक्षैः,—अपाङ्ग-दर्शनैः, वक्रदृष्टिभिरित्यर्थः, समग्रेक्षितैः,—सम्पूर्णदर्शनैः, पूर्णोन्मीलितदृष्टिभिरित्यर्थः, अतिप्रियराजान् इति भावः, भ्रूवञ्चितैः,—भ्रूभङ्गा रहितैः, प्रसन्नदृष्टिभिरिति भावः, ["भ्रूवञ्चितैः" इत्यत्र "भ्रुवाञ्चितैः" इति पाठे,—भ्रुवा—भ्रूविक्षेपेण; अञ्चितैः,—

कुशलप्रश्नैश्च प्रतिप्रणामैश्च उन्मत्तभ्रूवीचितैश्च आह्लादानैश्च आक्रीणन् इव मानमयान् प्राणान् प्रणयदानैः प्रवीराणां वीरो यथाऽनुरूपं विबभाज राजकम्।

अथ प्रस्थिते राजनि (११३) कलकलत्रस्तदिङ्नागसूत्कार-रव इव इतस्ततः तस्तार तारतरः तूर्य्याणां प्रतिध्वनिः आशातटेषु। दिग्गजेभ्यः प्रकुपितानां त्रिप्रस्रुतानां करिणां मदप्रस्रवणवीथीभिः अलिकुलकालीभिः कालिन्दीवेणिका-सहस्राणि इव सस्यन्दिरे। (११४) सिन्दूररेणुराशिभिः अरुणाय-

मनोज्ञैः, उन्नतैकभ्रूचिह्नैः इत्यर्थः] अर्द्धस्मितैः,—ईषद्धास्यैरित्यर्थः, छेकालापैः,—वक्रोक्तिभिः, अन्तराऽन्तराभाषणैरित्यर्थो वा। उन्मत्तेति।—उन्मत्तैः,—उन्मादरोग-ग्रस्तस्येव पीतमद्यस्येव वा चञ्चलैरित्यर्थः, भ्रूवीचितैः,—भ्रूसञ्चालनैः, परिहासार्थमिति भावः प्रवीराणां—वीरश्रेष्ठानां, राज्ञामिति शेषः, मानमयान्—अभिमानघनानित्यर्थः, प्रणय-दानैः,—प्रीतिज्ञापनैरित्यर्थः, आक्रीणन्निव—विशेषेण क्रीणन्निव, ["आक्रीणन्निव" इत्यत्र "आक्रीडन्निव" इति पाठे—क्रीड़ां कुर्व्वन् इव, तान् प्रति स्वानुग्रहभावज्ञापनार्थ-मिति भावः। प्रथमतः नेत्रविभागैश्चेत्यादिभि प्राणान् आक्रीणन् इति न्यूनेनाधिक-विनिमयात् परिवृत्तिम् अलङ्कृतिं निगमयन् पश्चादत्यधिकश्रेष्ठत्वं स्वस्य प्रतिपादितवान् इति सङ्क्षेपः] वीरः, हर्ष इति शेषः, यथाऽनुरूपं—यथोचितं, विबभाज—विभज्य स्थापितवान् इत्यर्थः।

(११३) कलकलेति।—कलकलेन—कलरवेण, जनसमूहानामिति भावः, त्रस्तानां—भीतानां, दिङ्नागानां—दिग्गजानां, सूत्काररव इव—त्राससूचकसूत्कशब्द-विशेष इव, "शूत्" "शीत्" इत्याकारक इत्यर्थः। तस्तार—व्याप। तारतरः,—उच्चैस्तरः। तूर्य्याणां—वाद्यविशेषाणाम्। आशातटेषु—दिग्विभागेषु। दिग्गजेभ्यः,—दिग्गजान् प्रतीत्यर्थः, ["क्रुधद्रुह—" (१।४।३७ पा०) इत्यादिना चतुर्थी]। त्रिप्रस्रुतानां—त्रिभिः अङ्गैः कपोलादिभिः; प्रस्रुताः,—मदवर्षिणः तेषाम्। अलिकुल-कालीभि,—भृङ्गकुलश्यामलाभिरित्यर्थः, मदप्रस्रवणवीथीभिः,—दानजलस्रावरेखाभिः, कालिन्दीवेणिकासहस्राणि इव—यमुनाप्रवाहसहस्राणि इव, सस्यन्दिरे—प्रसुस्रुवुः, दानजलानीति शेषः।

(११४) सिन्दूरेति।—सिन्दूररेणूनां—नागसम्भवचूर्णानां, करिकलेवरनिहिता-

स्तानविम्बे रवौ अस्तमयसमयं शशङ्किरे शकुनयः। करिणां (११५) षट्पदकोलाहलमांसलैः कर्णतालनिस्वनैः तिरोदधिरे दुन्दुभिध्वनयः। (११६) दोधूयमानश्च सचराचरम् आचचाम चामरसङ्घातो विश्वम्। (११७) अश्वीयश्वास-निक्षिप्तैः शिशिम्न्दे सिन्धुवारदामशुचिभिः निरन्तरम् अन्तरीक्षं फेनपिण्डैः। (११८) पिण्डीभूततगरस्तवकपाण्डुराणि पपुः इव

---

मानम् इति भावः, शशिभिः,—निचयैः, रवौ—सूर्य्ये, लदणायमाने—लोहितायमानं, तत्र प्रतिफलनादिति भावः, विम्बे—मण्डलं यस्य तथाभूते, सतीति शेषः; एतेन हर्षस्य गजानामतिबाहुल्यं महौन्नत्यञ्च सूचितम्, शकुनयः,—चक्रवाकाः इति यावत्, अस्तमयसमयम्—अस्तगमनकालं, सन्ध्याकालमित्यर्थः, शशङ्किरे—शङ्कितवन्तः, तेषां तथा दर्शनेन वियोगशङ्का जातेति भावः। इह कविप्रौढोक्तिसिद्धो भ्रमः अस्तगामिसूर्य्यविम्बसाम्यातिशय्यव्यञ्जकः, तेन हि शकुनानाम् अनस्तगमनोन्मुखे रवौ अस्तगमनोन्मुखत्व-बुद्धेरुदयात् भ्रान्तिमदलङ्कारः।

(११५) षट्पदेति।—षट्पदानां—भ्रमराणां, मदवारिलुब्धानामिति भावः, कोलाहलेन—कलकलेन, मांसलाः,—प्रगल्भा इत्यर्थः तैः, [ "सिध्मादिभ्यश्च" (५।२।९७ पा०) इति पाक्षिको लच्] कर्णेति।—कर्णौ—श्रवणे एव, तालौ—करतला-स्फालने, कांस्यनिर्मितवाद्यविशेषौ वा, तयोः निस्वनैः,—शब्दैः, तिरोदधिरे—तिरस्कृता, कर्णतालशब्दबाहुल्येन दुन्दुभिध्वनयः न श्रुतिगोचरा अभवन्नित्यर्थः।

(११६) दोधूयमानः,—पुनःपुनः सञ्चाल्यमानः, [ धुनोतेः धूनातेः धूपतेर्वा यङ्लुकि कर्म्मणि शानचि रूपम् ]। सचराचरं—स्थावरजङ्गमसहितम्। आचचाम—जग्रास, आच्छादयामासेति यावत्।

(११७) अश्वीयेति।—अश्वीयम्—अश्वानां समूहः, तस्य श्वासेन—निश्वास-पवनेन, निक्षिप्तानि—पातितानीत्यर्थः तैः, सिन्धुवारदामशुचिभिः,—निर्गुण्डी-मालाविशदैः, फेनपिण्डैः,—डिण्डीरचयैः। शिशिम्न्दे—शुक्लतां प्रापयाञ्चक्रे, [ श्विन्दतेः औवादिकस्य कर्म्मणि लिटि रूपम् ]। एतेनास्य अश्वानामपि अतिबाहुल्यं सूचितम्।

(११८) पिण्डीभूतेति।—पिण्डीभूतः,—राशीभूतः, यः तगरस्तवकः,—तगरपुष्पगुच्छः, तद्वत् पाण्डुराणि—विशदानि, शुभ्राणि इत्यर्थः।

परस्परसङ्घट्टनष्टाष्टदिशं दिवसम् उच्चचामीकरदण्डानि आतपत्रवनानि। (११९) रजोरजनीनिमीलितो मुकुटमणिशिलावलीबालातपेन विचकास वासरः। (१२०) राजतैः हिरण्मयैश्च मण्डनकभाण्डमण्डलैः ह्लादमानैः हरितीकृताः परिह्लादा हरितो बधिरतां दधुः। (१२१) अरिप्रतापानलनिर्मूलनाय इव मदोदशीकरैः शिशीकिरे करिणः ककुभां चक्रम्। (१२२) चक्षुषाम् उन्मेषं मुमुषुः तड़िच्चञ्चलानि

उच्चचामीकरदण्डानि—उच्चा,—उत्तुङ्गाः, चामीकरदण्डाः,—सौवर्णयष्टयः येषां तानि, आतपत्रवनानि—छत्रारण्यानि, अनेकसङ्ख्यकच्छत्राणीत्यर्थः, पप्रुरिति।—परस्परासाम् —अन्योऽन्यासां, दिशामेवेति भावः, सङ्घट्टेन—सङ्घर्षणेन, नष्टाः,—अदर्शनं गताः, अष्टौ—अष्टसङ्ख्यकाः, दिशः,—ककुभः यत्र तम्। पप्रुरिव—जग्रसुरिव, अनेकसङ्ख्यकच्छत्रच्छायया दिवालोकस्य प्रतिहतत्वादिति भावः।

(११९) रज इति।—रज एव—धूलिरेव, सैन्यपदोत्थितमिति भावः, रजनी—रात्रिः, गगनमण्डलाच्छादनादिति भावः, तत्र निमीलितः,—मुद्रितः, रजसा आच्छन्न इति यावत्, वासरः,—दिवसः, मुकुटेति।—मुकुटमणिशिलावलीना—किरीटरत्नानां, बालातपेन—नवालोकेन, मन्दकिरणेनेति यावत्, विचकास—विदिद्युते, व्यशोभत इत्यर्थः। रजसाऽन्धकारीभूतोऽपि दिवसः मुकुटमणिप्रभया प्रचकाशे इति निष्कर्षः।

(१२०) ह्लादमानैः,—रणद्भिः, राजतैः,—रौप्यैः, हिरण्मयैः,—सौवर्णैश्च, मण्डनकभाण्डमण्डलैः,—मण्डनकानि—शोभाजननानि, यानि भाण्डानि—अश्वाभरणानि, ("स्याद्भाण्डमश्वाभरणे" इत्यमरः) भूषणपात्राणि वा, तेषां मण्डलैः,—समूहैः, परिह्लादाः,—परितो निस्वनपूरिताः, राजतादिभाण्डनिचयैः निनादिता इत्यर्थः, [ह्लादतेः कर्मणि घञ्] तथा हरितीकृताः,—श्यामीकृताः, सर्वत, धान्यस्तम्बादिना इति भावः; यद्वा,—हरितीकृताः,—धवलीकृता इत्यर्थः, आभरणप्रभाभिरिति भावः, हरितः,—दिशः, ("दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः)।

(१२१) अरीति।—अरीणां—शत्रूणां, प्रतापानलस्य—तेजोवह्नेः, निर्मूलनाय इव—निर्वापणाय इव, मदोदशीकरैः,—दानवारिणा सन्तमकणिकाभिः, ककुभां—दिशां, चक्रं—मण्डलं, शिशीकिरे—सिषिचुः, अजस्रसम्पतन्मदासारैः, सिक्तवन्तः इत्याशयः। ["शीकते" इत्यस्य औणादिकस्य लिटि रूपम्]।

चूडामणीनामर्चींषि। स्वयमपि (१२३) विसिस्मिये बलानां भूपाल. सर्व्वतो विचिप्तचक्षुश्च अद्राचीत् आवासस्थानसकाशात प्रतिष्ठमानं स्कन्धावारम्, (१२४) अधोचजकुक्षेः इव युगादौ निष्पतन्तं जीवलोकम्, अम्भोनिधिमिव कुम्भभुवो वदनात् प्लावितभुवनम् उद्गवन्तम्, (१२५) अर्ज्जुनबाहुदण्ड-सहस्रसम्पिण्डितोन्मुक्तमिव सहस्रधा प्रवर्त्तमानं प्रवाह नर्मदायाः। (१२६)"प्रसर तात! ।भाव! किं विलम्बसे? लङ्घति

(१२२) तडिच्चञ्चलानि—विद्युच्चञ्चलानि, अर्चींषि—किरणाः, चक्षुषां—नेत्राणां ... संवलनानामिति भावः, उन्मेष—विकास, मुमुषुः,—अहरम्, हठात् तीव्रालोक सम्पातस्य दृष्टिप्रतिबन्धकत्वादिति भावः।

(१२३) विसिस्मिये—अद्भुतम् अमन्यत इत्यर्थः। बलाना—सैन्यानाम्। [अ "षष्ठी शेषे" (२।३।५० पा०) इति षष्ठी] भूपालः,—हर्षः। विक्षिप्तचक्षुः,—पातित-नेत्रः। प्रतिष्ठमानं—प्रचलन्तम्। स्कन्धावारं—शिविर, चतुरङ्गवाहिनीस्तोमम् इत्यर्थः। सर्वतो विक्षिप्तचक्षुः भूपः स्वयमपि आवासस्थानसकाशात् प्रतिष्ठमानं "अधोचजकुक्षेः—" इत्यारभ्य "नर्मदायाः"इत्यन्तविशेषणका बलानां स्कन्धावारम् अद्राचीत् विसिस्मिये च इत्यन्वयः।

(१२४) युगादौ—सत्ययुगारम्भे, अधोक्षजकुक्षेः—[illegible]जठरात् [illegible] —[illegible]। कुम्भ[illegible],—[illegible] "अगस्त्य कुम्भसम्भव" [illegible])। प्लावित[illegible] —प्लावितं भुवनं येन तथाभूत, [illegible]मित्यर्थः; यद्वा,—क्रियाविशेषणं [illegible] [illegible]वितं भुवनं यस्मिन् कर्मणि तद् यथा स्यात तथेत्यर्थः। [illegible]—[illegible]।

(१२५) अर्ज्जुनेति।—[illegible]—[illegible]र्ज्जुनस्य इत्यर्थः, बाहुदण्ड[illegible] भुजयष्टीना. सहस्रेण—दशशतसङ्ख्यया, आदौ सम्पिण्डित—समाहृत, पश्चाद् मुक्त—परित्यक्त, सहस्रधा—सहस्रभागैरित्यर्थः, प्रवर्त्तमान—प्रसरन्तम्। पूर्व कार्त्तवीर्य्यार्ज्जुनेन हैहयाधिपतिना पुरन्ध्रीभिः सह नर्मदायां जलकेलिनिरतेन तत्प्रवाहो भुजसहस्रेण उभयतो रुद्धा पश्चात् त्यक्त. इति वार्त्ता। इह आवासस्थानसकाशात् प्रतिष्ठमान स्कन्धावारमारभ्यैतदवधि स्क[illegible]वारस्योपमानानि अधोक्षजाङ्गात् निष्पतज्जीवलोकादिकानि अनेकानि एकवाक्यां तानि इति मालोपमा।

(१२६) तात—वत्स। प्रसर—गच्छ। भाव।—विदन्। माग्य इत्यर्थः, किं विलम्बसे?—कथ चिरयसि? लङ्घति—चलति, प्रचण्डवेगेन धावतीति भावः,

तुरङ्गमः । भद्र ! भग्नचरण इव सञ्चरसि यावदमी पुरःसराः सरभसम् उपरि पतन्ति । वा॒यसि किमुष्ट्रम् ? न पश्यसि निर्दय ! शुकशिशुं शयानम् ? । वत्स रामिल ! (१२७) रजसि यथा न नश्यसि । नो पश्यसि गलति शक्तुप्रसेवकः ? । किमेवम् ( १२८ ) इत्वर ! त्वरसे ? सौरभेय !। सरणिम् अपहाय हयमध्यं धावसि धीवरि ! ? विशसि गन्तुकामा मातङ्गि ! मातङ्गमार्गम् ? । अङ्ग ! गलति तिरश्चीना चणकगोणी । गणयसि न मामारटन्तम् ? । अवटम्

[ "लगि गतौ" इति औवादिकस्य लङ्गतेः लटि रूपम् ] । भग्नचरण इव— खण्डितपद इव । पुरःसराः,—अग्रगामिनः । सरभस—सवेगम् । शयानं शुकशिशुं मद्रा दलन् यासीति भाव । [ "शुकशिशुम्" इत्यत्र "निःशूकशिशुम्" इति पाठे,— निःशूकं—निःशिखम्, अजातचौडसंस्कारत्वादत्यल्पवयस्कमित्यर्थः, अत एव सर्व्वथा कृपाऽऽस्पदम् इति भाव ] ।

( १२७ ) रजसि—धूलिराशौ इति भावः, यथा न नश्यसि—न अदर्शनं यासि, तथा कुर्व्विति शेष , यद्वा,—यथा रजसि—यादृक् अनुरक्तोभवसि, तथेति भावः, [ रजते औवादिकस्य लटि रूपम् ] न नश्यसि—न प्रणाशं गच्छसि, एतादृगनुरागस्य अभ्युदयहेतुत्वादिति भाव । शक्तुप्रसेवकः,—शक्तुना—तन्मात्रभक्तकेन इति भावः, प्रकर्षेण सेवते इति तथोक्त, भक्तदास इत्यर्थः, शक्तुमात्रवेतनो भृत्य इति भावः, तदाख्यो वा, गलति—दूरं गच्छतीत्यर्थः ; यद्वा,—शक्तूना प्रसेवकः,—शक्तुपूर्णं स्यूतः, शणपट्टादितन्तुनिर्म्मितं धान्याद्याधारविशेषः इत्यर्थ, ("स्यूतप्रसेवौ" इत्यमरः) "प्रसेवकः अस्त्राभरणम्" इत्येके, गलति—पतति, नो पश्यसि ?—नावलोकसे ? [ "नो" इत्यत्र "न" इति पाठा॒रम् ] शक्तुर्दन्त्यादिरपि दृश्यते ।

( १२८ ) इत्वर !—गमनशील ! [ इण् गतावित्यस्मात् "इण् नश—" ( ३।२।१६३ पा० ) इत्यादिना क्वरप् प्रत्यय ] त्वरसे ?—सम्भ्रान्तोऽसि ? द्रुतं धावसीत्यर्थः । सौरभेय !—वृषभ !, वृषभवत् दान्त इति भावः, ( "·····ऋषभो वृषभो वृष । अनड्वान् सौरभेयो गौः" इत्यमरः ) धीवरि !—धीवरकन्ये ! सरणिं पन्थानम्, अपहाय—उत्सृज्य, हयमध्यम्—अश्वाभ्यन्तरं, धावसि ?—द्रुत यासि ? मातङ्गि !—चण्डालतनये ! इत्यर्थ, ( "चण्डालप्लवमातङ्ग ··" इत्यमरः ) मातङ्गमार्गं— हस्तिसरणिं, विशसि ?—आश्रयसि ? प्रविशसीत्यर्थ । अङ्गेति सम्बुद्धौ । तिरश्चीना— अनृजुविहितेति भावः, चणकगोणी—चणकाख्यकलायस्थलिका, गलति—च्यवते । गणयसि

अतटेन अवतरसि ?। (१२९) सुखमास्स्व स्वैरिणि !। सौवीरक ! क्षुण्णः। मन्थरक ! खादिष्यसि गतः सन्निचुम्, उक्षाणं प्रसादय कियच्चिरं चिनोषि चेट ! बदराणि ? दूरं गन्तव्यम्। किमद्यैव विद्रासि ? द्रोणक ! द्राघीयसी दण्डयात्रा। (१३०) विनैकेन निष्ठुरकेण निष्क्रेयम् अस्माकम्। अग्रतः पन्थाः स्खपुटकः। स्थावरक यथा न भनक्षि फाणितस्थालीम्। (१३१) गरीयान् गण्डक तण्डुलभारको न निर्वहति दम्यः। दासक ! माषीणा

—वह मन्यसे। आरटन्त—तुवन्तम्। अवटं—गर्त्तं, ("गर्त्तावटौ भुवि श्वभ्रे" इत्यमरः अतटेन—अमार्गेण, अप्रशस्ताधोभागीयपथेनेत्यर्थः।

(१२९) आस्स्व—स्थितिं कुरु। स्वैरिणि !—स्वेच्छाचारिणि। ["स्वादीरेरिणी. (वा०) इति वृद्धि]। सौवीरक !—काञ्जिकवत्त्वावधायकेत्यर्थः, तन्नामा कश्चिद्वा। उक्षाणं—वृषभम्, ("उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः" इत्यमरः) प्रसादय—सान्त्वय इत्यर्थः। बदराणि—कोलफलानि, चिनोषि ?—गृह्णासि ? दूरं—दूरमध्वान-मित्यर्थः, गन्तव्यं, केचन दासा चुम्पदीता पथि कर्कन्धूफलं भोक्तु प्रवृत्ताः, तन्निवृत्त्यर्थ-म मुक्तिरिति ज्ञेयम्। अद्यैव—इदानीमेव, विद्रासि ?—प्रयासि ? लङ्घसे इति यावत्, दण्डयात्रा—सङ्ग्रामप्रयाणम्, अस्माकमिति शेषः, द्राघीयसी—अतिदीर्घा, अति-महतीत्यर्थः, अत अद्यैव गन्तव्यदेशे गमनम् असम्भवितमेवेति मन्यामहे इति भावः।

(१३०) विनैकेन—एकेन—केवलेन, निष्ठुरकेण—निर्दयाचरणेन, सङ्ग्रामेण इति भावः, यद्वा,—एकेन—एकमात्रेण, निष्ठुरकेण—निर्दयेन, प्रभाङ्केन इत्यर्थः, विना—प्रभाङ्गप्राप्तिमन्तरेणेत्यर्थः, ["पृथग्विना—" (२।३।३२ पा०) इत्यादिना पक्षे तृतीया] निष्क्रेयम्—ऋणं, शोधनीयं न भवेदिति शेषः। स्खपुटकः,—विषमस्थान-सञ्चारी, नवीननेन पथा गच्छति, अग्रतः पन्थाः किं न पश्यति भवान् इत्यर्थः। फाणित-स्थाली—फाणितम्—इक्षुविकारः, गुड इति यावत्, तस्य स्थाली—भाण्डमित्यर्थः; यद्वा,—फाणि,—दधिमिश्रितशक्तुः, सोऽस्यास्तीत्यर्थे इतच्, तत्पूर्णस्थालीमिति यावत्, भनक्षि—खण्डयसि,भग्ना करोषि इत्यर्थः।

(१३१) गण्डकेति।—गण्डकतण्डुलभारकः,—गण्डकेषु—खड्गिषु, पशुविशेषेषु इत्यर्थः, तण्डुलभारकः,—तण्डुलभार, गरीयान्—अतीव गुरुः, महानित्यर्थः, दम्यः, —दमनीयः, शिशुरयं गण्डक इति भावः, यद्वा,—गण्डकः,—सङ्ग्रामभेदः, तत्परि-श्रित इत्यर्थः, तण्डुल,—वितुष धान्य, तं बिभर्त्ति—वहति यस्तणीकः, अत्यल्पतण्डुल-

अमुतः द्राक् दात्रेण मुखवासपूलकं लुनीहि, को जानाति (१३२) यवसगतं गतानाम्? धव! वारय बलीवर्दान्, वाहीकरचितं चेत्रमिदम्। (१३३) लम्बिता शकटी, शाक्करं धुरन्धरं धुरि धवलं नियुङ्क्ष्व। यक्षपालित! प्रमदाः पिनक्षि, अक्षिणी किं ते स्फुटिते?। हत हस्तिपक रे! (१३४) दीव्यसि करिकरदण्डे?। समद सम्मर्द! कर्दमे खलसि?। भ्रातर्भाव! विधुरबन्धो! उद्धर पङ्कात् अनड्वाहम्। इत एहि (१३५) माणवक! घनेभघटासङ्कट-

---

वाही इति यावत्, निर्वहति—वोढ शक्नोति। अमुतः,—अमुष्मात्, माषीणात्—माषकला॰ चेत्रात्, ("तिल्यतैलीनवन्माषोमाणुभङ्गात् द्विरूपता" इत्यमर) द्राक्—झटिति, मुखघासपूलक—किञ्चिन्मात्रमुखचालनिहत्तये घास मुखघास, तस्य पूलकं—गुच्छं, लुनीहि—छिन्धि।

(१३२) गतानां—प्रस्थितानां, पशूनामिति शेष, यवसगत—यवसं—घास एव, गत—गतिरित्यर्थः तत्, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् इति भावः, पशवो यवस बिना क्षणमपि जीवितु नोत्सहन्ते इति को जानाति॥ इति भाव। धव!—नर। वलीवर्द्दचालक-पुरुष। इत्यर्थः, ("धवः पुमान् नरे धूर्त्ते पत्यौ वृक्षान्तरेऽपि च" इति मेदिनी) वलीवर्द्दान्—वृषभान्, वारय—शस्यचेत्रात् ताडय इत्यर्थ, वाहीकरचित—परिपालकरचितम्, ईषदपि शस्यक्षतौ महाप्रमाद प्रसजेत् इत्याशय।

(१३३) शकटी—क्षुद्रशकट, लम्बिता—मार्गादवस्खलितेत्यर्थ। धुरन्ध—भारवहनक्षममित्यर्थ, धवल—श्वेतकायं, शाक्कर—शक्कर एव शाक्कर तं, यूनं युवान वा वृषभमित्यर्थ, शक्करशब्दस्यापि वृषभवाचकत्व दृश्यते, तथाच षष्ठे ५८८ पृष्ठे शक्करशब्दस्य वृषभवाचकत्व, यथा—"शङ्करशकुरशक्कर—" इति। धुरि—यानमुखे, ("धूः स्त्री क्लीवे यानमुखम्" इत्यमर) नियुङ्क्ष्व—योजय इत्यर्थ। यक्षपालित! सम्बोधनपदमिदम्, प्रमदाः,—स्त्रियः, पिनक्षि?—दलसि? पदनिक्षेपेण इति भाव, [ पिषेः रौधादिकस्य रूपम् ] स्फुटिते?—विदीर्णे? अन्ध किमु भवान्? इति भाव।

(१३४) करिकरदण्डे—हस्तिशुण्डादण्डे, हस्तिशुण्डोपरि इत्यर्थ दीव्यसि?—क्रीडसि? समद!—मत्त इत्यर्थ, सम्मर्द! इति कस्यचित् सम्बोधन, खलसि?—पतसि?। भाव!—मान्य। विधुरबन्धो!—दीनदयालो। अनड्वाह—वृषम्।

(१३५) माणवक!—बालक। ("बालस्तु स्यान्माणवकः" इत्यमरः)

सङ्कटे नास्ति निस्तरणम्” (१३६) इत्येवमादिप्रवर्त्तमानानेकसंलापं, (१३७) क्वचित् स्वेच्छामृदितोद्दामशस्यघासविघससुखसम्पन्नान्नपुष्टैः केलिकोकिलैः किलकिलायमानैः सेण्ठवण्डवठरलम्बनलेशिकलुण्ठकचेटचाटचण्डालमण्डलैः आण्डीरैः स्तूय-

---

घनेति।—घना—निविडा, इभघटा—हस्तिसङ्घः, तस्याः सङ्घट्टेन—सम्मर्द्देन, सङ्कटे—सम्बाधे तस्मिन्, निस्तरणं—निस्तारः, उद्धार इत्यर्थः।

(१३६) “इत्येवमादिप्रवर्त्तमानानेकसंलापं”……“वीक्षमाणः कटकं जगाम” इत्युत्तरेणान्वयः। इत्येवमादिप्रवर्त्तमानानेकसंलापम्—इत्यादिश्रूयमाणबहुविधसङ्कथम्।

(१३७) कटकं विशिनष्टि, क्वचिदित्यादि। स्वेच्छेति।—स्वेच्छया—स्वच्छन्देन, मृदितानि—दलितानि, क्षेत्रात् समाहृत्य बुसतृणादिनिरसनेन परिष्कृतानीत्यर्थः, उद्दामानि—उद्भटानि, प्रभूतानि इति यावत्, शस्यानि—धान्यादयः, तथा घासाः—यवसानि, तथा विघसाः,—भृत्याद्युपयोगशिष्टानि अन्नानि, (“अमृतं विघसो यज्ञशेषभोजनशेषयोः” इत्यमरः) परस्परलुण्ठनानि वा, तैः विनिमयभूतैरिति भावः, सुखेन—अनायासेन, सम्पन्नानि—सङ्गृहीतानि यानि अन्नानि—भोज्यानि, सैन्येभ्यो धान्यादिकं दत्त्वा लब्धानि अन्याणि इत्यर्थः, तैः पुष्टाः,—पूरितोदराः तैः, केलिकोकिलैः,—क्रीडापरैः कोकिलैः, कोकिलसदृशैरिति यावत्, परान्नपुष्टत्वादिति भावः; [“केलिकोकिलैः” इत्यत्र “केलिकलैः” इति पाठे,—क्रीडाप्रियैः, प्रहसनपरैरित्यर्थः, बहुभाषिभिर्वा] किलकिलायमानैः—अतिनीचत्वात् किलकिलाशब्दं कुर्व्वद्भिरित्यर्थः, आण्डीरैः,—प्रगल्भैः, मुष्कयुक्तैर्वा, अण्डानि—पुंसामङ्गावयवविशेषाः, तानि सन्ति एषामिति व्युत्पत्त्या [“काण्डाण्डादीरन्नीरचौ” (५।२।१११ पा०) इत्यण्डशब्दादस्त्यर्थे ईरन्। “आण्डीरैः” इत्यत्र “राण्डीरैः” इति पाठे,—राण्डीरैः,—रण्डापुत्रैः, रण्डा—विधवा स्त्री, (“रण्डा मूषिकपर्ण्याञ्च विधवायाञ्च योषिति” इति मेदिनी) एतत्पक्षे रण्डाशब्दादपत्यार्थे ईरत् मृग्यः इति सङ्क्षेपः; यद्वा,—रण्डाशब्दात् “बाह्वादिभ्यश्च” (४।१।९६ पा०) इति इञि राण्डिरिति सिद्धे, तमीरयति पुष्णाति इत्यर्थे ईरयतेः पचादित्वादचि रूपमिति ज्ञेयं रण्डापुत्रपोषकैरिति तदर्थः] सेण्ठेति।—सेण्ठाः,—हस्तिजागरिकाः, एतच्छब्दस्याप्रसिद्धत्वात् “सेटाः” “सेडाः” वा इति मन्यामहे, तथात्वे उन्मत्ताः तदर्थ इति ज्ञेयं,

मानं क्वचित् (१३८) असहायैः क्लेशार्जितकुग्रामकुटुम्बिसम्पादित-सीदत्सौरभेयसम्बलसंवाहनायासावेगागतसंयोगैः (१३९) स्वयङ्गृहीतगृहोपस्करणैः "इयम् एका कथञ्चित् दण्डयात्रा यातु, यातु पातालतलं तृष्णा, (१४०) भूतेः अभवनिर्भवतु,

चण्डा,—अकृतविवाहा तरुणाः, हस्ताद्यङ्गविकला वा "वँडे" इति वङ्गभाषा, ["बण्ड—" इत्यत्र "बण्ठ—" इति पाठे,—बण्ठा,—खर्व्वाः, "बँटे" इति वङ्गभाषा] बठरा,—मूर्खाः, लञ्जना,—गर्द्दभदासाः, लेखिका,—जनपरिचारकाः, लुण्ठकाः,—चौराः, चेटाः,—दासाः, चाटाः,—धूर्त्ताः, ["चाट—" इत्यत्र "शाट—" इति पाठान्तरम्] चण्डालाः,—अश्वपाला इत्यर्थः, तेषां मण्डलानि—समूहाः तैः, स्तूयमानं—स्तुत्या प्रशस्यमानमित्यर्थः ।

(१३८) असहायैः,—अप्राप्तसाहाय्यैरित्यर्थः, क्लेशेति ।—क्लेशेन—आयासेन, अर्ज्जितं—लब्धं, कुग्रामकुटुम्बिभिः,—नीचग्रामीणैः, सम्पादितं—दत्तं, यत् सीदतः,—कष्टं गतस्य, सौरभेयस्य—कुक्कुरस्य इत्यर्थः, सम्बलं—पाथेयं, प्राणधारणोपयोगि यत्किञ्चिददनीयं द्रव्यमित्यर्थः, तस्य संवाहने—सङ्ग्रहणे, य आयासः,—क्लेशः, तेन हेतुना य आवेगः,—त्वरा, तेन आगतः—प्राप्तः, संयोगः,—सङ्गः यैः, अतिकष्टातिशयसहिष्णुभिः अतः सहागतकुक्कुरभक्ष्यलाभाशया समागतैरिति भावः, यद्वा,—क्लेशार्ज्जितकुग्रामकुटुम्बि-सम्पादिताः,—क्लेशार्ज्जितैः,—भूयसा श्रमेण लब्धैरन्नादिभिः करणैः, कुग्रामकुटुम्बिभिः,—पल्लीवास्तव्यैः, कर्त्तृभिः, सम्पादिताः,—पोषिताः, अत एव सीदन्तः—अवसादं गच्छन्तः, यथेष्टखाद्यप्राप्तेरभावादिति भावः, सौरभेयाः,—वृषभा एव, सम्बलाः,—अवशिष्टधनभृताः, पाथेयप्राया इत्यर्थः, संवाहनानि—भारादिवाहकाश्च येषां तथाभूतानां, [सपूर्व्वकात् वहतेः णिचि करणे ल्युट्] दुरवस्थकृशीवलानामित्यर्थः, ये आयासावेगागतसंयोगाः राष्ट्रीयदुरवस्थाज्ञापनायेति भावः तैः ।

(१३९) स्वयमिति ।—स्वयङ्गृहीतानि—आत्मनैव धृतानि, आनीतानीत्यर्थः, न तु दासादिनेति भावः, गृहस्य—भवनस्य, उपस्करणानि—सामग्र्यः, शय्याऽऽसनादीनि भूषणजातानि इति भावः यैः तथोक्तैः, ["उपात् प्रतियत्न—" (६।१।१३९ पा०) इत्यादिना उपात् कृञः सुट्] । इयं—पुरोवर्त्तिनी, दण्डयात्रा—युद्धार्थं प्रचलिता सेनेति यावत्, एकैव—अस्माकं सहायभावमप्राप्यैव इत्यर्थः, यातु—गच्छतु । तृष्णा—लोभः, आशेति यावत्, अस्माकमिति शेषः, पातालतलं—पातालस्यापि अधः इत्यर्थः, यातु—गच्छतु, एतत्सङ्गेन अस्माकं सुखाशा विरमतु इति भावः ।

(१४०) भूतेः,—सम्पदः, अभवनिः,—अनुत्पत्तिरित्यर्थः, ["आक्रोशे नञ्यनिः"

शिवं सेवा करोतु, स्वस्ति (१४१) सर्व्वदुःखकूटाय कटकाय" इति दुर्विधकुलपुत्रकैः निन्द्यमानं, क्वचित् (१४२) अति-तीक्ष्णसलिलस्रोतःपातिनौगतैः इव ग्रथितैः इव पङ्क्तिभूतै-र्जनैः अतिद्रुतं द्रवद्भिः (१४३) कृणकठिनस्कन्धगुरुलगुड़ैः गृहीतसौवर्णपादपीठीकरङ्ककलशपतद्ग्राहावगाहैः (१४४) प्रत्यासन्नपार्थिवोपकरणग्रहणगर्व्वदुर्वारैः सर्व्वमेव वहिः-

---

(३।३।११२ पा०) इत्यनिप्रत्ययः] भवतु—सम्पद्यतां, संसारे भूतिः नश्यतु इति भावः। सेवा—भृत्यभावः, शिवं—मङ्गलं, करोतु—विदधातु।

(१४१) सर्व्वदुःखकूटाय—समग्रक्लेशसङ्घातरूपायेत्यर्थः, कटकाय—सैनिकाय, सैनिकवृत्तये इति भावः, स्वस्ति—शुभम, अस्त्विति शेषः, ("नमःस्वस्ति—" (२।३।१६। पा०) इत्यादिना चतुर्थी। "शिवं सेवा······कटकाय" इत्यत्र "शिवसेवा करोतु स्वस्ति सर्वदुःखकूटाय कटकाय" इति पाठे,—शिवसेवा—शिवाराधना, सर्वदुःखकूटाय कटकाय स्वस्ति करोतु इत्यन्वयः, शिवसेवा सैनिकवृत्तेः रक्षतु लोकानिति भावः]। दुर्विधेति।—दुर्विधाः—दरिद्राः, ("निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः" इत्यमरः) कुलपुत्रकाः,—कुलक्रमागतसेवका इत्यर्थः तैः। ["दुर्विधकुलपुत्रकैः" इत्यत्र "दुर्विधवृद्धकुलपुत्रकैः" इति पाठान्तरम्]।

(१४२) अतितीक्ष्णेति।—अतितीक्ष्णम्—अत्युग्रम्, अतिवेगवदित्यर्थः, यत् सलिलस्रोतः,—जलप्रवाहः, तत्र पातिनीं—चलन्तीं, नावं—तरणिं, गताः,—अधिष्ठिताः तैरिव। ग्रथितैरिव—गुम्फितैरिव, लोकाधिक्यादविरलभावेनावस्थितैः द्रुतगामिभिश्चेति भावः। पङ्क्तिभूतैः,—श्रेणिवद्भिः, द्रवद्भिः,—गच्छद्भिः।

(१४३) कृणेति।—कृणेषु—नियतभारोद्वहनात् श्यामीभूतेष्वित्यर्थः, कठिनेषु—दृढ़ेषु, स्कन्धेषु—अंसदेशेषु, गुरवः,—महान्तः, लगुड़ाः,—दण्डानि येषां तैः। गृहीतेति।—गृहीताः,—अवलम्बिताः, सौवर्णपादपीठ्यः,—काञ्चनपादपीठानि, करङ्काः,—ताम्बूलपात्राणि च, कलशाः,—कुम्भाश्च, तथा पतद्ग्राहाः,—पततां—मुखादिभ्यः स्रवतां, जलादीनामिति शेषः, ग्राहः,—ग्रहणं यत्र ते, निष्ठीवनपात्राणि इत्यर्थः, ("प्रतिग्रहः पतद्ग्रहः" इत्यमरः) तथा अवगाहाः,—स्नानद्रोण्यश्च यैः तथाभूतैः।

(१४४) प्रत्यासन्नेति।—प्रत्यासन्नस्य—निकटस्थस्य, पार्थिवस्य—राज्ञः, उपकरणानाम्—आसनादीनां, ग्रहणेन—धारणेन, वहनेनेत्यर्थः, ये गर्व्वाः,—

कारयद्भिः भूपतिभृतकभारिकैः महानसोपकरणवाहिभिश्च (१४५) बद्धवराहवर्ध्रवार्ध्रीणसैः (१४६) लम्बमानहरिणचटुकचटकाजूटजटिलैः शिशुशशकशाकपत्रवेत्राग्रसङ्ग्रहसङ्ग्राहिभिः (१४७) शुक्लकर्पटप्रावृतमुखैकदेशदत्तार्द्र द्रागुप्तगोरसभाण्डैः

अहङ्काराः, वयं राजभृत्या इत्येवरूपा इति भावः तैः, दुर्वाराः,—वारयितुमशक्या, उद्धता इति यावत् तैः। सर्वमेव, जनमिति शेषः, बहिः कारयद्भिः,—निरस्यद्भिरित्यर्थः, मदगर्वेण अवज्ञया इवेति भावः। भूपतिभृतकभारिकैः,—भूपतेः,—राज्ञः, भृतक—भरणोपयोगि अन्नादिकमित्यर्थः, तस्य भारिकाः,—भारवाहिनः तैः। महानसोपकरणवाहिभिः,—महानसे—पाकशालायां, ("रसवत्यान्तु पाकस्थानं महानसे" इत्यमरः) यानि उपकरणानि—द्रव्यसम्भाराः, तानि वहन्ति—नयन्ति ये तैः, रन्धनसामग्रीवाहकैरित्यर्थः।

(१४५) बद्धेति।—बद्धानि—सङ्गृहीतानि, वराहवर्ध्राणि—शूकरचर्म्माणि, शूकरचर्म्मनिर्म्मितरज्जुविशेषा इत्यर्थः, तथा वार्ध्रीणसाः,—यज्ञीयच्छागविशेषा, तच्चर्म्माणि वा यैः तथाभूतैः। ["बद्धवराहवर्ध्रवार्ध्रीणसैः" इत्यत्र "बद्धवराहवध्रवार्ध्रीणसैः" इति पाठान्तरम्]।

(१४६) लम्बमानेति।—लम्बमानाः,—स्कन्धे धारणादिति भावः, हरिणस्य—मृगविशेषस्य, चटुकाः,—पूर्वभागाः, चटकाः,—पक्षिविशेषाश्च, तेषां जूटैः,—समूहैः, जटिलाः—युक्ताः तैः। शिश्विति।—शिशवः,—अत्यल्पवयसः, शशकाः,—मृगभेदाः, शाकपत्राणि—शाकानां—हरितकानां, व्यञ्जनोपयोगिद्रव्याणामित्यर्थः, ("अस्त्री शाकं हरितकम्" इत्यमरः) पत्राणि—पर्णानि, वेत्राग्राणि—वंशाङ्कुराः, वानीराख्यलताग्रभागा वा, तेषां सङ्ग्रहे—समाहृतौ, ("समाहृतिस्तु सङ्ग्रहः" इत्यमरः) नियुक्ता ये सङ्ग्राहिणः,—सञ्चयकारकाः तथोक्तैः। वंशाङ्कुरप्रतिपादितव्यञ्जनानि स्वादवर्णादिवर्द्धनानि देशविशेषे बहुशाहृतानि दृश्यन्ते, इति शिशुशशकशाके तस्य सहयोगो न विषमयोजनागमकः इत्यवधेयम्।

(१४७) शुक्लेति।—शुक्लेन—श्वेतेन, कर्पटेन—वसनेन, प्रावृतम्—आच्छादितं, मुखं—वदनं येषां तानि, तथा एकदेशे—एकस्मिन् विभागे, दत्ता—निहिता, आर्द्रा—अभिनवेति भावः, मुद्रा—चिह्नविशेषः येषु तानि, अत एव गुप्तानि—अप्रकाशानि, सुरक्षितानीत्यर्थः, यद्वा,—शुक्लकर्पटप्रावृतमुखस्य एकदेशे—एकस्मिन् अंशे, ग्रन्थिबन्धनस्थाने इत्यर्थः, दत्तया आर्द्रया मुद्रया गुप्तानि, राजपेयतया विषप्रयोगादिभयादिति भावः, गोरसभाण्डानि—गव्यपात्राणि यैः तथाभूतैः। एतेन अनुप्रयुक्तैः पुरुषैः गूढचारिभिः

(१४८) तलकतापकतापिकाहस्तकताम्रचरुकटाहसङ्कटपिटकभारिकैः समुत्सार्य्यमाणपुरोवर्त्तिजनं, क्वचित् (१४९) "क्लेशोऽस्माकं, फलकाले अन्य एव विटाः समुपस्थास्यन्ते" इति मुखरैः पदे पदे पततां दुर्ब्बलबलीवर्दानां खेटने नियुक्तैः खेटचेटकैः (१५०) खिद्यमानासंविभक्तकुलपुत्रलोकं, क्वचित् (१५१) नरपतिदर्शनकुतूहलादुभयतः प्रजवितप्रधावितग्रामेयकजनपदं,

---

विजिगीषूणां भोज्यपानीयादौ किञ्चित् छिद्रमवाप्य विषादिकं सम्मिश्र्यते इति सूचितम् ॥

(१४८) तलकेति।—तलकः,—अग्निशकटिका, लौहचुल्लीति यावत्, तापकः,—ताम्रादिनिर्म्मितं सूपादिकरणपात्रं, तापिका—काकपालिका, यत्र तैलादिभिः अन्यानि परिपच्यन्ते, "कटाहजातीयः" इति गम्यते, हस्तकः,—शूलं, मांसादिपाकसाधनमिति भावः, ताम्रचरुकटाहः,—ताम्रनिर्म्मितपात्रस्थान्नपाकार्थः कटाहविशेष इत्यर्थः, सङ्कटपिटकः,—क्षुद्रभाण्डं, तेषां भारिकाः,—भारवाहिनः तैः, समुत्सार्य्यमाणेति।—समुत्सार्य्यमाणाः,—दूरीक्रियमाणाः, पुरोवर्त्तिनः,—अग्रस्थायिनः, जनाः,—लोकाः यस्मिन् यत्र वा तथाभूतम्।

(१४९) क्लेशोऽस्माकं, बलीवर्द्दवाहनादिना इति भावः, किन्तु फलकाले—पुरस्काररूपफलप्राप्तिसमये, विटाः,—धूर्त्ताः, समुपस्थास्यन्ते—सन्नीभविष्यन्ते, प्रभुणा इति शेषः; न वयमिति भावः, मुखरैः,—वाचालैः, पदे पदे—प्रतिपदक्षेपे, पततां—स्खलतां, दौर्बल्यादिति भावः, दुर्बलबलीवर्द्दानां—क्लान्तवृषाणां, खेटने—प्रेरणे, चालने इति यावत्; ["खेटने" इत्यत्र "स्खलने" इति पाठे,—स्खलने—स्खलनादुद्धरणे इति भावः] नियुक्तैः,—आदिष्टैः। ["खेटने नियुक्तैः" इत्यत्र "नियुक्तैः खेटने" इति पाठान्तरम्]। खेटचेटकैः,—चालकभृत्यैः, ["खेटचेटकैः" इत्यत्र "खलचेटकैः" इति पाठे,—खलचेटकैः,—दुष्टभृत्यैरित्यर्थः]।

(१५०) खिद्यमानेति।—खिद्यमानाः—क्लेश्यमानाः, चेटैरसम्बद्धोक्त्या इति भावः, असंविभक्ताः,—कर्म्मविशेषेण सम्यगदत्तविभागाः, विशेषकर्म्मबाह्या इत्यर्थः, कुलपुत्रलोकाः,—कुलक्रमागतसेवकजना इत्यर्थः यत्र तथोक्तम्।

(१५१) नरपतीति।—नरपतेः,—राज्ञः, दर्शने—अवलोकने, यत् कुतूहलम्—औत्सुक्यं तस्मात्, उभयतः,—उभयोः पार्श्वयोः, कटकस्येति भावः,

(१५२) मार्गग्रामनिर्गतैराग्रहारिकजाल्मैः पुरःसरजरन्महत्तरोत्तम्भिताम्भःकुम्भैः (१५३) उपायनीकृतदधिगुडखण्डकुसुमकरण्डैः घटितपेटकैः सरभसं समुत्सर्पद्भिः (१५४) प्रकुपितप्रचण्डदण्डिवित्रासनविद्रुतैः दूरगतैरपि स्खलद्भिरपि पतद्भिरपि नरेन्द्र-

---

प्रजवितेति ।—प्रजवितं—सवेगं यथा स्यात्तथा, प्रधाविताः,—चलिताः, ग्रामेयकाः,—ग्राम्याः, जनपदाः,—जनाः यस्मिन् तथाभूतम् । ("अथेज्जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनी) ।

(१५२) मार्गग्रामनिर्गतैः,—मार्गे—प्रयाणमार्गसमीपे स्थिता इत्यर्थः, ये ग्रामाः,—संवसथाः, विप्रादिवर्णप्रायाः प्राकारपरिखादिरहिताः बहुजनवसतय इत्यर्थः, ("ग्रामौ संवसथ-ग्रामौ" इत्यमरः) तेभ्यः निर्गताः,—निःसृताः तैः, आग्रहारिकजाल्मैः,—आग्रहारिकाः,—शस्यरक्षणनियुक्ताः ; यद्वा,—अग्रहारोऽग्रभागः नियतं दीयते येभ्यः इति व्युत्पत्त्या अग्रहारशब्दात् ठकि रूपम्, अग्रदानीयविप्राः इत्यर्थः, तेषु जाल्माः,—निर्बोधाः पुरुषाः तैः । पुरःसरेति ।—पुरःसरैः,—अग्रगैः, जरद्भिः,—स्थविरैः महत्तरैः,—महाजनैः, उत्तम्भिताः,—ऊर्द्धीकृताः, अम्भःकुम्भाः,—जलपूर्णकलशाः येः तैः, यात्रिकशुभसूचनार्थमिति भावः ।

(१५३) उपायनीकृतेति ।—उपायनीकृतानि—उपढौकनत्वेन दत्तानि, राज्ञे इति भावः, दधीनि—क्षीरान्तरावस्थाभावाः, ("दधि क्षीरान्तरावस्थाभावे श्रीवासपात्रयोः" इति मेदिनी) गुडाः,—इक्षुपाकभेदाः, ("गुडो गोलेक्षुपाकयोः" इत्यमरः) खण्डाः,—फाणितानि, इक्षुविकारविशेषाः इत्यर्थः, ("मत्स्यण्डी फाणितं खण्डविकारौ" इत्यमरः) कुसुमानि—पुष्पाणि, एषां करण्डाः,—भाजनानि यैः तथाभूतैः । ["शण्डन् शरभतज" (उ० १ पा० १२९ सू०) इति करोतेरण्डन्] घटितपेटकैः,—कल्पितवादनैः, श्रेणिबद्धैरित्यर्थः ; यद्वा,—उपायनीकृतानां दध्यादीनां करण्डैः,—पात्रैः, घटिताः,—पूरिता इत्यर्थः, पेटकाः,—मञ्जूषाः येस्तैः, ("पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके" इति मेदिनी) । सरभसं—सवेगं, समुत्सर्पद्भिः,—समुपगच्छद्भिः, अहमहमिकया अन्यस्मादग्रत एव राजदर्शनाभिलाषात् इत्याशयः ।

(१५४) प्रकुपितेति ।—प्रकुपितानाम्—अतिक्रुद्धानां, प्रचण्डानाम्—उग्राणां, दण्डिनां—वेत्रपाणीनां, वित्रासनेन—भयप्रदर्शनेन, विद्रुताः,—पलायितास्तैः । दूरगतैरपि—सुदूरमपसृतैरपि । स्खलद्भिरपि—भ्रश्यद्भिरपि । नरेन्द्रेति ।—नरेन्द्रे—

निहितदृष्टिभिः (१५५) असतोऽपि पूर्व्वभोगपतिदोषानुद्भावयद्भिः अतिक्रान्ताऽऽयुक्तकशतानि च शंसद्भिः (१५६) चिरन्तनचाटापराधांश्चाभिदधानैः उद्धूयमानधूलिपटलं, क्वचित् (१५७) एकान्त-प्रवृत्ताश्ववारचक्र-चर्व्यमाणागामि-गौड़विलुप्यमाण-सस्यसंरक्षणम्, (१५८) अपरैः आदिष्टपरिपालकपुरुषपरितुष्टैः

राजनि हर्षे, निहिताः,—न्यस्ताः, दृष्टयः,—नेत्राणि यैः तैः, राजपुरुषकदर्थनास्खलनाघातादीनि हर्षदर्शनार्थमविगणय्य चलनात् महाराजदर्शनकुतूहलस्य चरमोत्कर्षः सूच्यते।

(१५५) असतोऽपि—मिथ्याभूतानपीत्यर्थः, पूर्व्वेति।—पूर्व्वे—प्राग्वर्त्तिन इत्यर्थः, ये भोगपतयः,—अन्नाच्छादनाद्यधिकारिणः, तेषां दोषान्—निन्दा इति यावत्, उद्भावयद्भिः,—प्रकटयद्भिः। अतिक्रान्तेति।—अतिक्रान्तानां—पूर्व्ववर्त्तिनाम्, आयुक्तकानां—कर्म्मणि सम्यक् व्यापृतानां, शतानि—समूहान्, शंसद्भिः,—उद्दीपयद्भिः, गुणतो दोषतो वा इति भावः; यद्वा,—अतिक्रान्तानि—गतानि, आयुक्तकानाम्—अयुक्तव्यवहाराणां, शतानि—समूहान्, शंसद्भिः,—कथयद्भिः।

(१५६) चिरन्तनेति।—चिरन्तनाः,—अतिचिरस्थायिनः, ["सायं चिरम्—" (४।३।२३ पा०) इत्यादिना ट्युः तुडागमश्च] ये चाटाः,—धूर्त्ताः, तेषाम् अपराधाः,—दोषाः तान्, अभिदधानैः,—कथयद्भिः, उद्धूयमानेति।—उद्धूयमानानि—उत्क्षिप्यमाणानि, सवेगपदक्षेपणैनेति भावः, धूलीनां—पांशूनां, पटलानि—निचयाः यत्र तथाभूतम्।

(१५७) एकान्तेति।—एकान्तप्रवृत्तानाम्—अतिद्रुतचलितानाम्, अश्ववाराणाम्—अश्वारोहिणां, चक्रैः,—समूहैः, चर्व्यमाणानि—भक्ष्यमाणानि, आगामिषु—आगतप्रायेषु, सम्मुखावस्थितेष्वित्यर्थः, गौडेषु—गौडदेशेषु, विलुप्यमाणानि—छिद्यमाणानि, अनुसन्धानलभ्यानीति यावत्, शस्यानां—चणकादीनामिति यावत्, संरक्षणानि—सञ्चयाः, संरक्षितशस्यानि इति यावत् यस्य तथोक्तं, "छदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायादिति भावः; गौडे सङ्ग्रामकाले भक्षणार्थं जानपदैः सञ्चितानि शस्यानि अश्ववारैर्यत्र भक्षितानि इति तात्पर्य्यम्।

(१५८) अपरैः,—अन्यैः, पुरुषैरिति शेषः, आदिष्टेति।—आदिष्टाः,—एते परिपाल्या इति राज्ञा निर्दिष्टाः, परिपालकाः,—परिपालयन्ति—सम्यक् पोषयन्तीत्यर्थः इति तथाभूताः, ये पुरुषाः,—लोकाः, तेषु परितुष्टाः,—सन्तोषं गताः तैः,

"धर्मः प्रत्यक्षो देवः" इति स्तुतीः आतन्वद्भिः अपरैः (१५९) लूयमाननिष्पन्नशस्यप्रकटितविषादैः चैत्रप्रचा सकुटुम्बैरेव निर्गतैः (१६०) प्ररूढप्राणच्छेदैः परितापत्याजितभयैः "क्व राजा ? कुतो राजा ? कीदृशो वा राजा ?" इति प्रारब्धनरनाथनिन्दं, (१६१) शशकैश्च पदे पदे प्रजविप्रचण्डदण्डपाणिपेटकानुबद्धैः गिरिगुडकैः इव हन्यमानैः इतस्ततः सञ्चरद्भिः अपरैः युगपत् परापतित-

[ "परितुष्टैः" इत्यत्र "अपरितुष्टैः" इति पाठान्तरम्, एतत्पक्षे "धर्मः प्रत्यक्षो देवः" इति व्याजस्तुतिरवगन्तव्यम्, देव,—सम्राट् हर्ष, प्रत्यक्षो धर्म,—विग्रहवान् धर्म एव, भवतीति शेषः, न तस्य दोषलेशोऽपि दृश्यते, यतो दुर्गतानस्मान् सम्यक् पालयितुमादिदेश, अधिकृतास्तु परलदुर्जना, ते पुनः सर्वानेव सम्भारानात्मसात् कृत्वा आश्रितान् क्लेशयन्ति इति भाव ] स्तुती,—स्तवान्, प्रशंसावादानित्यर्थः, आतन्वद्भि,—कुर्वद्भि ।

( १५९ ) लूयमानेति।—लूयमाने,—छिद्यमानै, सैनिकसङ्घैरिति भाव, अत एव निष्पन्नै,—पर्णहीनीकृतै, शस्यै,—व्रीहियवगोधूमादिस्तम्बैरित्यर्थ, प्रकटित,—प्रकाशित, विषाद,—विषण्णता, कातरता इति यावत् ये येषा वा तथाभूतै, चैत्रप्रचा —चैत्राणा शस्यनाशजनितशोकेन इति यावत्, सकुटुम्बैरेव—सपरिवारैरेव।

(१६०) प्ररूढेति।—प्ररूढ,—सञ्जातप्राय, प्राणाना—जीवनाना, प्राणहेतुभूतशस्यानामिति यावत्; यद्वा—प्ररूढानाम्—अङ्कुरिताना, फलितानामिति यावत्, प्राणाना—जीवनधारणहेतुभूतशस्यानामिति यावत्, छेद,—कर्त्तन, नाश इत्यर्थ, येषा तथाभूतै, चैत्रशस्यनाश तेषा प्राणनाशतुल्यदु खदायक इति भाव । [ "प्ररूढप्राणच्छेदै" इत्यत्र "प्ररूढच्छेदै" इति पाठे,—प्ररूढ,—जात, छेद, अङ्गानामिव इति भावः येषा तथाभूतै ]। परितापेति।—परितापेन—शस्यनाशदु खेन, त्याजित—मोचित, भयं—त्रास, सैन्यादिभ्य इति भाव येषा तथाभूतै, निर्भयैरिति भाव.। कुत, —कस्मात्, कस्माद्देशादागतोऽयं राजा ? इति भाव । प्रारब्धेति।—प्रारब्धा —उपक्रान्ता, नरनाथस्य—राज्ञ, निन्दा—दोषकीर्त्तनं यत्र येन वा तथोक्तम्।

( १६१ ) "शशकै" इत्यस्य "आयुषो बलात् कृतकलकलम्" इत्यग्रेणान्वयः। शशकान् विशिनष्टि, प्रजवीति।—प्रजविन,—प्रकृष्टवेगशालिन, प्रचण्डा,—उग्रा, ये दण्डपाणय,—वेत्रधारिणः पुरुषाः, तेषा पेटकेन—कदम्बकेन, समूहेन इत्यर्थ, अनुबद्धा,—अनुसृताः तै। गिरिगुडकैः इव—पाषाणलोष्टैः इव, हन्यमानैः,—बाध्यमानैः। युगपत्—समकालं, परापतितैः,—समुपस्थितैः,

महाजनग्रस्तैः तिलशो विलुप्यमानैः (१६२) अनेक-जन्तुजङ्घाऽन्तरालनिःसरणकुशलिभिः (१६३) कुटिलिका-व्यंसितसादिबहुश्वभिः (१६४) पतल्लोष्टलगुड़कोणकुठारकील-कुद्दालखनित्रदात्रयष्टिभिरपि निःसरद्भिः आयुषो बलात् कृत-कलकलम्, अन्यत्र (१६५) सङ्घशो घासिकैः बुसधूलिधूस-

महाजनैः,—महत्तरैः लोकैः, ग्रस्ताः,—आक्रान्ताः तैः। तिलशः,—तिलं तिलं कृत्वा, विलुप्यमानैः,—चोर्यमाणैः, महाजनैर्गृह्यमाणत्वादिति भावः।

(१६२) अनेकेति।—अनेकेषां—बहूनां, जन्तूनां—प्राणिनां, जङ्घान्तरालेभ्यः,—जङ्घयोः,—प्रसृतयोः, जानु-गुल्फयोर्मध्यभागयोरित्यर्थः, ("जङ्घा तु प्रसृता" इत्यमरः) अन्तरालेभ्यः,—अभ्यन्तरेभ्यः, निःसरणे—निर्गमने, कुशलिनः,—निपुणाः, क्षुद्रदेहत्वा-दिति भावः तैः, [ कुशलशब्दस्यात विशेष्यत्वमेव वेदितव्यं, तस्य च विशेषणत्वे मत्वर्थीयस्य पिष्टपेषणवत् निरर्थकत्वमेवेति ज्ञेयम् ]।

(१६३) कुटिलिकेति।—कुटिलिकया—वक्रगमनेन, व्यंसिताः,—वञ्चिताः, सादिनाम्—अश्ववाराणां, बहवः,—अनेके, श्वानः,—कुकुराः, मृगयायां पशुताड़नार्थ-मानीता इति भावः यैः तथाभूतैः। एतेन मूर्खहत्याव्यवसायाः मतिमद्भिरल्पविग्रहै-रपि दुर्ज्ञेयगतिभिः प्राणिभिः मुधा क्रियन्ते इत्यवगम्यते।

(१६४) पतदिति।—पतन्तः,—वर्षन्तः इत्यर्थः, लोष्टानि—लेष्टवः, मृद्गुड़कानीत्यर्थः, ("लोष्टानि लेष्टवः पुंसि" इत्यमरः) लगुड़ाः,—दण्डानि, कोणाः,—वादनयष्टयः, ("कोणो वीणादिवादनम्" इत्यमर) कुठाराः,—परशवः, कीलाः,—शङ्कवः, कुद्दालाः,—"कोदाल" इति वङ्गभाषया प्रसिद्धाः भूमिदारणाख्यास्त्रविशेषाः, ("कुद्दालः स्यात् पुमान् भूमिदारणे युगपत्रके" इति मेदिनी) खनित्राणि—अवदारणानि, "खन्ता" इति प्रसिद्धानि खननसाधनानि अस्त्राणि इत्यर्थः, ("खनित्रमवदारणम्" इत्यमरः) [ "अर्त्तिलू—" (३।२।१८४ पा०) इत्यादिना इत्रः ] दात्राणि—"दा" इति प्रसिद्धानि लवित्राणि, ("दात्रं लवित्रम्" इत्यमरः) यष्टयः,—शस्त्रभेदाः, भुजदण्डा न वा येषु तथोक्ताः, ("यष्टिः पुंसि स्यात् भुजदण्डके। द्वयोर्हारलताभार्ग्योर्मधुका-शस्त्रभेदयोः॥" इति मेदिनी) आयुषः,—जीवनकालस्य, दीर्घपरमायुष इत्यर्थः, बलात्—प्रभावात्, निःसरद्भिः,—निर्गच्छद्भिः, तत्तदस्त्राघातलाभाभावादिति भावः, शशकैरिति पूर्वोक्तैः योजना, कृतकलकलं—कृतकोलाहलम्।

(१६५) सङ्घशः,—बहुशः, घासिकैः,—घासे नियुक्तैः, घाससङ्ग्राहिभिः

रितघासजालजालकितजघनैश्च (१६६) पुराणपर्य्याणैकदेश-दोलायमानदात्रैश्च शीर्णोर्णाशकलशिथिलमलिनमलकुथैश्च (१६७) प्रभुप्रसादीकृतपाटित-पटच्चरचलच्चोलकधारिभिश्च धावमानैः उद्धूयमानधूलिपटलं, क्वचित् (१६८) एकान्तप्रवृत्ताश्ववारचक्रचर्व्यमाणागामिगौड़विग्रहं, क्वचित्

घासवाहिभिर्वा इत्यर्थः, बुसेति।—बुसेन—कड़ङ्गरेण, पलालादिचूर्णेनेत्यर्थ, ("कड़ङ्गरो बुस क्लीवे" इत्यमर) तथा धूलिभि,—पांशुभि, धूसरितानाम्—आकीर्ण-त्वाद्दीघल्पाङ्कुराणां, घासानां—यवसानां, जालेन—समूहेन, जालकितानि—सञ्जातजालानि इव लक्ष्यमाणानि, जघनानि—नितम्बभागा इत्यर्थ येषां तैः।

(१६६) पुराणेति।—पुराणस्य—पुरातनस्य, पर्य्याणस्य—पल्ययनस्य, एक-देशे—एकस्मिन्नंशे, पश्चाद्देशे इति यावत्, दोलायमानानि—लम्बमानानि, दात्राणि—घासच्छेदनास्त्रविशेषा येषां ते। शीर्णेति।—शीर्णानि—चीर्णानि, जीर्णानि इति यावत्, ऊर्णानां—मेषादिलोम्नाम् ("ऊर्णा मेषादिलोम्नि" इत्यमर) शकलानि—खण्डानि, तैः शिथिला,—दुर्बला इत्यर्थ, सूत्रविरला इति भाव, मलिना,—मलदिग्धा, मलकुथा,—(कृष्णास्तरणानि, कृष्णवर्णकम्बलाः इत्यर्थ येषां तैः, ("प्रवेण्यास्तरणं वर्ण परिस्तोम' कुथी द्वयो" इत्यमर)। कश्चित् "मलकुथा—मलपट्टी, छविरित्यर्थ" इति व्याख्यातवान्।

(१६७) प्रभ्विति।—प्रभुणा—स्वामिना, प्रसादीकृत—कृपया दत्त, पश्चात् पाटित—छिन्न यत् पटच्चर—जीर्णवस्त्र, ("पटच्चर जीर्णवस्त्रम्" इत्यमर) तस्मात् चलत्—भ्रश्यत्, यत् चोलक—वस्त्रखण्ड, तत् धारयन्ति—वहन्ति, अङ्गे इति भावः ये तथोक्तैः। धावमानै,—द्रुत गच्छद्भि, घासिकैरिति पूर्वोक्तेनान्वय, उद्धूयमानेति।—उद्धूयमानानि—उत्क्षिप्यमाणानि द्रुतपदक्षेपवेगादिति भाव, धूलिपटलानि—पांशु-समूहा, मार्गगतानीति भाव यत्र तथोक्तम्।

(१६८) एकान्तेति।—एकान्तप्रवृत्तै,—एकस्मिन्नंशे अवस्थितैरित्यर्थ, अश्ववार-चक्रै,—सादिसमूहै, चर्व्यमाण,—भक्ष्यमाण, पुन पुन आलोच्यमान इति यावत्, आगामी—अचिरभावी, गौड़विग्रह,—गौड़राजेन सह युद्ध, युद्धेषु शुभाशुभमित्यर्थ, आगामिनि गौड़युद्धे क पराजेष्यते इत्येवंरूप इति यावत् यत्र तथोक्तम्, यद्वा,—आयामिन,—युद्धार्थं तूर्णमागमि-ष्यत, कृतयुद्धोद्यमस्येति भाव', गौड़स्य—गौड़ाधिपस्य, विग्रह,—शरीर यत्र तथोक्तम्।

(१६९) पङ्किलप्रदेशपूरणादेशाकुलसकललोकलूयमानतृणपूलकं, क्वचित् (१७०) तलवर्त्तिवेत्रिवेत्रवित्रास्यमानशाखिशिखरगत-विक्रोशद्विवादिब्राह्मणं, क्वचित् ( १७१ ) कुलण्डकपाशविवेष्ट्य-मानग्रामीणग्रासाकृष्टकौलेयकं, क्वचित् (१७२) अन्योऽन्यविभव-स्पर्द्धोद्धुरराजपुत्रवाह्यमानवाजिसङ्घट्टमण्डितम्, अनेकवृत्तान्त-

( १६९ ) पङ्किलेति ।—पङ्किलस्य—कर्दमवत, प्रदेशस्य—भूभागस्य, पूरणादेशेन—भरणाज्ञया, कर्दमवति प्रदेशे गतागतिषु बलाना क्लेशाधिक्यापनोदनाय निम्नीभूततत्स्थानस्य तृणादिभि समाच्छादनाज्ञया इत्यर्थ, आकु —व्यस्तै, आदेशपालनाय व्यापृते इत्यर्थ, सकलै,—सर्वै, लोकै,—जनै, मार्गकर्म्मणि अधिकृतैरिति यावत्, लूयमानानि—छिद्यमानानि, तृणानाम्—अर्ज्जुनान नल-घासादिविविधजातीयानामिति भाव, ("तृणमर्जुनम्" इत्यमर ) पूलकानि—समूहा, पङ्कोपरि प्रदानार्थमिति भाव यत्र तथोक्तम् ।

( १७० ) तलवर्त्तीति ।—तलवर्त्तिभि,—अध स्थितै इत्यर्थ, वृक्षाणामिति भाव, वेत्रिभि,—दण्डिभि, वेत्रेण—दण्डेन, वित्रास्यमाना,—भीति प्रदर्श्यमाना इत्यर्थ, अत एव शाखिना—वृक्षाणा, शिखरम्—अग्र, गता,—आरूढा, सैन्यसमागम-दर्शनेन भयवशादिति भाव, विक्रोशन्त,—क्रन्दायमाना, शपन्त इत्यर्थ, विवादिन,—विरुद्धभाषिण, गालि ददाना इत्यर्थ, राजसमीपे व्यवहारार्थिन इत्यर्थो वा, ब्राह्मणा, —विप्रा यत्र तथोक्तम् ।

( १७१ ) कुलण्डकेति ।—कुलण्डकपाश,—कुकुरवन्धनशृङ्खल, [ "कुलण्डक—" इत्यत्र "कुलण्ठक –" इति पाठे,—कुलण्ठकेषु—कुकुरवन्धनाय लगुडेषु, ये पाशा, —रज्जव ते ] तेन विवेष्ट्यमाना,—बध्यमाना, ग्रामीणाना—ग्राम्यजनाना, ग्रासेन—अन्नस्य कवलेन, "कुकुटाण्डप्रमाण वा यावद्वा प्रविशेन्मुखम् । एत ग्रास विजानीयात्" इत्युक्तलक्षणमुखपूरणयोग्यान्नेन इत्यर्थ , [ "ग्रास—" इत्यत्र "गास—" इति पाठे, —गासै,—समूहैरित्यर्थ ] आकृष्टा,—शब्दविशेषेण आहूता इत्यर्थ, कौलेयका,—सारमेया, कुकुरा इत्यर्थ यस्य तथाभूतम् ।

( १७२ ) अन्योऽन्येति ।—अन्योऽन्यस्य—परस्परस्य, विभव,—सम्पत्, तत्र तेन वा स्पर्द्धा—अहङ्कार, तया उद्धुरै,—उद्धतै, राजपुत्रै,—नृपकुमारै, वाह्यमानाना—चाल्यमानाना, प्रतिस्पर्द्धितया इति भाव, वाजिनाम्—अश्वाना, सङ्घट्टेन—सङ्घर्षेण, मण्डितम्—अलङ्कृतम् ; क अग्रे गन्तु शक्नोति इति स्पर्द्धा कृत्वा पणपूर्वकं

तया कौतुकजननं, प्रलयजलधिम् इव (१७३) जगद्ग्रास-ग्रहणाय प्रवृत्तं, पातालमिव महाभोगिनां गुप्तये समुत्पादितं, कैलासमिव परमेश्वरवसतये सृष्टं, (१७४) दृश्यमानसकल-प्राणिपर्य्यायं चतुर्युगसर्गकोशमिव प्रजापतीनां, क्लेशबहुलमपि तपःकरणमिव क्रमकारणं कल्याणानाम्, एवञ्च वीक्षमाणः कटकं जगाम।

(१७५) आसन्नवर्त्तिनाञ्च तत्रभवतां,—"साम्प्रता प्रवर्त्तिताः

---

चाल्यमानाम्वशोभितमिति भावः, अनेकवृत्तान्ततया—बहुव्यापारतया, उक्तरूपेण इति भाव., कौतुकजनन—चमत्कारावहम्।

(१७३) प्रलयजलधिमिव—कल्पान्तकालिकसमुच्छ्वसितसमुद्रमिव, जगदिति।—जगदेव—भुवनमेव, ग्रास,—कवलः, तस्य ग्रहणाय—स्वीकरणाय, प्लावनाय इत्यर्थश्च, सर्व्वजगदात्माधीनीकरणाय सर्व्वजगन्मज्जनाय च इति यावत्। महाभोगिनां—महान्तः,—उद्दामा इत्यर्थः, भोगिनः,—सुखभोगरता: लोकाः, सर्पाश्च तेषा, गुप्तये—रक्षणाय, समुत्पादित—सविहितं, हर्पेणेति शेष., दुर्वृत्तानामत्याचारात् लोकान् त्रात सङ्घटितमिति समुदितार्थः। परमेश्वरवसतये—परमेश्वर.,—हर्पः, हरश्च, तस्य वसतये—स्थितये।

(१७४) प्रजापतीना—ब्रह्मादीना, चतुर्युगेति।—चतुर्णां—चतु सङ्ख्यकानां, युगानां—कृतादीना, समाहृतानामिति भाव., सर्गकोशमिव—सृष्टिस्थानमिव, दृश्यमा ेति।—दृश्यमानाः,—ईक्ष्यमाणाः, सकलाना—सर्वेषा, प्राणिना—जीवाना, पर्य्याय.,—क्रमा', प्रकारभेदा इत्यर्थः, यद्वा,—पर्य्यायः,—परि—समन्तात्, आयः,—आगमनं यत्र तथोक्त, सर्व्वप्राणिसमाकीर्णमिति यावत्। तप.करणमिव—तपश्चरण-मिव, सिद्धिलाभजनकत्वादिति भाव.। क्रमकारणं—क्रमेण श्रेयसा साधन, दुर्जनोप-द्रवनिवारणेनेति भाव.। [ "क्रमकारणम्" इत्यत्र "क्रमकारिणम्" इति पाठे,—क्रमः,—कल्पः. अङ्गभूतो विधिरित्यर्थ., यद्वा,—क्रम.,—अनुक्रमः, उपक्रमः इत्यर्थः, ( "क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च" इति मेदिनी ) तस्य कारी तम्।

(१७५) "आसन्नवर्त्तिनाम्" इत्यस्य "इत्येवम्प्रायान्······आलापान् पार्थिव-कुमाराणाम् वाचशालिना शृण्वन् एव आससाद आवासम्" इत्युत्तरेण सम्बन्ध.।

धन्यानो दिग्विजयाय। (१७६) अप्रतिहतरथरंहसा प्रभुणा लघुना एव कालेन अकारि ककुभां प्रसादनम्। शरासनद्वितीयः करदीचकार चक्रं क्रमागतभुजबलाभिजनधन-मदावलिप्तानां भूभुजां पाण्डुः। (१७७) पाण्डवः सव्यसाची चीनविषयम् अतिक्रम्य राजसूयसम्पदे (१७८) क्रुध्य-द्गन्धर्व्वधनुष्कोटिटाङ्कारकूजितकुञ्जं हेमकूटपर्व्वतं पराजिष्ट।

---

आसन्नेति।—आसन्नवर्त्तिनाम्—अन्तिकचराणां, तत्रभवतां—मान्यानां, पार्थिवकुमाराः आमित्यनेनान्वयः। आलापप्रकारमाह, मान्धात्रेति।—मान्धात्रा—युवनाश्वसुतेन सूर्य-वंशीयेन राज्ञा, दिग्विजयाय—सर्वदिगवस्थितानां राज्ञां पराभवायेत्यर्थः, पन्थानः,—सरणयः, दृष्टान्ताः इति यावत्, प्रवर्त्तिताः,—प्रदर्शिता इत्यर्थः।

(१७६) अप्रतिहतरथरंहसा—अप्रतिरुद्धस्यन्दनवेगेन। लघुनैव—अल्पेनैव, कालेन—समयेन, [ "प्रकृत्यादिभ्य उपसङ्ख्यानम्" (वा०) इति तृतीया ] ककुभां—दिशां, प्रसादनं—दुष्टराजशासनजनितकलङ्कापनोदनेन प्रसन्नताविधानमित्यर्थः, वशी-करणम् इति यावत्। शरासनद्वितीयः,—धनुर्मात्रसहायः, अन्यसाहाय्यानपेक्ष इति भावः, पाण्डुः,—युधिष्ठिरादीनां जनकः, क्रमागतेति।—क्रमागतस्य—पितृपितामहा-दिभ्यः प्राप्तस्य, भुजबलस्य—बाहुवीर्य्यस्य, अभिजनस्य—वंशमर्य्यादायाः, धनानाम्—सर्वेषाञ्च, मदेन—गर्वेण, अवलिप्ताः,—उद्धताः तेषां, भूभुजां—राज्ञां, चक्रं—मण्डलं, करदीचकार—शासनाधीनं विदधे।

(१७७) सव्यसाची—सव्येन—वामेन, वामहस्तेनापीति यावत्, सचति—प्रर्पति, बाणान् निक्षिपति इत्यर्थः यः सः, पाण्डवः,—अर्जुनः इत्यर्थः, राजसूयसम्पदे—तदाख्ययज्ञमहासम्पत्तिनिमित्तं, राजसूययज्ञसम्पादनोचितधनार्थमित्यर्थः, [ राज्ञा सूयते असौ राजसूयः क्रतुः इत्यर्थे "राजसूयसूर्य्य—" (३।१।११४ पा०) इति सूत्रेण क्यबन्तो निपात्यते ] चीनविषयं—चीनराज्यम्, अतिक्रम्य—निर्जित्येत्यर्थः।

(१७८) क्रुध्यदिति।—क्रुध्यतां—कुप्यतां, गन्धर्वाणां—देवयोनिविशेषाणां, धनुष्कोटिः,—कार्मुकाटनैः, टाङ्कारेण—ज्यानिस्वनेन, कूजिताः,—शब्दिताः, कुञ्जाः,—निकुञ्जाः, लतादिपिहितस्थानानीत्यर्थः यस्य तथोक्तं, ("निकुञ्ज-कुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः) हेमकूटपर्वतं—सुमेरुपर्वताधिवासिनं गन्धर्वसमूहमिति यावत्, पराजिष्ट—जिगाय, जयतेर्लुङि रूपं, [ "विपराभ्यां जेः" (१।३।१९ पा०) इति आत्मनेपदम् ]।

(१७९) सङ्कल्पान्तरितो विजयः तरस्विनाम्। (१८०) सहिम-हिमवद्व्यवहितोऽप्युवाह बाहुबलव्यतिकरकातरः करं कौरवेश्वरस्य किङ्कर इव अक्षती द्रुमः। (१८१) नातिजिगीषवः खलु पूर्वे येन अल्प एव भूभागे भूयांसो भगदत्त-दन्तवक्र-क्राथ-कर्ण-कौरव-शिशुपाल-साल्व-जरासन्ध-सिन्धुराजप्रभृतयोऽभवन् भूपतयः। (१८२) सन्तुष्टो राजा युधिष्ठिरः, यो हि असंहत समीप एव धनञ्जयजयजनितजगत्कम्पः किम्पुरुषाणां

---

(१७९) तरस्विनां—वीर्य्यशालिनां, विजयः,—शत्रुपराभव इति यावत्, सङ्कल्पान्तरितः,—मननमात्रव्यवहितः, सङ्कल्पमात्रसाध्य इत्यर्थः, सङ्कल्पमात्रव्यवहितो हि विजयः तेजस्विनामिति फलितार्थः। विजिगीषुणा विजये सङ्कल्पादन्यत् किमपि प्रतिबन्धमुत्पादयितुं न शक्नोति, सङ्कल्पात् परमेव ते कार्य्यं सम्पादयन्तीति भावः।

(१८०) सहिमेति।—सहिमेन—तुषाराकीर्णेन, हिमवता—हिमाद्रिणा, व्यवहितः,—अन्तरितः, दुर्जयोऽपि इति भावः, बाहुबलव्यतिकरकातरः—भुजवीर्य्य-सम्बन्धरहित इति यावत्, अक्षती—अधमः, दुर्बल इत्यर्थः, द्रुमः,—तदाख्यः किन्नरनर-पतिः, कौरवेश्वरस्य—दुर्य्योधनस्य, कर—राजग्राह्यभागम्, उवाह—वहति स्म, दुर्गमप्रदेशस्थमपि द्रुम तेजस्वी दुर्य्योधनः सङ्कल्पमात्रेणैव करदं चकारेति समुदितार्थः।

(१८१) पूर्वे—पुरातना राजानः, नातिजिगीषवः,—नातिविजयाकाङ्क्षिण इत्यर्थः आसन्निति शेषः; येन—येन हेतुना, नातिजिगीषुतयेत्यर्थ, अल्पे एव भूभागे—अदूरवर्त्तिप्रदेशमध्ये, अल्पीयसि भूमिभागे इत्यर्थः, भूयासः,—अतिबहवः, भगदत्तः,—प्राग्ज्योतिषाधिपतिः दुर्य्योधनश्वशुरः, दन्तवक्रः,—कृष्णद्वेषिनृपविशेषः, क्राथः,—नृपविशेषः, कर्णः,—अङ्गाधिपः दुर्य्योधनसुहृत्, कौरवः,—दुर्य्योधनः, शिशुपालः,—चेदिराजः कृष्णद्वेषी, साल्वः,—सौभाधिपतिः, जरासन्धः,—मगधाधिपतिः, सिन्धुराजः,—जयद्रथः, तत्प्रभृतयः,—तदादयः,, एतेषां जिगीषुत्वे च अल्पीयसि भूभागे एकस्यैव भूपतित्वं न्याय्यमिति फलितार्थः।

(१८२) युधिष्ठिरः,—राज्ञः पाण्डोः ज्येष्ठसुतः, [ युधि स्थिरः इति अलुक्समासे "गवि-युधिभ्यां स्थिरः" (८।३।९५ पा०) इति सस्य षत्वम् ] सन्तुष्टः,—अल्पेनैव मुदित इत्यर्थः, अजिगीषुरपि वीतस्पृहतया कारुण्यपूर्णतया वा हिंसाबहुले दण्डविधौ अलस

राज्यम्। अलसः चण्डकोपो यो न प्राविचत् द्याम् जित्वा स्त्रीराज्यम्। (१८३) कनीय एवान्तरं तुषारगिरि-गन्धमादनयोः उत्साहिनः। किष्कुः तुरुष्कविषयः; (१८४) प्रादेशः पारसीकदेशः, शशपदं शकस्थानम्; अदृश्यमानप्रतिप्रहारे

---

इति भावः, धनञ्जयेति।—धनञ्जयस्य—अर्ज्जुनस्य, जयेन—राज्ञां पराभवेण, जनितः, —उत्पादितः, जगतां—जगद्वासिनामित्यर्थः, कम्पः,—वेपथुः, त्रासजनित इति भावः येन तादृशः, यः,—युधिष्ठिरः, यस्य हि राज्ञः एवं जगद्दीपकवीर्य्यः सहोदर आसीदिति भावः, समीपे—सन्निधौ एव, स्वराज्यस्य इति भावः, स्थितमिति शेषः, किम्पुरुषाणां—किन्नराणां, राज्यं—देशम्, असहत—सोढवान्, समर्थोऽपि युधिष्ठिरः किन्नरराज्य न आत्माधीनं चकार इति समुदितार्थः। चण्डकोपः,—तदाख्यो नृपतिः। यः,—चण्डकोपः, स्त्रीराज्य जित्वा—स्त्रीवशीभूतो भूत्वा इत्यर्थः, द्यां—पृथ्वीं, न प्राविचत् —प्रविष्टवान्, [ विशतेः लुङि रूपम् ] समर्थोऽपि स्त्रैणत्वात् दिग्विजयं न चकारेति निष्कर्षः, यद्वा,—स्त्रीराज्यं—स्त्रीजनशासितं राज्यं, सर्वां भूमिं विजित्यापि अलसतया चण्डकोपः पतिः स्त्रीभूयिष्ठं राज्यं न जिगायेति भावः। स्त्रीराज्यकथाऽपि दृश्यते भारते अश्वमेधपर्व्वणि, तद्विवरणन्तु तत्र दृश्यम्।

(१८३) तुषारगिरिः,—हिमाद्रिः, उत्साहिनः,—उत्साहशालिनः, जनस्येति शेषः, उत्तरापथस्थित इति यावत्, गन्धमादनः,—दक्षिणापथस्थितः स्वनामप्रसिद्धः पर्वतविशेषः तयोः, कनीयः,—अल्पतरम्, अन्तरं—व्यवधानम्, उभयदिगन्तावस्थयोरपि एतयोर्व्यवधानम् उत्साहिभिरत्यल्पमेव मन्यते इति भावः। तुरुष्कविषयः,—तुरुष्कजनपदः, किष्कुः,—हस्तो वितस्तिः वा, तत्परिमित अल्पपरिसरः इति भावः, ("किष्कुर्हस्ते वितस्तौ च" इत्यमरः) सुदूरं तुरुष्कदेशमपि उत्साहसम्पन्नाः किष्कुपरिमाणव्यवहितमिव मन्यन्ते, जयैषिणां योजनशतमपि न दूरमिति भावः।

(१८४) प्रादेशः,—प्रादेशव्यवहित इत्यर्थः, विस्तृतयोः प्रदेशिन्यङ्गुष्ठयोः अन्तरपरिमाणसम्मित इति यावत्, अतिक्षुद्र इति भावः, उत्साहिनः इति पूर्वेणान्वयः। ("प्रादेशतालगोकर्णास्तर्जन्यादियुते तते। अङ्गुष्ठे—" इत्यमरः)। शकस्थानं—शकदेशः, शशपदं—शशस्य—क्षुद्रमृगभेदस्य,पदं—पदपरिमितम्। अदृश्यमानेति।—न दृश्यमानः, —न ईक्ष्यमाणः, प्रतिप्रहारः,—प्रतिद्वन्द्विविक्रमः यत्र तादृशे, निर्वीर्य्ये इति भावः।

पारियात्रे यात्रैव शिथिला; (१८५) शौर्य्यशुल्कः सुलभो दक्षिणापथः; (१८६) दक्षिणार्णवकल्लोलानिलचलित-चन्दनलतासौरभसुन्दरीकृतदरीमन्दिरात् दर्दुरात् अद्रेः नेदीयसि मलयः; मलयलग्न एव च महेन्द्रः" इत्येवम्प्रायान् उद्योगद्योतकानाम् आलापान् पार्थिवकुमाराणां बाहुशालिनां शृण्वन् एव आससाद आवासम्। (१८७) मन्दिरद्वारि च उभयतः सबहुमानं भ्रूलताभ्यां विसर्जितराजलोकः प्रविश्य च अवततार, बाह्यास्थानमण्डपस्थापितम् आसनम् आचक्राम; अपास्तसमायोगश्च क्षणमासिष्ट।

---

पारियात्रे—तदाख्ये देशे पर्वते वा, यात्रा—युद्धार्थगमनं, शिथिला—निरर्थकेति भावः, निर्वीर्य्याणां तेषां युद्धेति नास्ति श्रवणमात्रेणैव पलायनपरत्वादिति तात्पर्य्यम्।

(१८५) दक्षिणापथः,—दाक्षिणात्यः, कलिङ्गादिप्रदेश इत्यर्थः, अत एव शौर्य्यशुल्कः,—शौर्य्यं—वीर्य्यमेव, शुल्कः,—पणः यस्य तथाभूतः, विक्रमलभ्य इति भावः, सुलभः,—सुप्रापः, गमनमात्रेणैव स जेयास इति भावः।

(१८६) दक्षिणेति।—दक्षिणार्णवस्य—दक्षिणसमुद्रस्य, कल्लोलानिलेन—तरङ्गवायुना, चलितानां—कम्पितानां, चन्दनलतानां—श्रीखण्डवल्लीनां, सौरभेण—गन्धेन, सुन्दरीकृत—मनोज्ञीकृतं, दरी—गुहा एव, मन्दिरं—गृहं यस्य तथाभूतात्, दर्दुरात्—तदाख्यात्, अद्रेः,—पर्वतात्, नेदीयसि—अतिनिकटे, [ अतिशयेन अन्तिके इत्यर्थे ईयसुनि, अन्तिकस्य "अन्तिकबाढयोर्नेदसाधौ" ( ५।३।६३ पा० ) इति नेदादेशः ] मलयः,—तदाख्यपर्वतः। महेन्द्रः,—तदाख्यपर्वतः, अत एव तावपि सुलभौ इति भावः। उद्योगद्योतकानाम्—उत्साहवर्द्धकानां, बाहुशालिनां—भुजवीर्य्यवतां, पार्थिव-कुमाराणां—सामन्तराजपुत्राणाम्। आवासं—निवासस्थानम्, आससाद—प्राप।

(१८७) मन्दिरेति।—मन्दिरस्य—गृहस्य, द्वारि—द्वारदेशे, उभयतः, आत्मानमिति शेषः, स्वस्य उभयपार्श्वयोः निपातिताभ्याम् इत्यर्थः, भ्रूलताभ्यां—भ्रूसङ्केतेन इति भावः, सबहुमानं—ससमादरम्। प्रविश्य, मन्दिरमिति शेषः, अवततार—अवतीर्णवान्, वाहनादिति शेषः। बाह्येति।—बाह्यं—बहिर्देशस्थम्, आस्थानमण्डप—सभागृह, तत्र स्थापितं—निहितम्। आचक्राम

अथ तत्र (१८८) प्रतीहारः पृथ्वीपृष्ठप्रतिष्ठापितपाणि-पल्लवो विज्ञापितवान्,—"देव! (१८९) प्राग्ज्योतिषेश्वरेण प्रहितो हंसवेगनामा दूतोऽन्तरङ्गः तोरणमध्यास्ते" इति। राजा तु "तमाशु प्रवेशय" इति सादरम् आदिदेश। अथ (१९०) दक्षतया क्षितिपालादराच्च प्रतीहारः स्वयमेव निरगात्। अनन्तरञ्च हंसवेगः सविनयम् (१९१) आकृत्यैव नयनानन्दसम्पादनसुभगाभोगभद्रया (१९२) समुल्लङ्घ्यमान-गुणगरिमा, प्रभूतप्राभृतभृतां पुरुषाणां समूहेन महता अनु-

—अधितष्ठौ। अपास्तसमायोग,—त्यक्तसन्नाहः; यद्वा,—अपास्तः,—अपगतः, समायोगः,—सम्बन्धः, प्रयोजनं वा यस्य तथाभूतः, कार्य्यान्तरसम्बन्धरहितः, निश्चिन्तो भूत्वेत्यर्थः। आसिष्ट—उपाविशत्, [ आस्ते इत्यादादिकस्य लुङि रूपम् ]।

(१८८) प्रतीहारः,—दौवारिकः, पृथ्वीति।—पृथ्वीपृष्ठे—भूतले, प्रतिष्ठापित,—निहितः, पाणिपल्लवः,—करकिशलयः, अभिवादनार्थमिति भावः येन तथाभूतः, भूमौ करौ संस्थाप्य साष्टाङ्गं प्रणिपत्येति यावत्।

(१८९) प्राग्ज्योतिषेश्वरेण—कामरूपाधिपतिना। [ "प्राग्ज्योतिषेश्वरेण प्रहितः" इत्यत्र "प्राग्ज्योतिषेश्वरेण कुमारेण प्रहितः" इति पाठे,—कुमारेण—तदाख्येनेत्यर्थः ]। अन्तरङ्गः,—स्वजनः, प्राग्ज्योतिषाधिपतेरेवेति भावः। तोरण—बहिर्द्वारम्, [ "अधिशीङ्स्थासां कर्म" (१।४।४६ पा०) इति आधारस्य तोरणस्य कर्मत्वं ज्ञेयम् ] अध्यास्ते—अधितिष्ठति। तं—हंसवेगम्।

(१९०) दक्षतया—निपुणतया, क्षितिपालादरात्—क्षितिपाले—राजनि हर्षे, आदरात्—बहुमानात्, स्वयमेव ˆ गात्—निरगच्छत्, न त्वन्य कञ्चित् प्रेषयामास, राजादेशस्यावश्यपालनीयत्वधिया इति भावः, [ "इण् गतौ" इत्यादादिकस्य एतेः लुङि रूपम्, "इणो गा लुङि" (२।४।४५ पा०) इति गाऽऽदेशः ]।

(१९१) नयनेति।—नयनानन्दः,—चक्षुःप्रीतिः, तस्य सम्पादने—सङ्घटने, सुभगः,—अनुकूलः, यः आभोगः,—विस्तारः, शरीरस्य परिपूर्णता इति यावत्, तेन भद्रा—मनोहारिणी तया, आकृत्यैव—अवयवेनैव, सौम्यमूर्त्त्येति सङ्क्षेपः।

(१९२) समुल्लङ्घ्यमानेति।—समुल्लङ्घ्यमानः,—निर्जीयमानः, गुणाना—शौर्य्यनम्रतादीनां, गरिमा—गौरवम्, अन्येषां गुणिनामिति भावः येन तथाभूतः, लोकातिशायिसौन्दर्य्येणैव अतीव गुणवत्तया प्रतीयमान

गम्यमानः प्रविवेश राजमन्दिरम्। (१९३) आरादेव पञ्चाङ्गालिङ्गिताङ्गनः प्रणाममकरोत्। "एह्येहि" इति (१९४) सबहुमानमाहूतश्च प्रधावितोऽपसृतः पादपीठलुठितललाटलेखो न्यस्तहस्तः पृष्ठे पार्थिवेन उपसृत्य भूयो नमश्चक्रे। स्निग्धनरेन्द्रदृष्ट्या निर्दिष्टम् अविप्रकृष्टं स प्रदेशमध्यास्त। ततो राजा (१९५) तिरश्चीं तनुम् ईषत् इव दधानश्चामरग्राहिणीम्

इति भावः, यद्वा,—समुल्लसत्—प्रकाशमानः,—प्राप्यमाणः इत्यर्थः, प्रकाश्यमान इति यावत्, गुणगरिमा यस्य तथाभूतः, राजदूतस्य हंसवेगस्य निसर्गसौम्यमूर्त्त्या असौ सर्व्वगुणवतामग्रेसर एव भवतीति प्रतीयते इति समुदितार्थः। प्रभूतप्राभृतभृता—प्रभूतं—विविधं, प्राभृतम्—उपायनद्रव्यं, ("प्राभृतन्तु प्रदेशनम्। उपायनमुपग्राह्यमुपहारस्तथोपदा॥" इत्यमरः) बिभ्रति—धारयन्ति ये तथाविधाना, बहुलोपढौकनं धृतवताम् इत्यर्थः।

(१९३) आरादेव—दूरादेव, ("आराद्दूरसमीपयोः" इत्यमरः) पञ्चाङ्गेति।—पञ्चभिः,—पञ्चसङ्ख्यकैः, अङ्गैः,—शिरश्चर दिभिः, आलिङ्गित—स्पृष्टम्, अङ्गन—चत्वरं येन तथाभूतः; "जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया। शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः॥" इति वचनात् यद्यपि प्रणामस्य अष्टाङ्गत्व दृश्यते, तथाऽप्यत्र भूमिसंस्पर्शविधौ योग्यानामेवावयवानामत्यावश्यकतया प्राधान्यात् प्रणामस्याङ्गपञ्चकसाध्यत्वमुक्तमित्यदोष इत्यवधेयम्।

(१९४) सबहुमिति।—सबहुमानं—सादरम्, आहूतः,—आकारितः, राज्ञा इति शेषः, प्रधावितः,—किञ्चित् पुरोगतः इत्यर्थः, आह्वानश्रवणे एवेति भाव, अपसृतः,—अनन्तर किञ्चित् पश्चाद्गतः इत्यर्थः, भूयः,—पुनश्च, उपसृत्य, राजानम् इति शेषः, राज्ञः समीप गत्वा इत्यर्थ, पादेति।—पादपीठे—चरणासने, हर्षस्य इति शेष, लुठिता—स्पृष्टा, निहिता इत्यर्थः, ललाटलेखा—भालरेखा येन तथाभूतः, तथा पार्थिवेन—हर्षेण, पृष्ठे—पृष्ठदेशे, न्यस्तहस्तः,—स्थापितपाणिः, अर्पितकरः सन् इत्यर्थः, नमश्चक्रे—प्रणाममकरोत्, एवंविधप्रणामस्तु तत्कालप्रचलिताचारवशादनुष्ठित इति ज्ञातव्यम्। स्निग्धेति।—स्निग्धया—प्रीतिपूर्णया, नरेन्द्रस्य—राज्ञः, दृष्ट्या—वीक्षणेन, निर्दिष्ट—प्रदर्शितम्, अविप्रकृष्टं—सन्निकृष्टम्।

(१९५) तनु—स्वदेहमिति यावत्, ईषत्—किञ्चित्, तिरश्चीं—तिर्य्यक्चारिणीम्, एकस्मिन् पार्श्वे किञ्चिदावर्जितामिति यावत्, दधानः,—कुर्व्वन् इत्यर्थः।

अन्तरालवर्त्तिनीं समुत्साद्य सम्मुखीनस्तं सप्रश्रयं पप्रच्छ,—"हंसवेग! श्रीमान् कच्चित् कुशली कुमारः?" इति। स तमन्ववादीत्,—"अद्य कुशली, येन एवं स्नेहस्नपितया सौहार्द्द-द्रवार्द्रया सगौरवं गिरा पृच्छति देवः" इति।

स्थित्वा च मुहूर्त्तमिव पुनः (१९६) स चतुरमुवाच,—"चतुरम्भोधिभोगभूतिभाजनभूत देवस्य सद्भावगर्भम् अपहाय हृदयमेकम् अन्यत् अनुरूपं प्राभृतमेव दुर्लभं लोके; तथाऽप्यस्मत्स्वामिना सन्देशम् अशून्यतां नयता

---

अन्तरालवर्त्तिनी—मध्यस्थितामित्यर्थः। समुत्साद्य—अपसार्य, सम्मुखीनः,—अभिमुखः सन्नित्यर्थः, दूतस्येति भावः, सप्रश्रयं—सप्रणयं, प्रीतिप्रदर्शनपुरःसरमित्यर्थः, [क्रिया-विशेषणमेतत्। "प्रश्रय-प्रणयौ समौ" इत्यमरः], यद्वा,—सप्रश्रय—प्रश्रयेण सह वर्त्तमानं, सविनयमित्यर्थः, विनीतमिति यावत्, "तम्" इत्यस्य विशेषणम्। कच्चित् इति प्रश्नसूचकमव्ययं, ("कच्चित् कामप्रवेदने। प्रश्ने हर्षे मङ्गले च" इति मेदिनी)। स्नेहस्नपितया—प्रीतिसिक्तया, [स्नातेः णिचि निष्ठायां रूपम्]। सौहार्द्देति।—सौहार्द्दं—सुहृदो भावः, मित्रता इत्यर्थः, तदेव द्रवः,—रसः, जलमिति यावत्, तेन आर्द्रया—सिक्तया, अतिमञ्जुलसूचिकयेति भावः, तत्रभवतः स्नेहगर्भसौहार्दसम्भाषणेन इदानीमेव सौभाग्यवान् सञ्जातः, न तु प्राक्; एवंविधस्निग्धप्रणयसम्भाषणं हि शुभादृष्टफलमित्यत्र नास्ति सन्देहलेश इति तात्पर्य्यम्।

(१९६) सः,—हंसवेगः, चतुरं—निपुणं, दूतोचितदक्षतासहकृतं यथा तथेत्यर्थः, क्रियाविशेषणमेतत्। सद्भावगर्भं—सदाशयपूर्णम्, एकं—केवलं, हृदयम् अपहाय इत्यन्वयः, अन्यत्—अपरं, चतुरम्भोधीति।—चतुर्णां—चतुःसङ्ख्यकानाम्, अम्भोधीनां—समुद्राणां, भोगभूतिः,—भोगैश्वर्य्यं, तस्याः भाजनभूतस्य—पात्रस्वरूपस्य, देवस्य—राज्ञो भवत इत्यर्थः, अनुरूपं—योग्यं, प्राभृतम्—उपढौकनम्, अस्माकं प्रभोः साधुभावपूर्णात् हृदयात् विना अन्यत् भवते प्रदेयमुपायनं किमपि नास्तीति भावः। अस्मत्स्वामिना—अस्माकं प्रभुणा, कामरूपेश्वरेणेति यावत्, सन्देशं—वाचिकार्थकथनं, दूत्यमिति यावत्, दूतस्य सन्देशहरत्वादिति भावः, अशून्यतां नयता—पूर्णतां प्रापयता, समुचितोपहारप्रदानेन सन्देशं सफलं कुर्वता इत्यर्थः, उपायनमन्तरेण सन्देशप्रेषणस्याव-ज्ञाजनकत्वसम्भावनया समाजे रिक्तहस्तेन दर्शनस्य अनौचित्यादिति भावः।

(१९७) पूर्व्वजोपार्जितं वारुणातपत्रम् आभोगाख्यम् अनुरूपस्थानन्यासेन कृतार्थीकृतमेतत्। (१९८) अस्य च कुतूहलकारीणि बहूनि आश्चर्य्याणि दृश्यन्ते। प्रतिदिवसं प्रविशति (१९९) शैत्यहेतोश्छायायाः किरणसहस्रादेकैकः सोमस्य रश्मिः अस्मिन्। (२००) अस्मिन् प्रविष्टे प्रध्यानानन्तरं स्वादवो दन्तवीणोपदेशाचार्य्याश्च्योतन्ति चन्द्रभासामम्भसां मणिशलाकाभ्यो यावदिच्छ-

---

(१९७) पूर्व्वजोपार्जित—पूर्वपुरुषलब्धम्, आभोगाख्यम्—आभोगनामकं, वारुणातपत्रं—वरुणदत्तच्छत्रं, जलस्राविच्छत्र वा, निरतिशयशैत्यसविधायकमातपत्रमिति भावः, अनुरूपस्थानन्यासेन—योग्यस्थानार्पणेन, देवसदृशसत्पात्रे प्रदानेनेत्यर्थः, भवानेव एवास्य भोगसौभाग्यभाक् नान्य इति मत्वेति भावः।

(१९८) अस्य—आभोगस्य, कुतूहलकारीणि—कौतुककराणि, अपूर्व्वगुणयोगात् दर्शनौत्सुक्यजनकानीति भावः।

(१९९) छायायाः,—अनातपस्य, छत्रस्येति शेषः, शैत्यहेतोः,—शीतलता-सम्पादननिमित्तम्। किरणेति।—किरणाना—मरीचीना, सहस्राणि—सहस्रसङ्ख्या यस्य तस्मात्, सूर्य्यादित्यर्थः। सोमस्य—चन्द्रस्य, रश्मिः,—मयूखः। अस्मिन्—आतपत्रे इत्यर्थः। ननु दिवा सोमस्योदयाभावात् कथमातपत्रे तस्य किरणस्य प्रवेशसम्भव इति चेत्? अत्राहुः,—सूर्य्योत्तापेन छत्रच्छाया सन्तप्ता मा भूदिति हेतोः सूर्य्यस्य एकैकः रश्मिः चन्द्ररश्मिरूपेण परिणतः सन् तत्र प्रविशति इति तात्पर्य्यम्। दृश्यते च लोके प्रखरसूर्य्यकिरणेनोत्तप्तस्यातपत्रस्य शैत्यविधानार्थं जलेनार्द्रीकरणम्, अत्र तु तादृशसन्तापसम्भवेऽपि आर्द्रीकरणस्य प्रयोजनाभावः, इत्येवास्य कुतूहलजनकत्वम्।

(२००) अस्मिन्—चन्द्ररश्मौ, प्रविष्टे—उपगते, आभोगाख्यच्छत्राभ्यन्तरमिति शेषः, प्रध्यानानन्तर—प्रकृष्टभावनात् परं, छत्रधारिपुरुषाणामिति भावः, यद्वा,—रश्मीना सम्यगेकीभूतभवनात् परमित्यर्थः, मणिशलाकाभ्यः,—मणिमयच्छत्रशलाकाभ्यः, स्वादवः,—सुमधुराः, दन्तेति।—दन्तवीणा—शीतोद्भवः दन्तानामन्योऽन्याघातः, अतिशैत्यात् इति भावः, तस्या उपदेशे—शिक्षायाम्, आचार्य्याः,—गुरवः, शीतस्पर्शातिशय्यात् वेपथूदयेन दन्तानामन्योऽन्यघर्षणजननात् इति भावः, चन्द्रभासां—चन्द्रवत्प्रभावतां, शुभ्राणामित्यर्थः। यावदिच्छ—यावती इच्छा तावत्,

स्वच्छा धाराः। (२०१) प्रचेता इव यश्चतुर्णाम् अर्णवानाम् अधिपतिर्भूतो भावी वा, तमनुगृह्णाति छायया, न इतरम्। इदञ्च न (२०२) सप्तार्चिर्दहति, न पृषदश्वो हरति, न उदकम् आर्द्रयति, न रजांसि मलिनयन्ति, न जरा जर्जरयति। एतत् तावदनुगृह्णातु दृष्टा देवः; सन्देशमपि विस्रब्धं श्रोष्यति" इत्येवम् अभिधाय विहत्य आत्मीयं पुरुषम् अभ्यधात्,— "उत्तिष्ठ, दर्शय देवस्य" इति।

(२०३) स वचनानन्तरम् उत्थाय पुमान् ऊर्द्धी-चकार तत्, धौतदुकूलकल्पिताच्च निचोलकात् अकोषीत्।

---

इति विग्रहे [ "यावदवधारणे" ( २।१।८ पा० ) इत्यव्ययीभावः ] यथेष्टमित्यर्थः, स्वच्छाः —निर्म्मला.। च्योतन्ति—क्षरन्ति।

(२०१) प्रचेता इव—वरुण इव, ("प्रचेता वरुणः पाशी" इत्यमरः) भूतः,—सञ्जातः। भावी—भविष्यन्नित्यर्थः। छायया—अनातपेन, छायाविस्तारेणेत्यर्थः, यं—चतुःसमुद्रवेष्टितायाः पृथिव्या अधिपतिं सम्राजमित्यर्थः, अनुगृह्णाति—एवंविध-राजे एव कथमिद पूर्व्वोक्तगुणान् बिभर्त्ति इति निष्कर्षः। ".चतुरर्णवाधिपतिमेवासौ सेवते, त्वञ्च तथा भविष्यसि, अतः तव एव एतदयुक्तमिति सूच्यते। अदो हि चतुरुदधि-भोगसौभाग्यभाजमेव प्रोक्तगुणैः सेवते, नान्यम्, एतदेवास्य विस्मयकारत्वमिति भावः।

(२०२) सप्तार्चिः,—अग्निः, ("अग्निर्वैश्वानरो वह्निः ··। सप्तार्चिर्दमुनाः···" इत्यमर.)। पृषदश्वः,—वायुः, ( "श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः। पृषदश्वः···" इत्यमरः)। उदकं—जलम्। रजांसि—पांशवः। जरा—जीर्णता, पुरातनत्व-मित्यर्थः, जर्ज्जरयति—खण्डयतीत्यर्थः. जरसि नैतत् जीर्य्यति, सदैव प्रत्यग्रमिव वर्त्तते इति भावः। एतत्—आतपत्रमित्यर्थः। विस्रब्धं—विस्रब्धं यथा तथा, रहसि इति भावः। विहत्य—मुख परावर्त्त्येत्यर्थः। देवस्य—सम्राजः हर्षस्य, [ सम्बन्धविवक्षया षष्ठी, "अभिवादि-दृशोरात्मनेपदे वेति वाच्यम्" इति वार्त्तिकबलात् दर्शयेत्यस्य पदस्य प्रयोगाभावात् न प्रयोज्यकर्त्तुः देवस्य कर्म्मत्व, तथा च तृतीयाया अस्ति अवसर इति विभाव्यम् ]।

(२०३) सः,—आत्मीयः, दूतस्यानुचरविशेष इत्यर्थः। ऊर्द्धीचकार—उद्धृत-वानित्यर्थः। धौतेति।—धौतेन—क्षालितेन, शुभ्रेण इत्यर्थः, दुकूलेन—वस्त्रेण,

(२०४) आकृष्यमाणे एव च यस्मिन् अतिसितमहसि सरभसम् अहासि इव हरेण। (२०५) रसातलात् उदलासीव शेषफणि-फणाफलकमण्डलेन। अस्थायि इव चक्रीभूय अन्तरिक्षे क्षीरोदेन। अघटीव गगनाङ्गने गोष्ठीबन्धः शारदेन बलाहकव्यूहेन। (२०६) विश्रान्तम् इव विततपक्षतिना वियति पितामह-विमानहंसयूथेन। (२०७) अत्रिनेत्रनिर्गतस्य धवलधाम-

---

कल्पितात्—रचितात्, निचोलकात्—प्रच्छदपटात्, आवरणवस्त्रात् इत्यर्थः, ( "निचोलः प्रच्छदपटः" इत्यमरः ) अकोषीत्—निष्कोषितवान्, आतपत्रस्य वस्त्रावरण-मुन्मोचितवानित्यर्थः।

( २०४ ) अतिसितमहसि—अतिशुभ्रत्विषि, यस्मिन्—आतपत्रे, [ "यस्य च भावेन भावलक्षणम्" (२।३।३७ पा०) इति सप्तमी ] सरभसं—सवेगम्, आकृष्यमाणे—निष्कृष्यमाणे, प्रच्छदपटादिति शेषः, हरेण—शिवेन, अहासि इव—अट्टहसित-मिव, एतदातपत्रस्यातिशुभ्रत्वेन झटिति तदाकर्षणात् हरस्याट्टहासवत् तत् शोभते इति फलितार्थः; "यशसि धवलता वर्ण्यते हासकीर्त्त्योः" इत्यादि कविसमयप्रसिद्धेः, छत्रधवलत्वप्रतिपादनार्थं हरहास्यरूपत्वेनोत्प्रेक्षितमिति वाच्या क्रियोत्प्रेक्षेयमिति ज्ञेयम्।

( २०५ ) रसातलात्—पातालात्, शेषेति।—शेषफणी—अनन्तनागः, तस्य फणाफलकमण्डलं—भोगपट्टकसमूहः तेन, उदलासि इव—उल्लसितमिव, [ लसतेः भावे लुङि रूपम् ]। क्षीरोदेन—दुग्धसागरेण, चक्रीभूय—मण्डलीभूय, अस्थायि इव—स्थितमिव। शारदेन—शरत्कालिकेन, निर्जलत्वात् शुभ्रेण इति भावः, बलाहकव्यूहेन —मेघमण्डलेन, ( "अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः ) गोष्ठीबन्धः,—समाजः, सङ्घीभूयावस्थानमित्यर्थः, अघटि इव—घटित इव, रचित इव इत्यर्थः, [ घटते इत्यस्य णिचि कर्म्मणि लुङि रूपम् ]।

(२०६) वियति—आकाशे, विततपक्षतिना—विस्तृतपक्षेण, पितामहविमानहंस-यूथेन—ब्रह्मणो रथवाहनहंससङ्घेन, विश्रान्तमिव—विश्रामः कृत इव, एतदातपत्रं विलोक्य ज्ञानं प्रसारितपक्षाः ब्रह्मणः विमानहंसाः व्योममार्गे विश्राम्यन्तीवेति मेनिरे इति तात्पर्य्यम्।

( २०७ ) अत्रिनेत्रनिर्गतस्य—अत्रेः,—तदाख्यस्य ब्रह्मणो मानसपुत्रस्य मुनेः

अखण्डलमनोहरो दृष्ट इव जनेन जन्मदिवसः कुमुदबन्धोः।
प्रत्यक्षीकृत इव उद्गमनक्षणो नारायणनाभिपुण्डरीकस्य।
(२०८) आहिता इव कौमुदीप्रदोषदर्शनानन्दतृप्तिरक्ष्णाम्।
उदमाङ्क्षीत् इव मन्दाकिनीपुलिनमण्डलं महदम्बरोदरे।

विशेषस्य, नेत्रात्—नयनात्, निर्गतस्य—निःसृतस्य, चन्द्रो हि प्रजासर्गार्थं तपस्यतोऽत्रेर्नेत्रात् जात, तथा हि हरिवंशे,—"पिता सोमस्य वै राजन्! जज्ञेऽत्रिर्भगवान् ऋषिः। ब्रह्मणो मानसात् पूर्वं प्रजासर्गं विधित्सतः॥" अपि च तत्रैव,—"नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः। तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा॥ समेत्य धारयामासुर्न च ताः समशक्नुवन्। स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः॥ पपात भासयन् लोकान् शीतांशुः सर्व्वभावनः॥" इति। अत एवाह रघौ (२ स० ७५ श्लो०) कालिदासः,—"अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः" इत्यादि; कुमुदबन्धोः,—चन्द्रस्य, धवलेति।—धवलं—शुभ्रं, यत् धाममण्डलं—परिधिः, तेन मनोहरः,—रमणीयः, जन्मदिवसः,—उत्पत्तिदिनं, दृष्ट इव—वीक्षित इव, इत्युत्प्रेक्षा, दर्शनञ्चात्र "स हि जन्मदिवस एवायं किमु?" इत्याकारकप्रत्यभिज्ञारूपतया प्रत्यक्ष-स्मरणयोः सम्मेलनमेवैतदिति विभाव्यम्। नारायणनाभिपुण्डरीकस्य—विष्णोर्नाभिदेशस्थस्य श्वेतपद्मस्य, उद्गमनक्षणः,—उत्पत्तिसमयः, प्रत्यक्षीकृत इव—साक्षात्कृत इव। पूर्व्ववदत्राप्यलङ्कारः।

(२०८) अक्ष्णां—चक्षुषां, कौमुदीति।—कौमुदीप्रदोषः,—चन्द्रिकासमन्विता रजनी; यद्वा,—कौमुदी नाम दीपोत्सवतिथिः, तदुक्तं भविष्योत्तरे,—"कौ मोदन्ते जना यस्यां नानाभावैः परस्परम्। हृष्टास्तुष्टाः सुखापन्नास्तेन सा कौमुदी मता॥" इत्युक्तलक्षणा कार्त्तिकपौर्णमासी आश्विनपौर्णमासी वा इति वदन्ति, तस्याः प्रदोषः,—रजनीमुखं, तस्य दर्शनेन—अवलोकनेन, यः आनन्दः,—सुखं, तेन तृप्तिः,—प्रीतिः, आहिता इव—जनिता इव, अस्य हि सन्दर्शनं तथैव नयनसन्तर्पणं भवति, यथा कौमुदी समुदित्यैव दर्शकानां वीक्षणेषु सुधाधारां स्रावं स्रावं नियतं तान् प्रीणयति मानसञ्चावर्ज्जयति इति। कौमुद्याः नयनरञ्जकत्वमुक्तं रघौ (३ स० १ श्लो०) यथा,—"सखीजनोद्वीक्षणकौमुदीमुखम्" इत्यादि। अम्बरोदरे—गगनमध्ये इत्यर्थः, महत्—विशालं, मन्दाकिनीपुलिनमण्डलं—स्वर्गङ्गासैकतनिवहः, उदमाङ्क्षीदिव—उत्थितमिवेत्यर्थः, [मज्जतेः लुङि रूपम्] मन्दाकिनीपुलिनस्य शुभ्रत्वेनैवमुत्प्रेक्षितमिति ज्ञेयम्।

(२०९) परिवर्त्तित इव दिवसः पौर्णमासीनिशया। (२१०) मन्दमन्दमिन्दूदयसन्देहदूयमानमानसैः विघटितं घटमानचञ्चुच्युतमृणालकोटिभिः आसन्नकमलिनीचक्रवाकमिथुनैः। (२११) शरज्जलधरपटलाशङ्कासङ्कोचितकेकारवमूकमुखपुटैः पराङ्मुखीभूतं भवनशिखण्डिमण्डलैः।

---

(२०९) पौर्णमासीनिशया—पूर्णिमारजन्या, परिवर्त्तित इव—विनिमित इव, परावर्त्तित इवेत्यर्थः, स्निग्धधवलकान्तिमत्त्वादिति भावः, स्निग्धत्वशुभ्रत्वादिगुणसङ्गात् पौर्णमासी निशीथिनी दिवसरूपेण परिणतेवेति विभाव्यते इति विशदार्थः। [ ननु "स्त्रिया पुंवद्भाषित—" (६।३।३४ पा०) इति सूत्रेण भाषितपुंस्कस्य पौर्णमासीशब्दस्य समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे परतः कथं न पुंवद्भाव ? इति चेन्न, पूर्णः मासः अस्ति अस्याः इति व्युत्पत्त्या, "प्रज्ञादिभ्यश्च" (५।४।३८ पा०) इति अणि ङीपि स्याः स्त्रियामपि सञ्ज्ञाभूतया दत्ताऽऽदिवत् अत्रापि "संज्ञापूरण्योश्च" (६।३।३८ पा०) इति सूत्रेण पुंवद्भावप्रतिषेध इति ज्ञेयम् ]।

(२१०) मन्दमन्दम्—ईषदीषत्, इन्दोः,—चन्द्रस्य, उदयः,—प्रकाशः, तस्मिन् सन्देहेन—संशयेन, किमयमिन्दूदयः, उतान्यत् किञ्चित् ? एवंरूपेण इत्यर्थः, दूयमानं—सन्तप्यमानं, [ "…दूयमान…" इत्यत्र "…हूयमान…" इति पाठे,—हूयमानं—निपीड्यमानमित्यर्थः, हूयते, जुहोतेर्वा कर्मणि शानचि रूपम् ] चन्द्रोदये तेषां विरहसङ्घटनाशङ्कया इति भावः, मानसं—चित्तं येषां तैः, घटमानेति।—घटमानाया,—मीलितायाः, विरहशङ्कया अप्रफुल्लमानसतया स्वतः सङ्कुचितयेति भावः, चञ्च्वाः,—त्रोट्याः, च्युता—भ्रष्टा, मृणालकोटिः,—बिसाग्रम्, अर्द्धावलीढबिसखण्डमित्यर्थः येषां तैः, आसन्नेति।—आसन्ना—समीपवर्त्तिनी, कमलिनी—पद्मिनी यस्या सा सरसीत्यर्थः, तस्यां चक्रवाकमिथुनैः,—चक्रद्वन्द्वैः, विघटितं—वियुक्तं, परस्परं दूरस्थैरभावि इत्यर्थः, आतपत्रस्य चन्द्रवदतिशुभ्रत्वेन चक्रद्वन्द्वैस्तत्र चन्द्रभ्रान्त्या परस्परं वियुक्तमिति तात्पर्य्यम्। अत्र चक्रद्वन्द्वानां तदातपत्रे चन्द्रभ्रान्त्या विघटनोक्तेर्भ्रान्तिमानलङ्कारः।

(२११) शरदिति।—शरदि—घनात्यये, यत् जलधरपटलं—मेघमण्डलं, निर्जलत्वात् शुभ्रमिति भावः, तस्य आशङ्कया—संशयेन, किमिदं छत्रम्, उत शारदः जलधर इत्येवंरूपया इत्यर्थः, सङ्कोचितेन—मुद्रितेन, स्वल्पीभूतेनेत्यर्थः, केकारवेण—केकावाण्या, मूकानि—निःशब्दानि, केकावाणीशून्यानीति यावत्, मुखपुटानि—पुट-

(२१२) प्रबुद्धम् आबद्धचन्द्रानन्दोद्दामोद्दलद्दलपुटाट्टहासविशदं कुमुदषण्डैः।

(२१३) चित्रीयमाणचेताश्च सराजको राजा दण्डानुसाराधिरोहिण्या दृष्ट्या सादरमैक्षिष्ट तत्तिलकम् इव त्रिभुवनस्य, शैशवम् इव श्वेतद्वीपस्य, अंशावतारम् इव शरदिन्दोः, हृदयम् इव धर्मस्य, निवेशम् इव शशिलोकस्य, दन्तमण्डल-

---

वत् वदनानि येषा तथाभूतै., भवनशिखण्डिमण्डलै,—गृहमयूरनिचयै, पराङ्मुखीभूत—किञ्चिदधोमुखता गतम्। अत्रापि पूर्ववत् शिखण्डिमण्डलाना छत्रे शुभ्रमेघभ्रान्त्या पराङ्मुखीभवनवर्णनात् भ्रान्तिमदलङ्कार.।

(२१२) कुमुदषण्डै,—कैरवसङ्घै, आबद्धेति।—आबद्ध,—निहित, चन्द्रे—इन्दौ, य आनन्द,—प्रीति, तस्य उद्दामेन—औत्कट्येन, आतिशय्येनेत्यथ, उद्दलन्ति—विकास गच्छन्ति, यानि दलपुटानि—पुटबन्मुद्रितपत्राणि इत्यर्थ, चन्द्रोदये तेषा स्वत एव विकाशादातपत्रे च तस्मिन् चन्द्रभ्रमादिति भाव, तान्येव अट्टहासा,—हासविशेषा, तै विशद—निर्मलं यथा तथा, [क्रियाविशेषणमिदम्] हासस्य धवलिम्न कविप्रयोगप्रसिद्धत्वात् "धवलता वर्द्धते हासकीर्त्यो." इत्युक्ते, प्रबुद्ध—विकसित, कुमुदषण्डानि चन्द्रोदय प्राप्य यथा सम्यक् विकशन्ति, तथैव तस्मिन् छत्रे आक्रम्यमाणेऽपीति भाव। अत्र दलपुटेषु अट्टहासत्वारोपात् रूपक, पूर्ववत् भ्रान्तिमदलङ्कारश्च इत्यनयो सङ्कर।

(२१३) चित्रीयमाणचेता.,—चित्रीयमाणम्—आश्चर्यं कुर्वत्, चेत,—मानस यस्य तथाविध, चमत्कृतचित्त, विस्मयमानमानस इत्यर्थ, ["नमो वरिवश्चित्रङ क्यच्" (३।१।१९ पा०) इति सूत्रेण आश्चर्यकरणार्थे क्यचि शानचि च रूपम्]। दण्डानुसारेति।—दण्डानुसारेण—छत्रस्य नालमनुसृत्येत्यर्थ, अधिरोहति—उत्तिष्ठति इति तथोक्तया, छत्रस्योर्द्धांशे निहितया इत्यर्थ, छत्रदण्डात् प्रभृति तत्पट यावत् निपातितदृशेति यावत्। तत्—छत्रमित्यर्थ। तिलक—ललाटभूषणभूतं, सर्वसौन्दर्यनिधानभूमिमित्यर्थ.। शैशव—बाल्य, क्षुद्रश्वेतद्वीपमिवेत्यर्थ., श्वेतद्वीपस्य शुभ्रत्वात् आतपत्रसाम्य, तत्रार्वैधर्म्यसाम्योपपत्तये शिशुत्वव्यपदेश इति विभाव्यम्। शरदिन्द,—शरच्चन्द्रस्य, अंशावतारम्—अंशेन—खण्डेन, कलयेत्यर्थ, अवतार,—अवतरणम्, आविर्भाव इत्यर्थः तमिव। हृदयमिव—अन्त करणमिव निर्मलत्वादिति भाव.। शशिलोकस्य—चन्द्रमण्डलस्य, निवेशमिव—आयतनमिव।

धवलं मुखमिव चक्रवर्त्तित्वस्य, (२१४) मौक्तिकजालपरिकर-सितं सीमन्तचक्रमिव दिवः, (२१५) बहलज्योत्स्नाशुक्लोदर-मैन्दवम् इव परिवेशवलयं, (२१६) शौक्ल्यहसितशङ्खश्रीकं श्रवणमण्डलम् इव निश्चलतां गतमैरावतस्य, (२१७) श्वेत-गङ्गावर्त्तपाण्डुरं पदमिव त्रिभुवनवन्दनीयं त्रिविक्रमस्य,

चक्रवर्त्तित्वस्य—साम्राज्यस्य, दन्तेति।—दन्तमण्डलवत्—दशनचक्रवालवत्, धवल—शुभ्र, दन्तमण्डलेन—दशनसमूहेन धवलञ्च, मुखमिव—आरम्भमिव, वदनमिव च, चक्र-वर्त्तित्वव्यञ्जकानां द्रव्याणां प्रथममिवेति यावत्, सितच्छत्रस्य चक्रवर्त्तित्वव्यञ्जकत्वादिति भाव., ("मुखं नि रणे वक्त्रे प्रारम्भोपाययोरपि" इति मेदिनी)।

(२१४) दिव',—स्वर्गस्य, मौक्ति ति।—मौक्तिकानां—मुक्ताफलानां, जालेन—समूहेन, दाम्नेति यावत्, य परिकरः,—वेष्टनं, तेन सितम्—उज्ज्वलं, शुभ्रञ्च, सीमन्तचक्रमिव—केशविन्यासनिचयमिव, ("सीमन्ता: केशविन्यासाः" इति क प.) युनारीधम्मिल्लश्रोभिमुक्ताजालमिवेति भावः।

(२१५) वहलेति।—वहलया—प्रभूतया, ज्योत्स्नया—चन्द्रिकया, शुक्लं—शुभ्रम, उदरम्—अभ्यन्तरं यस्य तथाभूतम्, ऐन्दवं—चान्द्रमसं, परिवेशवलयमिव—परिधिमण्डलमिव; ("परिवेशस्तु परिधि" इत्यमर) राकाशशधरमिवेति भाव।

(२१६) शौक्लेति।—शौक्ल्येन—श्वेतगुणेन, हसिता—तिरस्कृतेत्यर्थ. शङ्खादपि अधिकशौक्ल्यादिति भाव, शङ्खस—कम्बो, श्री,—कान्तिर्येन तथोक्त, निश्चलता गतं—स्थिरत्तं प्राप्तम्, एकत्रैवावस्थितमिति यावत्, हस्तिकर्णस्य सदैव चञ्चलत्वात्, अन्यथा स्वभावत स्थिरस्य चञ्चलवस्तुना सह साम्य न घटते, तेनैवमुक्तमिति ज्ञेयम, ऐरावतस्य श्रवणमण्डलमिव—कर्णमण्डलमिव, ऐरावतस्य स्वभावशुभ्रत्वात् साम्यमव्याहतं वेदितव्यम्।

(२१७) श्वेतेति।—श्वेतगङ्गायाः,—शुभ्रसलिलाया जाह्नव्याः, आवर्त्तवत्—अम्भसा भ्रम इव, पाण्डुर—धवलम्, अन्यत,—श्वेतायाः,—शुभ्रवर्णायाः, गङ्गायाः,—विष्णुपद्याः, आवर्त्तन- आवर्त्तनेन, अवस्थानेनेति यावत्, गङ्गाया विष्णुपदोद्भूत-त्वादिति भाव, पाण्डुर—धवल, त्रिविक्रमस्य—वामनावतारस्य विष्णो इत्यर्थ, त्रिभुवन-वन्दनीय—त्रिलोकीपूज्य, त्रिजगदादरणीयञ्च, पदमिव—चरणमिव, अत्र एकस्यैव छत्रपदस्य भूयसामुपमानानां सत्त्वात् मालोपमाऽलङ्कारः।

(२१८) प्रचेतसश्चूडामणिमरीचिशिखाभिः इव श्लिष्टाभि-र्मानसबिसतन्तुमयीभिः चामरिकावलीभिः विरचितपरिवेशम्, उपरि (२१९) चक्रवर्त्तिलक्ष्मीनूपुरस्वनश्रवणदोहदनिश्चलेन इव लक्ष्मणा विततपक्षेण हंसेन सनाथीकृतशिखरं, (२२०) स्पर्शवता च प्रभावस्तम्भितेन मन्दाकिनीमृणालेन मुकुलितफणेन वासुकिना इव नीतेन दण्डतां द्योतमानं, (२२१) धवलिम्ना क्षालयत् इव नक्षत्रपथं, प्रभाप्रवाहप्रथिम्ना प्लावयत् इव

---

(२१८) प्रचेतस,—वरुणस्य, चूडामणिः,—शिरोरत्न, मस्तकस्थितमिति भावः, तस्य मरीचिशिखाभिरिव—मयूखाग्रैरिवेत्युत्प्रेक्षा, श्लिष्टाभि,—संसक्ताभिः, मानसबिसतन्तुमयीभिः,—मानससरोवरकमलमृणालसूत्ररचिताभिः, अतिशौभ्रादिति भाव., चामरिकाऽऽवलीभिः,—क्षुद्रवालव्यजनश्रेणीभिः, विरचितः,—कल्पित, परिवेशः,—परिधिर्यस्य तथोक्त, समन्तात् चामरिकाऽऽवलीवेष्टितमित्यर्थः।

(२१९) चक्रेति।—चक्रवर्त्तिनः,—सम्राज, या लक्ष्मीः,—श्री, तस्याः नूपुरस्वनस्य—मञ्जीररणितस्य, श्रवणे—आकर्णने, यत् दोहदम्—अभिलाषः, हंसाना नूपुररवप्रियत्वादिति भावः, तेन निश्चलः,—स्थिर तेनेव। विततपक्षेण—विस्तृतपक्षेण, लक्ष्मणा—चिह्नभूतेन सारसपक्षिणा, हंसेन—हंसमूर्त्त्या; यद्वा,—लक्ष्मणा—चिह्नेन, हंसाकारकेणेत्यर्थः, सनाथीकृतशिखरं—संयुक्तशिरोभागम्, उपरिभागे विन्यस्तविस्तृत-पक्षशालिकविलहंसमित्यर्थः।

(२२०) स्पर्शवता—सुखस्पर्शेनेत्यर्थः, [ "रसादिभ्यश्च" (५।२।९५ पा०) इति मतुप्, "भूमनिन्दाप्रशंसा —" इत्यादिवार्त्तिकात् प्रशंसायाम् अतिशायने वाऽर्थे प्रयुक्तमिति ज्ञेयम्] प्रभावस्तम्भितेन—प्रभावेण—अलौकिकमहिम्ना, स्तम्भित—निश्चलता गतं तेन, मृणालस्य अतिकोमलत्वेऽपि प्रभाववशात् दृढीभूतेनेति भाव, मन्दाकिनीमृणालेन—मन्दाकिन्याः,—स्वर्गङ्गाया, मृणालेन—पद्मनालेन, मुकुलित-फणेन—सङ्कुचितफणामण्डलेन, दण्डता नीतेन—नालतां गतेन, वासुकिनेव—सर्प-राजेनेव, द्योतमान—राजमानं, स्वर्नद्याः सुस्निग्धहैमकमलनालं हि असामान्य-भोगसौभाग्यसम्पत्तये एतच्छत्रदण्डरूपतया परिणतम्, अत. फणसहस्रं मुकुलीकृत्य शेषाहिना स्थितमिवेति प्रतीयते इति समुदितार्थः।

(२२१) धवलिम्ना—श्वैत्येन, [ "वर्णदृढा—" (५।१।१२३ पा०) इति इमनिचि

दिवसं, समुच्छ्रायेण अधः कुर्व्वदिव दिवम्, उपरिस्थितम् इव सर्व्वमङ्गलानां, श्वेतमण्डपम् इव श्रियः, स्तवकमिव ब्रह्मस्तम्भस्य, नाभिमण्डलम् इव ज्योत्स्नायाः, विशदं हासमिव कीर्त्तेः, फेनराशिम् इव खड्गधाराजलानां यशःपटलम् इव शौर्य्यशालितायाः एकमाद्भुतं महत् छत्रम् ।

---

रूपम् ] नक्षत्रपथम्—अन्तरीक्षम्, [ नक्षत्राणां पन्थाः इति तत्पुरुषे "ऋक्पूर—" ( ५।४।७४ पा० ) इत्यादिना समासान्त अप्रत्यय. ] छायापथनामकः ज्योतिश्चक्रमध्यवर्त्ती कश्चित् तिरश्चीनः अवकाशोऽयमिति प्रतीयते, तस्य हि क्षीरसमधवलत्वं प्रसिद्धमेव, तथा हि रघो त्रयोदशे द्वितीये श्लोके कालिदास,—"छायापथेनेव शरत्प्रसन्नम्" इति ; क्षालयदिव—शोधयदिव, 'परिष्कुर्वदिवेत्यर्थः' । प्रभेति ।—प्रभाणां—त्विषां, प्रवाहस्य—स्रोतस, प्रसरस्येत्यर्थः, प्रथिमा—विस्तारः तेन ; [ "पृथ्वादिभ्य—" ( ५।१।१२२ पा० ) इत्यादिना इमनिच्, "र ऋतो—" ( ६।४।६१ पा० ) इति ऋत्वञ्च चेयम् ] आवृण्वदिव—आच्छादयदिव । समुच्छ्रायेण—समुन्नत्या, दिवम्—स्वर्गम, अध कुर्वदिव—निम्नीकुर्वदिव, पराभवदिवेत्यर्थः । सर्वमङ्गलानां—कल्याणकरद्रव्याणामित्यर्थः, प्रभूतमङ्गलजनकत्वादिति भावः । श्वेतमण्डपमिव—शुभ्रभवनमिव, राजलक्ष्म्या वासभवनमिवेत्युत्प्रेक्षा । ब्रह्मस्तम्भस्य—ब्रह्माण्डस्येति यावत्, स्तवकमिव—पुष्पगुच्छमिव, छत्रस्य स्तवकाकृतित्वादिति भाव', चतुर्दशभुवनभूत ब्रह्माण्ड राज्ञः उपभोगार्थमेकत्र प्रसूनस्तवकमिव सम्मिलित सत् संस्थितमिवेत्युत्प्रेक्षा । नाभिमण्डलमिव—नाभिभागमिव, कौमुद्याः प्रभवस्थानमिवेत्यर्थः, नाभिमण्डलस्य छत्राकृतित्वात्, छत्रस्य च शीतलादिगुणाधिक्यादत नाभिरूपत्वमुत्प्रेक्षितमित्यभिप्राय । विशदं—शुभ्रं, हासमिव—मधुरहास्यरूपविकाशमिवेत्यर्थः, कीर्त्तेः ज्योत्स्नायाश्च शुभ्रत्वेन कविवर्णनीयत्वादतिधवलमिति भाव । खड्गधाराजलानाम्—असेर्निशिताग्रभागरूपोदकानां, फेनराशिमिव—हिण्डीरपुञ्जमिव, कृपाणधारानीराणि फेनायमानानि पुञ्जीभूयैवात्र संस्थितानीवेत्युत्प्रेक्षा, तस्य विक्रमैकरक्षणीयत्वादिति भाव । शौर्य्यशालितायाः—शौर्य्येण शालते शोभते यः सः शौर्य्यशाली, तस्य भाव. तत्ता तस्याः, महावीर्य्यविभूषितस्य सौन्दर्य्यविधायिन प्रकाशमानपराक्रमस्य इत्यर्थः, यशःपटलमिव—दिशां विदिशाञ्चान्तरालमपि व्याप्नुवतीनां कीर्त्तीनां सञ्चयमिवेत्युत्प्रेक्षा, तस्य वीरैकश्रीगास्पदीभूतत्वादिति भाव. ।

दृष्टे च (२२२) तस्मिन् राज्ञा प्रथमे शेषमपि प्राभृतं प्रकाशयाञ्चक्रुः क्रमेण कार्म्माः; तद्यथा,—परार्द्ध्यरत्नांशुशोणी-कृतदिग्भागान् भगदत्तप्रभृतिख्यातपार्थिवपरागतान् आहत-लक्षणान् अलङ्कारान्, प्रभालेपिनाञ्च चूडामणीनां समुत्कर्षान् क्षीरोदधेः धवलताहेतून् इव हारान्, (२२३) अनेकराग-रुचिरवेत्रकरण्डकुण्डलीकृतानि शरच्चन्द्रमरीचिरुञ्चि शौच-क्षमाणि क्षौमाणि, (२२४) कुशलशिल्पिलोकोल्लिखिता-

---

(२२२) तस्मिन्—भालपत्रे इत्यर्थः। प्रथमे—मुख्या इत्यर्थः, [ "प्रथमचरम—" (१।१।३३ पा०) इत्यादिना सर्व्वनामत्वस्य वैभाषिकत्वात् जसः शीत्व ज्ञेयम् ] कार्म्माः —कर्म्मचारिणः, परिजना इत्यर्थः, शेषमपि—अन्यदपि इत्यर्थः, प्राभृतम्—उपदाम्, उपहारमित्यर्थः, ( "प्राभृतन्तु प्रदेशनम्। उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः ) प्रकाशयाञ्चक्रुः,—प्रकटितवन्तः, दर्शयामासुरित्यर्थः। तद्यथा—तथा हि। परार्द्ध्येति। —परार्द्ध्यानाम्—अग्र्याणाम्, अत्युत्कृष्टानामित्यर्थः, ( "परार्द्ध्याग्र्यप्राग्र्यहरप्राग्र्याग्र्याग्रीयमग्रिमम्" इत्यमरः ) रत्नाना—मणीनाम्, अंशुभि,—किरणैः, शोणीकृता,— रक्तीकृताः, दिग्भागाः,—आशातटा यैः तथोक्तान्, भगदत्तेति।—भगदत्त,—दुर्य्योधन-श्वशुर नृपभेदः, तदादिभिः,—तत्प्रभृतिभिः, ख्यातैः,—प्रसिद्धैः, पार्थिवैः,—नृपैः, परागतान्—व्यवहृतान्, आहतलक्षणान्—गुणैः प्रसिद्धान्, ( "गुणैः प्रतीते तु कृत-लक्षणाहतलक्षणौ" इत्यमरः )। प्रभालेपिना—कान्तिपूर्णानाम्, समुत्कर्षान्— अतिशयान्, गुणातिशय्यजनकानित्यर्थः, बहूनि तादृशानि चूडारत्नानि इति भावः। क्षीरोदधेः,—दुग्धार्णवस्य, धवलताहेतूनिव—शुभ्रतानिदानानि इव, अतिशुभ्रस्य तस्य हारस्यैव समुद्रगर्भे अवस्थानात् तत्प्रभयैव क्षीरसमुद्रस्य धवलता जाता इव इत्युत्प्रेक्षितार्थः।

(२२३) अनेकेति।—अनेकैः,—विविधैः, रागैः,—वर्णैरित्यर्थः, रुचिराः,— मनोज्ञाः, ये वेत्रकरण्डाः,—वेत्रनिर्मितसमुद्गकाः, तेषु कुण्डलीकृतानि—वलयीकृतानि, सङ्कोच्य स्थापितानीत्यर्थः, शरच्चन्द्रमरीचिरुञ्चि—शारदेन्दुकिरणप्रभाणि, शौचक्षमाणि —क्षालनार्हाणि, क्षौमवस्त्राणि तु प्रायश एव क्षालनानर्हाणि भवन्ति, इमानि तु न तादृशानि इति भावः; यद्वा,—पवित्रतासम्पादनदक्षाणि, क्षौमाणि—वसनविशेषान्॥

(२२४) कुशलेति।—कुशलैः,—निपुणैः, शिल्पिलोकैः,—कारुजनैः, ( "कारुः

नाञ्च शुक्तिशङ्खगल्वर्कप्रमुखाणां पानभाजनानां निचयान्, (२२५) निचोलकरचितरुचाञ्च रुचिरकाञ्चनपत्रभङ्गभङ्गुराणाम अतिबन्धुरपरिवेशानां कार्दरङ्गचर्म्मणां सम्भारान्, भूर्ज्जत्वक्कोमलाः स्पर्शवतीः जातीपट्टिकाः, (२२६) चित्रपटानाञ्च म्रदीयसां चमूरुकोपधानादीन् विकारान्,

शिल्पी" इत्यमरः ) उल्लिखितानाम्—उत्कर्षितानां, प्रमृष्टानामिति यावत्. शुक्तीति ।—शुक्तयः,—मुक्तास्फोटाः, ("मुक्तास्फोट स्त्रियां शुक्तिः" इत्यमरः) शङ्खाः,—कम्बवः, गल्वर्काः,—मसुराख्या मणिभेदाः, "चन्द्रकान्ता" इति केचित्, चषका वा, प्रमुखाः,—आदयः अग्रेसरा वा, श्रेष्ठा इत्यर्थः येषां तथाभूतानां, तत्तद्रचितानामिति भावः; शुक्तिशङ्खचषकरूपाणां वा, पानभाजनानि तन्मयान्यपि दृश्यन्ते, पानभाजनानां—पानपात्राणां, निचयान्—सङ्घान् ।

(२२५) निचोलकेति ।—निचोलकैः,—आवरणवस्त्रैः, रचिताः,—पालिताः, नूतना इव उज्ज्वलतया स्थापिता इत्यर्थः, रुचः,—प्रभा येषां तथोक्तानाम्, औज्ज्वल्यपरिरक्षणार्थम् आवरणवस्त्रैराहतानामित्यर्थः,रुचिरेति ।—रुचिरैः,—मनोज्ञैः, काञ्चनपत्रभङ्गैः,—सौवर्णपत्ररचनाभिः,भङ्गुराणि—भङ्गिमन्ति तेषाम्,अतिबन्धुरपरिवेशानाम्—अतिशयेन उन्नतानताभोगानामित्यर्थः, कार्दरङ्गचर्मणाम्—कार्दरङ्गदेशजन्मगविशेषाजिनानाम्, यद्वा,—कार्द्दः,—कार्द्दमः, स एव कार्द्दः, [ स्वार्थे अण् ] रङ्गः,—रागः, [ रजतेः भावे घञ् ] कार्द्दः इव रङ्गः येषां तथाभूतानां चर्म्मणां, कर्द्दमाभानां कृष्णसारप्रभृतीनां त्वचामित्यर्थः, धूमाभानां मृगाजिनानामिति भावः, सम्भारान्—निचयान् । भूर्ज्जत्वक्कोमलाः,—भूर्जस्य—स्वनामख्यातवल्कलप्रधानवृक्षस्य, त्वच इव—वल्कलानि इव, कोमलाः,—मृदुलाः, स्पर्शवतीः,—सुखस्पर्शाः, जातीपट्टिकाः,—उत्कृष्टानि जघनग्रन्थनसाधनानि सूत्राणीत्यर्थः, यद्वा,—जात्यः,—मालत्यः, तत्प्रसूनसुगन्धय इति यावत्, याः पट्टिकाः,—पट्टैः सूत्राः, [ "तत्पर्येष्टे—" (४।१।८० पा०) इति ठञ् ] कोमलांशुकानि इत्यर्थः, जातिकुसुमसुवासितानि कौषेयवसनानि इति यावत् ।

(२२६) म्रदीयसाम्—अतिमृदूनां, चित्रपटानां—विचित्रवसनानां, चमूरुकोपधानादीन्—चमूरुकः,—मृगभेदः, तस्य उपधानादीन्—तदाकाराकारितशिरोधानादीन्, [ "चमूरुकोपधानादीन्" इत्यत्र "समूरुकोपधानादीन्" इति पाठोऽपि स एवार्थः ] विकारान्—रूपान्तराणि, अतिकोमलविचित्रवसननिर्म्मितचमूरुकाकार-

(२२७) प्रियङ्गुप्रसवपिङ्गलत्वञ्चि च आसनानि वेत्रमयाणि, अगुरुवल्कलकल्पितसञ्चयानि च सुभाषितभाञ्जि पुस्तकानि, (२२८) परिणतपाटलपटोलत्विंषि च तरुणहारीतहरिन्ति चीर-च्चारीणि च पूगानां पल्लवलम्बीनि सरसानि फलानि, (२२९) सहकारलतारसानाञ्च कृष्णागुरुतैलस्य च (२३०) कुपितकपि-कपोलकपिलकापोतिकापलाशकोशोकवचिताङ्गीः स्थवीयसी-

शिरोधानादिविविधद्रव्याणीत्यर्थः; यद्वा,—विचित्रैः कोमलैश्च पटैः समाच्छादितानि शाड्वाणि शयनीयोपकरणानीति यावत्।

(२२७) प्रियङ्गिति।—प्रियङ्गुप्रसव',—प्रियङ्गुलतापुष्प, तद्वत्—पिङ्गला:,—पिशङ्गा, त्वच,—वल्कलानि, आच्छादनानीत्यर्थं येषा तानि, वेत्रमयाणि—वेतम लतानिर्म्मितानि, आसनानि—पीठानि। अगुर्व्विति।—अगुरुवल्कलेन—अगुरु वृचत्वचा, कल्पित',—विहित', सञ्चय,—पत्राणा सङ्ग्रह इत्यर्थ. येषा तथोक्तानि, पत्रावरणार्थं वल्कलेन निर्म्मितकपाटिकानीति यावत्, सुभाषितभाञ्जि—सदुक्तिपूर्णानि, सुवचनवन्तीत्यर्थं, पुस्तकानि—सुपाठ्यान् ग्रन्थान्।

(२०८) परिणतेति।—परिणत—परिपक्वम, अत एव पाटल—श्वेतरक्त, यत् पटोल—स्वनामप्रसिद्ध कुलकापरपर्य्याय: फलविशेष', तस्य त्विष,—कान्तय. इव त्विष. ेषा तानि, तरुणहारीतहरिन्ति—तरुण',—नवीन, य हारीत,—पक्षिविशेष, तद्वत् हरिन्ति—श्यामलानि, चीरच्चारीणि—दुग्धवच्छुभ्रनिर्य्यासोद्गारीणि, निरतिशय-स्वादूनीत्यर्थ' पूगाना—गुवाकतरुणा, पल्लवलम्बीनि—किसलययुतानीति भाव, सरसानि —रसवन्ति, अशुष्काणि इति भाव।

(२२९) सहकारेति।—सहकारलता—अतिसौरभाम्रतरु:, ("आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभ." इत्यमर:) तस्या रसा,—निर्य्या. तेषा, ["सहकारलतारसानाम्" इत्यत्र "लतासहकाररसानाम्" इति पाठे,—लतारूपी य: सहकार:,—आम्र, तस्य रसा: तेषामित्यर्थ.।

(२३०) कुपितेति।—कुपितस्य—क्रुद्धस्य, कपे',—वानरस्य, कपोल',—गण्ड:, तद्वत् कपिला—पिङ्गला, या कापोतिका—ओषधिविशेष, तस्या' पलाशानां —पत्राणा, कोशैश्च:,—कोशाकारै: पुटसमूहै, कवचितानि—आहतानि इत्यर्थ, अङ्गानि—अवयवा: यासा ता, स्थवीयसी,—अतिस्थिरा, दृढा इत्यर्थ:, ["स्थूल-

वैणवीर्नाडीश्च, (२३१) पट्टसूत्रप्रसेवकार्पितांश्च भिन्नाञ्जनकणस्य कृष्णागुरुणः गुरुपरितापमुषश्च गोशीर्षचन्दनस्य (२३२) तुषारशिलाशकलशिशिरस्वच्छसितस्य च कर्पूरस्य कस्तूरिकाकोशकानाञ्च, पक्वफलजूटजटिलानाञ्च कक्कोलपल्लवानां लवङ्गपुष्पमञ्जरीणां जातीफलस्तबकानाञ्च राशीन्; (२३३) अतिमधुरमधुरसामोदनिर्हारिणीश्च उत्तककलशीः,

दूर—"(६।४।१५६ पा०) इति ईयसुनि यणादिरूपपरस्य लोपात् गुणात् च सिद्धं, ततः ङीप्] वैणवीः,—वंशसम्बन्धिनीः, नाडीः,—पात्रविशेषान्।

(२३१) पट्टेति।—पट्टसूत्राणां—कौषेयतन्तूनां, प्रसेवकाः,—गोण्यः, भाजनविशेषाः इत्यर्थः, तेषु अर्पिताः,—निहिताः तान्, भिन्नाञ्जनकणस्य—भिन्नं,—मर्दितं, यदञ्जनं—रसाञ्जनं, कज्जलं वा, तद्वत् कणं—श्यामं तस्य। गुरुपरितापमुषः,—गुरुः,—महान्, परितापः,—सन्तापः, दाह इत्यर्थः, तं मुष्णाति—हरतीति तथोक्तस्य, गोशीर्षचन्दनस्य—हरिचन्दनाख्यचन्दनविशेषस्य, ("तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्" इत्यमरः)।

(२३२) तुषारेति।—तुषारशिलाः,—हिमशिलाः, वर्षोपलाः इत्यर्थः, तासां शकलं—खण्डं, तद्वत् शिशिरं—शीतलं, तथा स्वच्छं—निर्मलं, सितं—शुभ्रञ्च तस्य। [अत्र विशेषणपदानां परस्परं विशेष्यत्वं परिकल्प्य कर्मधारयः स्वीकरणीयः]। कस्तूरिकाकोशकानां—कस्तूरिकाहेतुभूतमृगविशेषाणां नाभीनां, मृगनाभीनामित्यर्थः। पक्वेति।—पक्वानां—परिणतानां, फलानां—शस्यानां, जूटैः,—समूहैः, जटिलाः,—युक्ताः तेषां, कक्कोलपल्लवानां—सुगन्धितरुविशेषकिसलयानाम्। लवङ्गपुष्पमञ्जरीणां—लवङ्गलताकुसुमानां वल्लरीणाम्। जातीफलस्तबकानां—जातीफलगुच्छानां, राशीन्—सञ्चयान्।

(२३३) अतीति।—अतिमधुरः,—अतिसुरसः, सुभोग्य इत्यर्थः, [पदमेतत् आमोदमेव विशिनष्टि, अन्यथा मधुररसायाः स्वाद्वाः द्राक्षाया एव वाचकतया तद्विशेषणत्वेनोपन्यासः पिष्टपेषणवत् निरर्थकः स्यादिति विभाव्यम्] मधुरसायाः,—द्राक्षायाः, केचित् "मधुरसं—मकरन्दद्रवम्" इत्याहुः, ("मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च" इत्यमरः) आमोदः,—अतिदूरं प्रसरत् मनोहरं सौरभम्, ("आमोदः सोऽतिनिर्हारी" इत्यमरः) निर्हारी च—हृदयाकर्षकः गन्धश्च यासु ताः, ("समाकर्षी तु निर्हारी" इत्यमरः) उत्तककलशीः,—उत्तकाः,—

सितासितस्य च चामरजातस्य निचयान्, (२३४) अवलम्बमानतूलिकाऽलाबुकांश्च, लिखितानालेख्यफलकसम्पुटान्, (२३५) कुतूहलकान्ति कनकशृङ्खलानियमितग्रीवाणां किन्नराणाञ्च वनमानुषाणाञ्च जीवञ्जीवकानाञ्च जलमानुषाणाञ्च मिथुनानि, (२३६) परिमलामोदितककुभश्च कस्तूरिकाकुरङ्गान्, गेहपरिसरणपरिचिताश्च चमरीः, (२३७) चामीकररसचित्रवेत्रपञ्जरान्तर्गतांश्च सुबहुसुभाषितजल्पाकजिह्वांश्च

---

सुगन्धिफलविशेषरस, आसवविशेष. इति केचित्, तस्य कलसी,—कुम्भान्। सितासितस्य—श्वेतस्य कृष्णस्य च। चामरजातस्य—वालव्यजनसमूहस्य।

(२३४) अवलम्बमानेति।—अवलम्बमानाभि—लम्बमानाभि, पार्श्वे निविश्यमानाभिरित्यर्थः, तूलिकाभि,—ईषिकाभि, चित्रकर्म्मसाधनीभिरिति यावत्, ("ईषिका तूलिका समे" इत्यमर) सहिता अलाबुका,—तुम्बाः, वर्णकाधारानानीति भावः तान्। लिखितेति।—लिखिता,—चित्रिता, अनालेख्या,—अचित्रिता, ये फलकसम्पुटा,—चित्राधारकाष्ठफलकविशेषा: तान्; यद्वा,—अवलम्बमाना तूलिकाः अलाबुकाश्च येषु तान्, लिखितान्—चित्रितान्, विविधलतापत्रादिचित्रसमन्वितानित्यर्थं, आलेख्यफलकसम्पुटान्—आलेख्यफलकानां—चित्रपटाना, सम्पुटान्—आधारविशेषानित्यर्थं।

(२३५) कुतूहलकान्ति—कौतुकावहानि, कनकेति।—कनकशृङ्खलया—काञ्चनदाम्ना, नियमिता—निबद्धा, ग्रीवा—कन्धरा येषा तथोक्ताना, किन्नराणां—कुत्सितदेवयोनिभेदानाम्, अश्वमुखनरदेहविशेषाणा, नरमुखाश्वदेहाना वा इत्यर्थं। जीवञ्जीवकाना—पक्षिविशेषाणा, जलमानुषाणा—सलिलान्त,स्थितनरविशेषाणा, मिथुनानि—द्वन्द्वानि।

(२३६) परिमलेति।—परिमलेन—मनोहरसौरभेण, आमोदिता,—सुरभिता, ककुभ,—दिश ये तथाभूतान्, कस्तूरिकाकुरङ्गान्—सुगन्धिनाभिकोषयुक्तमृगभेदान्। गेहेति।—गेहेषु—गृहेषु, परिसरणे—विचरणे, परिचिता,—अभ्यस्ता ता, गृहवासाभ्यस्ता इत्यर्थ, चमरी,—मर्हिषाकारमृगी।

(२३७) चामीकरेति।—चामीकरस्य—स्वर्णस्य, द्रुतस्येति भाव, रसेन—द्रवेण, चित्रा,—रञ्जिता, वेत्रा,—वेतसा, तेषा पञ्जराणि—तद्रचितानि पिञ्जराणि

शुकशारिकाप्रभृतीन् पक्षिणः, (२३८) प्रवालपञ्जरगतांश्च चकोरान्, जलहस्तिनाम् उदग्रकुम्भमुक्ताफलदामदन्तुराणि च दन्तकाण्डकुण्डलानि।

राजा तु छत्त्रदर्शनात् प्रहृष्टहृदयः (२३९) प्रथमप्रयाणे शोभननिमित्तमिति मनसा जग्राह; हंसवेगञ्च प्रीयमाणो बभाषे,—"भद्र! सकलरत्नधाम्नः परमेश्वरशिरोधारणार्हस्य अस्य महातपत्रस्य महार्णवात् इव कुमुदबान्धवस्य कुमारात् लाभो न विस्मयाय। बालविद्याः खलु महताम् उपकृतयः"

इत्यर्थः तेषाम् अन्तर्गताः,—मध्यस्थिताः तान् सुवह्निति।—सुवह्नि—प्रभूतानि, सुभाषितानि—सूक्तय, सद्वचनानि इत्यर्थः, तेषां जल्पाका—वाचाला पुनः पुनरुच्चारण-शीला इत्यर्थः, ("स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्" इत्यमरः) जिह्वा—रसना येषां तान्।

(२३८) प्रवालेति।—प्रवालः,—विद्रुमः रत्नविशेषः, ("अथ विद्रुमः पुंसि प्रवालं पुनपुंसकम्" इत्यमरः) तस्य पञ्जराणि—पिञ्जराणि, तानि गताः,—प्राप्ताः, तत्र आबद्धा इत्यर्थः तान् ["द्वितीयाश्रितातीत—" (२।१।२४ पा०) इति द्वितीया-समासः]। जलहस्तिनां—जलचराणां करिणाम्, उदग्रेति।—उदग्रेषु - उन्नतेषु, कुम्भेषु - शिरःस्थप्रदेशविशेषेषु, यानि मुक्ताफलानि—जायमानानि मौक्तिकानि, गजशिरःसम्भृतमुक्ताफलानीत्यर्थः, तेषां दाम्ना - स्रजा, दन्तुराणि—उज्ज्वलानीति भावः, दन्तकाण्डकुण्डलानि—स्थूलहस्तिदशनरचितकर्णभूषणविशेषान्।

(२३९) प्रथमप्रयाणे—प्रथमगमनायां, शोभननिमित्तं—शुभलक्षणम्। मनसा जग्राह - आकलयामास इत्यर्थः। सकलरत्नधाम्नः,—सर्व्वरत्नाकरस्य, सर्व्वगुणाधार-स्येति यावत्, परमेश्वरस्य—हरस्य, चक्रवर्त्तिनश्च, शिरोधारणार्हस्य—मस्तक-धारणयोग्यस्य, महातपत्रस्य —उत्कृष्टच्छत्रस्य, महार्णवात्—गभीरसागरात्, कुमुदबान्धवस्य इव—चन्द्रस्य इव, कुमारात्—तदाख्यकामरूपाधिपात्। उपकृतयः,—परोपकरणानीति यावत्, महतः —सत्पुरुषाणां, बालविद्याः,- बालाः,—प्रथमारब्धाः, विद्याः,—ज्ञानानि, अध्ययनानीति यावत्, यद्वा,—बालानां—शिशूनां, विद्याः,—पाठाभ्यासाः, इवेति शेषः, महान्तो हि प्रथममेव परोपकारः अवश्यकर्त्तव्यः इत्येव ज्ञानमर्ज्जयन्ति, यद्वा,—शिशवो यथा अनन्यकर्म्माणः सन्त

इति। (२४०) अपनीते च तस्मात् प्रदेशात् प्राभृतसम्भारे, क्षणम् इव स्थित्वा,—"हंसवेग ! विश्रम्यताम्" इति प्रतीहारभवनं विसर्ज्जयाम्बभूव। स्वयमपि उत्थाय स्नात्वा मङ्गलाकाङ्क्षी प्राङ्मुखः प्राविशत् आभोगस्य छायाम्।

अथ विशत एव अस्य (२४१) छायाजन्मना जडिम्ना चूड़ामणिताम् अनीयत इव शशिबिम्बम्। (२४२) अम्बु-बिन्दुमुचः चुचुम्बुः इव चन्द्रकान्तमणयो ललाटतटम्। कर्पूररेणव इव व्यलीयन्त लोचनयुगले। (२४३) गल-त्तुहिनकणनिकरकृतनीहारा हारा इव अबध्यन्त।

केवल विद्यामेवाध्यस्यन्ति, महान्तोऽपि तथैव सर्वकर्म्म परित्यज्य परोपकारनिरताः भवन्ति, अतो मदुपकारार्थं परोपकारनिरतस्य कुमारस्य एव दानं न विस्मयजनक-मिति भाव ।

(२४०) प्राभृत भारे—उपदासङ्घे, उपढौकनद्रव्यसमूहे इत्यर्थः, अपनीते—अपसारिते, भाण्डागारं प्रापिते इति भावः। प्रतीहारभवनं—दौवारिका-वासम्, यद्वा,—प्रतीहारे—द्वारि, बहिर्द्वारसमीपे इत्यर्थः, भवनम्—आगारं, दूत-निवासमिति भाव। आभोगस्य—तदाख्यस्य महातपत्रस्य।

(२४१) विशत.—प्रविशत इत्यर्थः, अस्य—हर्षस्य, [ सम्बन्धे षष्ठी, चूडा-मणिताम् इत्यनेन सम्बन्ध ] छायाजन्मना—अनातपजातेन, छत्रस्येति शेषः, जडिम्ना—जाड्येन, शैत्येन कर्त्तृभूतेन इत्यर्थ, शशिविम्ब—चन्द्रकिरण इत्यर्थ, [ मुख्ये कर्म्मणि प्रथमा ] छायाजन्मना जडिम्ना घनीभूतमिति यावत्, पूर्व्वोक्तः प्रतिबिम्ब छायाया शैत्यहेतो छत्राभ्यन्तर प्रविशन् एकैक शीतरश्मिरिति भाव, चूडामणिता —मुकुटरत्नता, [ गौणे कर्म्मणि द्वितीया ] हर्षस्य मुकुटे प्रतिफलनादिति भाव ।

(२४२) अम्बविन्दुमुच,—जलकणस्राविण । चुचुम्बुरिव—पस्पृशुरिव। कर्पूर-रेणव,—घनसाररजांसि, लोचनयुगले—नेत्रयुग्मे, व्यलीयन्त इव—विलीनाः अभवन् इव, आश्लिष्यन् इवेत्यर्थः, [ लीयते दैवादिकस्य कर्म्मणि लङि रूपम् ]।

(२४३) गलदिति। - गलद्भि,—स्रवद्भि, तुहिनकणाना—हिमविन्दूना, निकरैः,—समूहै, तुहिनकरकिरणसमुद्भूतैरिति भाव., कृता,—विरचिताः, नीहारा,—हिमकणा येषु तथाविधा, हिमकणनिर्मिता इत्यर्थ., [ अत्र "नीहारा

(२४४) हरिचन्दनरसासारेण इव अपाति सन्ततम् उरसि। कुमुदमयम् इव हृदयम् अभवत् अतिशिशिरम्। अन्तर्हितहिमशिला इव विलीयमाना व्यलिम्पत् अङ्गानि। जातविस्मयश्च अकरोत् मनसि, (२४५) "एकमजर्य्यं सङ्गतम् अपहाय काऽस्ति अन्या प्रतिकौशलिका?" इति। आहारकाले च हंसवेगाय (२४६) धवलकर्पटप्रावृतधौतनारिकेलपरिगृहीतं विलिप्तशेषं चन्दनम् अङ्गस्पृष्टे च वाससी (२४७) शरत्तारकाकारतारमुक्तास्तवकितपट्टं परिवेशं नाम कटिसूत्रम्

---

हारा इव" इत्यत्र "नीहारहारा इव" इति समीचीनतया प्रतिभाति; तेन गलद्भिः तुहिनकणनिकरैः कृताः नीहारहाराः,—तुहिनरचितहारा इवेत्यर्थः] अवध्यन्त—कण्ठे समसज्यन्तेति भावः, [बध्नाति कर्म्मणि लङि रूपम्]।

(२४४) हरिचन्देति।—हरिचन्दनरसानाम्—चन्दनविशेषद्रवाणाम्, आसारः,—धारासम्पातः तेनेव, सन्ततम्—अजस्रम्, उरसि—वक्षसि, अपाति—पतितम्, [पततेः कर्म्मणि लुङि रूपम्]। कुमुदमयमिव—कैरवमयमिव, अतिशिशिरम्—अतिशीतलम्। विलीयमाना—द्रवीभवन्ती, अन्तर्हिता हिमशिला इव—अदृश्यकरका इवेत्यर्थः।

(२४५) एकम्—केवलम्, अजर्य्यम्—अक्षय्यम्, सङ्गतम्—मैत्रीम्, अपहाय त्यक्त्वा, अन्या—अपरा, प्रतिकौशलिका—प्रत्युपकृतिः, का अस्ति?—नैव काऽप्यस्तीत्यर्थः, कौशलमकृत्रिमं सख्यमेव अस्य प्रतिदानं, नान्यत् किमपि वस्तु इति भावः।

(२४६) धवलेति।—धवलेन—धौतेन इत्यर्थः, कर्पटेन—वस्त्रेण, प्रावृतः,—आच्छादितः, यः धौतः,—मृष्टः, विशुद्ध इत्यर्थः, नारिकेलः,—नारिकेलसमुद्गक इत्यर्थः, [ "नारिकेल" इत्यत्र "नालिकेर" इति पाठेऽपि स एवार्थः ] तेन परिगृहीतम्—तत्रार्पितमिति यावत्, विलिप्तशेषं—स्वानुलिप्तावशिष्टमित्यर्थः, अङ्गस्पृष्टे—अङ्गधृते, स्वपरिधानयोग्ये इत्यर्थः, स्वाङ्गानुलेपनावशिष्टचन्दनप्रदानं तथा स्वाङ्गस्पृष्टोचितवासप्रदानञ्च अनुग्रहातिशय्यप्रदर्शनार्थं, राजयोग्यवसनादिरूपप्रसादप्राप्तेः सम्मानबोधकत्वादिति भावः।

(२४७) शरदिति।—शरदः,—शरत्कालीनाः, तारकाः,—नक्षत्राणि, तासाम् आकारा इव—मूर्त्तय इव, मेघाद्यावरणराहित्यात् अतिसमुज्ज्वला इति भावः, ताराः,—महत्यः, या मुक्ताः,—मुक्ताफलानीत्यर्थः, तैः स्तवकितम्—ग्रथितं, पट्टम्—

(२४८) अतिमहाऽर्हपद्मरागालोकलोहितीकृतदिवसञ्च तरङ्गकं नाम कर्णाभरणं प्रभूतञ्च भोज्यजातं प्राहिणोत्। एवं प्रायेण च क्रमेण जगाम दिवसः।

ततः (२४९) कटकस्थबलबहलधूलिधूसरितवपुरंशुमाली मलीमसम् अङ्गमिव क्षालयितुम् अपरजलनिधिम् अवातरत्। (२५०) आभोगाऽऽतपत्रप्रदानवार्त्तामिव निवेदयितुं वरुणाय वारुणीं दिशम् अयासीत्। (२५१) मुकुलायमानसकलकमलवना प्रमुख एव बद्धबिम्बाञ्जलिपुटा इव सदीपा भूः

---

अवयव इत्यर्थः यस्य तथाभूत, परिवेश नाम—परिवेश इत्याख्यं, परिधिरूपत्वादिति भाव'।

(२४८) अतीति।—अतिम ऽर्हस्य—महामूल्यस्य, पद्मरागस्य—रत्नविशेषस्य, कर्णाभरणनिहितस्य इति भाव', आलोकेन—उद्योतेन, लोहितीकृत',—रक्तीकृतः, दिवस,—दासर येन तथाभूत, तरङ्गक नाम—तरङ्गकेतिसंज्ञकम्, आन्दोलनादिति भाव, कर्णाभरण—कुण्डलम्।

(२४९) कटकेति।—कटकं—हस्त्यश्वरथपादातसन्निवेश', तस्मिन् तिष्ठतीति कटकस्थ, यत् बलं—सैन्य, तस्य बहलाभि,—प्रभूताभिः, धूलिभिः,—रजोभिः, सैन्याना पदनिक्षेपवेगोत्थिताभिरिति भाव, धूसरितम्—आपाण्डुरीकृत, वपु,—शरीर यस्य तथाभूत अंशुमाली—सूर्य'। मलीमस—मलिन, सैन्यपदोत्थरजःसम्पर्कादिति भावः। अपरजलनिधि—पश्चिमसागरम्।

(२५०) आभोगेति।—आभोगातपत्रम्—आभोगनामक छत्रं, तस्य प्रदानम्—अर्पण, कुमाराय प्राभृतीकरणमित्यर्थः, तस्य वार्त्ता—संवाद' तामिव। वरुणाय—प्रचेतसे पश्चिमाशाऽधिपतये इति भाव'। वारुणी—वरुणाधिष्ठिता, प्रतीचीमित्यर्थः, सूर्यस्य तस्या एव अस्तगमनादिति भावः। अत्र आभोगातपत्रस्य वारुणतया अधिपतिं वरुणमन्तरेण कथ तदुपभोग' राज्ञा हर्षेण क्रियते ? कथ वा अन्यस्य वस्तु अन्येनापरस्मै दीयते इति वार्त्ता वरुणाय विज्ञापयितुमेव वारुणदिक्प्रयाणं तपनस्य इत्युत्प्रेक्षितम्।

(२५१) मुकुलायमानेति।—मुकुलायमानं—निमीलदिति भाव', सकल—समग्र, कमलवन—पद्मकानन यस्या यस्या वा तथाभूता, सदीपा—प्रदीपसहिता, भूः

अभूत् भूपतेः। (२५२) नृपानुरागमय इव निखिलजीवलोक-लोकाञ्जलिबन्धबन्धुर्जगत् जग्राह सन्ध्यारागः। (२५३) गौडाप-राधशङ्किनी इव श्यामतां प्रपेदे दिक् प्राची। (२५४) प्रचित-तिमिरनिवहा निर्वाणान्यनृपप्रतापानलकलापा इव कालि-मानम् अतानीत् मेदिनी। (२५५) मेदिनीशप्रदोषास्थान-पुष्पनिकरम् इव (२५६) विकचतगररुचिरम् अवचकरुः

बद्धसेवाञ्जलिपुटा इव—सेवार्थं रचितकरद्वयसंयोगा इव इत्यर्थः, प्रमुखे एव अग्रे एव।

(२५२) नृपेति।—नृपे—राजनि, हर्ष इति यावत्, अनुरागमयः,—प्रीति-पूर्णः। निखिलेति।—निखिलस्य—सकलस्य, जीवलोकस्य—संसारस्य, लोकाना—नराणाम्, अञ्जलिबन्धस्य—करद्वयसंयोगस्य, बन्धुः,—मित्र, संयोगघटकत्वादिति भाव, कृताञ्जलिभिः लोकैः सन्ध्या उपास्यते इति तात्पर्यम्। जगत्—भुवनं, जग्राह—व्याप्तवान, सन्ध्याकालः संवृत्त इति भावः।

(२५३) गौडेति।—गौडस्य—गौडराज्याधिपस्य इत्यर्थः, अपराधात्—दोषात्, राज्ञः सोदरवधजनितादिति भावः, शङ्कते—बिभेतीति तथोक्तेव, प्राची—पूर्वा, श्यामता—मलिनता, प्रपेदे—प्राप, अस्तोन्मुखसूर्यस्य आलोहित्येन पश्चिमदिशायाः औज्ज्वल्यात् पूर्वाशा निष्प्रभा जाता इति भावः।

(२५४) प्रचितेति।—प्रचित,—उदितः, सञ्चित इत्यर्थः, तिमिरनिवहः,—अन्धकारनिचयः यस्याः सर्वा वा तथोक्ता। निर्वाणेति।—निर्वाण,—शान्त, विनष्ट इत्यर्थ, अन्येषाम्—इतरेषा, हर्षविपक्षाणामिति भाव, नृपाणा—राज्ञां प्रतापानल कलाप,—प्रभावाग्निसमूहः यस्याः तथाभूता इव, निर्वाणाग्नेः कृष्णवर्णाङ्गाररूपेण परि-णमनादिति भाव, कालिमानं—कृष्णत्वं, तिमिराच्छन्नत्वमिति भाव, अतानीत्—विस्तारयामास।

(२५५) मेदिनीति।—मेदिनीशस्य—भूपतेः, प्रदोषास्थाने—रजनीमुख-सभामण्डपे, सायमुपवेशनार्हसमितिस्थानमिति यावत्, तस्य पुष्पनिकरं,—कुसुम-निचयं, मण्डपशोभावर्द्धनार्थं परिचारकवर्गैः स्थापितं इति भावः तमिव।

(२५६) विकचेति।—विकचैः,—प्रस्फुटितैः, तगरैः,—पुष्पविशेषैः, रुचिर—मनोज्ञं, विकचानि—प्रस्फुटानि, तगराणि—तदाख्यकुसुमानि, तद्वत् रुचिरं—मनो०

उडुनिकरम् अविरलं ककुभः। (२५७) स्कन्धावार-गन्धगजमदाऽऽमोदधावितस्य इव मार्गो वियति विरराज रजःपाण्डुः ऐरावतस्य। (२५८) कुपितनृपव्याघ्राघ्राताम् उपसृष्टाम् इव पौरुहूतीं विहाय विहायस्तलम् आरुरोह रोहिणीरमणः। (२५९) प्रयाणवार्त्ता इव मानिनीनां हृदयभेदिन्यो ययुः इन्दुदीधितयो दश दिशः।

---

इदञ्च। अविरलं—सान्द्रम्, उडुनिकरं—नक्षत्रनिचयं, ("नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इत्यमरः) ककुभः,—दिशः, अवचकार,—आविश्चक्रुः, बहूनि नक्षत्राणि समुदितानीति समुदितार्थः।

(२५७) वियति—आकाशे, स्कन्धावारेति।—स्कन्धावारस्य—कटकस्य, ये गन्धगजाः,—गन्धप्रधाना हस्तिनः, तेषां मदाऽऽमोदेन—दानवारिसौरभेण, धावितस्य इव—विद्रुतस्य इव, तं प्रति क्रोधादिति भावः, ऐरावतस्य—स्वनामप्रसिद्धस्य इन्द्रगजस्य। रजःपाण्डुः,—रजोभिः,—धावनवेगेन उत्थितैः पांशुभिः इत्यर्थः, पाण्डुः,—धवलः, मार्गः,—पन्थाः, आकाशमार्ग इत्यर्थः, विरराज—शुशुभे, चन्द्रिकाधवलो वियन्मार्गः ऐरावतरजःपाण्डुरिव विरराज इति भावः।

(२५८) रोहिणीरमणः,—चन्द्रः, रोहिणी—गौः, ("माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी। अर्जुन्यघ्न्या रोहिणी" इत्यमरः) तस्या रमणः,—धवः, पतिरित्यर्थः, वृषभ इति यावत् ("रमणं पटोलमूले नार्य्यां स्त्री ना धवे स्मरे" इति मेदिनी) कुपितेति।—कुपितेन—क्रुद्धेन, नृपव्याघ्रेण—राजश्रेष्ठेन, शार्दूलाधिपेन च, ("स्युरुत्तरपदे व्याघ्र-पुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः॥" इत्यमरः) आघ्राताम्—आक्रान्तेति यावत् ताम्, गौडदेशस्य पूर्व्वदिग्व्यवस्थितत्वादिति भावः, अत एव उपसृष्टामिव—उपद्रुतामिव, पौरुहूतीं—पुरुहूतेन—इन्द्रेण अधिष्ठिताम्, प्राचीमित्यर्थः, [ "इन्द्रो मरुत्वान्मघवा…। …पुरुहूतः पुरन्दरः॥" इत्यमरः। "पौरुहूतीम्" इत्यत्र "पौरुष्टुतीम्" इति पाठेऽपि स एवार्थः ] विहायस्तलम्—अन्तरीक्षतलं, ("नभोऽन्तरीक्षं गगनम्…। …पुंस्याकाश-विहायसी॥" इत्यमरः) वृषभश्च कुपितव्याघ्रशालिनीं सोपद्रवां दिशं विहाय स्थानान्तरं गच्छतीति भावः।

(२५९) मानिनीनां—प्रियान् प्रति प्रणयकोपवतीनां, हृदयभेदिन्यः,—चित्तव्यथाः

(२६०) न दण्डयात्रात्रासातुरा इव तरलितसत्त्ववृत्तयः चुक्षुभुः पतयो वाहिनीनाम्। (२६१) चिन्तेव भूभृतां हृदयानि विवेश गुहाविवराणि विमुक्तसर्व्वोर्वी-तिमिरसन्ततिः। प्रतिसामन्तचक्षुषाम् इव ननाश निद्रा कुमुदवनानाम्।

अस्याञ्च वेलायां (२६२) विततवितानतलवर्त्ती नरेन्द्रः,—"यात तावत्" इति विसर्ज्य अनुजीविनो हंसवेगम् आदिष्टवान्,—"कथय सन्देशम्" इति। प्रणम्य स कथयितुं प्रास्ता-

---

दायिन्यः, भर्तॄणां भटानां युद्धगमनेन विरहाशङ्कित्वात्, उद्दीपकत्वाच्चेति भावः, इन्दुदीधितयः,—चन्द्रकिरणाः, प्रयाणवार्त्ता इव—युद्धयात्राप्रवृत्तय इव।

(२६०) नवेति।—नवस्य—नूतनस्य, नवाभिषिक्तस्य इति यावत्, नृपस्य—हर्षस्य, दण्डयात्रा—युद्धप्रयाणं, तया त्रासः,—भीतिः, तेन आतुरा इव—कातरा इव, अत एव तरलितेति।—तरलिता—चलिता, शिथिलिता च, सत्त्वानां—प्राणिनां, सत्त्वस्य—सत्त्वगुणस्य, सत्त्वगुणकार्य्यधैर्य्यस्य इत्यर्थश्च, ("सत्त्वं गुणे पिशाचादौ बले द्रव्य-स्वभावयोः। आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु॥" इति मेदिनी) वृत्तिः,—व्यवहारः येषां तथाभूताः, वाहिनीनां—सैनिकानां, रिपुपक्षीयाणामिति भावः, तरङ्गिणीनाञ्च, नदीनाञ्चेत्यर्थः, ("वाहिनी स्यात्तरङ्गिण्यां सेना-सैन्यप्रभेदयोः" इति मेदिनी) पतयः,—स्वामिनः, राजानः, समुद्राश्चेत्यर्थः, चुक्षुभुः,—विव्यथिरे, पस्फायिरे च, चन्द्रोदयदर्शनेन समुद्रक्षोभः प्रसिद्ध एव।

(२६१) भूभृतां—राज्ञां, पर्व्वतानाञ्च। गुहाविवराणि—कन्दराभ्यन्तराणीत्यर्थः। विमुक्तेति।—विमुक्ता—त्यक्ता, सर्वा—समग्रा, उर्वी—पृथ्वी यया तथाभूता, तिमिरसन्ततिः,—अन्धकारसमूहः। ["विमुक्तसर्व्वोर्वीतिमिरसन्ततिः" इत्यत्र "विमुक्तसर्वाशातिमिरसन्ततिः" इति पाठे,—विमुक्ताः सर्वाः आशाः,—दिशः यया तथाभूता तिमिरसन्ततिः] चन्द्रोदयेन अन्धकारः दूरीभूतः इति समुदितार्थः। प्रतिसामन्तचक्षुषामिव—प्रतिपक्षनृपतिनयनानामिव। निद्रा—सङ्कोचः, स्वापश्च; ननाश—नष्टा, चन्द्रोदयात्, हर्षभयाच्चेति भावः।

(२६२) विततेति।—विततस्य—उपरि विस्तृतस्य, वितानस्य—उल्लोचस्य, चन्द्रातपस्येत्यर्थः, ("अस्त्री वितानमुल्लोचः" इत्यमरः) तलवर्त्ती—अधःस्थितः

वीत्,—"देव ! पुरा ( २६३ ) वराहसम्पर्कसम्भूतगर्भया भगवत्या भुवा नरको नाम सूनुः असावि रसातले। वीरस्य यस्य अभवन् बाल्य एव पादप्रणामप्रणयिनः चूड़ामणयो लोकपालानाम्; यस्य च ( २६४ ) त्रिभुवनभुजो भुजशौण्डस्य भवनकमलिनीचक्रवाकीकोपकुटिलकटाक्षेक्षितोऽपि ( २६५ ) भयचकिताऽरुणपरिवर्त्तितरथो न आज्ञया विना रविः अस्तम् अव्राजीत्; यस्य वरुणस्य ( २६६ ) वहिर्वृत्ति हृदयम् इदम् आतपत्रम् अहार्षीत्। महात्मनः तस्यान्वये भगदत्तपुष्पदत्त-

---

यात—गच्छत। अनुजीविनः,—परिजनान्, विसर्ज्य—परित्यज्य, सम्प्रेष्येति यावत्, स्थानान्तरमिति भाव। सन्देशं—वाचिकम्। प्रास्तावीत्—प्रचक्रमे।

(२६३) वराहेति।—वराहः,—भगवतो विष्णोरवतारविशेषः, तस्य सम्पर्केण—सङ्गेन, सम्भूतः,—सञ्जातः, गर्भः,—भ्रूणः यस्याः तथाभूतया, भुवा—पृथिव्या, नरकः,—तन्नाम्ना प्रसिद्ध, सूनुः,—पुत्रः, असावि—प्रसूतः। यस्य—नरकस्य, लोकपालानाम्—इन्द्रादीनाम्, चूडामणयः,—मुकुटरत्नानि, पादेति।—पादयोः,—चरणयोः, प्रणामे—नमस्कृतौ, प्रणयाः,—आसक्ताः इत्यर्थः, सन्ति एषामिति तथोक्ताः; नियतनरकचरणप्रणतिपरायणा इत्यर्थः, येन लोकपालाः सर्वे निर्जिता इति भावः।

( २६४ ) त्रिभुवनभुजः,—त्रिलोकीभोगिनः, त्रिलोकीश्वरस्य इति यावत्, भुजशौण्डस्य—भुजेन—बाहुना, बाहुबलदर्पेणेति यावत्, शौण्डस्य—मत्तस्य, बाहुबलशालिन इति यावत्, ( "मत्ते शौण्डोत्कटक्षीवाः" इत्यमरः ) भवनेति।—भवनकमलिनी—गृहसरसि पद्मिनी, गृहसमीपस्था पुष्करिणी वा, तत्र या चक्रवाकी—चक्रवाकवधूः, तस्याः कोपेन—क्रोधेन, कुटिलः,—वक्रः, यः कटाक्षः,—अपाङ्गदर्शनं, सूर्य्यास्तगमने तस्या विरहोत्पत्तेरवश्यम्भावितया तद्गमननिवारणार्थं सकोपदर्शनमिति भावः, तेन ईक्षितोऽपि—दृष्टोऽपि, अस्तगमनोन्मुखोऽपि इति भावः।

( २६५ ) भयेति।—भयेन—भीत्या, चकितः,—त्रस्तः, योऽरुणः,—तदाख्यः स्वसारथिः, तेन परिवर्त्तितः,—प्रत्यावर्त्तितः, रथः,—स्यन्दनं यस्य तथाभूतः। अव्राजीत्—अगमत्।

( २६६ ) वहिर्वृत्ति—वहिःस्थितम्, अतिप्रियमिति भावः। अहार्षीत्,

भगदत्तप्रभृतिषु व्यतीतेषु बहुषु (२९७) मेरूपमेषु महत्सु महीपालेषु, प्रपौत्रो महाराजभूतिवर्म्मणः, पौत्रः चन्द्रमुखवर्म्मणः, पुत्रो देवस्य कैलासस्थिरस्थितेः स्थितिवर्म्मणः सुस्थिरवर्मा नाम महाराजाधिराजो जज्ञे तेजसां राशिः, मृगाङ्क इति यं जना जगुः। (२९८) यो यमजेनेवाजायत सहैवाहङ्कारेण। यश्च बाल एव प्रीत्या (२९९) द्विजातीन् अप्रीत्या च अरातीन् समग्रान् प्रतिग्रहान् अग्राहयत्;

---

मत्वपूर्व्वकमग्रहीदित्यर्थः। तस्य—नरकस्य, अन्वये—वंशे। व्यतीतेषु—अतिक्रान्तेषु, परलोक प्रस्थितेषु इत्यर्थः।

(२९७) मेरूपमेषु—सुमेरुतुल्येषु, धनमानाद्युच्चत्वादिभिरत्युन्नततयेति भावः। महत्सु—प्रवरेषु, महीपालेषु—राजसु। कैलासेति।—कैलासे—तदाख्ये शिवाऽऽवासभूते पर्व्वते, स्थिरा—निश्चला, निश्चयात्मिका इति यावत्, स्थितिः,—अवस्थानं यस्य तथाभूतस्य, स्वकीयशुभकर्म्मबलात् अवश्यमेव शिवपार्षदो भूत्वा कैलासे चिरावस्थानं कुर्व्वत इति भावः, पुण्यवतः इति तात्पर्य्यम्। महेति।—महाराजेषु—श्रेष्ठनृपतिष्वपि, अधि—अधिकः, उत्कर्षवानित्यर्थः, राजा—नृपतिः तथाभूतः, सार्वभौम इत्यर्थः, जज्ञे—बभूव। मृगाङ्कः,—चन्द्रः, तद्वत् जगतां प्रीत्युत्पादकत्वात् इति भावः, एतेन स अतीव प्रजारञ्जनपरायण आसीत् इति सूच्यते, जगुः,—कीर्त्तयामासुः।

(२९८) यः,—मृगाङ्कापरनामा सुस्थिरवर्म्मा इति यावत्, यमजेनेव—युग्मजातेनेव, अहङ्कारेण सहैवोत्पन्नत्वादिति भावः, अहङ्कारेण—अभिमानेन, सहैव अजायत—उदपद्यत, अहङ्कारः स च युगपदेव अवतीर्ण इत्यर्थः, स अतीव अभिमानी आसीदिति भावः।

(२९९) प्रतिग्रहान्—द्विजेभ्यो विधिवद्देयान्, यथाविधि दानीयद्रव्याणीति यावत्, सैन्यपृष्ठानि च, अरातिसैन्यानि रणभूमौ पृष्ठप्रदर्शनपराणीत्यर्थः, पराजयव्यलीकानीति भावः, ("प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे। द्विजेभ्यो विधिवद्देये तद्ग्रहे च ग्रहान्तरे॥" इति मेदिनी) प्रीत्या द्विजान् दानीयद्रव्यस्वीकरणरूपप्रतिग्रहान् अग्राहयत्; शत्रूंश्च अप्रीत्या सेनानां पश्चाद्भागाश्रयणरूपप्रतिग्रहान् अग्राहयत् इति निष्कर्षः, स दानशीलः वीर्य्यवांश्चासीदिति तात्पर्य्यम्।

(२७०) यत्र च अतिदुर्लभं लवणालयसम्भूतायाः परं माधुर्य्यम् अभूल्लक्ष्म्याः तथा च यो (२७१) वाहिनीनाथानां ग्रहान् जहार, न रत्नानि; पृथिव्याः स्थैर्य्यं जग्राह, न करम्; (२७२) अवनिभृतां गौरवमादत्त, न नैठुर्य्यम्। तस्य च सुगृहीतनाम्नो देवस्य देव्यां श्यामादेव्यां भास्करद्युतिर्भास्करवर्माऽपरनामा तनयः शन्तनोर्भागीरथ्यां भीष्म इव कुमारः समभवत्। अयम् (२७३) अस्य च शैशवादारभ्य सङ्कल्पः स्थेयान् स्थाणुपादारविन्दद्वयादृते न अहम् अन्यं नमस्कुर्य्यामिति; ईदृशश्च अयं मनोरथः त्रिभुवनदुर्लभः त्रयाणाम् अन्यतमेन सम्पद्यते; सकलभुवनविजयेन

---

(२७०) यत्र—यस्मिन् राजनि। लवणालयसम्भूतायाः,—लवणसागरसमुत्पन्नायाः, लक्ष्म्याः,—श्रियाः, स परं श्रीमान् नासीदिति भावः।

(२७१) वाहिनीनाथानां—प्रतिपक्षसेनापतीनां, समुद्राणाञ्च, ग्रहान्—युद्धारम्भे बाध्यमानान् विजयग्रहान्, समुद्रगर्भस्थान् कच्छूंश्च इत्यर्थः, जहार—शत्रून् विजित्य बलपूर्वकं जग्राह, समुद्रात् सञ्जग्राह च। स्थैर्य्यं—चिरस्थितिम्। करं—राजग्राह्यभागं, धीरः सः स्वधैर्य्येण पृथिवीमपि अतिचक्राम इति भावः।

(२७२) अवनिभृतां—राज्ञां, पर्वतानाञ्च, गौरवं—सम्मानं, गुरुत्वमित्यर्थश्च; नैठुर्य्यं—क्रूरत्वं, काठिन्यञ्च, राज्ञां सम्मानं ननाश, तथा पर्वतवत् सारवानासीत् इति भावः। सुगृहीतनाम्नः,—प्रातःस्मरणीयस्य, तस्य—सुस्थिरवर्म्मणः। भास्करद्युतिः,—सूर्य्यवत् तेजस्वी। शन्तनोः,—तदाख्यस्य चन्द्रवंशीयनृपभेदस्य। कुमारः,—कुमार इत्याख्यः।

(२७३) अस्य—भास्करवर्म्माऽपराख्यस्य कुमारस्य। स्थेयान्—अतिस्थिरः, दृढतर इति यावत्, सङ्कल्पः,—अभिलाषः, वासनेति यावत्। स्थाणोः इति।—स्थाणोः,—हरस्य, ("हरः स्मरहरो भर्गः ··· । ···स्थाणू रुद्र उमापतिः॥" इत्यमरः) पादारविन्दद्वयात्—चरणकमलयुगलात्, ऋते—विना। त्रिभुवनदुर्लभः,—त्रिजगद्वासिभिः दुष्प्राप इत्यर्थः। त्रयाणां—सकलभुवनेत्यादिना वक्ष्यमाणानां त्रिविधानामित्यर्थः, अन्यतमेन—केनचिदेकेन, सम्पद्यते—घटते। सकलभुवनविजयेन—त्रिजगद्वशीकरणेन, त्रिभुवनं विजेतुं समर्थश्चेत् न कमपि नमस्कुर्य्यात्, तमेव सर्वे नमस्करिष्यन्तीति भावः।

वा, मृत्युना वा, (२७४) यदि वा प्रचण्ड-प्रतापज्वलनदिग्दाहेन जगत्येकवीरेण देवोपमेन मित्रेण। मैत्री च प्रायः (२७५) कार्य्यव्यपेक्षिणी क्षौणीभृताम्। कार्य्यञ्च कीदृशं नाम तत् भवेत्, यत् (२७६) उपन्यस्यमानम् उपनयेत् मित्रतां देवम्। देवस्य हि यशांसि (२७७) सञ्चिचीषतो वहिरङ्गभूतानि धनानि। वाहावेव च केवले निषसस्य शेषावयवानामपि साहायकसम्पादनमनोरथो निरवकाशः, किमुत वाह्यजनस्य?

---

मृत्युना वा—मरणेन वा, इदानीमेव म्रियते चेत्, नान्यस्मै नमसः अवसरं लभेत इति भाव.।

(२७४) यदि वा—अथवा, प्रचण्डेति।—प्रचण्डेन—तीक्ष्णेन, प्रतापज्वलनेन—वीर्य्यवह्निना, दिशा—ककुभां, दाहः,—सन्तापः येन तथाभूतेन। देवोपमेन—देवसदृशेन, भवता तुल्येन इत्यर्थः, भवान् मित्रञ्चेत् तदा तत्साहाय्येन सर्वानेव विजेतुं शक्ष्यति स, तथात्वे न कोऽपि तस्य नमस्कारयोग्यः स्थास्यति इति भावः।

(२७५) कार्य्यव्यपेक्षिणी—कार्य्यानुरोधिनी। क्षौणीभृता—राज्ञाम्; परस्परोपकारादिना राज्ञां मित्रता जायते इति समुदितार्थः।

(२७६) उपन्यस्यमानं—कथ्यमानम्। उपनयेत्—प्रापयेत्; कीदृशेन पुनः कार्य्येणास्मत्स्वामी देवस्य मित्रता लब्धुं शक्नुयात्, तत् नाद्यापि निर्णीतं भवति इति सरलार्थः।

(२७७) सञ्चिचीषतः,—सञ्चेतुमिच्छतः, सञ्जिघृक्षत इत्यर्थः। वहिरङ्गभूतानि—वाह्यानि, हेयानीति यावत्, अनादरणीयानीति भावः; देवो हि यशसि एव कामुकः, न च तुच्छेषु धनेषु, अतो धनदानेन भवतो मैत्रीकामना दूरापास्ता इति तात्पर्य्यम्। वाहावेव—भुजयोर्य्ये एव, निषसस्य—उपविष्टस्य, निर्भरमवस्थितस्येत्यर्थः, शेषावयवानामपि—वाहुव्यतिरिक्तानाम् अन्येषामङ्गानामिति यावत्, साहायकसम्पादनमनोरथ,—साहाय्यकरणाभिलाष,, निरवकाशः,—अवकाशरहितः, निरर्थक इति भाव.; केवल वाहुबलेनैव देवेन यशांसि सञ्चितानि, तत्र चक्षुरादीनामन्येषामङ्गानामपि साहाय्यं नैव गृहीतमिति निष्कर्ष.। किमुत—किं पुनः, वाह्यजनस्य?—वहिःस्थितस्य सैन्यादे.? इति भावः।

(२७८) चतुःसागरग्रामग्रहस्मरस्य पृथिव्येकदेशदानोपन्यासेनापि का तुष्टिः? (२७९) अभिरूपकन्याविश्राणनविलोभनमपि लक्ष्मीमुखारविन्ददर्शनदुर्ललितदृष्टेः अकिञ्चित्करम्। एवम् (२८०) अघटमानसकलोपायसम्पादितपदार्थेऽस्मिन् प्रार्थनामात्रमेव केवलम् अनुरुध्यमानः शृणोतु देवः,—(२८१) प्राग्ज्योतिषेश्वरो हि देवेन एकपिङ्ग इव अनङ्गद्विषा,

(२७८) चतुःसागरेति।—चत्वारः सागराः,—समुद्राः, ससागरा मेदिनि इति यावत्, ग्रामाः इव—संवसथा इव, क्षुद्रप्रदेशाः इवेति यावत्, ["ग्राम—" इत्यत्र "ग्रास—" इति पाठे,—चत्वारः सागरा एव ग्रासाः,—कवलाः, चतुरम्भोधिवेष्टितमेदिनीग्रसनोद्यतस्य इत्यर्थः] तेषां ग्रहणे—आयत्तीकरणे, घस्मरः,—लोलुप इति भाव तस्य, यश्चतुरुदधिमेखलां पृथ्वीमपि क्षुद्रग्राममिव मन्यते, तस्येति भावः, पृथिवीति।—पृथिव्याः,—धरायाः, एकदेशस्य—एकांशस्य, स्वल्पप्रदेशस्य इति यावत्, दानोपन्यासेन—वितरणकीर्त्तनेन।

(२७९) अभिरूपेति।—अभिरूपायाः,—रम्यायाः, सुन्दर्याः इत्यर्थः, ("अभिरूपो बुधे रम्ये" इति मेदिनी) कन्यायाः,—कुमार्याः, विश्राणन—दान, ("त्यागो विहापितं दानमुत्सर्जनविसर्जने। विश्राणनम्—" इत्यमरः) तेन विलोभन—लोभप्रदर्शन, लक्ष्मीति।—लक्ष्म्याः,—कमलायाः, मुखारविन्दस्य—वदनसरोजस्य, दर्शनेन—अवलोकनेन, दुर्ललिता—दुर्विनीता, अन्यदर्शननिरभिलाषेति भावः, दृष्टिः,—नेत्रं यस्य तथाभूतस्य, नियतकमलालिङ्गितवक्षःस्थलतया अन्यसुन्दरीस्पृहाऽपि ते नास्ति, अतस्तत्प्रलोभनमपि न ते मैत्रीसाधनम् इति भावः।

(२८०) अघटमानेति।—अघटमानेन—योजयितुमशक्येन, दुर्घटेनेति यावत्, सकलेन—समग्रेण, उपायेन—साधनेन, सम्पादितं—कृतं, पदमेव—शब्द एव, अर्थः,—विषयः तस्मिन्, अनन्योपायसाध्ये इति भावः, अस्मिन्—भयन्मैत्रीकरणे इति भावः। अनुरुध्यमान,—अनुवर्त्यमानः, अनुनीयमाम इत्यर्थः, अस्माभिरिति शेषः, ("अनुरोधोऽनुवर्त्तनम्" इत्यमरः)।

(२८१) प्राग्ज्योतिषेश्वरः,—कामरूपेश्वरः, देवेन—महाराजाधिराजेन भवतेति भाव अनङ्गद्विषा—हरेण, एकपिङ्ग इव—एकम्—एकनेत्रमिति यावत् पिङ्ग—पिङ्गलं यस्य सः, कुबेर इव इत्यर्थः, ("कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः। यक्षैक-

दशरथ इव गोत्रभिदा, धनञ्जय इव पुष्कराक्षेण, (२८२) वैकर्त्तन इव दुर्य्योधनेन, मलयानिल इव माधवेन, अजर्य्यं सङ्गतम् इच्छति। यदि च देवस्यापि मैत्रीयति, हृदयम् अवगच्छति च पर्य्यायान्तरितं दास्यम् अनुतिष्ठन्ति सुहृद इति; ततः किमास्यते ? समाज्ञाप्यताम्, अनुभवतु विष्णोर्मन्दरगिरिः इव (२८३) विकटकेयूरकोटि-मणिविघट्टनक्वणितकटकमणिशिलाशकलानि गाढ़ोपगूढ़ानि देवस्य कामरूपाधिपतिः। (२८४) अस्मिन्नात्मनः अनवरत-विमललावण्यसौभाग्यसुधानिर्झरिणि मुखशशिनि चिरात्

---

पिङ्गलविलः" इत्यमरः) कुवेरो हि साकूयं गौरीं निरीक्ष्य तच्छापात् नष्टैकनेत्रो जातः, पुनः शिवप्रसादात् तच्चक्षुः पिङ्गलं जातमिति पौराणिकी वार्त्ता। गोत्रभिदा —इन्द्रेण, ("इन्द्रो मरुत्वान्मघवा ··। सुत्रामा गोत्रभिद्वज्री ··" इत्यमरः)। पुष्कराक्षेण—पुण्डरीकाक्षेण, कृष्णेनेत्यर्थः धनञ्जय इव—अर्जुन इव।

(२८२) वैकर्त्तन इव—सूर्य्यसुत कर्ण इव। माधवेन—वसन्तेन। अजर्य्यम् —अक्षय्यं, सङ्गतं—मैत्रीम्। मैत्रीयति—मैत्रीमिच्छति, स इति शेषः, तथाऽपि हृदयं—चित्तं, तस्येति भावः, सुहृदः—मित्राणि, पर्य्यायान्तरितं—पर्य्यायेण—एकार्थवाचकशब्दान्तरेण अन्तरितम्—आच्छन्नं, मैत्रीनाम्ना व्यवहितमित्यर्थः, दास्यं —कैङ्कर्य्यम्, अनुतिष्ठन्ति—आचरन्ति, इति अवगच्छति—जानाति च। ततः,—तस्मात्, मित्रताया अपि दास्यापरपर्य्यायकत्वादित्यर्थः, किम् आस्यते ?—किं तूष्णीं स्थीयते इत्यर्थः, अस्मत्प्रभुरिति शेषः, मित्रतामपि दास्यस्य नामान्तरं विदित्वा किं भवता सह मैत्री न करिष्यति ? इति भावः।

(२८३) विकटेति।—विकटस्य—उन्नतस्य, उज्ज्वलस्य वा, केयूरकोटिमणेः,—अङ्गदाग्रनिहितरत्नस्य, विघट्टनेन—सङ्घर्षेण, क्वणितानि—रणितानि, ["क्वणित—" इत्यत्र "कणित—" इति पाठोऽपि स एवार्थः] कटकस्य—नितम्बस्य, मन्दरगद्रेरिति यावत्, अङ्गदस्य च, मणिशिलाशकलानि—रत्नपाषाणखण्डानि येषु तथाभूतानि, गाढोपगूढानि—दृढालिङ्गनानि।

(२८४) अस्मिन्—परिदृश्यमाने, भवदीये इति यावत्, अनवरतेति।—

चक्षुषी लालयतु प्राग्ज्योतिषेश्वरश्रीः। न अभिनन्दति चेत् देवः प्रणयम् आज्ञापयतु, किं कथनीयं मया स्वामिनः?" इति।

(२८५) विरतवचसि तस्मिन् भूपालः पूर्व्वोपलब्धैरेव गुरुभिः गुणैः आरोपितबहुमानः कुमारे सुदूरमाभोगातपत्रव्यतिकरेण तु परां कोटिम् आरोपिते प्रेम्णि लज्जमान इव सादरं जगाद,—"हंसवेग! कथमिव तादृशि महात्मनि महाऽभिजने पुण्यराशौ गुणिनां ग्रामहरे परोक्षसुहृदि स्निह्यति मद्विधस्य अन्यथा स्वप्नेऽपि प्रवर्त्तेत मनः? (२८६) सकलजगदुत्तापन-

---

अनवरतम्—अविरतं, विमलं—स्वच्छं, लावण्यमेव—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तलक्षणसौन्दर्य्यविशेष एव, सौभाग्यं—सुभगत्व, नेत्ररञ्जनत्वमिति भावः तदेव सुधा—अमृतं, तस्या निर्झरः,—प्रस्रवः, तं स्रवति, मुखशशिनि—वदनचन्द्रे, प्रागिति।—प्राग्ज्योतिषेश्वरस्य—कामरूपाधिपस्य, श्रीः,—लक्ष्मीः, चिरात्—चिरकालम्, आतृप्तेः,—आसन्तोषम् आकाङ्क्षा पूरयित्वेत्यर्थः, चक्षुषी—नयने, लालयतु—प्रीणयतु, सन्तर्पयतु इत्यर्थः, चिर तृप्तिं लभताम् इति यावत्। प्रणय—प्रार्थन, न अभिनन्दति—न प्रशंसति, नानुमन्यते इत्यर्थः।

(२८५) तस्मिन्—हंसवेगे इत्यर्थः, विरतवचसि—तूष्णीम्भूते इत्यर्थः। पूर्व्वोपलब्धैः,—पूर्व्वविदितैः, गुरुभिः,—महद्भिः। कुमारे—तदाख्ये कामरूपेश्वरे, सुदूरम्—अत्यर्थम्, आरोपितबहुमानः,—जनितबह्वादरः, आभोगातपत्रव्यतिकरेण—आभोगाख्यच्छत्रप्रदानसम्पर्केणेत्यर्थः, प्रेम्णि—प्रणये, कुमारं प्रतीति भावः, परां कोटिं—परमोत्कर्षम्, आरोपिते—नीते। महाऽभिजने—महान्—श्रेष्ठः, अभिजनः,—कुलं यस्य तस्मिन्, ("सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ" इत्यमरः) महाकुलप्रसूते इत्यर्थः। ग्रामहरे—मुख्ये, श्रेष्ठे इत्यर्थः, ("मुख्यवर्य्यवरेण्याश्च ··। पराद्ध्याग्र्यप्राग्रहर ······" इत्यमरः)। परोक्षसुहृदि—अप्रत्यक्षमित्रे, अहेतुकसखे इत्यर्थः। स्निह्यति—स्नेहपरायणे, मयीति भावः। अन्यथा—विरुद्धमिति भाव, कथमिव—केन प्रकारेण, प्रवर्त्तेत?—प्रवृत्त भवेत्? तस्य प्रणयभङ्ग कर्त्तुं नैव शक्नुयादित्यर्थः।

(२८६) सकलेति।—सकलानां—समग्राणां, जगतां—भुवनानाम्, उत्ताः

पटवोऽपि शिशिरायन्ते त्रिभुवननयनानन्दकरे कमलाकरे कराः तिग्मतेजसः। सुबहुगुणक्रीताश्च के वयं स्वस्य? सज्जनमाधुर्य्याणामभृतदासो दश दिशः। (२८७) एकान्तावदातोत्तानस्वभावसम्भृतसादृश्यस्य कुमुदस्य कृते केनाभिहितः शिशिररश्मिः? श्रेयांश्च (२८८) सङ्कल्पः कुमारस्य। स्वयं बाहुशाली मयि च समालम्बितशरासने सुहृदि हराहृते कमन्यं नमस्यति? संवर्द्धिता मे प्रीतिः अमुना सङ्कल्पेन। अवलेपिनि पक्षौ अपि केसरिणि बहुमानो हृदयस्य, किं पुनः सुहृदि?

---

पने—सन्तापजनने, पटवः,—समर्थाः, तिग्मतेजसः,—सूर्य्यस्य, कराः,—किरणाः, एताश्च, त्रिभुवननयनानन्दकरे—त्रिलोकवासिनां नेत्रसुखप्रदे, कमलाकरे—पद्मसमूहे, शिशिरायन्ते—शीतलायन्ते। सुबहुगुणक्रीताः,—प्रभूतदाक्षिण्यविनयादिभिरात्मीकृता इत्यर्थः, ["सुबहुगुणक्रीताः" इत्यत्र "सुबहुगुणगणक्रीताः" इति पुस्तकान्तरधृतपाठस्तु न मनोरमः, सुबहुशब्देनैव गणार्थस्य गम्यमानत्वात्] स्वस्य—निजतायाः, प्रवरगुणवतस्तव गुणनिर्जिता भृत्यप्राया वयं खल्वित्यर्थः इति भावः। सज्जनमाधुर्य्याणां—सत्पुरुषाणां विनयादिपूर्णसुमधुराचरणानामित्यर्थः, अभृतदासः,—अवेतनकिङ्कर्यः; सर्वे एव आत्मानं सज्जनानां दासं मन्यन्ते इति निष्कर्षः।

(२८७) एकान्तेति।—एकान्तम्—अत्यन्तम्, अवदातेन—श्वेतेन, निर्म्मलेन च, उत्तानेन—उन्मुखेन, उन्नतेन च, स्वभावेन—प्रकृत्या, सम्भृतम्—अधिगतं, सादृश्यम्—उपमा, कुमारेण सहेति भावः येन तथाभूतस्य। कृते—निमित्तं, शिशिररश्मिः,—चन्द्रः इति केन अभिहितः?—कथितः? चन्द्रः केनाप्यनुपदिष्ट एव कुमुदस्य गुणेनैव प्रणयी जातः इत्यर्थः, कुमारस्य उदारगुणेनैवाकृष्टोऽहं तत्सङ्कल्पसाधनार्थं यतिष्यामीति भावः।

(२८८) सङ्कल्पः,—अभिलापः। बाहुशाली—भुजबलसम्पन्नः, वीर्य्यवानित्यर्थः। समालम्बितशरासने—सम्भृतकार्मुके। हराहृते—शिवं विना। नमस्यति—नमस्करोति। अवलेपिनि—गर्वशालिनि, गौरववतीति यावत्, मानशालिनीति भावः। केसरिणि—सिंहे। हृदयस्य—चेतसः, बहुमानः,—समादरः। सुहृदि—मित्रे, अवलेपिनि इति भावः, किं पुनः?—आत्मसम्मानरक्षणीयमवति पश्चाद्धि

तत् तथा यतेथाः, यथा न चिरमियम् अस्मान् क्लेशयति कुमार-दर्शनोत्कण्ठा" इति।

हंसवेगस्तु विज्ञापयाम्बभूव,—"देव! किमपरम् इदानीं क्लेशयति? (२८९) अभिजातम् अभिहितं देवेन। सेवाभीरवो हि सन्तः, तत्रापि विशेषेण अयम् अहङ्कारधनो वैष्णवो वंशः। आस्तां तावत् अस्मत्स्वामिवंशः। पश्यतु देवः, पुरुषस्य हि सेवां प्रति (२९०) दुर्जनन्या इव अतिहृद्या दुर्गत्या वा अभिमुखीक्रियमाणस्य, (२९१) कुटुम्बिन्या इव असन्तुष्टया तृष्णया वा प्रेर्यमाणस्य, दुरपत्यैः इव यौवनजनितैः नानाऽभिलाषिभिः असत्सङ्कल्पैर्वा आकुलीक्रियमाणस्य, (२९२) जरत्कुमारीमिव परमार्गणयोग्याम् अतिमहतीं वा अवस्थां पश्यतः स्वगृहे,

---

मम श्रद्धा जायते, तादृशसङ्कल्पवति सुहृदि कुमारे किं पुनर्वक्तव्यम्। अवश्यमेव समादरः तत्सङ्कल्पारचणप्रयत्नश्च करणीयः इति भावः। तथेति।—यथा इयं कुमारस्य दर्शनोत्कण्ठा चिरम् अस्मान् न क्लेशयति, तथा यतेथाः,—यत्नं कुरु, यथा शीघ्रं कुमारं द्रष्टुं शक्नुयां तथा कुर्विति भावः।

(२८९) अभिजातं—न्याय्यं, सुन्दरमित्यर्थः, ("अभिजातः कुलीने स्यान्न्याय्य-पण्डितयोरपि" इति मेदिनी)। सेवेति।—सेवायां—परपरिचर्यायां, भीरवः,—पराङ्मुखा इत्यर्थः। अहङ्कारधनः,—मानधन इत्यर्थः, वैष्णवः,—विष्णोः अवतारस्य वराहस्य अयमित्यर्थः, वंशः,—कुलं, विशेषेण, सेवाभीरुः इति शेषः।

(२९०) दुर्जनन्या इव—दुष्टया मात्रा इव, अतिहृद्या—अतिस्थिरया, अतिप्रबलया च, दुर्गत्या—दैन्येन, अभिमुखीक्रियमाणस्य—अभिमुखतां नीयमानस्य।

(२९१) कुटुम्बिन्या इव—गृहिण्या इव, असन्तुष्टया—अतृप्तया, असम्भृतया च, अपूर्णयेत्यर्थः, तृष्णया—धनलालसया, प्रेर्यमाणस्य—नियोज्यमानस्य। दुरपत्यैरिव—कुपुत्रैरिव, यौवनजनितैः,—यौवनकालोत्पन्नैः, नानाऽभिलाषिभिः,—विविधाशावद्भिः, असत्सङ्कल्पैः,—दुर्वासनाभिः, आकुलीक्रियमाणस्य—आकुलतां नीयमानस्य।

(२९२) जरत्कुमारीमिव—वयःस्थामदत्तां कन्यामिव, परमार्गणयोग्यां—परस्य—अन्यस्य पात्रस्य, धनस्वामिनश्च इत्यर्थः, मार्गणम्—अन्वेषणम्; यद्वा,—परस्य—श्रेष्ठस्य, पात्रस्येत्यर्थः, मार्गणम्—अन्वेषणं, परस्मै—अन्यस्मै, धनस्वामिने इत्यर्थः,

(२९३) दुर्बन्धुभिः इव दुःस्थितैः समग्रैः ग्रहैर्वा ग्राह्यमाणस्य अभियोगं, पुरातनैः अतिदुस्त्यजैः भृत्यैरिव (२९४) मलिनैः कर्म्मभिर्वा अनुवर्त्यमानस्य सकलशरीरसन्तापकरं करीषाग्निमिव दुष्कृतिनः क्षतचित्तस्य सम्प्रवेष्टुं राजकुलम्, (२९५) उपहतसकलेन्द्रियशक्तेरिव मिथ्या एव (२९६) हृदयगतविषयग्रासग्रहणाभिलाषस्य, प्रथममेव तोरणतले वन्दनमालाकिशलयस्य इव शुष्यतो द्वाररक्षिभिः निरुद्धस्य, पीड़ि-

---

मार्गणं—याच्ञा इति च, ("मार्गणो याचके शरे। याच्ञाऽन्वेषणयोः क्लीवम्" इति मेदिनी) तस्य योग्या—उपयोगिनी ताम्, अतिमहतीम्—अतिप्रवृद्धाम्, अवस्था—दशा दशामित्यर्थः, पश्यतः,—अवलोकयतः।

(२९३) दुर्बन्धुभिरिव—दुष्टैः ज्ञातिभिरिव, दुःस्थितैः,—दुर्गतैः, दुः,—दुष्टतया, विरुद्धत्वेन इति भावः, स्थितैश्च, समग्रैः,—सकलैः, ग्रहैः,—रव्यादिभिः, अभियोगम्—असद्भाव, ग्राह्यमाणस्य—प्राप्यमाणस्य।

(२९४) मलिनैः,—मालिन्यापादकैः, पापैरित्यर्थः, पूर्वकृतैरिति भावः। अनुवर्त्यमानस्य—अनुस्रियमाणस्य। दुष्कृतिनः,—पापिनः, सकलशरीरसन्तापकरं—सर्व्वाङ्गदाहजननमित्यर्थः, सर्वदेहपीडाजनकञ्च, राजपुरुषाणां परुषवचनात् अलवाहुल्यादिति वा भावः, करीषाग्निमिव—तुषानलमिव, राजकुलं—राजद्वारं, सम्प्रवेष्टुं—गन्तुमित्यर्थः, क्षतचित्तस्य—पिहितमानसस्य।

(२९५) उपहतेति।—उपहता—विलुप्ता, सकलानां—सर्वेषाम्, इन्द्रियाणां—चक्षुरादीनामित्यर्थः, शक्तिः,—सामर्थ्यं यस्य तथाभूतस्य, मिथ्या एव—वृथा एव, इन्द्रियाणां भोगशक्तेरभावादिति भावः।

(२९६) हृदयेति।—हृदयगतस्य—मनोरथोपस्थितस्य, न तु वस्तुतः समुपस्थितस्य इति भावः, विषयाणां—स्रक्चन्दनवनितादीनां भोग्यवस्तूनां, ग्रासस्य—समूहस्य, ग्रहणे—प्राप्तौ, अभिलाषः,—स्पृहा, यद्वा,—हृदयं गतः,—मनोरथमात्रेण पर्य्यवसितः, न तूपभोगसमर्थ इति भावः, विषयग्रामस्य ग्रहणे अभिलाषो यस्य तथाभूतस्य। प्रथमम् एव—आदौ एव, प्रवेशक्षणे एवेत्यर्थः, तोरणतले—बहिर्द्वारतलभूमौ, द्वाररक्षिभिः निरुद्धस्य—अवरुद्धस्य, अत एव वन्दनमालाकिसलयस्येव—वन्दनं—तोरणस्य मण्डनमित्यर्थः, तस्य माला—स्रक्, यद्वा,—वन्दनं—पूजनं, शोभासम्पादनमित्यर्थः, तोरणस्येति

तस्य प्रविशतो द्वारे हरिणस्य इव अपरैः हन्यमानस्य, (२८७) करिकर्मचर्मपुटस्य इव मुहुर्मुहुः प्रतीहारमण्डलकरप्रहारैः निरस्यमानस्य, (२८८) निधिपादपप्ररोहस्य इव द्रविणाभिलाषात् अधोमुखीभवतो दूरम्, अमार्गणस्य अपि अतिविप्रकृष्टविवृत्तविसर्जितस्य उद्वेगं व्रजतः,

भावः, तदर्थी माला, तस्यां तस्या वा यः किसलयः,—पल्लव. तस्य इव, ग्लायतः,—शोषं प्राप्नुवतः, क्षुत्पिपासाकुलत्वात् सूर्यातापाच्च इति भावः। पीडितस्य—वेत्रादिना ताडितस्य, प्रतीहारिभिरिति शेषः, अपरैः,—रक्षिपुरुषव्यतिरिक्तैः राजपरिजनैः इति भाव., हन्यमानस्य—ताड्यमानस्य।

(२८७) करीति।—करिणां—हस्तिनां, कर्म्मणे—युद्धशिक्षार्थमिति भावः, चर्मपुटस्य इव—चर्मनिर्मितहस्त्याकारस्य इव, कृत्रिमस्य इति भावः। प्रतीहारेति।—प्रतीहारमण्डलेन—दौवारिकसमूहेन, करप्रहारैः,—चपेटाघातैः इत्यर्थः, प्रतीहारेण—प्रतिसंहरणेनेत्यर्थः, शुण्डासङ्कोचनेन इति भावः, मण्डलं—मण्डलाकार इत्यर्थः यस्य तथाविधः, करः,—शुण्डादण्डः, तस्य प्रहारैः,—आघातैरिति च, निरस्यमानस्य—निराक्रियमाणस्य, दूरीक्रियमाणस्येत्यर्थः।

(२८८) निधिपादपप्ररोहस्य इव—निधिः,—भूतलनिहितधनराशिः, तत्र पादपप्ररोहः,—तस्य उपरि जातः यः वृक्षाङ्कुरः, वृक्षावरोह इत्यर्थो वा, तस्य इव। द्रविणाभिलाषात्—धनलालसातः, अधोमुखीभवतः,—प्रणतस्येत्यर्थः, अवाङ्मुखस्य च इत्यर्थः, याञ्चालाघवात् स्वभावाच्चेति भावः; यत्र भूतले निधयः तिष्ठन्ति, तदुपरिस्थवृक्षस्य शाखाऽवरोहादयः अत्यर्थमधोलम्बिनो भवन्ति इति प्रसिद्धिः। अमार्गणस्यापि—अयाचकस्यापि, अन्यत्र,—मार्गणः,—शरः, तद्भिन्नस्यापि, दूरविक्षेपानर्हस्यापि इति भावः, अतीति।—अतिविप्रकृष्टम्—अतिदूरं यथा तथा, विवृत्तः,—पराङ्मुखः, विसर्जितः,—विक्षिप्तश्च, राजपुरुषैरिति भावः; यद्वा,—अतिविप्रकृष्टैः,—अतिदूरवर्त्तिभिरित्यर्थः, राजकुलासंसृष्टैः प्राकृतैरिति भावः, विवृत्तः,—स्वत एव दर्शनं दत्त्वा नाम किमसि त्वमासि इत्याद्युक्त्या प्रकटित इत्यर्थः, पश्चात् विसर्जितः,—परित्यक्तः तस्य; अन्यत्र,—अतिविप्रकृष्टम्—अतिदूरं यथा तथा, आकर्णमिति यावत्, विवृत्तः,—वि—विशेषेण, वृत्तः,—स्थित इत्यर्थः, आकृष्ट इति यावत्, विसर्जितः,—क्षिप्तः तस्य। उद्वेगम्—आर्त्तिं, व्रजतः,—प्राप्नुवतः, नाहं धनाशया कर्म्मप्राप्त्याशया वा अत्रागतवान्, तथाऽपि

(२९९) कण्टकस्यापि चरणतललग्नस्य आकृष्य क्षेपीयः क्षिप्यमाणस्य, (३००) असमकरकेतोरपि अकालोपसर्पण-प्रकुपितेश्वरदृष्टिदग्धस्य प्रलयम् उप गच्छतः, (३०१) कपेरिव कोपनिर्भर्त्सितस्यापि अभिन्नमुखरागस्य, ब्रह्मघ्न इव प्रतिदिवस-वन्दनोद्घृष्टशिरःकपालस्य स्पर्शरहितस्य अशुभकर्माणि निर्वहतः,

---

त्वां राजद्वारोपस्थितैरेव याचकं मत्वा एवं व्यवहरन्ति राजपुरुषा इति त भावः ; उद्गतवेग गच्छतश्च ।

(२९९) कण्टकस्य—क्षुद्रशत्रोः, प्रभुतानिरहितस्यापीत्यर्थः, कण्टकभिन्नस्य च, ("कण्टको ना स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे । नैयायिकादिदोषोक्तौ स्याद्' रोमाञ्चद्रुमाङ्गयोः" ॥ इति मेदिनी) चरणतललग्नस्य—चरणनिपतितस्य, चरणतले' विद्धा स्थितस्य च, आकृष्य—धृत्वा, गले इति भावः, सन्दंशादिना आनीय इत्यर्थश्च, क्षेपीयः,—अतिक्षिप्रम् ।

(३००) असमकरकेतोः,—अकामस्य, अयाचकस्येत्यर्थः, मकरकेतुः,—कामः, तद्भिन्नस्य इत्यर्थश्च । अकालेति ।—अकाले—असमये, दर्शनायोग्यकाले, पार्वतीविरह-काले च इत्यर्थः, उपसर्पणम्—उपस्थितिः, तेन प्रकुपितस्य—क्रुद्धस्य, ईश्वरस्य,—प्रभोः, हरस्य च, दृष्ट्या—नेत्रविक्षेपेण, दग्धस्य—सन्तापितस्य, भस्मीकृतस्य च, प्रलयः,—प्र—प्रकर्षेण, लयः,—भित्त्यादिषु लीनत्वम्, अत एव प्रायेण नाश इत्यर्थः, नाशश्च तम् उपगच्छत,—प्राप्नुवतः ।

(३०१) कपेरिव—वानरस्य इव, कोपनिर्भर्त्सितस्य—क्रोधेन तिरस्कृतस्य, प्रभुणा इत शेषः, अभिन्नमुखरागस्य—अविकृतवदनप्रभस्य इत्यर्थः, यद्वा,—अभिन्नमुखरागस्य—तुल्यमुखवर्णस्य, मनःक्षोभेण रक्तमुखस्येत्यर्थः, कपेरारक्तमुखत्वादिति भावः । ब्रह्मघ्न इव—ब्रह्मवधकृत इव, ब्रह्महत्याकारिण इत्यर्थः, प्रतीति ।—प्रतिदिवस—प्रतिदिन, वन्दनाय—प्रणतये, उद्घृष्ट—भूमौ पुनः पुनः घृष्ट, शिरसः,—मस्तकस्य, कपालं—कर्परम् अस्थिविशेष इत्यर्थः येन तथाभूतस्य, ब्रह्महा प्रत्यहं कुटीचरो भूत्वा द्वादशवर्षं चतुर्विंशतिवर्षं वा तपश्चरन् देवान् प्रणमतीति शास्त्रीयत्वादिति भावः ; सेवकोऽपि प्रसादकामनायै प्रतिदिनं प्रभु प्रणमति इति लोकव्यवहारः, स्पर्शरहितस्य—केनापि न स्पृश्यमानस्य, यद्वा,—स्पर्शमकुर्वतः, पापाचारत्वात् अशुचित्वाच्चेति भाव', अशुभ-कर्माणि—पापकर्माणि, पदसंवाहनादीनि हीनकर्माणि च, निर्वहतः,—सम्पादयतः ।

(२०२) त्रिशङ्कोरिव उभयलोकभ्रष्टस्य नक्तन्दिनम् अर्वाक्शिरसः तिष्ठतः, (२०३) वाजिन इव कवलवशेन सुखवाह्यम् आत्मानं विदधानस्य, अनशनशायिन इव हृदयस्थापितजीवनाशस्य शरीरं क्षपयतः, (२०४) शुन इव निजदारपराङ्मुखस्य जघन्यकर्मलग्नमात्मानं ताडयतः, (२०५) प्रेतस्य इव अनुचितभूमिदोय-

---

(२०२) उभयलोकभ्रष्टस्य—ऐहिकं सदारसुखमलभमानस्य पारलौकिकं तपश्चरणादिकञ्च नाचरत इत्यर्थः, ऐहिकं राज्यसुखं परित्यज्य स्वर्गमधिरोपितस्यापि तत परिभ्रंशनेन अन्तरीक्षे अधोमुखं तिष्ठतश्च, नक्तन्दिनम्—अहोरात्रं, सदाकाल-मित्यर्थः, अर्वाक्शिरसः,—अधोनमितमस्तकस्य। पुरा त्रिशङ्कुः नाम राजा गुरुशापाच्चण्डालत्वमापन्नो विश्वामित्रेण तत्कर्त्तृकेण यज्ञेन याजयित्वा स्वर्गमधिरोपितोऽपि कुपितशतक्रतुहुङ्कारेण तर्जित. तस्मादधःपतन्नेव विश्वामित्रेण स्वप्रभावात् अन्तरीक्षे एव अधःशिरा स्थापित इति पुराणवार्त्ता। सेवकोऽपि प्रभुसन्निधौ सदैव अवनतशिरा-स्तिष्ठति इति दृश्यते।

(२०३) वाजिन इव—अश्वस्येव। कवलवशेन—ग्रासहेतोः ग्रासहेतोश्च, सुखवाह्यं—सुखेन वहनीयं, यथेच्छ प्रापणीयमित्यर्थः, सुखात् बाह्यं—बहिर्भूतञ्च, सेवाधर्मस्य अतिगहनत्वादिति भावः, विदधानस्य—कुर्वत। अनशनशायिन इव —अनशनेन—अभोजनेन, शेते—तिष्ठति इत्यर्थः तथोक्तस्य इव, हृदयेति।— हृदये—हृत्पद्मे इति भावः, स्थापितस्य—कृताधिष्ठानस्येत्यर्थः, जीवस्य—जीवात्मनः, नाश—अपगम इति यावत् यस्य तथाभूतस्य, हृदये—मनसि, स्थापिता—निहिता, जीवनस्य—जीविकाया इत्यर्थः, आशा—तृष्णा, अभिलाष इत्यर्थः, राजसेवाया प्रभूतमर्थमर्जयित्वा सुखं स्थास्यामि इत्येवरूपा इति भावः. येन तथोक्तस्य इति च, शरीरं—देहं, क्षपयतः,—क्षयं नयतः, जीवनविसर्ज्जने कृतसङ्कल्पतया भोजनाकरणात्, राजाज्ञापालनगौरवेण स्वास्थ्यप्रतिपालनासामर्थ्याच्च इति भावः।

(२०४) शुन इव—कुक्कुरस्य इव, निजदारपराङ्मुखस्य—निजकलत्रसम्भोग-वर्ज्जितस्य इत्यर्थः, अहोरात्रं प्रभुसन्निधाववस्थानादिति भावः, जघन्येति।— जघने भवं जघन्यं—निकृष्टमित्यर्थः, कर्म—आचरणं, जघनः,—कनीयान् सुतश्च, तस्य कर्म—पालनादिक्रिया च, तस्मिन् लग्नं—समासक्तम्। ताडयतः,—आघातयतः, अनुशोचयतः इत्यर्थश्च।

(२०५) प्रेतस्य इव—निकृष्टयोनेरिव, गतप्राणस्येव च, अनुचितेति।—

मानान्नपिण्डस्य, (२०६) बलिभुज इव जिह्वालौल्योपयुक्त-पुरुषवर्चसो वृथाविहितायुषो जीवतः, (२०७) श्मशान-पादपानिव पिशाचस्य दग्धभूत्या परुषीकृतान् राजवल्लभान् उपसर्पतः, (२०८) विपरीतजिह्वाजनितमाधुर्यैः ओष्ठमात्र-प्रकटितरागैः राजशुकाऽऽलापैः शिशोरिव मुग्धविलोभ्यमानस्य,

---

अनुचितायाम्—अयुक्तायां, भूमौ—प्रदेशे, चितायाः पश्चादनुचिता या भूमि तत्र च, दीयमानम्—अर्प्यमाणम्, अन्नपिण्ड—भक्तग्रासः, प्रेतोद्दिश्यकपिण्डरूपान्नञ्च यस्य यस्मै वा तथाभूतस्य ।

(२०६) बलिभुज इव—काकस्येव, जिह्वेति ।—जिह्वायाः,—रसनायाः, लौल्यं—चापल्यं, तृष्णा च, अभिलाष इत्यर्थः, ("लोलः साकाङ्क्षचलिङ्गकः । सतृष्णे चञ्चले" इति मेदिनी) तेन उपयुक्त—व्ययीकृतं, भुक्तञ्च; पुरुषवर्चः,—पौरुष तेजः, विष्ठा च, पुरीषञ्च इत्यर्थः येन तथाभूतस्य, ("वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि" इति मेदिनी) वृथेति ।—वृथा—निरर्थकं, विहित—कृतम्, आयुः,—जीवित-कालो येन तथाभूतस्य, पौरुषतेजोविसर्जनादिति भावः, वृथा—निरर्थकमेव, कस्यापि उपकारकरणाभावादिति भावः, विभ्यः,—पक्षिभ्यः, वीणा—पक्षिणा वा, हितम्—उत्कृष्ट, काकाना दीर्घायुष्ट्वादिति भावः, आयुर्यस्य तथाभूतस्य च, जीवतः, —प्राणान् धारयतः ।

(२०७) पिशाचस्य—पिशाचवत् हिताहित विरहितस्य इत्यर्थः, निर्बोधस्य इति यावत्, निकृष्टदेवयोनिविशेषस्य च, भूतस्येति भावः, दग्धभूतिः,—दग्धा—असारा इति भाव, भूतिः,—सम्पत्, दहनभस्म च तया, ("भूतिर्भस्मनि सम्पदि" इत्यमरः) परुषीकृतान्—कठोरीभूतान्, कठोरस्वभावानित्यर्थः, रूक्षीकृतांश्च, श्मशानपादपानिव—मृतदाहस्थानस्थवृक्षानिव, लोकानां भीत्युत्पादकत्वाद्दूरीघ्यानिति भावः, राजवल्लभान् —नृपतेः परिजन न्, उपसर्पतः,—उपासीनस्य, आराधयत इति यावत् ।

(२०८) विपरीतेति ।—विपरीत—हृदयात् भिन्नमिति यावत्, केवलं मौखिकमिति भावः, तद्यथा तथा, जिह्वया—रसनया, केवलवाक्येनेति भावः, जनितम्—उत्पादितं, माधुर्यं—मनोहरत्व येषा तैः, ओष्ठेति ।—ओष्ठमात्रेण—केवलेन ओष्ठेन, न तु मनसा इति भावः, प्रकटितः,—प्रकाशितः, रागः,—अनुरागः, प्रणय इति यावत्, लौहित्यञ्च [illegible] विधैः, राजशुकालापैः,—राज-

(२०९) वैतालस्य इव नरेन्द्रप्रभावाविष्टस्य किञ्चित् न आचरतः, (२१०) चित्रधनुष इव अलीकगुणाध्यारोपणैकक्रियानित्यनम्रस्य निर्व्वाणतेजसः, (२११) सम्मार्ज्जनीसमुपार्ज्जितरजसोऽवकरकूटस्येव निर्म्माल्यवाहिनः,

शुकाः,—राजानः,—भूपाः, शुका इव—कीरा इव, शुकविशेषा इत्यर्थश्च, तेषाम् आलापैः,—वचनैः, शुकवद्यथावाक्योच्चारणैः, न तु कार्य्यतः सम्पाद्यमानैरिति भावः, मुग्धविलोभ्यमानस्य—मुग्ध—सुन्दरं यथा तथा, ("मुग्धः सुन्दर-मूढयोः" इति कोषः) विलोभ्यमानस्य—विशेषेण आश्वासं नीयमानस्य इति यावत् ।

(२०९) वैतालस्येव—भूतस्येव, भूताधिष्ठितशवदेहस्येव वा, नरेन्द्रेति ।—नरेन्द्रः,—राजा, भौतिकमन्त्रविच्च, तस्य प्रभावेण—सामर्थ्येन; आविष्टस्य—वशङ्गतस्य, किञ्चित् न आचरतः,—किमपि कर्त्तव्यम्, उपद्रवादिकञ्च न अनुतिष्ठतः, केवलं राजानुमतमेव सम्पादयतः, न तु अन्यविधमवश्यकर्त्तव्यमिति भावः ।

(२१०) चित्रधनुष इव—आलेख्यलिखितकार्मुकस्य इव, अलीकेति ।—अलीकाना—असत्यानाम्, अविद्यमानानामित्यर्थः, गुणाना—दयादाक्षिण्यादीना, प्रभोः इति भाव, अध्यारोपण—कीर्त्तनमिति भावः, तदेव एका—केवला, क्रिया—कार्य्यं, तया नित्य—सततं, नम्रः,—आनतः तस्य, सदैव अवनतशिरसा राज्ञः असतोऽपि गुणान् उद्घोषयतः इत्यर्थः, अन्यत्र,—अलीकस्य—कल्पितस्य, चित्रस्थत्वात् न तु वास्तवस्येति भाव', गुणस्य—मौर्व्याः, अध्यारोपणं—संयोजनमेव, एकक्रिया—एकमात्रकार्य्यं, न तु शरसंयोजनादिकमिति भावः, तया नित्य—सतत, नम्रम्—आवर्ज्जितं तस्य, अत एव निर्वाणतेजसः,—निर्वाणं—प्रशान्तं, तेजः,—तेजस्विता इत्यर्थः, अलीकगुणकीर्त्तनेन केवलं प्रभुचित्तरञ्जनादिति भावः यस्य ; अन्यत्र,—निः,—निर्गतं, निराकृतमित्यर्थः, अविद्यमानमिति यावत्, बाणस्य—शरस्य, तेजः—सामर्थ्यं यस्मात् यस्मिन् वा तथाभूतस्य ; यद्वा,—निः,—नास्ति, बाणस्य—शरस्य, तेजः,—प्रभा, औज्ज्वल्यमित्यर्थः यत्र तथाभूतस्य ।

(२११) सम्मार्ज्जनीति ।—सम्मार्जन्या—शोधन्या, समुपार्जितानि—सङ्कलितानि, रजांसि—पांशव. यस्य यत्र वा तथाभूतस्य ; अन्यत्र,—सम्मार्जन्या—सम्मार्ज्जनीप्रहारेण इत्यर्थ., सम्मार्ज्जनीप्रहारवत् परुषभाषणादिना इत्यर्थो वा, समुपार्ज्जितं—सञ्चितं, तज्जिङ्गतमित्यर्थं, रज,—रजोगुणः यस्य तथाभूतस्य, सदैव कर्कशस्वभावस्येति भावः, अवकरकूटस्येव—अवकराः,—उद्धराः, सम्मार्ज्जनीक्षिप्तानां

( २१२ ) कफविकारिण इव दिने दिने कटुकैः उद्वेज्यमानस्य, (२१३) सौगतस्येव अर्थशून्यविज्ञप्तिजनितवैराग्यस्य काषायाणि अभिलषतः, (२१४) निशासु अपि मातृबलिपिण्डस्य इव दिक्षु विक्षिप्यमाणस्य, ( २१५ ) अशौचगतस्य इव कुशयनजनित-

---

तृणादीनां सङ्घाताः इत्यर्थः, ("सम्मार्जनी शोधनी स्यात् सङ्करोऽवकरस्तथा । क्षिप्ते" इत्यमरः ) तेषां कूटः,—राशिः तस्य इव, निर्माल्यवाहिनः,—निर्माल्यम्—उपभुक्तद्रव्यं, हेयमित्यर्थः, वहति—धारयतीत्यर्थः यस्तस्य, निर्माल्यं—देवोच्छिष्टं द्रव्यं, लक्षणया अत्र प्रभोरुच्छिष्टमपि प्रतीयते, तत् वहति—व्यवहरतीति तथाभूतस्य च ; यद्वा,—निः,—नास्ति, माल्यं—स्रक्, मालाशून्यमित्यर्थः, वहति—धारयति, जीवनमिति भावः यः तथोक्तस्य, एतेन निःश्रीकत्वं प्रकटीकृतं, माल्यचन्दनादेः सश्रीकत्वव्यञ्जकत्वादिति भावः ।

( २१२ ) कफविकारिण इव—श्लेष्मविकारवत इव, दिने दिने—प्रतिदिनं, कटुकैः,—उग्रैः प्रतीहारादिभिः, तीक्ष्णैः औषधैश्च, श्लेष्महरैः इति भावः, उद्वेज्यमानस्य—क्लेश्यमानस्य ।

( २१३ ) सौगतस्य इव—जैनस्य इव, अर्थेति ।—अर्थशून्या—निष्फलेत्यर्थः, या विज्ञप्तिः,—विज्ञापनं, प्रार्थनेत्यर्थः, प्रभुसमीपे इति भावः, तया जनितम्—उत्पादितम्, अभिलषितप्राप्त्यभावादिति भावः, वैराग्यं—निर्वेदः यस्य तथाभूतस्य, विज्ञापनसहस्रेणापि प्रभुसकाशादर्थमलभमानस्येति भावः, अर्थशून्यया—निष्फलया, सर्व्वमेव शून्यमित्येवरूपयेत्यर्थः, विज्ञप्त्या—विज्ञानेन, वाह्यवस्तूनामिति भावः, जनितवैराग्यस्य—वीतरागस्य इति च, काषायाणि—कषायरसद्रव्याणि, अपिरलाभ्यार्थः, अतितुच्छद्रव्याण्यपीति भावः ; अन्यत्र,—काषायाणि—कषायरक्तानि वसनानि, अभिलषतः,—प्राप्तुमिच्छतः ।

( २१४ ) निशासु अपि—रात्रिष्वपि, किं पुनर्दिवसेषु इति भाव, मातृबलिपिण्डस्य इव—मातृभ्यः,—देवीविशेषेभ्यः, देयं बलिपिण्डम्—उपहारान्नं तस्येव, दिक्षु—प्राच्यादिषु, विक्षिप्यमाणस्य—निरस्यमानस्य, ताड्यमानस्येत्यर्थः, प्रतीहारादिभिरिति शेषः, निशायापनार्थमपि स्थानमलभमानस्येति भाव., दीयमानस्य च ।

( २१५ ) अशौचगतस्य इव—अशौचं—सूतकादि, तद्गतस्य, अशौचिन इवेत्यर्थः, कुशयनेति ।—कुशयनेन—कु—कुत्सितेन, शयनेन—शय्यया, कौ—पृथिव्यां शयनेन च, अशौचिना खट्वाद्यधिशयनस्य माशास्त्रीयत्वादिति भावः, जनिता—

समधिकतरदुःखवृत्तेः, (३१६) तुलायन्त्रस्य इव पश्चात्कृत-गौरवस्य, तोयार्थमपि नमतः अतिकृपणस्य शिरसा केवलेन असन्तुष्टस्य वचसाऽपि पादौ स्पृशतः, (३१७) निर्दयवेत्रिवेत्र-ताड़नत्रस्तयेव त्रपया त्यक्तस्य, (३१८) दैन्यसङ्कोचित-हृदयहृतावकाशया इव आहोपुरुषिकया परिवर्जितस्य, (३१९) कुत्सितकर्माङ्गीकरणकुपितया इव उन्नत्या वियुक्तस्य,

---

उत्पादिता, समधिकतरा—अतिशायिनी, दुःखवृत्तिः,—दुःखस्थितिः, असुखेनाव-स्थानमित्यर्थः यस्य तथाभूतस्य ।

(३१६) तुलायन्त्रस्य इव—तोलनयन्त्रस्य इव, पश्चात्—पृष्ठतः, अधश्च, कृत—विहितं, गौरव—महत्त्वं, गुरुत्वञ्च यस्य तथाभूतस्य, तुलायन्त्रस्य यस्यां कोट्यां भारवद्वस्तु तिष्ठति, सा कोटिः यथा अधस्तिष्ठति, तथा सेवापरायणस्य गौरवादिकमपि अधःकृतं भवति इति समुदितार्थः। तोयार्थमपि—जलप्राप्त्यर्थमपि, अत्र अपिशब्देन अनायास-लभ्यद्रव्यप्राप्त्यर्थमपीति गम्यते, नमतः,—नतिं कुर्वतः, नत्या याचमानस्य इत्यर्थः, अत एव अतिकृपणस्य—दीनस्य, केवलेन शिरसा—शिरोमात्रेणेत्यर्थः, पादौ स्पृष्ट्वाऽपीति भावः, असन्तुष्टस्य—अतृप्तस्य, अत एव वचसा—वाक्येनापि पादौ स्पृशत इत्यर्थः, भवच्चरणौ धारयामि, मामितः देहि, प्रसीद, इत्येवभाषिण इति भावः।

(३१७) निर्दयेति।—निर्दयेन—निष्ठुरेण, वेत्रिणा—वेत्रधारिणा पुरुषेण, वेत्रताडनात्—वेतसदण्डप्रहारात्, त्रस्तयेव—भीतयेव, त्रपया—लज्जया, त्यक्तस्य—विहीनस्य, निर्लज्जस्येत्यर्थः।

(३१८) दैन्येति।—दैन्येन—दारिद्र्येण, सङ्कोचितं—कुण्ठितं, प्रसाररहितमित्यर्थः, यत् हृदयं—चित्तं, तेन हृतः,—अपनीतः, अवकाशः,—स्थानं यस्याः तथाभूतया, हृत्कमलस्य सङ्कोचात् तत्र स्थानं स्थानाभावेनेत्यर्थः, आहोपुरुषिकया—"आहोपुरुषिका दर्पात् या स्यात् सम्भावनाऽऽत्मनि" इत्यमरोक्तलक्षणया, अहमेव श्रेष्ठपुरुष इत्येवमात्मनि गौरवबुद्ध्या इत्यर्थः, परिवर्जितस्य—परित्यक्तस्य, निस्तेजसः निरुद्यमस्य चेति भावः।

(३१९) कुत्सितेति।—कुत्सितं—निन्दितं, कर्म—सेवेत्यर्थः, तस्य अङ्गी-करणेन—स्वीकृत्या, कुपितयेव—क्रुद्धयेव, उन्नत्या—अभ्युदयेन, वियुक्तस्य—

धनश्रद्धया क्लेशान् उपार्ज्जयतः, (३२०) स्वद्धिबुद्ध्या अवमानं वर्द्धयतो मूढ़स्य, सत्यपि विविधकुसुमाधिवाससुरभिणि वने तृष्णाऽञ्जलिम् उपरचयतः, (३२१) कुलपुत्त्रस्यापि कृतागस इव भीतभीतस्य समीपम् उपसर्पतः, दर्शनीयस्यापि आलेख्य-कुसुमस्य इव निष्फलजन्मनः, (३२२) विदुषोऽपि वैधेयस्य इव अपशब्दमुखस्य, शक्तिमतोऽपि श्विलिंग इव सङ्कोचितकर-

विग्रहतस्य, कदाऽपि सम्यद्धिम् अलभमानस्येत्यर्थः। धनश्रद्धया—धनप्राप्त्याशया। उपार्जयतः,—सञ्चय कुर्व्वत ।

(३२०) स्वद्धिबुद्ध्या—स्वम्—आत्मा, धनञ्च, ("स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रि। धने" इत्यमर) तस्य ऋद्धि,—अभ्युन्नति, तस्मात्तत वा या बुद्धि,—ज्ञान तया, अवमानम्—अवहेलन, वर्द्धयत,—वृद्धि कारयत., सेवाया हीनोचितकर्मकरणात् जनसमीपे अवनेयत्वात्, कदाचित् प्रमादात् कार्य्यवैपरीत्येन प्रभुणा भर्त्सितत्वाद्य इति भाव, अत एव मूढस्य—वालिशस्य। विविधेति।—विविधाना—नानाप्रकाराणा, कुसुमाना—पुष्पाणाम्, अधिवासेन —निवासेन, विकशिततया अवस्थानेनेत्यर्थ, सुरभिणि—सुगन्धिनि, अन्यत,—विविधैः कुसुमै,—सुगन्धिपुष्पैरिति यावत्, अधिवासेन—अधिवासनेन, सस्कारविशेषेणेत्यर्थ., ("अधिवासो निवासे स्यात् सस्कारे धूपनादिभि." "सस्कारो गन्धमाल्याद्यै य स्यात्तदधि-वासनम्" इति मेदिन्यसरौ) सुरभिणि, वने—कानने, जले च, ("वने सलिलकानने" इत्यमरः) सत्यपि—विद्यमानेऽपि, तृष्णाऽञ्जलि—तृष्णया—स्पृहया, धनलालसया इति यावत्, पिपासया च, ("तृष्णे स्पृहा-पिपासे द्वे" इत्यमर ) अञ्जलिं —करन्यससयोग, विधेयत्वप्रदर्शनार्थं, जलपानार्थञ्चेति भाव, उपरचयत.,—कुर्व्वत.।

(३२१) कुलपुत्रस्यापि—सत्कुलजातस्यापि, कृतागस,—अनुष्ठितापराधस्य, अत एव भीतभीतस्येव—अतिभयार्त्तस्येव, समीप, प्रभोरिति शेष । दर्शनीयस्यापि—अभिरूपस्यापि, आलेख्यकुसुमस्येव—चित्रितपुष्पस्येवेत्यर्थ, निष्फलजन्मन,—वृथोत्पन्नस्य, जनादराभावादिति भाव ।

(३२२) विदुषोऽपि—ज्ञानिनोऽपि, वैधेयस्येव—मूर्खस्येव, ("अज्ञे मूढयथाजात-मूर्खवैधेयवालिशा" इत्यमर.) अपशब्दमुखस्य—अपशब्द,—अपभ्रंश, असस्कृतपद-मित्यर्थ कुत्सितभाषणमिति यावत्, ("अपभ्रंशोऽपशब्द स्यात्" इत्यमर ) मुखे—वदने यस्य तथाभूतस्य, सदा ग्राम्यभाषणरतस्येत्यर्थ, नीचसंसर्गादिति भाव., यद्वा,

युगलस्य, (३२३) समसमुत्कर्षेषु निरग्निपच्यमानस्य, नीच-समीकरणेषु निरुच्छ्वासं म्रियमाणस्य, (३२४) परिभवैः तृणी-कृतस्य, दुःखानिलेन अनिर्वृतेः ज्वलतः, (३२५) भक्तस्य अपि अभक्तस्य, निरूष्मणः सन्तापयतो बन्धून्, वि ानस्य अपि अगतिकस्य, (३२६) च्युतगौरवस्य अपि अधस्ताद्गच्छतः, निःस-

—अपशब्दं—निःशब्दमित्यर्थः, मुखं यस्य, आर्त्तिना किमप्यकथयत इत्यर्थः। श्वित्रिण इव—श्वेतकुष्ठरोगिण इव, सङ्कोचितकरयुगलस्य—कृताञ्जलेः, रोगप्रभावात् सङ्कोचित-हस्तद्वयस्य च।

(३२३) समसमुत्कर्षेषु—समानां—तुल्यशीलगुणानां, निजसदृशानामित्यर्थः, जनानामिति शेषः, समुत्कर्षेषु—समुन्नतिषु, निरग्निपच्यमानस्य—विनाऽग्निं दह्यमानस्य, ईर्ष्यानलेनेति भाव। नीचसमीकरणेषु—प्राकृतैः साम्यप्राप्तिषु, भृत्योऽयं नीचजातीयः, इत्येवरूपेण इतरजनैः सह तुलनीकरणेषु इत्यर्थः, निरुच्छ्वासम्—उच्छ्वासवर्जितं, मरणकाले ऊर्द्ध्वश्वासो भवति, अत्र तु तन्न भवतीति भाव, तद्यथा तथा, यद्वा—निरुच्छ्वास—निश्वास-शून्यम्, उच्छ्वासरोधजनित यथा तथेत्यर्थः, म्रियमाणस्य—मरणमनुभवत, जीवन्मृतस्येत्यर्थः।

(३२४) परिभवैः,—अवमानै, तृणीकृतस्य—तृणता नीतस्य। दुःखानिलेन—दुःखपवनेन, [ "दुःखानिलेन" इत्यत्र "दुःखानलेन" इति पाठः समीचीन, अनिलस्य ज्वलनकर्तृत्वाभावात् ] अनिर्वृतेः,—निर्वृतिः,—सुखं तद्राहित्यात्; यद्वा,—नास्ति निर्वृतिः,—सुख यस्य तादृशस्य, अत एव ज्वलतः,—दाहमनुभवत, दुःखानिलेन सुखपादपभञ्जनात् छायाऽप्राप्त्या इति भावः।

(३२५) भक्तस्य—अनुरक्तस्य, अपि अभक्तस्य—अननुरक्तस्येति विरोधः; भक्तवर्जितस्य, निरन्नस्येत्यर्थः इति परिहार। निरूष्मणः,—निः,—नास्ति, उष्मा—सन्ताप. यस्य तथाभूतस्यापि, बन्धून्—स्वजनान्, सन्तापयतः,—सम्यक् तापयतः इति वि ध; निरूष्मणः, —अगर्वस्य इति परिहार। विमानस्यापि—व्योमयानस्यापि, आकाशसञ्चारिरथविशिष्टस्यापि इत्यर्थः, ("व्योमयानं विमानोऽस्त्री" इत्यमरः) अगतिकस्य—गमनशक्तिहीनस्येति विरोध, विमानस्य—मानवर्जितस्यापि, अगतिकस्य—निरुपायस्य इति परिहार।

(३२६) च्युतगौरवस्य—च्युत—भ्रष्टं, गौरव—भारवत्त्वं यस्य तथाभूतस्य अपि, प्राप्तलघुत्वस्यापीत्यर्थ, अधस्तात् गच्छतः,—निम्नदेशं प्राप्नुवतः इति विरोधः, च्युतं गौरवं—महत्त्वं यस्य तथाभूतस्य, अत एव अधस्तात् गच्छतः,—नीचतां प्राप्नुवतः।

**स्यापि महामांसविक्रयं कुर्व्वतः, (२२७) निर्म्मदस्य अस्वतन्त्रवृत्तेः, अयोगिनो ध्यानवशीकृतात्मनः, (२२८) शय्योत्थायं प्रणमतः, दग्धमुण्डस्य, गोत्रविदूषकस्य, नक्तन्दिनं नृत्यतः, मनस्विजनं हासयतः, कुलाङ्गारस्य, वंशं दहतः, नृपशोः, हर्षेऽपि लब्धे कन्धराम् अवनमयतः**

निःसत्त्वस्य—सत्त्व - जन्तुः, प्राणीति यावत, तद्रहितस्यापि, महामांसविक्रयं—नरा-मिषविक्रयं, कुर्व्वतः,—विदधत इति विरोध., निःसत्त्वस्य,सत्त्वम्—अनुभावः, शुम्भ-दुस्वरोष इत्यर्थः, तद्वर्ज्जितस्य, गतप्राणस्य उन्मत्तस्य वा इत्यर्थः, यद्वा,—निः,—नास्ति, सत्त्व—द्रव्य, परिवारपोषणोचितः सामग्रीसम्भार इत्यर्थः यस्य तथाभूतस्य, यद्वा, निःसत्त्वस्य—सत्त्वगुणरहितस्य, ("सत्त्व गुणे पिशाचादौ बले द्रव्यस्वभावयो'। आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु"॥ इति मेदिनी) अत एव महामांसविक्रय—स्वशरीर-विक्रय, दासत्वेनात्मविक्रयमित्यर्थ., कुर्व्वत इति परिहारः।

(२२७) निर्म्मदस्य—मद्यपानरहितस्य, अमत्तस्यापीत्यर्थः, अस्वतन्त्रवृत्ते,—अस्वतन्त्रा—पराधीना, वृत्ति.,—स्थितिः, अवस्थानमित्यर्थ यस्य तथोक्तस्य इति विरोध' मत्ताना कलप्यनालम्ब्य स्वतन्त्रभावे स्थातुमसामर्थ्यादिति भाव., निर्म्मदस्य—निरहङ्कारस्यापि, अस्वतन्त्रवृत्ते, न स्वतन्त्रा—स्वाधीना, प्रभुपरतन्त्रेत्यर्थ., वृत्तिः,—स्थिति, जीविका इत्यर्थ. यस्य तथाभूतस्य इति परिहार। ("आजीवो जीविका वार्त्ता, वृत्तिर्वर्त्तन-जीवने" इत्यमरः)। अयोगिन,—योगः,—चित्तवृत्तिनिरोधः, 'तद्रहित-स्यापि, योगिभिन्नस्यापीत्यर्थः, ध्यानवशीकृतात्मन,—ध्यानेन—समाधिना, वशीकृतात्मनः—निरुद्धचित्तवृत्तेः इति विरोधः, अयोगिन,—योग, धनस्य इति भाव, विद्यतेऽस्य इति योगी, स न भवति इति अयोगी तस्य, निर्धनस्य इत्यर्थः, "प्रतिकूलदैवस्य" इति केचित्, अत एव ध्यानेति।—ध्यानेन—दुर्भावनया इत्यर्थ', वशीकृतः,—अधीनीकृत', आत्मा—मन यस्य तथोक्तस्य इति परिहार ("आत्मा यत्नि स्वभावे च प्रयत्न मनसोरपि" इति मेदिनी)।

(२२८) शय्योत्थाय—शय्याया उत्थाय उत्थाय, आप्रभातादिति भाव', प्रणमत,—वन्दमानस्य, प्रभुमिति शेषः। दग्धमुण्डस्य—आतपे तप्तशिरस, कार्य्य-व्यपदेशेन इतस्ततो गमनागमनादिति भाव। गोत्रविदूषकस्य—वंशं दूषयत', नीचकर्म्मानुष्ठानादिति भाव। नृत्यत,—नृत्य कुर्व्वत, प्रभुनिदेशादनवरत कर्म्म कुर्वत इति भाव.। मनस्विजन—धीरजन, हासयत.,—हासित कुर्वत., सेवाऽनु-

( ३२९ ) जठरपरिपूरणमात्रप्रयोजनजन्मनः, मांसपिण्डस्य, गर्भरोगस्य मातुः, अपुण्यानां कर्म्मणाम् आचरणात् मृतकस्य ( ३३० ) किं प्रायश्चित्तम्? का प्रतिपत्तिक्रिया? क्व गतस्य शान्तिः? कीदृशं जीवितम्? कः पुरुषाभिमानः? किन्नामानो विलासाः? कीदृशी भोगश्रद्धा? प्रबलपङ्क इव सर्व्वम् अधस्तात् नयति दारुणो दासशब्दः। धिक् ( ३३१ ) तदुच्छ्वसितम्, उपयातु तद्धनं निधनम्, अभवनिर्भूतेः अस्तु तस्याः, नमो भगवद्भ्यः तेभ्यः सुखेभ्यः, तस्य अयमञ्जलिः ऐश्वर्य्यस्य, तिष्ठतु दूर एव सा श्रीः, शिवं स परिच्छदः करोतु ( ३३२ ) यदर्थम् उत्तमाङ्गं गां

---

शक्तिदर्शनादिति भाव.। कन्धरा—ग्रीवाम्, अवितच्छवस्तुनिमित्तमपि प्रणमत इति भाव।

( ३२९ ) जठरेति।—जठरस्य—स्वोदरस्य, परिपूरणमात्र—भरणमात्रं, प्रयोजनम्—आवश्यकं यस्य तादृश, जन्म—उत्पत्ति. यस्य तथाभूतस्य, कस्यापि उपकारकत्वादिति भाव। मांसपिण्डस्य—जडस्वरूपस्य इत्यर्थ। गर्भरोगस्य—उदरव्याधिभूतस्य, दशमासान् यावत् क्लेशप्रदत्वात्, उत्तरकालेऽपि क्लेशदूरीकरणाक्षमत्वाच्चेति भाव। मृतकस्य—मृत्यभावमापन्नस्य, पुरुषस्य इति पूर्वेण सम्बन्धः।

( ३३० ) प्रायश्चित्त—"प्रायो नाम तप. प्रोक्तं चित्तं निश्चय उच्यते। तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्॥" इत्युक्तलक्षणकम् अपुण्यकर्मचयसाधनं चान्द्रायणादि कर्म, यद्वा,—प्रायस्य पापस्य चित्तं शोधनं यस्मात् तादृशं कर्मेत्यर्थ.। प्रतिपत्तिक्रिया—कर्त्तव्यताऽनुष्ठानम्।

( ३३१ ) उच्छ्वसित—जीवितम्। तद्धनं—दासत्वलब्धद्रविणं, निधन—विनाशम्, अथ च धनाभावम् उपयातु—गच्छतु। भूते.,—सम्पद., अभवनि.,—अनुत्पत्ति., [ आक्रोशेऽनिप्रत्ययः ]। भगवद्भ्य.,—माहात्म्यवद्भ्य, सोल्लुण्ठनवचनमेतत्, तेभ्य सुखेभ्य.,—दाससुखेभ्य इत्यर्थः। तस्य—दास्येनार्जितस्य, अञ्जलि, अस्तु इति शेष। सा—दास्यार्जिता इत्यर्थ, श्री,—सम्पत्, दूर एव तिष्ठतु, न तयाऽस्माकं किमपि प्रयोजनमिति भाव। स.,—दासत्वलब्ध इत्यर्थ, परिच्छदः,—उपकरण, शिव—मङ्गल, युष्माकमिति शेष।

( ३३२ ) यदर्थ—यत्सम्पदादिनिमित्तम्, उत्तमाङ्ग—शिर., गां—पृथ्वी,

गमिष्यति, मुखप्रियरतः क्लीवः, अपूतिमांसमयः क्रमिः, (३३३) अगण्यमानो नरकः, (३३४) पादरजोधूसरोत्तमाङ्गो जङ्गमः पादपीठः, पुंस्कोकिलः काकुक्कणितेषु, शिखी (३३५) सुखकरकेकासु, स्थूलकूर्चः क्रोड़कषणेषु, श्वा नीचचाटुकरणेषु,

---

गमिष्यति, शिरो नतं भविष्यतीत्यर्थः। क्लीवः,—"न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति। मेढ्रश्चोन्मादशुक्राभ्यां हीनः क्लीवः स उच्यते॥" इत्युक्तलक्षणः, इवेति शेषः, निर्वीर्यत्वादिति भावः, मुखप्रियरतः,—मुखे—वदने, प्रियं—प्रीतिकरं, रतं—सुरतं, मैथुनं वा यस्य तथाभूतः, मुखयोनिरित्यर्थः, मुखमध्ये सुरतप्रवृत्तः, न तु योनौ इति भावः, अन्यत्र,—मुखस्य प्रिये—प्रीतिकरकर्मणि, भोजनव्यापारे इत्यर्थः, रतः,—तत्परः, भोजनसक्त इत्यर्थः, ("रतं सुरत-गुह्ययोः। रतस्त्रिष्वनुरक्ते स्यात् तत्परे चाभिधेयवत्॥" इति मेदिनी)। अपूतिमांसमयः,—अदुर्गन्धमांसलीनः इत्यर्थः, अकुथितमांसपिण्डमयश्च, क्रमिः,—कीटविशेषः, इवेति शेषः, एवमुत्तरत्रापि बोद्धव्यम्; घृणाभावादल्पप्राणत्वाच्चेति भावः।

(३३३) अगण्यमानः,—असह्यायमानः, गणनानर्हश्च, अगण्यो मानो यस्य तथाभूतो वा, नरकः,—निरयः, कुत्सितो नरश्च, अश्लीलादिभेदेन कर्तित्रिपस्य सद्भेद्य-त्वात् सुकृतिभिः परित्यज्यमानत्वाच्चेति भावः।

(३३४) पादेति।—पादरजसा—चरणरेणुना, धूसरम्—ईषत्पाण्डुरम्, उत्तमाङ्गम्—उपरिभाग इत्यर्थः, मस्तकञ्च यस्य तथाभूतः, जङ्गमः,—चरिष्णुः, गतिशीलः इत्यर्थः, पादपीठः,—चरणासनं, नियतं प्रभुपादपद्मस्य मस्तके धारणादिति भावः। काकुक्कणितेषु—मधुरवचनेषु, शोकजनितभिन्नकण्ठध्वनिषु च,—"भिन्नः कण्ठध्वनि-र्धीरैः काकुरित्यभिधीयते" इति दर्पणः, पुंस्कोकिल इव, परपुष्टत्वादिति भावः।

(३३५) सुखकरकेकासु—श्रुतिसुखजननीषु केकावाणीषु, ("केका वाणी मयूरस्य" इत्यमरः) सन्तोषकरेषु वचनविशेषेषु च, शिखी—मयूरः। क्रोडकषणेषु—उत्कङ्कारीहर्षेषु, उत्सङ्गघर्षणेषु वा, नितम्बघर्षणेषु इत्यर्थः, क्रोडवत्—वराहवत्, ("वराहः शूकरो घृष्टिः"। क्रोडो भूदार इत्यपि" इत्यमरः) कषणेषु—पोत्र-निखननेन भूविदारणेषु च, स्थूलकूर्चः,—पीवरः दमठः, अलसगतित्वादिति भावः। नीचचाटुकरणेषु—दैन्यजनिततोषणेषु, अलीकगुणानुवादेन परचित्तरञ्जनरूपेषु दीनकर्मसु इत्यर्थः, प्रभुपादलेहनेषु इति भावः, श्वा—कुक्कुरः।

(२२६) वेणुः मूर्च्छनासु, वेश्याकायः करणबन्धक्लेशेषु, (२२७) पलालं सत्त्वशालिषु, कृकलासः शिरोविडम्बनासु, जाहकः (२२८) आत्मसङ्कोचनेषु, प्रतिपादकः पादसंवाहनासु, कटुकः करतलताडनेषु, वीणादण्डः (२२९) कोणाभिघातेषु,

---

(२२६) मूर्च्छनासु—मोहनक्रियासु, चाटुशतप्रयोगैः मोहोत्पादनेषु इत्यर्थः "स्वरः सम्मूर्च्छितो यत्र रागतां प्रतिपद्यते। मूर्च्छनामिति तां प्राहुः कवयो ग्रामसम्भवाम्॥" इत्युक्तलक्षणानां सङ्गीताङ्गस्वराणां विशिष्टासु स्थितिषु इति च, वेणुः,—वाद्यभेदः। करणबन्धक्लेशेषु—करणं—शरीरं, तस्य बन्धः,—बन्धकीकरणं, भृत्यत्वेनाङ्गीकरणमित्यर्थः, तेन क्लेशाः,—दुःखा इत्यर्थः तेषु, करणेषु—रतिशास्त्रविहितेषु व्यापारविशेषेषु, नृत्यगीतविशेषेषु वा, ("करणं हेतु-कर्मणोः। क्रियाभेदेन्द्रियचैव-सवेशनेषु च। नृत्यगीतप्रभेदयोः." इति मेदिनी) ते बन्धाः,—आश्लेषादयः आत्मसंयमनादयो वा, तैः क्लेशाः तेषु, वेश्याकायः,—वाराङ्गनाशरीरं, परोपभोग्यत्वात् पण्यभूतदेहत्वाच्चेति भावः।

(२२७) सत्त्वशालिषु—सत्त्वम्—अस्तित्वं, तेन शा ते—शोभन्ते इति तथोक्तेषु, अस्तित्वमात्रधर्मिषु मध्ये, न तु फलवत्सु इति भावः, पलालं—धान्यवर्जितव्रीह्यवयवराशिरिति यावत्, असारत्वादिति भावः। शिरोविडम्बनासु—शिरश्चेष्टासु, प्रणत्यादिषु इति भावः शिरस नियतम् उन्नमनेषु च, कृकलासः,—सरटः, सरीसृपविशेषः इत्यर्थः।

(२२८) आत्मसङ्कोचनेषु—स्वदेहसङ्कोचेषु, प्रभोराह्वानक्रिया गुप्तभावेनावस्थानेषु इति भावः, जाहकः,—घोडाख्यः पक्षिभेदः, मार्ज्जारो वा, ("जाहको घोहमार्ज्जार-खट्वाकारुष्ठिकासु च" इति मेदिनी)। पादसंवाहनासु—पदसेवासु; प्रतिपादकः,—प्रतिपत्तियुक्तः, ख्यातिमानित्यर्थः, यद्वा,—प्रतिपादकः,—सम्पादकः, चरणमर्द्दनकारक इत्यर्थः। करतलताडनेषु—करप्रहारेषु, करतलविमर्द्दनेषु च, अङ्गसंवाहनकाले इष्टप्रार्थनाकाले वा इति भावः, कटुकः,—कटुरसद्रव्यभेद इत्यर्थः, सहसा कटुद्रव्यसेवनेन व्यथितरसनः कोऽपि यथा 'कथमेतत् भक्षितं' 'किं कृतम्' इत्याद्युक्त्वा स्वस्य नितम्बादिदेशे करप्रहारं करोति, तद्वदङ्गसंवाहनादिकाले करप्रहारं करतलविमर्द्दनं वा करोति इति भावः।

(२२९) कोणाभिघातेषु—कोणेन—लगुडेन, प्रभुणा इति शेषः, वीणा

वराकः सेवकोऽपि मर्त्यमध्ये, राजिलोऽपि वा भोगी, (३४०) पुलाकोऽपि वा कलमः, (४१) वरं क्षणमपि कृता मानवता मानवता, न मतो नमतः त्रैलोक्याधिराज्योपभोगोऽपि मनस्विनः। तदेवम् अभिनन्दितास्मदीयप्रणयो देवोऽपि दिवसैः कतिपयैः एव परागतः प्राग्ज्योतिषेश्वर इति करोतु चेतसि” इत्युक्त्वा तूष्णीम् अभूत्, अचिराच्च नमस्कृत्य निर्जगाम।

राजाऽपि रजनीं तां (३४२) कुमारदर्शनौत्सुक्यस्वीकृतहृदयः समनैषीत्। (३४३) आत्मार्पणं हि महताम् अमूल्यमन्त्रमर्थं

---

वादनयष्टिविशेषेण च, (“कोणो वाद्यप्रभेदे स्यात् वीणादीनाञ्च वादने। एकदेशे गृहादीनामश्रौ च लगुडेऽपि च॥” इति मेदिनी) अभिघाताः,—ताडनानि तेषु, वीणादण्डः। एवम्भूतः वराकः,—दीन इत्यर्थः, सेवकः,—दासः, मर्त्यमध्ये—मनुष्यत्वे, यदि गण्यते इति शेषः, तदा राजिलोऽपि—डुण्डुभोऽपि, निर्विष सर्पविशेषोऽपि इत्यर्थः, भोगी—फणी, सुखभोगवांश्च, (“भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः” इत्यमरः)।

(३४०) पुलाकः,—तुच्छधान्यं, फलहीनः शालिरित्यर्थः, (“स्यात् पुलाकः तुच्छधान्ये” इत्यमरः) कलमः,—धान्यम्।

(३४१) मानवता—मानिना, क्षणमपि मानवता—मनुष्यत्वं, पौरुषमित्यर्थः, प्रभुत्वमिति भावः, कृता, तदपि वरं—मनाक्प्रियः, किन्तु मनस्विनः,—प्रशस्तमनसः, उदाराशयस्येति यावत्, नमतः,—दासत्वं कुर्वतः सत इत्यर्थः, त्रैलोक्यराज्योपभोगः,—त्रिभुवनाधिपत्यमपि, न मतः,—न इष्टः। तदिति।—तत्—तस्मात्, जनान्तरसमीपे शिरोनमनस्य हेयत्वप्रतिपादकत्वादित्यर्थः, एवम्—इत्थं, मदुक्तप्रकारेणेत्यर्थः, अभिनन्दितेति।—अभिनन्दितः,—समर्थित इत्यर्थः, अस्मदीयः,—अस्माकमित्यर्थः, प्रणयः,—प्रार्थना येन तथाभूतः देवोऽपि—भवानपि। परागतः,—उपस्थितः।

(३४२) कुमारेति।—कुमारस्य—प्राग्ज्योतिषेश्वरस्य, दर्शने—अवलोकने, दर्शनाय वा, यदौत्सुक्यं—कौतूहलं, तेन स्वीकृतम्—आक्रान्तम्, अधीनीकृतमित्यर्थः हृदयं—चेतः यस्य तथाभूतः। समनैषीत्—अतिवाहयामासेत्यर्थः।

(३४३) आत्मार्पणं—स्वदेहसमर्पणम्, “अहं तवैव” इत्युक्त्वा आत्मनिवे॰

वशीकरणम्। प्रभाते च प्रभूतं (३४४) प्रतिप्राभृतं प्रधानप्रतिदूताधिष्ठितं दत्त्वा हंसवेगं प्राहिणोत्। (३४५) आत्मनाऽपि ततः प्रभृति प्रयाणकैः अनवरतैः अभ्यमित्रं प्रावर्त्तत। कदाचित्तु राज्यवर्द्धनभुजबलोपार्ज्जितम् (३४६) अशेषं मालवराजसाधनम् आदाय आगतं समीप एव आवासितं लेखहारकात् भण्डिम् अशृणोत्। श्रुत्वा च अभिनवीभूतभ्रातृशोकहुताशनः कातरहृदयो बभूव, मूर्च्छान्धकारमिव विवेश, अतिष्ठच्च समुत्सृष्टसकलव्यापारः (३४७) प्रतीहारनिवारणनिभृतनिःशब्दपरिजने निजमन्दिरे सराजकपरिवारः तदागमनम् उदीक्षमाणो मुहूर्त्तम्।

---

मित्यर्थ, अमूलमन्त्रमयं—मूलमन्त्रः,—प्रधानदेवमन्त्र', तत्तद्देवतासाधन वीजमन्त्र इत्यर्थ, तन्मय—तत्स्वरूप न भवतीत्यमूलमन्त्रमय, विना एव मूलमन्त्रमित्यर्थ, यद्वा,—मूलानि—शिफा, औषधय इति यावत्, मन्त्राश्च, तन्मय न भवतीति तथाभूत, मन्त्रौषधिविरहितमित्यर्थ, वशीकरणमन्त्रेण जना वशीक्रियन्ते, आत्मार्पणे तु तत्प्रयोजन नास्ति इति भाव।

(३४४) प्रधानेन—श्रेष्ठेन, दूतेषु इति भावः, प्रतिदूतेन—स्वप्रेष्यदूतेन इति यावत्, अधिष्ठित—युक्त, प्रधाने प्रतिदूते न्यस्तमिति भाव, प्रतिप्राभृतं—प्रत्युपढौकन, प्राहिणोत्—प्रेरयामास।

(३४५) आत्मनाऽपि—स्वयमपि, अनवरतैः,—अविश्रान्तै, प्रयाणकैः—यात्राभिः, अभ्यमित्रम्—अमित्र—शत्रुम्, अभि—लक्ष्यीकृत्य, शत्रोरभिमुखमित्यर्थः।

(३४६) अशेष—प्रभूतमित्यर्थः, मालवराजसाधन,—मालवेन्द्रसैन्यम्। आवासितं—कृतनिवेशम्। लेखहारकात्—दूतात्। भण्डि—हर्षस्य मातुलपुत्रम्। अभीति। —अभिनवीभूतः,—प्रत्यग्रीभूत, पुनः नूतनता गत इत्यर्थः, य. भ्रातृशोकः—राज्यवर्द्धनमृत्युजनितः खेद इत्यर्थः, स एव हुताशनः,—अनलः, दाहकत्वादिति भावः यस्य सः। समुत्सृष्टसकलव्यापारः,—त्यक्तसर्वक्रिय.।

(३४७) प्रतीहारेति।—प्रतीहारस्य-दौवारिकस्य, निवारणेन—मा शब्द कलरव कुरु इति निषेधेन, निभृताः,—निस्तब्धाः, विनीता वा, विनीतवेशेनावस्थिता इत्यर्थः, ("निभृतविनीतप्रश्रिताः समाः" इत्यमरः) निःशब्दाः,—तूष्णीं स्थिताश्च,

(३४८) अथ भण्डिः एकेन एव वाजिना कतिपयकुल-पुत्त्रपरिवृतः, मलिनवा ाः, रिपुशरशल्यपूरितेन निखातबहु-लोहकीलकपरिकररचितस्फुटनेन इव हृदयेन (३४९) हृदय-लग्नैः स्वामिसत्कृतैः इव श्मश्रुभिः शुचं समुपदर्शयन्, (३५०) दूरीकृतव्यायामशिथिलभुजदण्ड दोलायमानमङ्गल-वलयैकशेषालङ्कृतिः, (३५१) अनादरोपयुक्तताम्बूलविरलरागेण

परिजना,—अनुजीविन. यत्र तथाभूते। सराजकपरिवारः,—राज्ञां समूह राजक, तत् एव परिवार,—परिजन: तेन सह वर्त्तमान', यद्वा,—राजकञ्च परिवारश्च ताभ्यां सह वर्त्तमान.। तदागमनं—तस्य—भण्डे., आगमनम्—उपस्थितिम्, उदीक्षमाण:—प्रतीक्षमाण:।

(३४८) "अथ भण्डि." इत्यस्य "राजद्वारमाजगाम" इति अग्रेण सम्बन्ध:। तं विशिनष्टि, कतिपयेत्यादि।—रिपुिति।—रिपूणा—शत्रूणा, शरशल्यै,—बाणफलकै', पूरितेन—व्याप्तेन, अत एव निखातेति।—निखातानां—प्रोथितानां, बहूना—प्रभूतानां, लोहकीलकानाम्—अय:शङ्कूना, परिकरेण—आश्रयेण इति यावत्, सङ्घेन वा, समूहेनेत्यर्थ, कीलसमूहाश्रयेणेति यावत्, ("भवेत् परिकर' सङ्घे" इति मेदिनी) रचित—निबद्धमिति यावत्, स्फुटनं—विदरण, राज्यवर्द्धनव्यापारजनितशोकादिति भाव' यस्य तथाभूतेन इव, हृदयेन उपलक्षित:।

(३४९) हृदयलग्नै,—हृदि स्थिते, उरोलम्बिभिश्च, स्वामिसत्कृतैरिव—प्रभु-सत्कारैरिव, प्रभु प्रति दर्शितसमादरैरिवेत्यर्थ., श्मश्रुभि',—चिबुकजातरोमनिचयै, मृतं प्रति समादरप्रदर्शनार्थं नखश्मश्र्वादिधारणस्याचारत्वात् अकृतक्षौरैरिति भाव., शुचं—शोक, समुपदर्शयन्—प्रकटयन्।

(३५०) दूरीकृतेति।—दूरीकृतेन—परित्यक्तेन, शोकादिति भाव व्यायामेन—श्रमेण, प्रात्यहिकाङ्गचालनविशेषेणेति यावत्, शिथिले—अकठिने क्षीणे वा इति भाव, भुजदण्डे—बाहुयष्टौ,दोलायमान—लम्बमानमिति यावत्, मङ्गलवलयमेव—मङ्गलार्थधृत कटकमेव, एकशेषा—एकामात्रावशिष्टा, अलङ्कृति,—अलङ्कार: यस्य तथोक्त, शोकादन्यत् सर्वमेव भूषण परित्यक्तवान्, केवल तद्वलय व मङ्गलसूचकत्वात् न परित्यक्तवानिति भाव:।

(३५१) अनादरेति।—अनादरम्—अयत्नं यथा तथा, उपयुक्तं—चर्वितं, तत् ताम्बूलं—पर्णं, तेन विरल,—अल्प, राग:,—रक्तवर्णता यस्य तेन।

(३५१) शोकदहनदह्यमानस्य हृदयस्य अङ्गारेण इव दीर्घनिश्वासवेगनिर्गतेन अधरेण शुष्यता, (३५२) स्वामिविरहविधृतजीवितापराधवैलक्ष्यादिव वाष्पवारिपटलेन पटेन इव प्रावृतवदन, विशन्निव दुर्बलीभूतैः स्वाङ्गमपत्रपया अङ्गैः, (३५४) वसन्निव च व्यर्थीभूतभुजोष्माणमायतैः निश्वसितैः, पातकीव, अपराधीव, द्रोहीव, मुषित इव, छलित इव, यूथपतिपतनविषण्ण इव वेगदण्डवारणः, सूर्य्यास्तमयनिःशोक इव कमलाकरः, दुर्य्योधननिधनदुर्मना इव द्रौणिः, अपहृतरत्न इव सागरो राजद्वारम् आजगाम। अवतीर्य्य च तुरङ्गमात् अव॰

(३५१) अत एव दीर्घेति।—दीर्घेण—महता, निश्वासवेगेन—नासामुखप्रवाहितवायुजवेन, यद्वा,—दीर्घः,—आयत, निश्वास तस्य वेगेन, निर्गत,—निःसृतः तेन, हृदयाभ्यन्तरादिति भाव', शोकदहनदह्यमानस्य—शोकानलभस्मीभूयमानस्य, हृदयस्य—मनस, अङ्गारेणेव—अलातेनेव, शुष्यता—शोष गच्छता, अधरेण—एदनच्छदेन उपलक्षित ।

(३५२) स्वामीति।—स्वामिन,—राज्यवर्द्धनस्य, विरहे—वियोगेऽपि, विधृतम्—अवलम्बित. स्थितमित्यर्थः, यत् जीवित—जीवन, तदेव तेन वा योऽपराध,—आग., तेन यत् वैलक्ष्य—लज्जा तस्मादिव, पटेनेव—वस्त्रेणेव, वाष्पवारिपटलेन—अश्रुसन्तानेन, प्रावृतवदन,—आच्छादितमुख.। दुर्बलीभूतै,—क्षीणै. अङ्गै,—करचरणाद्यवयवै, अपत्रपया—लज्जया, राज्यवर्द्धनमरणेनापि स्थितिजनितयेति भाव, स्वाङ्ग—स्वगात्र, निजदेहाभ्यन्तरमित्यर्थ, ("अङ्ग गात्रे प्रतीकोपाययो. पु सूम्नि नीवृति" इति मेदिनी) विशन्निव—ढौकमान इव, राज्यवर्द्धनस्य अन्यायनिधनस्य प्रतीकारकरणासामर्थ्यादिति भाव., अतिलज्ज इति निष्कर्ष.।

(३५४) व्यर्थीभूतेति।—व्यर्थीभूत.—विफलता गत, राज्यवर्द्धनस्याततायिनां दमनासामर्थ्यादिति भाव., भुजस्य—बाहो, उष्मा—तेज तम्, आयतै,—दीर्घै.। वमन्निव—उद्गिरन्निव। द्रोहीव—अनिष्टचिन्तक इव, राज्ञ. इति शेष.। मुषित इव—अपहृत इव, शत्रुणेति भाव.। छलित,—प्रतारित इव, रिपुपुरुषेणेति भाव', पातकीव इत्यादि विशेषणम् अतीव मलिनाकारत्वादिति बोध्यम्। यूथेति।—

नतमुखो विवेश राजमन्दिरम्। दूरादेव च ( ३५५ ) विमुक्ताक्रन्दः पपात पादयोः।

अवनिपतिरपि दृष्ट्वा तम् उत्थाय, ( ३५६ ) विरलैः पदैः प्रत्युद्गम्य, उत्थाप्य च गाढम् उपगूह्य कण्ठे, करुणमतिचिरं रुरोद। शिथिलीभूतमन्युवेगश्च पुरेव पुनः आगत्य निजासने निषसाद। प्रथमप्रक्षालितमुखे च भण्डी मुखम् अक्षालयत्। समतिक्रान्ते च कियत्यपि काले भ्रातृमरणवृत्तान्तम् अप्राक्षीत्। अथ अकथयच्च यथावृत्तम् अखिलं भण्डिः। अथ नरपतिः तमुवाच,—"राज्यश्रीव्यतिकरः कः?" इति। स पुनः अवादीत्,—"देव! ( ३५७ ) देवभूयं गते देवे राज्यवर्द्धने, गुप्तनाम्ना च गृहीते कुशस्थले, देवी राज्यश्रीः परिभ्रश्य बन्धनात्

---

यूथपतेः,—दलाधिपस्य, पतनेन—निधनेन, विपन्नः,—अप्रसन्न, वेगदण्डवारणः इव—वेगेन—रभसा, दण्डयति—शत्रून् पातयतीति वेगदण्डः, स चासौ वारणः,—हस्ती चेति तथोक्तः। कमलाकर,—पद्मसमूह. सरोवरो वा, पद्मसङ्कोचादिति भावः। द्रौणि,—द्रोणाचार्य्यसुत. अश्वत्थामा।

( ३५५ ) विमुक्ताक्रन्द,—वि—विशेषेण, मुक्तः,—कृत इत्यर्थः उच्चैःकृत इति यावत्. आक्रन्द,—क्रन्दनं येन तथाभूत। पादयो,—चरणयो हर्षस्येति भावः।

(३५६) विरलैः,—स्वल्पै, कतिपयैरित्य, पदैः,—चरणैः. कतिपयपदानीत्यर्थः; यद्वा,—विरलैः,—पेलवैः, कोमलैरित्यर्थ, ("पेलवं विरलं तनु" इत्यमरः) पदैः,—निःशब्दपदसञ्चारैरित्यर्थः। उपगूह्य—आलिङ्ग्य। शिथिलीभूतमन्युवेगः,—स्वल्पीभूतशोकप्रसरः। पुरेव—पूर्व्ववत्, विरलैः पदैरित्यर्थ। यथावृत्तं—यथासङ्घटित, यथायथमतीतवृत्तान्तमित्यर्थ, अखिलं—समग्रम्। राज्यश्रीव्यतिकर,—राज्यश्रियः वृत्तान्तः; यद्वा,—राज्यश्रिया व्यतिकर,—व्यसन, विपदित्यर्थः, ("अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी)।

( ३५७ ) देवभूयं—देवत्व, गते—प्राप्ते, मृते इत्य :। गुप्तनाम्ना—कुत्सज्ञया, नामान्तरं गृहीतेत्यर्थः, कुशस्थले—कान्यकुब्जे, कारावद्धराज्यश्रियाऽधिष्ठिते देशे इत्यर्थः, गृहीते—प्राप्ते, सतीति शेषः। बन्धनात्

विन्ध्याटवीं सपरिवारा प्रविष्टा इति लोकतो वार्त्ताम् अशृणवम्। अन्वेष्टारस्तु तां प्रति प्रभूताः प्रहिता जना न अद्यापि निवर्त्तन्ते" इति। तच्च आकर्ण्य भूपतिः अब्रवीत्,—"किमन्यैः (३५८) अनुपदिभिः? यत्र सा, तत्र परित्यक्तान्यकृत्यः स्वयमहं यास्यामि। भवानपि कटकम् आदाय प्रवर्त्ततां गौड़ाभिमुखम्" इत्युक्त्वा च उत्थाय स्नानभुवम् अगात्। (३५९) कारितशौकश्मश्रुवपनकर्म्मणा च प्रतीहारभवनस्नातेन (३६०) शारीरकवसनकुसुमाङ्गरागालङ्कारप्रेषणप्रकटितप्रसादेन भण्डिना सार्द्धम् अभुक्त, निनाय च तेनैव सह वासरम्।

अथ अपरेद्युः उषसि एव भण्डिर्भूपालम् उपसृत्य व्यज्ञापयत्,—"पश्यतु देवः श्रीराज्यवर्द्धनभुजबलार्ज्जितं (३६१) साधनं सपरिवर्हं मालवराजस्य" इति। नरपतिना सः,—"एवं क्रियताम्" इति अभ्यनुज्ञातो दर्शयाम्बभूव; तद्यथा,—

—बध्यते—संयम्यते अत्र इति बन्धनं—कारागार इत्यर्थः, तस्मात्, परिभ्रश्य—विचाल्य, पलाय्येत्यर्थः, विन्ध्याटवी—विन्ध्यारण्यम्। अन्वेष्टारः,—अनुसन्धातारः, तां—राज्यश्रियम्। प्रहिताः,—प्रेरिताः।

(३५८) अनुपदिभिः,—अनुपदी—अन्वेषणकर्त्ता इत्यर्थः, तैः, अन्वेषणकारिभिः, अनुचरैरिति यावत्, [अनुपदम् अन्वेष्टा इत्यर्थे अनुपदशब्दात् इनि.] सा—राज्यश्रीरित्यर्थः। प्रवर्त्तताम्—गच्छतामित्यर्थः।

(३५९) कारितेति।—कारितं—विधापितं, क्षौरकारेणेति शेषः, शौकश्मश्रूणां—शौकात् रक्षितकूर्च्चानामित्यर्थः, वपनकर्म्म—क्षौरं यस्य तेन।

(३६०) शारीरकेति।—शारीरकं—शरीरसम्बन्धि, स्वव्यवहार्य्यमित्यर्थः, वसनं—वस्त्रं, कुसुमं—पुष्पम्, अङ्गरागः,—अनुलेपनम्, अलङ्कारः,—आभरणं, तेषां प्रेषणेन—प्रेरणेन, प्रकटितः,—प्रदर्शितः, प्रसादः,—अनुग्रहः यस्य यस्मै वा तेन।

(३६१) सपरिवर्हं—सपरिच्छदं, ("परिच्छदे नृपार्हेऽर्थे परिवर्होऽव्ययाः परे" इत्यमरः) साधनं—हस्त्यश्वाद्युपकरणसम्भारम्।

(३६२) अनवरतगलितमदमदिराऽऽमोदमुखरमधुकरजूटजटिलकरटपट्टपङ्किलगण्डान् गण्डशैलान् इव जङ्गमान् गम्भीरगर्जितरवान् जलधरान् इव महीम् अवतीर्णान् (३६३) उत्फुल्लसप्तच्छदवनामोदमुचः शरद्दिवसान् इव पुञ्जीभूतान् अनेकसहस्रसङ्ख्यान् करिणः, (३६४) चारुचामीकरचितचामरमण्डलमनोहरांश्च हरिणरंहसो हरीन्, (३६५) बालातपविसरवर्षिणाञ्च किरणैः अनेकेन्द्रायुधीकृतदशदिशाम् अलङ्काराणां

(३६२) अनवरतेति।—अनवरतगलितस्य— निरन्तरस्रुतस्य, मदस्य— दानवारिणः, मदिरः,—मत्तताजनकः, य आमोदः,—सौरभम्, यद्वा,—अनवरतगलित मद मदिरा इव—सुरेव, मत्तता जननादिति भाव, तस्या आमोदः,—सौरभं, तेन मुखरैः,—वाचालैः, गुञ्जद्भिः इत्यर्थः, मधुकरजूटैः—भृङ्गनिचयैः, जटिलाः,—युक्ताः, करटपट्टाः इव—कुसुम्भफलकानि इव, पङ्किलाः,—आर्द्राः, गण्डाः,—कपोलाः येषां तान्, यद्वा,—मुखरैः मधुकरजूटैः जटिलाः ये करटपट्टाः,—गजगण्डफलकानि, ("करटो गजगण्डे स्यात् कुसुम्भे निन्द्यजीविनि" इति मेदिनी) ते एव पङ्किलाः,—मलिनाः, मधुकरजटिलत्वादिति भाव, गण्डाः,—चिह्नानि येषां तान्, ("गण्ड स्यात् पुंसि खड्गिनि।·····। चिह्नवीरकपोलेषु" इति मेदिनी) गण्डशैलानिव—पर्व्वतविच्युतबृहच्छिला इव, कृष्णवर्णमहाकायत्वादिति भाव, ("गण्डशैलास्तु च्युताः स्थूलोपला गिरेः" इत्यमरः) जङ्गमान्— पादचारिणः।

(३६३) उत्फुल्लेति।—उत्फुल्लानां—विकसितानां, सप्तच्छदवनानां—सप्तपर्णकाननानाम्, आमोद—सौरभं, मुञ्चन्ति— त्यजन्तीति तथोक्तान्, शरद्दिवसान्—शरत्कालिकवासरान्, तत्र उत्फुल्लसप्तच्छदवनानां मदगन्धतुल्यगन्धवत्त्वात् जलधराणामतीव गर्जनशीलत्वाच्चेति भावः।

(३६४) चार्विति।—चारुभिः,—मनोज्ञैः, चामीकरैः,—काञ्चनैः, ("चामीकरं जातरूपं महारजतकाञ्चने" इत्यमरः) चितानि—रञ्जितानि, चामरमण्डलानि—बालव्यजनसमूहाः, तैः मनोहराः,—रम्याः तान्, हरिणरंहसः,—हरिणवेगान्, मृगवद्द्रुतगमनसमर्थानित्यर्थः, हरीन्—अश्वान् ("हरिश्चन्द्रार्कवातानश्वशुकभेकयमाहिषु" इति मेदिनी)।

(३६५) बालातपेति।—बालातपानाम्—अभिनवसूर्य्यालोकानां, विसराद्

विशेषान्, (३६६) विस्मयकृतः स्मरोन्मादितमालवी-कुचपरिमलदुर्ललितांश्च (३६७) निजज्योत्स्नापूरप्लावित-दिगन्तान् अपि तारान् हारान्, उडुपतिपादसञ्चयशुचीनि निजयशांसि इव बालव्यजनानि, जातरूपमयनालञ्च निवासपुण्डरीकमिव श्रियः श्वेतातपत्रम्, अप्सरस इव (३६८) बहुसमररससाहसानुरागावतीर्णा वारविलासिनीः, (३६९) सिंहासनशयनासन्दीप्रभृतीनि राज्योपकरणानि,

—निवहान्, वर्षन्ति—विकिरन्तीति तथोक्ताना, नवोदितसूर्य्यप्रभावत् प्रभाशालिना-मित्यर्थ, किरणैः,—प्रभाभि., अनेकेति।—अनेकानि—बहूनि, इन्द्रायुधानि—शक्रधनूंषि यासु ता., कृता,—सम्पद्यमाना, अनेकेन्द्रायुधीकृताः, दश दिश,—ककुभः यै. तथोक्ताना, बहूनामिन्द्रायुधानामिव दिगुद्भासिनाम् इत्यर्थ.।

(३६६) विस्मयकृत,—चमत्कारकान्, स्मरेति।—स्मरेण—कामेन, उन्मादिता',—उन्मत्तीकृता', या मालव्य,—मालवाङ्गना., तासा कुचपरिमलेन—स्तनविमर्दज-गन्धेन, दुर्ललिता.,— आदरवन्त' तान्।

(३६७) निजेति।—निजेन—स्वकीयेन, ज्योत्स्नापूरेण—प्रभाऽतिशयेनेति यावत्, प्लाविताः,—उद्भासिताः, दिगन्ता,—दिशा प्रान्तभागाः, सुदूरवर्त्तिनोऽपीति भाव. यै तान्, तारान्—महत। उडुपतीति।—उडुपते',—चन्द्रस्य, पादाना—किरणाना, सञ्चयाः,- समूहा इव, शुचीनि—धवलोज्ज्वलानि इत्यर्थ। जातरूपमयनालं—सौवर्णदण्डमित्यर्थं, श्रियः,—लक्ष्म्या, नवासपुण्डरीकमिव—आवासश्वेतकमलमिव।

(३६८) बह्विति।—बहु.,—प्रभूत, समररसः,—सङ्ग्रामानुराग', तथा साहसव—बलपूर्वककार्य्यकरणं, पराक्रमप्रदर्शनमित्यर्थ, ("साहसन्तु बलात्कारकृतकार्य्ये दमेऽपि च" इति मेदिनी) समरं एवेति शेष, वीराणामिति भाव., ताभ्याम्; यद्वा,—बहुसमररसेन प्रबलसङ्ग्रामानुरागेण, यत् साहस—पराक्रमप्रदर्शनं तस्मात्, अनुरागेण—प्रीत्या, अवतीर्णा,—स्वर्गात् भुवमागता।

(३६९) सिंहेति।—सिंहासन—सौवर्णनृपासन, शयन—पर्य्यङ्कः, आसन्दी—आसनविशेष., खट्वाविशेषो वा, ("आसन्दी वासुदेवे स्यात् खट्वाभेदे च योषिति इति मेदिनी) एता. प्रभृतय. येषा तानि।

(२७०) कालायसनिगडनिश्चलीकृतचरणयुगलञ्च सकलं मालवराजलोकम्, अशेषांश्च (२७१) ससङ्ख्यालेख्यपत्रान् सालङ्काराऽऽपीड़पीडान् कोषकलशान्। अथ आलोच्य तत् सर्वम् अवनिपालः (२७२) स्वीकर्त्तुं यथाऽधिकारम् आदिशत् अध्यक्षान्। अन्यस्मिन् च अहनि हयैः स्वसारम् अन्वेष्टुम् उच्चचाल विन्ध्याटवीम्, अवाप च परिमितैः एव प्रयाणकैः ताम्।

(२७३) अथ प्रविशन् दूरादेव दह्यमानषष्टिकतुषविसर-विसारिविभावसूनां (२७४) वन्यधान्यबीजधानीनां धूमेन

(२७०) कालायसेति।—कालायसनिगडेन—कृष्णवर्णलौहशृङ्खलेन, निश्चलीकृतं—गतिहीनीकृतम्, आबद्धमित्यर्थः, चरणयुगलं—पादद्वन्द्वः यस्य तथाभूतं, बन्दीकृतमिति यावत्।

(२७१) ससङ्ख्यालेख्यपत्रान्—सङ्ख्या—अत्र एतत्सङ्ख्याकानि धनानि सन्तीत्येवं गणना, तस्याः लेख्यपत्रं—लिपिरित्यर्थः, तेन सहिताः तान्, सालङ्कारेति।—अलङ्काराणाम्—आभरणानाम्, आपीडानां—शिरोभूषणविशेषाणां, पीडा—मर्दः, तया सहिताः तान्, यद्वा,—अलङ्काराणाम् आपीडेन—घनसन्निवेशजनितातिपीडनेन, पीड़ा—परस्परसङ्घर्षरूपा, तया सहिताः तान्, कोषकलशान्—धनपूर्णकुम्भान्।

(२७२) यथाऽधिकारम्—अधिकारानुसारेणेत्यर्थः, तत्तद्द्रव्यं यद्यद्विभागीयाध्यक्षाधिकारे तिष्ठति, तत्तदधिकारं विभज्य इति यावत्, स्वीकर्त्तुं—ग्रहीतुम्, आत्मसात्कर्त्तुमिति यावत्, अध्यक्षान्—सेनापतीन्, तत्तद्द्रव्यरक्षकाख्यप्रधानपुरुषान् वा। स्वसारं—भगिनीम्। परिमितैः,—अल्पैः, प्रयाणकैः,—गमनैरित्यर्थः, अल्पदूरं गत्वेति यावत्, तां—विन्ध्याटवीम्।

(२७३) "अथ प्रविशन्" इत्यस्य "वनग्रामकं ददर्श" इत्यग्रेण सम्बन्धः, तं विशिनष्टि, दह्यमानेत्यादि।—दह्यमानेषु—भस्मीभूयमानेषु, षष्टिकतुषाणां—धान्यविशेषकडङ्कराणां, धान्यविशेषस्य निःसारांशानामित्यर्थः, ("कडङ्गरो बुस क्लीबे" इत्यमरः) विसरेषु—निचयेषु, विसारिणः,—प्रसारिणः, विभावसवः,—अग्नयः येषु तथोक्तानाम्।

(२७४) वन्येति।—वन्यानि—वनजातानि, यानि धान्यबीजानि—धान्यवृक्षाङ्कुरकारणानि, तेषां धान्यः,—स्थानानि, तत्तद्धान्यबीजरक्षणस्थानानि इत्यर्थः,

धूसरिमाणम् आदधानैः, शुष्कशाखासञ्चयरचितगोवाट-वेष्टितविकटवटैः, व्यापादितवत्सरूपकरोषरचितव्याघ्रयन्त्रैः, (३७५) यन्त्रितवनपालहठक्रियमाणपरग्रामीणकाष्ठिककुठारैः, (३७६) गहनतरुषण्डनिर्म्मितचामुण्डामण्डपैः वनप्रदेशैः प्रकाशमानम्; (३७७) अटवीप्रायप्रान्ततया कुटुम्बभरणाकुलैः, कुद्दालप्रायकृषिभिः, कृषीवलैः,

---

तासाम्। धूसरिमाणम्—धूसरत्वम्, आदधानैः,—गच्छद्भिः। शुष्केति।—शुष्कैः,—शोषं गच्छद्भिः, शाखासञ्चयैः,—विटपनिचयैः, रचितेन—कल्पितेन, गोवाटेन—गवां—पशूनां, हिंस्राणामिति भावः, ("स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ" इत्यमरः) वाटेन—वृतिस्थानेन, तत्प्रवेशनिवारणार्थं वृतिविशेषेण इत्यर्थः, ('वाटं मार्गे वृतिस्थाने" इति मेदिनी) वेष्टिताः,—परिवृताः, विकटाः,—प्रकाण्डाः, वटाः,—वटवृक्षाः येषु तथोक्तैः, वटवृक्षतलस्य विश्रामधामतया हिंस्रजन्तुपरिहारार्थं वृतिरिति भावः। व्यापादितेति।—व्यापादितस्य—निहतस्य, व्याघ्रेण इति भावः, वत्सस्य—गोशावकस्य, रूपकम्—भ्रान्तिः, तेन कारणेन, पूर्वरात्रे निहतवत्सभक्षणाय अद्यापि आगमिष्यति व्याघ्र इति धिया तच्चर्म्माच्छादिततृणादिनिर्मितप्रतिमूर्त्तिस्थापनेनेति भावः, रोषात्—व्याघ्रं प्रति कोपादित्यर्थः, रचितः—कल्पितः, व्याघ्रयन्त्रं—शार्दूलनिरोधोपायविशेषः येषु तैः, व्याघ्रनिपातनायेति भावः।

(३७५) यन्त्रितेति।—यन्त्रितैः,—यत्नकुशलैः, वनपालैः,—काननरक्षकैः, हठेन—बलात्, सहसा वा, क्रियमाणः,—आच्छिद्यमान इत्यर्थः, परग्रामीणस्य—ग्रामान्तरवासिनः काष्ठिकस्य—काष्ठव्यवसायिनः, काष्ठापहरणार्थमागतस्य इति भावः, कुठारः,—परशुः येषु तथोक्तैः।

(३७६) गहनेति।—गहने—निबिडे, तरूणां—वृक्षाणां, षण्डे—समूहे, तन्मध्ये इत्यर्थः, निर्मितः—रचितः, चामुण्डायाः,—कालिकायाः, मण्डपः—गृहमित्यर्थः येषु तथाभूतैः, वनप्रदेशैः,—वनविभागैः, प्रकाशमानं—राजमानं, वनग्रामोऽयमिति प्रतीतिमुत्पादयन्तं वा।

(३७७) अटवीप्रायप्रान्ततया—अरण्यबहुलप्रान्तदेशत्वेन, कुटुम्बभरणाकुलैः, परिवारपोषणव्यग्रैः, अटवीबाहुल्येन शस्यक्षेत्राभावात् वनानीमुच्छिद्य शस्यक्षेत्रकर-

(३७८) अबलव ह्निः, उच्चभागभाषितेन भज्यमानभूरिशालि-खलधानखलकम्; (३७९) अल्पावकाशैश्च, कापिलैः, कालायसैः इव कृष्णमृत्तिकाकठिनैः, (३८०) स्थान-स्थापितस्थाणूच्छ्रितस्थलपल्लवैः, दुरुपगमश्यामाकप्ररूढिभिः, अलम्बुसबहुलैः, (३८१) अविरहितकोकिलाक्षक्षुपैः, विरलविरलैः केदारैः कृच्छ्रकृष्यमाणैः नातिप्रभूतप्रवृत्त-

---

णाय व्यापृतैरिति भाव., कुद्दालेति।—कुद्दालः,—भूखननार्थविशेषः, भा[illegible]—बाहुल्येन, कृषिः,—कर्षणसाधनं येषां तथाभूतैः, कृषीवलैः,—कृषकसमूहैः।

(३७८) अबलवह्निः,—सामान्यबलशालिभिरित्यर्थः, उच्चभागभाषितेन – उच्च',—उन्नत., भाग',—भाग्यं यत्र तथाभूतं, भाषित –वचनं तेन, उन्नतभाग्यशालितसूचकेन वाक्येनेति यावत्, एतच्चैतोत्पन्नशस्यविक्रयेणाहं प्रभूतधनी भूत्वा विविधसुखमनुभविष्यामि इत्येवरूपेण, दैवं यद्यनुकूलं भवेत्, तदा एतेनैव मे प्रभूतधनं भविष्यतीत्येवरूपेण वा इति भावः, भज्यमानेति।—भ[illegible]मानानि—विभज्य गृह्यमाणानि इत्यर्थ, भूरिशालिखलधानानां—प्रभूतधान्यरक्षणस्थानाना - धान्यमर्द्दनस्थानाना वा, खलकानि—अंशकानि यस्य यत्र वा तम्।

(३७९) अल्पावकाशैः,—अल्पपरिसरैः, कापिलैः,—पिङ्गलवर्णैः, कालायसैरिव—कृष्णलौहनिर्म्मितैरिव, कृष्णमृत्तिकाकठिनैः,—कृष्णमृत्तिका—मृत्तिकाविशेषः, तद्वत् कठिनाः,—कठोराः तै., यद्वा,—कृष्णमृत्तिकया कठिनैः, कठोरकृष्णमृत्तिकाविशिष्टैरित्यर्थः।

(३८०) स्थानेति।—स्थानस्थानेषु—केषुचित् केषुचित् प्रदेशेषु, स्थापितेभ्यः,—रचितेभ्य, अरण्यच्छेदनकाले इति भावः, स्थाणुभ्य.,—शाखापत्रहीनतरुभ्यः इत्यर्थः, उच्छ्रिता,—प्ररूढा., स्थूला.,—पृथवः, पल्लवा,—किसलया येषु तथाभूतै., दुरुपगमेति।—दुरुपगमा.,—दुर्ज्ञेयाः, श्यामाकाना—घासविशेषाणा, प्ररूढयः,—अङ्कुरा येषु तथाभूतै., अलम्बुसबहुलै, लज्जालुलताकीर्णैः मुण्डिरीलताप्रायैर्वा इत्यर्थ।

(३८१) अविरहितेति।—न विरहिताः,—शून्याः, कोकिलाक्षक्षुपा',—तदाख्यक्षुद्रशाखाशिफवृक्षभेदा. येषु तथोक्तै, विरलविरलै.,—स्वल्पैः, अरण्य-प्रायत्वात् अनतिबहुलै. इति भावः, कृच्छ्रकृष्यमाणै,—काठिन्यात् कष्टेन कर्षण नीय-मानै. इत्यर्थः, केदारैः,—क्षेत्रैः, नातीति।—नातिप्रभूतं—नात्यधिक यथा तथा,

गतागताप्रहतभुवम्; (३८२) उपचैत्यमुपरचितैर्मञ्चैश्च सूच्यमानश्वापदोपद्रवम्; दिशि दिशि च (३८३) प्रतिमार्गं द्रुमक्षतानां, पथिकपादप्रस्फोटनधूलिधूसरैः नवपल्लवैर्लाञ्छितच्छायानाम्, (३८४) अटवीसुलभसालकुसुमस्तवकाञ्चितनवखातकूपिकोपकण्ठप्रतिष्ठितनागस्फुटानाम्, (३८५) अच्छिद्रकटकाल्पितकुटीरकाणां, (३८६) कुटिलकीटवेणीवेष्ट्य-

---

त्वात्कण्टकाणामित्यादिति भावः, प्रवृत्ताभ्यां—प्रारब्धाभ्यां, गतागताभ्यां—यातायाताभ्याम्, अप्रहता—नातिक्षुण्णा, नातिक्रान्ता इत्यर्थः, भूः,—भूमिः यत्र तम्।

(३८२) उपचैत्यं—चैत्यसमीपे, [सामीप्येऽव्ययीभावः] यद्वा,—चैत्येषु उपचैत्यमिति [विभक्त्यर्थेऽव्ययीभावः] उपरचितैः,—कल्पितैः, मञ्चैः,—"माचा" इति बङ्गभाषया प्रसिद्धैः, ["उपरचितैर्मञ्चैः" इत्यत्र "उपरचितैरुच्चैर्मञ्चैश्च" इति पाठान्तरम्] सूच्यमानेति।—सूच्यमानः,—अनुमीयमानः, श्वापदानां—हिंस्रजन्तूनां, श्वापदस्य—व्याघ्रस्य वा, उपद्रवः,—उत्पातः यत्र तम्।

(३८३) प्रतिमार्गेति।—प्रतिमार्गं—प्रतिपथं, द्रुमैः,—वृक्षैः, क्षतानां—रचितानाम्। पथिकेति।—पथिकानां—पान्थानां, पादप्रस्फोटनात्—चरणताडनात्, सवेगपदक्षेपणादित्यर्थः, उत्थिता इति शेषः, या धूलयः,—पांशवः, ताभिः, तत्सङ्गमेन इति भावः, धूसराः,—ईषत्पाण्डुवर्णाः तैः, लाञ्छितेति।—लाञ्छिताः,—चिह्निताः, युक्ता इत्यर्थः, छाया—प्रतिबिम्बं यासां तथोक्तानाम्।

(३८४) अटवीति।—अटव्याम्—अरण्ये, सुलभाः,—सुप्रापाः, ये सालाः,—वृक्षविशेषाः, तेषां कुसुमस्तवकैः,—पुष्पगुच्छैः, अञ्चिताः,—शोभिता इत्यर्थः, तत्पुष्पगुच्छानां निखनलेषु पतनादिति भावः, नवखाता—नूतनखनिता, या कूपिका—क्षुद्रकूपः तस्याः उपकण्ठे—अन्तिके, ("उपकण्ठान्तिकाभ्यर्णाभ्यग्रा" इत्यमरः) प्रतिष्ठिताः,—प्रतिष्ठां गताः, ये नागस्फुटाः,—नागदन्तिवृक्षाः, प्रस्फुटितपुष्पनागकेशरवृक्षा या यत्र तासाम्।

(३८५) अच्छिद्रेति।—अच्छिद्रं—छिद्ररहितं यथा तथा, कटैः,—शराख्यतृणविशेषैः, किलिञ्जैर्वा, ("कटः श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शरे" इति मेदिनी) कल्पितानि—रचितानि, कुटीरकाणि—क्षुद्रगृहाणि यासां तासाम्।

(३८६) कुटिलेति।—कुटिला—वक्रगामिनी, या कीटवेणी—कीटश्रेणी,

अनशक्तुशारशरावश्रेणीश्रितानाम्, (३८७) अध्वगजनजग्ध-जम्बूफलास्थिशबलसमीपभुवाम्, उद्धूलितधूलीकदम्बस्तवक-प्रकरपुलकिनीनां, (३८८) कण्टकितकर्करीचक्राक्रान्त-काष्ठमञ्चिकामुषितवृषां, तिम्यत्तलशीतलसिकतिलकलशी-शमितश्रमाणाम्, (३८९) आम्लानशैवलश्यामलितालिञ्जर-

---

पिपीलिकापङ्क्तिरिति यावत्, तया वेष्ट्यमानाः,—आकीर्यमाणाः, शक्तुभिः,—भृष्टयवचूर्णैः, शाराः,—शबलाः, शरावाणां—मृन्मयभाजनविशेषाणां, श्रेण्यः,—पङ्क्तयः, ताभिः श्रिताः,—युक्ताः तासाम्।

(३८७) अध्वगेति।—अध्वगैः,—पान्थैः जनैः,—लोकैः, जग्धानां—खादितानां, जम्बूफलानां—जाम्बवफलानाम्, अस्थिभिः,—बीजैः, अष्टिभिरिति भावः, शबला—चित्रा, समीपभूः,—निकटस्थभूमिर्यासां तथोक्तानाम्। उद्धूलितेति।—उद्धूलितैः,—उत्क्षिप्तपरागैः, धूलीकदम्बानां—नीपभेदानां, कदम्बविशेषाणामित्यर्थः, ("धूलीकदम्बो नीपे स्यात् तिनिशे वरुणद्रुमे" इति मेदिनी) स्तवकप्रकरैः,—पुष्पगुच्छ-समूहैः, पुलकिन्यः,—पुलकशालिन्यः, रोमाञ्चिता इव दृश्यमाना इति भावः तासाम्।

(३८८) कण्टकितेति।—कण्टकितानां—सञ्जातकण्टकानां, कर्करीणां—लताविशेषाणां, [ "कर्करी" इत्यत्र "कर्कटी" "कर्कारु" इति वा पाठः समीचीनः, कर्करीशब्दस्य लताविशेषवाचकत्वस्य क्वापादावदर्शनात्; कर्कटी कर्कारु इति वा पाठे,—"काँकुड़" इति प्रसिद्धः फलविशेषः, कुष्माण्डो वा इति बोध्यम् ] चक्रैः,—मण्डलैः आक्रान्ताः,—आवृताः, याः काष्ठमञ्चिकाः,—दारुनिर्म्मितमञ्चविशेषाः, ताभिः, तद्दर्शनेनैवत्यर्थः, फलभक्षणाशयेति भावः, मुषिताः,—हृताः, तृषः,—तृष्णाः यासु तथाविधानाम्। तिम्यदिति।—तिम्यत्सु—आर्द्रेषु, तलेषु—अधोदेशेषु, शीतलाभिः,—हिमाभिः, सिकतिलाभिः,—बालुकामयीभिः, कलशीभिः,—घटैः, घटस्पर्शैरिति भावः, शमितः,—अपनीतः, श्रमः,—सन्तापजायास इत्यर्थः, पान्थानामिति भावः यासु तथोक्तानाम्।

(३८९) आम्लानेति।—आम्लानैः,—ईषच्छुष्कैः, ईषद्गौरीभूतैर्वा, निविड़-भवनेनावस्थितैरित्यर्थः, शैवलैः,—जलनीलीभिः, नियतजलसद्भावात् नाशनाभावाच्च सञ्जातैरिति भावः, श्यामलितेषु—श्यामलतां गतेषु, अलिञ्जरेषु—मणिकेषु,

जायमानजलजडिम्नाम्, ( २९० ) उदकुम्भाऽऽकृष्टपाटलशर्करा-शकलशिशिरीकृतदिशां, ( २९१ ) घटमुखघटितकटहारपाटल-पुष्पपुटानां, ( २९२ ) शीकरपुलकितपल्लवपूलीपाल्यमानशोष्य-सरसशिग्रुसहकारफलजूटीजटिलस्थाणूनां, ( २९३ ) विश्राम्यत्-कार्पटिकपेटकपरिपाटीपीयमानपयसाम्, अटवीप्रवेशप्रपाणां

"जाला" इति वङ्गीयैराख्यातेषु मृन्मयजलाधारविशेषेषु इत्यर्थः, ( "अलिञ्जरः स्यान्मणिकम्" इत्यमरः ) जायमानः,—सम्पद्यमानः, जलानां—सलिलानां, जडिमा—शैत्यं यासु तथोक्तानाम् ।

( २९० ) उदकुम्भेति ।—उदकुम्भेभ्यः,—जलघटेभ्यः, आकृष्टानां—बहिरानीतानां, पाटलानां—श्वेतरक्तानां, शर्कराणां—कर्कराख्यवालुकानां, शकलेन—खण्डेन, जलसिक्तेन इति भावः, शिशिरीकृताः,—शीतलीकृताः, वायुना जलीयांशस्य इतस्ततो विक्षिप्यमाणत्वादिति भावः, दिशः,—ककुभः यासु तथोक्तानाम् ।

( २९१ ) घटेति ।—घटानाम्—उदकुम्भानां, मुखेषु—आस्येषु, उपरिभागेषु इत्यर्थः, घटितः,—रचितः, कटहारः,—तृणविशेषनिर्मितहारः, पाटल—श्वेतरक्त, पुष्पपटश्च—कुसुमावरणञ्च, यद्वा,—घटमुखे घटितकटहारे यत् पाटलपुष्पं—"पारुल" इति वङ्गीयैराख्यातः पाटलाख्यकुसुमविशेषः, ग्रथितमिति भावः, तैः पुटः,—आच्छादनम्, अधिवासनार्थमिति भावः यासु तथोक्तानाम् ।

( २९२ ) शीकरेति ।—शीकरैः,—अम्बुकणैः, पुलकिता—सम्पृक्ता इति यावत्, या पल्लवपूली—किसलयसमूहः, तया पाल्यमानः,—रक्ष्यमाणः, आप्याय्यमान इत्यर्थः, अत एव शोष्योऽपि—शोषणयोग्योऽपि, सरसः,—अशुष्कः इत्यर्थः, परिपुष्ट इति यावत्, यः शिग्रुसहकारः,—बालाम्रतरुः, तस्य फलजूटीभिः,—फलसमूहैः, जटिलः,—संयुक्तः, स्थाणुः,—शाखापल्लवरहिततरुः इत्यर्थः यासु तथोक्तानाम्, यद्वा,—शीकरपुलकितपल्लवपूलीपाल्यमानः अत एव शोष्योऽपि, शाखापल्लवादिशून्यत्वेनावरणराहित्यादिति भावः, सरसः, आम्रशाखाभिराच्छादनादिति भावः, शिग्रुसहकारफलजूटीजटिलः स्थाणुर्यत्र तथोक्तानाम् ।

( २९३ ) विश्राम्यदिति ।—विश्राम्यद्भिः,—श्रममपनुदद्भिः, कार्पटिकैः,—कर्पटेन—कषायवस्त्रेण चरन्तीति तैः, तीर्थयात्रिकैरित्यर्थः, पेटकपरिपाटीभिः,—पात्रविशेषश्रेणीभिः, यद्वा,—कार्पटिकपेटकैः,—तीर्थयात्रिकदम्बकैः, ( "पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके" इति मेदिनी ) परिपाट्या—आनुपूर्व्यं, अनुक्रमेणेत्यर्थः,

शैत्येन त्याजयन्तमिव ग्रैष्मम् उष्माणम्; (३९४) क्वचित् अन्यत्र ग्राहयन्तमिव अङ्गारीयदारुसङ्ग्रह-दाहिभिः व्योकारैः; सर्व्वतश्च (३९५) प्रातिवेश्यविषय-वासिना, समासन्नग्रामगृहस्थापितस्थविरपरिपाल्यमानपाथेय-स्थगितेन, (३९६) कृतदारुणदारुव्यायामयोग्याङ्गाभ्यङ्गेन, (३९७) स्कन्धाध्यासितकठोरकुठारकण्ठलम्बमानप्रातराशपुटेन,

पीयमानं सलिलं—जलं यासां यत्र वा तथोक्तानाम्, अटवीप्रवेशप्रपाणाम्—अरण्य-प्रवेशे पानीयशालानाम्, ("प्रपा पानीयशालिका" इत्यमरः)। ग्रैष्मम्—नैदाघम्, उष्माणम्—उत्तापम्।

(३९४) अङ्गारीयदारुसङ्ग्रहादिभिः,—अङ्गारेभ्यः,—घनानिभ्यः हितानि अङ्गारीयाणि—अङ्गारोपयोगीनि, यानि दारूणि—काष्ठानि, तेषां सङ्ग्रहः,—सञ्चयः, राशिरित्यर्थः, तं दहन्ति—भस्मीकुर्व्वन्तीति तथाभूतैः, व्योकारैः,—लौहकारैः, कर्म्म-कारैः इत्यर्थः, ("व्योकारो लौहकारकः" इत्यमरः), अन्यत्र क्वचित् ग्राहयन्तमिव—सङ्क्रामयन्तमिव, उष्माणमिति पूर्वेणान्वयः।

(३९५) प्रातिवेश्येति।—प्रातिवेश्यः,—प्रतिवेशी, विषयवासी—जनपदवासी तेन, यद्वा,—प्रातिवेश्यः,—प्रतिवेशस्य—प्रतिवेशिनः अयं, प्रतिवेशिसम्बन्धीत्यर्थः, विषयः,—आश्रयः, ("विषय आश्रये" इत्यमरः) तत्र वसति—तिष्ठतीति तेन, यद्वा, —प्रातिवेश्यः,—गृहसमीपवर्त्ती, यो विषयः,—देशः, स्थानमित्यर्थः, ("विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी) तद्वासिना। समासन्नेति।—समासन्ने—सन्निहिते, ग्रामे—आवसथे, यत् गृहं—भवनं, तत्र स्थापितेन—रक्षितेन, स्थविरेण —वृद्धेन, परिपाल्यमानं—रक्ष्यमाणं, यत् पाथेयं—सम्बलं, तेन स्थगितः,—पाथेया-नधिगमात् गमनात् निवृत्त इत्यर्थः तेन।

(३९६) कृतेति।—कृतः,—विहितः, दारुणस्य—कठिनस्य, दारुव्यायामस्य —काष्ठच्छेदनरूपपरिश्रमस्य, योग्यः,—अनुरूपः, अङ्गाभ्यङ्गः,—शरीरे तैलमर्दनविशेषः येन तथोक्तेन, अभ्यङ्गलक्षणमुक्तं यथा,—"मूर्द्ध्नि न्यस्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम्। स्रोतोभिस्तर्पयेद्देहं अभ्यङ्गः स उदाहृतः॥" इति।

(३९७) स्कन्धेति।—स्कन्धे—अंसदेशे, अध्यासितस्य—स्थापितस्य, कठोरस्य —तीक्ष्णस्य इति यावत्, कुठारस्य—परशोः, कण्ठे—अग्रभागे इत्यर्थः, लम्बमानं —तिष्ठदित्यर्थः, प्रातराशपुटं—प्रातर्भोजनपात्रं यस्य तथाभूतेन।

(३९८) पाटच्चरप्रत्यवायप्रतिपन्नपटच्चरेण, कालवेतक-त्रिगुणव्रततिवलयपाशग्रथितग्रीवाग्रथितैः पत्रवीटावृतमुखैः पीतकूटैः जलधारिणा. (३९९) पुरःसरबलबलीवर्दयुग-सरेण, नैकटिककुटुम्बिकलोकेन, काष्ठस्य चार्थम् अटवीं प्रविशता, (४००) श्वापदव्यधनव्यवधानवल्लीसमारोपित-कुटीकृतकूटपाशेन, (४०१) गृहीतमृगतन्तुतन्त्रीजालवलय-

(३९८) पाटच्चरेति।—पाटच्चरः,—चोरः, ("चौरैकागारिकस्तेन। ... पाटच्चरमलिम्लुचाः" इत्यमरः) स एव प्रत्यवायः—अन्तरायः, तेन हेतुना प्रतिपन्नः—गृहीतः, परिहितमित्यर्थः, पटच्चरः—जीर्णवस्त्रं येन तथोक्तेन, ("पटच्चरं जीर्णवस्त्रम्" इत्यमरः) दस्युतस्करादिभिः परिहितनूतनवस्त्रस्य बलपूर्व्वकापहरणभयात् इति भावः। कालेति।—कालवेतकस्य—कृष्णवेतस्य, त्रिगुणः—त्रिरावृत्तः, यत् व्रततिवलयः—लतामण्डलमिव, पाशः,—रज्जुः, बद्धः—त्रिगुणव्रततिवलयपाशः,—लतामण्डल-पचितरज्जुः, तेन ग्रथितया—वेष्टितया, ग्रीवया—कण्ठेन, ग्रथितैः,—बिधृतैः, संयुक्तै-रित्यर्थः, तादृशग्रीवावद्भिरिति यावत्, पत्रेति।—पत्रवीटया—पत्रसम्पुटेन, आवृतम्—आच्छादितं, मुखम्—अग्रभाग इत्यर्थः येषां तथोक्तैः, पीतकूटैः,—पानपात्र-विशेषैः, जलधारिणा—सम्पूर्णजलकलशेन।

(३९९) पुरःसरेति।—पुरःसरम्—अग्रेसरं यथा तथा, बलम्—चलत्, बलीवर्दयुगसरः,—वृषभयुगलं यस्य तेन ['पुरःसरबलबलीवर्द—" इत्यत्र "पुरःसरबलबलीवर्द—" इति पाठस्तु समीचीनतया प्रतिभाति, तथात्वे पुरःसरः,—अग्रे गच्छन्, बलवान्—सबलः, बलीवर्दयुगलम् यस्य तेन] नैकटिककुटुम्बिलोकेन—सन्निहितगृहस्थलोकेन, "इदानीम्" इत्यग्रेणान्वयः। एवमुत्तरत्रापि तृतीयान्त-विशेष्यपदेन सहेति बोद्धव्यम्।

(४००) श्वापदेति।—श्वापदानां—व्याघ्रादिहिंस्रजन्तूनां, व्यधनाय—वेधनाय, व्यवधाने—अन्तराले, या वल्ली—निभृतं स्थानं, तत्र समारोपिताः—रचिताश्च याः, या कुटी—क्षुद्रं तृणनिर्मितं गृहं, तद् कृताः,—स्थापिताः, कूटपाशाः,—कूटरज्जवः मन्त्रवागुरा वा ये, तथाभूतैः।

(४०१) गृहीतेति।—गृहीताः,—हृताः, मृगतन्तवः,—मृगाणाम् अन्त्राणि इति यावत्, त एव तन्त्रीजालानि—रज्जुसमूहाः, तेषां वलयैः,—मण्डलैः, कलितेति

वागुरैः, वहिर्व्याधैः विचरद्भिः; अंसावसक्तवीतंसव्यालम्बमानबालपाशिकैश्च, (४०२) सङ्गृहीतग्राहकक्रकरकपिञ्जलादिपञ्जरकैः शाकुनिकैः सञ्चरद्भिः, (४०३) च्युतत्रासकलेशलिप्तलतावधूलट्टालम्पटानाञ्च पेटकैः पाशकशिशूनाम् अटद्भिः, (४०४) तृणस्तम्बान्तरिततित्तिरितरलायमानकौलेयककुलचाटुकारैश्च विहगमृगयां मृगयुयुवभिः

---

भावः, वागुरा—पाशः यैः तथाभूतैः, मृगार्थनिर्मितपाशधारिभिरित्यर्थः, वहिः विचरद्भिः,—सञ्चरद्भिः, व्याधैः,—लुब्धकैः। अंसेति।—अंसेषु—स्कन्धदेशेषु, अवसक्ताः,—संसक्ताः, वीतंसाः,—"सातनला" इति वङ्गभाषया ख्यातानि मृगपक्षिणां बन्धनसाधनानि उपकरणानि, ("वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम्" इत्यमरः) व्यालम्बमानाः—दोलायमानाः इत्यर्थः, बालपाशिकाः—क्षुद्ररज्जवश्च येषां तैः; यद्वा,—अंसावसक्तवीतंसेषु व्यालम्बमानाः—लम्बमानाः इत्यर्थः, बालपाशिकाः येषां तैः।

(४०२) सङ्गृहीतेति।—सङ्गृहीतानि—धृतानीत्यर्थः, ग्राहकाणां—घातिविहगानां, श्येनानामित्यर्थः, ("ग्राहकौ घातिविहगे व्यालानाञ्च ग्रहीतरि" इति मेदिनी) क्रकराणां—ठकणानां, "करेर" इत्याख्यपक्षिणामित्यर्थः, ("क्रकचः क्रकरो वशी" इत्यमरः) कपिञ्जलादीनाञ्च—गौरतित्तिरीणां चातकानां वा, पञ्जरकाणि—पिञ्जराणि यैः तथाभूतैः, शाकुनिकैः,—पक्षिव्याधैः, पक्षिलुब्धैः इत्यर्थः।

(४०३) च्युतेति।—च्युतत्रासकाः,—विलासशून्या इत्यर्थः, निष्पन्दा इति यावत्, तथा लेशेन—लवेन, त्रासकलवेनेति यावत्, कदाचित् वायुवशादिति भावः, लिप्ताः,—संसृष्टाः, लताः,—वीरुधः एव, वध्वः,—नार्य्यः, तासु या लट्वाः,—पक्षिभेदाः, ग्राम्यचटका इति यावत्, ("लट्वा करञ्जभेदे स्यात् फले वाद्ये खगान्तरे" इति मेदिनी) तासु लम्पटाः,—लुब्धाः तेषां, पाशकशिशूनां—व्याधबालकानां, अटद्भिः,—भ्रमद्भिः, पेटकैः,—समूहैश्च।

(४०४) तृणेति।—तृणानाम्—अर्जुनानां, स्तम्बेषु—गुच्छेषु, अन्तरिताः,—निभृतस्थिताः, ये तित्तिरयः,—तदाख्यपक्षिभेदाः, तेषु तरलायमानानां—लोलुपानां, कौलेयकानां—सारमेयाणां, कुक्कुराणामित्यर्थः, ("कौलेयकः सारमेये कुलीने" इति मेदिनी) यत् कुलं—समूहः, तस्य चाटुकारैः,—सेवकैरिति यावत्, तत्सहायै-

क्रीड़द्भिः, (४०५) परिणतचक्रवाककण्ठकषायरुचां शीध-व्यानां वल्कलानां कलापान्, नातिचिरोद्धतानाञ्च धातुत्विषां धातकीकुसुमानां गोणीः अगणिताः, (४०६) पिचव्यानां चातसीगणपट्टमूलकानां पुष्कलान् सम्भारान्, भारांश्च मधुनो माक्षिकस्य, मयूराङ्गजस्य, अक्लिष्टमधूच्छिष्टचक्रवालानां, (४०७) लम्बमानलामज्जकजूटजटानाम्, अपत्वचां खदिर-

रि भावः, विहगमृगया—पक्षिषु आखेटं, क्रीडद्भिः,—खेलद्भिः, कुर्व्वद्भिरित्यर्थः, मृगयुयुवभिः,—तरुणैः व्याधैः।

(४०५) परिणतेति।—परिणतः,—स्थविरः, यः चक्रवाकः,—रथाङ्गनामा पक्षिभेदः, तस्य कण्ठः,—गलदेशः, तद्वत् कषाया—पीतरक्ता, लोहिता वा, ("कषायो रसभेदेऽपि ··। सुरभौ लोहिते त्रिषु॥" इति मेदिनी) रुक्—प्रभा येषां तथोक्तानां, शीधव्यानां—शीधुसंज्ञकसुरानिर्म्माणोपयोगिनाम्, ऐक्षवाणामित्यर्थः, वल्कलानां—त्वचां, कलापान्—सङ्घान्। नातिचिरोद्धृतानाम्—अनतिचिरोच्चितानां, धातुत्विषां—गैरिकवर्णानां, ("धातुर्मनःशिलाद्यद्रेर्गैरिकन्तु विशेषतः" इत्यमरः) धातकी-कुसुमानां—धातपुष्पिकाख्यपुष्पाणां, "धाइफुल" इति वङ्गीयैराख्यातानामित्यर्थः, अगणिताः,—असङ्ख्याताः, गोणीः,—गुणनिर्म्मितभाजनविशेषान्।

(४०६) पिचव्यानां—पिचु,—तूलं तदुपयोगिनां, कार्पासानामिति भावः; तथा अतसीति।—अतसीगणाः,—अतसीभेदाः, पट्टाः,—वसनभेदाः, मूलकानि—ओषधिभेदाः. तेषाम्; यद्वा,—अतसीगणानां—क्षौमवस्त्रोपयोगिनां क्षुमासमूहानामित्यर्थः, पट्टानां—कौषेयाणां, कौषेयवसनोपयोगिनामित्यर्थः, मूलकानि—मूलानि, बीजानि इत्यर्थः. तेषां, पुष्कलान्—प्रभूतान्, सम्भारान्—निचयान्। माक्षिकस्य—मक्षिकाभिः विशेषकृतस्य, मधुनः,—क्षौद्रस्य इत्यर्थः, भारान्—समूहान्। मयूराङ्गजस्य—शिखि-पिच्छस्य, "भूयसो भारकान्" इति परेणान्वयः। अक्लिष्टेति।—अक्लिष्टानाम्—अक्षुण्णानां, मधूच्छिष्टानां—सिक्थकानां, "मोम" इति वङ्गे प्रसिद्धानामित्यर्थः, चक्र-वालानि—समूहाः तेषाम्। ["मधूच्छिष्टचक्रवालानाम्" इत्यत्र "मधूच्छिष्टचक्र-मालानाम्" इति पाठे,—मधूच्छिष्टचक्राणां—"मौमाछिर चाक" इति प्रसिद्धानां मधुमक्षिकाया. आवासभूतानां सिक्थकबीजानां, माला,—श्रेण्यः. तासाम्]।

(४०७) लम्बमानेति।—लम्बमानानां—दीर्घाणामित्यर्थः, लम्बमानाः,—

काष्ठानां, कुष्ठस्य, (४०८) कठोरकेशरिसटाभारबभ्रुणश्च रोध्रस्य भूयसो भारकान् लोकेन आदाय व्रजता; (४०९) प्रविचितविविधवनफलपूरितपेटकमस्तकाभिश्च, अभ्यर्णग्रामगत्वरीभिः, त्वरमाणाभिः, विक्रयचिन्ताव्यग्राभिः, ग्रामेयिकाभिः व्याप्तदिगन्तरम्; इतस्ततश्च (४१०) युक्तधूरशक्वरशाक्वराणां, पुराणपांसूत्किरकरीषकूटवाहिनीनां,

दीर्घा इत्यर्थो वा, लामज्जकानाम्—उशीराणाम्, ("उशीरमस्त्रियाम्।···। लामज्जकं लघुलयम्" इत्यमरः) जूटस्य—समूहस्य, जटाः,—मूलानि तासाम्। ("मूले लग्नकचे जटा" इत्यमरः)। अपत्वचा—त्वक्शून्याना, खदिरकाष्ठाना—खदिरदारूणाम्। कुष्ठस्य—ओषधिविशेषस्य।

(४०८) कठोरेति।—कठोरः,—प्रवृद्धः, परिणत इत्यर्थः, यः केशरी—सिंहः, तस्य सटाभारः,—जटासमूहः, तद्वत् बभ्रु—कपिल, पिङ्गलमिति यावत् तस्य, ("बभ्रुर्विशालनकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु" इत्यमरः) रोध्रस्य—लोध्रतरुवल्कलस्य इत्यर्थः, भूयसः,—अतिप्रभूतान्, भारकान्—भारा एव भारका तान्, आदाय व्रजता—गच्छता, लोकेन—जनेन।

(४०९) प्रविचितेति।—प्रविचितानि—उच्चितानि, विविधानि—नानाप्रकाराणि, वनफलानि—अरण्यजातवृक्षशस्यानि, तैः पूरितः,—पूर्णः, पेटकः,—भाजनविशेषः, मञ्जूषा इत्यर्थः, ["पिटकः पेटकः पेटा मञ्जूषा" इत्यमरः। "—पेटक—" इत्यत्र "—पिटक—" इति पाठेऽपि स एवार्थः] मस्तके—शिरसि यासां ताभिः, अभ्यर्णग्रामगत्वरीभिः,—सन्निकृष्टग्रामगामिनीभिः, त्वरमाणाभिः,—त्वरितगतिभिः, विक्रयेति।—विक्रयस्य—विपणस्य, ("विपणो विक्रयः" इत्यमरः) चिन्तया—भावनया चिन्तायां वा, व्यग्राभिः,—व्यापृताभिः, कथं केन प्रकारेण वा एतानि द्रव्याणि विक्रेष्यामीति चिन्ता कुर्वतीभिरित्यर्थः, ग्रामेयिकाभिः,—ग्रामवासिनीभिः, व्याप्तदिगन्तरम्—आपूरितदिग्भागमित्यर्थः।

(४१०) युक्तेति।—युक्ताः,—बद्धा इत्यर्थः, धूराः,—बलवन्तः, शक्वराः,—तरुणाः, शाक्वराः,—बलीवर्दा यासु तासाम्, पुराणेति।—पुराणाः,—पुरातनाः, पांसून्—रजांसि, उत्किरन्ति—उत्क्षिपन्तीति तथोक्ताः, रजोभिः आश्लिष्टा इति यावत्, ये करीषाः,—शुष्कगोमयानि, ("गोविट् गोमयमस्त्रियाम्। तत्तु शुष्कं करीषोऽस्त्री" इत्यमरः) तेषां कूटान्—राशीन्, वहन्ति—नयन्ति इति तथोक्तानाम्।

(४११) धूर्गतधूलिधूसरसैरिभसरोषस्वरसार्य्यमाणानां, सङ्कीडच्चटुलचक्रचीत्कारिणीनां शकटश्रेणीनां सम्पातैः (४१२) सम्पाद्यमानदुर्बलोर्वीविरूक्षक्षेत्रसंस्कारम्; (४१३) आरब्धक्षिप्तदान्तवाहकदण्डोड्डीयमानहरिणहेलालङ्घिततुङ्गवैणववृतिभिश्च, (४१४) निखातगौरकरङ्कशङ्कुशङ्कितशशकशकलिततुङ्गशृङ्गैः, प्रयत्नप्रसृतविशङ्कटविटपैः,

---

(४११) धूर्गतेति।—धूर्गतः,—धुरं—भारं, गतः,—प्राप्तः, भारवहने नियुक्त इत्यर्थः, धूलिभिः,—पार्थिवरजोभिः, धूसरः,—ईषत्पाण्डुरः, यः सैरिभः,—महिषः, ("लुलापो महिषो वाहद्विषत्कासरसैरिभाः" इत्यमरः) तेन सरोषेण—सक्रोधेन, स्वरेण—गम्भीरस्वरविशेषेण, सार्य्यमाणाः,—सञ्चाल्यमानाः तासां, सङ्कीडदिति।—सङ्कीडतां—कूजतां, चटुलानां—चञ्चलानां, घूर्णमानानामित्यर्थः, चक्राणां—रथाङ्गानां, चीत्कारः,—शब्दविशेषः, तद्वतीनाम्। सम्पातैः,—सञ्चारैः।

(४१२) सम्पाद्यमानेति।—सम्पाद्यमानः,—जन्यमानः, दुर्बलः,—सामान्य इति भावः, उर्व्याः,—पृथिव्याः, विरूक्षाणां—विशेषेण रूक्षाणां, कर्कशानामित्यर्थः, परुषाणाम् इति यावत्, क्षेत्राणां—केदाराणां, संस्कारः,—शोधनं, कर्षणमिति भावः, यत्र तथोक्तम्।

(४१३) आरब्धेति।—आरब्धाय—रक्षणाय, क्षेत्रशस्यानामिति भावः, क्षिप्ताः,—आरब्धैः,—रक्षकैः, क्षिप्ताः,—प्रेरिताः, दान्ताः,—दन्तमयाः, ये वाहकदण्डाः,—शिरःकलगुडाः, ताडनदण्डा इत्यर्थः, तैः उड्डीयमानाः,—उत्प्लुत्य उत्प्लुत्य पलायमाना इत्यर्थः, ये हरिणाः,—मृगाः, तैः हेलया—अनायासेन, लङ्घिताः—अतिक्रम्य गताः, तुङ्गाः—उन्नताः, वैणवी—वेणुसम्बन्धिनी, वंशनिर्म्मितेत्यर्थः, वृतिः,—वेष्टनं, प्रान्तस्थप्राचीरमित्यर्थः, येषां तैः, ("प्राचीरं प्रान्ततो वृतिः" इत्यमरः)।

(४१४) निखातेति।—निखातैः,—निहितैः, शस्यविघातकप्राणित्रासनार्थं भूमिनिखातदण्डोपरिस्थापितैरिति भावः, गौरैः,—शुभ्रैः, करङ्कैः,—कङ्कालैः, मस्तकास्थिभिरित्यर्थः, शिरःखर्परैरिति यावत्, ("करङ्को मस्तकास्थिनारिकेलफलास्थिनि" इति मेदिनी) शङ्कुभिः,—कीलैः, करङ्कोपलक्षितैरिति भावः, शङ्किताः,—भीताः, शशकाः,—"खरगोस्" इति लोके प्रसिद्धाः मृगभेदाः, तैः शकलिताः,—खण्डिताः, तुङ्गाः,—उन्नताः, शृङ्गाः,—अग्रभागाः, अविकसितपत्राणि वा येषां तैः; प्रयत्नेति।—प्रयत्नेन—प्रकृष्टादरेणेत्यर्थः, प्रसृताः,—पोषिताः, विशङ्कटाः,—विशालाः,

:वाटैः ऐक्षवैः बहुभिः श्यामायमानोपकण्ठम्; (४१५) अतिविप्रकृष्टान्तरैः, मरकतस्निग्धस्नुहीवाटवेष्टितैः, कार्मुककर्म्मण्यवंशविटपसङ्कटैः, (४१६) कण्टकितकरञ्जराजिदुष्प्रवेश्यैः, (४१७) उरुबूक,वचावङ्कसुरस,सूरणशिग्रुग्रन्थिपर्ण,गवेधुकागर्मुद्गुल्मगहन-गृहवाटिकैः, (४१८) निखातोच्च-

विस्तीर्णा इत्यर्थ, ("विशङ्कट पृथु बृहत् विशालं पृथुलं महत्" इत्यमर.) विटपा,—शाखा येषु ते, ऐक्षवै,—इक्षुसम्बन्धिभि, बहुभि,—अनेकै', वाटै,—वृतिस्थानै, ("वाटी मार्गे वृतिस्थाने" इत्यमर') श्यामायमानेति।—श्यामायमान—नीलायमानम्, उपकण्ठ—सन्निकर्ष, समीपवर्त्तिप्रदेश: इत्यर्थ. यस्य तथोक्तम्।

(४१५) अतीति।—अति—अतिशयेन, विप्रकृष्ट—दूरम्, अन्तरम्—अवकाश: येषा तै, मरकतेति।—मरकतवत्—हरिद्वर्णमणिविशेषवत, स्निग्धै,—मसृणै', स्नुहीवाटै,—सुधाहृक्षवृतिभि', वेष्टितानि—परिवृतानि तै, कार्म्मुकेति।—कार्मुकं—धनु, तस्य कर्म्मण्याना—कर्म्मणि हिताना, धनुर्निर्म्माणोपयोगिनामित्यर्थ', वशाना—वेणुवृक्षाणा, विटपै,—शाखाभि, सङ्कटानि—आकीर्णानि सम्बाधानि वा, दुष्प्रवेशानि इत्यर्थ. तै, ("सङ्कटं ना तु सम्बाध" इत्यमर)।

(४१६) कण्टकितेति।—कण्टकिताना—सञ्जातकण्टकाना, करञ्जाना—नक्तमालाख्यवृक्षाणा, राजिभि,—पङ्क्तिभि, दुष्प्रवेश्यानि—प्रवेष्टुमशक्यानि तै।

(४१७) उरुबूकेति।—उरुबूक,—एरण्ड, "एरण्ड उरुबूकश्च रुबूकश्चित्रकश्च स" इत्यमर) वचा—उग्रगन्धा, ("वचोग्रगन्धा ··गोलोमी" इत्यमर) वङ्कक,—रुचितकविशेष:, वकपुष्पवृक्षो वा, सुरस,—भूतघ्न, ("सुरसा तुलसीवृ स्यादलसो बहुमञ्जरी। अपेतराक्षसी गौरी भूतघ्नी देवदुन्दुभि॥" इति कोष); यद्वा,—सुरस—पर्णास, तुलसीत्यर्थ, ("सुरसन्तु त्रिषु स्वादौ पर्णासे तु नपुंसकम्" इति मेदिनी) सूरण,—"ओल्" इति वङ्गभाषया प्रसिद्ध. कन्दविशेष, शिग्रु,—शोभाञ्जन, ("शोभाञ्जन कृष्णगन्धा सुखभञ्जोऽथ शिग्रुक" इति कोष) ग्रन्थिपर्ण,—मुक्ताऽऽकार सुगन्धि ओषधिभेद, ("ग्रन्थिपर्णं शुक बर्हिपुष्प स्थौणेयकुक्कुरे" इति मर) गवेधुका—"गड्गडे" इति वङ्गे प्रसिद्ध तृणधान्यभेद, गर्मुत्—लताविशेष, मर्दनाख्यक्षुपभेदो वा, गुल्म,—प्रकाण्डरहिततृणस्तम्ब, तै. गहना—सान्द्रा, दुष्प्रवेशा इत्यर्थ, गृहवाटिका—उद्यान येषा तै.।

(४१८) निखातेति।—निखातेषु—निहितेषु, स्थितेषु इत्यर्थ:, :उच्चेषु—

काष्ठारोपितकाष्ठालुकलताप्रतानविहितच्छायैः, (४१९) परि-मण्डलबदरीमण्डपकतलनिखातखादिरकीलबद्धवत्सरूपैः, कथमपि (४२०) कुक्कुटरटितानुमीयमानसन्निवेशैः, अङ्गनाऽगस्तिस्तम्भतलविरचितचिप्रपूपिकावापिकैः, (४२१) विकीर्णबदरपाटलपटलैः, (४२२) वेणुपेटदलनलशरमयवृतिविहित-

---

उन्नतेषु, काष्ठेषु—दारुषु, आरोपिता,—उत्थापिता, या काष्ठालुकलताः,—अलाबूलता, स्वनामप्रसिद्धकन्दविशेषाणां वल्ल्यः वा, तासां प्रतानैः,—शाखाप्रशाखाभिः, विहिता,—कृता, छाया येषां तैः।

(४१९) परिमण्डलेति।—परिमण्डलं—समन्तात् गोलं, यत् बदरीमण्डपकं—कोलिवृक्षः, बदरीवृक्षनिर्मितानकुञ्जभवनमित्यर्थः, बदरीकाष्ठनिर्मितगृहविशेषो वा, तस्य तलेषु—अधोभागेषु, निखाते—रोपिते, खादिरे—खदिरदारुमये, कीले—शङ्कौ, बद्धा,—संयता, वत्सरूपा,—क्षुद्रा वत्सा येषां ते।

(४२०) कुक्कुटेति।—कुक्कुटानां—ताम्रचूडानां, रटितेन—रवेण, अनुमीयमानः,—प्रतीयमानः, सन्निवेशः,—संस्थानं, रचना वा येषां तैः, समन्तात् वृक्षगणादिभिः पिहितत्वेन अदृश्यत्वादिति भावः। अङ्गनेति।—अङ्गनानां—स्त्रीणां, शान्तिस्तम्भः,—सान्तिकस्तम्भः, माङ्गलिकानुष्ठानस्मरणार्थं प्रोथितस्थूणाविशेष इत्यर्थः, तस्य तले—निम्नदेशे, विरचिता—निर्मिता, चिप्रपूपिकावापिका येषां तैः। [ "अङ्गनावापिकैः" इति पाठस्य दुर्बोधार्थतया एतस्मात् पुस्तकान्तरधृतः "अङ्गनाऽगस्तिस्तम्भतलविरचितपक्षिपूपिकावापिकैः" इति पाठः कथञ्चित् समीचीनतया प्रतिभाति, एतत्पक्षे,—अङ्गनाभिः अगस्तेः,—वङ्गसेनस्य, वकपुष्पवृक्षस्येत्यर्थः, ("अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्" इति मेदिनी) यः स्तम्भः,—तद्वृक्षनिर्मितस्थूणाकारः पक्षिणाम् उपवेशनार्थस्थानविशेष इत्यर्थः, तस्य तले—निम्नदेशे, विरचिता पक्षिणां—विहङ्गानां, पूपिकावापिका—अङ्गनाप्रदत्तपिष्टकविशेषभक्षणानन्तरं जलपानाय "चौवाच्चा" इति भाषया प्रसिद्धा क्षुद्रसरसी येषु तैरित्यर्थः ]।

(४२१) विकीर्णेति।—विकीर्णैः,—विक्षिप्तैः, बदरीवृक्षात् वायुना पातितैरित्यर्थः, बदरैः,—कोलिफलैः, पाटलानि—श्वेतरक्तानि, पटलानि—छदयः, "चाल" इति वङ्गीयैराख्यातानि गृहाच्छादनानि इत्यर्थः येषां तैः, ("पटलं छदिः" इत्यमरः)।

(४२२) वेणिवति।—वेणूनां—वंशानां, पेटदलाः,—खण्डशकलानि,

भित्तिभिः, किंशुकरोचनारचितमण्डलमण्डपवल्वजबद्धाङ्गारराशिभिः (४२३) शाल्मलिफलतूलसञ्चयबहुलैः, सन्निहितनलशालिशालूकखण्डकुमुदबीजवेणुतण्डुलैः, (४२४) सङ्गृहीतमालबीजैः, भस्ममलनम्लानताम्रथ्यकूटव्यापृतकटैः,

[ "—पीटदल—" इत्यत्र "—पीटगल—" इत्येव पाठः साधीयान्, कोषादौ पीटदलशब्दस्य अदर्शनात्; अस्मिन् पक्षे,—वेणवः,—वंशाः पीटगलाः,—काशाख्यतृणभेदाः इत्यर्थः, "अथ पीटगलः पुंसि नले च काश-मत्स्ययोः" इति मेदिनी ] नलाः,—नडाख्यतृणभेदाः शराः,—गुन्द्राख्यतृणविशेषाश्च, तन्मयी—तदात्मिका, या वृतिः,—वेष्टनं, सैव ताभिर्वा विहिता—कृता, भित्तिः,—कुड्यं येषां तैः, किंशुकेति।—किंशुकानि—पलाशपुष्पाणि, रोचना—गोरोचनाख्यमाङ्गल्यद्रव्यभेदः, ताभ्यां रचितं—कृतं, मण्डलं—गोलाकाररेखा यस्य तादृशे, मण्डपे—गृहे, वल्वजैः,—तृणभेदैः, बद्धः,—रचितः, अङ्गारराशिः,—अलातचयः, भूतोपद्रवनिवारणार्थमिति भावः, येषु तैः; यद्वा,—किंशुकः,—पलाशवृक्षः, रोचनः,—कूटशाल्मलीसंज्ञकः शाल्मलीभेदः, ("रोचनः कूटशाल्मलिः" इत्यमरः) ताभ्याम् आरचितं—कृतं, मण्डलं—वेष्टनं, वृतिरित्यर्थः यस्य तादृशे, मण्डपे वल्वजैः बद्धः,—कृतः, अङ्गारराशिः,—प्रज्वलितशिखाग्निसमूहः, शैत्यनिवारणार्थं व्याघ्रादिभीतिनिवारणार्थं वा इति भावः येषु तैः।

(४२३) शाल्मलीति।—शाल्मलिः,—रक्तपुष्पा, ("शाल्मली रक्तपुष्पा च मुकुटी स्थिरजीविता" इति कोषः) तस्याः फलानां तूलसञ्चयैः,—तूलराशिभिः, बहुलानि—आकीर्णानि तैः। सन्निहितेति।—सन्निहितानि—स्थितानि, नलशालयः,—शालिविशेषाः, शालूकखण्डाः,—पद्ममूलानां खण्डाः, ("पद्ममूलन्तु शालूकम्" इति कोषः) कुमुदबीजानि—कैरवशस्यानि, वेणवः,—वंशाः, तण्डुलाः,—धान्यसाराः, निस्तुषधान्यानीत्यर्थः, यद्वा,—वेणुतण्डुलाः,—वंशबीजानि, वंशजातयवाकारपदार्थभेदाः इत्यर्थः येषु तैः।

(४२४) सङ्गृहीतेति।—सङ्गृहीतानि—सञ्चितानि, मालानां—स्थलपद्मानां, बीजानि—शस्यानि येषु तैः; यद्वा,—सङ्गृहीतानि मालानां—फलानां, "पिण्डि" इति वङ्गे प्रसिद्धानामित्यर्थः, बीजानि—अङ्कुरकारणानि; यद्वा,—सङ्गृहीतानि मालबीजानि—चीनकशस्यानि येषु तैः, ("माल चेत्रे स्त्रियां फलाखजीर्णात्यन्तरे पुमान्" इति मेदिनी)। भस्मेति।—भस्मना—पांशुना, मलनेन—सङ्गेन, म्लानं—मलिनतां गतं, यत् ताम्रथ्यकूटं—ताम्रचिकाराशिः, तत्र व्यापृताः,—

( ४२५ ) आम्रानराजादनमदनफलस्फीतैः, मधूकासवमद्यप्रायैः, ( ४२६ ) कुसुम्भकुम्भगण्डकुसूलैः, अविरहितराजमाषत्रपुषकर्कटिकाकुष्माण्डालाबूबीजैः, ( ४२७ ) पोष्यमाणवनविड़ाल-

निहिताः, कटाः,—"मादुर" इति वङ्गभाषया ख्यातानि शयनानि येषां तैः ; यद्वा,—भस्मना—भूतीना, कलनेन—कर्द्दमेन, ( "कलनः पटवासे ना कर्द्दमे तु नपुंसकम्" इति मेदिनी ) जलार्द्रभस्मलेपनेनेवेत्यर्थः, ( दृश्यते च गाम्भारीत्वचलवचं भस्मलिप्तमिव लोकैः ) म्लानाः ये काश्मर्य्याः,—गाम्भारीवृक्षाः, ( "गाम्भारी सर्व्वतोभद्रा काश्मरी मधुपर्णिका । श्रीपर्णी भद्रपर्णी च काश्मर्य्यश्च" इत्यमरः ) तेषां कूटे—राशौ, खण्डिततरुत्वचसमूहोपरि इत्यर्थः, व्याप्ताः कटाः, शोषणार्थमिति भावः येषां तैः ।

( ४२५ ) आम्रानेति ।—आम्रानानि—ईषच्छुष्काणि, राजादनः,—कपीटाख्यः वृक्षभेदः, ( "क्षीरीदकस्तु राजन्यः क्षीरस्तम्भः कपीद्रुमः । राजादनी दृढस्कन्धः कपीटः प्रियदर्शनः ॥" इति कोषः ) ; यद्वा,—राजादनं—प्रियालः, "राजादनं प्रियालश्च" इत्यमरः ) मदनः,—"मयना" इति वङ्गीयैराख्यातः रोधवृक्षः, ( "मदनः शल्यको रोधः" इति कोषः ) तयोः फलानि, तैः स्फीतानि—पूर्णानि तैः । मधूकेति ।—मधूकानां—"महुया" इति ख्यातानां गुडपुष्पाणां, ( "मधूके तु गुडपुष्पमधुद्रुमौ" इत्यमरः ) आसवाः,—रसाः एव, यद्वा,—मधूकेभ्यः कृताः आसवाः,—सन्धानविशेषाः, मद्यविशेषा इत्यर्थः, ता एव मद्यानि—सुराः, प्रायेण—बाहुल्येन येषु तैः ।

( ४२६ ) कुसुम्भेति ।—कुसुम्भानां—महारजनाख्यपुष्पाणां, कुम्भाः,—घटाः, गण्डानां—खड्गाख्यमृगभेदानां, कुसूलानि—स्थानानि येषु तैः ; यद्वा,—कुसुम्भानां—महारजनानां, ( "स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि" इत्यमरः ) कुम्भानां—गुग्गुलूनाञ्च, ( "कुम्भो राश्यन्तरे ··· । ···घटे हीपन्तु गुग्गुलौ" इति मेदिनी ) गण्डाः,—पिटकाः, तत्पूर्णपात्रविशेषाः इत्यर्थः, ( "गण्डः स्यात् पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीरयङ्गे पिटकेऽपि च ॥" इति मेदिनी ) गण्डाः,—पिण्डा इत्यर्थौ वा, तेषां कुसूलाः,—स्थापनार्थस्थानविशेषाः, गोष्ठी वा येषु तैः । अविरहितेति ।—न विरहितानि—शून्यानि, राजमाषाणां—निष्पावाणां, "बरवटी" इति वङ्गे प्रसिद्धानां व्रीहिभेदानां वा, त्रपुषाणां—"शशा" इति वङ्गभाषया प्रसिद्धानां लाउकानां, कर्कटिकानां—"काँकुड" इति वङ्गे ख्यातानां, कुष्माण्डानां—दार्काकूणाम्, अलाबूनां—तुम्बीनाञ्च, बीजानि—अङ्कुरकारणानि येषु तैः ।

( ४२७ ) पोष्यमाणेति ।—पोष्यमाणाः,—पाल्यमानाः, वनविडालाः,—

सालुधाननकुलशालिजातजातकादिभिः अटवीकुटुम्बिनां गृहैः उपेतं वनग्रामकं ददर्श, तत्रैव च अवसदिति।

इति श्रीबाणभट्टकृते हर्षचरिते कथान्तरे नाम
सप्तम उच्छ्वासः॥ ७॥

---

आरण्यमार्जाराः, सालुधानाः,—प्राणिविशेषाः, मातुलाहिनामसर्पभेदा वा, ("सालुधानो मातुलाहिः" इत्यमरः) ते तु निर्विषाः ज्ञेयाः, नकुलाः,—"बेजि" इति वङ्गे प्रसिद्धाः सर्पशत्रवः, शालिजाताः,—जीवभेदाः, जातकादयश्च—प्राणिविशेषाः येषु तैः; यद्वा,—शालयः,—"खटाश" इति वङ्गे प्रसिद्धाः गन्धमार्जाराः, ("शालिस्तु कलमादौ च गन्धमार्जारके पुमान्" इति मेदिनी) तेषां जातानां—समूहानां, जातकादयः,—शावकादय इत्यर्थः; यद्वा,—तेभ्यः जाताः,—उत्पन्नाः, ये जातकाः,—शावकाः, तदादयः,—तत्प्रभृतयः येषु तैः, ["जातकादिभिः" इत्यत्र "जालकादिभिः" इति पाठः समीचीनतया प्रतिभाति, पोष्यमाणवनबिडालादिजातानां—समूहानां, जालकानि—आनायाः, पिञ्जरा इति यावत्, तदादयः यत्र तैः]। अटवीकुटुम्बिनां—वनगृहिणाम्। उपेतं—युक्तं, वनग्रामकम्—अरण्यमध्यस्थ सवसथं, तन्नामक वा।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन गान्धर्ववंशावतंसेन पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोध-
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चामलाख्यायां
श्रीहर्षचरितव्याख्यायां सप्तम उच्छ्वासः॥ ७॥

# अष्टम उच्छ्वासः।

सहसा सम्पादयता मनोरथप्रार्थितानि वस्तूनि।
दैवेनापि क्रियते भव्यानां पूर्व्वसेवेव ॥ १ ॥
विद्वज्जनसम्पर्को नष्टेष्टज्ञातिदर्शनाभ्युदयः।
कस्य न सुखाय भवने भवति महारत्नलाभश्च ? ॥ २ ॥

(१) अथ अपरेद्युः उत्थाय पार्थिवस्तस्मात् ग्रामकात् निर्गत्य विवेश विन्ध्याटवीम्; आट च तस्याम् इतश्चेतश्च सुबहून्

---

अथ पुरुषप्रयत्नं विनाऽपि सुदैवानुकूल्येन सत्पुरुषाणां मनोरथसिद्धिर्भवतीति द्वाभ्यां प्रदर्शयन्नाह, सहसेति।—सहसा—हठात्, मनोरथप्रार्थितानि—मनोऽभीष्टानि, अभिलषितानीत्यर्थः, वस्तूनि—द्रव्याणि, सम्पादयता—संयोजयता, प्रददता इत्यर्थः, दैवेनापि,—भाग्येनापि, अनुकूलेनेति भावः, किं पुनः पुरुषकारेण अन्येन वा इत्यपिशब्दार्थः, भव्यानां—योग्यानां, शुभफललाभार्हाणामित्यर्थः, सत्पात्राणामिति भावः, ("भव्य शुभे च सत्ये च योग्ये भाविनि च त्रिषु" इति मेदिनी) पूर्व्वसेवा—प्रथमा परिचर्य्या, क्रियते इव—विधीयते इव, सुदैवं हि सहसैव सतां मनोरथं सम्पाद्य सदनुरागस्य प्रथमनिदर्शनं प्रदर्शयति, उत्तरत्रापि प्रभूताभ्युदयं जनयतीति भावः। श्लोकेनानेन भाग्यवतः सतो हर्षस्य दैवानुकूल्येन यात्रायाः साफल्यं सूचितम्। अत्र पूर्व्वसेवायाः अक्रियमाणाया अपि तत्त्वेन सम्भावनोत्कीर्त्तनात् क्रियोत्प्रेक्षाऽलङ्कारः। आर्य्या वृत्तम् ॥ १ ॥

विद्वदिति।—विदुषा जनेन—पण्डितलोकेन, सम्पर्कः,—सङ्गः, सख्यमिति भावः, तथा नष्टेति।—नष्टस्य—अदर्शनं गतस्य, इष्टस्य—प्रियस्य, ज्ञातेः,—बन्धुजनस्य, दर्शनं—साक्षात्कारः, तदेव अभ्युदयः,—मङ्गलम्, इष्टलाभजनितानन्द इत्यर्थः, भवने—गृहे, महारत्नानां—महामूल्यमणीनाम्, अन्विष्यापि दुर्लभानामिति भावः, लाभश्च—प्राप्तिश्च, कस्य—जनस्य इति भावः, सुखाय—आनन्दाय, न भवति ?—न जायते ? अपि तु सर्वस्य एव भवति इत्यर्थः, एतेन हर्षस्य दिवाकरमित्राख्यविद्वन्मिलनलाभः भगिन्याः राज्यश्रियाः प्राप्तिः महामूल्यैकावलीलाभश्च सूचितः। अत्र प्रस्तुतानां सम्पर्काभ्युदयरत्नलाभानामेकेन सुखजननयोग्यत्वरूपधर्म्मेण सह सम्बन्धात् तुल्ययोगिताऽलङ्कारः। आर्य्या वृत्तम् ॥ २ ॥

(१) एतदेव प्रतिपादयति, अथ इत्यादि।—अपरेद्युः,—अपरस्मिन् दिवसे, वनग्रामे आवासग्रहणस्य परदिने इत्यर्थः। आट—बभ्राम। "एकदा तु भूपते,"

दिवसान्। एकदा तु भूपतेर्भ्रमत एव आटविकसामन्त-शरभकेतोः सूनुर्व्याघ्रकेतुः नाम कुतोऽपि (२) कज्जलश्यामल-श्यामलतावलयेनाधिललाटम् उच्चैःकृतमौलिबन्धम्, (३) अन्ध-कारिणीम् अकारणभुवा भ्रुकुटिभङ्गेन त्रिशाखेन त्रियामामिव साहससहचारिणीं ललाटस्थलीं सदा समुद्वहन्तम्, (४) अव-तंसितैकशुकपक्षकप्रभाहरितायमानेन पिनद्धकाचरकाचमणि-कर्णिकेन श्रवणेन शोभमानं, (५) किञ्चिच्चुल्लस्य प्रविरल-पक्ष्मणः चक्षुषः सहजेन रागरोचिषा रसायनरसोपयुक्तं ताम्र-

---

इत्यस्य "व्याघ्रकेतु···शबरयुवानमादाय आजगाम" इति उत्तरेण सम्बन्धः। भूपतेः,—हर्षस्य, [कर्मणि षष्ठी]। आटविकेति।—आटविकः,—आरण्य, सामन्त,—अधिराज,, वनप्रदेशरक्षणाय हर्षात् प्राप्ताधिकार इत्यर्थ, यः शरभकेतु,—तदाख्य, कश्चित् तस्य, सूनु,—पुत्रः, इति व्याघ्रकेतुरित्यस्य विशेषणम्।

(२) शबरयुवान विशिनष्टि, कज्जलेति।—कज्जलवत्—अञ्जनवत्, श्यामला—नीला, या श्यामलता—गन्धप्रियङ्गुवल्ली, सा एव वलय—वेष्टन तेन, अधिललाटं—ललाटोपरि, उच्चैरिति।—उच्चैः कृत,—उन्नमय्य स्थापित, मौलिबन्ध,—संयतकेशचयः येन तथोक्तम्।

(३) अकारणभुवा—विना कारणं जातेन इत्यर्थः, स्वाभाविकेन इति भावः, त्रिशाखेन—त्रिरेखेण, भ्रुकुटिभङ्गेन—भ्रूकौटिल्येन, अन्धकारिणीम्—अन्धकारवती, भ्रूसङ्कोचनेन नेत्रयोराहतप्रायत्वादिति भाव, यद्वा,—अन्धकारिणी—कृष्णवर्णामि-त्यर्थ, अत एव त्रियामामिव—रात्रिमिव, तमिस्रामिवेति यावत्, साहससहचारिणी—साहससङ्गिनीम्, बलपूर्वककार्यकरणसामर्थ्यबोधिकामिति भावः, ललाटस्थली—भालदेश, समुद्वहन्त—दधानम्।

(४) अवतंसितेति।—अवतंसितस्य—भूषणीकृतस्य, एकस्य—एकमात्रस्य, शुकपक्षकस्य—कीराख्यपक्षिपतत्रस्य, प्रभया—कान्त्या, हरितायमान—श्यामायमान तेन, पिनद्धेति।—पिनद्धा—बद्धा, काचरस्य—कपिलस्य, काचमणे,—काचाख्य-रत्नस्य, कर्णिका—कर्णभूषण, .काचमणिनिर्मित कर्णभूषणमित्यर्थ, यत्र तथोक्तेन, श्रवणेन—कर्णेन, शोभमान—राजमानम्।

(५) किञ्चिच्चुल्लस्य—ईषत् क्लिन्नस्य, ("चु. क्लिन्नाचे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्षि

ह्रवं क्षतजमिव क्षरन्तम्, अवनाटनासिकं, चिपिटाधरं, चिकिनचिबुकम्, (६) अहीनहनूत्कटकपोलकूटास्थिपर्य्यन्तम्, ईषदुदग्रग्रीवावन्धं, स्कन्नस्कन्धार्द्धभागम्, (७) अनवरतकोदण्डकुण्डलीकरणकर्कशव्यायामविस्तारितेन अंसलेन उरसा हसन्तमिव तटशिलाप्रथिमानं विन्ध्यगिरेः,

चाप्यसी" इत्यमरः) प्रविरलपक्ष्माणः,—असान्द्रलोमः। सहजेन—स्वाभाविकेन, रागरोचिषा—लोहितप्रभया, रसायनरसोपयुक्त—रसायनरसेन—औषधविशेषरसेन सह, उपयुक्त—पीतम् इत्यर्थः, तरक्षुः,—मृगादनः, "नेकुडे वाघ" इति वङ्गे प्रसिद्धः क्षुद्रव्याघ्रविशेष इत्यर्थः, ("तरक्षुस्तु मृगादनः" इत्यमरः) तस्य इदं तारक्षवं, तच्च क्वचित् रोगविशेषे (यक्ष्मणि) उपयुज्यते इति वैद्यकाः; क्षतजमिव—रक्तमिव, क्षरन्त—स्रवन्तम्। अवनाटनासिक—निम्ननासापुटम्, ("अवटीटोऽवनाटश्चावभ्रटो नतनासिके" इत्यमरवचनात् अवनाटशब्देनैव निम्ननासिके लब्धेऽपि पुनर्नासिकाशब्दग्रहणं नासाया अतिनिम्नत्वद्योतनार्थमिति मन्तव्यम्) अन्तःप्रविष्टनासिकमित्यर्थः, "खाँदा नाक" इति वङ्गभाषया प्रसिद्धमिति भावः। चिपिटाधरं—स्थूललम्बरदनच्छदम्। चिकिनचिबुकं—स्थूलोपवक्त्राधराधोभागम्।

(६) अहीनेति।—अहीनौ—अन्यूनौ, प्रवृद्धौ इत्यर्थः, हनुभ्या—कपोलोर्द्ध्वभागाभ्याम्, उत्कटयोः,—उन्नतयोः, विषमयोः वा, कपोलयोः,—गण्डयोः, ("ओष्ठाधरौ तु रदनच्छदौ दशनवाससी। अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परो हनु" इत्यमर) कूटौ—शिखरभूतौ, अस्थिपर्य्यन्तौ—वाङ्गालप्रान्तौ यस्य तम्, अत्युन्नतहन्वस्थिकपोलम् अत एव निम्नहनुदेशमित्यर्थः। ईषदुदग्रग्रीवावन्धम्—ईषदुदग्र—किञ्चिदुन्नतः, ["ईषदुदग्र—" इत्यत्र "ईषदवाग्र—" इति पाठे – अवाग्र,—अवनतः इत्यर्थः] ग्रीवावन्धः,—कन्धरासन्निवेशः यस्य तम्। स्कन्नेति।—स्कन्न,—शुष्कः, लम्बमानः, उन्नतो वा, स्कन्धार्द्धभागः,—असार्द्धदेशः यस्य तम्।

(७) अनवरतेति।—अनवरतेन—अविश्रान्तेन, कोदण्डस्य—धनुषः, कुण्डलीकरणेन—ज्याकर्षणेन, चक्रीकरणेन इत्यर्थः, कर्कशेन—कठिनेन, व्यायामेन च—अङ्गचालनविशेषेण च, विस्तारितं—प्रसा गत तेन, अंसलेन—बलवता, प्रशस्तेन दृढेन च इति यावत्, ("बलवान् मांसलोऽंसलः" इत्यमर.) उरसा—वक्षस्थलेन, विन्ध्यगिरे,—विन्ध्याचलस्य, तटशिलाप्रथिमानं—तटशिलायाः,—उन्नतप्रदेशस्थप्रस्तरस्य, प्रथिमान – विस्तार, हसन्तम्—उपहसन्त, विपुलोरस्कमित्यर्थः।

(८) अजगरगरीयसा च भुजयुगलेन लघयन्तं तुहिनशैलशालद्रुमाणां द्राघिमाणं, (९) वराहवालवलितबन्धनाभिर्नागदमनजूटिकाभिः जटिलीकृतपृष्ठे प्रकोष्ठे प्रतिष्ठां गतं गोदन्तमणिचित्रं त्रापुषं वलयं बिभ्राणम्, अतुन्दिलमपि तुन्दिभम्, (१०) अहीरमणीचर्म्मनिर्म्मितपट्टिकया उच्चित्रचित्रकत्वकृतारकितपरि-

(८) अजगरगरीयसा—अजगर इव—बृहदाकारसर्पविशेष इव, गरीयः,—गुरुतर, दीर्घमित्यर्थः तेन। तुहिनेति।—तुहिनशैलस्य—हिमाद्रेः, शालद्रुमाणां—सर्ज्जतरूणां, द्राघिमाणम्—अतिदीर्घता, लघयन्तं—लघूकुर्वन्तम्, आजानुलम्बितभुजमिति भाव.।

(९) वराहेति।—वराहस्य—शूकरस्य, वालेन—लोम्ना, बलितं—कृतं, बन्धनं—संयमन यासां ताभि', नागदमनजूटिकाभिः,—नागदमनः,—"नागदौना" इति वङ्गीयैराख्यातः विषहरः ओषधिविशेषः, तस्य; जूटिका—प्रतानः, क्षुद्रमूलं वा ताभि', सर्पभयनिवारणार्थमिति भावः, [ "नागदमनजूटिकाभि" इत्यत्र "नागदमनजूटिकावाटिकाभि" इति पाठे,—नागदमनजूटिकाया वाटिकाः,—पूल्यः, गुच्छा इत्यर्थः ताभिः ] जटिलीकृतं—युक्तं, पृष्ठम्—उपरिभागः यस्य तथाभूते, प्रकोष्ठे—कूर्परमणिबन्धयोरन्तरालदेशे, ("प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी) प्रतिष्ठां—स्थितिं, गतं—प्राप्तं, गोद मणिचित—सर्पविशेषशिरोरत्नमण्डितं, त्रपुणा—सीसकेन रङ्गेण वा निर्वृत्तं त्रापुष—सीसकेन रङ्गेण वा निर्म्मितमिति यावत्; यद्वा,—त्रपुणः,—सीसकस्य रङ्गस्य वा विकारः त्रापुषं—सीसकनिर्म्मित रङ्गनिर्म्मितं वेत्यर्थः, [ "त्रपुजतुनोः षुक्" (४।३।१३८ पा०) इत्यण् षुगागमश्च। "त्रपु सीसकरङ्गयो." इति मेदिनी ] वलयं—कटकं, बिभ्राणं—दधानम्। अतुन्दिलं—तुन्दिलः,—बृहत्कुक्षि', स्थूलोदरः पुमानित्यर्थ., ("तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः" इत्यमरः) स न भवतीति तं, क्षीणोदरं कृशमध्यमिति वा, तुन्दिभम्—उन्नतनाभिम्, [ "तुन्दिवलिवटेर्भः." (५।२।१३९ पा०) वृद्धा नाभिस्तुन्दिरिति तुन्दिशब्दात् भः। "तुन्दिभम्" इत्यत्र "तुण्डिभम्" इति पाठेऽपि स एवार्थः ]।

(१०) अहीति।—अहीरमणी—द्विवक्त्रः चित्रकाख्यः जन्तुभेद', यच्छायया गच्छतोऽपि अपरसर्पत्रासकः भवतीति बोध्यम्; [ "अहीरमणि—" इत्यत्र "अहीरणि—" इति पाठस्तु साधीयान्, अहीरमणी इति शब्दस्य कोषादावदर्शनादर्थासङ्गतेश्च; अहीन् ईरयति दूरीकरोति इति व्युत्पत्त्या "राजसर्प" इति प्रसिद्धः द्विमुखसर्पविशेषः

वारया (११) सङ्कुञ्चाजिनजालकितया शृङ्गमयमसृणमुष्टिभाग-भास्वरया (१२) पारदरसलेशलिप्तसमस्तमस्तकया पाण्या करालितविसङ्कटकटिप्रदेशं, (१३) प्रथमयौवनोल्लिख्यमान-मध्यभागभ्रष्टमांसभरितौ इव स्थवीयसावूरुदण्डौ दधतम्,

अहीरपि:, तद्दर्शनादितरे सर्पाः पलायन्ते] तस्याश्चर्मणा—त्वचा, निर्म्मिता—रचिता, पट्टि—खड्गकोषधारणार्थं वक्षसि तिर्य्यग्विलम्बितचर्म्मनिर्म्मितप्रशस्ततन्तुभेदः यस्याः तथाभूतया, उचितेति।—उचिता—स्वभावोद्भतचित्रा, विचित्रवर्णा इत्यर्थः, या चित्रकस्य—व्याघ्रविशेषस्य, त्वक्—चर्म, तया तारकित,—सञ्जाततारः इव परिदृश्यमान इत्यर्थ, परिवारः,—खड्गकोषः, परिवेष्टनमित्यर्थः, यस्याः तथाभूतया। ("परिवारः परिजने खड्गकोषे परिच्छदे" इति मेदिनी) ["अहीरमणी··परिवारया" इत्यत्र "अहीरमणीचर्मनिर्मितपट्टिकयोश्चिचचित्रकत्वक्तारकितपरिवारया" इति पाठे,—तादृशपट्टिकयो:,—खड्गकोषस्य उभय पार्श्वस्थितवलयनिक्षेषनिबद्धचर्मरज्ज्वोरित्यर्थः, आबद्धया इति अध्याहार्य्यं, चित्रया—विविधवर्णया, चित्रकत्वचा तारकित परिवारः यस्याः तथाभूतया]।

(११) सङ्कुचेति।—सङ्कुचेन—सङ्कुचितेन, अजिनेन—कृष्णमृगचर्मणा, जालकिता—गवाक्षिता, जालाहतवत् परिदृश्यमाना इत्यर्थः तया, सुतनुकुञ्चितमृगचर्मनिर्मितकोषाभ्यन्तरस्थावरणया इत्यर्थः, आदौ तादृशचर्मणा कृपाणीमावेष्ट्य पश्चात् कोषमध्ये स्थापितवान् इति भाव, शृङ्गेति।—शृङ्गमयेण—माहिषमार्गादिविषाणनिर्मितेन, मसृणेन—स्न ेन, मुष्टिभागेन—त्सरुदेशेन, मुष्टिधार्य्यस्थानेनेत्यर्थः, भास्वरा—दीप्तिमती तया।

(१२) पारदेति।—पारदस्य—सूतस्य, रसः,—द्रवः, यद्वा—पारद एव रसः,—विषं, तस्य लेशेन—बिन्दुना, लिप्त—दिग्ध, समस्त—सम्पूर्ण, मस्तका—शिरोभागः यस्याः तया, कृपाण्या—क्षुरिकया कर्त्तर्य्या वा, ("कृपाणः खड्गे क्षुरिकाकर्त्तर्य्योरपि योषिति" इति मेदिनी) करालितेति।—करालित,—भीषणीकृतः, विसङ्कटः,—विशालः, स्थूल इत्यर्थः, कटिप्रदेश,—श्रोणिफलक यस्य तम्।

(१३) प्रथमेति।—प्रथमेन—प्राथमिकेनेत्यर्थः, यौवनेन—तारुण्येन, उल्लिख्यमानात्—उत्खन्यमानात्, कृशतां नीयमानादिति यावत्, मध्यभागात्—उदरदेशादित्यर्थः, भ्रष्टेन—स्खलितेन, मांसेन—पिशितेन, भरिताविव—आपूरिताविव, स्थवीयसौ—अतिस्थूलौ।

(१४) अच्छभल्लचर्म्ममयेण भल्लोप्रायप्रभूतशरस्तता (१५) शबल-शार्दूलच पटपीड़ितेन अलिकुलकालकम्बललोम्ना पृष्ठ-भागभाजा भस्त्राभरणेन पल्लवितमिव कार्श्यमुपदर्शयन्तम्, (१६) उत्तरत्रिभागोत्तंसितचाषपिच्छचारुशिखरे खदिर-जटानिर्म्माणे खरप्राणे (१७) प्रचुरमयूरपित्तपत्रलताचित्रित-त्वचि त्वचि सारगुरुणि वामस्कन्धाध्यासितधनुषि दोष्णि लम्बमानेन (१८) अवाक्शिरसा शितशरशल्यैकनलकविवर-

(१४) अच्छेति।—अच्छभल्लचर्म्ममयेण—भल्लूकत्वक्निर्मितेन, ("ऋचाच्छ-भल्लभल्लूकाः" इत्यमरः) भल्लीति।—भल्ली—अस्त्रविशेषः, तत्प्रायान्—तद्बहुलान्, प्रभूतान्—प्रचुरान्, शरान्—बाणान्, बिभर्त्ति—धारयतीति तथोक्तेन।

(१५) शबलेति।—शबल—चित्रं, शार्दूलचर्म्मेव—व्याघ्राजिनमेव, पटः—आवरणं, तेन पीडितम्—आवृतं तेन, अलीति।—अलिकुल—भृङ्गवृन्द, तद्वत् काल—कृष्णवर्णं, यत् कम्बललोम—रल्लकरोम तेन, तदुपलक्षितेन इति भावः, पृष्ठभागभाजा—पृष्ठदेशस्थितेन, भस्त्राभरणेन—भस्त्रा—चर्म्मनिर्मिताग्न्युद्दीपकवायु-यन्त्रविशेषः, सैव आभरणं—मण्डनं तेन, तूणेन वा, पल्लवितमिव—पूरितमिव, कार्श्यं—कृशताम्, आत्मन इति भावः, उपदर्शयन्त—प्रकाशयन्तं, सबाणतूणभारेण अति-पीडितमिव आत्मानं प्रकटयन्तमित्यर्थः।

(१६) उत्तरेति।—उत्तरे—उपरीत्यर्थः, त्रिभागे—तृतीये भागे, कूर्परोपरि-भागे इत्यर्थः, उत्तंसित—मण्डनीकृत, यत् चाषपिच्छ—नीलकण्ठाख्यपक्षिपक्ष, तेन चारु—मनो , शिखरम्—अग्रं यस्य तथोक्ते, खदिरेति।—खदिरजटाया इव—खदिरवृक्षस्य मूलस्येव, अतिस्थूलस्य इति भावः निर्माण—घटन यस्य तथाभूते, खदिरजटानिभे इत्यर्थः, पीवरांसे इति यावत्, खरप्राणे—तीक्ष्णबले।

(१७) प्रचुरेति।—प्रचुरेण—बहुना, मयूरपित्तेन—शिखिमायुना, या पत्रलता—रचनाविशेषः, रचितेति भावः, तया चित्रिता—रञ्जिता, त्वक्—चर्म्म यस्य तथाविधे। त्वचि—चर्मणि, सारगुरुणि—सारेण—काठिन्येन, गुरु,—महान् तस्मिन्, दुर्भेद्यचर्मणि इत्यर्थः, वामेति।—वामस्कन्धं—सव्यांसम, अध्यासित—स्थित, धनु,—कार्मुकं यस्य तथाभूते, दोषि—भुजे, ("भुजबाहू प्रवेष्टो दोः" इत्यमरः)।

(१८) अवाक्शिरसा—अधोमुखेन, शितेति।—शितेन—तीक्ष्णेन, शरेण—

प्रवेशितेतरजङ्घाजनितस्वस्तिकबन्धेन (१९) बन्धूकलोहित-रुधिरराजिरञ्जितघ्राणवर्त्मना (२०) वपुर्विततिव्यक्तविभाव्य-मानकोमलक्रोड़रोमशुक्लिम्ना शशेन (२१) शिताटनीशिखाऽग्र-ग्रथितग्रीवेण (२२) चापावृतचञ्चूत्तानताम्रतालुना तित्ति-रिणा वर्णकमुष्टिमिव मृगयाया दर्शयन्तं, (२३) विषमविष-दूषितवदनेन च विकर्णेन कृष्णाहिना इव मूलगृहीतेन

वाणेन, कृत्त—छिन्नं, यत् एकं नलकं—"नला" इति ख्यात. जङ्घाऽस्थिविशेष, तस्य विवरे—छिद्रे, प्रवेशिता—ढौकिता, या इतरजङ्घा—इतरा अन्या जङ्घा, तया जनित,—कृत., स्वस्तिक-बन्धः,—आसनबन्धविशेष यस्य तथोक्तेन।

(१९) बन्धूकेति।—बन्धूकं—तदाख्यं पुष्प, तद्वत् लोहितं—रक्त, यत् रुधि' —शोणित, तस्य राज्या—धारया, रञ्जित—प्राप्तराग, रक्तवर्णमित्यर्थ., घ्राणवर्त्म—नासारन्ध्र यस्य तेन, नासारन्ध्रस्रुतरक्तेन इत्यर्थः।

(२०) वपुरिति।—वपुष,—शरीरस्य, विततया—विस्तारेण, गतजीवत्वेन दैहिकसङ्कोचाद्यभावादिति भाव, व्यक्त—स्पष्टं यथा तथा, विभाव्यमान,—दृश्य-मान, कोमलान.—तनुकानाराणा, क्रोडरोम्णाम्—अङ्कलोम्ना, शुक्लिमा—श्वैत्य यस्य तथोक्तेन, शशेन—तदाख्येन मृगविशेषेण।

(२१) शितेति।—शिता—तीक्ष्णा, या अटनी—धनुष्कोटि, धनुषोऽग्रभाग: इत्यर्थ, ("कोटिरस्याटनी" इति धनु प्रकरणे अमर.) तस्या. शिखा—चूडा, तस्या अग्रम्—उपरिभाग, तत्र ग्रथिता—निबद्धा, ग्रीवा—कन्धरा यस्य तेन।

(२२) चापेति।—चापेन—धनुषा, आवृतायाम्—आच्छन्नाया, चञ्चौ—त्रोट्याम्. उत्तान—ऊर्ध्वीभूत, परिदृष्ट इत्यर्थ., व्यात्तमुखत्वादिति भाव, ताम्र.,—रक्तवर्ण., तालु—काकुदम्, अन्तर्मुखे परिभाग इत्यर्थ. यस्य तेन, तित्तिरिणा—तदाख्येन पक्षिणा, मृगयाया.—आखेटस्य, मृगहननक्रियाया इत्यर्थ., वर्णकमुष्टिमिव—मुष्टिगृहीतलेखन्या प्रथमम् अक्षरलेखनमिव, "हाते खड़ी" इति वङ्गभाषया प्रसिद्धं विधानम् इति यावत्, क्षुद्रमृगादिवधरूप प्रथम मृगयाव्यापारत्वात्मन. प्रकाशयन्तमिव इति भाव.।

(२३) विषमेति।—विषमेण—दारुणेन, विषेण—गरलेन, लिप्तेन, दग्धाख्येन च इति भाव, दूषित—सदोष, वदनम्—अग्रभाग, मुखञ्च यस्य तेन, कृष्णाहिना इव—कृष्णसर्पेण इव, मूलगृहीतेन—मूले—अधोभागे, पुच्छदेशे च, गृहीत.,—

व्यग्रदक्षिणकराग्रं, जङ्गममिव गिरितटतमालपादपं, यन्त्रोल्लिखितम् अश्मसारस्तम्भमिव भ्रमन्तम्, (२४) अञ्जनशिलाच्छेदमिव चलन्तम्, अयःसारमिव गिरेर्विन्ध्यस्य गलन्तं, पङ्कस्थलीं करिकुलानां, कालपाशं कुरङ्गयूथानां, (२५) धूमकेतुं मृगराजचक्राणां, महानवमीमहं महिषमण्डलानां, हृदयमिव हिंसायाः, फलमिव पापस्य, कारणमिव कलिकालस्य, कामुकमिव कालरात्रेः शबरयुवानम् आदाय आजगाम;

हृत नेन, विकर्णेन—तदाख्यास्त्रविशेषेण, कर्णरहितशरविशेषेणेत्यर्थः, व्यग्रदक्षिणकराग्र—व्यासक्तदक्षिणहस्ताग्रभाग, विषलिप्तबाण दधानमित्यर्थः। जङ्गम—चरिष्णु, गतिमन्तमित्यर्थः, गिरीति।—गिरितटे—पर्व्वतप्रस्थे, य तमालपादप,—कालस्कन्धवृक्ष तमिव, श्यामलत्वादिति भाव। यन्त्रोल्लिखित—शाणयन्त्रघृष्टमित्यर्थः, शिल्पिशिल्पनिर्म्मितमिति वा, अश्मसारस्तम्भमिव—दृढप्रस्तरस्तम्भमिव, मसृणकृष्णवर्णदृढकायत्वादिति भाव।

(२४) अञ्जनशिलाच्छेदमिव—कज्जलप्रस्तरशकलमिव। अयःसारमिव—लौहस्य स्थिराशमिव। करिकुलाना—गजयूथाना, पङ्कस्थलीमिव—सकर्दमभूमिमिव, मारकत्वादिति भाव, यथा करिणो दुस्तरपङ्कमासाद्य नोत्थातु समर्था, अवसीदन्ति च, तथा अमु प्राप्य अपि न पलायितु समर्था, म्रियन्ते च इति तात्पर्य्यम्। [ "पङ्कस्थली करिकुलानाम्" इत्यत्र "पाकल करिकुलानाम्" इति पाठे,—करिकुलाना पाकल—तदाख्य हस्तिना ज्वरमिव, ( 'पाकल कुष्ठभेषजे पुंसि स्यात् कुञ्जरज्वरे" इति मेदिनी ) तदाख्यज्वरस्य करिणा प्राणनाशकत्वात्, यदुक्त वैद्यके,—"असाध्योऽय ज्वरो व्याधि. गोमहिषाश्वकुञ्जरे। किञ्चित् कृच्छ्रतमो नृणामन्येषा जीवघातक ॥" "पाकल स तु नागानामभितापस्तु वाजिनाम्" इत्यादि। पाकलो यथा करिहन्ता, तथा अयमपीति भाव ]। कुरङ्गयूथाना—मृगसङ्घाना, कालपाशं—यमस्य बन्धनरज्जुमिव, दर्शनमात्रेणैव हननादिति भाव.।

(२५) मृगराजचक्राणा—सिंहसमूहाना, [ राजसमूहानामित्यपि व्यज्यते ] धूमकेतुम्—अग्निम्, अग्निदर्शनस्य सिंहाना भयप्रदत्वादिति भाव, यद्वा—धूमकेतुमिव—उत्पातसूचकग्रहमिव, मारकत्वादिति भाव। धूमकेतुप्रादुर्भाव राजचक्राणामपि अशुभं सूचयतीति बोद्धव्यम्। महिषमण्डलाना—महिषसङ्घाना, महानवमीमहं—शारदीयदुर्गानवमीमहोत्सवं,

दूरे च स्थापयित्वा विज्ञापयाम्बभूव,—"देव! सर्व्वस्य अ विन्ध्यस्य स्वामी, सर्व्वपल्लीपतीनां प्राग्रहरः शवरसेनापतिः भूकम्पो नाम। तस्य अयं निर्घातनामा (२६) स्वस्रीयः सकलस्य अस्य विन्ध्यकान्तारारण्यस्य पर्णानामपि अभिज्ञः किमुत प्रदेशानाम्। एनं पृच्छतु देवः, योग्योऽयम् आज्ञां कर्त्तुम्" इति कथिते च निर्घातस्तु (२७) क्षितितलनिहित मौलिः प्रणामम् अकरोत्, उपनिन्ये च तित्तिरिणा स शशोपायनम्। अवनिपतिस्तु सम्मानयन् स्वयमेव त अप्राक्षीत,—"अङ्ग! अभिज्ञा यूयम् अस्य सर्व्वस्य उद्देशस्य (२८) विहारशीलाश्च दिवसेषु एतेषु भवन्तः। सेनापतेव

महिषान्तकत्वादिति भाव, ("मह उद्धव उत्सव" इत्यमर) महानवमीदि- पहवा महिषा वलित्वेन विनाश्यन्ते उपासकैरिति दृश्यते। "हृदयमि हिंसाया" इत्यादि विशेषणत्रितये सर्व्वदा जीवविनाशपरायणत्वा इति भावो बोध्य। कालरात्रे,—सर्वप्राणिनाशिकाया यमभगिन्या सवजन्तुमरणोपलक्षिताया कल्परात्रेर्वा, कार्मुकमिव—कान्तमिव, अस्य बहु जीवहिंसाकरणात् सवप्राणिनाशिकाया यमभगिन्या कान्तमिवेत्युत्प्रेक्षा बोद्धव्या। शवरयुवान—म्लेच्छविशेषजातीय तरुणवयस्क पुमासम्। आजगाम—प्राप। दूरे राज्ञ समीपादिति भाव। विन्ध्यस्य—विन्ध्यारण्यस्य, स्वामी—अधिपति। सर्व पल्लीपतीना—सर्वेषा—सकलाना, पल्लीपतीना—क्षुद्रग्रामाधिपतीना, ("पल्ल्यल्पग्राम- कुट्यो स्त्री" इति मेदिनी) प्राग्रहर,—श्रेष्ठ.।

(२६) स्वस्रीय,—भागिनेय.। विन्ध्यकान्तारारण्यस्य—विन्ध्याचलदुर्गम- काननस्य, ("कान्तारो वर्त्म दुर्गमम्" इत्यमर)।

(२७) क्षितीति।—क्षितितले—भूपृष्ठे, निहिता—स्थापिता, मौलि,— सयत, केश येन स ("चूडा किरीट केशाश्च सयता मौलयस्त्रय" इत्यमर)। तित्तिरिणा सह शशोपायन—तित्तिरि शशश्च पटौकनद्वयमित्यर्थ, उपनिन्ये —अर्पयामासेत्यर्थ.। अङ्गेति सम्बोधन, भो। इत्यर्थ। अभिज्ञा,—विशेषेण ज्ञातार। उद्देशस्य—तत्प्रदेशस्येत्यर्थ।

(२८) एतेषु दिवसेषु—बाल्यादि यावदिति भाव:, यद्वा,—एतेषु—वनोद्देशेषु

अन्यस्य वा तदनुजीविनः कस्यचित् (२९) उदाररूपा नारी आगता भवेद्दर्शनगोचरम्?" इति।

निर्घातस्तु (३०) भूपालालापनप्रसादेन आत्मानं बहुमन्यमानः प्रणनाम, दर्शितादरञ्च व्यज्ञापयत्—"देव! प्रायेण अत्र हरिणोऽपि न अपरिचिताः सञ्चरन्ति सेनापतेः, कुत एव नार्य्यः? नापि एवरूपा काचित् अबला। तथाऽपि देवादेशात् इदानीम् अन्वेषणं प्रति प्रतिदिनम् अनन्यकृत्यैः क्रियते यत्नः। (३१) इतश्च अर्द्धगव्यूतिमात्र एव सुनिमहिते महति महीधरमालामूलरुहि महीरुहां षण्डे पिण्डपाती (३२) प्रभूतान्तेवासि-

---

दिवसेषु—प्रतिदिनमित्यर्थः, विहारशीलाः,—विचरणपराः। सेनापतेः,—भूकम्पस्य। तदनुजीविनः,—सेनापतेः परिजनस्य।

(२९) उदाररूपा—महासौन्दर्य्यशालिनी, अतिरूपवतीत्यर्थः, ("उदारो दातृमहतो." इत्यमरः)।

(३०) भूपालेति।—भूपालस्य—राज्ञः हर्षस्य, यत् आलापनम्—आभाषणं, सम्बोधनपूर्वकवाक्यप्रयोगः इत्यर्थः, तदेव प्रसादः,—अनुग्रहः, महापराक्रमस्य सम्राजो हर्षस्य तादृशेनेतरेण सह स्वयमाभाषणादिति भावः. तेन। बहुमन्यमानः,—श्लाघमानः। दर्शितादरः—ससम्मानमित्यर्थः। अपरिचिताः,—अज्ञाताः, ["अपरिचिताः" इत्यत्र "अपरिगता" इति पाठेऽपि स एवार्थः, "सर्वे गत्यर्था ज्ञानार्थाः" इति नियमात्]। कुत एव नार्य्यः,—मानुष्यस्तु कथमपि नैवापरिज्ञाता सञ्चरितुं प्रभवन्तीति भावः। अबला, अत्रागता इति शेषः। देवादेशात्—राज्ञः भवतः आज्ञया। अनन्यकृत्यैः,—नास्ति अन्यत्—अन्वेषणादपरं, कृत्यं—कार्य्यं येषां तैः, अन्यकार्य्यं परिहृत्य इत्यर्थः, अस्माभिरिति शेषः।

(३१) इतः,—अस्मात् स्थानात्, अर्द्धगव्यूतिमात्रे—क्रोशैकपरिमिते, ("गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः) सुनिमहिते—ऋषिपूजिते, महीधरमालामूलरुहि—पर्वतश्रेणिपादमूलजाते, महीरुहां—वृक्षाणां, षण्डे—मण्डले, तन्मध्ये इत्यर्थः, पिण्डपाती—पिण्डाय—ग्रासमात्रान्नाय, पतति—भिक्षां चरतीति तथोक्तः, ग्रासमात्रान्नोपयोगिभिक्षाकारः इत्यर्थः, न तु सञ्चयीति भावः।

(३२) प्रभूतेति।—प्रभूतैः,—बहुभिः, अन्तेवासिभिः,—शिष्यैः, ("छात्रान्ते-

परिवृत: पराशरी दिवाकरमित्रनामा गिरिनदीम् आश्रित्य प्रतिवसति; स यदि विन्देत् वार्त्ताम्" इति। तत् श्रुत्वा नरपति: अचिन्तयत्,—"श्रूयते हि (३३) तत्रभवत: सुगृहीतनाम्न: स्वर्गतस्य ग्रहवर्म्मणो बालमित्रं मैत्रायणीय: त्रयीं विहाय ब्राह्मणायनो विद्वान् उत्पन्नसमाधि: सौगते मते युवा एव काषायाणि गृहीतवान् इति। प्रायशश्च जनस्य जनयति (३४) सुहृदपि दृष्टो भृशम् आश्वासम्। अभिगमनीयाश्च गुणा: सर्व्वस्य। कस्य न (३५) प्रतीच्छो मुनिभाव: ? भगवती वैधेयेऽपि धं गृह्णिणी गरिमाणम् आपादयति प्रव्रज्या, किं पुन: सकलजनमनोमुषि विदुषि जने ?

---

वासिनी शिष्ये" इत्यमर.) परिवृत',—वेष्टित,। पराशरी—भिक्षु:, ["पराशरी" इत्यत्र "पाराशरी" इति पाठेऽपि स एवार्थ', "भिक्षु परिव्राट् कर्म्मन्दी पाराशर्य्यपि मस्करी" इत्यमर]। वार्त्ता—वृत्तान्त, नार्य्या इति भाव', विन्देत्—जानीयादित्यर्थ.।

(३३) तत्रभवत,—मान्यस्य, सुगृहीतनाम्न,—प्रात स्मरणीयस्य, विख्यातस्येत्यर्थ। बालमित—शैशवसुहृत्, मैत्रायणीय,—वेदशाखाविशेषाध्येता, ब्राह्मणायन:—ब्राह्मणकुलजात', द्विजश्रेष्ठो वा, उत्पन्नसमाधि,—चित्तैकाग्र्यनिष्ठ, गृहीतनियमो वा, ("स्यु समर्थननीवाकनियमाश्च समाधय." इत्यमर) सौगते—सुगत'—बुद्ध, तस्य इद तस्मिन्, मते—आशये, बौद्धधर्म्ममाश्रित्य इत्यर्थ., त्रयीं—त्रिवेदीम्, ऋक्सामयजु स्वरूप वेदत्रयमित्यर्थ', ("स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमर) विहाय—त्यक्त्वा, वैदिकधर्म्मं परित्यज्येत्यर्थ, काषायाणि—कषायरक्तानि वसनानि।

(३४) सुहृत्—मित्रं, दृष्ट:,—साक्षात्कृतोऽपि, किमपि अकुर्वन्नपीति भाव', आश्वासम्—आशा, प्रीति वा, भगिनीपतेर्ग्रहवर्मणो मित्रत्वात् तत्सम्बन्धेन स्वस्यापि मित्रभूतस्य तस्य किमप्यकुर्वतोऽपि दर्शन मे आनन्दप्रद भविष्यतीति भाव:। अभिगमनीया,—अनुसरणीया.। सर्वस्य—यस्मिन् कस्मिन्नपि मते वर्त्तमानस्य इति भाव, "गुणा. पूजास्थान गुणिषु न च लिङ्ग न च वय:" इति तात्पर्य्यम्।

(३५) प्रतीच्छ:,—पूज्य., ("पूज्य: प्रतीच्छ." इत्यमर:)। मुनिभाव:,—

यतो नः (३६) कुतूहलि हृदयम् अभूत् सततमस्य दर्शनं प्रति, प्रासङ्गिकमेव इदमापतितम् अतिकल्याणं, पश्चात् प्रयत्नप्रार्थितदर्शनं जनम्” इति। प्रकाशञ्च अब्रवीत्,—“अङ्ग! समुपदिश तस्य उद्देशं, यत्रास्ते स पिण्डपाती” इति। एवमुक्त्वा च तेनैव उपदिश्यमानवर्त्मा प्रावर्त्तत गन्तुम्।

अथ क्रमेण (३७) गच्छत एव तस्य अनवकेशिन', कुड्मलितकर्णिकाराः, प्रचुरचम्पकाः, (३८) स्फीतफलेग्रहयः, फलभरनमितनमेरवः, नीलदलनलदनारिकेलनिकराः, करि-

---

तापसभाव। भगवती—सर्व्वशक्तिमती, धर्मगृहिणी—धर्म्मपत्नी, प्रव्रज्या—सन्न्यासधर्म्म इत्यर्थः, वैधेयेऽपि—मूर्खेऽपि, गरिमाण—गौरवम्, आपादयति—प्रतिष्ठापयति, मूर्खोऽपि सन्न्यासमाश्रयति चेत्, सर्वेषा पूज्यो भवति इति सरलार्थं। सकलजनमनोमुषि—सर्वलोकमनोहरे।

(३६) कुतूहलि—समुत्सुकम्। प्रासङ्गिक—प्रसङ्गात्—भगिन्या अन्वेषणरूपकार्य्यान्तरादित्यर्थ' आगतम्। इद—तद्दर्शनावस रूपम्। प्रय ति।—प्रयत्नेन—प्रकृष्टचेष्टया, महादरेणेत्यर्थ, प्रार्थित—याचित, दर्शनम्—अवलोकन यस्य तादृशं, दुर्लभदर्शनमित्यर्थः।

(३७) “अथ क्रमेण गच्छत एव तस्य” इत्यस्य “दर्शनपथमवतेरु तरव.” इति परेण न्वयः। तान् विशिनष्टि, अनवकेशिन इत्यादि।—अनवकेशिन,—अवकेशिन,—वन्ध्या., अफला इति यावत्, (“वन्ध्योऽफलोऽवकेशी च” इत्यमर) ते न भवन्तीति फलवन्त इत्यर्थं। कुड्मलितकर्णिकारा.,—कुड्मलिता,—सञ्जातमुकुला', कर्णिकारा,—द्रुमोत्पला, आरग्वधवृक्षा वा येषु ते, (“कर्णिकार: पुमानारग्वधद्रौ च द्रुमोत्पले” इति मेदिनी)। प्रचुरचम्पका,—प्रचुरा,—बहुला., चम्पका,—तदाख्यपुष्पवृक्षा येषु ते।

(३८) स्फीतेति।—स्फीता,—प्रवृद्धाः, फलेग्रहय,—अवन्ध्याः, फलवन्तः वृक्षा इत्यर्थ. येषु तथोक्ता', (“स्यादवन्ध्य. फलेग्रहि.” इत्यमरः)। फलेति।—फलाना भरेण—भारेण, नमिता,—प्रवणता., नमेरव,—सुरपुन्नागवृक्षा', रुद्राक्षवृक्षा वा येषु तथोक्ता.। [“फलभरनमितनमेरव” इत्यत्र “फलभरभरितनमेरव.” इति पाठे,—फलाना भरेण—आतिशय्येन, बाहुल्येनेत्यर्थः, (“भरोऽतिशयभारयो.”

केसरसरलपरिकराः, (३९) कोरकनिकुरम्बरोमाञ्चितकुरवकराजयः, (४०) रक्ताशोकपल्लवलावण्यलिप्यमानदशदिशः, (४१) प्रविकसितकेसररजोविसरवध्यमानचारुधूसरिमाणः, स्वरजःसिकतिलतिलकतलाः, (४२) प्रविचलितहिङ्गवः,

---

इति मेदिनी ) भरिताः,—पूर्णा, अत एव नमिता इति भाव, नमेरवः यत्र तथोक्ता ]। नीलेति।—नीलदला,—श्यामलपर्णाः, नलदानि—उशीरा, नारिकेलनिकरा,—लाङ्गलीवृक्षसमूहाश्च येषु ते, ("स्याद्वीरणं वीरतर मूलेऽस्योशोरमस्त्रियाम्। अभय नलद सेव्यम्" इति "नारिकेलस्तु लाङ्गली" इत्युभयत्राप्यमरः)। करीति।—करिकेसरा,—नागकेसरा, ["करिकेसर—" इत्यत्र "हरिकेसर—" इति पाठेऽपि,—हरिकेसर,—अहिकेसरः, नागकेसर इत्यर्थ, ("हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु" इति मेदिनी) सरला,—देवदारवः पीतद्रुवृक्षा वा, यस्मात् "तार्पिं" इति प्रसिद्ध तैल क्रियते लोकैरित्यर्थः, ("पीतद्रु सरल पूतिकाष्ठ" इत्यमर) तेषा परिकर,—सङ्घ, समूह इत्यर्थ, येषु ते। ("भवेत् परिकरः सङ्घे प र्यङ्कपरिवारयो." इति मेदिनी)।

(३९) कोरकेति।—कोरकाणा—कलिका, निकुरम्बै,—सङ्घै, रोमाञ्चि ा—सञ्जातरोमहर्षा इव लक्ष्यमाणा, कुरवकाणा—रक्ताम्लानाना, ये योषितामालिङ्गनैः पुष्यन्तीति कविसमयप्रसिद्धि, तेषामित्यर्थ, राजयः,—श्रेणय येषु ते।

(४०) रक्तेति।—रक्ताना—रक्तवर्णाना. विकसितानामित्यर्थ, अशोकाना—वञ्जुलाना, ये योषिता पादाघातै विकसन्तीति प्रसिद्धि, तेषामिति भाव, पल्लवलावण्यैः,—किसलयकान्तिभि, लिप्यमाना,—विच्छुरन्त्य, दश दिश,—आशा येषु ते।

(४१) प्रविकसितेति।—प्र—प्रकर्षेण, विकसिताना—प्रस्फुटिताना, केसराणां—वकुलाना, ये कान्ताया शीधुगण्डूषसेकात् विकसन्तीति कविसमयख्यात, तेषामित्यर्थ, ("अथ केसरे वकुल." इत्यमर) रजोविसरेण—परागप्रसरेण, वध्यमाना,—सङ्घट्यमाना, चारव,—मनोज्ञा, धूसरिमाण,—धूसरत्वानि येषा येषु वा ते। स्वरज इति।—स्वरजोभि,—निजपरागै, सिकतिलानि—सैकतमयानि वालुकामयानीव लक्षितानीत्यर्थ, तिलकाना—तिलतरूणा, ये प्रसाधिताङ्गनाऽवलोकनमात्रेणैव पुष्पिता सञ्जायन्ते इति भाव, तेष तलानि—अधोदेशा येषु ये ा वा ते।

(४२) प्रविचलितेति।—प्रविचलिताः,—कम्पिताः, हिङ्गवः,—हिङ्गुवृक्षाः,

प्रचुरपूगफलाः, (४३) प्रसवपूगपिङ्गप्रियङ्गवः, परागपिञ्जरितमञ्जरीपुञ्जमानमधुपमञ्जुशिञ्जाजनितजनमुदः, (४४) मदमलमेचकितमुचुकुन्दस्कन्धकाण्ड-कष्यमाननिःशङ्क-करिकटकण्डूतयः, (४५) उड्डीयमाननिःशङ्कचटुलकृष्णशारशावसकलशाद्वलसुभगभूमयः, (४६) तमःकालतमतमालमालामीलिता-

पत्राणि येषु ते। प्रचुरेति।—प्रचुराणि—बहूनि, पूगानां—गुवाकानां, फलानि—शस्यानि येषु ते।

(४३) प्रसवेति।—प्रसवानां—फलानां पुष्पाणां वा, ("स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः) पूगेन—वृन्देन, ("पूगः क्रमुकवृन्दयोः" इत्यमरः) पिङ्गाः,—पिङ्गलवर्णाः, प्रियङ्गवः,—श्यामालताः येषु ते। परागेति।—परागैः,—रजोभिः, पिञ्जरिताः,—पिङ्गलवर्णाः, याः मञ्जर्यः,—वल्लर्यः, ताभिः पुञ्जमानानां—सङ्गृह्यमाणानां, मधुपानां—भ्रमराणां, मञ्जुशिञ्जया—मनोहरेण गुञ्जनेन, जनिताः,—उत्पादिताः, जनानां—लोकानां, मुदः,—आनन्दा यैः तथाभूताः।

(४४) मदेति।—मदस्य—दानजलस्य, मलेन—कलङ्केन, मेचकिताः,—समन्तचन्द्रकाः, श्यामला वा, ("मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान्" इति मेदिनी) ये मुचुकुन्दाः,—पुष्पतरुभेदाः, चम्पकविशेषा इति यावत्, तेषां स्कन्धा इव काण्डाः,—मूलात् शाखाऽवधिविभागाः, ("अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखाऽवधिस्तरोः" इत्यमरः) यद्वा,—तेषां स्कन्धाः,—मूलात् शाखाऽवधिप्रदेशाः, तेषां काण्डाः,—दण्डाः, वर्गा वा, समूहा इत्यर्थः, ("काण्डोऽस्त्री दण्डवाणार्ववर्गावसरवारिषु" इत्यमरः) तैः कष्यमानाः,—निघृष्यमाणाः, निःशङ्कानां—निर्भयाणां, करिणां—हस्तिनां, कटयोः,—गण्डयोः, ["गण्डः कटः" इत्यमरः। "—कट—" इत्यत्र "—करट—" इति पाठेऽपि स एवार्थः, "काकेभगण्डौ करटौ" इत्यमरवचनात्] कण्डूतयः,—कण्डूयनानि येषु येषां वा ते।

(४५) उड्डीयमानेति।—उड्डीयमानैः,—उत्पतद्भिः, निःशङ्कैः,—निर्भयैः, चटुलैः,—चपलैः, कृष्णशारशावानां—कृष्णसारमृगशिशूनां, सकलैः,—सर्वैः, शाद्वलाः,—श्यामाः इत्यर्थः; यद्वा,—कृष्णशारशावसकलैः शाद्वलैः,—शादहरितैश्च, नूतनतृणेन हरिद्वर्णीकृतैः स्थानैरित्यर्थः, ("शाद्वलः शादहरिते" इत्यमरः) अत एव सुभगाः,—रम्याः, भूमयः,—तलदेशा येषां तथोक्ताः।

(४६) तम इति।—तमांसि इव—अन्धकारा इव, कालतमः—अति-

तपाः, स्तवकदन्तुरितदेवदारवः, (४७) तरलताम्बूलीस्तम्ब-जालकितजम्बूजम्बीरवीथयः, कुसुमरजोधवलधूलीकदम्बचक्र-चुम्बितव्योमानः, (४८) बहलमधुमोचोच्चितचितयः, परि-मलघटितघ्राणतृप्तयः, (४९) कतिपयदिवसप्रसूतकुक्कुटीकुटी-कृतकुटजकोटराः, (५०) चटकासञ्चार्यमाणवाचाटचाटकैर-

---

नीला., या तमालमाला,—तापिच्छश्रेण्य, ताभि. मीलिता,—शमिता इत्यर्थ, आतपा,—सौराालोका येषु तथोक्ता.। स्तवकेति।—स्तवकै.,—गुच्छै., दन्तुरिता.,—सञ्जातदन्ता इव लक्ष्यमाणा., देवदारव.,—भद्रदारुवृक्षा येषु त ोक्ता।

(४७) तरलेति।—तरलाना—चपलाना, ताम्बूलीना—नागवल्लीना, स्तम्बै.,—सङ्घै, जालकिता.,—युक्ता:, जम्बूना—जाम्बवाना, जम्बीराणा—दन्तशठाख्याना तरूणाच, ("स्यु जम्बीरे दन्तशठजम्भजम्भीरजम्भला." इत्यमर.) वीथय,—श्रेण्य येषु ते। कुसुमेति।—कुसुमाना—पुष्पाणा, रजांसि एव—परागा एव, धवलधूल्य.,—शुभ्रपांशव, तासा कदम्बचक्रै,—निचयमण्डले., चुम्बित—स्पृष्ट, व्योम—आकाश यै तथोक्ता, यद्वा,—कुसुमरजोभि,—पुष्पपरागै, स्वकीयैरिति भाव, धवला:,—शुभ्रा, धूलीकदम्बा,—तदाख्यनीपभेदा., ("धूलीकदम्बो नीपे स्यात् तिनिशे वरुणद्रुमे" इति मेदिनी) तेषा चक्रै,—समूहै., चुम्बित व्योम यैत तथोक्ता।

(४८) बहलेति।—बहलेन—प्रभूतेन, मधुना—मकरन्देन, मोचेन—वर्षेण, उच्चिता,—सिक्ता, चितय,—तलभूमय. येषा ते। परिमलेति।—परिमलेन—पुष्पादीना सौरभेण, घटिता—जनिता, घ्राणाना—घ्राणेन्द्रियाणा, तृप्ति,—तर्पण यै तथोक्ता।

(४९) कतिपयेति।—कतिपयेषु—अल्पसङ्ख्यकेषु इत्यर्थ, दिवसेषु—दिनेषु, सूताभि.,—प्रसूतवतीभि., मुक्तगर्भाभिरित्यर्थ, कुक्कुटीभि,—ताम्रचूडपत्नीभि., कृतानि—आवासीकृतानि, कुटजाना—गिरिमल्लिकावृक्षाणा, कोटराणि—विवराणि येषु तथोक्ता।

(५०) चटकेति।—चटकया—तदाख्यया पक्षिण्या, सञ्चार्यमाणै:,—नीयमाने., वाचाटै.,—मुखरै., कूजद्भिरित्यर्थ., चाटकैरै.,—चटकाया अपत्यानि पुमांस:

क्रियमाणचाटवः, (५१) सहचरीचारणचञ्चुरचकोरचञ्चवः, निर्भयभूरिभूरुहखण्डभुज्यमानपाककपिलपीलवः, (५२) सदा-फल-कट्फल-फल-विशसननिःशूक-शुक-शकुन्त-शातित-शलाटवः, (५३) शैलेय-सुकुमारशिलातल-सुखशयित-शशशिशवः, (५४) शेफालिकाशिफाविवरविलब्धविवर्त्तमानगोधेरराशयः

चाटकैरा तैः, चटकाशावकैरित्यर्थः, क्रियमाणाः,—उच्चार्यमाणा इत्यर्थः, चाटवः, —मधुरस्वना येषु तथोक्ता ।

(५१) सहचरीति।—सहचरीभिः,—सङ्गिनीभिः, चकोरीचञ्चुभिरित्यर्थः, चकोरीभिः सहेति भावः, चारणे—भक्षणे, [“चारण” इत्यत्र “चरण” इति पाठः समीचीनतया प्रतिभाति, भक्षणार्थकस्य चारणशब्दस्य कोषादावदृष्टत्वात्, चरण-शब्दस्य च तदर्थकत्वात्, तथा च मेदिनी,—“चरणोऽस्त्री बहृचादौ मूले गोत्रे पदेऽपि च। भ्रमणे भक्षणे वाऽपि नपुंसक उदाहृतः॥” इति] चञ्चुराः,—निपुणाः, चकोराणां,—तदाख्यपक्षिणां, चञ्चवः,—त्रोटयः येषु तथोक्ता । निर्भयेति।—निर्भयैः,—निःशङ्कैः, भूरिभिः,—बहुभिः, भूरुहैः,—पक्षिविशेषैः, भुज्यमानानि—सेव्यमानानि, पाकेन—परिणामेन, कपिलानि—पिङ्गलानि, पीलूनि—गुडफलाख्य-फलानि, “आखरोट्” इति प्रसिद्धाः फलविशेषाः इत्यर्थः येषु तथोक्ताः। (“पीलौ गुडफलः स्रंसी” इत्यमरः)।

(५२) सदेति।—सदाफलाः,—सदा फलन्तीति तथाभूताः, ये कट्फलाः, —श्रीपर्णिकाख्या वृक्षाः, “कायफल” “कायफाल” इति वा वङ्गीयैराख्याता इत्यर्थः, तेषां फलविशसने—फलभेदने, यद्वा,—सदाफलानां—नारिकेलानां, (“सदाफलः स्यान्दफले नारिकेलेऽप्युदुम्बरे” इति मेदिनी) कट्फलानाञ्च विशसने, निःशूकाः, —क्षतचञ्चवा इत्यर्थः, ये शुकशकुन्ताः,—कीराख्यपक्षिणः, तैः शातिताः,—पातिताः, शलाटवः,—अपक्वानि फलानि येषां ते, (“आमे फले शलाटुः स्यात्” इत्यमरः)।

(५३) शैलेति।—शैलेयेन—शैलजाख्यपर्वतजातसुगन्धितृणभेदेन, सुकुमारं —सुरम्यं, सुकोमलमित्यर्थः, यत् शिलातलं—प्रस्तरखण्डं, तत्र सुखेन—आनन्देन, अक्लिष्टभावेनेत्यर्थः, शयिताः,—निद्राणाः, (“निद्राणशयितौ समौ” इत्यमरः) शशानां —मृगभेदानां, “खरगोस्” इति वङ्गे प्रसिद्धानामित्यर्थः, शिशवः,—शावकाः येषु येषां वा ते।

(५४) शेफालिकेति।—शेफालिकानां—नीलिकाख्य-पुष्पप्रधान वृक्षाणां

(५५) निरातङ्करङ्कव:, निराकुलनकुलकेलय:, कल-कोकिलकुलकवलितकलिकोद्गमा:, (५६) सहकारारामरोमन्थायमानचमूरुयूथा:, यथासुखनिषण्णनीलाण्डजमण्डला:, (५७) निर्विकारवृकविलोक्यमानपोतपीतगवयधेनव:, (५८) श्रवणहारिसनीडगिरिनितम्बनिर्झरनिनादनिद्रानन्द-

शिफासु—मूलेषु, यानि विवराणि—कोटराणि, तेषु विश्रब्ध—निःशङ्कं यथा तथा, विवर्त्तमाना:,—तिष्ठन्त:, गोधेराणां—गोधिकाशिशूनां, ("तयो गौधेरगौधारगौधेया गोधिकात्मजे" इत्यमर:) राशय,—समूहा: येषु तथोक्ता:।

(५५) निरातङ्केति।—निःशङ्करङ्कव:,—निःशङ्कमृगा:। निराकुलेति।—निराकुला:,—निःशङ्का:, नकुलानां—भुजङ्गघातिप्राणिविशेषाणां, "बेजि" इति वङ्गे प्रसिद्धानामित्यर्थ:, केलय:,—विचरणानि येषु तथाभूता:। कलेति।—कलै:,—मधुररवै:, कोकिलानां—पिकानां, कुलै:,—समूहै:, कवलिता:,—भक्षिता:, कलिकोद्गमा:,—कोरकप्ररोहा येषां ते।

(५६) सहकारेति।—सहकाराणाम्—अतिसौरभवदाम्राणाम्, ("आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभ:" इत्यमर:) आरामेषु—उपवनेषु, कृत्रिमवनेषु इति यावत्, काननेषु इति भाव:, ("आराम: स्यादुपवनं कृत्रिमं वनमेव तत्" इत्यमर) रोमन्थायमानानि—प्राग्भक्षितानि उद्गीर्य चर्वयन्ति, चमूरूणां—मृगभेदानां, यूथानि—सङ्घा: येषु तथोक्ता:। यथेति।—यथासुखं—सुखमनतिक्रम्य, यादृक्तया उपवेशनेन सुखं भवति, तथेत्यर्थ:, निषण्णानि—उपविष्टानि, नीलानां—नीलवर्णानाम्, अण्डजानां—पक्षिणाम्, यद्वा,—नीलाण्डजानाम्—कृष्णाख्यमृगविशेषाणां, मण्डलानि—वृन्दानि येषु तथोक्ता:।

(५७) निर्विकारेति।—निर्विकारै:,—विकारशून्यै:, प्रशान्तैरित्यर्थ:, आश्रममाहात्म्येन प्रशमितहिंसाचारत्वादिति भाव:, वृकै:,—तरक्षुभि:, ईहामृगैर्वा, कुक्कुराकारव्याघ्रविशेषैरित्यर्थ:, ("कोकस्त्वीहामृगो वृक:" इत्यमर) विलोक्यमाना:,—दृश्यमाना:, पोतपीता:,—पोतै:,—शावकै:, ("पोत: पाकोऽर्भको डिम्भ: पृथुक: शावक: शिशु:" इत्यमर:) पीता:,—पीतस्तना इत्यर्थ:, गवयधेनव:,—गोसदृशाकारा गलकम्बलविहीना: पशुभेदा: येषु तथोक्ता:।

(५८) श्रवणेति।—श्रवणं—कर्णं, हरति—आकर्षतीति श्रवणहारी—श्रुतिसुख इत्यर्थ:, सनीडस्य—सन्निकृष्टस्य, निकटवर्त्तिन इत्यर्थ:, ("समीपे निकटा-

मन्दायमानकरिकुलकर्णतालदुन्दुभयः, (५९) समासन्नकिन्नरीगीतरवरसमानरुरवः, प्रमुदिततरतरक्षवः, (६०) क्षतहरितहरिद्राद्रवरज्यमानवनवराहपोतपोत्रवलयः, गुञ्जाकुञ्जगुञ्जजाहकाः, (६१) जातीफलकसुप्तशालिजातकवलयः, (६२) दशनक्रुपितकपिपोतपेटकपाटितपाटलकोटपुटकाः,

---

सन्नसन्निकृष्टसनीडवत्" इत्यमरः ।) गिरिनितम्बस्य—पर्व्वतमेखलायाः, यः निर्झरनिनादः,—वारिप्रवाहध्वनिः, तेन या निद्रा—स्वप्नः, निद्राऽऽवेश इत्यर्थः, तया आनन्दः,—सुखं, तेन मन्दायमानः,—नाशं गच्छन्निति यावत्, करिकुलानां—गजवृन्दानां, कर्णताल एव—कर्णस्फालनमेव, दुन्दुभिः—वाद्यविशेषः येषु तथोक्ताः ।

(५९) समासन्नेति ।—समासन्नानां—सन्निहितानां, किन्नरीणां—देवयोनिविशेषस्त्रीणां, गीतरवेण—सङ्गीतनादेन, रसमानाः,—सुखमनुभवन्तः इत्यर्थः, मृगाणां गीतप्रियत्वादिति भावः, रुरवः,—मृगविशेषाः येषु तथोक्ताः । प्रमुदिततरतरक्षवः,—प्रमुदिततराः,—अतिप्रहृष्टाः, तरक्षवः,—मृगादनाः, "नेकड़े" इति वङ्गे प्रसिद्धाः व्याघ्रभेदा इत्यर्थः यत्र तथोक्ताः, ("तरक्षुस्तु मृगादनः" इत्यमरः) ।

(६०) क्षतेति ।—क्षतायाः,—चुर्णायाः, चर्वितायाः इति भावः, हरितायाः,—श्यामलायाः, अशुष्कायाः इति यावत्, हरिद्रायाः,—पीतायाः, यद्वा,—हरितस्य—मुद्गविशेषस्य, तृणभेदस्य वा, हरिद्रायाश्च, द्रवेण—रसेन, रज्यमानाः,—कृष्यमाणाः, वनवराहपोतानाम्—अरण्यशूकरशिशूनां, ["पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः । "—वनवराहपोत—" इत्यत्र "—नववराहपोत—" इति पाठे,—सद्योजातवराहशिशूनामित्यर्थः] पोत्रवलयः,—मुखाग्रनिचयाः येषु तथोक्ताः, ("मुखाग्रे क्रोडहलयोः पोत्रम्" इत्यमरः) । गुञ्जेति ।—गुञ्जाकुञ्जेषु—काकचिञ्चीलतावेष्टितस्थानेषु गुञ्जन्तीति गुञ्जाः,—कूजनशीलाः इत्यर्थः, ["गुञ्ज—" इत्यत्र "गुञ्जत्—" इति पाठे,—गुञ्जन्तः,—ध्वनन्तः] जाहकाः,—घोराख्यप्राणिभेदाः येषां ते, ("जाहकौ घोड़माञ्जारखट्टाकारण्डिकासु च" इति मेदिनी) ।

(६१) जातीति ।—जातीफलकेषु—जातीफलवृक्षसमूहेषु, सुप्ताः,—निद्रिताः, शालिजातकानां—गन्धमार्ज्जारशिशूनां, "खट्टाश" इति वङ्गे प्रसिद्धानामित्यर्थः, ("शालिस्तु कलमादौ च गन्धमार्ज्जारके पुमान्" इति मेदिनी) वलयः,—समूहाः येषु तथोक्ताः ।

(६२) दशनेति ।—दशनैः,—दन्तप्रकाटनैः, कुपिताः,—क्रुद्धाः, विकटदन्त-

(६३) लकुचलम्पटगोलाङ्गूललङ्घ्यमानलवलयः, बद्धबालुकालवालवलयाः, (६४) कुटिलकुटावलिवलितवेगगिरिनदिकास्रोतसः, (६५) निविडशाखाकाण्डलम्बमानकमण्डलवः, (६६) स्रुवशिक्यासक्तरिक्तभिक्षाकपालपल्लवितलताखण्डाः, (६७) निकटकुटीकृतपाटलमुद्राचैत्यकमूर्तयः,

सङ्गीभि प्रकृतिनिजरोषा इत्यर्थ, ये कपीना—वानराणा, पोता,—शिशव, तेषा पेटकै,—समूहै, पाटितानि—खचितानि, पाटलकीटपुटकानि—श्वेतरक्तवर्णकीटनिचया येषा ते, यद्वा,—पाटलकीटानाम्—आशुधान्यस्थकीटविशेषाणाम्, ("आशुर्व्रीहि पाटल स्यात्" इत्यमर) पुटकानि—प्रावरणानि, आलया इत्यर्थः येषा ते।

(६३) लकुचेति।—लकुचेभ्य —डहुभ्य, ("लकुचो लिकुचो डहु" इत्यमर) लम्पटा,—लुब्धा, ये गोलाङ्गूला,—कृष्णमुखकपिविशेषा, तै लङ्घ्यमाना,—आक्रम्यमाणा उत्प्लूयमाना वा, लवलय,—"नोयाड" इति वङ्गे प्रसिद्धा वृक्षविशेषा येषु येषा वा ते। बद्धेति।—बद्ध—रचित, बालुकाभि,—सिकताभि, आलवालवलयम्—आवापमण्डल मूलदेशेषु जलरक्षार्थ वेष्टनमित्यर्थ येषा तथोक्ता।

(६४) कुटिलेति।—कुटिलाभि,—वक्राभि, कुटाना—वृक्षाणा, ("वृक्षो महीरुह शाखी। अनोकह कुट साल" इत्यमर) आवलिभि,—श्रेणीभि, वलिता,—निरुद्धा, वेगा,—द्रुतगतय इत्यर्थ येषा तथाविधानि, गिरिनदिकाना—पार्वत्यसरिता, स्रोतासि—प्रवाहा येषु तथोक्ता।

(६५) निविडेति।—निविडेषु—सान्द्रेषु, स्थूलेषु इत्यर्थ, शाखाकाण्डेषु—विटपस्कन्धेषु लम्बमाना,—तिष्ठन्त, कमण्डलव,—कुण्डा, मुनीना जलपात्रविशेषा इति यावत् येषा तथोक्ता।

(६६) स्रुवेति।—स्रुवेषु—स्रुवनिर्मितेषु, शिक्येषु—काचेषु, वृक्षलम्बितेषु "शिका" इति वङ्गभाषाया प्रसिद्धेषु इत्यर्थ आसक्तै —लग्नै, रिक्तै —शून्यै, भिक्षोपार्जितान्नरहितै इत्यर्थ, भिक्षाकपालै,—याञ्चालब्धद्रव्यस्थापनार्थ पात्रविशेषैरित्यर्थ, पल्लवितानि—सञ्जातपल्लवानि इव कृतानि, समन्तत स्थापनादिति भाव, लताखण्डानि—वल्लीनिर्मितगृहा ये। येषु वा तथोक्ता।

(६७) निकटेति।—निकटकुटीषु—सन्निहितकुटीरेषु, कृता,—रचिता, पाटलमुद्रया—रक्तवर्णरचनया, चैत्यकाना—चूडाणा चैत्यवृक्षाणाम्, अश्वत्थादि-

(६८) चीवराम्बररागकषायोदकदूषितोद्देशाः, मेघमया इव कृतशिखण्डिकुलकोलाहलाः, (६९) वेदमया इव अपरिमितशाखाभेदगहनाः, माणिक्यमया इव महानीलतनवः, (७०) तिमिरमया इव सकलजन-नयनमुषः, यामुना इव ऊर्द्धीकृतमहाह्रदाः, मरकतमणिश्यामलाः क्रीड़ापर्व्वतका इव

---

प्रसिद्धहर्म्याणामित्यर्थः, बुद्धाकृतिबुद्धबिम्बाना वा, ("चैत्यमायतने बुद्धबिम्बे नोद्देश्यपादपे" इति मेदिनी) मूर्त्तय.,—आकृतय. येषु तथोक्ताः, गृहभित्तौ सिन्दूरादिभिरङ्कितबुद्धहर्म्या इत्यर्थ.।

(६८) चीवरेति।—चीवराम्बराणा—वल्कलवसना।, कौपीनवस्त्राणा वा, रागेण—वर्णेन, कषायाणि—रक्तानि, यानि उदकानि—जलानि, तै. दूषिता,—आविलिताः, उद्देशाः,—निम्नदेशाः येषा तथोक्ता.। कृतेति।—कृत,—विहितः, शिखण्डिना—मयूराणा, कुलैः,—समूहै', कोलाहल,—कलकल', केकारवणीत्यर्थ येषु तथोक्ताः, अत एव मेघमया इव—जलदाच्छन्ना इ", मयूराणा मेघोदये प्रमोद्दे दयाद्विति भावः।

(६९) अपरिमितेति।—अपरिमितैः,—अगणितैः इत्यर्थ', शाखाना—विटपाना, कठकौथुमादीना वेदाशानाञ्च, ("शाखा पक्षान्त' बाहौ' वेदभागद्रुमाङ्गयो" इति मेदिनी) भेदैः,—विशेषै, गहनाः,—सान्द्रा, निविडा इत्यर्थ, दुरधिगमाश्च, अत एव वेदमया इव—वेदात्मका इव। महेति।—महानीला,—अतिश्यामा., भृङ्गराजा वा, भृङ्गराजच्छपूर्णा इत्यर्थ, तनव,—अवयवाः येषाम्, अन्यत्र,—महानीलानि—मणिभेदाः, नीलकान्ताः इति यावत्, ("महानीलो भृङ्गराजे मणिनागविशेषयोः" इति मेदिनी) तनूनि—निक्ष ानि येभ्य. तथोक्ता.।

(७०) सकलेति।—सकलाना—सर्वेषा, जनाना—लोकाना, नयनानि—चक्षूंषि, मुष्णन्ति—हरन्ति, एकत्र,—प्रीणयन्ति, अन्यत्र,—दर्शनव्यापाररहितानि कुर्व्वन्ति इत्यर्थः इति तथोक्ताः, अत एव तिमिरमया इव—अन्धकाराच्छन्ना इव। यामुना इव—यमुनाप्रवाहा इव, ऊर्द्धीकृतमहाह्रदा —ऊर्द्धीकृता,—उच्चै' कृताः, महान्त.,—प्रवृद्धा, ह्रदाः,—निनादा., पक्षिणाम् इति भाव, अन्यत्र,—ऊर्द्धीकृता.,—उत्थापिताः, मध्ये धृता इत्यर्थ., महान्त,—प्रभूता', ह्रदा,—गभीरजलाधारा यैः तथोक्ता.। मरकतेति।—मरकतमणिवत्—हरिद्वर्णमणिविशेष इव, श्यामला,—

वसन्तस्य, (७१) अञ्जनाचला इव पल्लविताः, तनया इव अटवीजाता विन्ध्यस्य, पातालान्धकारराशय इव भित्त्वा भुवम उत्थिताः, (७२) प्रतिवेशिका इव वर्षावासराणाम्, अंशावतारा इव कृष्णरात्रीणाम्, इन्द्रनीलमयाः प्रासादा इव वनदेवतानां, पुरस्तात् दर्शनपथम् अ तेरुः तरवः।

ततो नरपतिः अभवन्मनसि,—(७३) "अदूरवर्त्तिना खलु भवितव्यं भदन्तेन" इति। अवतीर्य्य च गिरिसरिति समुपस्पृश्य युगपद्विश्रामसमय-समुन्मुक्त-हेषाघोष-बधिरीकृताटवीहनाम् अस्मिन् एव प्रदेशे स्थापयित्वा वाजिसेनाम्, अवलम्ब्य च तपस्विजनदर्शनोचितं विनयं हृदयेन, दक्षिणेन च हस्तेन माधवगुप्तम् अंसे, वि ले: एव राजभिः अनुगम्यमानः चरणाभ्यामिव प्रावर्त्तत गन्तुम्।

---

श्यामवर्णा, नयनरञ्जना इति भाव ; अन्यत्,—मरकतमणिना श्यामला, वसन्तस्य—कामसखस्य, क्रीडापर्वतका इव—विहाराचला इव, सर्वर्त्तुकुसुमोज्ज्वलत्वादिति भाव ।

(७१) अञ्जनाचला इव—कज्जलाद्रय इव, पल्लविता,—सञ्जातपल्लवा.। विन्ध्यस्य—विन्ध्याचलस्य, पुत्र इति भाव, अटवीजाताः,—अटवी—स्त्री इति भावः, तस्या जाता,—उत्पन्ना ।

(७२) वर्षावासराणा—वार्षिकदिनाना, प्रतिवेशिका इव—प्रतिच्छन्दका इव ऽन्यर्थ, समीपस्थाननासिन इव इति वा, निबिडश्यामलपत्रवनराजिभि सुनीलमेघाच्छन्नअत् परिदृश्यमानत्वादिति भाव'। कृष्णरात्रीणा—कृष्णपक्षीयनिशानाम्, अंशावतारा इव—अंशेनाविर्भावा इव, अत्युन्नतगहने सूर्य्यालोकप्रवेशाभावादिति भाव । इन्द्रनीलमया,—इन्द्रनीलाख्यमणिनिर्म्मिता, प्रासादा',—हर्म्या. इव, अभ्रलिहत्वात् अतिनीलवर्णत्वाच्चेति भावः। अवतेरु,—जग्मुरित्यर्थः।

(७३) भदन्तेन—पूज्येन बौद्धभिक्षुणा इति यावत्, अदूरवर्त्तिना—निकटवर्त्तिना। समुपस्पृश्य—आचम्य। युगपदिति।—युगपत्—समकाल, विश्रामसमये—श्रमादिक विहाय ससुखमुपवेशनादिकाले इत्यर्थ, समुन्मुक्तेन—समुच्चरितेन, हेषाघोषेण—ऽश्वारवेण, वधिरीकृत—श्रुतिशक्तिरहितीकृत, पूर्णीकृतमिति यावत्, अटवीगहनम्—अटव्या—वनेन, वनबाहुल्येनेत्यर्थः, गहन—दुष्प्रवेशस्थानमित्यर्थ,

(७४) अथ तेषां तरूणां मध्ये नानादेशीयैः, स्थानस्थानेषु स्थाणून् आश्रितैः, शिलातलेषु उपविष्टैः, लताभवनानि अध्यावसद्भिः, अरण्यानीनिकुञ्जेषु निलीनैः, विटपच्छायासु निषण्णैः, तरुमूलानि निषेवमाणैः, (७५) वीतरागैः, आर्हतैः, मस्करिभिः, श्वेतपटैः, पाण्डुरिभिक्षुभिः, भागवतैः, वर्णिभिः, (७६) केशलुञ्चकैः, कापिलैः, जैनैः, लोकायतिकैः, काणादैः, औपनिषदैः, ऐश्वरकारणिकैः, कारन्धमिभिः, धर्म्मशास्त्रिभिः,

---

निबिडारण्यमिति यावत् यया तथोक्ता,वाजिसेनाम्—अश्वसैनिकम्। माधवगुप्त—प्रागुक्तमालवेन्द्रसूनुम्,असौ—स्वस्मदेशे। विरलैः,—कतिपयै इत्यर्थः। प्रावर्त्तत—प्राक्रमत।

(७४) "अथ" इत्यस्य "दिवाकरमित्रमद्राक्षीत्" इत्युत्तरेण सम्बन्धः। तमेव विशिनष्टि, नानादेशीयैः इत्यादि।—नानादेशीयैः,—नानास्थानादागतैरित्यर्थः। स्थाणून्—शाखापत्रादिवर्जितवृक्षान्। लताभवनानि—लतादिपिहितस्थानानीत्यर्थः, अध्यावसद्भिः,—अधितिष्ठद्भिः। अरण्यानीनिकुञ्जेषु—महारण्यस्य लतादिपिहितोदरेषु स्थानेषु, निलीनैः,—निभृतं स्थितैः। विटपच्छायासु—विटपाना—विस्ताराणा, सपल्लवशाखानामित्यर्थः; छाया—अनातपः, विटपाना—शाखाना, छाया इति वा तासु, ("विस्तारो विटपोऽस्त्रियाम्" "विटपो न स्त्रिया स्तम्बशाखाविस्तारपल्लवे" इत्यमरमेदिन्यौ)।

(७५) वीतरागैः,—विगतविषयवासनैः। आर्हतैः,—अर्हन् देवता, उपास्य इति भाव, येषा तथोक्ता, तैः, नग्नक्षपणकैः इत्यर्थः, ("अर्हस्तु क्षपणे बुद्धे पुसि मान्येऽन्यलिङ्गकः" इति मेदिनी)। मस्करिभिः,—परिव्राजकैः। श्वेतपटैः,—श्वेतोर्णाकम्बलवासोभिः, क्षपणकविशेषैरिति यावत्, श्वेताम्बरसम्प्रदायभुक्तैर्जैनैरित्यर्थो वा। पाण्डुरिभिक्षुभिः,—त्यक्तकाषायै, काषायवसनं परित्यज्य गृहीतशुभ्रवस्त्रैरित्यर्थः। भागवतैः,—भगवद्भक्तैः, वैष्णवैरित्यर्थः। वर्णिभिः,—ब्रह्मचारिभिः, ("वर्णिनो ब्रह्मचारिणः" इत्यमरः)।

(७६) केशलुञ्चकैः,—मुण्डितशिरोभिः, ["केशलुञ्चकैः" इत्यत्र "केशलुञ्चनैः" इति पाठोऽपि स एवार्थः]। कापिलैः,—कपिलोक्तसाङ्ख्यमतवर्त्तिभिः। जैनैः,—जिनमतावलम्बिभिः। लोकायतिकैः,—लोकेषु आयतानि—विस्तीर्णानि, मतानीति शेषः, अनायाससाध्यत्वादिति भावः, तानि सन्ति एषामिति तादृशैः, चार्वाकैरित्यर्थः, ("चार्वाकलोकायतिकौ" इति कोषः) काणादैः,—कणादकृतवैशेषिकमत-

पौराणिकैः, (७७) साप्ततन्तवैः, शाब्दैः, पाञ्चरात्रिकैः, अन्यैश्च स्वान् स्वान् सिद्धान्तान् शृण्वद्भिः, (७८) अभियुक्तैः, चिन्तयद्भिश्च, प्रत्युच्चरद्भिश्च, संशयानैश्च, निश्चिन्वद्भिश्च, व्युत्पादयद्भिश्च, विवदमानैश्च, अभ्यस्यद्भिश्च, व्याचक्षाणैश्च (७९) शिष्यतां प्रतिपन्नैः दूरादेव आवेद्यमानम्; अतिविनीतैः कपिभिः अपि चैत्यकर्म कुर्वाणैः, (८०) त्रिसरणपरैः परमोपासकैः शुकैरपि शाक्य-

---

वर्त्तिभिः। औपनिषदैः,—वैदान्तिकैः, ब्रह्मवादिभिरित्यर्थः। ऐश्वरकारणिकैः,—ईश्वरं जगत्कारणमिति वादिभिः, नैयायिकैरित्यर्थः। कारन्धमिभिः,—धातुवादिभिः, ("कारन्धमी दास्यकारे धातुवादरतेऽपि च" इति मेदिनी) पाषण्डविशेषैः वा। धर्मशास्त्रिभिः,—स्मार्त्तैः। पौराणिकैः,—पुराणज्ञैः।

(७७) साप्ततन्तवैः,—सप्ततन्तुः,—क्रतुः, यज्ञः इत्यर्थः, ("सप्ततन्तुर्मखः क्रतुः" इत्यमरः) स एव उपास्यः, इष्टफलप्रद इति भावः येषां तथोक्तैः, कर्म्मयोगिभिरित्यर्थः। शाब्दैः,—शब्दशास्त्राणि व्याकरणादीनि अधीयते विदन्तीति वा तथोक्तैः। पाञ्चरात्रिकैः,—पञ्चविधं रात्रं ज्ञानं यत्र तत्, "रात्रन्तु ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम्। पञ्चरात्रमिति ख्यातम्—" इत्युक्तः पञ्चज्ञानसाधनः नारदाद्युक्तग्रन्थभेदः इति यावत्, तदस्त्यस्य इति पाञ्चरात्रिकः, ते पाञ्चरात्रिकाः तैः, पञ्चरात्रोदितशास्त्रानुगामिभिः इत्यर्थः। सिद्धान्तान्—आगमान्।

(७८) अभियुक्तैः,—अभिनिविष्टैः। चिन्तयद्भिः,—भावयद्भिः, शास्त्रतत्त्वमिति भावः। प्रत्युच्चरद्भिः,—प्रत्युत्तरं ददद्भिः, गुरोरुच्चारणमनु उच्चरद्भिरिति वा। संशयानैः,—सन्दिहद्भिः। निश्चिन्वद्भिः,—सन्देहं निराकुर्वद्भिः। व्युत्पादयद्भिः,—व्युत्पत्ति—शब्दानामर्थावबोधनं कारयद्भिः, गुरूणेति शेषः। विवदमानैः,—नानाप्रकारज्ञानपूर्वकं मिथो विरुद्धं वदद्भिः, शास्त्रविचारं कुर्वद्भिरित्यर्थः। अभ्यस्यद्भिः,—अधीतशास्त्राणां पौनःपुन्येन आवृत्तिं कुर्वद्भिरित्यर्थः। व्याचक्षाणैः,—व्याख्यां कुर्वद्भिः।

(७९) शिष्यतां प्रतिपन्नैः,—अङ्गीकृतशिष्यभावैः इत्यर्थः। आवेद्यमानं—मां शिष्यं कुर्विति याच्यमानं, स्वस्ववक्तव्यं विज्ञाप्यमानमिति वा। चैत्यकर्म्म—वौद्धधर्म्मविहितं कर्म्म, अहिंसादिरूपमिति भावः।

(८०) त्रिसरणपरैः—त्रीणि सरणानि—गतयः, वौद्धधर्म्मभेदाः इति यावत्, तेषु पराः,—तत्पराः तैः; परमोपासकैः,—श्रेष्ठसेवकैः, शाक्येति।—शाक्यस्य—

शासनकुशलैः कोशं समुपदिशद्भिः, (८१) शिक्षापदोपदेशोपशमशालिनीभिः शारिकाभिः अपि धर्मदेशनां दर्शयन्तीभिः, (८२) अनवरतश्रवणगृहीतालोकैः कौशिकैरपि बोधिसत्त्वजातकानि जपद्भिः, जातसौगतशीलशीतलस्वभावैः शार्दूलैरपि अमांसाशिभिः उपास्यमानम्; (८३) आसनोपान्तोपविष्टविस्रब्धानेककेसरिश्रावकतया मुनिपरमेश्वरम्

---

बुद्धदेवस्य, शासने—आज्ञायाम्, आज्ञापालने इत्यर्थः, कुशलाः—निपुणाः, तत्परा इत्यर्थः, तैः, तत्तच्छाक्यश्रमणकानामाचारादिदर्शनादिति भावः, कोशं—बुद्धसिद्धान्तग्रन्थं, समुपदिशद्भिः,—एवमेव कुरु इत्यादि शिष्येभ्यः कथयद्भिरित्यर्थः, कोशं वाचयता बुद्धेभ्यः श्रुत्वेति भावः, शुकैरपि—तदाख्यपक्षिभिरपि, शुकानामाश्रवत्वस्य प्रसिद्धत्वम्।

(८१) शिक्षेति।—शिक्षायाः पदानि—सुप्तिङन्तानि, तेषाम् उपदेशेन—शिष्येभ्यः शिक्षाप्रदानेन इत्यर्थः, यः उपशमः,—शान्तिः, इन्द्रियदमनमित्यर्थः, तेन शालन्ते—शोभन्ते इति तथोक्ताभिः, धर्मदेशना—धर्मचर्चा, शारिकाभिः,—"मयना" इति प्रसिद्धाभिः पक्षिणीभिरित्यर्थः, पूर्ववत् दर्शनश्रवणादिभिरिति भावः।

(८२) अनवरतेति।—अनवरतश्रवणेन—नित्याकर्णनेन, गृहीतः,—प्राप्तः, आलोकः,—ज्ञानं यैः तथाभूतैः, बोधिसत्त्वेति।—बोधिः—ज्ञानं, सत्त्वं—मनः यस्य तथाविधः, यद्वा,—बोधौ—समाधिविशेषे, सत्त्वं—मनो यस्य तथाविधः, अथवा बोधौ—पिप्पलपादपे, अश्वत्थवृक्षतले इत्यर्थः, सत्त्वं—व्यवसायः, सिद्धिलाभार्थमुद्यम इत्यर्थः, यस्य तादृशः बुद्धदेव इत्यर्थः, ("बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे" इति "सत्त्वं गुणे ‥। ‥व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु" इति च मेदिनी) तस्य जातकानि—जन्मवृत्तान्ताः, तानि, जपद्भिः,—कीर्त्तयद्भिः, कौशिकैरपि—उलूकैरपि, पेचकैरपीत्यर्थः, ("महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः" इत्यमरः)। जातेति।—जातेन—उत्पन्नेन, सहावस्थानादिति भावः, सौगतस्येव—बौद्धस्येव, शीलेन—चरितेन, शीतलः,—प्रशान्तः, हिंसावर्ज्जित इत्यर्थः, स्वभावः,—प्रकृतिः येषां तैः।

(८३) आसनेति।—आसनस्य—उपवेशनपीठस्य, उपान्तेषु—प्रान्तदेशेषु, उपविष्टाः,—आसीनाः, विस्रब्धाः,—निःशङ्काः, हिंसादिविवर्ज्जिते शान्तरसास्पदे आश्रमे निवासादिति भावः, अनेके—बहवः, केसरिणः—सिंहाः, श्रावकाः,—शिष्याः, यस्य तथोक्तः, तस्य भावः तत्ता तया हेतुना, मुनिः,—"दुःखेष्वनुद्विग्नमना

अकृत्रिम इव सिंहासने निषण्णम्; उपशममिव पिबद्भिः वनहरिणैः जिह्वालताभिः उपलिह्यमानपादपल्लवम्; वामकरतलनिविष्टेन नीवारम् अश्नता पारावतपोतेन कर्णोत्पलेन इव प्रियां मैत्रीं प्रसादयन्तम्; (८४) इतरकरकिसलयनखमयूखलेखाभिर्जनितजनव्यामोहम्; उद्ग्रीवं मयूरं मरकतमणिकरकमिव वारिधाराभिः पूरयन्तम्; इतस्ततः पिपीलकश्रेणीनां श्यामाकतण्डुलकणान् स्वयमेव किरन्तम्; अरुणेन

---

सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते॥" इत्युक्तलक्षणः स्थिरचित्तः वीतरागादि भदन्तो दिवाकरमित्रः, परमेश्वर इव तम्, अशक्यसाधनादिति भाव, अकृत्रिमे इव—स्वभावनिष्पन्ने इव, सत्यस्वरूपे इत्यर्थः, आसनोपान्तोपविष्टानेकसिंहशिशुकत्वादिति भावः। उपशममिव—शान्तरसमिव, वनहरिणानां शान्तप्रकृतिकत्वादिति भाव.। उपलिह्यमानपादपल्लव—स्पृश्यमानचरणकिसलयम्। नीवारं—तृणधान्यम्, अश्नता—खादता, पारावतपोतेन—कपोतशिशुना, कर्णोत्पलेनेव—कर्णभूषणीभूतेन कुवल``व, कर्णभूषणार्थमुपायनीकृतेन उत्पलेनेवेत्यर्थः, सौकुमार्य्यात् वर्णसाम्याच्च पारावतपोते कर्णोत्पलत्वारोपो बोध्यः, प्रिया—प्रीतिपात्रीम्, अभिमतामित्यर्थं, मैत्री—सर्वजीवेषु सौहार्द्दं, प्रसादयन्त—प्रसन्नां कुर्वन्तम्, आद्रियमाणमित्यर्थः, करतलोपरि पारावतान् उपवेश्य भोज्यप्रदानेन सर्वजीवेषु मैत्रीं विशेषेण प्रकटयन्तमिति भावः।

(८४) इतरेति।—इतरस्य—वामादन्यस्य, दक्षिणस्य इत्यर्थः, करकिसलयस्य—पा पल्लवस्य, नखाना—नखराणां, मयूखलेखाभिः,—किरणराजिभि, जनितेति।—जनित.,—उत्पादितः, जनान—लोकानां, व्यामोह.,—विशेषेण मोहन येन तथोक्त, जनचित्तमुग्धकरमित्यर्थः, नखसौन्दर्य्येण मुग्धीभावः, चन्द्रकरभ्रान्तिर्वा इति भावः। उद्ग्रीवम्—उन्नमितग्रीवम्। मरकतमणिकरकमिव—हरिद्वर्णरत्नविशेषनिर्म्मितपक्षिविशेषमिव, मयूरग्रीवाया मरकततुल्यवर्णत्वादिति भावः, ("करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च" इति मेदिनी)। पूरयन्तं—प्रीणयन्तमित्यर्थ., मयूर जलं पाययन्तमिति निष्कर्ष.। किरन्त—ददतम्; बौद्धधर्म्मान्तर्गतजैनधर्म्मावलम्बिना तथाविधाचारस्य लोके सर्व्वथा परिदृश्यमानत्वात् बौद्धानामपि तादृशाचारवत्त्वं बोद्धव्यम्॥

(८५) चीवरपटलेन त्वदीयसा संवीतं बहलबालातपानुलिप्तमिव पौरन्दरं दिग्भागम्; (८६) उल्लिखितपद्मरागप्रभाप्रतिमया रक्तावदातया देहप्रभया पाटलीकृतानां काषायग्रहणमिव दिशामपि उपदिशन्तम्; (८७) अनौद्धत्यात् अधोमुखेन मन्दमुकुलितकुमुदाकारेण स्निग्धधवलप्रसन्नेन चक्षुषा जनक्षुण्णक्षुद्रजन्तुजीवनार्थम् अमृतमिव वर्षन्तम्; सर्व्वशास्त्राक्षरपरमाणुभिः इव निर्म्मितम्; परमसौगतमपि अवलोकितेश्वरम्; (८८) अस्खलितम् अपि तपसि लग्नम्;

(८५) चीवरपटलेन—जीर्णवसनेन इत्यर्थः, संवीतम्—आच्छादितम्, अत एव बहलेति।—बहलेन—प्रभूतेन, बालातपेन—नवोदितसूर्य्यालोकेन, अनुलिप्तः,—रञ्जितः तं, पौरन्दरम्—ऐन्द्रम्, इन्द्राधिष्ठितमित्यर्थः, दिग्भागमिव—पूर्व्वमिवेति भावः, स्थितमिति शेषः।

(८६) उल्लिखितेति।—उल्लिखितस्य—उद्घृष्टस्य, पद्मरागस्य—"पोखराज" इति प्रसिद्धस्य मणिभेदस्य, प्रभायाः,—दीप्तेः, प्रतिमा—तुल्या तया, रक्तावदातया—लोहितोज्ज्वलया। पाटलीकृताना—रक्तीकृताना, दिशामपि—ककुभामपि, काषायग्रहणमिव—कषायरक्तवसनधारणमिव।

(८७) अनौद्धत्यात्—प्रशान्तत्वात्। मन्देति।—मन्दम्—ईषत्, मुकुलितं—मुद्रित, कुमुदं—कैरव, तस्य इव आकारः,—मूर्त्तिः यस्य तेन, स्निग्धेति।—स्निग्ध—कोमलमित्यर्थः, धवलं—शुभ्रं, प्रसन्न—प्रीतिप्रफुल्लञ्च तेन। जनेति।—जनैः,—लोकैः, हिंसापरैरिति भावः, क्षुण्णाना—दलिताना, विनष्टानामित्यर्थः, क्षुद्रजन्तूनाम्—क्षुद्र-जीवाना, कीटपतङ्गादीनामिति यावत्, जीवनार्थं—प्राणदानार्थमित्यर्थः, अमृतमिव—सुधामिव, वर्षन्त—निकिरन्तम्, अमृतसेकेन मृताः उज्जीवन्ति इति प्रसिद्धम्। सर्वेति।—सर्वेषा—कृत्स्नाना, शास्त्राणा—तन्त्राणाम्, अक्षराणा—वर्णाना, परमाणुभिः,—अतिसूक्ष्मावयवैरित्यर्थः, वैदिकसौगतादिशास्त्राणामतिनिगूढार्थेष्वपि सुनिपुणमित्यर्थः। परमसौगत—परमबौद्धमपि, अवलोकितेश्वरम्—अवलोकितः,—दृष्टः, ईश्वरः,—जगत्कारणं येन तथोक्तमिति विरोधः, सुगतानामीश्वरानङ्गीकारादिति भावः, ईश्वरः,—भगवान्, बुद्धदेव इत्यर्थः, इति परिहारः, ("सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः। समन्तभद्रो भगवान्—" इत्यमरः)।

(८८) अस्खलितमपि—अपतितमपि, लग्न—संसक्तं, स्खलितस्य इव

आलोकमिव यथाऽवस्थितसकलपदार्थप्रकाशकं दर्शनार्थिनाम्; सुगतस्यापि अभिगमनीयमिव, धर्मस्यापि आराधनीयमिव, प्रसादस्यापि प्रसादनीयमिव, मानस्यापि माननीयमिव, वन्द्यत्वस्यापि वन्दनीयमिव; (८९) जन्म यमस्य, नेमिं नियमस्य, तत्त्वं तपसः, शरीरं शौचस्य, कोशं कुशलस्य, वेश्म विश्वासस्य, सद्वृत्तं सद्वृत्ततायाः, सर्वस्वं सर्वज्ञतायाः, दाक्ष्यं दाक्षिण्यस्य, पारं परानुकम्पायाः, निर्वृतिं सुखस्य, मध्यमे वयसि वर्त्तमानं दिवाकरमित्रम् अद्राक्षीत्। अतिप्रशान्त-

कुत्रचिदप्यस्खलनाज्जलसम्भवात् विरोध', यतः स्खलितो हि अन्यत्र लग्नो भवति इति बोध्यम्, अस्खलित—स्खलन—करणीयकार्य्यस्य भंशनं, तद्रहितमिति विरोधपरिहारः, अभ्रष्टशीलतपस्य इत्यर्थः। यथेति।—यथा—येन रूपेण, अवस्थातु वर्त्तितु योग्यं तथा स्थितं यथाऽवस्थित तथाभूताना, स्वस्वभावे वर्त्तमानानामित्यर्थः सकलपदार्थाना—सर्ववस्तूना, सद्रूपेण स्थिताना, न तु असद्रूपाणामिति भाव, प्रकाश—ज्ञापकम्, उपदेशादिना इति भावः। सुगतस्यापि—सर्वज्ञस्यापि, बुद्धस्यापीत्यर्थः, दर्शनार्थिन इति भाव, अभिगमनीयमिव—सेवनीयमिवेत्यर्थः, ज्ञानशिक्षार्थमिति भाव, महाज्ञानिनमिति तात्पर्य्यम्। धर्मस्येति।—महाधर्मपरायणमित्यर्थः। प्रसादस्यापि प्रसन्नताया अपि, अतिसुप्रसन्नाकारमित्यर्थः। मानस्येति।—सर्वेषामेव सम्मानार्हमित्यर्थ। वन्द्यत्वस्येति।—सर्वलोकपूजार्हमित्यर्थः।

(८९) यमस्य—बाह्येन्द्रियनिग्रहस्य, जन्म—उत्पत्तिम्। नियमस्य—अन्तरिन्द्रियनिग्रहस्य, नेमि—परा काष्ठामिति भावः। तपसः,—तपस्यायाः, तत्त्वमि—स्वरूपमिव। शौचस्य—पवित्रतायाः। कोश—भाण्डागार, सर्वप्राणिना शिवकरमिति भावः। वेश्म—गृहम्। सद्वृत्ततायाः,—सुशीलतायाः, सद्वृत्त—सच्चरितम्, अतीव सुचरितमित्यर्थः। सर्वस्वं—सारधनम्। दाक्षिण्यस्य—उदारतायाः, सरलताया वा, यद्वा,—दाक्षिण्यस्य—दक्षिणार्हस्य, ("दक्षिणीयो दक्षिणार्हस्तत्र दाक्षिण्य इत्यपि इत्यमर) दाक्ष्य—पाटवम्, अत्युदारं, सर्वेषामेव एकमात्रदक्षिणार्हमिति भावः। परानुकम्पायाः,—परानुग्रहस्य, परोपकारस्य इत्यर्थ', पारम्—अन्तम्, एकान्तपरोपकारनिरतमित्यर्थः। सुखस्य—आनन्दस्य, निर्वृ—सुख, सुखस्यापि सुखदमिति भावः, सदानन्दमयमिति तात्पर्यम्; ("निर्वृतिः स्वस्थितावस्तङ्गमने च सुखे स्त्रियाम्"

गम्भीराकारारोपितबहुमानस्य सादरं दूरादेव शिरसा मनसा वचसा च ववन्दे।

दिवाकरमित्रस्तु (९०) मैत्रीमयः प्रकृत्या, विशेषतः तेन अपरेण अदृष्टपूर्व्वेण अमानुषलोकोचितेन सर्व्वाभिभाविना महाऽनुभावाभोगभाजा भ्राजिष्णुना भूपतेः अप्राकृतेन आकारविशेषेण, तेन च आभिजात्यप्रकाशकेन गरीयसा प्रश्रयेण च आह्लादितः चक्षुषि च चेतसि च युगपत् अग्रहीत्। (९१) धीरस्वभावोऽपि च सम्पादितसम्भ्रमाभ्युत्थानः, सङ्कलय्य किञ्चित् उद्गसनकेन विलोलं विलम्बमानं

---

इति मेदिनी)।' मध्यमे वयसि—यौवनवार्द्धकयोः मध्यावस्थायां, त्रिंशदूर्द्धं पञ्चपञ्चाशत्‌ो वर्षस्य मध्ये इत्यर्थ.। अतीति।—अतिप्रशान्तेन—अतिसौम्येन, गम्भीरेण च—गाम्भीर्य्यपूर्णेन च, अचापलेन चेत्यर्थः, आकारेण—मूर्त्त्या, आरोपित,—स्थापित इत्यर्थ, दिव" कारमिवे इति भाव, बहुमान,—अत्यादरः येन यस्य वा तथाभूतः सन्।

(९०) प्रकृत्या—स्वभावेन, मैत्रीमयः,—सद्भावपूर्ण', प्रकृत्या एव मैत्रीमयः आसीदित्यर्थः। तेन—तादृशेनेत्यर्थः, अतिप्रशस्तेनेति यावत्, अपरेण—नास्ति पर',: —अन्य' यस्मात् यस्य वा तेन, नास्ति परस्मिन् यत् तेन इति वा, अनुपमेनेत्यर्थ, अमानुषलोकोचितेन—अलौकिकेन, स्वर्लोकोचितेनेत्यर्थः, सर्व्वाभिभाविना—सर्व्वातिशायिना, महाऽनुभावाभोगभाजा—महान्—अतीव, अनुभावः,—प्रभावो यस्य, तथाविधो य आभोगः,—सन्निवेशः, त भजते इति तथोक्तेन, भ्राजिष्णुना—राजमानेन, अप्राकृतेन—अनीचेन, अतिमनोरमेणेत्यर्थः। तेन—तादृशेनेत्यर्थ', अन्यत्र दुर्लभेनेति भाव', आभिजात्यप्रकाशकेन—महाकुलप्रसूतत्वसूचकेन, गरीयसा—अतिगुरुणा, सुमहता इत्यर्थः, प्रश्रयेण—विनयेन। चक्षुषीत्यादि।—तस्य रूपाकृष्टः सबहुमानं ददर्श, विनयदर्शनेन कोऽयं महाऽनुभवः इति मनसि तर्कयामास चेत्यर्थः।

(९१) ["धीरस्वभाव." इत्यत्र "वीरस्वभावः" इति पाठो न युज्यते, तथाविधस्य वीरभावकीर्त्तनस्य अनौचित्यादिति अवधेयम्]। सम्पादितेति।—सम्पादितम् —अनुष्ठितं, ससम्भ्रमं—व्यग्रतासहितम्, अभ्युत्थानम्—उद्गमनं येन तथाभूतः।

वामांसात् चीवरपटान्तम्, (९२) उत्क्षिप्य अनेकाभयदानदीक्षादक्षिणो दक्षिणं महापुरुषलक्षणलेखाप्रशस्तं, स्निग्धमधुरया वाचा सगौरवम् आरोग्यदानेन राजानम् अन्वग्रहीत्; अभ्यनन्दच्च स्वागतगिरा, गुरुमिव अभ्यागतं बहु मन्यमानः स्वेन आसनेन.—"आस्यताम् अत्र" इति निमन्त्रयाञ्चकार; पार्श्वे स्थितञ्च शिष्यम् अब्रवीत्,—"आयुष्मन्! उपानय कमण्डलुना पादोदकम्" इति। राजा तु अचिन्तयत्,—(९३) "अलोहः खलु संयमनपाशः सौजन्यम् अभिजातानाम्। स्थाने खलु तत्रभवान् गुणानुरागी ग्रहवर्म्मा बहुशो वर्णितवान् अस्य

---

उद्गमनकेन—उत्थानेन हेतुना, विलोल—चञ्चल, वामांसात्—वामस्कन्धात्, विलम्बमानं—दोलायमान, स्रसमानमिति यावत्, चीवरपटान्त—जीर्णवसनप्रान्तभागं, सङ्कलय्य—संयम्य, यथास्थान स्थापयित्वा इत्यर्थः।

(९२) अनेकेति।—अनेकेषा—बहूना, जीवानामिति भाव, अभयदानमेव—आश्वासप्रदानमेव, दीक्षा—व्रतविशेष, तत्र दक्षिण,—अनुकूल, [ "—दीक्षा दक्षिण." इत्यत्र "—दीक्षादक्षिणम्" इति पाठ समीचीन या प्रतिभाति, प्रसङ्गानुरोधात् "उत्क्षिप्य" इति क्रियाया. "महापुरुष—" इत्यादिविशेषणस्यानुरोधाच्चेति मन्तव्यम्, अस्मिन् पक्षे—दक्षिणम्—उदारम्, अकुण्ठमित्यथ, महेति। —महापुरुषस्य—नरोत्तमस्य, लक्षणानि—लक्षणभूता, सूचिका इत्यर्थ, या लेखा,—रेखा', कराचिह्नविशेषा. इत्यर्थः, ताभि. प्रशस्त—प्रशंसनीय, दक्षिण—सव्येतर, भुजमिति शेष, उत्क्षिप्य—उत्तोल्य। सगौरव—सबहुमान यथा तथा, स्निग्धमधुरया—सस्नेहप्रियया, वाचा—वाक्येन, आरोग्यदानेन—नैरुज्यप्रदानेन, स्निग्धमधुरेण वाक्येनैव मन पीडाप्रशमनद्वारा इत्यर्थ, अन्वग्रहीत्—अनुगृहीतवान्। स्वागतगिरा—सुखेन आगमनम्? इति प्रश्नेन, अभ्यनन्दत्—समतोषयत्, समम न्यत वा। अभ्यागत—गृहागतम्, अतिथिमिति यावत्, राजानमिति शेषः। स्वेनासनेन—निजासनप्रदानेनेत्यर्थः। आस्स्व—उपविश। [ "आस उपवेशने" इत्यस्य लोटि रूपम् ]। निमन्त्रयाञ्चकार—उपवेशनाय अनुरुरोध, आह्वानञ्चकारेत्यर्थो वा।

(९३) अलोहः,—लोहव्यतिरेकेण निष्पन्न इत्यर्थ, संयमनपाश,—बन्धनरज्जुः। अभिजातानां—सज्जनानाम्। स्थाने खलु—युक्तमेव, ( "युक्ते द्वे साम्प्रत स्थाने" इत्यमरः )

गुणान्" इति। प्रकाशश्च आबभाषे,—"भगवन्! (९४) दर्शन-पुण्यानुगृहीतस्य मम पुनरुक्त इव अयमार्घ्यप्रयुक्तः प्रतिभाति अनुग्रहः। (९५) चक्षुःप्रमाणप्रसादस्वीकृतस्य च परकरण-मिव आसनादिदानोपचारचेष्टितम्। (९६) अतिभूमिः एव भवादृशां पुरः सम्भाषणामृताभिषेकप्रक्षालितसकलवपुषश्च मे प्रदेशवृत्तिः। पाद्यमपि अपार्थकम्। आसतां भवन्तो यथा-सुखम्, आसीनोऽहम्" इत्यभिधाय क्षितौ एव उपाविशत्।

"अलङ्कारो हि (९७) परमार्थतः प्रभवतां प्रश्रयातिशयः, रत्नादिकस्तु शिलाभारः" इति आकलय्य, पुनः पुनः अभ्यर्थ्य-

(९४) दर्शनेति।—दर्शनमेव—भवदवलोकनमेव, पुण्यं—पवित्रतासम्पादक-मित्यर्थः, तेन अनुगृहीतः,—अनुकम्पितः तस्य। पुनरुक्त इव—अधिक इव। आर्घ्य-प्रयुक्तः,—आर्घ्येण—सम्मानेन भवता, प्रयुक्तः,—कृतः।

(९५) चक्षुःप्रमाणेति।—चक्षुरेव—नेत्रमेव, प्रमाणं—हेतुः, ज्ञानकारण-मित्यर्थः यस्य तादृशः, प्रत्यक्षसिद्ध इत्यर्थः, यः प्रसादः,—अनुग्रहः, दर्शनदानरूप इति यावत्, तेन स्वीकृतस्य—आधीनीकृतस्य, आसनेति।—आसनादिदानेन—उपवेशन-पीठपाद्यादिसमर्पणेन, यः उपचारः,—सेवा, अर्हणा इति यावत्, तदर्थं चेष्टितं—प्रयत्नः, परकरणमिव—अन्यत् साधनमिव, प्रसादस्य इति भावः; यद्वा,—परकरणमिव—इतरीकरणमिव, आत्मपरिजनात् पृथक्करणमिवेत्यर्थः।

(९६) पुरः,—अग्रतः, सम्भाषणेति।—सम्भाषणमेव—सङ्गमनमेव, अमृतं—पीयूषं, तेन अभिषेकः,—स्नानं, तेन प्रक्षालितं—धौतं, निर्म्मलीकृतमिति भावः, सकलं—समग्रं, वपुः,—शरीरं यस्य तथाभूतस्य, मे प्रदेशवृत्तिः,—एकदेशावस्थानम्; यद्वा,—प्रदेशवृत्तिः,—अवस्थानम्, आसनग्रहणरूपव्यवहारः इत्यर्थः, अतिभूमिः,—भूमिमतिक्रान्ता, स्वर्गावस्थानरूपा इत्यर्थः, यद्वा,—भूमिं—मर्य्यादाम् अतिक्रान्ता अतिभूमिः,—मर्य्यादालङ्घनमित्यर्थः, भवद्दर्शनसम्भाषणादिभिरेव वयं कृतार्थाः स्मः, अग्रतः आसनग्रहणन्तु न युक्तमेव, मर्य्यादाऽतिक्रमणापराधादिति भावः। पाद्यं—पादोदकम्, अपार्थकं—निरर्थकं, पाद्यस्य प्रयोजनं नास्तीत्यर्थः।

(९७) परमार्थतः,—यथार्थतः। प्रभवतां—शक्तिशालिनामित्यर्थः, प्रश्रयाति-शयः,—विनयातिरेकः। शिलाभारः,—प्रस्तरभारः। आकलय्य—वितर्क्य इत्यर्थः।

मानोऽपि यदा न प्रत्यपद्यत पार्थिवो वचनं, तदा समेव आसनं पुनरपि भेजे भदन्तः। (९८) भूपतिमुखनलिननिहित-निभृतनयनयुगलनिगड़निश्चलीकृतहृदयश्च स्थित्वा काञ्चित् कालकलां, कलिकालकल्मषकालुष्यमिव क्षालयन् अमलाभिः दन्तमयूखमालाभिः (९९) मूलफलाभ्यवहारसम्भवम् उद्वमन् इव च परिमलसुभगं (१००) विकचकुसुमपटलपाण्डुरं लता-वनम अवादीत्।—"अद्य प्रभृति (१०१) न केवलमयम् अनिन्द्यः, वन्द्योऽपि प्रकाशितसत्सारः संसारः। किं नाम न आलोक्यते जीवद्भिः अद्भुतम्? येन रूपम् अचिन्तितोपनतमिदं दृक्पथम् उपगतम्। एवंविधैः अनुमीयन्ते जन्मान्तरावस्थितसुकृतानि

---

अभ्यर्थ्यमान,—प्रा र्थमान', याच्यमान इत्यर्थः। प्रत्यपद्यत—स्वीचकार। वचन—दिवाकरमित्रस्य वाक्यम्। भदन्त',—क्षपणक', दिवाकरमित्र इति यावत्।

(९८) भूपतीति।—भूपतेः,—राज्ञ', मुखनलिने—वदनपङ्कजे, निहितम्—अर्पित, निभृत—विनीत, विनयव्यञ्जकमित्यर्थ', ("निभृतविनीतप्रश्रिता समाः" इत्यमर) नयनयुगलमेव—चक्षुर्द्वयमेव, निगड,—शृङ्खल, तेन निश्चलीकृत—स्थिरीकृत, हृदय—चेत यस्य तथाभूत, राजनि बद्धदृष्टिरित्यर्थ, कालकला—कालांशं, स्थित्वा, तूष्णीमिति भावः, दन्तमयूखमालाभिः,—दशनकिरणराजीभि', कलिकालेति।—कलिकालस्य—चतुर्थयुगस्य, कल्मष—पापमेव, कालुष्यं—मलं, क्षालयन्—शोधयन्।

(९९) मूलेति।—मूलस्य—कन्दविशेषस्य, फलस्य च—शस्यस्य च, अभ्यवहार,—भोजन, तस्मात् सम्भव,—समुत्पत्तिः यस्य तथोक्तम्। परिमलसुभग—परिमलेन—सौरभेण,—सुभग—रम्यम्।

(१००) विकचेति।—विकच—विकसि , कुसुमाना—पुष्पाणा, यत् पटल—समूह, तेन पाण्डुर—धवल, मनोरम, विशुद्ध कोमलञ्च अकथयदिति भाव।

(१०१) प्रकाशितेति।—प्रकाशित,—प्रकटित, सन्—साधुरेव, सार',—उत्कर्ष यस्य तथाभूत, अय संसार',—जीवलोक, न केवलम् अनिन्द्य,—प्रशस्यमानो न, किन्तु वन्द्योऽपि—स्तुत्योऽपीत्यन्वय। अचिन्तितोपनतम्—अतर्कितोपगतमित्यर्थः, कल्पनातीतमिति भावः। जन्मान्तरावस्थित-

हृदयोत्सवैः। इह अपि जन्मनि दत्तमेव अस्माकम् अमुना तपःक्लेशेन फलम् असुलभदर्शनं दर्शयता देवानां प्रियम्। आ तृप्तेः पीतम् अमृतम् (१०२) ईक्षणाभ्याम्। जातं निरुत्कण्ठं मानसं निर्वृतिसुखस्य; महद्भिः पुण्यैः विना न विश्राम्यन्ति सज्जने त्वादृशि दृशः; सुदिवसः सः, यस्मिन् जातोऽसि। सा (१०३) सुजाता जननी, या सकलजीवलोकजीवितजनकम् अजनयत् आयुष्मन्तम्। पुण्यवन्ति पुण्यानि अपि तानि, येषामसि परिणामः। सुकृततपसः ते परमाणवः, ये तव परिगृहीतसर्वावयवाः। तत् सुभगं सौभाग्यम्, आश्रितोऽसि येन।

---

सुकृतानि—पूर्व्वजन्मार्ज्जितपुण्यानि. हृदयोत्सवैः,—चित्तस्य प्रकृष्टानन्दैरित्यर्थः, अनुमीयन्ते—प्रतर्क्यन्ते, पूर्व्वजन्मानुष्ठितबहुपुण्यकर्म्मफलेनैव ईदृशापूर्व्वरूपदर्शनजा चित्तप्रीति जायते इति मन्ये इति निष्कर्ष। असुलभदर्शन—दुर्लभावलोकनम्।

(१०२) ईक्षणाभ्या—नेत्राभ्याम्। मानस—चित्त. निर्वृतिसुखस्य—निर्वृतौ—शान्तौ, यत् सुखम्—आनन्दः तस्य, निरुत्कण्ठ—निरुद्वेगं, जातं—वृत्तम, ईदृशानुभवरूपदर्शनसुखमनुभूय चेत' सुखान्तरनिरपेक्ष भवतीति भाव', ["निर्वृतिसुखस्य" इत्यत्र "निवृत्तिसुखस्य" इति पाठे,—वासनात्यागजनितानन्दस्येत्यर्थ']। त्वादृशि—भवत्सदृशे, दृश,—चक्षूंषि, न विश्राम्यन्ति—न विरमन्ति, भवादृशस्य सत्पुरुषस्य दर्शनादेव चक्षुषी रूपतृष्णा निवर्त्तते, तच्च महद्भिः पुण्यैरेव सञ्जायते इति भाव'। यस्मिन्—यस्मिन् दिवसे।

(१०३) सुजाता—सफलजनना, तस्या एव मातुर्जन्मग्रहण सार्थकमित्यर्थ'। सकलेति।—सकलस्य—कृत्स्नस्य, जीवलोकस्य—जगत, जगद्वासिन' इत्यर्थ', जीवितजनक—प्राणदमित्यर्थ., रक्षणपोषणादिना इति भाव। येषा—पुण्या ा, परिणामः,—फलम्, अतिसौभाग्य हि पुण्यस्य, येन त्वादृश आश्रयो लब्ध इति भाव'। ते—परमाणव, परिगृही ति।—परिगृहीता,—स्वीकृता, आश्रिता इति यावत्, सर्वे अवयवा,—अङ्गानि यै तादृशा', ये परस्पर मिलिता तव अङ्गरूपेण परिणता इत्यर्थ, ते—त्वदवयवारम्भका इति यावत्, परमाणव',—द्व्यणुकरूपावयवारम्भकसूक्ष्मभूतानि, सुकृततपस,—सुकृतानि—स्वाचरितानि, तपांसि—तपस्या यै तादृशाः, अनुत्कृष्टतपस्या कृतवन्त इत्यर्थ.। येन—सौभाग्येन, सौभाग्य—शुभादृष्ट, सुभग—

भव्यः स पुरुषभावः, भवति अवस्थितो यः। यत्सत्यं, मुमुक्षोरपि मे पुण्यभाजम् आलोक्य पुनः श्रद्धा जाता मनुजजन्मनि। न दृष्टैः अपि अस्माभिर्दृष्टः कुसुमायुधः। कृतार्थमद्य चक्षुः वनदेवतानाम्। अद्य सफलं जन्म पादपानां, येषामसि गतो गोचरम्। (१०४) अमृतमयस्य भवतो वचसां माधुर्यं कार्य्यमेव। अस्य तु ईदृशे शैशवे विनयस्य उपाध्यायं ध्यायन्नपि न सम्भावयामि भुवि। सर्वथा शून्य आसीत् अजाते दीर्घायुषि गुणग्रामः। धन्यः सः (१०५) भूभृत्, यस्य वंशे मणिरिव मुक्तामयः सम्भूतोऽसि। एवंविधस्य च पुण्यवतः (१०६) कथञ्चित् प्राप्तस्य केन प्रियं समाचरामः इति पारिप्लवं चेतो नः। सकलवनचरसार्थसाधारणस्य कन्दमूलफलस्य

---

शोभनैश्वर्य्ययुक्तां, त्वामाश्रयं लब्ध्वैव सौभाग्यस्य सुभगत्वं सञ्जातमिति भावः। भव्यः,—भवितुं योग्यः, लभ्यव्य इति यावत्। पुरुषभावः,—पौरुषम्। भवति—त्वयि, त्वदाश्रितं पौरुषमेव सर्वैराकाङ्क्षणीयमिति भावः। मुमुक्षोः,—मुक्तिलिप्सोः। मनुजजन्मनि—मनुष्यदेहधारणे, मुक्तिलाभेच्छां विजिहासतः मे पुनर्जन्मग्रहणे चाभिलाषो जायते इति सरलार्थः। कुसुमायुधः,—कामः; मारजितो बुद्धदेवस्य उपासकानां मुमुक्षूणां वा कामादिप्रसङ्गस्य निषिद्धत्वादिति भावः। गोचरम्—इन्द्रियविषयं, दर्शनपथमित्यर्थः।

(१०४) अमृतमयस्य—पीयूषस्वरूपस्य। कार्य्यमेव—कार्य्य एव, तव अमृतमयत्वात् त्वदुच्चारितवाक्यस्यापि अमृतवत् स्वादुत्वं बोद्धव्यं, "कारणगुणाः कार्य्यगुणमारभन्ते" इति न्यायादिति भावः। उपाध्यायम्—आचार्य्यम्। ध्यायन्—चिन्तयन्। शून्यः,—निरवलम्बनः। अजाते —अनुत्पन्ने, तव जन्मनः प्रागिति भावः।

(१०५) भूभृत्—राजा, पर्वतश्च। वंशे—कुले, वेणौ च। मुक्तामयः,—निर्व्याधिः, मौक्तिकरूपश्च।

(१०६) कथञ्चित्—अतिकृच्छ्रेणेत्यर्थः, अस्माकं बहुभाग्येनेति भावः, प्राप्तस्य—अत्र समागतस्य, चक्षुर्विषयतां गतस्य इत्यर्थो वा। समाचरामः,—अनुतिष्ठामः। पारिप्लव—चञ्चल, ("चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे" इत्यमरः)। सकलेति।—सकलानां—सर्वेषां, वनचराणाम्—अरण्यवासिनां, सार्थस्य—समूहस्य, साधारणं—

गिरिसरिदम्भसो वा के वयम्? (१०७) अपरोपकरणीकृतस्तु कायकलिः अयं स्माकम्। सर्व्वस्वम् अवशिष्टमिष्टातिथ्याय॥ (१०८) स्वायत्ताश्च विद्यन्ते विद्याविन्दवः कतिचित्। उपयोगन्तु न प्रीतिः विचारयति। यदि च (१०९) नोपरुणद्धि कश्चित् कार्य्यलवम्, अरक्षणीयाक्षरं वा कथनीयं, तत् कथयतु भवान्. श्रोतुम् अभिलषति हृदयं सर्व्वमिदं नः। केन कृत्यातिभारेण भव्यो भूषितवान् भूमिम् एताम् अस्मनयोर्याम्? कियदवधिर्वा शून्याटवीपर्य्यटनक्लेशः कल्याणराशेः? कस्माच्च

---

सामान्य तस्य, वनवासिसुलभस्येत्यर्थः, गिरिसरिदम्भस,—पार्वत्यनदीसलिलस्य, के वयम्?—न अधिकारिणो वयमेव. तेन भवदर्चा क्रियते इति भावः, सर्ववनचरसाधारणात् नो वयं निर्दिष्टाधिकारिण इत्याशय।

(१०७) कायकलि,—कायः,—देह एव, कलिः—कोरक, क्षुद्रशरीरमित्यर्थः, अपरोपकरणीकृत,—न परस्य—अन्यस्य, उपकरणीकृत,—अधीनीकृतः इत्यर्थः, स्वायत्त इति भावः, तुच्छदेह एव अस्माकं स्वायत्त, अत एव इममेव आतिथ्याय समर्पयामि इति भाव, यद्वा,—कायकलि,—कायः,—देह एव, कलिः,—अन्त्ययुगः, अशिवदु खहेतुत्वादिति भाव., अपरेति।—अपरेषाम्—अन्येषाम्, उपकरणीकृत,—अधीनीकृत, परोपकाराय नियोजित इत्यर्थः, अत एव इममेव तव परिचर्य्यार्थं नियोजयामि इत्याशयः, अपरोपकरणीकृतत्वात् एनेनापि नास्माकम् अधिकारोऽस्तीति निष्कर्षः। इष्टातिथ्याय—प्रियातिथिसत्काराय, सर्वस्व—सर्वधन, देहः देहव्यतिरिक्तञ्च यत्किञ्चिदस्तीति भावः, अवशिष्ट—शेषीभूतम्, देहादिकं यत्किञ्चिदस्ति तत् सर्वमतिथिसत्कृतये नियोजयामीति भावः।

(१०८) स्वायत्ताः,—स्वाधीनाः, अहार्य्यत्वादक्षयत्वाच्चेति भाव। विद्याविन्दवः,—विद्यालेशाः, कतिचित्परिमिता इत्यर्थ.। उपयोगम्—उपकारिता, मम एतेन क्षुद्रदेहेन सामान्यविद्यया वा भवतः कोऽप्युपकारः भवति न वा इत्येवम्।

(१०९) कश्चित् कार्य्यलवं—कार्य्यविन्दु, तुच्छमपि कार्यमित्यर्थः, यदि न उपरुणद्धि—रुणद्धि, क्षुद्रकार्य्यस्यापि चेत् बाधा न भवति इत्यर्थः। कथनीयं—वक्तव्यम्, अरक्षणीयाक्षरं—न रक्षणीयानि—न गोप्यानि इत्यर्थः, अक्षराणि—वर्णाः यस्य तथाभूतम्। भव्यः,—मङ्गलास्पदमित्य, कृत्यातिभारेण—कार्य्यातिशय्येन,

(११०) सन्तप्तरूपा इव ते तनुः इयमसन्तापार्हा विभाव्यते ?" इति।

राजा तु सादरतरम् अब्रवीत्,—"आर्य्य! (१११) दर्शितसम्भ्रमेण अनेन मधुररसविसरम् अमृतमिव हृदयधृतिकरम् अनवरतं वर्षता वचसा एव ते सर्व्वम् अनुष्ठितम्। धन्योऽस्मि, यत् एवम् अभ्यर्हितम् अनुपचरणीयम् अपि मान्यो मन्यते माम्। अस्य च महावनभ्रमणपरिक्लेशस्य कारणम् अवधारयतु मतिमान्। मम हि (११२) विनष्टनिखिलेष्टबन्धोः जीवितानुबन्धस्य निबन्धनम् एका एव यवीयसि स्वसा अवशिष्टा। साऽपि भर्त्तुः वियोगात् (११३) वैरिपरिभवभयात् भ्रमन्ती कथमपि विन्ध्यवनमिदम् अशुभशबरबलबहुलम् अगणितगजकुलकलिलम् अपरिमितमृगपतिशरभभयम्

---

भ्रमणयोग्याम्—अयोग्यगमनाम् इत्यर्थः। कियदवधिः,—कियान्—कति दिनानीत्यर्थः, अवधिः,—मर्य्यादा यस्य तथाभूतः, किमुद्दिश्य ईदृशक्लेशं स्वीकरोषि? किं वा लब्ध्वा निवर्त्तिष्यसे? इति भावः। कल्याणराशिः,—प्रभूतश्रेयोयोग्यस्य इत्यर्थः।

(११०) सन्तप्तरूपा इव—अन्तर्व्यथिता इव। असन्तापार्हा—क्लेशसहनायोग्या। विभाव्यते—लक्ष्यते।

(१११) दर्शितसम्भ्रमेण—दर्शितादरेण। मधुररसविसरं—मधुररसप्रवाहम्। हृदयधृतिकरं—चित्तसन्तोषकरम्। सर्वम्—आतिथ्यादिकम्। अभ्यर्हितम्—अभिपूजितम्, ["मतिबुद्धि—" (३।२।१८८ पा०) इति वर्त्तमाने क्तः। "अभ्यर्हितम्" इत्यत्र "अभ्यर्हणीयम्" इति युक्ततया प्रतिभाति]। अनुपचरणीयम्—अनादरणीयम्।

(११२) विनष्टेति।—विनष्टाः,—विध्वस्ताः, निखिलाः,—समग्राः, इष्टाः,—प्रियाः, बन्धवः,—स्वजनाः यस्य तथाभूतस्य, जीवितानुबन्धस्य—जीवनधारणस्य, जीवनसंयोगस्य वा, निबन्धनं—हेतुः, ग्रन्थीभूता इत्यर्थः, यवीयसी—कनिष्ठा, स्वसा—भगिनी। ["अवशिष्टा" इत्यत्र "अवशेषा" इति पाठान्तरम्]।

(११३) वैरिपरिभवभयात्—वैरिणः,—शत्रोः, परिभवः,—तिरस्कारः, पीडनमिति यावत्, तस्मात् भयं—त्रासः तस्मात्। अशुभेति।—अशुभैः,—दुराचारैः,

(११४) उरुमहिषसुषितपथिकगमनम् अतिनिशितशरकुशपरुषम् (११५) अवटशतविषमम् आविशत्। अतः ताम् अन्वेष्टुं वयमनिशं निशि निशि च सततम् इमाम् अटवीम् अटामः; नचैनाम् आसादयामः। कथयतु च गुरुः, अपि यदि कदाचित् कुतश्चिद्दनचरतः श्रुतिपथम् उपगता तद्वार्त्ता” इति।

अथ तत् श्रुत्वा (११६) जातोद्वेग इव भदन्तः पुनः अभ्यधात्,—“धीमन्! न खलु कश्चिदेवंरूपो वृत्तान्तोऽस्मानभ्युपगतवान्। अभाजनं हि वयम् ईदृशानां प्रियाख्यानोपायनानां भवताम्”। इत्येवं भाषमाण एव तस्मिन् अकस्मादागत्य

---

शबराणां—म्लेच्छविशेषाणां, बलैः,—सैन्यैः, बहुल—व्याप्तम्। अगणितेति।—अगणितैः,—असङ्ख्यातैः, गजानां—हस्तिनां, कुलैः,—वृन्दैः, कलिल—गहनम्, आकीर्णमित्यर्थः, दुष्प्रवेशमिति यावत्, (“कलिलं गहनं समे” इत्यमरः)। अपरिमितेति।—अपरिमितम्—अतिशयितम्, अपरिमितेभ्यः,—अगणितेभ्यः इति वा, मृगपतिभ्यः,—सिंहेभ्यः, शरभेभ्यः,—“अष्टपादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टयः” इत्युक्तलक्षणमृगभेदेभ्यश्च, भय—त्रासः यस्मिन् तथाभूतम्।

(११४) उर्विति।—उरुभिः,—महद्भिः, महिषैः,—लुलापैः, सुषितम्—अपन्थाः, पथिकानां—पान्थानां, गमनं—प्रयाणं यस्मिन् तथोक्तम्। अतिनिशितेति।—अतिनिशितैः,—अतितीक्ष्णैः, शरैः,—गुन्द्राख्यतृणभेदैः, कुशैः,—दर्भैश्च, परुष—कर्कश, खरस्पर्शमित्यर्थः।

(११५) अवटेति।—अवटानां—गर्त्तानां, (“गर्त्तावटौ भुवि श्वभ्रे” इत्यमरः) शतैः,—समूहैः, विषम—नतोन्नतत्वात् दारुणम्। अनिशम्—अशान्तं यथा तथा, अन्वेष्टुमिति योजना, निशि निशि—प्रतिनिशमित्यर्थः, चकारात् दिवाऽपि इति भाव, अटवीम्—अरण्यम्, अटामः,—भ्रमामः। आसादयामः,—प्राप्नुमः, अपि—सम्भावनायां, प्रश्ने वा। तद्वार्त्ता—तस्याः,—मम भगिन्याः, वार्त्ता—वृत्तान्तः।

(११६) जातोद्वेगः,—उत्कण्ठितः। अभ्युपगतवान्—प्राप्तवान्। प्रियेति।—प्रियाणि—इष्टानि, आख्यानानि—कथनान्येव, उपायनानि—उपढौकनानि तेषाम्, अभाजनम्—अपात्रम्।

अपरः (११७) शमिनि वयसि वर्त्तमानः सम्भ्रान्तरूप इव पुरस्तात् उपरचिताञ्जलिः, जातकरुणः, प्रचरितचक्षुः स्निग्धः अभाषत,—"भगवन् भदन्त! महत् कारुण्यं वर्त्तते। (११८) बाला एव बलवद्व्यसनाभिभूता भूतपूर्व्वाऽपि कल्याण-रूपा स्त्री शोकावेशविवशा वैश्वानरं विशति। सम्भाव्य-ताम् अप्रोषितप्राणां भगवान्। (११९) अभ्युपपद्यतां समु-चितैः समाश्वासनैः। अनुपरतपूर्वं कृमिकीटमपि दुःखितं दयाराशेः आर्य्यस्य गोचरगतम्" इति।

राजा तु (१२०) जातानुजाशङ्कः सोदर्य्यास्नेहाच्च अन्तर्द्रुत इव दुःखेन दोदूयमानहृदयः कथमपि गद्गदिका-गृहीतकण्ठो विकलवाक् वाष्पायमाणदृष्टिः पप्रच्छ,—

(११७) शमिनि—शान्ते, चरमे इति यावत्। सम्भ्रान्तरूपः,—सोद्वेगाकारः। उपरचिताञ्जलिः,—कृतकरपुटः, कृताञ्जलिरित्यर्थः। जातकरुणः,—उत्पन्नकृपः, सदयः इत्यर्थः। प्रचरितचक्षुः,—सवाष्पः। कारुण्यं—शोकजनकं घटनम्।

(११८) बाला एव—बालिका एव, बाल्ये वयस्येवेति भावः, बलवदिति।—बलवता—प्रबलेन, व्यसनेन—विपदा, अभिभूता—परिभवं नीता, भूतपूर्व्वा—अतिक्रान्तपूर्व्वावस्था, दुरवस्थामापन्नाऽपि इत्यर्थः, कल्याणरूपा—शुभाकारा, सुलक्षणेत्यर्थः, शोकावेशविवशा—शोककातरा, वैश्वानरम्—अग्निम्। अप्रोषितप्राणाम्—अगतजीवनां, सम्भावयतु—समाद्रियतां, सान्त्वयतु इत्यर्थः।

(११९) समुचितैः,—योग्यैः, समाश्वासनैः,—सान्त्वनैः, अभ्युपपद्यताम्—अनुगृह्यताम्। अनुपरतपूर्वं—पूर्वस्मिन् न उपरतं—न विनष्टं, मृतप्रायमित्यर्थः, गोचरगतं—दृष्टिविषयीभूतं, करुणापात्रमिति भावः।

(१२०) जातानुजाशङ्कः,—जाता—उत्पन्ना, अनुजा—भगिनी, इति शङ्का—सन्देहः यस्य तथाभूतः, सोदर्य्यास्नेहात्—भगिनीप्रीतिवशात्, अन्तर्द्रुत इव—अन्तर्गलित इव, द्रवीभूतान्तःकरण इवेत्यर्थः, दोदूयमानहृदयः,—पुनः पुनः सन्तप्यमानचेताः इत्यर्थः, [दुनोतेः यङि शानचि रूपम्] गद्गदिकेति।—गद्गदिकया—गाद्गद्येन, शोकहर्षादिजेन कण्ठावरोधकभावविशेषेणेत्यर्थः, गृहीतः,—आक्रान्तः, बद्ध इत्यर्थः, कण्ठः,—गलदेशः, कण्ठध्वनिरिति यावत् यस्य तथाभूतः, अत एव

(१२१) "पाराशरिन्! कियद्दूरे सा योषिदेवंजातीया? जीवेहा कालम् एतावन्तम्? इति; पृष्टा वा त्वया,—'काऽसि? कस्यासि? कुतोऽसि? किमर्थं वनम् इदमभ्युपगताऽसि? विशसि च किं निमित्तम् अनलम्?' इति। आदितः प्रभृति कार्त्स्न्येन कथ्यमानमिच्छामि श्रोतुं, कथमाश्चर्यस्य गता गोचरम्? आकारतो वा कीदृशी?" इति।

तथाऽभिहितस्तु भूभुजा भिक्षुः आचचक्षे,—"महाभाग! श्रूयताम्,—अहं हि प्रात्यूषसि एव अद्य वन्दित्वा भगवन्तम्, अनेनैव (१२२) नदीरोधसा सैकतसुकुमारेण यदृच्छया विहृतवान् अतिदूरम्। एकस्मिंश्च (१२३) वनलतागहने गिरि-नदीसमीपभाजि श्रुतवानस्मि हिमहतकमलाकरकातराणां रसितं, साध्यमानानाम् अतितारतानवर्त्तिनीनां वीणातन्त्रीणा-

---

विकलवाक्—स्खलितवचनः. वाष्पायमाणदृष्टिः,—वाष्पायमाणा—वाष्पमुद्वमन्ती, [ "वाष्पोष्मभ्यामुद्वमने" ( ३।१।१६ पा० ) इति क्यङि शानचि रूपम् ] दृष्टिः,—नेत्रं यस्य तथाभूतः, अश्रुरुद्धनयन इत्यर्थः।

(१२१) पाराशरिन्।—भिक्षो! एवञ्जातीया—भवद्वर्णितप्रकारेत्यर्थः, कार्त्स्न्येन—साकल्येन, सविशेषमिति यावत्। गोचरम्—इन्द्रियविषयीभूत, दृष्टि-पथमित्यर्थः।

(१२२) नदीरोधसा—सरित्तीरेण, ("कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु" इत्यमरः) सैकतसुकुमारेण—सिकतामयकोमलेन, यदृच्छया—स्वेच्छया, विहृतवान् —गतवान्।

(१२३) वनेति।—वनलताभिः,—आरण्यवल्लीभिः, गहने—निविडे, दुष्प्रवेशे इत्यर्थः। हिमेति।—हिमेन—तुषारेण, हतः,—नाशितः, कमलाकरः,—पद्म-निवहः, ("आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते" इति मेदिनी) तेन कातराः,—व्याकुलास्तासाम्। रसित—रणितम्। साध्यमानाना—सज्जीक्रियमाणाना, सङ्गीत-शास्त्रानुसारेण यथायथ तन्त्रीसयोजन क्रियमाणानामित्यर्थः, अतीति।—अतितारः,—अतिमहान्, तानः,—सङ्गीतस्वरविशेषः, तस्मिन् वर्त्तन्ते—तिष्ठन्ति

मिव झाङ्कारम् एकतानं नारीणां रुदितम् (१२४) अधृति-कारम् अतिकरुणम् आकर्णितवान् अस्मि। समुपजातकौतूहलश्च गतोऽस्मि तं प्रदेशम्। (१२५) दृष्टवानस्मि च दृषत्खण्ड-खण्डिताङ्गुलिगलल्लोहितेन च, (१२६) पार्ष्णिप्रविष्टशर-शलाकाशल्यशूलसङ्कोचितचक्षुषा च, (१२७) अध्वनीनश्रम-श्वयथुनिश्चलचरणेन च, स्थाणवव्रणव्यथितगुल्फबद्धभूर्जत्वचा च, (१२८) वातखुड़खेदखञ्जजङ्घाजातज्वरेण च, पांशु-

इति तर्णोत्ताना, वीणातन्त्रीणा—वल्लकीगुणानाम्। एकतान—समस्वरम्, अनवरत वा।

(१२४) अधृतिकारम्—अधैर्य जननम्। ["समुपजातकौतूहलश्च" इत्यत्र "समुपजातकृपश्च" इति पाठान्तरम्]।

(१२५) "दृष्टवानस्मि" इत्यस्य "योषितम्" इत्युत्तरेण सम्बन्धः। तां विशिनष्टि, दृषदित्यादि।—दृषदा—शिलाना, खण्डै,—शकलै, खण्डिताभ्य,—निकृत्ताभ्य, अङ्गुलिभ्य,—चरणशाखाभ्य, गलत्—स्रवत्, लोहित—रक्त यस्य तेन।

(१२६) पार्ष्णीति।—पार्ष्णिषु—चरणतलपश्चिमभागेषु, गुल्फाधोभागेषु इत्यर्थः, प्रविष्टा—विद्धा, शराणा—गुन्द्राख्यतृणविशेषाणा, या. शलाका,—प्रतनुदीर्घ-काष्ठिकाविशेषा, ता एव शल्याना—शङ्कुनामास्त्रविशेषाणा, शूलानि—शूलाग्रवत् तीक्ष्णानि अग्राणि इत्यर्थ, तै तज्जनितयातनाभिरित्यर्थः, स ङ्कुचिते—कुटिले, चक्षुषी—नेत्रे यस्य तेन।

(१२७) अध्वनीनेति।—अध्वनीन,—अध्वगमनजनित, य. श्रम,—आयास, तस्य श्वयथु,—वृद्धि, यद्वा,—अध्वनीनश्रमेण य. श्वयथु,—शोथ, पादयो. स्फीतता इत्यर्थ, तेन निश्चलौ—स्थिरौ, गतिशक्तिरहितौ इत्यर्थ, चरणौ—पादौ यस्य तेन। स्थाणवेति।—स्थाणुः,—शङ्कु, ("स्थाणुर्वा ना ध्रुव शङ्कु" इत्यमर.) तस्य अय स्थाणव,—स्थाणुवेधनजनित इति यावत्, य. व्रण,—क्षत, तेन व्यथितौ—पीडितौ, यौ गुल्फौ—घुटिकौ, पादग्रन्थी इत्यर्थ., तत्र बद्धे—व्रणशोषणार्थं निहिते, भूर्जत्वचौ—मृदुलशाख्यतृचवल्कले येन तथाविधेन।

(१२८) वातेति।—वातखुड,—गतिप्रतिघातजनको वातव्याधिविशेष, तेन यः खेदः,—व्यथा, तेन खञ्जे—गतिशक्तिहीने, ये जङ्घे—प्रसृते, जान्वधोभागौ इत्यर्थ., ताभ्या

पाण्डुरपिण्डिकेन च, (१२९) खर्जूरजूटजटाजर्जरित-जानुना च, (१३०) शतावरीविदारितोरुणा च, विदारी-दारिततनुदुकूलपल्लवेन च, (१३१) उत्कटवंशविटपकण्टक-कोटिपाटितकञ्चुककर्पटेन च, (१३२) फललोभालम्बिता-नम्रबदरीलताजालकैः उत्कण्टकैः उल्लिखितसुकुमारकरोदरेण च, (१३३) कुरङ्गशृङ्गोत्खातैः कन्दमूलफलैः कदर्थितबाहुना च, (१३४) ताम्बूलविरहविरसमुखखण्डितकोमलामलकीफलेन च,

---

जात,—उत्पन्न', ज्वरो यस्य तेन। पांश्विति।—पांशुना—रजसा, पाण्डुरम्—आविल, पिण्डिक—केशपाशः, पिण्डिका—जान्वधो मांसपिण्डमिति वा यस्य तेन।

(१२९) खर्जूरेति।—खर्जूराणा—तृणद्रुमविशेषाणा, जूटस्य—समूहस्य, जटाभिः—शाखाभिरिति यावत्, कण्टकाकीर्णाभिः इति भाव', जर्जरिते—खण्डिते, छिन्ने इत्यर्थ', जानुनी—ऊरुपर्व्वणी यस्य तेन।

(१३०) शतावरीति।—शतावर्य्या—शतमूल्या, विदारितौ—पाटितौ, ऊरू—सक्थिनी यस्य तेन। विदारीति।—विदार्य्या—क्षीरशुक्लया, "भूमिकुष्माण्ड" इति प्रसिद्धया इत्यर्थ' तद्दचलतयेति यावत्, दारित,—खण्डित', तनुः,—सूक्ष्मः, दुकूलपल्लव,—वसनप्रान्तदेशः इत्यर्थः यस्य तेन।

(१३१) उत्कटेति।—उत्कटैः,—दारुणैः, वंशविटपानां—वेणुशाखानां, "कञ्चो" इति वङ्गे प्रसिद्धानामित्यर्थः, कण्टककोटिभि',—कण्टकाग्रैः, पाटितानि—छिन्नानि, कञ्चुककर्पटानि—स्तनावरणवसनानि यस्य तेन।

(१३२) उत्कण्टकै,—उद्गतकण्टकै', कण्टकाकीर्णैः इति यावत्, फलेति।—फलाना लोभेन—लालसया, आलम्बिताः,—गृहीता., अत एव आनम्रा'—अवनत:, या' बदरीलता',—कोलितरुशाखा इत्यर्थ,तासा जालकानि—समूहा: तै', उल्लिखितेति।—उल्लिखिते—उद्धृष्टे, विद्धे इत्यर्थः, सुकुमारयोः,—कोमलयो., करयोः,—हस्तयोः, उदरे—अभ्यन्तरदेशौ यस्य तेन।

(१३३) कुरङ्गेति।—कुरङ्गाणा—मृगविशेषाणा, शृङ्गैः,—विषाणै', उत्खातानि—उद्धृतानि तैः। कदर्थितबाहुना—क्लेशितभुजेन, अतितुच्छवस्तूनामाहरणप्रसादिति भाव'।

(१३४) ताम्बूलेति।—ताम्बूलस्य—पर्णस्य, विरहेण—वर्जनेन, अभावे

( १३५ ) कुशकुसुमाहतिलोहितानां स्रवताम् अक्ष्णां लेपीकृत-मनःशिलेन च, (१३६) कण्टकिलतालूनालकलेशेन च, केनचित् किसलयोपपादितातपत्रकृत्येन, केनचित् ( १३७ ) कदलीदल-व्यजनवाहिना, केनचित् कमलिनीपलाशपुटगृहीताम्भसा, केन-चित् (१३८) पाथेयीकृतमृणालपूलिकेन केनचित् (१३९) चीनां-शुकदशाशिक्य निहित-नारिकेल-कोशकलशी-कलितरसालतैलेन,

---

मित्यर्थ, विरस—विस्वादं, यत् मुख—वदन, तेन खण्डित—चर्वित, कोमल—मृदु, आमलकीफल—धात्रीफलं येन तथोक्तेन।

( १३५ ) कुशेति।—कुशाना—दर्भाणां, कुसुमानि—पुष्पाणि, तेषाम् आहत्या—आघातेन, लोहितानि—रक्तानि तेषां, स्रवतां—स्रोतः, गच्छताम्, अक्ष्णा—नेत्राणां, लेपीकृतेति।—लेपीकृता—दिग्धा, मनःशिला—उपधातुविशेष. येन तथाभूतेन, प्रशमनायेति भाव।

( १३६ ) कण्टकीति।—कण्टकिलतया—कण्टकाकीर्णलतया, लूनः,—छिन्नः अलकलेशः,—चूर्णकुन्तलैकदेशः यस्य तेन। किसलयेति।—किसलयेन—पल्लवेन उपादित—सम्पादितम्, आतपत्रस्य—छत्रस्य, कृत्यं—कार्य्यम्, आतपनिवारणरूपमिति भावः येन तेन, आतपनिवारणार्थं मस्तकस्योपरि धृतपल्लवेन इति भावः।

( १३७ ) कदलीति।—कदलीदलम् एव—रम्भापत्रमेव, व्यजनं—तालवृन्तकं तत् वहति—धारयतीति तथोक्तेन, कदलीदलेन वीजयतेति भाव। कमलिनीति।—कमलिन्या,—पद्मिन्याः, पलाशपुटेन—पत्ररचितपात्रविशेषेण, गृहीत—नीतम्, अम्भः,—जलं येन तथोक्तेन।

( १३८ ) पाथेयीकृतेति।—पाथेयीकृतम्—अपाथेयं पाथेय सम्पद्यमानं कृतं पथि भोजनाय सङ्गृहीतमित्यर्थः, [ "कृभ्वस्तियोगे—" (५।४।५० पा०) इति च्वि मृणालपूलिका—बिसनिचयः येन तथोक्तेन।

( १३९ ) चीनेति।—चीनांशुकस्य—सूक्ष्माम्बरस्य, दशा—एकदेशविशेष, अञ्चल इति यावत्, सैव शिक्य—काच, "शिका" इति वङ्गभाषाया प्रसिद्धमित्यर्थः, तत्र निहितायां—स्थापितायां, नारिकेलकोशकलश्यां—लाङ्गलीसमुद्गकरूपे भाण्डे इति भाव [ "—नारिकेल—" इत्यत्र "—नालिकेर—" इति पाठेऽपि स एवार्थः ] कलितं—रचितं, रसालतैलम्—आम्रतैलं, मुखवैरस्यापनोदनाय सन्धानविशेषे ( "आचारेर तेल" इति ख्यात ) अपक्वाम्रेण सह रचितं तैलमित्यर्थः येन तथोक्तेन।

(१४०) कतिपयावशिष्टशोकविकलमूककुब्जवामनबधिर-वर्वराविरलेन, अबलानां चक्रवालेन परिवृताम्; आपत्कालेऽपि (१४१) कुलोद्गतेन इव अमुच्यमानां प्रभा-क्षेपिना लावण्येन; (१४२) प्रतिबिम्बितैः आसन्नवन-लताकिसलयैः सरसैः दुःखक्षतैरिव अन्तःपटलीक्रियमाण-कायाम्; कठोरदर्भाङ्कुरक्षतक्षारिणा क्षतजेन अनुसरणा-लक्तकेन इव रक्तचरणाम्; (१४३) उन्नालेन अन्यतर-नारीधृतेन अरविन्दिनीदलेन कृतच्छायमपि विच्छायं

---

(१४०) कतिपयेति ।—कतिपये—अल्पा इत्यर्थः, अवशिष्टा,—परिशिष्टा, येषां तथाविधा, शोकविकला,—मन्युविधुरा, शोकार्त्ता इत्यर्थः, मूका,—वर्णा-नुच्चारका, भाषणासमर्था इति यावत्, कुब्जा,—गड्डुला, वामना,—खर्वपुरुषाः, बधिराः,—एडा, वर्वरा,—[illegible]र्खाः, तैः अविरलः,—गहनः, पूर्ण इत्यर्थः तेन । अबलानां—नारीणां, चक्रवालेन—मण्डलेन, परिवृता—वेष्टिताम् ।

(१४१) कुलोद्गतेनेव सत्कुलजातेन इव, आजन्मसङ्गेन इव च, प्रभा-क्षेपिना—उज्ज्वलेनेत्यर्थः, लावण्येन—कान्तिविशेषेण, अमुच्यमानाम्—अपरित्यज्य-मानाम्, ईदृशापन्नामामपि समधिकलावण्यामित्यर्थः ।

(१४२) प्रतिबिम्बितैः,—प्रतिफलितैः, लावण्यदर्पणे इति भावः, सरसैः,—आर्द्रैः, प्रत्यग्रैरित्यर्थश्च, आसन्नवनलताकिसलयैः,—आसन्नाः,—समीपवर्त्तिन्यः, या वनलता,—आरण्यवल्ल्यः, तासां किसलयैः,—पल्लवैः, दुःखक्षतैरिव—आधिव्रणैरिव, अन्तरिति ।—अन्तःपटलीक्रियमाणः,—अन्तर्विध्यमानः, कायः,—देहो यस्यास्ताम् । कठोरेति ।—कठोरेण—कर्कशेन, दर्भाङ्कुरेण,—कुशाङ्कुरेण, भक्षि वोद्भिन्नकुशाग्रे-णेत्यर्थः, क्षत—छिन्न, तस्मात् क्षरति—स्रवतीति तथोक्तेन, क्षतजेन—रक्तेन, अनुसरणालक्तकेन इव—पतिमरणे स्वदत्तलक्तकेन इव, अनुसरणे—अनुगमने, कुत्रचित् गमनकाले इति यावत्, अलक्तकेन—अलक्तद्रवरसेनेति वा, रक्तचरणा—रक्तौ—लोहितौ, चरणौ—पादौ यस्याः ताम् । कुलोद्गतेनेत्यारभ्य अनुसरणालक्तकेनेत्यन्त यावदुत्प्रेक्षाऽलङ्कारः ।

(१४३) उन्नालेन—उद्गतदण्डेन, अरविन्दिनीदलेन—पद्मिनीपत्रेण, कृत-च्छाय—कृता—सम्पादिता, छाया—अनातपः यस्य तथोक्तामपि, विच्छाय—विगत

मुखमुन्हन्तीम्; आकाशमपि (१४४) शून्यतया अतिशयानाम्; मृन्मयीमिव निश्चेतनतया; मरुन्मयीमिव निश्वाससम्पदा; पावकमयीमिव सन्तापसन्तानेन; (१४५) सलिलमयीमिव अस्रप्रस्रवणेन; वियन्मयीमिव निरवलम्बनतया; (१४६) तडिन्मयीमिव पारिप्लवतया; शब्दमयीमिव परिदेवितवाणीबाहुल्येन; (१४७) मुक्तामुक्तांशुकरत्नकुसुमकनकपत्राभरणां

प्रभ, विवर्णमित्यर्थ.। छत्रच्छायमपि विच्छायमित्यापातत: विरोधात् विरोधाभासालङ्कार'।

(१४४) शू तया—रिक्ततया, हृदयस्येति भाव.। अतिशयाना—जयन्तीम्, आकाशमेव शून्यतया ख्यातम्, अस्या हृदाकाशन्तु ततोऽप्यधिक शून्यं, स्वजनविरहादिति भाव'। निश्चेतनतया—निस्पन्दतयेति यावत, मृन्मयीमिव—मृत्तिकारचितामिव, पञ्चसु भूतेषु केवल क्षितिमयीमिव, न तु अवादिमयीमिति भाव', एवमुत्तरत्रापि योजयितव्यम्। निश्वाससम्पदा—दीर्घनिश्वासबाहुल्येनेत्यर्थ, मरुन्मयीमिव—वायुमयीमिव, अविरतं दीर्घनिश्वास त्यजन्तीमिति यावत्। सन्तापसन्तानेन—मनस्तापबाहुल्येनेत्यर्थ', पावकमयीमिव—अग्निमयीमिव, केवल तेजोमयीमिवेत्यर्थ', प्रबलशोकानलतप्तामिति भाव'।

(१४५) अस्रप्रस्रवणेन—वाष्पवर्षणेन, सलिलमयीमिव—जलमयीमिव, केवलजलमयीमिवेत्यर्थ, अनवरतमश्रु मुञ्चन्तीमिति भाव.। निरवलम्बनतया—निराधारतया, निराश्रयतया इत्यथ, वियन्मयीमिव—आकाशमयीमिव, केवल व्योममयीमिवेत्यर्थ', अतीव निराश्रयामिति भाव.।

(१४६) पारिप्लवतया—चञ्चलतया, ("चञ्चल तरलञ्चैव पारिप्लवपरिप्लवे" इत्यमर) तडिन्मयीमिव—विद्युन्मयीमिव, हृदययातनया अतीव अस्थिरामिति भाव। परिदेवितवाणीबाहुल्येन—विलापाक्षरनिवहेन, शब्दमयीमिव—शब्दस्वरूपिणीमिव, अनारत विलपन्तीमिति भाव। मृन्मयीमिवेत्यारभ्य शब्दमयीमिवेत्यन्त यावदुत्प्रेक्षाऽलङ्कार।

(१४७) मुक्तेति।—मुक्तानि—त्यक्तानि, निर्गमितानि च, मुक्ता:,—मौक्तिकानि, अंशुकानि—उत्कटवसनानि, यद्वा,—मुक्तांशुक—मुक्ताख्यमंशुक, नालवटेशज मुक्ताखचित उत्तरीयविशेष इति यावत्, रत्नानि—मणय, कुसुमानि—पुष्पाणि, कनकपत्राणि—सुवर्णखचितरचनाविशेषा, सौवर्णपर्णानि च, आभरणानि

कल्पलतामिव महावने पतिताम्; (१४८) परमेश्वरोत्तमाङ्ग-पातदुर्ललिताङ्गीं गङ्गामिव गाङ्गताम्; (१४९) वनकुसुम-धूलिधूसरितपादपल्लवां प्रभातचन्द्रमूर्त्तिमिव लोकान्तरम् अभि-लषन्तीम्; (१५०) निजजलमोचकदर्थितदर्शितधवलायत-नेत्रशोभां मन्दाकिनीमृणालिनीमिव परिम्लायमानाम्;

---

—अलङ्काराश्च, यद्वा,—पत्राभरणानि—पत्ररचनाविशेषाः, विभूषणरूपा. इत्यर्थः यया ता कल्पलता—कालरुखवल्लीम्।

(१४८) परमेश्वरेति।—परमेश्वरस्य—ईशस्य, राज्ञ ग्रहवर्म्मणश्च, उत्तमाङ्गात् —शिरस., उत्तमाङ्गस्य—शिरसश्च, पातेन—निपतनेन, छेदनेन च, दुर्ललितम्—अत्याहत, दुःखेन पतितञ्च, अङ्ग यस्याः तथोक्ताम्। गाङ्गता—पृथिवी प्राप्ता, यानाभावात् भूमिमवतीर्णाञ्च।

(१४९) वनेति।—वनस्य—अरण्यस्य, कुसुमाना—पुष्पाणा, धूलिभि,—परागै, धूसरितौ—पाण्डुरौ, पादपल्लवौ—चरणकिसलयौ यस्या ताम्, अन्यत्र—वनस्य—जलस्य, ("वने सलिल-कानने" इत्यमर) कुसुमाना—पुष्पाणा, कुमुदानामिति यावत्, धूलिभि,—परागैरिव, धूसरिता',—धूसरवर्ण', पादा,—रश्मयः, ("पादा रश्म्यङ्घ्रितुर्य्यांशा." इत्यमर.) पल्लवा,—परिणतकिसलया इव, पाण्डुरत्वसाधर्म्यात् इति भाव' यस्यास्ता, प्राभातिकचन्द्रस्य आपाण्डुरत्वादिति बोध्यं, प्रभातचन्द्रमूर्त्तिमिव—उषाकालिकेन्दुबिम्बमिव, लोकान्तर—परलोक, लोकालोकपर्व्वतस्य पार्श्वमिति च।

(१५०) निजेति।—निजेन—स्वीयेन, जलमोचेन—वाष्पवर्षणेन इत्यर्थः, कदर्थित—क्लिष्ट यथा तथा, दर्शिता—अवलोकिता, धवलयो,—शुभ्रयो, आयतयो',—दीर्घयो, नेत्रयो,—नयनयो., शोभा—सुषमा यया ताम्, अन्यत्र,—निजस्य—स्वाश्रयस्येत्यर्थ, जलस्य—सलिलस्य, मोचात्—त्यागात्, कदर्थित यथा तथा दर्शिता धवलस्य आयतस्य च नेत्रस्य—मूलस्य, शोभा यया ता, ("नेत्र सरिगु' वस्त्रभेदे मूले द्रुमस्य च। द्वये चक्षुषि नद्याञ्च" इति मेदिनी) मन्दाकिनीमृणालिनीमिव—स्वर्गगङ्गापद्मिनीमिव, परिम्लायमाना—स्वयमेव शुष्यमाणाम्, एकत्र,—सूर्य्यातपराहित्यात् स्वजीवनभूतजलाभावाच्च, अन्यत्र,—पतिविरहादिति भाव.। [म्लायते. कर्म्मकर्त्तरि लटि शानचि रूपम्]।

(१५१) दुःसहरविकिरणसंस्पर्शखेदनिमीलितां कुमुदिनीमिव दुःखेन दिवसं नयन्तीम्; (१५२) दग्धदशाविसंवादितां प्रत्यूषप्रदीपशिखाम् इव क्षामक्षामां पाण्डुवपुषम्; (१५३) पार्श्ववर्त्तिवारणाभियोगरक्ष्यमाणां वनकरिणीमिव महाह्रदे निमग्नाम्; (१५४) प्रविष्टां वनगहनं ध्यानञ्च; स्थितां तरुतले मरणे च; पतितां

---

(१५१) दुःसहेति।—दुःसहेन—सोढुमशक्येन, एकत्र,—तीक्ष्णत्वात्, अन्यत्र,—चन्द्रानुरागादिति भावः, रविकिरणेन—सूर्य्यमयूखेन, यः संस्पर्शः,—संयोगः, तेन यः खेदः,—क्लेशः, तेन निमीलिता—आर्त्ता, मुद्रिता च ताम्, कुमुदिनीमिव—कैरविणीमिव। नयन्तीम्—अतिवाहयन्तीम्।

(१५२) दग्धेति।—दग्धा—भस्मीभूता, दशा—वर्त्तिः, दग्धा—विधिना विध्वस्तेत्यर्थः, दशा—अवस्था च, ("दशाऽवस्थादीपवर्त्योर्वस्त्रान्ते भूम्नि योषिति" इति मेदिनी) तया विसंवादिता—निराश्रयीकृता ताम्, प्रत्यूषेति।—प्रत्यूषे—अहर्मुखे, या प्रदीपशिखा—दीपज्वाला तामिव, क्षामक्षामाम्—अतिक्षीणां, निर्वाणोन्मुखीञ्च, पाण्डुवपुषं—रक्तशून्यकलेवरां, श्वेतावभासामित्यर्थश्च।

(१५३) पार्श्ववर्त्तीति।—पार्श्ववर्त्तिनाम्—अन्तिकस्थानां, परिजनानामिति यावत्, वारणम् एव—प्रतिषेध एव, अभियोगः,—चेष्टितम्, आग्रहो वा, जीवनरक्षणार्थमिति भावः, अन्यत्र,—पार्श्ववर्त्तिना—पार्श्वस्थेन, वारणेन—हस्तिना, ("वारणं प्रतिषेधे स्यात् वारणस्तु मतङ्गजे" इति मेदिनी) यः अभियोगः,—बलात्कारः, तस्मात् रक्ष्यमाणां—निवर्त्त्यमानां, एकत्र,—मरणात्, अन्यत्र,—बलात्कारोद्यतात् कस्माच्चित् बलवतो हस्तिनः इति च भावः, ताम्, यद्वा,—पार्श्ववर्त्तिना वारणेन अभियोगात्—वारणान्तरकृतबलात्कारात्, रक्ष्यमाणां—त्रायमाणां, महाह्रदे—अगाधजलविस्तीर्णजलाशये, निमग्नाम्—अन्तःप्रविष्टाम्, एकत्र,—पत्यनुगमनार्थं पवित्रजलाशयस्नाताम्, अन्यत्र,—आत्मरक्षार्थं जलाशयावतरणात् तत्रत्यपङ्के अवसन्नामिति भावः, वनकरिणीमिव—वन्यहस्तिनीमिव। कल्पलतामिवेत्यारभ्य वनकरिणीमित्यन्तं यावत् एकत्र बहूनामवैधर्म्याणां श्लिष्टानां साम्यानां समावेशात् श्लेषानुप्राणिता मालोपमाऽलङ्कारः।

(१५४) वनगहनं—निबिडारण्यं, ध्यानञ्च—दुश्चिन्ताञ्च, प्रविष्टाम्—आश्रिता-

धातुरत्सङ्गे महाऽनर्थे च; दूरीकृतां भर्त्रा सुखेन च; (१५५) विरेचितां भ्रमणेन आयुषा च; आकुलां केशकलापेन मरणोपायेन च; विवर्णिताम् अध्वधूलिभिः अङ्गवेदनाभिश्च; दग्धां (१५६) चण्डातपेन वैधव्येन च; धृतमुखीं पाणिना मौनेन च; गृहीतां प्रियसखीजनेन मन्युना च; तथा च (१५७) भ्रष्टैः बन्धुभिः विलासैश्च, मुक्तेन श्रवणयुगलेन आत्मना च, परित्यक्तैः भूषणैः सर्वारम्भैश्च, भग्नैर्वलयैः म˘रथैश्च, चरणलग्नाभिः परिचारिकाभिः दर्भाङ्कुरसूचीभिश्च,

---

मित्यर्थः। स्थिता—कृतावस्थाना, कृतनिश्चयाच्च। धातुरुत्सङ्गे—उपमातृक्रोडे, महाऽनर्थे—प्रबलविपत्तौ च, पतिता—निहितदेहा, मग्नाच्च। दूरीकृता—विरहिताम्।

(१५५) भ्रमणेन—अटनेन, आयुषा—जीवितकालेन च, विरेचिता—त्यक्ता, गतिशक्तिहीनाम्, आसन्नमरणाचेत्यर्थः। केशकलापेन—सुदीर्घविस्रस्तकुन्तलसमूहेन, मरणोपायेन—मृत्युचेष्टया च, आकुला—व्याकुला, सुदीर्घकेशपाशसंयमनाक्षमतया, केनोपायेन मरिष्यामीति चिन्तया चेति भावः। अध्वधूलिभि,—मार्गरजोभिः, विवर्णिता—मलिना, निष्प्रभीकृताच्च, श्रमणक्लेशादिति भावः।

(१५६) चण्डातपेन—तीव्रसूर्यसन्तापेन, वैधव्येन च—विगतः धव',—पतिः यस्याः सा विधवा, तस्याः भावः वैधव्य तेन, विपतिकतया इत्यर्थः। पाणिना—करेण, मौनेन च—तूष्णीम्भावेन, धृतमुखी—विधृतवदना, निरुत्तराच्च, करस्योपरि स्थापितगण्डा, मौनावलम्बिनीचेत्यर्थः। मन्युना—शोकेन, गृहीता—धृताम्, आक्रान्ताच्च।

(१५७) भ्रष्टै,—च्युतै', नष्टैरित्यर्थः, त्यक्तैश्च, बन्धुभि,—भर्त्रादिभिः, विलासै', —सुखचेष्टितैश्च। ["बन्धुभि." इत्यादौ "जीवितेन" इत्यन्तपदे इत्थम्भूतलक्षणे तृतीया] मुक्तेन—निरलङ्कारेण, शून्येन च। सर्व्वारम्भैश्च—कृत्स्नोपक्रमै, सकलकार्य्यैरित्यर्थ.। भग्नः,—खण्डितैः, विध्वस्तैश्च। चरणलग्नाभिः,—पादपतिताभि', मा अस्मान् विहाय प्राणान् जहीति निवारणायेति भावः; चरणविद्धाभिश्च, दर्भाङ्कुरसूचीभिः—प्रतिनवीभिनदृष्ठाग्रैः।

(१५८) हृदयविनिहितेन चक्षुषा प्रियेण च, (१५९) दीर्घैः शोकश्वसितैः केशैश्च, क्षीणेन वपुषा पुण्येन च, पादयोः पतन्तीभिः हृद्याभिः अश्रुधाराभिश्च, स्वल्पावशेषेण परिजनेन जीवितेन च; (१६०) अलसाम् उन्मेषे; दक्षाम् अश्रुमोक्षे; सन्ततां चिन्तासु; विच्छिन्नाम् आशासु; कृशां काये; स्थूलां श्वसिते; (१६१) पूरितां दुःखेन; रिक्तां सत्त्वेन; अध्यासिताम् आयासेन; शून्यां हृदयेन; निश्चलां निश्चयेन; चलितां धैर्यात्; अपि च वसतिं व्यसनानाम्; आधानम् आधीनाम्; अवस्थानम् अनवस्थानाम्; आधारम् अधृतीनाम्; आवासम्

(१५८) हृदयविनिहितेन—हृदयार्पितेन, वक्षसि निबद्धेनेत्यर्थः, चित्तस्थापितेन च. प्रियेण—भर्त्रा।

(१५९) दीर्घैः,—आयतैः, लम्बमानैश्च, शोकश्वसितैः,—शोकजनिश्वासैः। क्षीणेन—क्षामतां गतेन, क्षयं गतेन च, वपुषा—शरीरेण। स्वल्पावशेषेण—विरलेन, अल्पमात्रावशिष्टेनेत्यर्थः, निःशेषप्रायेणेत्यर्थश्च।

(१६०) उन्मेषे—चक्षुरुन्मीलने, अलसा—मन्थरा, जडप्रायामित्यर्थः, नेत्रोन्मीलनाक्षमामिति यावत्। दक्षा—पटुः ता, प्रबलवेगेनाश्रु मुञ्चन्तीमित्यर्थः; या अलसा सा कथं दक्षा? इति आपाततः विरोधः, उन्मेषाश्रुमोक्षरूपविभिन्नाधिकरणिकतया च तयोः परस्परमविरोधात् विरोधाभासोऽलङ्कारः; एवमुत्तरत्र। सन्तताम्—अविच्छिन्ना, निरन्तरामित्यर्थः, सततं चिन्तयन्तीमिति निष्कर्षः, विच्छिन्ना—रहिता, हताशामित्यर्थः, सन्तता विच्छिन्नामिति विरोधः। श्वसिते स्थूलां—दीर्घं श्वसतीमिति यावत्, कृशा स्थूलामिति आपाततः विरोधः, कार्श्यस्थौल्ययोः सामानाधिकरण्याभावेनाविरोधात् विरोधाभासः, एवमन्यत्रापि।

(१६१) सत्त्वेन—विद्यमानतया, अस्तित्वेन इत्यर्थः, बलेन उत्साहेन वा, रिक्तां—रहिता, मृतप्राया दुर्बला निरुत्साहा वा इति भावः, पूरिता रिक्तामिति विरोधः। आयासेन—क्लेशेन, अध्यासिताम्—अधिरूढाम, अनुभूतक्लेशामित्यर्थः; अध्यासिता शून्यामिति विरोधः। निश्चयेन—निर्णयेन, निश्चला—स्थिरां, स्थिरसङ्कल्पामित्यर्थः। चलिता—च्युताम्; निश्चला चलितामिति विरोधः। व्यसनाना—विपदां, वसतिम्—आश्रयम्। आधीना—मानसीनां व्यथानां,

अवसादानाम्; आस्पदम् आपदाम्; (१६२) अभियोगम् अभाग्यानाम्; उद्वेगम् उद्वेगानाम्; कारणं करुणायाः; पारं परायत्ततायाः योषितम्। चिन्तितवानस्मि च चित्रम्!! ईदृशीमपि आक्रान्तिम् उपतापाः स्पृशन्ति ॥ इति।

सा तु समीपगते मयि तदवस्थाऽपि (१६३) सबहुमानम् आनतमौलिः प्रणतवती। अहन्तु (१६४) प्रबलकरुणा-प्रेर्य्यमाणः ताम् आलपितुकामः पुनः कृतवान् मनसि—"कथमिव (१६५) महानुभावाम् एनाम् आमन्त्रये? 'वत्से!' इति अतिप्रणयः, 'मातः!' इति चाटु, 'भगिनि!' इति (१६६) आत्मसम्भावना, 'देवि!' इति परिजनालापः,

("प्रसाधिर्मानसी व्यथा" इत्यमरः) आधारम्—आधारम्। अनवस्थाना—दुर्दशानामित्यर्थः, अवस्थान—वासस्थानम्। अधृतीनाम्—अधैर्य्याणाम्। अवसादाना—विपन्नतानाम्, अवसन्नतानां वा। आस्पद—स्थानम्।

(१६२) अभियोगम्—आक्रान्तिम्, आक्रमणस्थानमित्यर्थः, दुर्भाग्याक्रान्तामिति यावत्। उद्वेगाना—व्याकुलतानामित्यर्थः, भयाना वा, उद्वेगम्—उद्गमन, गमनस्थानमित्यर्थः, आश्रयस्थानमिति भाव। करुणायाः कारण—हेतु, कृपाविर्भावस्य हेतुभूतामित्यर्थः, नदृष्टने खल एव करुणा जायते इति भाव। परायत्ततायाः,—पराधीनतायाः, पारम्—अन्तम्, अवसानमित्यर्थः, इतोऽप्यधिकपरायत्ततायाः अन्यत्र कुत्राप्यदर्शनात् एकान्तपरावलम्बिनीमिति भाव.। चित्रम्—आश्चर्यम्। उपतापाः,—सन्तापा, मनस्तापा इति यावत्।

(१६३) सबहुमान—सादरम्, आनतमौलिः,—अवनतमस्तका।

(१६४) प्रबलेति।—प्रबलया—महत्या, करुणया—कृपया, प्रेर्य्यमाणः,—नीयमान, अतीव कृपाविवशहृदय इत्यर्थ। आलपितुकामः,—सम्भाषितुकाम.।

(१६५) महानुभावा—मनस्विनीम। आमन्त्रये—सम्भाषे। अतिप्रणयः,—अतिवात्सल्यम्, अतिविस्रब्धता वा, एतादृकसम्भाषणस्य स्नेहयभीभिप्रायाभिव्यञ्जकतया अपरिचितायां तन्न युक्तमिति भाव। चाटु—अयथार्थभि. वाग्भिः केवलं सन्तोषणमित्यर्थ., प्रियोक्ति वा, एतदपि पूर्ववदयुक्तमिति भाव।

(१६६) आत्मसम्भावना—आत्मन. समादरः, भिन्नो. मम तादृशी भगिनी न

'राजपुत्रि !' इति (१६७) अस्फुटम्, 'उपासिके !' इति मनोरथः, 'स्वामिनि !' इति (१६८) भृत्यभावाभ्युपगमः, 'भद्रे !' इति इतरस्त्रीसमुचितम्, 'आयुष्मति ! इति अवस्थायाम् अप्रियं, 'कल्याणिनि !' इति (१६९) दशायां विरुद्धं, 'चन्द्रमुखि !' इति असुनिमतं, 'बाले !' इति (१७०) अगौरवोपेतम्, 'आर्य्ये !' इति जरारोपणं, 'पुण्यवति !' इति फलविपरीतं, (१७१) 'भवति !' इति सर्व्वसाधारणम्; अपि

---

सम्भवति इति आत्मगौरवं स्यादिति भावः। परिजनालापः,—परिजनस्य—भवनपरिवारस्य, निजगृहस्थजनसमूहस्येत्यर्थः, आलापः,—सम्भाषणं, नाह तथेति भावः।

(१६७) अस्फुटम्—अव्यक्तं, तथात्वेनाज्ञातत्वादिति भावः। उपासिके !—शिष्ये ! बौद्धधर्म्मावलम्बिनि ! इत्यर्थो वा। मनोरथः,—अभिलाषः, स्वमनोऽनुकूलवचनमित्यर्थः, तथा हि,—आत्मनः उपासकतया सर्वमेव उपासकं मन्यामहे, यदि हि इयं तथा न स्यात्, तदा तथोक्तिर्विफलैवेत्यभिप्रायः।

(१६८) भृत्यभावाभ्युपगमः,—दासभावस्वीकरणं, स चायुक्तः, स्वेषां लाघवाभिव्यञ्जकत्वादिति भावः। इतरस्त्रीसमुचितं—सामान्यनारीसदृशं, इयन्तु न तथा दृश्यते, तत् कथं तथा सम्बोधनमिति भावः। अवस्थायां—मरणदशायाम्, अप्रियं—न प्रीतिकरं, तादृशशोकदशायां न कोऽपि जीवितं प्रियं मन्यते, अत एव अप्रीतिकरस्य वचनस्य कमपि प्रति प्रयोक्तुमनौचित्यात् इति भावः, उक्तञ्च मनुना,—"सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्। प्रियञ्च नानृतं ब्रूयादेष धर्म्मः सनातनः॥" इति।

(१६९) दशायां—अमङ्गलावस्थायां, विरुद्धं—विपरीतं, तादृशशोकार्त्तायाः कल्याणासम्भवात् मिथ्याभूतस्य च वचनस्य प्रयोक्तुमनौचित्यादिति भावः। असुनिमतं—मुनिजनानभिमतं, तपस्विजनविरुद्धमित्यर्थः, विलासिकामुकप्रयोज्यसम्बोधनमिदम् इति भावः।

(१७०) अगौरवोपेतं—गौरवैः अयुक्तमित्यर्थः, लघुत्वव्यञ्जकमिति यावत्। जरारोपणं—वार्द्धकाध्यासनं, जरतोनामेव तथा सम्बोधनीयत्वादिति भावः। फलविपरीतं—फलेन—तादृशेन दुर्विपाकरूपेण, विपरीतं—विपर्य्यस्तं, पुण्यसत्त्वे न तादृशी दुरवस्था जायते इति भावः।

(१७१) भवति !—मान्ये ! इत्यर्थः। सर्व्वसाधारणं—सर्व्वेषां साधारणं—

च 'काऽसि?' इति अनभिजातं, 'किमर्थं रोदिषि?' इति दुःखकारणस्मरणकारि, 'मा रोदीः' इति शोकहेतुम् अनपनीय न शोभते, 'समाश्वसिहि' इति किम् आश्रित्य? 'स्वागतम्?' इति यातयामं, 'सुखम् आस्यते?' इति मिथ्या।

इत्येवं चिन्तयति एव मयि, तस्मात् (१७२) स्त्रैणात् उत्थाय अन्यतरा योषित् आर्य्यरूपा इव शोकविक्लवा समुपसृत्य, कतिपयपलितशारं शिरो नीत्वा महीतलम्, अतुलहृदयसन्तापसूचकैः अश्रुबिन्दुभिः चरणयुगलं दहन्ती मम अतिकृपणैः अक्षरैश्च हृदयम् अभिहितवती,—'भगवन्!

सामान्य, तच्चात्र अयुक्तम्, असामान्यमूर्त्तित्वात् तस्या इति भावः। अनभिजातम्—अकुलोचित, "कीदृश कुलमलङ्कृताऽसि"? एव प्रश्नस्य सत्कुलसम्भूतायाम् अनादराभिव्यञ्जकत्वादिति भाव। दुःखेति।—दुःखस्य—मन पीडायाः इत्यर्थः, यत् कारण—हेतुः, तस्य स्मरण—पूर्वानुभूतस्य मनसि आविर्भवणं, तं कारयतीति तथोक्तं, रोदनकारणे आख्यायमाने पूर्ववृत्तस्य पुनरुच्चारणादिति भावः, पूर्ववृत्तान्तप्रबोधकतया व्यथाकरमिति तात्पर्यम्। अनपनीय—अनपनोद्य, दूरमकृत्वेति यावत्। समाश्वसिहि—आश्वस्ता भव, धैर्य्यमवलम्बस्व इत्यर्थः। किम् आश्रित्य?—समाश्वासनाहेतु कमाश्रित्य ब्रवीमीति भाव। यातयामम्—असामयिक, जीर्णप्रायम् इति यावत्, पुरातनसम्बोधन वा इति भाव., यद्वा,—यात,—व्यतीत., यामः,—प्रहररूपः काल यस्य तथाविधम्, तथा हि—"स्वागतम्" इति प्रश्नस्य प्रथमदर्शनक्षणरूपकालमात्रकृततया इदानी प्रहरादप्यधिके व्यतीतकाले तदभिधानस्य नितरामन्याय्यत्वादित्यभिप्रायः। आस्यते—उपविश्यते, स्थीयते इत्यर्थः। मिथ्या—अलीक, प्रत्यक्षमेव असुखव्यञ्जककार्य्यस्य दर्शनात् इति भावः।

(१७२) स्त्रैणात्—स्त्रीसमूहात्। आर्य्यरूपा इव—कुलीनस्वभावा इव दृश्यमाना इत्यर्थं, शोकविक्लवा—मन्युविधुरा। कतिपयेति।—कतिपयानि—अल्पसङ्ख्यकानि, पलितानि—जरसा शुक्लकेशवृन्दानि, ("पलितं जरसा शौक्ल्य केशादौ" इत्यमरः) तैः शार—चित्र, शबलमित्यर्थः। अतुलहृदयसन्तापसूचकैः,—निरुपमचित्ततापव्यञ्जकैः। अतिकृपणैः,—अतिदीनैरित्यर्थः, अतिकरुणैरिति यावत्, अक्षरैः हृदय दहन्ती।

(१७३) सर्व्वसत्त्वानुकम्पिनी प्रायः प्रव्रज्या। प्रतिपन्नदुःखक्षपण-दीक्षादक्षाश्च भवन्ति सौगताः। (१७४) करुणाकुलगृहञ्च भगवतः शाक्यमुनेः शासनम्। (१७५) सकलजनोपकार-सज्जा सज्जनता जैनी। परलोकसाधनञ्च धर्म्मो मुनीनाम्। प्राणरक्षणाच्च न परं (१७६) पुण्यजातं जगति गीयते जनेन। (१७७) अनुकम्पाभूमयः प्रकृत्या एव युवतयः, किं पुन-र्विपदभिभूताः? साधुजनश्च सिद्धचैत्रम् आर्त्तवचसाम्। यत इयं नः (१७८) स्वामिनी मरणेन पितुः, अभावेन भर्त्तुः, प्रवासेन च भ्रातुः, भ्रंशेन च शेषस्य बान्धववर्गस्य, (१७९) अतिमृदु-हृदयतया अनपत्यतया च निरवलम्बना परिभवेण च नीचा-

---

(१७३) सर्वसत्त्वानुकम्पिनी—सर्वप्राणिकृपाकारिणी, प्रव्रज्या—सन्न्यासधर्म्मः। सौगताः,—बौद्धाः, प्रतिपन्नेति।—प्रतिपन्नानाम्—आपन्नानाम्, आश्रितानामित्यर्थः, दुःखस्य—क्लेशस्य, क्षपण—निवारणमेव, दीक्षा—व्रत, तत्र दक्षाः,—पटवः।

(१७४) शाक्यमुनेः,—बुद्धदेवस्य, शासनम्—आदेशः, शास्त्रं वा, करुणेति।—करुणायाः—कृपायाः, कुलगृह—जन्ममन्दिर, कारुण्यस्य आद्युत्पत्तिस्थानमित्यर्थः, तेन हि भगवता सदयहृदयेन सर्वजीवेषु कारुण्यस्यैव प्राधान्येन दर्शितत्वादित्यभिप्रायः; यद्वा,—करुणाकुलस्य—प्रभूतकृपायाः, गृहम्—आवासः।

(१७५) जैनी—जिनसम्बन्धीया, बौद्धाचारसम्मता इत्यर्थः, सज्जनता—साधुता, सकलेति।—सकलानां—सर्वेषां, जनानां—लोकानाम्,उपकारे—हितविधाने, सज्जा—प्रवृत्ता, उद्युक्ता इति यावत्। धर्मः,—विध्यनुमोदितः आचारः, परलोकसाधनम्—उत्कृष्टलोकप्रापकः।

(१७६) पुण्यजात—पुण्यनिचयः।

(१७७) प्रकृत्या—स्वभावतः, अनुकम्पाभूमयः,—कृपापात्राणि। विपदभि-भूताः,—विपन्नाः स्त्रियः। आर्त्तवचसाम्—आर्त्तानां—विपन्नानां, वचसां—वाक्यानां, सिद्धचैत्र—सिद्धस्थान, निश्चितफललाभस्थानमित्यर्थः, प्रसिद्धाश्रय इति यावत्।

(१७८) स्वामिनी—अधीश्वरी। प्रवासेन—विदेशावस्थाने। शेषस्य—अवशिष्टस्य, बान्धववर्गस्य—स्वजनसमूहस्य, भ्रंशेन—वियोगेन, मरणेन पलायनेन वा इत्यर्थः।

(१७९) अतिमृदुहृदयतया—अतिकोमलान्तःकरणतया, अनपत्यतया—

चारातिक्रतेन, प्रकृतिमनस्विनी, अमुना च (१८०) महाऽटवी-पर्य्यटनक्लेशेन कदर्थितसौकुमार्य्या, दग्धदैवदत्तैः एवंविधैः बहुभिः उपर्य्युपरि व्यसनैः विक्लवीकृतहृदया, दारुणं दुःख-मपारयन्ती सोढुं, निवारयन्तम् (१८१) अनतिक्रान्तपूर्व्वं स्वप्नेऽपि अवगणय्य गुरुजनम्, (१८२) अनुनयन्तीः अखण्डित-प्रणया नर्म्मसु अपि समवधीर्य्य प्रियसखीः, (१८३) विज्ञा-पयन्तम अशरणम् अश्रुव्याकुलनयनम् अपरिभूतपूर्व्वं मनसाऽपि परिभूय भृत्यवर्गम् अग्निं प्रविशति, परित्रायताम्। आर्य्योऽपि तावत् (१८४) असह्यशोकापनयनोपायोपदेशनिपुणां

---

अपुत्त्रकतया, नीचारातिक्रतेन—पामरशत्रुप्रयुक्तेन, हीनान्तःकरणवैरिविहितेनेति यावत्, परिभवेण—तिरस्कारेण, उत्पीडनेनेत्यर्थः, निरवलम्बना—निराश्रया। प्रकृतिमनस्विनी—स्वभावतः एव प्रशस्तान्तःकरणा, मानिनी इत्यनेनानुषङ्गः।

(१८०) महाऽटवीपर्य्यटनक्लेशेन—दीर्घारण्यभ्रमणायासेन, कदर्थितसौकुमार्य्या—क्लेशितमार्दवा। दग्धदैवदत्तैः,—हतविधिविहितैः, व्यसनैः,—विपत्पातैः, विक्लवी-कृतहृदया—व्याकुलीकृतान्तःकरणा। दारुणं—घोरम्। अपारयन्ती—अशक्नुवती।

(१८१) अनतिक्रान्तपूर्व्वम्—अनुल्लङ्घितपूर्व्वम्। अवगणय्य—अगणयित्वा, गुरुजनानां वाक्यमुल्लङ्घ्येत्यर्थः।

(१८२) अनुनयन्तीः,—प्रबोधयन्तीः, मरणाध्यवसायात् निवर्त्तयितुमनुनयं कुर्व्वतीरित्यर्थः, नर्म्मसु अपि—परिहासेषु अपि, अखण्डितप्रणयाः,—अविच्छिन्नसद्भावाः, अविचलितस्नेहा इति यावत्। समवधीर्य्य—अवज्ञाय, सखीनामपि सानुनयवचन-मनाकर्ण्येत्यर्थः।

(१८३) विज्ञापयन्तं—मा प्रविशाग्निं मा प्रविशाग्निम् इत्येवं बहुशः निवेदयन्तम्, अशरणम्—अनाथं, मनसाऽपि अपरिभूतपूर्व्वं—चेतसाऽपि अनादृतपूर्व्वम्। परिभूय—अनादृत्य।

(१८४) असह्येति।—असह्यस्य—सोढुमशक्यस्य, शोकस्य—मन्योः, अप-नयनं—निरसनं, तस्य उपायः,—साधनं, तस्य उपदेशे—शिक्षायां, निपुणा—दक्षा

व्यापारयतु वाणीम् अस्याम्" इति च अतिकृपणं व्याहरन्तीम् अहम् उत्थाप्य उद्विग्नतरः शनैः अभिहितवान्.—'आर्य्ये! यथा कथयसि, तथा। असम्भिराम् (१८५) अगोचरोऽयम् अस्याः पुण्याशयायाः शोकः। शक्यते चेत् मुहूर्त्तमात्रमपि (१८६) त्रातुम्, उपरिष्टात् न व्यर्था इयम् अभ्यर्थना भविष्यति। मम हि गुरुः' अपर इव भगवान् (१८७) सुगतः समीपगत एव। कथिते मया अस्मिन् उदन्ते नियतम् आगमिष्यति परमदयालुः। दुःखान्धकारपटलभिदुरैश्च सौगतैः सुभाषितैः (१८८) स्वकैश्च दर्शितनिदर्शनैः नानागमगुरुभिः गिरां कौशलैः कुशलशीलाम् एनां प्रबोधपदवीम् आरोपयिष्यति' इति। तच्च श्रुत्वा 'त्वरताम् आर्य्यः' इत्यभिदधाना सा

---

ताम्। व्यापारयतु—प्रयुङ्क्ताम्। अस्याम्—अस्माकं स्वामिन्याम्। अतिकृपणम्—अतिदीनम्, अतिकरुणमित्यर्थ, व्याहरन्तीं—भाषमाणाम्। उद्विग्नतरः,—अतिव्याकुलः सन्। यथा कथयसि—सर्व्वसत्त्वानुकम्पिनी इत्यादि यत् वदसि, तथा—तत् तथैव, सत्यमेवेत्यर्थः।

(१८५) अगोचरः,—असाक्षात्करणीयः, अविषय इत्यर्थः, अनपनेय इति भावः। पुण्याशयायाः,—पवित्रस्वभावायाः।

(१८६) त्रातुम्—अग्निप्रवेशव्यवसायान्निवारयितुमित्यर्थः। उपरिष्टात्—परतः, मुहूर्त्तानन्तरमित्यर्थः। अभ्यर्थना—याञ्चा, यदि मुहूर्त्तकाल प्रबोधवाक्येनेयं रक्षितुं शक्यते, तदा अस्मद्गुरुन् आनानीय तस्य सदुपदेशैनास्याः शोकं प्रशमय्य युष्मत्-प्रार्थना सफलयिष्यामीति निष्कर्षः।

(१८७) सुगतः,—बुद्धदेवः। उदन्ते—वृत्तान्ते, ("वार्त्ता प्रवृत्तिर्वृत्तान्तः उदन्तः स्यात्" इत्यमरः)। नियतं—निश्चितम्। दुःखेति।—दुःखानि—मनःपीडा एव, अन्धकाराः,—तिमिराणि, तेषां पटलं—समूहः, तस्य भिदुराणि—नाशकानि तैः, सौगतैः,—सुगतसम्बन्धिभिः, सुभाषितैः,—सद्वाक्यैः, उपदेशवचनैरिति यावत्।

(१८८) स्वकैः,—निजैः, दर्शितनिदर्शनैः,—उद्घाटितदृष्टान्तैः, नानेति।—नाना—विविधैः, आगमैः,—शास्त्रैः हेतुभिः, शास्त्रयुक्तिमाश्रित्य कथनादिति भावः, गुरूणि—महान्ति, गौरवयुक्तानीत्यर्थः तैः, गिरा—वाचा, कौशलैः,—नैपुण्यैः,

पुनरपि पादयोः प्रतितवती। सोऽहमुपगत्य त्वरमाणः (१८९) व्यतिकरम् इमम् अधृतिकरम् अशरणकृपणबहुयुवतिमरणम् अतिकरुणम् अत्रभवते गुरवे निवेदितवान्” इति।

अथ (१९०) भूभृत् भैक्षवं समवधार्य्य तद्भाषितम् अश्रुमिश्रितम्, अश्रुतेऽपि स्वसुः नाम्नि निम्नीकृतमना मन्युना, सर्व्वाकारसंवादिन्या दशया एव दूरीकृतसन्देहः, दग्ध इव सोदर्य्यावस्थाश्रवणेन श्रवणयोः, (१९१) श्रमणाचार्य्यम् उवाच,—“आर्य्य। (१९२) नियतं सैवेयम् अनार्य्यस्य अस्य जनस्य अतिकठिनहृदयस्य अतिनृशंसस्य मन्दभाग्यस्य भगिनी भागधेयैः एताम् अवस्थां नीता निष्कारणवैरिभिः वराकी,

वाग्मितागुणैरित्यर्थः, कुशलशीला—सुचरितामित्यर्थः, प्रवीणपदवी—प्रकृष्टज्ञानमार्गं, दुःखशान्तिकरमुपायमित्यर्थः।

(१८९) अधृतिकरम्—अधैर्य्यजननम्, अशरणेति।—अशरणाना—निराश्रयाणां कृपणानां—दुःखितानां, करुणार्हाणामित्यर्थः, बह्वीनां—अनेकासां, युवतीनां—तरुणीनां, मरणं—मृत्युः यस्मिन् तम्, अतिकरुणम्—अतिशोकावहं, व्यतिकरः—व्यसनं, विपदमित्यर्थः, (“अथ व्यतिकरः पुंसि व्यसन-व्यतिषङ्गयोः,” इति मेदिनी)। अत्रभवते—पूज्याय।

(१९०) भूभृत्—भूपालः। भैक्षवं—भिक्षूक्तम्। समवधार्य्य—सावहितं श्रुत्वेत्यर्थः। स्वसुः,—भगिन्याः। मन्युना—शोकेन, (“मन्युशोकौ तु शुक् स्त्रियाम्” इत्यमरः) निम्नीकृतमनाः,—प्रवणीकृतचित्तः, प्रह्वीकृतचेता इत्यर्थः, आक्रान्तहृदय इति यावत्। सर्व्वाकारसंवादिन्या—सर्वाकारेण—सर्वप्रकारेण, संवादिन्या—संवदति —इयमेव राज्यश्रीरिति व्यनक्तीति तथोक्तया, यद्वा,—सर्वाकारं—सर्वमेवावयवं, संवदति—अनुकरोति या तया, निखिलशारीरिकसंस्थानकथनाभिज्ञातयेत्यर्थः। दशया—अवस्थया। सोदर्य्येति।—सोदर्य्यायाः,—भगिन्याः, अवस्थाश्रवणेन—दुर्दशाऽऽकर्णनेन, श्रवणयोः,—कर्णयोः।

(१९१) श्रमणाचार्य्यं—भिक्षुश्रेष्ठं, बौद्धाचार्य्यं दिवाकरमित्रमित्यर्थः।

(१९२) नियतं—निश्चितम्, अनार्य्यस्य—असाधोः। अतिनृशंसस्य—अतिनिर्दयस्य। भागधेयैः,—दुर्दैवैरित्यर्थः। निष्कारणवैरिभिः,—अहेतुकशत्रुभिः,

विदीर्य्यमाणं मे हृदयम् एवं निवेदयति" इत्युक्ता तमपि (१९३) श्रमणम् अभ्यधात्,—"आर्य्य! उत्तिष्ठ; दर्शय क्व असौ? यतः (१९४) सुप्रभूतप्राणपरित्राणपुण्योपार्ज्जनाय यामः, यदि कथञ्चित् जीवन्तीं सम्भावयामः" इति भाषमाण एव उत्तस्थौ।

अथ समग्रशिष्यवर्गानुगतेन आचार्य्येण तुरगेभ्यश्च अवतीर्य्य समस्तेन सामन्तलोकेन (१९५) पश्चादाकृष्यमाणाश्वीयेन अनुगम्यमानः, (१९६) पुरस्ताच्च तेन शाक्यपुत्नीयेण प्रदिश्यमानवर्त्मा, पद्भ्यामेव तं प्रदेशं प्रविरलैः पदैः पिबन्निव

---

शत्रुताया हेतोरसद्भावेऽपि शत्रुवदाचरद्भिरित्यर्थः। वराकी—तपस्विनी, निरपराधा इत्यर्थः।

(१९३) श्रमणं—भिक्षुम्।

(१९४) सुप्रभूतेति।—सुप्रभूतानाम्—अतिबहुलानां, प्राणानां—जीवनानां, परित्राणं—परिरक्षणं, तदेव पुण्यं—सुकृतं, तस्य उपार्ज्जनाय—लाभाय, एकस्या एव तस्या मरणे बहूनां हि तत्परिजनानां प्राणविसर्ज्जनकृतनिश्चयानां निधनमनुमाय सुप्रभूतत्व प्राणविशेषणतयोपन्यस्तम्। सम्भावयामः,—सम्मानयामः, आश्वासादिदानेन संवर्द्धयाम इत्यर्थः।

(१९५) पश्चादिति।—पश्चात्—पृष्ठतः, आकृष्यमाणम्—आक्षिप्यमाणम्, आनीयमानमित्यर्थः, अश्वीयम्—अश्वसमूहः येन तथोक्तेन, ("द्वन्द्वे त्वश्वीयमाश्ववत्" इत्यमरः)।

(१९६) पुरस्तात्—अग्रतः, शाक्यपुत्नीयेण—दिवाकरमित्रशिष्येण, प्रागुक्तभिक्षुणा इति भावः, प्रदिश्यमानवर्त्मा—दृश्यमानमार्गः। प्रविरलैः,—स्वल्पैः, क्षतिद्रुतपदविक्षेपात् ;लघुभिरिति यावत्, अल्पीयस्तया अनुभूयमानैरिति भावः, पदैः,—पदविक्षेपैरित्यर्थः, ["प्रविरलैः" इत्यत्र "अविरलैः" इति पाठे,—अविरलैः,—अनल्पैः, बहुभिरित्यर्थः, शनैः शनैरिति यावत्; पाठोऽयं न मनोरमः, त्वराविषगमनस्य समयानुपयोगित्वात्। केचित्तु "अविरलैः दीर्घैः" इति व्याख्यानयन्ति द्रुतगमनाभिप्रायेण] पिबन्निव—ग्रसन्निव, लङ्घयन्निव इत्यर्थः, अतिद्रुतगमनेन समीपवर्त्तिप्रदेशस्य त्वरमेव पश्चात्करणात् अदृश्यमानत्वाच्च पिबन्निवेत्युत्प्रेक्षा

प्रावर्त्तत। क्रमेण च समुपगतः शुश्राव लतावनान्तरितस्य मुमूर्षोर्महतः स्त्रैणस्य तत्कालोचितान् अनेकप्रकारान् आलापान्,—"भगवन्! धर्म्म! (१९७) धाव शीघ्रम्। क्वासि? कुलदेवते!। देवि! धरणि! धीरयसि न दुःखितां दुहितरम्?। क्व नु खलु (१९८) प्रोषिता पुष्पभूतिकुटुम्बिनी लक्ष्मीः?। (१९९) नाथ! मुखरवंश्य! अनाथां विविधाऽऽधिविधुरां बधूं विधवां विबोधयसि किमिति न इमाम्?। भगवन्! सुगत! भक्तजने (२००) संज्वरिणि सुप्तोऽसि?। राजधर्म्म! (२०१) पुष्पभूतिभवनपक्षपातिन्! उदासीनीभूतोऽसि कथम्?। त्वयि अपि

वीज्ञ्या। प्रावर्त्तत—प्रातिष्ठत। मुमूर्षोः,—मर्त्तुमिच्छोः, स्त्रैणस्य—स्त्रीसमूहस्य, तत्कालोचितान्—मृत्युसमये प्रयुक्तान्, खेदसूचकानित्यर्थः।

(१९७) धाव—द्रुतम् आगच्छ, त्वामाश्रिता इयमकाले म्रियते, अत शीघ्रमागत्य एना रक्ष इति भाव'। धरणि!—सर्व्वधारणकारिणि। पृथ्वि। न धीरयसि?—न धीरा करोषि? न सान्त्वयसि? इत्यर्थः, स्थिराजा. ते कान्या धीरा एव भवितुमर्हति, अत एता धीरा कुरु इति भाव.।

(१९८) पुष्पभूतिकुटुम्बिनी—पुष्पभूते',—तदाख्यस्य हर्षपूर्वजस्य, कुटुम्बिनी—गृहिणी, लक्ष्म्या राजभोग्यत्वादिति भाव., लक्ष्मी,—पुष्पभूते. राज्ञः श्रीरित्यर्थः, प्रोषिता—गता।

(१९९) नाथ।—प्रभो। मुखरवंश्य।—मुखरकुलप्रसूत? ग्रहवर्म्मन्? इति यावत्, ग्रहवर्म्मण पूर्वजराजन्यवर्गे वा, [मुख प्राधान्यमस्यास्तीत्यर्थे "रप्रकरणे—" इत्यादि वार्त्तिकात् अस्त्यर्थे रप्रत्यय.] अनाथाम्—अशरणा, विविधेति।—विविधाभि,—नानाप्रकाराभिः. आधिभि,—मनस्तापै, विधुरा—आकुला ता, विधवा—पतिहीना, वधूं—भार्य्या, स्नुषा वा, ("वधू स्त्री सारिवौषधौ। स्नुषाशटीनवोढासु भार्य्यापृक्काऽङ्गनासु च॥" इति मेदिनी) विबोधयसि?—प्रबोधयसि? सान्त्वयसीत्यर्थ।

(२००) संज्वरिणि—सन्तापवति, ("सन्ताप. सज्वर समौ" इत्यमर.)। सुप्तोऽसि?—निद्रितोऽसि किम्? भक्तजनमनस्ताप न पश्यसि किमित्यर्थ।

(२०१) पुष्पभूतिभवनपक्षपातिन्—पुष्पभूतिगृहानुरागिन्!; पुष्पभूति-

विपद्बान्धव! विन्ध्य! वन्ध्योऽयम् अञ्जलिबन्धः?। मातः! महाऽटवि! रटन्तीं न शृणोषि इमाम् आपत्पतिताम्?। (२०२) पतङ्ग! प्रसीद, पाहि पतिव्रताम् अशरणाम्। प्रयत्नरक्षित! कृतघ्न! चारित्रचण्डाल! न रक्षसि राजपुत्रीम्?। (२०३) किम् अवधृतं लक्षणैः?। हा देवि। दुहितृस्नेह यि। यशोवति! मुषिताऽसि दग्धदैवदस्युना। देव! दुहितरि दह्यमानायां न (२०४) आपतसि? प्रतापशील! शिथिलीभूतम् अपत्यप्रेम?। महाराज! राज्यवर्द्धन! न धावसि? (२०५) मन्दीभूता भगिनीप्रीतिः? अहो! निष्ठुरः प्रेतभावः!!। व्यपेहि पाप! पावक! स्त्रीघातनिर्घृण! ज्वलन्

---

वशङ्गानाम् एकान्ततया राजधर्मप्रतिपालनात् राजधर्मस्य तथात्व बोध्यम। उदासीनीभूत,—निरपेक्ष, आर्त्तत्राणरूपस्य स्वकर्त्तव्यस्याकरणादिति भाव। वन्ध्य,—विफल', यत अञ्जलि बद्धा प्रार्थ्यमानोऽपि विपन्नामस्मान् त्व न रक्षसीति भाव। महाऽटवि।—महारण्यानि। रटन्ती—विलपन्ती, विलाप शृण्वानाऽपि न प्रतिकरोषि? इति भाव।

(२०२) पतङ्ग।—सूर्य। पक्षिन् वा, ("पतङ्गौ पक्षिसूर्य्यौ च" इत्यमर)। प्रयत्नरक्षित।—प्रयत्नेन—प्रकृष्टेन यत्नेन, रक्षित—पालित।, कृतघ्न।—कृतोपकारापघातिन्। प्रयत्नरक्षितत्वेऽपि इदानी विपन्नाया रक्षिकाया राजपुत्र्या रक्षाऽकरणात् कृतघ्नत्व चारित्रस्येति भाव, चारित्रचण्डाल।—चारित्रेषु—सुचरित्रेषु, चण्डाल—हीन। इत्यर्थ, चण्डालवत् नृशंसकार्म्मकरणादिति भाव।

(२०३) लक्षणै,—शुभचिह्नै, किम् अवधृतम्?—किं गृहीतम्? किमर्थं मत्पुत्त्रामित्यर्थ, निरर्थक स्थितमिति भाव.। दग्धदैवदस्युना—हतविधिरूपतस्करेण, मुषिताऽसि—हृतसर्वस्वाऽसि।

(२०४) आपतसि—आगच्छसि। शिथिलीभूत—ह्रासं गतम्।

(२०५) मन्दीभूता—अल्पीभूता। प्रेतभाव,—मृतत्व, विगत चेतनत्वरूपस्य प्रेतत्वस्य प्राक्तनसम्बन्धेषु निरपेक्षतया ममत्वबोधराहित्यात् भगिनीप्रीति अपगता, तेन हि प्राग्भूतसम्बन्धविस्मरणात् तस्य निष्ठुरत्वममिहितमिति भाव.। व्यपेहि—अपगच्छ, दूरमपसरेत्यर्थ.। स्त्रीघातनिर्घृण।—नारीहननात् निष्करुण!

किं लज्जसे ?। भ्रातर्वात! दासी तवास्मि, (२०६) संवादय द्रुतं देवीदाहं देवाय दुःखितजनार्त्तिहराय हर्षाय। (२०७) नितान्तनिःशूक। शोकश्वपाक! सकामोऽसि ?। दुःखदायिन्! वियोगराक्षस! तुष्टोऽसि ?। विजने वने कमाक्रन्दामि ? कस्मै कथयामि ? कमुपयामि शरणम् ? कां दिशं (२०८) प्रतिपद्ये ? करोमि किम् अभागधेया ?। (२०९) गान्धारि! गृहीतोऽयं लतापाशः ?। पिशाचि! मोचनिके! मुञ्च (२१०) शाखाग्रहणकलहम्। कलहंसि। हंसि किमतःपरम् उत्तमाङ्गम् ?। मङ्खिके! (२११) मुक्तगलं किमद्यापि रुद्यते ?। सुन्दरि! दूरीभवति सखीसार्थः।

(२०६) दुःखितेति।—दुःखितजनानां—क्लिष्टलोकानाम्, आर्त्तिहराय—जनपीडाप्रशमकाय, हर्षाय—देवाय हर्षवर्द्धनाय, [ "क्रियया यमभिप्रेति—" इत्यादि वार्त्तिकात् चतुर्थी ] देवीदाहं—देव्याः,—राज्यश्रियाः, दाहः,—अग्निप्रवेशः, तं, संवादय—ज्ञापय।

(२०७) नितान्तनिःशूक।—नितान्तम्—एकान्तं, निः,—नास्ति, शूकः,—दया यस्य तत्सम्बुद्धौ, ( "शूकोऽस्त्री शुङ्ग-दययोः" इति मेदिनी ) अतिनिर्दय। इत्यर्थः, शोकश्वपाक।—मन्युचाण्डाल। सकामोऽसि—पूर्णमनोरथोऽसि, अमूं स्वायत्तीकृत्येति भाव। तुष्टोऽसि ?—प्रीतोऽसि ? स्वजनैरस्मान् वियुज्य इति भावः। आक्रन्दामि —आह्वयामि, ( "आक्रन्द क्रन्दने ह्वाने मित्रदारुणयुद्धयो" इति मेदिनी )।

(२०८) प्रतिपद्ये—गच्छामि। अभागधेया—अभाग्या, दुर्भगा इत्यर्थः।

(२०९) गान्धारि! मोचनिके। इत्यादीनि समभिव्याहृतदासीनां सम्बोधनानि। लतापाश,—व्रततिरज्जु, गृहीतः,—धृतः, उद्बन्धनार्थमिति भाव, लयेति शेषः।

(२१०) शाखाग्रहणेति।—शाखायाः,—विटपस्य, ग्रहणं—धारणम्, उद्बन्धनार्थमिति भाव, तत्र कलहः,—विवादः तम्, अहमग्रे एतस्यां शाखायामात्मानमुद्बध्नामीत्येवं रूपम् इति भावः। उत्तमाङ्गं—शिरः, हंसि—ताडयसि, सत्वरमेव सर्व्वा मरिष्यन्ति, तेन हि शिरोहननेनालमिति भावः।

(२११) मुक्तगलं—मुक्तकण्ठम्। सखीसार्थः,—वयस्यावर्गः, दूरीभवति—दूरं गच्छतीत्यर्थः, म्रियते इति भावः।

(२१२) स्थास्यसि कथमिव अशिवे शवशिबिरे शार्वरिके!?। (२१३) सुतनु! तनूनपाति पतिष्यसि त्वमपि?। मृणाल-कोमले! मालावति! म्लानाऽसि?। मातर्मातङ्गिके! (२१४) अङ्गीकृतः त्वयाऽपि मृत्युः?। वल्के! वल्किके! वत्स्यसि कथम् अनभिप्रेते प्रेतनगरे?। नागरिके! (२१५) गरिमाणम् आगताऽसि अनया स्वामिभक्त्या। विराजिके! (२१६) विराजिताऽसि राजपुत्रीविपदि जीवितव्ययव्यवसायेन। (२१७) भृगुपतनाभ्युद्यमभागाभिज्ञे! भृङ्गारधारिणि! धन्याऽसि। केतकि! कुतः पुनः ईदृशी स्वप्नेऽपि (२१८) सुस्वामिनी?। मेनके! जन्मनि जन्मनि देवीदास्यमेव ददातु देवो देहं दहन् दहनः॥

---

(२१२) अशिवे—अमङ्गले, शवशिबिरे—श्मशाने इति भावः, स्थास्यसि—स्थिति करिष्यसि।

(२१३) सुतनु।—शुभाङ्गि। तनूनपाति—वह्नौ, ("अग्निर्वैश्वानरो वह्निः…॥ …जातवेदास्तनूनपात्॥" इत्यमरः)। म्लानाऽसि—विवर्णाऽसि? शोकेनेति भावः।

(२१४) अङ्गीकृतः,—स्वीकृतः। अनभिप्रेते—अनीप्सिते, प्रेतनगरे—श्मशान-पुरे इत्यर्थः, वत्स्यसि—आसिष्यसे, स्थास्यसीत्यर्थः।

(२१५) गरिमाणं—गौरवम्, आगता—प्राप्ता।

(२१६) राजपुत्रीविपदि—राजपुत्र्याः,—राज्यश्रियाः इति यावत्, विपदि—व्यसने, जीवितव्ययव्यवसायेन—प्राणत्यागचेष्टितेन, विराजिता—शोभिता, प्रशस्तितेत्यर्थः।

(२१७) भृग्विति।—भृगोः,—प्रपातात्, पर्वतशिखरभागात् इत्यर्थः, ("प्रपातस्तु तटो भृगुः" इत्यमरः) पतनं—पातः, तत्र यः अभ्युद्यमः,—अभियोगः, आग्रह इत्यर्थः, तस्य भागः,—भजनं, ग्रहणमिति यावत्, स्वीकरणमिति भावः, तदभिज्ञा—तद्विषयज्ञानवती, कदा कस्यामवस्थायां भृगुपतनं स्वीकरणीयमित्यादिषु विज्ञा इत्यर्थः, तत्सम्बुद्धौ, भृङ्गारधारिणि! जलपात्रविशेषवाहिनि। धन्याऽसि—प्रशस्याऽसि, भृगुपतनाग्रहादिति भावः।

(२१८) सुस्वामिनी—अनुरूपा कर्त्री। देवीदास्यं—देव्याः,—राज्यश्रियाः, दास्यं—चैङ्क्ष्यम्। दहन्—भस्मीकुर्वन्। दहनः,—अग्निः।

विजये! (२१९) वीजय कृशानुम्। सानुमति! (२२०) नमति इन्दीवरिका दिवं गन्तुकामा। कामदासि। देहि दहन-प्रदक्षिणावकाशम्। विरचिके! विरचय वह्निम्। (२२१) विकिर किरातिके! कुसुमप्रकरम्। कुररिके! कुरु (२२२) कुरुवक-कोरकाऽऽचितां चिताम्। चामरं चामरग्राहिणि! गृहाण पुनरपि कण्ठे। (२२३) मर्षयितव्यानि नर्मदे! नर्म-निर्मितानि निर्मर्य्यादहसितानि। भद्रे! सुभद्रे! भद्रमस्तु ते परलोकगमनम्। (२२४) अग्रामीणगुणानुरागिणि! ग्रामेयिके! गच्छ सुगतिम्। (२२५) वसन्तिके! अन्तरं प्रयच्छ, आपृच्छते छत्रधारी। देवि। देहि दृष्टिम्,

---

(२१९) कृशानुम्—अग्निं, वीजय—व्यजनवायुना उद्दीपय इत्यर्थः।

(२२०) नमति—प्रणमति। दिवं—स्वर्गम्। कामदासि।—कामदासि! दहनप्रदक्षिणावकाशम्—अग्निप्रदक्षिणीकरणावसरम्, अग्नौ आत्मविसर्जनात् प्राक् अग्निप्रदक्षिणीकरणे मा विघ्नमुत्पादय इति भाव। [ "विरचिके" इत्यत्र "विचरिके" इति पाठान्तरम् ]। विरचय—प्रज्वालयेति भाव।

(२२१) कुसुमप्रकरं—पुष्पनिचयं, विकिर—विक्षिप।

(२२२) चिता—मृतदाहार्थका चुल्लि, कुरुवकेति।—कुरुवकाणां—नीलझिण्टीनां, कोरकैः—कलिकाभिः, आचिताम्—आकीर्णम्।

(२२३) नर्मनिर्मितानि—परिहासकृतानि, निर्मर्य्यादहसितानि—अवज्ञा-सूचकानि हास्यानि, मर्षयितव्यानि—सोढव्यानि, क्षन्तव्यानीत्यर्थः, मया यत् परिहासार्थं त्वामुद्दिश्य प्राक् उच्चैः हसितं, भवत्या मर्य्यादाहानिकरं तत् सोढव्यमिति भावः। भद्रं—मङ्गलं, मङ्गलकरमित्यर्थः।

(२२४) अग्रामीणेति।—अग्रामीणाः,—नागरिकाः, महान्त इति यावत्, [ ग्रामे भवाः इत्यर्थे ग्रामाद्यखञौ" (४।२।९४ पा०) इति खञ्, पश्चात् नञ्समासः ] तेषां ये गुणाः,—स्वाम्यनुरागादयः, तेषु अनुरागः,—आसक्तिः विद्यतेऽस्याः तत्सम्बुद्धौ, ग्रामेयिके।—ग्रामवासिनि। सुगतिं—शोभनां गतिं वाञ्छनीयस्वर्गलोकमित्यर्थः।

(२२५) अन्तरम्—अवकाशं, प्रयच्छ—देहि। आपृच्छते—सम्भाषते, [ "आङि नुप्रच्छ्योः" इति वार्त्तिकात् आङ्-पूर्वकात् पृच्छतेरात्मनेपदम् ]।

(२२६) इष्टा तव जहाति जीवितं विजयसेना। सेयं सुक्तिका मुक्तकण्ठम् आरटति निकटे नाटकसूत्रधारी। पादयोः पतति ते ताम्बूलवाहिनी बहुमता राजपुत्रि! पत्रलता। कलिङ्गसेने! अयं (२२७) पश्चिमः परिष्वङ्गः, पीड़य निर्भरम् उरसा माम्। (२२८) असवः प्रवसन्ति वसन्तसेने!। मञ्जुलिके! (२२९) मार्ज्जयसि कतिकृत्वः सुदुःसहदुःखसहस्रास्रदिग्धं चक्षुः इदम्? रोदिषि कियत् आश्लिष्य च माम्?। (२३०) निर्म्माणम् ईदृशं प्रायशो यशोधने!। (२३१) धीरयसि अद्यापि किं मां माधविके!? का इयम् अवस्था संस्थापनानाम्?। गतः कालः कालिन्दि! सखीजनानुनयाञ्जलीनाम्। उन्मत्तिके!

---

(२२६) इष्टा—प्रिया। जहाति—त्यजति। नाटकसूत्रधारी—नाटकस्य—अभिनेयकाव्यस्य, सूत्रधारी—नटी इत्यर्थः, [ सूत्रं नाटकीयसाधनं धारयति या सा इत्यर्थे धारयतेः कर्त्तरि अणि रूपम् ] मुक्तकण्ठम्—उच्चैरित्यर्थः, आरटति—शब्दायते, आक्रन्दतीत्यर्थः। बहुमता—आदृता।

(२२७) पश्चिमः,—चरमः, [ पश्चाद्भव इत्यर्थे "अग्रादिपश्चाड्डिमच्" इति वार्त्तिकात् डिमच् ] परिष्वङ्गः,—आलिङ्गनम्। निर्भरं—निर्दयं, गाढ़मित्यर्थः।

(२२८) असवः,—प्राणाः, [ "पुंसि भूम्न्यसवः प्राणाः" इत्यमरवचनात् असूनां नित्यं बहुत्वं ज्ञेयम् ] प्रवसन्ति—गच्छन्ति दूरमित्यर्थः।

(२२९) सुदुःसहेति।—सुदुःसहैः,—अतिदुःखेनापि सोढुमशक्यैः, दुःखानां सहस्रैः,—मनःपीड़ासमूहैः, यत् अस्रं—विगलितं नेत्राम्बु, तेन दिग्धं—लिप्तं, वाष्पकलुषितमित्यर्थः, कतिकृत्वः,—कतिवारान्, [ "सङ्ख्यायाः—" (५।४।१७ पा०) इति कृत्वसुच् ] मार्ज्जयसि—शोधयसि,निर्जलीकरोषीत्यर्थः, [ मार्ष्टेः णिचि लटि रूपम् ]। आश्लिष्य—आलिङ्ग्य, कियत्—कियत्कालम्।

(२३०) निर्म्माणं—सृष्टिपरम्परा, ईदृशं—दुःखबहुलमिति भावः।

(२३१) धीरयसि—स्थिरयसि। संस्थापनानां—प्रबोधानां, किमयं कालः प्रबोधदानस्य? इति भावः। गतः,—अतीतः। सखीति।—सखीजनेषु—वयस्यालोकेषु, यः अनुनयः,—प्रार्थनं, 'मा कुप्य' 'प्रसीद' इत्यादिरूप इति भावः; यद्वा,—सखीजनानां यः अनुनयः,—सान्त्वनं, सान्त्वनासूचकवाक्यप्रयोग इत्यर्थः, तत्र अञ्ज-

मत्तपालिके! (२३२) कृताः पृष्ठतः प्रणयिनीप्रणिपातानुरोधाः। (२३३) शिथिलय चकोरवति! चरणग्रहणं ग्रहिणि! कमलिनि! किमनेन पुनः पुनः (२३४) दैवोपालम्भेन? न प्राप्तं चिरं सखीजनसङ्गमसुखम्। आर्य्ये! महत्तरिके! तरङ्गसेने! नमस्कारः। सखि! सौदामनि! दृष्टाऽसि?। समुपनय (२३५) हव्यवाहनार्च्चनकुसुमानि कुमुदिके!। देहि चितारोहणाय रोहिणि! हस्तावलम्बनम्। (२३६) अम्ब! धात्रि! धीरा भव, भवन्ति एवंविधा एव कर्म्मणां विपाकाः

---

नयः,—करद्वयसंयोगाः तेषाम्, इदानीं मरणाध्यवसाये दृढीभूते नास्ति सखीजनप्रसादनस्य सखीजनानुरोधरक्षणस्य वा समयः इति भावः।

(२३२) प्रणयिनीति।—प्रणयिनीनां—स्निग्धवयस्यानां, प्रणिपातैः,—विनयैः करणैः, ये अनुरोधाः,—अनुवर्त्तनानि, 'मा म्रियस्व' 'अस्मान् पालय' इत्याद्युक्त्या विनयप्रदर्शनपूर्वकानुसरणानि याञ्चा वा,पृष्ठतः कृताः,—पश्चात् कृताः, उपेक्षिता इत्यर्थः, इदानीं सख्यादीनां सर्वासामेव ममतादिकं परित्यज्य मरणायैव दृढसङ्कल्पाऽस्मि इति भावः।

(२३३) शिथिलय—मन्दीभूतं कुरु, मा कुरु इति यावत्। ग्रहिणि।—आग्रहवति।।

(२३४) दैवोपालम्भेन—नियतितिरस्कारेण। नेति।—सखीजनसङ्गमसुखं—सहचरीसहवासानन्दः, चिरं—यावज्जीवमित्यर्थः, न प्राप्तं, कैरपि कालैरपि वा इति शेषः, अतः दैवोपालम्भेनालमिति भावः। महत्तरिके!—महाशये।। सौदामनि!—श्री. सौदामनीनामधेये। सखीविशेषसम्बोधनमेतत्, [सुदामा पर्वतभेदः तेनैकादिगित्यर्थे "तेनैकदिक्" (४।३।११२ पा०) इति अण्, स्फटिकमयस्य सुदाम्न पर्वतविशेषस्य एकस्मिन् भागे जातत्वात् विद्युतः इयं सञ्ज्ञेति ज्ञेयम्। "सौदामिनि।" इति पाठस्तु प्रामादिक एव, "सुदाम्ना अद्रिणा एकदिक् सौदामनी" इति दीक्षितवचनात्; काशिकाकारा अप्येवमाहुः] दृष्टा?—अवलोकिता? मयेति शेषः, त्वा किं पुनरवलोकनीयमिति भाव।

(२३५) हव्यवाहनार्चनकुसुमानि—अग्निपूजार्थपुष्पाणि। हस्तावलम्बनं—कराश्रयं, तव प्रसारितं हस्तं धृत्वाऽहं चितामधिरोहामि इति भाव।

(२३६) अम्ब!—मातः! धात्रि!—उपमातः! विपाकाः,—परिणामाः।

पापकारिणीनाम्। (२३७) आर्य्यचरणानाम् अयमञ्जलिः। परः परलोकप्रयाणप्रणामोऽयं भातः!। मरणसमये कस्मात् लवलिके! (२३८) हलहलको बलीयान् आनन्दमयो हृदयस्य मे?। (२३९) हृष्यन्ति उच्चरोमाञ्चमुञ्चि किम् अङ्गीकृत्य अङ्गानि?। वासनिके। वामेन मे (२४०) स्फुरितम् अक्ष्णा। वृथा विरससि वयस्य! वायस। वृक्षे क्षीरिणि क्षणे क्षणे क्षीणपुण्यायाः पुरः। हरिणि! हेषितमिव हयानाम् उत्तरतः?। कस्य इदम् (२४१) आतपत्रम् उच्चम् अत्र पादपान्तरेण प्रभावति। विभाव्यते?। कुरङ्गिके! केन सुगृहीतनाम्नो नाम गृहीतम् अमृतमयम् आर्य्यस्य?। देवि! दिष्ट्या वर्द्धसे देवस्य हर्षस्य आगमनमहोत्सवेन।

---

(२३७) आर्य्यचरणानाम्—आर्य्यस्य—ज्येष्ठस्य भ्रातुः हर्षस्य, चरणानाम्—पादानाम्, अयमञ्जलिः,—अयं प्रणामः इति यावत्। परः,—पश्चिमः, परेति।— परलोके—लोकान्तरे, प्रयाणाय—प्रस्थानाय, प्रणामः,—नतिः।

(२३८) हलहलकः,—उत्कण्ठा।

(२३९) उच्चरोमाञ्चमुञ्चि—उच्चाः,—प्रबलाः, रोमाञ्चाः,—रोमोद्गमाः, तान् मुञ्चन्ति—प्रकटयन्तीति तथोक्तानि, [ मुञ्चतेः कर्त्तरि क्विपि रूपम् ]। किम् अङ्गीकृत्य —अवलम्ब्य, किमानन्दकारणमभिगम्येति यावत्, हृष्यन्ति—पुलकितानि भवन्ति।

(२४०) अक्ष्णा—नेत्रेण, स्फुरितम्—स्पन्दितम्, मङ्गलसूचकमेतदिति भावः। विरससि—रौषि। [ "विरससि" इत्यत्र "विरमसि" इति पाठे,—विश्राम्यसीत्यर्थः ]। वयस्य!—सखे! वायस!—काक! वृक्षे क्षीरिणि—वटाश्वत्थादिक्षीरप्रधाने वनस्पतौ, यदुक्तम्,—"न्यग्रोधोडुम्बराश्वत्थपारीषप्लक्षपादपाः। पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक् पञ्चवल्कलम्॥" इति। पुरः,—अग्रतः। उत्तरतः,—उत्तरस्यां दिशि, हयानाम्—अश्वानाम्, हयैरित्यर्थः, [ कर्त्तरि षष्ठी वैकल्पिकी ] हेषितमिव—ह्रेषितमिव, [ "हेषृ ह्रेषृ ह्रेष अव्यक्तशब्दे" इति हेषतेः भावे निष्ठा ]।

(२४१) आतपत्रम्—छत्रम्, पादपान्तरेण—वृक्षान्तरालेन, विभाव्यते—लक्ष्यते। सुगृहीतनाम्नः,—प्रातःस्मरणीयनाम्नः। अमृतमयम्—पीयूषात्मकम्, श्रवणसन्तर्पणमिति भावः। दिष्ट्या—भाग्येन।

इत्येतच्च श्रुत्वा सत्वरम् (२४२) उपससर्प, ददर्श च मुह्यन्तीम् अग्निप्रवेशाय उद्यतां राजा राज्यश्रियम्, (२४३) आललम्बे च मूर्च्छामीलितलोचनाया ललाटं हस्तेन तस्याः ससम्भ्रमम्।

अथ (२४४) तेन भ्रातुः प्रेयसः प्रकोष्ठबद्धानाम् ओषधीनां रसविसरमिव प्रत्युज्जीवनक्षमं क्षरता, वमता इव पारिहार्य्य-मणीनाम् अचिन्त्यं प्रभावम्, अमृतमिव नखचन्द्ररश्मिभिः उद्गि-रता, (२४५) बध्नतेव चन्द्रोदयच्युतशिशिरशीकरं चन्द्रकान्तचूड़ा-मणिं मूर्द्धनि, मृणालमयाङ्गुलिना इव अतिशीतलेन निर्वापयता

(२४२) उपससर्प—समीपमाजगाम। मुह्यन्ती—मोहमुपागता, भ्रातु-रागमनश्रवणोन्मिलितदुःखभारेण इति भावः।

(२४३) आललम्बे—जग्राह। मूर्च्छेति।—मूर्च्छया—मोहेन, भ्रातृदर्शन-जनितद्विगुणोच्छलितशोकाऽऽवेगेन इति भावः; उक्तञ्च—"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति कुमारसम्भवे कालिदासेन; मीलिते—मुद्रिते, लोचने —नयने यस्याः तथाभूतायाः। ससम्भ्रमं—सत्वरम्।

(२४४) तेन—पूर्वोक्तेन, हस्तसंस्पर्शेनेत्यग्रेण सम्बन्धः। प्रेयसः,—अतिप्रियस्य, [ प्रियशब्दादीयसुनि, "प्रियस्थिर—" (६।४।१५७ पा०) इत्यादिना प्रादेशः ] भ्रातुः, —हर्षस्य, प्रकोष्ठबद्धानां—कूर्पर-मणिबन्धान्तरनिवेशितानाम्, ओषधीनां—लता-विशेषाणां, प्रत्युज्जीवनक्षमं—प्राणप्रदानसमर्थमित्यर्थः, रसविसरमिव—द्रवौघमिव, क्षरता—स्रवता। पारिहार्य्यमणीनां—कटकरत्नानाम्, ("आवापकः पारिहार्य्यः कटकी वलयोऽस्त्रियाम्" इत्यमरः) अचिन्त्यम्—अतर्क्यं, प्रभावं—माहात्म्यं, वमता—उद्गिरता।

(२४५) चन्द्रोदयच्युतशिशिरशीकरं—चन्द्रस्य—इन्दोः, उदयात्—प्रकाशात्, च्युतः, —गलितः, शिशिराणां—तुषाराणां, शीकरः,—कणः यस्मात् तं, चन्द्रकान्त-चूडामणिं—चन्द्रकान्तमणिनिर्म्मितमुकुटरत्नं, मूर्द्धनि, बध्नतेव—विदधतेव, सङ्घटयते-वेत्यर्थः। मृणालेति।—मृणालमयाङ्गुलिना—विसघटितकरशाखया, मृणालवदतीव शैत्यप्रदया अङ्गुल्या इत्यर्थः; यद्यपि अङ्गुलिशब्दस्य स्त्रीत्वं कोषेषु दृश्यते, तथाऽप्यत्र पुंसि प्रयुक्तम्, अत एवाह वाचस्पत्य,—पुंस्त्वमपि, "सहतापरीठमङ्गुलिना—" इति माकुन्तले" इति। निर्वापयता—प्रशमयता।

दह्यमानं हृदयं, (२४६) प्रत्यानयता इव कुतोऽपि जीवितम्, आह्लादकेन हस्तसंस्पर्शेन सहसैव समुन्मिमील राज्यश्रीः। तथा च (२४७) असम्भावितागमनस्य अचिन्तितदर्शनस्य सहसा प्राप्तस्य भ्रातुः स्वप्नदृष्टदर्शनस्य कण्ठे समाश्लिष्य तत्कालाविर्भावनिर्भरेण अभिभूतसर्वात्मना दुःखसम्भारेण निर्दयं नदीमुखप्रणालीभ्यामिव मुक्ताभ्यां स्थूल-प्रवाहम् उत्सृजन्ती वाष्पवारि विलोचनाभ्यां,—"हा तात! हा अम्ब! हा सख्यः!" इति व्याहरन्ती मुहुर्मुहुः,

---

(२४६) प्रत्यानयतेव—प्रत्यावर्त्तयतेव। कुतोऽपि—कस्माच्चित्, अविज्ञात-देशादिति यावत्। समुन्मिमील—नेत्रोन्मीलनं चकारेत्यर्थः।

(२४७) असम्भावितागमनस्य—असम्भावितम्—अप्रत्याशितम्, अप्रतर्कित-मित्यर्थः, आगमनम्—उपस्थितिः यस्य तथाभूतस्य, अचिन्तितदर्शनस्य—अचिन्तित—प्राक् मनसाऽपि अनालोचितं, दर्शनम्—अवलोकनं यस्य तादृशस्य। स्वप्नेति।—स्वप्ने—निद्राऽवस्थायां, दृष्टम्—अनुभूतमित्यर्थः, दर्शनं—साक्षात्कारः यस्य तथाभूतस्य। समाश्लिष्य—समालिङ्ग्य, आसज्येत्यर्थः, तत्कालेति।—स एव कालः,—समयः तस्मिन्, भ्रातृसाक्षात्कारक्षणे इत्यर्थः, आविर्भावेण—उदयेन, निर्भरः,—अतिशयितः प्रगाढ इत्यर्थः तेन, निर्दयं—दृढं यथा तथा, अभिभूतसर्वात्मना—सर्वाङ्गाभिभाविणेत्यर्थः, दुःखसम्भारेण—शोकातिरेकेण, यद्वा,—निर्दयं—प्रगाढम्, अतिशयितमित्यर्थः, तदयथा तथा उत्सृजन्ती इत्यनेन सम्बन्धः, मुक्ताभ्याम्—उद्घाटिताभ्यां, नदीति।—नद्याः,—सरितः, मुखस्य—प्रभवस्थानस्य इत्यर्थः, ये प्रणाल्यौ—पयः पदव्यौ ताभ्याम्, ("द्वयोः प्रणाली पयसः पदव्याम्" इत्यमरः) स्थूलप्रवाहं—स्थूलः,—पृथुः, महानित्यर्थः, प्रवाहः,—प्रवृत्तिः, निर्गमनमित्यर्थः यस्य तथाभूतं, वाष्पवारि—अश्रु, "वाष्प ऊष्मणि नाऽस्त्रे" इति मेदिनीकरोक्तेः वाष्पशब्देनैव नेत्रसलिलार्थबोधात् वारिशब्दस्याधिकोपात्त-तया कथितपदताऽऽख्यदोषग्रस्तमिदमिति विभाव्यते, तथाऽपि श्रवणकुण्डलादिशब्देषु श्रवणादीनामिव सन्निधेः प्रतिपत्त्यर्थमेव तदुपन्यास इति ज्ञेयं, तथा हि वामनः,—"कर्णावतंस-श्रवणकुण्डल-शिरःशिखरेषु कर्णादिनिर्देशः सन्निधेः." इति (२ अधि० २ अध्या० १४ सू०) व्याहरन्ती—कथयन्ती, विलपन्तीत्यर्थः।

(२४८) उच्चैस्तराञ्च समुद्भूतभगिनीस्नेहसद्भावभारभावितमन्युना मुक्तकण्ठम् अतिचिरं विक्रुश्य,—"वत्से। स्थिरा भव त्वम्" इति भ्रात्रा (२४९) करस्थितमुखी समाश्वास्यमानाऽपि,(२५०)"कल्याणिनि! कुरु वचनम् अग्रजस्य गुरोः" इति आचार्य्येण याच्यमानाऽपि, "देवि। न पश्यसि देवस्य अवस्थाम्? अलमतिरुदितेन" इति राजलोकेन अभ्यर्थ्यमानाऽपि, "स्वामिनि! भ्रातरम् अवेक्षस्व" इति परिजनेन विज्ञाप्यमानाऽपि, (२५१) "दुहितः। विश्रम्य पुनः आवटितव्यम्" इति निवार्य्यमाणाऽपि बान्धववृद्धाभिः, "प्रियसखि। (२५२) कियद्रोदिषि? तूष्णीमास्स्व, दृढ़ं दूयते

(२४८) उच्चैस्तराम्—अतिशयेन इत्यर्थः, ["किमेत्तिङव्यय—" (५।४।११ पा०) इति घस्य आमु] समुद्भूतेति।—समुद्भूतेन—समुत्पन्नेन, आविर्भू तेनेत्यर्थः, भगिन्या—सहोदराया य स्नेहसद्भावः—प्रीतिभाव., तस्य भारेण—भरेण, आतिशय्येनेत्यर्थ, भावित,—जनित, मन्यु,—शोको यस्य तथाभू न, भ्रात्रा इत्यनेनान्वय; समुद्भूत ··मन्युना हेतुना इत्यर्थो वा, मुक्तकण्ठम्—उच्चैरित्यर्थ। विक्रुश्य—विलप्य।

(२४९) करेति।—करे—हस्ते, भ्रातुर्निजस्य वेति शेष, स्थित—रचितं, मुख—वदन यस्या तथाभूता; ["करस्थितमुखी" इत्यत्र "करस्थगितमुखी" इति पाठे,—कराभ्या—पाणिभ्या, स्थगितम्—आच्छादित, भ्रात्रा इति शेष, क्रन्दन निवारणार्थमिति भाव, मुख—वदन यस्या. तथ भूता] समाश्वास्यमानाऽपि—प्रबोध्यमानाऽपि, सान्त्व्यमानाऽपीत्यर्थ.।

(२५०) कल्याणिनि।—सञ्जातमङ्गले। भ्रातृदर्शनात् प्राप्तशुभफले। इत्यर्थः, कुरु वचन—वाक्य प्रतिपालयेत्यर्थ। आचार्य्येण—दिवाकरमित्रेण। अल—निषेधार्थकमव्ययम्, अतिरोदन मा कुरु इत्यर्थ.। राजलोकेन—सामन्तनृपसमूहेनेत्यर्थः, अभ्यर्थ्यमाना—प्रार्थ्यमाना। अवेक्षस्व—पश्य। परिजनेन—अनुजीविजनेन।

(२५१) दुहित।—वत्से। आवटितव्य—रोदितव्यमिति भाव। बान्धववृद्धाभि,—बान्धवेषु—स्वजनेषु, या वृद्धा,—वर्षीयस्य ताभि।

(२५२) कियत्—कियत्कालमित्यर्थ। तूष्णी—मौनम्, आस्स्व—उपविश; मौनावलम्बन कुरु इत्यर्थ, मा रुदिहि इति यावत्। दृढम्—अत्यर्थ, दूयते—सन्तापमनुभवति।

देवः" इति सखीभिः अनुनीयमानाऽपि, (२५३) चिरसम्भावितानेकदुःसहदुःखनिवहनिर्वहण-वाष्पोत्पीड़पीड्यमानकण्ठभागा, (२५४) प्रभूतमन्युभारभरितान्तःकरणा, करुणकाहलेन स्वरेण कतिचित्कालम् अतिदीर्घं रुरोद। विगते च मन्युवेगे वक्रेः समीपात् आक्षिप्य ध्वात्रा नीता निकटवर्त्तिनि तरुतले निषसाद।

(२५५) शनैः आचार्य्यस्तु तथा हर्षं इति विज्ञाय विवर्द्धितादरः सुतरां मुहूर्त्तमिव अतिवाह्य (२५६) निभृतसंज्ञाज्ञापितेन शिष्येण उपनीतं नलिनीदलैः स्वयम् आदाय नम्रो

---

(२५३) चिरेति।—चिर—दीर्घकाल व्याप्येति भावः, सम्भावितानि,—अनुभूतानि इत्यर्थः, यानि अनेकानि—बहूनि, दुःसहानि—दुर्वहानि, दुःखानि—क्लेशाः, तेषां निवहः,—समूहः, तस्य निर्वहण—निर्वाहः, परिसमाप्तिरित्यर्थः, सुचिरोपभुक्तानां दुःसहानां शोकसमुदयानां परिणाम इति यावत्, तेन यो वाष्पोत्पीड,—वाष्पाणां—नेत्रोदकानाम्, उत्पीड,—प्रवाहः, तेन पीड्यमानः,—रुध्यमानः, कण्ठभागः,—गलान्तर्देश यस्याः तथाभूता।

(२५४) प्रभूतेति।—प्रभूतेन—प्रबलेन, मन्युभारेण—शोकभरेण, भरितम्—आपूरितम्, अन्तःकरण—चेतः यस्याः तथोक्ता, करुणकाहलेन—करुणेन—करुणरसेन, काहल,—भृशः, अतिशय इत्यर्थः, पूर्ण इति यावत् तेन, करुणरसपूर्णेन, करुणरसोद्दीपकेनेत्यर्थो वा, ("काहलश्चरणायुधे। शब्दमात्रेऽपि पुंलिङ्गस्त्रिषु शुष्के भृशे खले॥" इति मेदिनी) अतिदीर्घम्—अत्युच्चैरित्यर्थः, ["अतिदीर्घम्" इत्यत्र "अतिचिरम्" इति पाठान्तरम्]। मन्युवेगे——शोकप्रसरे। आक्षिप्य—आकृष्य। निषसाद—उपविवेश, ["सदिरप्रतेः" (८।३।६६ पा०) इति षत्वम्]।

(२५५) शनैः,—मन्दम्, अव्यग्रतया इत्यर्थः, [उपनिन्ये इति क्रियाया विशेषणमिदम्]। आचार्य्यः,—दिवाकरमित्रः, तथा—तादृशः, सम्राडिति भावः, यद्वा,—तथा—ऽन व्यापारेणेत्यर्थः, प्रागुक्तघटनयेति यावत्। विवर्द्धितादरः,—वि—विशेषेण, वर्द्धितः,—वृद्धिं गतः, आदरः,—बहुमान यस्य तथाभूतः। अतिवाह्य—यापयित्वा।

(२५६) निभृतेति।—निभृतया—निःशब्दया, संज्ञया—इङ्गितेन, ज्ञापितः,—आदिष्ट इत्यर्थः, तेन। नलिनीदलैः,—पद्मिनीपत्रैः।

मुखप्रक्षालनाय उदकम् (२५७) उपनिन्ये। नरेन्द्रोऽपि सादरं गृहीत्वा प्रथमम् (२५८) अनवरतरोदनाताम्रं चिर-प्रवृत्ताश्रुजलजालं रक्तपङ्कजमिव स्वसुश्चक्षुः अक्षालयत्, पश्चात् आत्मनः। (२५९) प्रक्षालितमुखशशिनि च महीपाले सर्व्वतो निःशब्दः सम्बभूव सकलो लिखित इव लोकः। ततो नरेन्द्रो मन्दमन्दम् अब्रवीत् स्वसारं,—"वत्से! वन्दस्व अत्र-भवन्तं भदन्तम्। एष ते भर्त्तुर्हृदयं द्वितीयम्, अस्मावञ्च गुरुः" इति। राजवचनात्तु (२६०) राजदुहितरि पतिपरि-चयश्रवणोद्वातेन पुनः आनीतनेत्राम्भसि नमन्त्याम् आचार्य्यः

(२५७) उपनिन्ये—अर्पितवान्, हर्षमिति शेष।

(२५८) अनवरतेति।—अनवरतेन—अश्रान्तेन, रोदनेन—क्रन्दनेन, आताम्रम्—आरक्त, चिरमिति।—चिर—दीर्घकाल व्याप्य, प्रवृत्तं—प्रसृतम्, अश्रुजलजाल—वाष्पसमूह यस्मात् तथाभूतम्, अत्र अश्रुशब्देनैव नेत्रसलिलरूपार्थस्य बोधात् जल-शब्दस्य पुनरुक्ततया कथितपदताऽऽख्यदोष, वामनस्तु एकार्थपदघटितवाक्येषु एकार्थत्व-दोषमभिहितवान्, एवञ्च तन्मते यथा करिकलभादिशब्दानां प्रौढकुञ्जररूपकलभार्थ-बोधाददोषत्व, तथा अत्रापि सद्यःपतिताश्रुमयजलप्रवाहरूपविशेषार्थस्य पर्य्यवसानाददोषः, तथा च वामनः,—"करिकलभशब्दे करिशब्दस्ताद्रूप्यस्य प्रतिपत्त्यर्थम्" इति (२ अधि० २ अध्या० १७ सू०) स्वसुः,—भगिन्याः, चक्षुः,—नयनम्, अक्षालयत्—अधावयत्। आत्मनः,—स्वस्य, चक्षु इति सम्बन्धः।

(२५९) प्रक्षालितेति।—प्रक्षालितः,—धौतः, मुखशशी—आननेन्दुः येन तथोक्ते। सर्व्वतः,—समन्तात्। लिखित इव—चित्रार्पित इव। स्वसारं—भगिनीम्। वन्दस्व—अभिवादय, स्तुहि, प्रणम इत्यर्थो वा। अत्रभवन्त—पूजनीयम्। भर्त्तुः,—ग्रहवर्म्मणः, द्वितीयं हृदयम्—अपरं शरीरम्, अन्तरङ्गमित्रमित्यर्थः।

(२६०) पतीति।—पत्युः,—ग्रहवर्म्मणः, परिचयः,—संस्तव, तदीयवार्त्ता इत्यर्थः, तस्य श्रवणोद्घातः,—आकर्णनप्रसङ्गः तेन, पुनः,—भूयः, आनीतेति।—आनीतम्—उपस्थित, नेत्रयोः,—चक्षुषोः, अम्भः,—सलिलं यस्याः तथाभूतायां, भर्त्तुर्भदन्तेन सख्यवार्त्ताऽऽकर्णनेन पुनर्वाष्पायमाणनेत्रायामित्यर्थः, राजदुहितरि—राजकन्यायां, राज्यश्रियामिति यावत्, नमन्त्यां—प्रणतिं कुर्व्वत्याम्।

(२६१) प्रयत्नरचितागतवाष्पाम्भ:सम्भारभज्यमानधैर्य्यार्द्रलोचन: (२६२) किञ्चित्पराहत्तनयनो दीर्घं निशश्वास। स्थित्वा च क्षणमेकं प्रदर्शितप्रश्रयो मृदुवादी मधुरया वाचा व्याजहार,—"कल्याणराशे! अलं रुदित्वा अतिचिरं, राजलोको न अद्यापि रोदनात् निवर्त्तते। क्रियताम् अवश्यकरणीय: स्नानविधि:, स्नात्वा च गम्यतां (२६३) तामेव भूयो भुवम्"।

अथ भूपति: (२६४) अनुवर्त्तमानो लौकिकमाचारम् आचार्य्यवचनञ्च, उत्थाय स्नात्वा (२६५) गिरिसरिति, सह स्वस्रा तामेव भूमिम् अयासीत्। (२६६) तस्याञ्च सपरिजनां प्रथमम् आहितावधान: पार्श्ववर्त्ती परवतीं शुचा (२६७) पतिपिण्डप्रदर्शितप्रयत्नप्रतिपन्नाभ्यवहारकरणां भगिनीम् अभोज-

(२६१) प्रयत्नेति।—प्रयत्नेन—प्रकृष्टचेष्टया, रचितानि अपि—निरोधितान्यपि, आगतानि—उपस्थितानि, यानि वाष्पाम्भांसि—नयनजलानि, तेषां सम्भारेण—निवहेन, भज्यमानं—चोत्यमानं, व्यपगतप्रायमित्यर्थ:, यत् धैर्य्यं—धीरत्वं, तेन आर्द्रे—सिक्ते, लोचने—नेत्रे यस्य तथाभूत:। अत्रापि वाष्पाम्भ:पद पूर्व्ववत् कथितपदता-ऽऽख्यदोषग्रस्तमिति ज्ञेयम्।

(२६२) किञ्चित्पराहत्तनयन:,—साचीकृतचक्षु:। प्रदर्शितप्रश्रय:,—प्रकटितविनय। मृदुवादी—अनुच्चभाषी, कोमलस्वराभिधायी इत्यर्थ:। कल्याणराशे!—प्रभूतश्रेयोभाजनम्। अतिचिरं—सुदीर्घकालम्, अलं रुदित्वा—रोदनेनालं, क्रन्दनं मा कुरु इत्यर्थ:।

(२६३) तामेव—पूर्व्वाधिष्ठानभूतां, यत: आगतोऽसि तामित्यर्थ:, भुवं—स्थानं, भूय:,—पुनरपि।

(२६४) अनुवर्त्तमान:,—अनुसरन्, पालयंश्च।

(२६५) गिरिसरिति—पर्वतीयनद्याम्।

(२६६) तस्याञ्च—भूमौ इत्यर्थ:, आहितावधान:,—दत्ताभिनिवेश:, स्वयं पर्य्यवेक्षणपर: सन्नित्यर्थ:, सपरिजना—सपरिवारा, सानुजीविलोकामित्यर्थ:, शुचा परवती—शोकपरवशामित्यर्थ:।

(२६७) पतीति।—पत्यु:,—ग्रहवर्म्मण:, पिण्ड:,—मृतेभ्यो देय: गोलाकार:

यत्; अनन्तरञ्च स्वयम् आहारस्थितिम् अकरोत्। भुक्तवांश्च बन्धनात्प्रभृति विस्तरतः स्वसुः कान्यकुब्जात् (२६८) गौड़-सम्भ्रमं, (२६९) गुप्तितो गुप्तनाम्ना कुलपुत्त्रेण निष्कासनं, निर्गतायाश्च राज्यवर्द्धनमरणश्रवणं, श्रुत्वा च आहारनिराकरणम्, अनाहारपराहतायाश्च विन्ध्याटवीपर्य्यटनखेदं, (२७०) जातनिर्वेदायाः पावकप्रवेशोपक्रमणं यावत् सर्व्वम् अशृणोत् (२७१) व्यतिकरं परिजनतः। ततः सुखासीनम् एकत्र तरुतले विविक्तभुवि भगिनीद्वितीयं दूरस्थितानुजीविजनं

अन्नसह्वात इत्यर्थः, तस्मिन् प्रदर्शितेन—बोधितेन, पत्यु पिण्ड दातव्य जीवितया पत्न्या, तच्च जीवनम् आहारं विना न रक्षितु शक्यते, तत्पिण्डमदत्त्वा आत्मत्यागी महान-धर्म्म, आप्रलय नरकवासश्च इत्येवरूपेण पर्य्यालोचितेनेति यावत्, प्रयतेन—प्रज्ञहानु-शीलेन हेतुनेत्यर्थ, प्रतिपन्नं—स्वीकृतम्, अभ्यवहारकरणं—भोजनव्यापारः यथा तथा-विधां, भर्त्तरि बहुमानात् तत्पिण्डदानार्थमेव अभ्यवहारक्रिया कृता, न तु सा तदा स्वजीवने स्पृहावती आसीत् इति तात्पर्य्यम्। आहारस्थितिम्—आहाराय-भोजनाय, स्थितिम्—आस्याम्, उपवेशनमित्यर्थः, ("स्यादास्या त्वासना स्थितिः" इत्यमरः) यद्वा,—आहारेण स्थितिम्—अवस्थानम्, आत्मजीवनरक्षणमित्यर्थः, ("स्थितिः स्त्रियामवस्थाने मर्य्यादायाञ्च सीमनि" इत्यमरः)।

(२६८) गौड़सम्भ्रमं—गौडाधिपात् भयम्।

(२६९) गुप्तित,—कारागारात्, कारायां बन्धनात्, इत्यर्थः, ("गुप्तिः स्यपकरस्थाने कारागारे च रक्षणे" इति मेदिनी)। कुलपुत्त्रेण—सत्कुलप्रसूतेन, निष्कासन—वहिर्ष्करणम्, उद्धरणमित्यर्थ। आहारनिराकरण—भोजनपरित्यागम्। अनाहारपराहतायाः,—उपवासपीड़िताया।

(२७०) जातनिर्वेदाया,—उत्पन्नवैराग्यायाः, पावकप्रवेशोपक्रमणम्—अग्नि-प्रवेशप्रक्रमम्।

(२७१) व्यतिकरं—वृत्तान्तं, व्यसनं वा, ("अथ व्यतिकरः पुंसि व्यसनव्यति-षङ्गयो" इति मेदिनी)। परिजनतः,—परिजनसकाशात्। विविक्तभुवि—विजनप्रदेशे। भगिनीद्वितीय—भगिनी—सहोदरा एव, द्वितीया - द्वितीयसहचरी यस्य त, केवलं भगिन्या सहावस्थितमित्यर्थः। दूरेति।—दूरे—विप्रकृष्टस्थाने,

राजानम् आचार्य्यः समुपसृत्य शनैः आसाञ्चक्रे; स्थित्वा च कञ्चित् कालांशं (२७२) लेशतो वक्तुमुपचक्रमे,—

"श्रीमन्! आकर्ण्यताम्, (२७३) आख्येयमस्ति नः किञ्चित्—अयं हि यौवनोन्मादात् परिभूय भूयसीर्भार्य्या यौवनावतारतरलतरा: (२७४) ताराराजो रजनीकर्णपूरः पुरुहूतपुरोधसो धिषणस्य (२७५) पुरन्ध्रीं धर्मपत्नीं पत्नीयन् अतितरलः तारां नाम अपजहार; नाकतश्च पलायाञ्चक्रे। (२७६) चकितचकोरलोचनया तया सह अतिकामया सर्व्वाकाराभिरामया रममाणो रमणीयेषु देशेषु चचार।

स्थिता',—अवस्थिता', अनुजीविजनाः,—परिजना इत्यर्थः यस्य तम्। आचार्य्यः,—दिवाकरमित्रः। आसाञ्चक्रे—उपविवेश।

(२७२) लेशत.,—किञ्चित्। उपचक्रमे—आरेभे। ["प्रोपाभ्यां समर्थाभ्याम्" (१।३।४२ पा०) इति आत्मनेपदम्]।

(२७३) आख्येयं—वक्तव्यम्। यौवनोन्मादात्—तारुण्यजनितबुद्धिवैपरीत्यादित्यर्थ, यौवनेति।—यौवनस्य—तारुण्यस्य, अवतारेण—उदयेन, तरलतरा,—अतिशयेन स्फुरन्ती, उद्दामयौवनाविर्भाववत्या इत्यर्थः, भूयसी.,—बह्वीः, सप्तविंशतिम् अश्विन्यादिदक्षदुहितॄरित्यर्थ., भार्य्या. परिभूय—अवधीर्य्य, अनादृत्येत्यर्थः।

(२७४) रजनीकर्णपूर.,—निशाकर्णभूषणभूत, ताराराजः,—चन्द्र', पुरुहूतपुरोधस,—इन्द्रपुरोहितस्य, धिषणस्य—बृहस्पतेः, ("बृहस्पतिः सुराचार्य्यो गीष्पतिर्धिषणो गुरु." इत्यमर.)।

(२७५) पुरन्ध्रीं—गृहिणीम्। पत्नीयन्—पत्नीमिव आचरन्, ["उपमानादाचारे" (३।१।१० पा०) इति क्यच्]। अतितरल.,—अतिचञ्चलः, हठकामुकप्रकृतिरित्यर्थ.। अपजहार—मुमोष, तत्र व्यभिचारमकरोदित्यर्थः। नाकतः,—स्वर्गात्।

(२७६) चकितेति।—चकित,—भीतः, यश्चकोर.,—पक्षिविशेष', तल्लोचनवत् लोचन—नयनं यस्या तथाभूतया, चञ्चललोचनया, चकोरलोललोचनया इत्यर्थः, अतिकामया—अतिकामुक्या. सर्व्वेति।—सर्व्वेण—सकलेन, आकारेण—आकृत्या, वपुषेत्यर्थ· ("आकाराविङ्गिताकृती" इत्यमर.) अभिरामा—मनोरमा तया, सर्वाङ्गसुन्दर्या इत्यर्थ., तया—तारया, रममाणः,—विहरन्।

(२७७) चिराच्च कथञ्चित् सर्व्वगीर्व्वाणवाणीगौरवात् गिरां पत्युः पुनरपि प्रत्यर्पयामास ताम्। हृदये तु (२७८) अनिन्धनम् अदह्यत विरहात् वरारोहायाः तस्याः सततम्।

एकदा तु (२७९) शैलात् उदयात् उदयमानो विमले वारिणि वरुणालयस्य (२८०) सङ्क्रान्तमात्मनः प्रतिबिम्बं विलोकितवान्। दृष्ट्वा च तदा सस्मार (२८१) सस्मरः स्वेदगण्डस्थलस्य ताराया मुखस्य; (२८२) मुमोच च सन्मथोन्माथमथ्यमानमानसः (२८३) स्वस्थोऽपि अस्वस्थः स्थवीयसः

(२७७) चिरात्—दीर्घकालात् परमित्यर्थः, सर्वेति।—सर्वेषां—सकलानां, गीर्वाणानां—देवानाम्, ("अमरा निर्जरा देवाः…। …गीर्वाणा दानवारयः॥" इत्यमरः) वाण्याः,—वचनस्य, गौरवात्—सम्मानात्, देववाक्यानां सम्मानरक्षार्थमित्यर्थः, कथञ्चित् —अतिक्लेशेन, अनिच्छन्नपीति भावः, गिरां पत्युः,—बृहस्पतेः, ["षष्ठी शेषे" (२।३।५० पा०) इति षष्ठी] ताम्—ताराम्।

(२७८) अनिन्धनम्—इन्धनं—काष्ठं, तद्रहितं, दाह्यविनिर्मुक्तादित्यर्थः, अदह्यत—समतप्यत, स इति शेषः, यद्वा,—अदह्यत—अज्वल्यत, विरहानल इति शेषः। वरारोहायाः,—वरः,—श्रेष्ठः, सुन्दर इत्यर्थः, आरोहः,—श्रोणिभागः यस्याः तस्याः, उत्तमाङ्गनायाः इत्यर्थः, ("श्रोण्यामप्यारोहो वरस्त्रियाः" इति "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्युभयत्राप्यमरः) तस्याः,—ताराया।

(२७९) उदयात् शैलात्—उदयाचलात्, उदयमानः,—उद्गच्छन्, [उत्पूर्वात् भौवादिकस्य "अयते" इत्यस्य धातोः रूपमेतत्]। वरुणालयस्य—समुद्रस्य।

(२८०) सङ्क्रान्तं—प्रतिफलितम्। प्रतिबिम्बं—प्रतिकृतिम्।

(२८१) सस्मरः,—सकामः, कामार्त्त इत्यर्थः। स्वेदगण्डस्थलस्य विकचकपोलतलस्य, हर्षाश्रुफुल्लकपोलदेशस्य वा। [मुखस्य इत्यत्र "अधीगर्थ—" (२।३। ५२ पा०) इति कर्मणि षष्ठी]।

(२८२) मुमोच—ववर्ष इत्यर्थः। मन्मथेति।—मन्मथस्य—कामस्य, उन्माथेन —उत्पीडनेन, ["मन्मथोन्माथ—" इत्यत्र "मन्मथोन्माद—" इति पाठे—मन्मथेन जनितः यः उन्मादः,—उन्मत्तता, चित्तचाञ्चल्यमिति यावत् तेन] मथ्यमानं—विलोड्यमानं, मानसं—हृदयं यस्य तथाभूतः।

(२८३) स्वस्थः,—प्रकृतिस्थोऽपि, अस्वस्थः,—अप्रकृतिस्थः इति विरोधः,

राजानम् आचार्य्यः समुपसृत्य शनैः आसाञ्चक्रे; स्थित्वा च कञ्चित् कालांशं (२७२) लेशतो वक्तुमुपचक्रमे,—

"श्रीमन्! आकर्ण्यताम्, (२७३) आख्येयमस्ति नः किञ्चित्—अयं हि यौवनोन्मादात् परिभूय भूयसीर्भार्य्या यौवनावतारतरलतरः (२७४) ताराराजो रजनीकर्णपूरः पुरुहूतपुरोधसो धिषणस्य (२७५) पुरन्ध्रीं धर्म्मपत्नीं पत्नीयन् अतितरलः तारां नाम अपजहार; नाकतश्च पलायाञ्चक्रे। (२७६) चकितचकोरलोचनया तया सह अतिकामया सर्व्वाकाराभिरामया रममाणो रमणीयेषु देशेषु चचार।

---

स्थिता,—अवस्थिताः, अनुजीविजनाः,—परिजना इत्यर्थः यस्य तम्। आचार्य्यः,—दिवाकरमित्रः। आसाञ्चक्रे—उपविवेश।

(२७२) लेशतः,—किञ्चित्। उपचक्रमे—आरेभे। ["प्रोपाभ्यां समर्थाभ्याम्" (१।३।४२ पा०) इति आत्मनेपदम्]।

(२७३) आख्येयं—वक्तव्यम्। यौवनोन्मादात्—तारुण्यजनितबुद्धिवैपरीत्यादित्यर्थः, यौवनेति।—यौवनस्य—तारुण्यस्य, अवतारेण—उदयेन, तरलतरः,—अतिशयेन स्फुरन्, उद्दामयौवनाविर्भावरम्या इत्यर्थः; भूयसीः,—बह्वीः, सप्तविंशतिम् अश्विन्यादिदक्षदुहितॄरित्यर्थः, भार्य्याः परिभूय—अवधीर्य्य, अनादृत्येत्यर्थः।

(२७४) रजनीकर्णपूरः,—निशाकर्णभूषणभूतः, ताराराजः,—चन्द्रः, पुरुहूतपुरोधसः,—इन्द्रपुरोहितस्य, धिषणस्य—बृहस्पतेः, ("बृहस्पतिः सुराचार्य्यो गीष्पतिर्धिषणो गुरुः" इत्यमरः)।

(२७५) पुरन्ध्रीं—गृहिणीम्। पत्नीयन्—पत्नीमिव आचरन्, ["उपमानादाचारे" (३।१।१० पा०) इति क्यच्]। अतितरलः,—अतिचञ्चलः, हठकामुकप्रकृतिरित्यर्थः। अपजहार—चुचोर, तत्र व्यभिचारमकरोदित्यर्थः। नाकतः,—स्वर्गात्।

(२७६) चकितेति।—चकितः,—भीतः, यश्चकोरः,—पक्षिविशेषः, तल्लोचनवत् लोचनं—नयनं यस्याः तथाभूतया, चञ्चललोचनया, चकोरलोललोचनया इत्यर्थः, अतिकामया—अतिकामुक्या, सर्व्वेति।—सर्व्वेण—सकलेन, आकारेण—आकृत्या, वपुषेत्यर्थः ("आकारस्त्विङ्गिताकृती" इत्यमरः) अभिरामा—मनोरमा तया, सर्व्वाङ्गसुन्दर्या इत्यर्थः, तया—तारया, रममाणः,—विहरन्।

२७७ ) चिराच्च कथञ्चित् सर्व्वगीर्व्वाणवाणीगौरवात् गिरां त्युः पुनरपि प्रत्यर्पयामास ताम् । हृदये तु ( २७८ ) अनिन्धनम् अदह्यत विरहात् वरारोहायाः तस्याः सततम् ।

एकदा तु ( २७९ ) शैलात् उदयात् उदयमानो विमले पाथसि वरुणालयस्य ( २८० ) सङ्क्रान्तमात्मनः प्रतिबिम्बं विलोकितवान् । दृष्ट्वा च तदा सस्मार ( २८१ ) सस्मरः स्मेरगण्डस्थलस्य ताराया मुखस्य ; ( २८२ ) मुमोच च मन्मथोन्माथमथ्यमानमानसः ( २८३ ) स्वस्थोऽपि अस्वस्थः स्थवीयसः

( २७७ ) चिरात्—दीर्घकालात् परमित्यर्थः, सर्वेति ।—सर्वेषां—सकलानां, गीर्वाणानां—देवानाम्, ( "अमरा निर्जरा देवा··· । ···गीर्वाणा दानवारयः ॥" इत्यमरः ) वाण्याः,—वचनस्य, गौरवात्—सम्मानात्, देववाक्यानां सम्मानरक्षार्थमित्यर्थः, कथञ्चित् —अतिक्लेशेन, अनिच्छन्नपीति भावः, गिरां पत्युः,—बृहस्पतेः, [ "षष्ठी शेषे" ( २।३।५० पा० ) इति षष्ठी ] तां—ताराम् ।

( २७८ ) अनिन्धनम्—इन्धन—काष्ठं, तद्रहितं, काष्ठविनिर्मुक्तादित्यर्थः, अदह्यत—समतप्यत, स इति शेषः, यद्वा,—अदह्यत—अज्वल्यत, विरहानल इति शेषः । वरारोहायाः,—वर,—श्रेष्ठः, सुन्दर इत्यर्थः, आरोहः,—श्रोणिभागः यस्याः तस्याः, उत्तमाङ्गनायाः इत्यर्थः, ( "श्रोण्यामप्यारोहो वरस्त्रियाः" इति "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्युभयत्राप्यमरः ) तस्याः,—तारायाः ।

( २७९ ) उदयात् शैलात्—उदयाचलात्, उदयमानः,—उद्गच्छन्, [ उत्पूर्वकात् भौवादिकस्य "अयते" इत्यस्य धातोः रूपमेतत् ] । वरुणालयस्य—समुद्रस्य ।

( २८० ) सङ्क्रान्त—प्रतिफलितम् । प्रतिबिम्ब—प्रतिच्छविम् ।

( २८१ ) सस्मरः,—सकामः, कामार्त्त इत्यर्थः । स्मेरगण्डस्थलस्य—विकचत्कपोलतलस्य, ईषद्धास्यफुल्लकपोलदेशस्य वा । [ मुखस्य इत्यत्र "अधीगर्थ—" ( २।३।५२ पा० ) इति कर्मणि षष्ठी ] ।

( २८२ ) मुमोच—तत्याज इत्यर्थः । मन्मथेति ।—मन्मथस्य—कामस्य, उन्माथेन —उत्पीडनेन, [ "मन्मथोन्माथ—" इत्यत्र "मन्मथोन्माद—" इति पाठे—मन्मथेन ··· तः यः उन्मादः—उन्मत्तता, चित्तचाञ्चल्यमिति यावत् तेन ] मथ्यमान—विलोड्यमानं, मानस—हृदयं यस्य तथाभूतः ।

( २८३ ) स्वस्थः,—प्रकृतिस्थोऽपि, अस्वस्थः,—अप्रकृतिस्थः इति विरोधः,

पीतसकलकुमुदवनप्रभाप्रवाहधवलताराभ्यामिव लोचनाभ्यां बाष्पवारिविन्दून्। अथ पततः (२८४) तान् उदन्वति समस्तान् एव आचेमुः मुक्ताशुक्तयः। (२८५) तासाञ्च कुक्षिकोषेषु मुक्ताफलीभूतान् अवाप तान् कथमपि रसातलनिवासी वासुकिर्नाम (२८६) विषमुचाम् ईशः। स च तैः मुक्ताफलैः पातालतलेऽपि तारागणमिव दर्शयद्भिः (२८७) एकावलीम् अकल्पयत्; चकार च मन्दाकिनीति नाम तस्याः। (२८८) सा च भगवतः सोमस्य सर्व्वासाम् ओषधीनाम् अधिपतेः प्रभावात् अत्यन्तविषघ्नी, हिमामृतसम्भवत्वाच्च

---

स्वस्थ',—स्वर्गस्थः इति तत्परिहारात् विरोधाभासोऽलङ्कार', [ स्वः,—परलोके, इति यावत्, तिष्ठति इत्यर्थे स्वरित्युपपदपूर्व्वकात् स्थाधातोः कप्रत्यये "खर्परे शरि वा विसर्गलोपो वक्तव्यः" (वा०) इति विसर्गलोपः ] अस्वस्थताकारणभूतेन दुःखसन्तापादिना विरहिते स्वर्गे स्थितोऽपीत्यपिशब्दार्थं। स्थवीयसः,—अतिस्थूलान्, [ "स्थूलदूर—" (६।४।१५६ पा०) इति ईयसुनि स्थूलस्य स्थवादेशः ]। पीतेति।—पीत—सेवितमित्यर्थ', यत् सकलं—समग्रं, कुमुदवन—कैरवारण्य, सितोत्पलसमूह इत्य', तस्य प्रभाप्रवाह',—कान्तिसमूहः, तेन धवला—शुभ्रा, विरहपाण्डुरा इति भावः, तारा—कनीनिका ययोस्ताभ्याम्। वाप्पवारिविन्दून्—अश्रुकणान्; अत्रापि पूर्व्ववत् वाप्पपदेनैव गतार्थतया वारिशब्दस्य पुनरुक्तेः कथितपदताऽऽख्यदोष।

(२८४) उदन्वति—समुद्रे, मुक्ताशुक्तयः,—मुक्ताजनक-मुक्तास्फोटाः, तान्—वाप्पवारिविन्दून्, आचेमुः,—पपुः।

(२८५) तासां—मुक्ताशुक्तीनां, कुक्षिकोषेषु—उदराभ्यन्तरेषु, मुक्ताफलीभूतान्—मौक्तिकरूपेण परिणतानित्यर्थ', तान्—वाप्पविन्दूनित्यर्थ', कथमपि—केनापि प्रकारेण, अवाप—प्राप।

(२८६) विषमुचां—नागानाम्, ईशः,—प्रभुः, नागराज इत्यर्थः।

(२८७) एकावलीम्—एकसरं, हारविशेषमिति यावत्, अकल्पयत्—अरचयत्। तस्याः,—एकावल्याः।

(२८८) सा—एकावली, ओषधीनां—फलपाकान्तानां व्रीहियवादीनाम्, ("ओषध्यः फलपाकान्ताः" इत्यमरः) अधिपतेः,—ईशस्य, ('ओषधीशो निशापतिः'

स्पर्शेन सर्व्वसत्त्वसन्तापहारिणी बभूव। (२८९) अतः स तां सर्व्वदा विषोष्मशान्तये वासुकिः पर्य्यधत्त।

(२९०) समतिक्रामति च कियत्यपि काले कदाचित् ताम् एकावलीं तस्मात् नागराजात् नागार्ज्जुनो नाम नागैः एव आनीतः पातालतलं भिक्षुः अभिक्षत, लेभे च। निर्गत्य रसातलात् त्रिसमुद्राधिपतये सातवाहननाम्ने नरेन्द्राय सुहृदे स ददौ ताम्। सा च अस्माकं कालेन शिष्यपरम्परया कथमपि हस्तमुपगता। यद्यपि च (२९१) परिभव इव

---

इत्यमरप्रमाणात् चन्द्रस्य ओषध्यधिपतित्वं बोद्धव्यम्) सोमस्य—चन्द्रस्य, प्रभावात् —माहात्म्यात्, अत्यन्तविषघ्नी—अतिशयेन विषहरी। हिमेति।—हिम—तुहिनम्, अमृतमिव—पीयूषमिव, सन्तापनाशकत्वादिति भावः; यद्वा,—हिमं—शीतलं, यत् अमृतं—सुधा, चन्द्रलोके सुधाऽवस्थानात् चन्द्रस्य सुधानिधित्वाच्चेति भावः, तत्सम्भवत्वात् —तदुत्पन्नत्वात्; यद्वा,—हिमं यत् अमृत—जल, सामुद्रमिति भावः, ("अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते" इति मेदिनी) तत्सम्भवत्वात्, समुद्रगर्भस्थशुक्तिमध्ये मुक्तारूपेण परिणमनादिति भाव', सर्वसत्त्वसन्तापहारिणी—निखिलजीवानां सन्ज्वरनाशिनी।

(२८९) ["अत." इत्यत्र "यत." इति पाठान्तरम्]। विषोष्मशान्तये—विष-सन्तापनिवृत्तये, नागलोकस्य विषपूर्णत्वात् स्वस्मिन्नेव विषसद्भावादिति वा भावः। पर्य्यधत्त—परिहितवान्।

(२९०) समतिक्रामति—समतीते, समतिगच्छति इत्यर्थः। नागराजात्—वासुकेः, [भिक्षतेः याच्ञार्थकतया द्विकर्मकत्वेन "नागराजात्" इत्यत्र गौणे कर्मणि द्वितीया एव भवितुमुचिता, तेन "नागराजम्" इत्येव प्रयोक्तुमुचितमिति]। नागैः,—कैश्चित् सर्पैः। भिक्षुः,—बौद्धसन्न्यासी, अभिक्षत—अयाचत। त्रिसमुद्राधिपतये—तदाख्यनगरस्वामिने, यद्वा,—तिसृषु दिक्षु स्थितः समुद्रः यत्र सः त्रिसमुद्रः,—अन्तरीपविशेषः इत्यर्थः, तदधिपतये। सुहृदे—मित्राय, आत्मन. इति शेषः। शिष्यपरम्परया—शिष्यप्रशिष्यक्रमेण। कथमपि—अज्ञातप्रकारेण इत्यर्थः।

(२९१) परिभव इव—अनादर इव, लघूकरणमिवेत्यर्थः, भिक्षोर्दानग्रहणा-

भवति भवादृशां दत्त्रिम उपचारः तथाऽपि (२९२) औषधि-बुद्धा बुद्धिमता सर्व्वसत्त्वराशिरक्षाप्रवृत्तेन रक्षणीयशरीरेण आयुष्मता विषरक्षापेक्षया गृह्यताम्” इत्यभिधाय भिक्षोः (२९३) अभ्यासवर्त्तिनः चीवरपटान्तसंयतां मुमोच ताम् एकावलीं मन्दाकिनीम्।

(२९४) उन्मुच्यमानाया एव यस्याः प्रभालेपिनि लब्धावकाशे विशदमहसि महीयसि विसर्पति रश्मिमण्डले, युगपद्धवलायमानेषु दिङ्मुखेषु, (२९५) मुकुलितलतावधूत्कण्ठितैः आ मूलाद्विकाशितमिव तरुभिः, (२९६) अभिनवमृणाललुब्धैः

---

दिति भावः। दत्त्रिमः,—दानेन निर्वृत्तः, [“ड्वितः क्त्रिः” (३।३।८८ पा०) इति ददातेः क्त्रिः, “क्त्रेर्मम्नित्यम्” (४।४।२० पा०) इति मप् च] उपचारः,—सत्कारः।

(२९२) औषधिबुद्धा—औषधिधिया, औषधिः इति विविच्य इत्यर्थः, विषनाशकत्वात् सन्तापनाशकत्वाच्चेति भावः। सर्व्वेति।—सर्व्वेषां—कृत्स्नानां, सत्त्वराशीनां—प्राणिसङ्घानां, रक्षायां—पालने, रक्षायै वा, प्रवृत्तः,—उद्यतः तेन; अत एव रक्षणीयं—पालनीयं, शरीरं—देहः येन यस्य वा तथाभूतेन, अवश्यमेव रक्षणार्हस्वदेहेन इत्यर्थः। विषरक्षापेक्षया—विषेभ्यः आत्मरक्षानुरोधेन।

(२९३) अभ्यासवर्त्तिनः,—अन्तिकस्थितस्य, निकटस्थितस्य इत्यर्थः, (“समीपे निकटासन्न…। सदेशाभ्याससविध…” इत्यमरः)। चीवरपटान्तसंयतां—कौपीनाञ्चलबद्धाम्।

(२९४) उन्मुच्यमानायाः,—निष्कास्यमानायाः, यस्याः,—मन्दाकिन्याः, प्रभालेपिनि—कान्तिव्यापिनि, लब्धावकाशे—प्राप्तावसरे, बहुदूरव्यापिनीत्यर्थः, विशदमहसि—उज्ज्वलतेजसि, महीयसि—अतिमहति, रश्मिमण्डले—किरणनिचये, विसर्पति—प्रसरति। युगपत्—सहसा, एकदैव वा।

(२९५) मुकुलितेति।—मुकुलिताः,—विकासोन्मुखा इति भावः, लताः,—वीरुधः एव, वध्वः,—स्त्रियः, नायिका इति यावत्, तासु उत्कण्ठितैः,—तत्सङ्गकामिभिरिति भावः तरुभिः,—वृक्षैः, नायकैरिति भावः, आ मूलात्—शिफाम् आरभ्य शिखरपर्य्यन्तमित्यर्थः, विकाशितम् इव—उल्लासितमिव, लताविकासधियेति भावः।

(२९६) अभिनवेति।—अभिनवं—प्रत्यग्रं, सद्य उद्धृतत्वादतिशुभ्रमिति भावः,

धावितमिव धुतपक्षपुटपटलधवलितगगनं वनसरसीहंसयूथैः, (२९७) स्फुटितमिव भरवशविशीर्य्यमाणधूलिधवलैः गर्भभेद-सूचितसूचीसञ्चयशुचिभिः केतकीवाटैः, (२९८) उद्गलित-दलदन्तुराभिः प्रबुद्धमिव कुमुदिनीभिः, (२९९) विधुतसित-सटाभारभरितदिक्चक्रैः चलितमिव केसरिकुलैः, प्रहसित-मिव (३००) दशनांशुमालाऽऽलोकलिप्यमानवनं वनदेवताभिः, विकसितमिव (३०१) शिथिलितकुसुमकोशकेसराट्टहासनिर-

यत् मृणालं—बिसं, तत्र लुब्धैः,—लोलुपैः, धुतेति।—धुतैः,—कम्पितैः, विस्तारितैरिति भावः, यद्वा,—धुतानां—कम्पितानां, पक्षपुटानां—पतत्रयुगलानां, पटलैः,—समूहैः, धवलित—श्वेतीकृतं, गगनं—नभः यस्मिन् तद्यथा तथा, वनसरसीहंसयूथैः,—आरण्यसरोवरहंसवृन्दैः, धावितमिव—विद्रुतमिव। अत्र प्रकृतानां मन्दाकिनीप्रभाणाम् अप्रकृतहंसयूथधावितत्वरूपेण सम्भावनादुत्प्रेक्षाऽलङ्कारः। एवमुत्तरत्रापि ज्ञेयम्।

(२९७) भरेति।—भरवशेन—पुष्टिवशेन, परिणतत्वेनेत्यर्थः, विशीर्य्यमाणाभिः,—विकीर्य्यमाणाभिः, धूलिभिः,—रजोभिः, परागैरिति यावत्, धवलाः,—शुभ्राः तैः, गर्भेति।—गर्भभेदेन—अभ्यन्तरस्फोटनेन, सूचितैः,—प्रकटितैः, स्फाटितैरित्यर्थः; सूचितानामिति वा सूचीनां—सूचीवत् तीक्ष्णानां शिखानां, सञ्चयैः,—समूहैः, शुचयः,—विशदाः तैः, केतकीवाटैः,—केतकीवनैरित्यर्थः, स्फुटितमिव—विकसितमिव इत्युत्प्रेक्षा।

(२९८) उद्गलितेति।—उद्गलितैः,—निर्गतैः, प्रस्फुटितैरिति यावत्, दलैः,—छदैः, दन्तुराभिः,—सञ्जातदन्ताभिरिव लक्ष्यमाणाभिः। प्रबुद्धमिव—विकसितमिव इत्युत्प्रेक्षा।

(२९९) विधुतेति।—विधुतेन—कम्पनवशात् विस्तारितेन, विधुतानामिति वा, सितसटानां—श्वेतजटानां, भारेण—भरेण, आतिशय्येनेत्यर्थः, भरितः,—आपूरितः, दिक्चक्रं,—दिक्समूहः, दिङ्मण्डलमित्यर्थः यैः तथाभूतैः, केसरिकुलैः,—सिंहवृन्दैः, चलितमिव—कम्पितमिव इत्युत्प्रेक्षा।

(३००) दशनेति।—दशनांशूनां—दन्तकिरणानां, माला—समूहः, तस्याः आलोकेन—प्रभया, लिप्यमानं—दिह्यमानं, वनम्—अरण्यं यस्मिन् तद्यथा तथा।

(३०१) शिथिलितेति।—शिथिलितानां—श्लथीभूतानां, स्फोटनातिशय्या-दिति भावः, कुसुमानां—पुष्पाणां, कोशकेसराः,—कर्णिकारकिञ्जल्काः, अभ्य-

च्छ्रं काशकाननैः, (३०२) भ्रान्तमिव सम्भ्रमभ्रमितबाल-पल्लवपरिवेशश्वेतायमानैः चमरीकदम्बकैः, (३०३) प्रस्तृतमिव स्फायमानफेनिलतरलतरतरङ्गोद्गारिणा गिरिणदीपूरेण, (३०४) अपरतारागणलाभमुदितेन उदितमिव विकचसरं चिचक्राक्रान्तककुभा पूर्णचन्द्रेण, (३०५) प्रक्षालित इव दावानलधूलिधूसरितदिगन्तो दिवसः, पुनरपि धौतानि अम्बुजल-क्लिष्टानि नारीणां मुखानि।

---

न्तरस्थकेसराः इत्यर्थो वा, अट्टहासा इव—उच्चैर्हसितानि इव, निरङ्कुशः,—निर्बाधाः यस्मिन् तत् यथा तथा, काशकाननैः,—इक्षुगन्धाख्यतृणविशेषारण्यैरित्यर्थः।

(३०२) सम्भ्रमेति।—सम्भ्रमेण—त्वराविशेषेण, भ्रमितैः,—चालितैः बाल-पल्लवपरिवेशैः,—पुच्छलोमकिसलयमण्डलैः, श्वेतायमानाः,—श्वेता इव आचरन्त तैः, [“कर्त्तुः क्यङ्—” (३।१।११ पा०) इति आचारार्थे क्यङ्] चमरीकदम्बकैः,—चमरीसञ्ज्ञकमृगविशेषवृन्दैः, भ्रान्तमिव—चलितमिव इत्युत्प्रेक्षा।

(३०३) स्फायमानेति।—स्फायमाना,—वर्द्धमाना, फेनिलाः,—डिण्डीर-मुद्गिरन्तः, तरलतराः,—अतिचञ्चलाः, ये तरङ्गाः,—ऊर्मयः, तान् उद्गिरति—उद्वमतीति तथाभूतेन, गिरिणदीपूरेण—पर्व्वतीयसरिज्जलप्रवाहेणेत्यर्थः, [“गिरिनद्या-दीनां वा” (वा०) इति पाक्षिकणत्वम्] प्रस्तृतमिव—विस्तृतमिव इत्युत्प्रेक्षा।

(३०४) अपरेति।—अपरे—अन्ये, आकाशसञ्चारितारकाभ्यः नवीनाः, तारापतित्वात् चन्द्रस्य इति भावः, तारागणाः,—नक्षत्रवृन्दानि, तेषां लाभः,—प्राप्तिः, तेन मुदितः,—प्रहृष्टः तेन, विकचेति।—विकचैः,—विकस्वरैः, मरीचीनां—मयूखानां, चक्रैः,—समूहैः, आक्रान्ताः,—आपूरिताः, हर्षातिरेकादिति भावः, ककुभः,—दिशः येन तथोक्तेन।

(३०५) प्रक्षालितः—धौतः। दावानलेति।—दावानलस्य—वनवह्नेः धूलिभिः,—भस्मभिरित्यर्थः, धूसरितः,—पाण्डुरः, दिगन्तः,—आशाप्रान्तः यस्मिन् तथाभूतः। पुनः—प्रथमं जलेन प्रक्षालितान्यपि भूयोऽपि इत्यर्थः, धौतानि—क्षालितानि अम्बुजल-क्लिष्टानि—वाष्पवर्षेण मलिनानि, मुखानीव—आननानीव। अत्र धावल्यसाम्यात् प्रकृतस्य मन्दाकिनीहारस्य अप्रकृतनारीमुखत्वेन सम्भावनात् जात्युत्प्रेक्षाऽलङ्कारः, मुखस्य बहुवाचकत्वात्।

राजा तु (३०६) मांसलैः तस्याः सम्मुखैः मयूखैः आकुलीक्रियमाणं मुहुर्मुहुः उन्मीलयन् निमीलयंश्च चक्षुः कथमपि प्रयत्नेन ददर्श (३०७) सर्व्वाशापूरणीं पङ्क्तीकृतामिव दिङ्नागकरशीकरसंहतिं, (३०८) घनमुक्तां शारदीम् इव लेखीकृतां ज्योत्स्नां, (३०९) प्रकटपदकचिह्नां सञ्चारवीथीमिव बालेन्दोः, (३१०) निश्चलीभूतां सप्तर्षिमालामिव हस्तमुक्ताम्, अभिभूतसकलभुवनभूषणभूतिप्रभवाम् ऐशानीमिव शशि-

(३०६) मांसलैः,—प्रभूतैः। तस्याः,—एकावल्याः। सम्मुखैः,—अभिमुखवर्त्तिभिः। आकुलीक्रियमाणं—व्याकुलीक्रियमाणं, प्रतिरुध्यमानमित्यर्थः, दर्शनशक्तेरुपघातादिति भावः। उन्मीलयन्—उन्मेषयन्। निमीलयन्—मुद्रितं कुर्वन्। प्रयत्नेन—प्रकृष्टचेष्टया, एकावलीप्रभाभिः दृष्टिसंरोधादिति भावः।

(३०७) सर्व्वाशापूरणीं—सर्वदिगुद्भासिनीं, सर्वदिग्व्यापिनीं तां, सर्वमनोरथसम्पादिनीञ्च, पङ्क्तीकृतां—श्रेणीक्रमेण स्थापितां, दिङ्नागेति।—दिङ्नागस्य—ऐरावतस्य, करः,—शुण्डः, तस्य शीकरसंहतिमिव – निर्गलदम्बुबिन्दुधारामिव। इयन्तु उपमा भूलोकदुर्लभस्य महाप्रमाणस्य अतिशुभ्रस्य ऐरावतस्य करान्तःस्थत्वात् दुष्प्रापत्वमहत्त्वातिशुभ्रत्वद्योतनार्था इति बोद्धव्यम्।

(३०८) घनमुक्तां—मेघावरणरहितां, निरन्तरसन्निविष्टमुक्ताफलखचिताञ्च, शारदीं—शरत्कालिकीम्, अतिविशदत्वादिति भावः, लेखीकृतां—श्रेणीकृतां, ज्योत्स्नामिव—चन्द्रिकामिव।

(३०९) प्रकटेति।—प्रकटम्—उज्ज्वलं, पदकं—मध्यमणिः, पदमेव—चरणमेव इति पदकं तत्, चिह्नं—लक्ष्म यस्याः तां, बालेन्दोः,—नवोदितस्य चन्द्रस्य, रम्यदर्शनत्वात् बालेन्दुरिति पदं प्रयुक्तं, सञ्चारवीथीमिव—सञ्चरणपद्धतिमिव, चित्ताकर्षकतया अतिशुभ्रतया च तद्गतानि मुक्ताफलानि द्वितीयाचन्द्रस्य पदविन्यासलक्ष्मीरिव शुशुभिरे इति भावः।

(३१०) हस्तमुक्तां—हस्तात्—करात्, भिन्नोरिति भाव, हस्तो नाम नक्षत्रं, तस्माच्च मुक्तां—निःसृताम्, अत्र पुस्तयोगोऽपि दृश्यते, तथा हि ज्योतिषे,—"हस्तो मूलं श्रवणः पुनर्व्वसुः मृगशिरस्तथा पुष्यः। पुम्भ्चिते च कार्य्ये पुनाम्ना शस्यः शुभदः ॥" इति। हस्ते समुदयस्य शरत्कालिकतया शशाङ्कमण्डलस्य अपूर्व्वशोभासम्पत्तये हस्तशब्दोपादानमिति ज्ञेयम्, निश्चलीभूतां—स्थिरीभूतां, सप्तर्षिमालामिव—

कलां, धवलतागुणगृहीतां कान्तिमिव निर्गतां क्षीरराशेः, (३११) अनेकमहामहीभृत्परम्पराऽऽगतां गङ्गामिव दुर्गतिहराम्, (३१२) अनवरतस्फुरिततरलांशुकां (३१३) पुरःसरपताकामिव महेश्वरभावागमस्य, घनसारशुक्लां दन्तपङ्क्तिम् इव अभिमुखस्य ईश्वरस्य, (३१४) वरमनोरथपूरणसमर्थां

---

मरीच्यादिसप्तर्षिसमूहमिव। अभिभूतेति।—अभिभूत,—निर्जित, सकलाना—सर्वेषा, भुवनाना—लोकाना, भूषणभूते,—अलङ्कारसम्पदः, प्रभाव,—उत्कर्षः यया ताम्, अन्यत्र,—अभिभूत,—निर्जित, सकलभुवनस्य—चतुर्दशलोकस्य, भूषणम्—अलङ्कारस्वरूप इत्यर्थ', महादेव इति यावत्, तस्य भूतेः,—भस्मन', धवलिमस्य इति भाव', प्रभाव यया ताम्, ऐशानीम्—ईशानस्य—शिवस्य इयमिति ता, शैवीमित्यर्थः, चन्द्रशेखरस्य शिर शेखरीभूतामिति यावत्। धवलतेति।—धवलतागुणेन—श्वैत्यधर्मेण, श्वेतवर्णतन्तुना च, गृहीता—आश्रिता, गुम्फिता च ताम्। क्षीरराशे,—दुग्धसमूहादित्यर्थ', क्षीरोदधेरिति वा।

(३११) अनेकेति।—अनेके—बहव', महान्त,—उन्नताः, श्रेष्ठाश्च, महीभृत',—पर्वता, राजानश्च, तेषा परम्परा',—धारा', ताभ्य. आगता—उपस्थिता ता, दुर्गतिहरा—दारिद्र्यहारिणी, नरकनिवारिणीच। ("दुर्गतिर्नरके नैःस्वे" इति मेदिनी)।

(३१२) अनवरतेति।—अनवरत—सतत, स्फुरिता,—स्फूर्त्तिं गता', तरलस्य—मध्यमणे, अंशुका',—किरणा, यस्या,—तरला,—चञ्चला', अंशुका,—किरणा, तरलानि—चञ्चलानि, सूक्ष्माणि वा, अंशुकानि—पटाश्च यस्या तथोक्ताम्।

(३१३) महेश्वरभावागमस्य—महेश्वरस्य भाव,—महैश्वर्यमित्यर्थ, तस्य आगम,—प्राप्ति तस्य, साम्राज्यलाभस्य इत्यर्थ, पुर सरेति।—पुर,—अग्रत, सरति—गच्छतीति पुर सरी, ["पुरोऽग्रतोऽग्रेषु सर्त्ते" (वा०) इति टः], सा चासौ पताका—वैजयन्ती चेति तामिव। अभिमुखस्य—अनुकूलस्य इति यावत्, ईश्वरस्य—प्रभो., दैवस्येति वा, घनसारशुक्ला—कर्पूरवत् धवलाम्, ("अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसञ्ज्ञः सिताभ्रो हिमवालुका॥" इत्यमर.) अन्यत्र,—घना—निरन्तरा, सारा—सारवती, दृढेत्यर्थ, सा चासौ शुक्ला—शुभ्रा चेति ता, दन्तपङ्क्तिमिव—दशनश्रेणीमिव।

(३१४) वरमनोरथपूरणसमर्था—वरः,—श्रेष्ठ., मनोरथः,—कामः, उच्चाशयेनेति यावत्, वरस्य—जामातु. मनोरथश्च, तस्य पूरणे—साधने, समर्था—दक्षा

स्वयंवरस्रजमिव भुवनश्रियः, (३१५) निजकरपल्लवावरण-दुर्लक्ष्यां (३१६) चक्षूरागविहसतिकामिव वसुधायाः, (३१७) मन्त्रकोषसाधनप्रवृत्तस्य अक्षमालामिव राजधर्मस्य, (३१८) समुद्रालङ्कारभूतां सङ्ख्यालेख्यपट्टिकामिव कुबेर-कोशस्य, पश्यन् च एतां विस्मयम् आजगाम मनसा सुचिरम्।

---

वा, भुवनश्रियः,—जयलक्ष्म्याः, राजलक्ष्म्या इति यावत्, स्वयंवरस्रज—स्वयम्—आत्मना, कन्ययेति यावत्, वरः,—वरणं, स्वपतेरिति भावः, तत्र तस्मै वा स्रज—पुष्पकुसुममाल्य, भाविपतेर्गलदेशे अर्पणार्थमिति भाव।

(३१५) निजेति।—निजाः,—स्वीयाः, कराः,—रश्मय एव, पल्लवाः,—किसलयाः, प्रभावारत्वात् दृष्टिरोधकत्वसाधर्म्याच्च इति भावः; निजः,—स्वीयः, कर-पल्लवः,—हस्तकिसलयश्च, तैः तेन च आवरणेन—आच्छादनेन, दुर्लक्ष्या—दुर्दर्शाम्।

(३१६) चक्षूरागेति।—चक्षुषः,—नेत्रस्य, रागः—प्रीतिः, तेन विहसतिका—नर्महासः ताम् इव, स्वनाथे राजनि प्रणयातिशय्यात् वसुधा करपल्लवेन निज-मुखमाच्छाद्य हारप्रभाव्याजेन विहसतीवेति भाव।

(३१७) मन्त्रेति।—मन्त्रः,—मन्त्रणा, मन्त्रिभिः सह स्वकर्तव्याकर्तव्यावधारण-मित्यर्थः, कोषः,—धनं, साधनं—हस्त्यश्वादिबलं, तत्र तदङ्गे इत्यर्थः, यद्वा,—तेन, मन्त्रादिसहायेन इत्यर्थः, प्रवृत्तः,—उद्यतः, अभीष्टसम्पादने निरत इति वा तस्य / अन्यत्र,—मन्त्रः,—देवादीनां साधनीभूत तन्त्रायुक्तः शब्दस्तोमभेदः, ("मन्त्रो वेदविशेषे स्यात् देवादीनाञ्च साधने। गुह्यवादेऽपि च पुमान्" इति मेदिनी) स एव कोषः,—अर्थसङ्घातः, ("कोषोऽस्त्री कुड्मले पात्रे ··। जातिकोषेऽर्थसङ्घाते··· ॥" इति मेदिनी) तस्य साधनाय—सिद्धिलाभाय, प्रवृत्तस्य—निरतस्य। अक्षमालामिव—जपमालिकामिव, यस्य राज्ञः समीपे एषा रत्नमाला तिष्ठति, तस्य मन्त्रादिकमप्रतिहत-वलं भवतीति तात्पर्यम्।

(३१८) समुद्रेति।—समुद्रः,—सागरः, तस्य अलङ्कारः,—भूषणं, तद्भूतां—तद्रूपत्वेन विराजमानामित्यर्थः, निखिलसागरसारस्वरूपामिति यावत्, अन्यत्र,—समुद्रः,—मुद्रया—प्रत्ययोत्पादकचिह्नविशेषेण, "शीलमोहर" इति वङ्गभाषया प्रसिद्धेनेत्यर्थः, अङ्गुलिस्थमुद्राङ्कनोपयुक्ताङ्गुरीयकचिह्नेन वा सहितश्च, योऽलङ्कारः, तद्भूता—तत्स्वरूपा, कुबेरकोशस्य—धनेश्वरभाण्डागारस्य, सङ्ख्यालेख्यपट्टिकामिव—सङ्ख्या—एतावन्ति रत्नानि अस्मिन् कुबेरकोशे सन्तीति गणना, तस्याः लेख्यपट्टिका—"पाट्टा" इति वङ्गभाषया

आचार्य्यस्तु ताम् (३१९) उद्धृत्य बबन्ध बन्धुरे स्कन्धभागे भूपतेः। अथ नरपतिरपि प्रीतिम् उपदर्शयन् प्रत्यवादीत्,—"आर्य्य! रत्नानाम् ईदृशानाम् अनर्हाः प्रायेण पुरुषाः। तपःसिद्धिः इयमार्य्यस्य देवताप्रसादो वा। के च वयम् इदानीम् आत्मनोऽपि? किमुत ग्रहणस्य प्रत्याख्यानस्य वा? (३२०) दर्शनात् प्रभृति प्रभूतगुरुगुणगणहृतेन हृदा न परवन्तो वयम्। (३२१) सङ्कल्पितम् इदम् आ मरणात् आर्य्योपयोगाय शरीरम्। अत्र कामचारो वः कर्त्तव्यानाम्" इति।

---

प्रसिद्धा लिपिपत्रिका तामिव। एताम्—एकावलीम्। अत्रैकस्याः एव एकावल्याः साधर्म्यसाम्यबोधकानां श्लेषघटितानां भूयसामुपमानानां सन्निवेशात् श्लेषसङ्कीर्णा मालोपमाऽलङ्कारः।

(३१९) उद्धृत्य—उत्तोल्य। बन्धुरे—नतानते, उपस्कन्धोपमे इत्यर्थः, रम्ये वा, ("बन्धुरं मुकुटे पुंसि। ...त्रिषु स्याद्रम्यनम्रयोः॥" इति मेदिनी)। अनर्हाः,—अयोग्याः। तपःसिद्धिः,—तपश्चर्य्यायाः साफल्यरूपा इत्यर्थः। इयम्—एकावली। देवताप्रसादः,—देवानुग्रहः, तपस्याप्रभावेण देवानुग्रहेण वा इयमार्य्येण लब्धा इति निष्कर्षः। के च वयम् आत्मनः,—स्वस्य, स्वदेहस्य इत्यर्थः, प्रभवः इति शेषः, न केऽपि वयमित्यर्थः, प्रत्याख्यानस्य—निराकरणस्य, अग्रहणस्येत्यर्थः।

(३२०) दर्शनात्—अवलोकनात्, भवत इति शेषः, [अत्र प्रभृतिशब्दयोगे पञ्चमी, "कार्त्तिक्याः प्रभृतीति भाष्यप्रयोगात्" इति दीक्षितोक्तेः]। प्रभूतेति।—प्रभूतानां—बहूनां, गुरुगुणानाम्—आचार्य्यगुणानाम्, यद्वा,—गुरूणां—महतां, गुणानां—दयादीनां, गणेन—समूहेन, हृतम्—आक्षिप्तं तेन। परवन्तः,—पराधीनाः, भवदायत्ता इति भावः।

(३२१) सङ्कल्पितं—मनसा निर्द्धारितम्। आ मरणात्—मृत्युकालपर्य्यन्तं, यावज्जीवमित्यर्थः, ["पञ्चम्यपाङ्परिभिः" (२।३।१० पा०) इति पञ्चमी] आर्य्योपयोगाय—आर्य्यस्य—मान्यस्य भवतः, उपयोगः,—व्यवहारः, इष्टकार्य्यसाधनमित्यर्थः तस्मै, आर्य्यं सुप्रयोक्तुमिति भावः, ["तुमर्थाच्च भाववचनात्" (२।३।१५ पा०) इति चतुर्थी] भविष्यतीति शेषः। अत्र—शरीरे इत्यर्थः, वः,—युष्माकं, कर्त्तव्यानां—

(३२२) समतिक्रान्ते च कियत्यपि काले, गते च एकावलीवर्णनाऽऽलापे लोकस्य, अनन्तरं (३२३) लब्धविश्रम्भा राज्यश्रीः ताम्बूलवाहिनीं पत्रलताम् आहूय उपांशु किमपि कर्णमूले शनैः समादिदेश। दर्शितविनया च पत्रलता पार्थिवं व्यज्ञापयत्,—"देव! देवी विज्ञापयति,—'न स्मरामि आर्य्यस्य पुरः कदाचिदुच्चैः वचनमपि, कुतो विज्ञापनम्। इयं हि (३२४) शुचाम् असह्यता व्यापारयन्ती हतदैवदत्तादेशा (३२५) शिथिलयति विनयम्। अबलानां हि पतिरपत्यं वा (३२६) अवलम्बनम्। (३२७) उभयविकलानान्तु दुःखा-

---

कार्य्याणां, कामचार,—यथेच्छवृत्तित्वम्, अहं मदीयेन शरीरेण भवत यावदिष्टं मनोरथ सम्पादयिष्यामीति भाव, मद्देहे तवैव सम्पूर्णाधिकार इति फलितम्।

(३२२) समतिक्रान्ते—गते। लोकस्य—तत्रस्थस्य जनस्य, एकावलीवर्णनाऽऽलापे—एकावल्या,—मन्दाकिन्या', वर्णनं व—विवरणमेव, आलापः,—प्रसङ्ग. तस्मिन्, [ "यस्य च भावेन" (२।३।३७ पा०) इति सप्तमी ] गते—निवृत्ते इत्यर्थं।

(३२३) लब्धविश्रम्भा—प्राप्तविश्वासा, जनान्तराभावात् विगतसाध्वसा इति भाव। उपांशु— गूढम्। पार्थिव —राजान, हर्षमिति यावत्। देवी—राज्यश्री। न स्मरामीति।—ज्येष्ठस्य ते समक्षम् अन्येन केनचित् समम्पि उच्चै भाषणमहं प्राक् कृतवतीति इदानीं स्मर्त्तुं न शक्नोमि, तव पुर. साक्षात् भाषणन्तु दूरे एव तिष्ठतु इति निष्कर्ष'। आर्य्यस्य—मान्यस्य, भवत इत्यर्थं, [ "षष्ठ्यतसर्थप्रत्ययेन" (२।३।३० पा०) इति षष्ठी ]।

(३२४) शुचां—शोकानाम्, असह्यता—दु सहता। व्यापारयन्ती—विज्ञापयितुं नियोजयन्तीत्यर्थं। हतेति।—हतेन—दग्धेन इति यावत्, दैवेन—भाग्येन, दत्त,—अर्पित इत्यर्थः, आदेशः,—अनुमतिर्यस्यै तथाभूता, दग्धभाग्यायत्ता इत्यर्थं।

(३२५) शिथिलयति—शिथिल करोति, ह्रासयति इत्यर्थ., यतः भवतोऽग्रतः आलपितु प्रवर्त्तते इति भाव.।

(३२६) अवलम्बनम्—आश्रयः।

(३२७) उभयविकलानान्तु—उभाभ्या—पत्या पुत्रेण चेत्यर्थः, विकलाः,—

ऽनलेन्धनायमानं प्राणितम् अश्लीलत्वमिव केवलम्। (३२८) आर्य्यागमनेन च क्वतोऽपि प्रतिहतं मरणप्रयत्नः। अतः (३२९) काषायग्रहणाभ्यनुज्ञया अनुगृह्यतामयम् अपुण्यभाजनं जनः' इति"। जनाधिपस्तु तदाकर्ण्य तूष्णीमेव अतिष्ठत्।

अथ आचार्य्यः (३३०) सुधीरम् अभ्यधात्,—"आयुष्मति! शोको हि नाम पर्य्यायः पिशाचस्य, रूपान्तरम् आक्षेपस्य, (३३१) तारुण्यं तमसः, विशेषणं विषस्य।

---

विरहिता तासाम्, अवीराणान्तु इत्यर्थः, पतिपुत्रविहीनानान्तु इति भावः, [ "उभादुदात्तो नित्यम्" (५।२।४४ पा०) इति अयच्। "उभशब्दात् वृत्तिविषये नित्यमयच् स्यात् स्वार्थे, तेन उभयतः, उभयत्र "उभयपक्षविनीतनिद्राः" इत्यादि सिद्धम्" इत्याहुः तत्त्वबोधिनीटीकाकृतः ] दुःखेति।—दुःखमेव—मनःपीडा एव, अनलः,—अग्निः तस्य इन्धनं—काष्ठं, तदिवाचरत् दुःखानलेन्धनायमानं, शोकानलदाह्यभूतमित्यर्थः; [ "कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति क्यङि शानचि च रूपम् ] प्राणितं—जीवितं, प्राणधारणमित्यर्थः, अश्लीलत्वमिव—धार्ष्ट्यमिव, निर्लज्जत्वमेव इत्यर्थः, विधवायाः जीवनं केवलं दुःखायैव, लोकापवादाय च इति भावः।

(३२८) आर्य्यागमनेन—आर्य्यस्य—भवतः, आगमनेन—उपस्थित्या, मरणप्रयत्नः,—मृत्युचेष्टा इति यावत्, प्रतिहतः,—व्याहतः।

(३२९) काषायेति।—कषायेण रक्तं काषायं—रक्तवसनमित्यर्थः, भिक्षुधार्य्यमिति भावः, [ "तेन रक्तं रागात्" (४।२।१ पा०) इत्यण् ] तस्य ग्रहणं—धारणं, प्रव्रज्याऽवलम्बनमित्यर्थः, तत्र अभ्यनुज्ञा—अनुमतिः तया, अपुण्यभाजनं—पापीत्यर्थः। जनाधिपः,—हर्षः। तूष्णीं—मौनी, निर्वागित्यर्थः।

(३३०) सुधीरं—प्रभूतधैर्य्यान्वितं यथा स्यात् तथा, धैर्य्यावलम्बनपूर्व्वकमित्यर्थः, अतिस्थिरं वा, मन्दं मन्दमित्यर्थः, ("धीरो धैर्य्यान्विते स्वैरे बुधे क्लीवन्तु कुङ्कुमे" इति मेदिनी) पिशाचस्य—नीचाधमस्य देवयोनिविशेषस्य, अतिनिष्करुणत्वादिति भावः, पर्य्यायः,—नामान्तरम्, आक्षेपस्य—वातव्याधिविशेषस्य, अचेतनतया भूविलुण्ठनलक्षणस्य इति भावः, रूपान्तरम्—अन्यविधं रूपम्।

(३३१) तारुण्यं—यौवनं, तमसः,—अन्धकारस्य, सर्वाच्छादकत्वादिति भावः; विशेषणं—विशेषः, भेदमात्रमित्यर्थः, मोहोत्पादकत्वादिति भावः।

( ३३२ ) अनन्तकः प्रेतनगरनायकः अयम्, अनिर्वृतिधर्म्मा दहनः अयम्, अक्षयो राजयक्ष्मा अयम्, ( ३३३ ) अलक्ष्मी-निवासो जनार्द्दनः अयम्, अपुण्यप्रवृत्तः क्षपणकः अयम्,

( ३३२ ) अय—शोकः, अनन्तकः,—अन्त—विनाशं करोति इति अन्तकः, [ तत्करोतीत्यर्थे अन्तशब्दात् णिच् ण्वुल् ] स न भवतीति अनन्तकः,—अनिहन्ता इत्यर्थः, प्रेतनगरनायकः,—यमः, अन्तक इति यावत्, अत्र अन्तकर्त्तृत्वराहित्यं प्रेतपुरनायके नितान्तमसम्भवदपि शोकस्य अन्तकादपि भीषणताद्योतनाय अनन्तकत्वरूपमधिकं वैशिष्ट्यमुपात्तं, तथा च अन्तकः केवलमन्तं जनयति, शोकस्तु तदजनयन्नपि दहति, इति शोके अन्तकतादात्म्याध्यासात् रूपकं, ततश्चाधिकारूढवैशिष्ट्यरूपकमलङ्कारः— "अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत्" लक्षणात्, विशेषणश्लेषाच्च श्लिष्टमित्यवगन्तव्यम्। शोकपक्षे तु—अनन्तकः,—अनन्तम्—अशेषं, पाररहित्यमित्यर्थः, कायति—शब्दायते, कथयतीत्यर्थः इति अनन्तकः,—असीम इत्यर्थः। अनिर्वृतिधर्म्मा—अनिर्वृतिः,—अनिर्वाणः, धर्म्मः,—स्वरूपं यस्य सः, सदैव प्रज्वलन्नित्यर्थः, [ "धर्म्मादनिच् केवलात्" ( ५।४।१२४ पा० ) इत्यनिच् ] दहनः,—अग्निः, अत्र शोके दहनतादात्म्याध्यासात् रूपकं, निर्वाणराहित्यञ्च दहने अत्यन्तासम्भवि इति तत्र तदारोपात् अधिकवैशिष्ट्य-रूपाच्च, तथा च दहनः प्रज्वलन्नेव केवलं दहति, निर्वाणश्चेत्तु दहनात् विरमति, शोकस्तु सदैव समनस्कं देहं व्यथयति, न तु कदाचिदुपशाम्यतीति शोकस्य दहनादपि भीषणत्वद्योतनात् पूर्ववदलङ्कारः। शोकपक्षे तु—अनिर्वृतिः,—अस्वास्थ्यम्, असुखमिति यावत्, ( "निर्वृतिः स्वस्थितावस्तगमने च सुखे स्त्रियाम्" इति मेदिनी ) धर्म्मः यस्य तथाभूतः, शोकस्य सदैव सन्तापकत्वादिति भावः। अय—शोकः, अक्षयः—नास्ति क्षयः—नाशः यस्मात् तथोक्तः, क्षयरहितः इत्यर्थः, राजयक्ष्मा—क्षयरोगविशेषः, तत्पक्षे तु—नास्ति क्षयो यस्य तथोक्तः, यावज्जीवस्थायी इत्यर्थः। अत्रापि क्षयराहित्यं राज-यक्ष्मणि अत्यन्तमसम्भवदपि शोकस्य राजयक्ष्मणोऽपि भीषणत्वद्योतनाय अक्षयत्वरूप-मधिकं वैशिष्ट्यमुपात्तम्, तथा च राजयक्ष्मा केवलं स्वाक्रान्तमेव क्षिणोति, शोकस्तु सर्वानेव स्वपरिजनान् युगपत् विनिहन्ति इति शोके राजयक्ष्मतादात्म्याध्यासात् पूर्व-वदलङ्कारः।

( ३३३ ) अलक्ष्मीनिवासः,—अलक्ष्म्याः,—निर्ऋतेः, "अलक्ष्मी" इति ख्यातायाः लक्ष्मीविरुद्धायाः इत्यर्थः, निवासः,—आश्रयः, जनार्द्दनः,—विष्णुः, [ "नन्दिग्रहि—" ( ३।१।१३४ पा० ) इति ल्युः ]। अत्र लक्ष्मीनिवासत्वाभावस्य जनार्द्दने अत्यन्तासम्भ-

( २२४ ) अप्रतिबोधो निद्राप्रकारः अयम्, अनलसधर्म्मा सन्निपातः अयम्, ( २२५ ) अशिवसहचरो विनायकः

वात् शौकस्य यदत्यन्तमुपसेविततया ततोऽपि जनार्द्दनत्वपीतनाय अधिकं वैशिष्ट्य-मुपात्तमिति पूर्ववदलङ्कारः। शोकपक्षे तु—अलक्ष्मीनिवासः इति शोकस्यालङ्गल-विलासमूलिसम्भूततया बोध्यम्, अलक्ष्मीवन्तो हि केवल शोकैरभिभूयन्ते इति तात्पर्य्यम्। जनार्द्दन इति।—जनान्—लोकान्, अर्द्दयति—पीडयति इति व्युत्पत्त्या जनपीडक इत्यर्थः। अपुण्यप्रवृत्तः,—पापप्रवृत्त, पापरत इत्यर्थः, क्षपणकः,—नग्नाटकः। अत्रापि अपुण्यप्रवृत्तत्व क्षपणके नितान्तमसम्भवदपि शोके तत्सम्बन्धतदारोपात् पूर्ववदलङ्कारः। शोकपक्षे तु—अपुण्यप्रवृत्तः,—अपुण्येन—असुकृतेन हेतुना, प्रवृत्तः,—आपतित इत्यर्थः, क्षपणकः,—क्षपयति—नाशयति, देहमिति व्युत्पत्त्या देहनाशकः इत्यर्थः।

( २२८ ) अप्रतिबोधः,—अपुनर्जागरः, निद्राप्रकारः,—निद्राभेदः, निद्राऽनन्तरं पुनः जागरणस्य व्यवस्थितत्वात् अप्रतिबोधत्ववैशिष्ट्यं निद्राया न सम्भवति इति तत्र तदारोपात् अत्रापि पूर्ववदलङ्कारः। शोकपक्षे तु—अप्रतिबोधः,—प्रबोधाप्रतिविधेयः, सान्त्वनावाक्येनानपनेय इत्यर्थः, निद्राप्रकारः,—निद्रा प्रकिरति—निरस्यतीति तथोक्तः, शोकस्य निद्राऽपहारकत्वादिति भावः। अनलसधर्म्मा—अनलसः,—"शक्तस्य चाप्यनु-त्साहः कर्म्मस्वालस्यमुच्यते" इत्युक्तलक्षणेन आलस्येन वर्ज्जितः, धर्म्मः,—स्वभावो यस्य तादृशः, सन्निपातः,—विकृताना वातपित्तकफाना दोषत्रयाणा सम्यक् मिलनजनितः व्याधिविशेषः, सन्निपाते हि तन्द्रामोहादिभिराक्रान्ततया निश्चेष्टत्वेन कर्म्मसु अशक्तत्वात् अनलसधर्म्मेति विशेषणं न युज्यते इति तत्र तदारोपात् पूर्ववदलङ्कारः। शोकपक्षे तु—अनलसधर्म्मा—अनलसः धर्म्मो यस्य तादृशः, अनलेन—अग्निना सधर्म्मा—सदृशः इति च, सदैव गात्रलुण्ठनादिकरणात् अन्तर्दाहकत्वाच्च इति भाव, [ "धर्म्मादनिच् केवलात्" (५।४।१२४ पा०) इत्यनिच्] सन्निपातः,—सम्यक् निपातयति—भूमौ निक्षिपति, घातयति वा इति व्युत्पत्त्या मारक इत्यर्थः।

( २२५ ) अशिवसहचरः,—अशिवम्—अमङ्गलम्; यद्वा,—अशिवः,—शिव-व्यतिरिक्तः, तस्य सहचरः,—सहायः, विनायकः,—गणपतिः, अमङ्गलनाशके शिव-तनये वा गणपतौ अशिवसहचरत्ववैशिष्ट्यमेकान्तासम्भवदपि शोके तत्सम्बन्धतदारोपात् पूर्ववदलङ्कारः। शोकपक्षे तु—अशिवसहचरः,—अशुभसहायः, तस्यामङ्गलसम्बन्धत्वा-

अयम्, (२२६) अबुधसेवितो ग्रहवर्गः अयम्, अयोगसमुत्थो ज्योतिष्प्रकारः अयम्; (२२७) स्नेहात् वायुप्रकोपः, मानसात् अग्निसम्भवः, (२२८) आर्द्रभावात् रजःक्षोभः रसात्

---

हिति बोध्यं, विनायकः,—विघ्नः, ("विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ" इति मेदिनी); यद्वा,—विशेषेण नयति—मारयति यः सः, मारक इत्यर्थः।

(२२६) अबुधसेवितः,—बुधः,—सौम्यग्रहः, तेन सेवितः,—युक्तः न भवति इति तथोक्तः, बुधवर्ज्जितः इत्यर्थः, ग्रहवर्गः,—ग्रहाः,—सूर्य्यादयः, ("ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे। सूर्य्यादौ पूतनादौ च सैंहिकेयोपरागयो.॥" इति मेदिनी) तेषां वर्गः,—समूहः। अत्रापि ग्रहवर्गे बुधविहीनत्वस्यासम्भवात् पूर्ब्बवदलङ्कारः। शोकपक्षे तु—अबुधे,—मूर्खैः, सेवितः,—शीलित इत्यर्थः, ग्रहाणा—व्यसनाना, वर्गः अज्ञानिनामेव शोकोदयात् इति भावः। अयोगेति।—अयोगः,—चित्तवृत्तिनिरोधाभावः, तेन समुत्थः,—उत्पन्नः, ज्योतिष्प्रकारः,—परं ज्ञानम्, अयोगे ज्योतिषः समुदयस्या—सम्भवात् पूर्ब्बवदलङ्कारः, अनेकार्थाभिधायित्वेन च सर्व्वत्र श्लेषानुप्राणितमेतद्दित्यवधेयम्। शोकपक्षे तु—अयोगेन—अननुकूलदैवेन, समुत्थः,—समुद्भूतः, यद्वा,—योगे—प्रियसमागमे सति, न समुत्तिष्ठति इति अयोगसमुत्थः, ज्योतिष्प्रकारः,—अग्निस्वरूपः, दाहकतया इति भावः।

(२२७) स्नेहात्—पुष्टिहेतुभूतघृतादेः, वायुप्रकोपः,—औद्धत्य, वातप्रशमकात् घृतादिस्नेहात् वायुप्रकोप इति विरोधः। स्नेहात्—प्रणयात्, वायुप्रकोपः,—उन्मादरोगस्वरूप इत्यर्थः, इति तत्परिहारः। शोकपक्षे—स्नेहात्—प्रणयजन्यत्वात्, वायुप्रकोपपक्षे च स्नेहात् पुष्टिहेतुघृतादिजन्यत्वाच्च श्लेषानुप्राणितोऽयमित्यवधेयम्। एवमुत्तरत्रापि। मानसात्—तदाख्यात् देवसरसः, अग्निसम्भवः,—समुद्भूताग्निस्वरूपः, अग्निनिर्वाणहेतुभूतात् जलात् अग्निसम्भवः इति विरोधः, मानसात्—चेतसः, अग्निसम्भवः,—अनलोत्पत्तिः, शोकस्य अन्तर्दाहकत्वात् मनःसमुद्भवत्वाच्च इति परिहारः। शोकपक्षे—मानसात्—चेतसः, अग्निसम्भवपक्षे च मानसात्—देवसरोविशेषजायमानत्वाच्च श्लेषानुप्राणितोऽयमित्यवधेयम्।

(२२८) आर्द्रभावात्—सरसत्वात्, आर्द्रीभूतस्थलादपीत्यर्थः, रजःक्षोभः,—रजसा—धूलीनां, क्षोभः,—प्रसरः, धूलीप्रसरनिवारकात् जलाद्यार्द्रवस्तुनः रजःक्षोभः इति विरोधः, आर्द्रभावात्—वात्सल्यात्, रजःक्षोभः,—रजसः,—गुणविशेषस्य, क्षोभः, विजृम्भित, शोकस्य रजोगुणकार्य्यत्वादसौ रजोगुणविकारस्वरूपः,

अभिशोषः, रागात् कालपरिणामः। (३३९) तत् अस्य अजस्रास्रस्राविणो हृदयमहाव्रणस्य, (३४०) बहुलदोषान्ध-

---

इति परिहारः, शोको हि चेतस आर्द्रभावादेव जायते, न तु काठिन्यात् इति भावः। अत्र साध्यस्य रजःक्षोभस्य साधनस्य आर्द्रभावस्य इत्युभयस्यापि श्लिष्टत्वम्। रसात्—रसायनात्, पुष्टिकारकादिति भावः, जलादित्यर्थो वा, अभिशोषः,—शरीरादिशोषणम् इति विरोधः; रसात्—अनुरागात्, अभिशोषः,—शोषणम्, आत्मशोषणकारकः इत्यर्थः इति परिहारः, रसात्—रसायनात्, अभिशोषः,—शरीरशोषणं, तथा रसात्—अनुरागात्, अभिशोषः,—प्रणयिनि शुष्कता जायते इति रसभूतस्य हेतोः अभिशोषरूपसाध्यस्य च द्वयोरपि श्लिष्टत्वात् श्लेषानुप्राणितोऽयमिति ज्ञेयम्। रागात्—लौहित्यात्, कालपरिणामः,—कालः,—कृष्णः, कृष्णवर्ण इत्यर्थः, परिणामः,—परिणतिः इत्यर्थः यस्य तथाभूतः, लौहित्यात् कृष्णवर्णता इति विरोधः, रागात्—अत्यासङ्गात्, कालपरिणामः,—कालः,—यमः, परिणामः,—परिणतिः, शेषफलमिति यावत् यस्य तथोक्तः, जीवननाश चरमफलमस्येति भावः, इति परिहारः। अत्रापि रागस्य अत्यासङ्ग-लौहित्यरूपानेकार्थाभिधायित्वात् हेतोः साध्यीभूतकालपरिणामस्यापि जीवननाश-कृष्णवर्णताप्राप्तिरूपद्व्यर्थाभिधायित्वात् श्लिष्टत्वेन पूर्ववत् श्लेषमूलकोऽयमिति ज्ञेयम्।

(३३९) "तत् अस्य" इत्यस्य "आगतम्" इत्यग्रेण सम्बन्धः। अस्य—शोकस्य। अजस्रास्रस्राविणः,—अजस्रम्—अनवरतम्, अस्रम्—अश्रु, शोणितञ्च, ("अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते" इति मेदिनी) स्रावयति—स्रारयति, स्रवति च—क्षरति च इति तथोक्तस्य, [स्रवतेः "नन्दिग्रहि—" (३।१।१३४ पा०) इति णिनि। "अजस्रास्रस्राविणः" इत्यत्र "अजस्रस्राविणः" इति पाठान्तरं दृश्यते, तत्र शोकपक्षे—अजस्रं स्रावयति, अश्रूणि इति शेषः यः तथोक्तस्य, व्रणपक्षे च—अजस्रं स्रवति, रुधिरादिकमिति शेषः यः तथोक्तस्य, इति णिजर्थघटिताघटितरूपेण व्याख्येयम्, शोकस्य अश्रुस्रावकर्तृत्वाभावादिति दिक्] हृदयेति।—हृदयस्य—चेतसः, महत्—महत्, व्रणः,—क्षतं तस्य, तत्स्वरूपस्येत्यर्थः, "व्रणोति यस्मात् रूढेऽपि व्रणवास्तु न नश्यति। आ देहधारणात् तस्मात् व्रण इत्युच्यते॥" इति व्रणनिरुक्त्या हृन्मर्मच्छेदकस्य तस्य यावज्जीवमनपायित्वात् व्रणत्वमिति भावः।

(३४०) बहुलेति।—बहुलदोषाः,—प्राज्यदूषणानि, बहवः अपगुणा इत्यर्थः, प्रासक्तय इति यावत्, कृष्णपक्षस्य रात्रयश्च, ("बहुला नीलिकायाः... । पुंस्यग्नौ कृष्ण-

कारलब्धप्रवेशप्रसरस्य प्राणतस्करस्य, (३४१) शून्यताहेतोः महाभूतग्रामघातकस्य, (३४२) सकलविग्रहक्षपणदक्षस्य दोषचक्रवर्त्तिनः, (३४३) कार्श्यश्वासप्रलापोपद्रवबहलस्य दीर्घरोगस्य, (३४४) असद्ग्रहस्य सकललोकक्षयधूमकेतोः, जीवि-

---

पक्षे च वाच्यवत् प्रान्यलक्षणयोः ॥" "दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि च" इत्युभयत्रापि मेदिनी ) त एव अन्धकाराः,—मोहाः, अज्ञानानि इति यावत्, रात्रिषु ये अन्धकाराः,—तमांसि इति च, तैः लब्धः,—प्राप्तः, प्रवेशप्रसरः,—अभ्यन्तरागमनावकाशः येन तथाभूतस्य, प्राणतस्करस्य—जीवनापहारिण इत्यर्थः, प्राणविघातकचौरस्वरूपस्य इति यावत् ।

(३४१) शून्यताहेतोः,—किंकर्त्तव्यताविमूढताकारणस्य ; यद्वा,—शून्यता—जनाभाववत्ता, निर्जनता इत्यर्थः, हेतुः,—उद्बोधकारणं यस्य तथाभूतस्य, एकाकितायां शोकवृद्धित्वादिति भावः, महेति ।—महाभूतग्रामाणां—महतां—प्रभूतानां, सर्वेषामिति यावत्, भूतग्रामाणां—प्राणिसमूहानां, मानवादीनामित्यर्थः, घातकः,—नाशकः तस्य, तत्स्वरूपस्येत्यर्थः, यद्वा,—महाभूतग्रामाणां—क्षित्यादिपञ्चमहाभूतानां, घातकस्य, प्रबलशोकावेगेन कारणभूतस्य देहस्य नाशात् कारणभूतस्य पञ्चमहाभूतस्य क्षित्यादिषु बाह्यपञ्चभूतेषु लयादिति भावः ।

(३४२) सकलेति ।—सकलानां—सर्वेषां, सकला वा, विग्रहाः—शरीराणि, विरोधाश्च, सङ्ग्रामा इति यावत्, ("विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम्" इति मेदिनी ) तेषां क्षपणं—क्षयकरणं, तत्र दक्षः,—निपुणः तस्य, दोषचक्रवर्त्तिनः,—दोषाणां—कामक्रोधादिरिपूणां, चक्रे—मण्डले, वर्त्तते—मुख्यतया तिष्ठतीति तथोक्तस्य, निखिलदोषाधिराजस्वरूपस्य इति भावः ।

(३४३) कार्श्येति ।—कार्श्यं—कृशता, शोकेन रोगेण च इति भावः, श्वासः,—दीर्घनिश्वासः, व्याधिविशेषश्च, प्रलापः,—अनर्थकं वचनं, ("प्रलापोऽनर्थकं वचः" इत्यमरः ) शोकेन बुद्धिविपर्ययात्, व्याध्यारम्भकदोषकोपाच्च इति भावः, ते एव उपद्रवाः,—उत्पाताः, व्याधेरुत्तरकालजा अन्ये व्याधयश्च, तैः बहलः,—पूर्णः तस्य ; उपद्रवलक्षणमुक्तं वैद्यके,—"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः । उपक्रमविरोधित्वात् स ह्युपद्रव उच्यते ॥" इति ; दीर्घरोगस्य—दीर्घकालभोग्यरोगविशेषस्वरूपस्य, क्षयादितुल्यस्येति यावत्, आ देहधारणादस्यानपायित्वादिति भावः ।

(३४४) असद्ग्रहस्य—असति—असाधुविषये, निन्दनीये आत्महत्यादौ इति

तापहारदत्तस्य अचणरुचे: अनभ्रवज्रपातस्य, (२४५) स्फुर-दनवद्यविद्याविद्युदुद्योतमानानि, गहनग्रन्थग्रन्थिगूढगर्भग्रहण-गम्भीराणि, (२४६ भूरिकाव्यकथाकठोराणि, बहुशास्त्रो-द्वहनवहन्ति, विदुषामपि हृदयानि न अलं सोढुम् आपातम्;

भाव, ग्रह:,—आवेश: यस्मात् तथाभूतस्य, उत्पातसूचकदुष्टग्रहस्य च, सकलेति।——सकलाना—सर्वेषा, लोकाना - प्राणिना, चये—नाशे, धूमकेतु',—उपग्रहविशेष', अग्निश्च तस्य तद्रूपस्य इत्यर्थ, "उपप्लवाय लोकाना धूमकेतुरिवोत्थित" इति कुमार-सम्भवे कालिदास:। जीवितापहारदत्तस्य—जीवनचयकरणपटो', उभयत्रापि तुल्यम्, 'अचणरुचे',—नास्ति चणमपि—मुहूर्त्तमपि रुचि,—अनुराग, करणीयविषयेषु इति भाव, रुचि:,—आहाराभिलाषो वा यस्मिन् तथोक्तस्य, चणरुचि,—चणप्रभा, विद्युदित्यर्थ:, सा न भवति इति तस्या, अविद्युतश्च, विद्युद्विरहितस्येत्यथ., अनभ्रवज्रपातस्य—मेघासम्बद्धाशनिपतनस्वरूपस्य इति यावत्, अस्य—शोकस्य इति पूर्वेण सम्बन्ध.। अत्र श्लिष्टविशेषणोपहिताना हृदयमहाव्रणादीनाम् अनभ्रवज्रपातान्ताना शोके तादात्म्याध्यासात् श्लिष्ट मालारूपकमलङ्कार:।

(२४५) स्फुरदिति।—स्फुरन्ती—राजमाना, अनवद्या—अनिन्द्या, विद्या—ज्ञानम् एव, विद्युत्—सौदामनी, शोकान्धकाराच्छन्नहृदये तस्या विद्युवत् चणिक-स्फुरणादिति भाव', तया उद्योतमानानि—उद्भासमानानि। गहनेति।—गहनानां—निबिडाना, कठिनानामित्यर्थ, दुष्प्रवेशानामिति यावत्, ग्रन्थाना—श्लोकाना, ये ग्रन्थय:,—कूटाश्च, दुर्बोधतमप्रदेशा इत्यर्थ, तेषा गूढा,—रहस्या, गुप्ता इति यावत्, गर्भा,—अन्तर्गता भावा, पदार्था इत्यर्थ:, तेषा ग्रहणेन—अवबोधेन, गम्भीराणि—गाम्भीर्यवत्तया अ।बिलानि, भाववन्तीत्यर्थ:।

(२४६) भूरीति।—भूरिभि',—बह्वीभि, काव्यकथाभि:,—कविरचित-सुभाषितावलिभि, कठोराणि—कठिनानि, तत्तत्काव्यनिहितबहुशोचनीयव्यापारश्रवण-पठनाभ्यामिति भाव:, यद्वा,—विविधकाव्यकथाभि समुद्भासिततया सुदृढीकृततया च सहसा केनापि भेत्तु द्रवीकर्त्तु वा अशक्यानीत्यर्थ:। बहन्तीति। बहूना—प्रभूताना, शास्त्राणा—दर्शनादीनाम्, उद्वहनेन—धारणेन, आयत्तीकरणेनेत्यर्थ:, वहन्ति—प्रशस्तानीत्यर्थ.। आपातम्—आपतनम्, आक्रमणमित्यर्थ, अस्येति पूर्वेणान्वय:, सोढ—सहितुं, सह्यं कर्त्तुमिति यावत्, न अलं—न चमाणीत्यर्थ:।

(३४७) किमुत नवनवमालिकाकुसुमकोमलानां सरसबिसतन्तुदुर्बलकम् अबलानां हृदयम् ।

एवं सति (३४८) सत्यव्रते ! वद, किमत्र क्रियते ? कतम उपालभ्यते ? कस्य पुर उच्चैः आक्रन्द्यते ? हृदयदाहि दुःखं वा ख्याप्यते ? सर्वम् (३४९) अक्षिणी निमील्य सोढव्यम् अमूढेन मर्त्यधर्मणा । पुण्यवति ! पुरातन्यः स्थितय एताः केन शक्यन्तेऽन्यथा कर्तुम् ? (३५०) संसरन्त्यो नक्तन्दिवं द्राघीयस्यः

---

(३४७) किमुत—किं पुनः, नवेति ।—नवा—अभिनवमुद्गता, या नवमालिका—सप्तला, पुष्पवृक्षविशेष इत्यर्थः, तस्याः कुसुमानि—पुष्पाणि इव, कोमलाः,—सुकुमाराः तासाम् । सरसेति ।—सरस,—आर्द्रः, यः बिसतन्तु,—मृणालसूत्रं, तद्वत् दुर्बलकम्—अनुकम्पार्हम्, अतीव दुर्बलमित्यर्थः, [ "अनुकम्पायाम्" (५।३।७६ पा०) इति कन् ] किञ्चिदपि पीडनासहिष्णु इति यावत् ।

(३४८) सत्यव्रते ।—सत्यम्—अखण्डितमिति भाव, व्रतं—चारित्रमिति भावः यस्याः तत्सम्बुद्धौ, यद्वा,—सत्य—सत्याचरणमेव, व्रत—नियमः, दीक्षा वा यस्याः तत्सम्बुद्धौ । कतमः,—को जन इत्यर्थ, [ "वा बहूनां जातिपरिप्रश्ने डतमच्" (५।३।९३ पा०) इति डतमच् ] उपालभ्यते ?—तिरस्क्रियते ? आक्रन्द्यते ?—रुद्यते ? हृदयदाहि—मन सन्तापकरम् । ख्याप्यते—कथ्यते, ज्ञाप्यते इति यावत् ।

(३४९) मर्त्यधर्मणा—मरणधर्मवता, मानवेन इत्यर्थः, [ "धर्मादनिच् केवलात्" (५।४।१२४ पा०) इत्यनिच् ] अमूढेन—शोकाविह्वलेन सता इत्यर्थ, शोकेन नात्यभिभूयेति यावत्, [ "अमूढेन" इत्यत्र "मूढेन" इति पाठे,—मूढेन—अज्ञेन, शोकविवशेनेत्यर्थः ] अक्षिणी—नेत्रे, निमील्य—मुद्रयित्वा, सोढव्य—सहनीयम । एताः,—वक्ष्यमाणाः जन्मजराद्या इत्यर्थः, पुरातन्यः,—चिरन्तन्यः, अनादिकालादागच्छन्त्यः इत्यर्थ, स्थितयः,—मर्य्यादाः, अन्यथा कर्तुं—विफलीकर्तुं, लङ्घितुमित्यर्थ ।

(३५०) नक्तन्दिवम्—अहोरात्र, नक्तञ्च दिवा च इति विग्रहे [ "अचतुर—" (५।४।७७ पा०) इति द्वन्द्वे निपात्यते ] संसरन्त्य,—प्रवहन्त्य, द्राघीयस्यः,—अतिदीर्घाः, अनन्ताः इत्यर्थ, कदाऽपि न विच्छिन्ना भवन्तीति यावत्, प्रवाहरूपेण सदैव प्रवर्त्तन्ते इति तात्पर्य्यम् ।

( ३५१ ) जन्मजरामरणघटनघटीयन्त्रराजिरज्जवः पञ्चजनानाम् । ( ३५२ ) पञ्चमहाभूतपञ्चकुलाधिष्ठितान्तःकरण-व्यवहारदर्शन-निपुणाः सर्व्वङ्कषा विषमा धर्म्मराजस्थितयः । ( ३५३ ) क्षणमपि क्षममाणा गलन्ति आयुष्काला-

( ३५१ ) पञ्चजनाना—मानवाना, ("मनुष्याः मानुषाः मर्त्या मनुजा' मानवा नराः । स्यु. पुमास. पञ्चजनाः पुरुषा. पूरुषा नरः॥" इत्यमर.) जन्मेति ।—जन्म च—उत्पत्तिश्च, जरा च—वार्द्धकञ्चेत्यर्थः, मरणञ्च—मृत्युश्च, तानि तद्रूपाणीत्यर्थ., घटनानि—व्यापारा एव, घटीयन्त्राणाम्—उद्घाटनाना, कूपात् जलोद्धरणयन्त्राणामित्यर्थ, ("उद्घाटन घटीयन्त्र सलिलोद्वाहन प्रहे." इत्यमरः) राजय.—श्रेणयः, तासा रज्जव,—सूत्राणि, नियतमुत्थानपरिणमनपतनशीलाना जलोद्धरणरज्जूना प्रसारा यथा अतिदीर्घा भवन्ति, तथा उत्पत्तिवार्द्धकमृत्युधर्म्मिणा मानवानामपि ससारा अनादिप्रवाहिण. अतिदीर्घा भवन्तीति समुदितार्थ., अतिदीर्घा. जलोद्धरणयन्त्ररज्जवो हि यथा अहर्दिव जलानामुद्धरणकर्म्मणि व्याप्रियन्ते, तथैव जनाना जन्मादीनि रात्रिन्दिवं सततमेव ससरन्ति इति निष्कर्ष , अत शोक विजहीहि इति तु फलितम् ।

( ३५२ ) पञ्चेति ।—पञ्चाना—पञ्चसङ्ख्याकाना, महाभूताना—क्षित्यादीना, तद्विकाराणामित्यर्थः, मानवानामिति भाव, पञ्चकुलानि—चक्षुरादीनि पञ्च ज्ञानेन्द्रियाणि इति यावत्, तानि अधिष्ठितम्—अध्यक्षतया स्थित, ["पञ्चकुल.,—अध्यक्ष" इति केचित्, तथात्वे पञ्च महाभूतानि—महाभूतविकारा' चक्षुरादय इत्यर्थः, तान्येव पञ्चकुलम्—अध्यक्षं, तत् अधिष्ठितम्—आक्रम्य स्थितमित्यर्थ' ] अन्त.करणं—मनः, तस्य व्यवहारः,—चेष्टित, तस्य दर्शने—अवलोकने, निपुणा,—तत्पराः, सर्वं कषन्तीति सर्व्वङ्कषाः,—सर्व्वाकर्षिण इत्यर्थ, कर्म्मानुसारेण सर्वेषामेव अपक्षपातं दण्डपुरस्कारादिविधायिन इति भाव, ["सर्वकूलाभ्रकरीषेषु कषः" (३।२।४२ पा० ) इति खच् ] धर्म्मराजस्थितय,—अन्तकव्यापारा', विषमा,—दारुणा', मानवा पञ्चेन्द्रियै यद्यदाचरन्ति, सर्वान्तर्दर्शी धर्मराजस्तत् सर्वमतिनिपुणभावेन सूक्ष्मं विचारयति इति निष्कर्ष. ।

( ३५३ ) क्षणमपि—निःशलाकापरिमितकालमपि, अत्यल्पसमयमपीति यावत्, क्षममाणा,—सहमाना, अपेक्षमाणा इत्यर्थ., गणयन्त्य इति यावत्, मानवानामायुषाम् इयन्तो निमेषाः इयत्य. काष्ठाः अतिक्रान्ताः, इत्येवम् अतिसूक्ष्मकालमपि

कालनकुशला निलये निलये कालनाड़िकाः । जगति (३५४) सर्व्वजन्तुजीवितोपहारपातिनी सञ्चरति झटिति चण्डिका यमाज्ञा । (३५५) रटन्ति अनवरतम् अखिलप्राणिप्रयाणप्रकटनपटवः प्रेतपतिपटहाः । प्रतिदिशं (३५६) पर्य्यटन्ति पेटकैः प्रतिपुरं प्रतप्तलोहलोहिताक्षाः (३५७) कालकूटकान्तिकालकायाः कालपाशपाणयः कालपुरुषाः । प्रति-

विचारयन्त्यः इति भाव, आयुरिति ।—आयुष्कालस्य—जीवितकालस्य, आकलन—सङ्ख्यान, गणनाकरणमित्यर्थः, [ "आयुष्कालाकालन—" इत्यत्र "आयुष्कलाकालन—" इति पाठे,—आयुषः कलायाः,—अंशस्य, अतिसूक्ष्मभागस्येति भाव., यद्वा,—कालपरिमाणस्य, ( "कला स्यात्…अंशमात्रके ।…कालनाकालमानयो. ॥" इति मेदिनी ) कालन—सङ्ख्यानम् ] तत्र कुशला ,—पटवः, कालनाडिकाः,—कालस्य—अन्तकस्य, नाडिका ,—छीराः, पट्क्षणमितः काल इत्यर्थः, घटिका इति यावत्, [ "नाडी नालिऽपि पट्क्षणे" इत्यमर. । "नाडिका." इत्यत्र "नालिकाः" इति पाठेऽपि स एवार्थ ] निलये निलये—गृहे गृहे, [ "नित्यवीप्सयोः" ( ८।१।४ पा० ) इति वीप्साया द्विर्भाव ] गलन्ति—अतिगच्छन्ति ।

(३५४) सर्व्वेति ।—सर्वेषा—सकलाना, जन्तूना—प्राणिना, जीवितमेव—जीवनमेव, उपहारः,—उपढौकन, तत्र पतति—ग्रहणार्थं धावतीति तथाभूता, सर्व्वभूतजीवनापहरणनिरता इत्यर्थ, चण्डिका—भीषणा, रुद्राणी देवी च, यमाज्ञा—अन्तकनिर्देशः ।

(३५५) अखिलेति ।—अखिलाना—समस्ताना, प्राणिना—जीवाना, प्रयाणं—स्वप्रभुनगरे गमन, तस्य प्रकटनम्—आघोषण, तत्र पटव.,—कुशला , प्रेतपतिपटहा ,—प्रेतपते ,—यमस्य, पटहा ,—वाद्यभेदाः, रटन्ति—नदन्ति, सदैव प्राणिनो यमपुर गच्छन्तीति निष्कर्ष ।

(३५६) पर्य्यटन्ति—भ्रमन्ति । पेटकैः,—समूहैः, अन्योऽन्यमेकत्रीभूय इत्यर्थ. । प्रतप्तेति ।—प्रतप्तम्—अत्युत्तप्त, यत् लोहम्—अय', तद्वत् लोहिते—रक्ते, अक्षिणी—नेत्रे येषा ते ।

(३५७) कालेति ।—कालकूटस्य—विषस्य, कान्तिरिव कान्तिः,—द्युतिः येषा तथाविधाः, अत एव कालाः,—कृष्णवर्णाः, कायाः,—देहा येषा तथोक्ताः, काल-

अवनं भ्रमन्ति (३५८) भीषणकिङ्करकरघट्टितयमघण्टापुट-घट्टाङ्कारभयङ्कराः (३५९) सर्व्वसत्त्वसङ्घसंहरणाय घोराघातघोषणाः। दिशि दिशि (३६०) वहन्ति बहुचिताधूम-धूसरितप्रेतपतिपताकापतितगृध्रदृष्टयः (३६१) शोककृत-कोलाहलाकुल-कुटुम्बिनीविकीर्ण-केशकलाप-शबल-शव-शिबिका-सहस्रसङ्कुलाः (३६२) किलकिलायमानश्मशानशिविरशिवा-

---

पाशपाणय.,—कालपाश,—यमरज्जु, पाणौ—हस्ते येषा तथाविधा., कालपुरुषा., यमदूता इत्यर्थ, प्रतिपुर पेटके. पर्य्यटन्ति इत्यन्वय.।

(३५८) भीषणेति।—भीषणाना भयङ्कराणा, किङ्कराणा—भृत्याना, यमदूतानामिति यावत्, करै,—हस्तै., घट्टिता.,—धृता, ताड़िता वा, या यमघण्टा,—अन्तकस्य वाद्यविशेषा, तासा पुटाना—कन्दुकाना, घण्टाऽधःस्थवर्त्तुलाकारवस्तुविशेषाणामिति यावत्, पटुभि,—उत्कटैः, टाङ्कारै,—"टा टा" इत्यनुकरणध्वनिविशेषै, भयङ्करा,—भीषणाः, [भयं कुर्व्वन्ति याः ता इत्यर्थे करोतेः खच् मुम् च]।

(३५९) सर्वेति।—सर्वेषा—समग्राणा, सत्त्वाना—प्राणिना, सङ्घस्य—समूहस्य, संहरण—संहार, विनाश इत्यर्थ तस्मै, घोरेति।—घोरा.,—दारुणा, आघाता,—ताडनानि, यासु तथाविधा घोषणा,—राजाज्ञाप्रचारा., प्रजाभिरेताभिरविलम्बमेव अद्यवनमागन्तव्यमित्येव यमनृपतेरादेशप्रचारा इति यावत्,प्रतिभवनं भ्रमन्ति इत्यनेनान्वय.।

(३६०) वहन्ति—विराजन्ते इत्यर्थ.। बह्विति।—बहुभि,—प्रभूतै, चिताधूमैः—मृतदहनकाष्ठचुल्ल्युत्थवह्निध्वजै., धूसरिता:,—श्वेतकृष्णवर्णता प्राप्ता, मलिनिता इत्यर्थ, या प्रेत पते,—अन्तकस्य, पताका.,—वैजयन्त्य., तासु पतिता.,—निबद्धा इत्यर्थ, शवभक्षणलालसया इति भाव, ["—पताकापतित—" इत्यत्र "—पताकापटुपतित—" इति पाठे,—पताकासु पटु—अत्यर्थ यथा तथा, पतिता.] गृध्राणा—श्मशानपक्षिणा, दृष्टय,—नयनानि यासु तथोक्ता।

(३६१) शोकेति।—शोकेन—शुचा. कृत,—विहित, य कोलाहल:,—कलरवश्च, तेन आकुलाना—व्याकुलाना, कुटुम्बिनीना—कुलाङ्गनाना, पुरन्ध्रीणा वा, पुरन्ध्रीणामित्यर्थः, ("स्यात् तु कुटुम्बिनी पुरन्ध्री" इत्यमर.) विकीर्णैः,—विक्षिप्तै, केशकलापै,—कुन्तलसमूहै, शबला.,—विविधवर्णा., या: शवाना—मृताना, शिबिका.,—यानविशेषा., तासा सहस्रै,—समूहैरित्यर्थः, सङ्कुला,—आकीर्णाः।

(३६२) किलेति।—किलकिलायमाना.,—घनसन्निविष्टतया भ्रमन्त., किल-

शिवारुताः (३६३) परलोकावसथपथिकसार्थप्रस्थानविशिखा-वीथयः। (३६४) सकललोककवलावलेहलम्पटा बहला वहलिहा (३६५) लेढि लोहिताचिता चिताङ्गारकाली कालरात्रिजिह्वा जीवितानि जीविनाम्। (३६६) तृप्ति-मशिक्षिता च भगवतः सर्व्वभूतभुजो बुभुक्षा मृत्योः॥

---

किलीति सहर्षं शब्द कुर्वाणा वा इत्यर्थ, [किलकिला इव आचरन्त इत्यर्थे "कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा० इति क्यङि शानचि च रूपम्] श्मशानशिबिरस्य —पितृवनमण्डपस्य, प्रेतावासस्य इत्यर्थः, ("श्मशानं स्यात् पितृवनम्" इत्यमर.) यद्वा,—श्मशानमेव शिबिरं येषां तादृशाः, शिवाशावकाः,—शृगालशिशव' यासु तथाविधा', मृतदेहभक्षणाशया इति भावः।

(३६३) परलोकेति।—परलोक एव—लोकान्तरमेव [आवसति अत्र इत्यर्थे वसते अथच्], आ वसथ',—वसतिस्थानम्, आलय इत्यर्थः, तस्य ये पथिकसार्थाः,—पान्थनिवहा', तेषां प्रस्थानस्य—प्रयाणस्य, विशिखावीथयः,—रथ्याश्रेणय', पुराभ्यन्तरस्थाः प्रशस्तमार्गसमूहा इत्यर्थः, ("रथ्या प्रतोली विशिखा" "वीथ्यालिरावलिः पङ्क्तिः श्रेणी" इत्युभयत्राप्यमरः) दिशि दिशि वहन्ति इत्यनेनान्वयः।

(३६४) सकलेति।—सकलाना—सर्वेषा, लोकानामेव—प्राणिनामेव, कवलाना—ग्रासानाम्, अवलेह,—आस्वादः, तत्र लम्पटा—लुब्धा। बहला—दीर्घा। वहलिहा—छिद्रान्वेषिणी, यद्वा,—वह—स्कन्धं, "वहः स्यात् वृषभस्कन्धे वाहे गन्धवहेऽपि च" इति मेदिनीवचनात् वृषस्कन्धार्थकस्य वहशब्दस्यात्र सामान्यतः स्कन्धार्थे एव प्रयोगो बोद्धव्य', लेढि—आस्वादयति, स्कन्धशोणितं पिबतीति भाव या सा, स्कन्ध मोटयित्वा रक्तपायिनीत्यर्थ., यद्वा,—वह—गन्धवहं, प्राणवायुमिति भाव', लेढि या सा, प्राणघातिनीत्यर्थः, ["वहाभ्रे लिह" (३।२।३२ पा०) इति खश्]।

(३६५) लेढि—आस्वादयति। लोहिताचिता—रक्तव्याप्ता, जीवाना रक्त-पानादिति भाव', चिताङ्गारकाली—चिताङ्गारवत्—शवदाहचुल्लिस्थाग्निरहिता-ङ्गारवत्, काली—कृष्णवर्णा, कालरात्रिजिह्वा —कालरात्रे',—यमभगिन्या., सर्वभूत-प्राणापहारिण्या' मृत्युदेव्या वा, कल्पान्तरात्रेर्वा, जिह्वा—रसना।

(३६६) सर्वभूतभुजः,—सर्वप्राणिभक्षकस्य, मृत्योः,—यमस्य, ("मृत्युर्ना मरणे यमे" इति मेदिनी) बुभुक्षा—क्षुधा, तृप्ति—सन्तोषम्, अशिक्षिता—न शिक्षिता,

( ३६७ ) अतिद्रुतवाहिनी च अनित्यतानदी। ( ३६८ ) क्षणिकाश्च महाभूतग्रामगोष्ठ्यः। ( ३६९ ) रात्रिषु भङ्गुराणि गात्रयन्त्रपञ्जरदारूणि देहिनाम्। ( ३७० ) अशुभशुभावेशविवशा विशरारवः शरीरनिर्म्माणपरमाणवः। ( ३७१ ) छिदुरा जीवबन्धनपाशतन्त्रीतन्तवः। सर्व्वमात्मनोऽनीश्वरं विश्वं नश्वरम्।

---

शिक्षामप्राप्ता, तृप्तिज्ञानाभावात् इत्यर्थः; [ शिक्षतेः इत्यस्य औणादिकात्य कर्त्तरि निष्ठाया रूपम् ]। बहुभोजनेनापि अस्या वितृष्णा न जायते इति भाव।

( ३६७ ) अनित्यतानदी—अनित्यता—चयशीलता एव, नदी—सरित्, अतिद्रुतेति।—अतिद्रुतम्—अतिशीघ्रं, वहति—गच्छतीति तथोक्ता, अनित्यमिदं जीवनं द्रुतमेव चयतीत्यर्थः।

( ३६८ ) महेति।—महाभूतानां—चित्यादीनां पञ्चानां, ग्रामस्य—समूहस्य, गोष्ठ्यः,—समाजा, सङ्घा इत्यर्थः, पञ्चमहाभूतात्मका जीवसङ्घा इति यावत्, क्षणिकाः,—क्षणस्थायिन्य।

( ३६९ ) गात्रेति।—गात्रं—शरीरमेव, [ "गात्र—" इत्यत्र "पात्र—" इति पाठे,—पात्रम्—आधारः, जीवस्येति शेषः, शरीरमित्यर्थः, तदेव ] यन्त्र—नियन्त्रचालित वस्तुविशेषः, तस्य पञ्जरा,—अस्थीनि एव, दारूणि—काष्ठानि, रात्रिषु—रजनीषु, प्रतिरात्रि इत्यर्थः; भङ्गुराणि—भङ्गप्रवणानि, प्रतिनिशान्ते आयुष्कालस्य एकैकदिनचयादिति भाव।

( ३७० ) अशुभेति।—अशुभाना—दुष्कृताना, शुभानाञ्च—सुकृतानाञ्च, आवेशेन—अधिष्ठानेन, विवशाः,—परायत्ताः, सुकृतदुष्कृतकर्म्मानुसारेण शुभाशुभफलभोगिनः, न तु स्वेच्छया शुभमशुभं ना भोक्तुं समर्था इति भावः, इच्छाऽभावेऽपि पश्वादियोनिषु गमनादिति तात्पर्य्यं, शरीरनिर्माणपरमाणवः,—देहघटकद्व्यणुकारम्भकपदार्थविशेषा, विशरारव,—वि—विशेषेण, शरारवः,—परस्परमुपघातका, परस्परोपघातेन विश्लेषात् चिरस्थायिन इत्यर्थः, ( "शरारुर्घातुको हिंस्रः" इत्यमर ) स्वजन्ये देहे नष्टेऽपि परमाणूनामविनाश्यत्वादिति भावः; [ "शृवन्द्योरारुः" ( ३।२।१७३ पा० ) इति विपूर्व्वकात् शृणाते. आरुः ]।

( ३७१ ) जीवेति।—जीवाना—प्राणिना, बन्धनस्य—संसारबन्धनस्य, पाशाना—रज्जूना, तन्त्रीतन्तवः,—तन्त्रीरूपाणि सूत्राणि; यद्वा,—जीवाना बन्धनम्

एवम् (३७२) अवधृत्य नार्हसि एवम् अर्हसि मेधाविनि ! मृदुनि मनसि तमसः प्रसरं दातुम्। एको हि (३७३) प्रतिसङ्ख्यान-क्षण आधारीभवति धृतेः। अपि च दूरगतेऽपि हि शोके ननु इदानीम् अपेक्षणीय एव अयं ज्येष्ठः पितृकल्पो भ्राता

—संसारवागुराया सवन्धनाय, पाशाः,—मृगपक्ष्यादिबन्धनाय वागुरा इत्यर्थः, ("पाशः केशादिपूर्व्वः स्यात् तत्सङ्घे कर्णपूर्वकः। सुकर्णे च स्वसामर्थ्यान्मृगपक्ष्यादिबन्धने॥" इति मेदिनी) तेषां तन्त्रीतन्तवः छिदुराः,—विच्छेदप्रवणाः, ["विदिभिदिच्छिदेः कुरच्" (३।२।१६२ पा०) इति कुरच्]। आत्मनः,—स्वस्य, अनीश्वरम्—अनायत्तम्; नास्ति ईश्वरी यस्मिन् तत्, ईश्वरभिन्नमित्यर्थः, केवलमीश्वरस्यैव नित्यत्वेन तत्सादन्यस्य सर्व्वस्यैव क्षयित्वादित्यपि व्यज्यते, सर्वं—कृत्स्नं, विश्वं—जगत्, विश्वस्य वस्तुजातमिति यावत्, नश्वरं—नाशप्रवणं, जगति सर्व्वमेव ध्वंसशीलं, तेषां स्थायित्व-सम्पादने स्वस्य अल्पमपि सामर्थ्यं नास्तीत्याशयः।

(३७२) अवधृत्य—निश्चित्य।—अर्हसि—योग्या भवसि। मेधाविनि। इति राज्यश्रिया आमन्त्रणपदं, धारणावद्बुद्धिशालिनि इत्यर्थः, ["अस्मायामेधास्रजो विनिः" (५।२।१२१ पा०) इति मेधाया मत्वर्थे विनिः, ततः ङीप्]। मृदुनि—कोमले, दुःखसहनानर्हे इति यावत्। ["मनसि" इत्यत्र आधारस्यैव वाच्यत्वात् न चतुर्थी]। तमसः,—मोहस्य, प्रसरं—विसर्पणं, विस्तारमित्यर्थः, अवसरमिति यावत्॥

(३७३) प्रतिसङ्ख्यानक्षण इति।—प्रतिसङ्ख्यानं—विवेकाकुशला सति, तस्य क्षणः,—समयः, तदाविर्भावकाल इत्यर्थः, धृतेः,—धैर्य्यस्य, आधारीभवति—आश्रयतामापद्यते, [अनाधारः आधारः सम्पद्यमानः भवतीत्यभूततद्भावार्थे "कृभ्वस्ति-योगे—" (५।४।५० पा०) इति च्विः] विवेकिनी बुद्धिरेव धैर्य्यं विधातुं समर्था इति भावः, सर्वमेवेदमनित्यमिति विवेकिन्या बुद्ध्या आकलय्य स्वयमेव धैर्य्यमव-लम्बस्व, मात्यधीरा भव इति वक्तुराशयः। दूरगते—दूरम्—अतिवृद्धिं, गतः,—प्राप्तः, आरूढ इत्यर्थः तस्मिन्, अतिवर्द्धितेऽपीति यावत्। नन्विति सम्बोधनं, भो ! इत्यर्थः। इदानीम्—ईदृश्यां दशायामित्यर्थः, वैधव्यदशायामिति यावत् पित्रादीनामभावे, भ्रातुः परिचरणाद्यर्थं लोकाभावाच्च इति वा भावः। अपेक्षणीयः,—अनु-सरणीय इत्यर्थः, नारीणां स्वातन्त्र्याभावादिति भावः, यद्वा,—अपेक्षणीयः,—द्रष्टव्यः, एतादृशस्य भ्रातुर्मुखं प्रति दृष्टिपातः कर्त्तव्य इति भावः। पितृकल्पः,—पितृसदृशः; ["ईषदसमाप्तौ—" (५।३।६७ पा०) इति ईषदूनार्थे कल्पप्]।

भवत्या गुरुः। (३७४) इतरथा को न बहु मन्येत कल्याणरूपम् ईदृशं सङ्कल्पम् अत्रभवत्याः काषायग्रहणकृतम्? (३७५) अखिलमनोज्वरप्रशमनकारणं हि भगवती प्रव्रज्या। ज्यायः खलु इदं पदम् आत्मवताम्। (३७६) महाभागस्तु भिनत्ति मनोरथम् अधुना। यत् अयम् आदिशति, तदेव अनुष्ठेयम्। (३७७) यदि भ्राता इति, यदि ज्येष्ठ इति, यदि वत्सल इति, यदि गुणवान् इति, यदि राजा इति, सर्व्वथा स्थातव्यम् अस्य नियोगे" इति उक्त्वा (३७८) व्यरंसीत्।

(३७९) उपरतवचसि च तस्मिन् निजगाद नरपतिः,—

---

(३७४) इतरथा—अन्यथा, नो चेदेवमित्यर्थः, अत्रभवत्याः—मान्यायाः, ईदृश—काषायग्रहणरूपमित्यर्थः, कल्याणरूपं—मङ्गलरूप, श्रेयोभूयिष्ठमित्यर्थ, सङ्कल्पम्—अभिलाष, को न बहु मन्येत?—आद्रियेत?।

(३७५) भगवती—सर्व्वशक्तिमती, प्रव्रज्या—सन्न्यासधर्म्मः, अखिलेति।—अखिलस्य—समग्रस्य, मनोज्वरस्य—मन पीडायाः, प्रशमनम्—अपनयन, तस्य कारणं—हेतु। आत्मवता—मनस्विनाम्, इद पद—काषायग्रहणमित्यर्थ, ज्याय,—श्रेष्ठमित्यर्थः, ["ज्य च" (५।३।६१ पा०) इति ईयसुनि प्रशस्यस्य ज्यादेश, "ज्यायादीयस." (६।४।१६० पा०) इति ज्यादुत्तरस्य ईयसुन आकारादेशश्च]।

(३७६) महाभाग,—श्रीमान् हर्षः, मनोरथं—सङ्कल्प, भिनत्ति—खण्डयति, विफलीकरोतीत्यर्थः, भ्रातुस्ते अवस्था विलोक्य सङ्कल्पोऽयमिदानी परित्याज्यः इति भावः, अनुष्ठेय—कर्त्तव्यम्।

(३७७) यदि भ्रातेत्यादि।—यदि भ्राता, अत एव अयं मान्य इति शेषः, इति, मन्यसे इति शेषः, एव ज्येष्ठादिष्वपि योजनीयम्। वत्सलः,—स्निग्ध, त्वयि स्नेहपरायण इत्यर्थः; ["वत्सांसाभ्यां कामबले" (५।२।९८ पा०) इति लच्]। तदा सर्व्वथा—सर्वैः प्रकारै, अस्य नियोगे—आज्ञाया, स्थातव्य—वर्त्तितव्यम्।

(३७८) व्यरंसीत्—विरराम, ["व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम्]।

(३७९) तस्मिन्—दिवाकरमित्रे, ["यस्य च भावेन—" (२।३।३७ पा०) इति सप्तमी] उपरतवचसि—निवृत्तवाक्ये, नरपतिः,—हर्षः, निजगाद—उवाच।

"आर्य्यम् अपहाय कोऽन्य एवम् अभिदध्यात्? अनभ्यर्थितदैवनिर्म्मिता हि विषमविपदवलम्बनस्तम्भा भवन्ति लोकस्य। (३८०) स्नेहार्द्रमूर्त्तयो मोहान्धकारध्वंसिनश्च धर्म्मप्रदीपाः; किन्तु (३८१) प्रणयप्रदानदुर्ल्ललिता दुर्लभमपि मनोरथम् अतिप्रीतिः अभिलषति। (३८२) धीरस्यापि धार्ष्ट्यम् आरोपयति (३८३) हृदयलघिमलङ्घितम् अतिवल्लभत्वम्।

अपहाय—त्यक्त्वा, आर्य्यं विनेत्यर्थः। अभिदध्यात्—कथयेत्। अनभ्यर्थि ति।—अनभ्यर्थिताः,—न अभ्यर्थिताः,—न याचिताः, अथ च दैवेन—विधिना, अनुकूलेनेति भावः, यद्वा,—अनभ्यर्थितम्—अप्रार्थितं, यत् दैव—सौ ाग्यमित्यर्थः, अयाचिततयैवोपनतम् इति भावः, तेन निर्म्मिताः,—सृष्टाः, प्रचोदिता इत्यर्थः, विषमेति।—विषमा —दारुणा, विपत्—विपत्तिः, तत्र अवलम्बनस्तम्भाः,—आश्रयस्थानानीत्यर्थः, अयाच्यमाना अपि भवन्त. करुणाविवशाः विपन्नानामप्रत्याशितसौभाग्यवलेनैव अकस्मादागत्य विपदस्त्रायन्ते इति सरलार्थः।

(३८०) स्नेहेति।—स्नेहेन—प्रीत्या, तैलादिना च, आर्द्रा—सरसा, सिक्ता च, मूर्त्तिः,—आकारः येषा तथोक्ताः, मोहेति।—मोहः,—अज्ञानता एव, अन्धकारः,—तिमिरम्, आवरकस्वभावादिति भावः, तस्य ध्वंसिनः,—नाशिनः, उपदेशदानेन आलोकदानेन च इति भावः, धर्म्मप्रदीपाः,—धर्म्ममयाः दीपाः, धर्म्मनाश्रिताः सर्व्वभूतेष्वेव दयापराः सदुपदेशदायकाश्चेत्यर्थः।

(३८१) प्रणयेति।—प्रणयस्य—स्नेहस्य, प्रदानेन—अर्पणेन, प्रदर्शनेनेति यावत्, दुर्ल्ललिता—जनितस्पर्द्धेत्यर्थः, अतिप्रीतिः,—अतिप्रणयः, दुर्लभमपि—दुष्प्रापमपि, मनोरथम्—अभिप्रेतम्, अभिलषति—आकाङ्क्षति।

(३८२) धीरस्य—प्रशान्तस्य, गम्भीरस्य इत्यर्थो वा, धार्ष्ट्यम्—उद्धतत्वं, वाचालत्वमित्यर्थो वा, आरोपयति—जनयति, [ आङ्पूर्व्वकात् रोहतेः णिचि लटि रूप, "रुहः पोऽन्यतरस्याम्" (७।३।४३ पा०) इति हकारस्य पः ]।

(३८३) हृदयेति।—हृदयस्य—चेतसः, लघिम्ना—लघुत्वेन, चापल्येनेत्यर्थः, लङ्घितम्—अतिक्रान्तम्, अतिभूमिं गतमित्यर्थः, दुर्बलचेतस्तया अहमेवास्य अतिप्रेयान् इति निश्चयादतिप्ररूढमिति भावः, यद्वा,—हृदयस्य लघिमा—लघुत्वं, सङ्कोचः इत्यर्थः, लङ्घितः,—अतिक्रमितः, दूरीकृतः इत्यर्थः, वात्सल्यवतः समीपे कोऽपि सङ्कोचः न कर्त्तव्य इति धियेति भाव, येन तत्, अतिवल्लभत्वम्—अतिप्रियत्वम्, अतिप्रियतमज्ञानमित्यर्थः।

( ३८४ ) युक्तायुक्तविचारशून्यत्वाच्च शालीनम् अपि शिक्षयन्ति स्वार्थतृष्णाः प्रागल्भ्यम्। ( ३८५ ) अभ्यर्थनाया रक्षन्ति च जलनिधय इव मर्य्यादाम् आर्य्याः। दत्तमेव च (३८६) शरीरमिदम् अनभ्यर्थितेन प्रथममेव आतिथ्याय माननीयेन भवता रक्ष्यम्। अतः किञ्चित् अर्थये भदन्तम्,—इयं नः स्वसा बाला च (३८७) बहुदुःखखेदिता च सर्व्वकार्य्यावधीरणोपरोधेनापि यावत् लालनीया नित्यम्। अस्माभिश्च ( ३८८ ) भ्रातृवधापकारिरिपुकुलप्रलयकरणोद्यतस्य बाहोर्विधेयैः भूत्वा सकललोकप्रत्यक्षं

( ३८४ ) स्वार्थतृष्णाः,—स्वकार्य्यसिद्ध्यभिलाषाः, युक्तेति।—युक्तायुक्तयोः,—कार्य्याकार्य्ययोः, विचारे—वितर्के, शून्यः,—अक्षमः, तस्य भावः तत्त्वात्, शालीनम्—अधृष्टं, धीरमित्यर्थं, विनीतमिति यावत्, जनमिति शेषः, ( "स्यादधृष्टे तु शालीनः" इत्यमरः ) प्रागल्भ्यम्—प्रौढत्वं, धृष्टतामित्यर्थः।

( ३८५ ) अभ्यर्थनायाः,—प्रार्थनायाः, मर्य्यादामित्यनेन सम्बन्धः। [ "अभ्यर्थनायाः" इति हेतौ पञ्चमी वा ]। रक्षन्ति—पालयन्ति, नोलङ्घयन्ति इत्यर्थः, जलनिधयः,—सागराः। मर्य्यादा—सीमा, वेलाञ्च।

( ३८६ ) इदं—दृश्यमानं, भवदीयमित्यर्थः। अनभ्यर्थितेन—अयाचितेन। आतिथ्याय—अतिथिसत्काराय, अतिथये वा, ( "स्यादातिथ्यमतिथ्यर्थे त्रिलिङ्गमतिथौ पुमान्" इति मेदिनी ) अतः,—स्वशरीरस्याप्यर्पणात्, भदन्त—बौद्धाचार्य्यं त्वामित्यर्थः, अर्थये—याचे।

( ३८७ ) बहुदुःखखेदिता—प्रबलाऽऽधिक्लिष्टा। सर्वकार्य्येति।—सर्वेषां—सकलानां, कार्य्याणां—कर्म्मणाम्, अवधीरणम्—अवहेलनमेव, उपरोधः,—क्षतिः तेन, यद्वा,—सर्वकार्य्यावधीरणे—निखिलकर्म्मपरित्यागे, यः उपरोधः,—अनुरोधः सर्वकार्य्यक्षति सहित्वाऽपीत्यर्थः, यावत् लालनीया—यत्नेन पालनीया एव, ( "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः )।

( ३८८ ) भ्रातृवधेति।—भ्रातुः,—राज्यवर्द्धनस्य, वधेन—हननेन, अपकारिणः,—द्रोहिणः, ये रिपवः,—शत्रवः, तेषां कुलस्य—वंशस्य, प्रलयकरणे—विध्वंसने, तत्र उद्यतः—प्रवृत्तः तस्य, बाहोः,—भुजस्य, विधेयैः,—वशंवदैः, अधीनैरित्यर्थः, भुजबलगर्व एव भ्रातृघातिना शत्रूणां समूलमुन्मूलनाय मामादिशदित्यर्थः।

प्रतिज्ञा कृता। (३८९) पूर्व्वाविमाननाऽभिभवम् असहमानैः अर्पित आत्मा कोपस्य। अतः (३९०) नियुङ्क्तां कियन्तमपि कालम् आत्मानम् आर्य्योऽपि कार्य्ये मदीये। दीयताम् (३९१) अतिथये शरीरम् इदम्। अद्य प्रभृति यावदयं जनः (३९२) लघयति प्रतिज्ञाभारम्, आश्वासयति च तातविनाशदुःखविक्लवाः प्रजाः, तावत् इमाम् अत्रभवतः कथाभिश्च धर्म्याभिः, (३९३) कुशलप्रतिबोधविधायिभिः उपदेशैश्च अरजोभिः, (३९४) शीलोपशमदायिनीभिश्च देशनाभिः,

(३८९) पूर्वेति।—पूर्वया—प्रथमया, अप्राप्तपूर्वयेति भावः, मुख्यया वा, अवमाननया—अवज्ञया, आत्मवधरूपया इति भावः, यः अभिभवः,—तिरस्कारः तम्, असहमानैः,—अक्षममाणैः, सोढुमशक्नुवानैरित्यर्थः, कोपस्य—क्रोधस्य, आत्मा—मनः, धैर्य्यं वा, ("आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि॥" इति मेदिनी) अर्पितः,—दत्तः, कोपाकुलोऽस्मीति भावः।

(३९०) आत्मानं—शरीरं, मदीये कार्य्ये—मम हितकर्मणीत्यर्थः, नियुङ्क्तां—नियुक्तं करोतु, ["स्वराद्यन्तोपसर्गादिति वक्तव्यम्" इति वार्त्तिकात् युजेरात्मनेपदम्] यथा मम सुमङ्गलं स्यात्, तथा भवता आचरितव्यमिति भावः।

(३९१) अतिथये—गृहागताय, मह्यमिति शेषः।

(३९२) लघयति—लघूकरोति, अवतारयतीति यावत्, प्रतिज्ञां निस्तरतीति भावः। तातेति।—तातस्य—"पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते" इति वचनात् ज्येष्ठस्येत्यर्थः, विनाशेन—उपांशुहननेनेत्यर्थः, यत् दुःखं—मनःपीडा, तेन विक्लवाः,—विह्वलाः, आर्त्ता इत्यर्थः, प्रजाः,—प्रकृतीः, आश्वासयति—सान्त्वयति। इमां—मत्स्वसारम्, अत्रभवतः,—पूज्यस्य ते, धर्म्याभिः,—धर्मादनपेताभिः, धर्मोपदेशसमन्विताभिरित्यर्थः, ["धर्मपथ्यर्थ—" (४।४।९२ पा०) इति यत्]।

(३९३) कुशलेति।—कुशलानां—मङ्गलानां, प्रतिबोधः,—विज्ञानं, तं विदधति—जनयन्तीति तथोक्तैः, शोकविनाशदक्षैरित्यर्थः, अरजोभिः,—रजोगुणवर्जितैः, सत्त्वोद्रेककरैः इति भावः।

(३९४) शीलोपशमदायिनीभिः,—शीलस्य—स्वभावस्य, सर्वदा शोकदुःखसन्तप्तस्येति भावः, उपशमदायिनीभिः,—प्रशमकारिणीभिः, मनसः शान्तिजननीभिरित्यर्थः, देशनाभिः,—कथाभिः, शिक्षाभिरित्यर्थः।

(२९५) क्लेशप्रहाणहेतुभूतैश्च तथागतैः दर्शनैः, (२९६) अस्मत्-पार्श्वोपयायिनीमिव प्रतिबोध्यमानाम् इच्छामि। इयन्तु ग्रही-ष्यति मयैव (२९७) समं समाप्तकृत्येन काषायाणि। अर्थिजने च किमिव न अतिसृजन्ति महान्तः? (२९८) सुरनाथम् आत्मास्थिभिः अपि यावत् कृतार्थम् अकरोत् धैर्योदधिः दधीचः। (२९९) मुनिनाथोऽपि अनपेक्षितात्मस्थितिः

---

(२९५) क्लेशेति।—क्लेशस्य—संसारसन्तापस्य, प्रहाणं—क्षयः, तस्य हेतु-भूतानि—कारणरूपाणि तैः, शान्तिप्रदैरित्यर्थः, तथागतैः,—तादृशैः, दर्शनैः,—ज्ञानैः, दृष्टान्तैः वा ; यद्वा,—तथागतः,—बुद्धः, ("सर्वज्ञः सुगतो बुद्धः धर्मराजस्तथा-गतः" इत्यमरः) तस्य इदं तथागत तैः, बुद्धसम्बन्धिभिरित्यर्थः, दर्शनैः,—शास्त्रैः, बौद्धशास्त्रोक्तप्रबोधप्रदैः उपदेशवचनैरित्यर्थः, ( दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु। शास्त्रदर्पणयोश्च" इति मेदिनी )।

(२९६) अस्मदिति।—अस्माकं पार्श्वं—समीपम्, उपयाति—उपगच्छति, तिष्ठतीत्यर्थः तथोक्ताम्, अस्मत्पार्श्ववर्त्तिनी, प्रतिबोध्यमानाम्—उपदिश्यमानाम् अस्मत्पार्श्वस्थितमेवात्मानं यथा बुध्यते तथा क्रियमाणाम् इत्यर्थः, यावदहं रिपुकुलो-न्मूलनाय प्रजाहृन्दाश्वासनाय च व्यापृतस्तिष्ठामि, तावन्मदीयभगिनीमिमां स्वपार्श्वमवस्थाप्य तथा प्रतिबोध्यता, यथेयं मद्दर्शनात् नाधीरीभवति, परन्तु अस्मत्समीपवर्त्तिनीमिव, आत्मान मन्यते इति भावः।

(२९७) सम—सह। समाप्तकृत्येन—कार्य्यं समाप्तवता, शत्रुविनाशरूप प्रजा-सान्त्वनारूपञ्च कार्य्यं समाप्येत्यर्थ। अर्थिजने—याचकजने। अतिसृजन्ति—ददति।

(२९८) धैर्य्योदधिः,—धैर्य्यसागर, दधीचः,—तदाख्यमुनि, आत्मास्थिभिः,—आत्मनः,—स्वस्य, अस्थिभिः,—कङ्कालैः, सुरनाथम्—इन्द्रं, यावत्—अवधारणे, साकल्ये वा, कृतार्थं—सिद्धमनोरथं, सम्पूर्णरूपेण कृतकृत्यमित्यर्थः। असौ हि दधीच्यपरनामा मुनिः वृत्रासुरवधोद्यताय इन्द्राय वज्रनिर्म्माणार्थं स्वदेहस्थास्थीनि सम्प्रा-ददात्, वज्ररूपैः तैश्चासौ त निजघा ति पौराणिकी वार्त्ताऽत्रानुसन्धेया।

(२९९) मुनिनाथ,—मुनीन्द्र, सुगतः इति यावत्, ("सर्वज्ञः सुगतो बुद्ध ··। मुनीन्द्रः श्रीघन शास्ता" इत्यमरः) अनपेक्षितेति।—न अपेक्षिता—न वि चिता, आत्मनः,—स्वशरीरस्य, स्थितिः,—रक्षणं नेन तथाभूतः, स्वशरीररक्षा-

अनुकम्पा इति कृत्वा कृपावान् आत्मानं (४००) वठरसत्त्वेभ्यः कतिकृत्वो न दत्तवान्? अतः परं भवन्त एव बहुतरं जानन्ति" इत्युक्त्वा तूष्णीम्बभूव भूपतिः।

भूयस्तु बभाषे भदन्तः,—(४०१) "भव्या न द्विः उच्चारयन्ति वाचम्। चेतसा प्रथममेव प्रतिग्राहिता गुणाः कायबलिम् इमाम् अमुना जनेन। (४०२) उपयोगस्तु निरुपयोगस्य अस्य लघुनि गुरुणि वा कृत्ये गुणवदायत्तः" इति।

---

मनपेक्षमाण इत्यर्थः, अनुकम्पा—दया, इति कृत्वा—इति मत्वा, अनुकम्पार्ह इति विविच्येत्यर्थः।

(४००) वठरसत्त्वेभ्यः,—जडप्राणिभ्यः, सिंहादिभ्य इति भावः, कतिकृत्वः,—कतिवारान्, ["सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" (५।४।१७ पा०) इति कृत्वसुच्] श्रूयते हि पुरा कामपि सिंहीं सद्यः प्रसूतां बुभुक्षया स्वशावकान् भक्षयितुं प्रवृत्तां दृष्ट्वा बुद्धदेवः करुणापारतन्त्र्यात् तस्यै स्वमांसप्रदानेन तान् शावकान् अरक्षदिति। बहुतरं—प्रचुरं, मदुक्ताभ्यामाख्यानाभ्यामन्यविधम् अर्थिभ्यः स्वदेहदानरूपमुदाहरणमित्यर्थः।

(४०१) भव्याः,—साधवः। द्विः,—द्विवारं, द्विप्रकारं वा, ["द्वित्रिचतुर्भ्यः सुच्" (५।४।१८ पा०) इति सुच्]। अमुना जनेन—अनेन लोकेन, मयेति भावः, प्रथममेव—दर्शनक्षण एवेत्यर्थः, गुणाः,—धैर्य्यौदार्य्यादय इत्यर्थः, भवदीया इति भावः, इमाम्—परिदृश्यमानां मदीयामित्यर्थः, कायबलिं—शरीररूपमुपहारं, ["बलिः पूजोपहारयोः" इत्यमरः। "करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्" इत्यमरोक्तेः अत्र उपहारार्थकबलिशब्दस्य स्त्रीलिङ्गत्वं चिन्तनीयं, तेन "इमाम्" इत्यत्र "इमम्" इति पाठः समीचीनः] प्रतिग्राहिता,—कृतप्रतिग्रहाः कृताः, प्रतिग्रहं कारिता इत्यर्थः, स्वीकरणमापादिता इति यावत्, ("प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे" इति मेदिनी) अहं भवद्गुणेभ्यः शरीरमिदमुपहारीकृतवान् इति निष्कर्षः।

(४०२) निरुपयोगस्य—निष्प्रयोजनस्य, परस्मादुपयोगमनपेक्षमाणस्येति भावः, अस्य, भवत इति शेषः, उपयोगः,—उपकारः, गुणवत्—सम्यक् इत्यर्थः, आयत्तः,—अधीनः, अहं यावच्छक्यमनेन कायेन भवतः उपकारं विधास्यामीति तात्पर्य्यम्, यद्वा,—निरुपयोगस्य—केनापि स्वकृत्ये अकृतनियोगतया व्यर्थीभूतस्य इति भावः,

अथ ( ४०३ ) तथा तस्मिन् अभिनन्दितप्रणये प्रीयमाणः पार्थिवः तत्र ताम् उषित्वा विभावरीम् ( ४०४ ) उषसि वसनालङ्कारादिप्रदानपरितोषितं विसर्ज्य निर्घातम् ( ४०५ ) आचार्य्येण सह स्वसारम् आदाय प्रयाणकैः कतिपयैः एव कटकम् अनुजाह्नवि निविष्टं प्रत्याजगाम।

तत्र च ( ४०६ ) राज्यश्रीप्राप्तिव्यतिकरकथां :कथयन् एव

---

स्य—मम, मदीयकायस्य इत्यर्थ, ल नि—स्वल्पायाससाध्ये इत्य :, गुरुणि—प्रचुरायाससाध्ये इत्यर्थः, कृत्ये—कार्य्ये, उपयोग,—व्यवहारः, नियोग इत्यर्थः, गुणवदायत्त,—गुणवत,—गुणिन. भवत., आयत्त,—अधीन., मया पूर्वमेव शरीरमिद भवद्गृणिभ्य उपहारीकृतम्, अत शरीरेऽस्मिन् गुणिनो भवत एव पूर्णाधिकारः, अधुना लघुनि गुरुणि वा यादृशि एव कार्य्ये इद नियोजयसि, तदेवाहमविचारित करिष्यामीति निष्कर्ष।

( ४०३ ) तस्मिन्—दिवाकरमित्रे, तथा—तादृशप्रकारेणेत्यर्थः, अभिनन्दितप्रणये—अभिनन्दित,—सादर समर्थित इत्यर्थ, प्रणय,—याञ्चा येन तस्मिन्, ( "प्रणय. प्रश्रये प्रेम्णि याञ्चाविश्रम्भयोरपि" इति मेदिनी ) आदरेण गृहीताभ्यर्थने सति इत्यर्थ, प्रीयमाण,—तुष्यन्, [ "प्रीयते" इत्यस्य धातो. दैवादिकस्य शानचि रूपम् ]। विभावरी—रजनीम्, [ "अकर्मकधातुभिर्योगे देश काल—" इति वार्त्तिकात् कालवाचकस्य कर्मत्वम् ] उषित्वा—आसित्वा, अवस्थाय इत्यर्थ.।

( ४०४ ) उषसि—प्रभाते, वसनेति।—वसनानि—वस्त्राणि, अलङ्काराश्च—आभरणानि च, आदयो येषा तानि, वसनालङ्कारादीनि, तेषा प्रदानेन—अर्पणेन, परितोषित,—प्रीणित. त, निर्घात—प्रागुक्त शबरयुवान, विसर्ज्य—परित्यज्य, स्वस्थान सम्प्रेष्येत्यर्थ।

( ४०५ ) आचार्य्येण—श्रमणगुरुणा दिवाकरमित्रेण। कतिपयै—स्वल्पै, प्रयाणकै,—यात्राभि., स्वल्पैरेव दिने. स्वल्पैरेव श्रमणैर्वा इत्यर्थ, अनुजाह्नवि—जाह्नवी—गङ्गा, तस्या अनु—तटसमीपे इत्यर्थ., [ "अनुर्यत्समया" ( २।१।१५ पा० ) इत्यव्ययीभाव:, "अव्ययीभावश्च" ( २।४।१८ पा० ) इति नपुंसकत्वञ्च ] निविष्ट—स्थित, कटक——शिविरम्।

( ४०६ ) राज्येति।—राज्यश्रिया,—तन्नाम्न्याः हर्षभगिन्या, प्राप्ति—लाभ., व्यतिकर,—व्यतिषङ्ग, अन्योऽन्यमेलनमित्यर्थ., यद्वा,—व्यतिकर,—व्यसन,

प्रणयिभ्यो रविरपि ततार गगनतलम्। (४०७) बहलमधुपङ्कपिङ्गलः पङ्कजाकर इव सञ्चुकोच चक्रवाकवल्लभो वासरः। (४०८) प्रकीर्णानि नवरुधिररसारुणवर्णानि लोकालोकजुंषि (४०९) यजूंषि इव कुपितयाज्ञवल्क्यवक्त्रवान्तानि निजवपुषि

राज्यश्रीसङ्क्रान्ता विपत्तिरित्यर्थः, ("अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी) तयोः कथा—वार्त्ता, प्रणयिभ्यः,—सुहृद्भ्यः, ["क्रियया यमभिप्रैति—" (वा०) इति चतुर्थी] कथयन्—गदितुं, ["लक्षणहेत्वोः क्रियायाः" (३।२।१२६ पा०) इति हेतौ शतृ। "कथयन्" इत्यत्र "कथयत" इति पाठे,—कथयन्तं रूपंसनाद्दृत्येत्यर्थः, "षष्ठी चानादरे" (२।३।३८ पा०) इति षष्ठी] ततार—अलङ्घयत्, अस्ताचलमगमदित्यर्थः।

(४०७) बहलेति।—बहलेन—प्रभूतेन, मधुना—मकरन्देन, पङ्केन—द्रवेण इत्यर्थः, पिङ्गलः,—कपिलः, वासरोऽपि परिणतिकाले पिङ्गलवर्णो भवति, पङ्कजाकर इव—पद्माकर इव, चक्रवाकवल्लभः,—चक्रवाकाणां—रथाङ्गनाम्नां, वल्लभः,—प्रियः, मिलनसम्पादकत्वादिति भावः, वासरः,—दिवसः, सञ्चुकोच—सङ्कुचितवान्, क्षीणतामयासीत् इत्यर्थः। पङ्कजाकरोऽपि आवासभूमितया चक्रवाकवल्लभः, इति तेन सह वासरस्यावैधर्म्यसाम्योक्तेरुपमाऽलङ्कारः।

(४०८) प्रकीर्णानि—विस्तारितानि, दिक्षु विदिक्षु च व्याप्तानीत्यर्थः। नवेति।—नवः,—प्रत्यग्रः, सद्योनिर्गत इत्यर्थः, रुधिररसः,—रक्तद्रवः, तद्वत्, तेन च अरुणः,—लोहितः, वर्णः,—रूपं येषां तानि, लोकालोकजुंषि—लोकालोकः,—स्वनामख्यातः सूर्यकिरणसम्पर्कलीलापर्व्वत इति यावत्, तस्य पार्श्वयोरातपस्य तदभावस्य च सम्बन्धात् तथात्वमिति ज्ञातव्यं, तं जुषन्ते—सेवन्ते, आश्रयन्तीत्यर्थः, तथोक्तानि, लोकालोकपर्व्वताश्रयीणि इत्यर्थः, लोकदृष्टिप्रीतिकराणि इति भावः; ["जुषते" इत्यस्य औणादिकस्य कर्त्तरि क्विप्] अन्यत्र,—लोकानां—जनानाम्, आलोकं—दर्शनम्, ("आलोकौ दर्शनोद्योतौ" इत्यमरः) जुषन्ते—सेवन्ते इति तथोक्तानि, लोकदृष्टिगोचराणीत्यर्थः, उद्गीर्य्य बहिष्करणादिति भावः।

(४०९) कुपितेति।—कुपितेन—क्रुद्धेन, गुरुं वैशम्पायनं प्रतीति भावः, याज्ञवल्क्येन—तदाख्यमुनिना, वक्त्रात्—मुखात्, वान्तानि—उद्गीर्णानि, यजूंषीव—यजुर्वेदानिव, वैशम्पायनशिष्या इति शेषः। निजवपुषि—स्वदेहे। पुरा वैशम्पायनशिष्यः याज्ञवल्क्यः गुरोः वैशम्पायनस्य सकाशात् वेदानधीत्य सर्वेषु शिष्येषु समादिष्ट

( ४१० ) पूषा पापमुषि पुनरपि सञ्जहार जालकानि रोचिषाम् ।

स्वगुरौ ब्रह्महत्यापापक्षयकृत् व्रतमेकाकी एवाचरितुमिच्छन् गुरुणा विप्रावमानिना-मसहिष्णुना वेदान् मत्परिगृहीतान् परित्यजेति उपालब्धः सर्व्वानधीतान् वेद-भागानुद्ववाम, उद्वान्तांश्च तान् मुनयः तित्तिरयः तल्लोलुपतया तित्तिरीभूय आददुः, ततः एते वेदभागाः कृष्णयजुर्वेदा इति उच्यन्ते। तथा हि विष्णुपुराणं,—"शिष्यानाह च भोः शिष्या । ब्रह्महत्यापहं व्रतम्। चरध्वं मत्कृते सर्वे न विचार्य्यमिदं तथा॥ अथाऽऽह याज्ञवल्क्यस्तं किमेतैर्बहुभिर्द्विज। क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम्॥ ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम्। मुच्यतां यत् त्वयाऽधीतं यतो विप्रावमानकः॥··· ······इत्युक्ता रुधिराक्तानि सरूपाणि यजूंष्यथ। छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः॥ यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज॥ जगृहुस्तित्तिरीभूता-स्तित्तिर्य्यस्तु च ते ततः॥···एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः। अयातयाम-सञ्ज्ञानि यानि नो वेत्ति तद्गुरुः॥ यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम।। वाजिनस्ते समाख्याताः सूर्य्यश्चोऽश्वयोगतः॥" इत्यादि। एवमेवाह वाजसनेयिसंहिता-भाष्ये तत्रभवान् महीधरः; तथा हि,—"तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य तत्कृपया चतुर्धा व्यस्य ऋग्यजुःसामाथर्व्वाख्यांश्चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश, ते च स्वशिष्येभ्यः। एवं परम्परया सहस्रशाखो वेदो जातः। तत्र व्यासशिष्यो वैशम्पायनः याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत्। तत्र दैवात् केनापि हेतुना क्रुद्धो वैशम्पायनः याज्ञवल्क्यं प्रत्युवाच, मदधीतं त्यजेति, स योगसामर्थ्यात् मूर्त्तां विद्यां विधाय उद्ववाम। वान्तानि यजूंषि गृह्णी"ति गुरूक्ता अन्ये वैशम्पायनशिष्या तित्तिरयो भूत्वा यजूंषि अभक्षयन्। तानि यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्य्यमाराध्य अन्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबालबौधेयकाण्वमाध्यन्दिनादिभ्यः पञ्चदशशिष्येभ्यः पाठितवान्" इति।

( ४१० ) पूषा—सूर्य्यः। पापमुषि—पापक्षयकारिणि, [ पापोपपदात् मोषतेः मुष्णतेः वा कर्त्तरि क्विप् ]। रोचिषा—तेजसा, किरणानामित्यर्थः, जालकानि —निचयान्, सञ्जहार—संहृतवान्, विलाययामासेत्यर्थः। यथा हि वैशम्पायनशिष्याः तित्तिरयो भूत्वा याज्ञवल्क्यमुखवान्तानि रुधिरारुणानि कृष्णानि यजूंषि स्ववपुषि सञ्चारयामासुः, एवमेव पूषाऽपि स्वरोचिषां जालकानि निजवपुषि सञ्जहारेति यजुर्भिः सह रोचिषां जालकानामभेदधर्म्मसाम्येनोपमाऽलङ्कारः।

(४११) क्रमेण च समुपोह्यमानमांसलरागरोचिष्णुः उष्णांशुः (४१२) उष्णीषबन्धसहजचूडामणिरिव वृकोदरकर-पुटोत्पाटितः (४१३) प्रत्यग्रशोणितशोणाङ्गरागरौद्री द्रौणायनस्य,

(४११) "क्रमेण" इत्यादौ "उष्णांशुः ·····मुहूर्त्तमदृश्यत" इत्यनेन सम्बन्धः। समुपोह्यमानेति।—समुपोह्यमानेन—सङ्घृह्यमाणेन, आक्रम्यमाणेनेत्यर्थः, चीयमाणेनेति भावः, ["स ह्यमाणेन—वर्द्धमानेन" इति केचित्] मा लेन—सान्द्रेण, प्रभूतेनेत्यर्थः, रागेण—लौहित्येन, रोचिष्णुः—राजमानः, ["अलं कृञ्—" (३।२।१३६ पा०) इति इष्णुच्] उष्णांशुः,—सूर्य्यः।

(४१२) उष्णीषेति।—उष्णीषं,—शिरोवेष्टनं, बध्यते—संयम्यते, निवेश्यते इत्यर्थः, अर्थे व्युत्पत्त्या [बध्नातेरधिकरणे घञ्] उष्णीषबन्धः,—मस्तकः, तत्र सहजः,—स्वभावोत्पन्नः, चूडामणिः,—शिरोरत्नं स इव। वृकोदरेति।—वृकोदरस्य—वृकः,—तन्नामा तीक्ष्णोऽग्निः, उदरे—कुक्षौ यस्य तस्य, "यस्य तीक्ष्णो वृको नाम जठरे हव्यवाहनः। मया दत्तः स धर्म्मात्मा तेन चासौ वृकोदरः॥" इत्युक्तस्वरूपस्य भीमसेनस्य, करपुटेन—हस्तद्वयेन, उत्पाटितः,—उन्मूलितः, आकृष्ट इति यावत्।

(४१३) प्रत्यग्रेति।—प्रत्यग्रम्—अभिनवं, सद्योनिःसृतमित्यर्थः, उत्पाटनवेगादिति भावः, शोणितं—रक्तं, तेन तद्वत् वा शोणः,—लोहितः, यः अङ्गरागः,—अङ्गप्रभा, तेन रौद्रः,—भीषणः। द्रौणायनस्य—द्रोणतनयस्य, अश्वत्थाम्न इत्यर्थः; ["द्रोणपर्व्वत—" (४।१।१०३ पा०) इति गोत्रे वैकल्पिकः फक्, पक्षे द्रौणिरिति]। पुरा सौप्तिके अश्वत्थाम्ना हतेषु पुत्त्रेषु द्रौपद्या भीमसेनोऽभिहितः, 'यद्यश्वत्थाम्नः शिरः छित्त्वा नानीयते,तदा अहं जीवितं त्यक्ष्यामि' इति। 'तथा करिष्यामि' इति प्रतिजानानम् आयान्तं भीमं दृष्ट्वा व्यासाश्रमे बदरिकाश्रमे स्थितो रणश्रान्तः, हताश्वत्थोऽश्वत्थामा अस्त्रसामर्थ्यदीपिकाः सम्यक्त्वा ब्राह्ममस्त्रं विधाय तदेषिकं भीमवधाय प्रायुङ्क्त। तदा च एकाकिनो भ्रातुर्भीमसेनस्य गमनात् विपदमाकलय्य भीतेनार्ज्जुनेन कृष्ण-सारथिना तमेवानुसरता ब्रह्मशिरोऽस्त्रं मुमुचे। अत्रान्तरे समागतैश्च नारदादिभि-र्मुनिभिः मध्यस्थैरुक्तं, द्रौणेरस्त्रमभिमन्त्रितं वज्रा उत्तराया गर्भे पततु इति, अर्ज्जुने-नापि ब्रह्मवधो न कर्त्तव्य इति स्वमस्त्रं संह्रियतामिति च, ततस्तेषां वचनगौरवात् अर्ज्जुनेनास्त्रे संहृते भीमोऽश्वत्थाम्नः सहजं शिरोमणिं बलादुज्जहारेति भारतीयकथा अत्र अनुसन्धेया। अत्र अस्तमनवेलावशात् प्रचीणरश्मेरुष्णांशोः द्रौणिचूडामणिना सहावैधर्म्यसाम्यौक्तिरूपमाऽलङ्कारः।

( ४१४ ) रुद्रभिक्षादानशौण्डपुरमथनमुक्तमुण्डशिरानाडीरुधिर-पूरणकपिलः कपालकर्पर इव च पैतामहः, ( ४१५ ) पितृवध-रुषितरामरागरचितः पृथुविकटकार्त्तवीर्य्यांसकूटकुट्टाककुठार-

( ४१४ ) रुद्रेति।—रुद्रः,—भीषणः, भिक्षायाः,—प्रार्थितवस्तुनः इत्यर्थः, आदाने—ग्रहणे, यद्वा,—दाने—समर्पणे, भक्तानां वाञ्छितसर्पापूरणे इत्यर्थः, शौण्डः,—तत्परः, यः पुरमथनः,—त्रिपुरारिः, हर इति यावत्, तेन मुक्तं—परित्यक्तं, छेदनेन पातितमित्यर्थः, यत् मुण्डं—शिरः, ब्राह्ममिति भावः, तस्य शिराणां—सूक्ष्म-नाडीनामित्यर्थः, नाडीनां—स्थूलशिराणां, रक्तवाहिनीनां धमनीनामित्यर्थः, रुधिरैः,—रक्तैः, पूरणेन—परिपूर्णतया, कपिलः—पिङ्गलः, आरक्त इत्यर्थः, पैतामहः,—ब्राह्मः, कपालकर्पर इव—कपालः,—शिरःकङ्काल एव, कर्परः,—शरावाऽऽकारपात्रभेदः, कटाहविशेष इति वा स इव, ( "कर्परः स्यात् कपाले च शस्त्रभेदकटाहयोः" इति मेदिनी ) ब्रह्मणः शिरःकपाल इवेत्यर्थः। पुरा मेरुशृङ्गे महर्षयः पितामहं परं तत्त्वं पप्रच्छुः, असौ तु महेशमायामोहितः आत्मानं सर्वोत्तमं ब्रह्मभूतमवादीत्, अथ नारायणांशजः क्रतुः क्रुद्धः आत्मानमेव सर्वकर्त्तारमब्रवीत्, एवं तौ विवदमानौ प्रमाण-भूतान् चतुरः आम्नायान् पप्रच्छतुः। ते तु रुद्रमेव तथाभूतमब्रुवन्, तौ तु तच्छ्रुत्वा तं विनिन्दितुमारेभाते, ततस्तावन्तरा एकं परमाद्भुतं ज्योतिः प्रादुरभूत्, तत् दृष्ट्वा ब्रह्मणः पञ्चमं शिरः आवामन्तरा कः स्यात् इति विमर्शोत्युक्त्वा प्रजज्वाल। हिरण्यगर्भस्तु तं रुद्रं प्राक् स्वभालस्थलादुद्भूतमवादीत्, तच्छ्रुत्वा कोपात् शङ्करः कालभैरवं ससर्ज, असौ तु वामाङ्गुलिनखाग्रेण विधेः पञ्चमं शिरः चकर्त्त। तच्च ब्रह्मशिरःकपालं हरस्य करं नामुञ्चत्। ततः कपालमोचने तीर्थे काश्यां तं कपालं तद्धस्तमुक्तमभवदिति काशी-खण्डे एकत्रिंशेऽध्याये द्रष्टव्यम्। तथा हि,—"कपालं ब्रह्मणो रुद्रः सर्वेषामेव पश्यताम्। हस्तात् पतितमालोक्य ननर्त्त प रया मुदा॥ विधेः कपालं नामुञ्चत् करमत्यन्तदुस्त्यजम्। हरस्य भ्रमतः क्वापि तत् काश्यां चणतोऽपतत्॥" इत्यादि। अत्र पैतामहरुधिराक्तशिरःकपालेन साकम् उष्णांशोरवैधर्म्यसाम्योक्तेः उपमाऽलङ्कारः।

( ४१५ ) पित्रिति।—पितुः,—जनकस्य, जमदग्नेः इत्यर्थः, वधेन—हननेन कार्त्तवीर्य्यकृतेन इति भावः, रुषितः,—कुपितः, यः रामः,—परशुरामः, तस्य रागेण—वीररसोत्साहेन, पितृवधजनितेन मात्सर्य्येण वा, असहिष्णुतया इत्यर्थः, ( "रागस्तु मात्सर्य्ये लोहितादिषु" इति मेदिनी ) रचितः,—सृष्टः, पृथ्विति।—

तुण्डतष्ट-दुष्ट-क्षत्रिय-कण्ठकुहर-रुधिरकुल्या-प्रणाल सहस्र-पूरितो ह्रद इव दूरदोधी रौधिरः, (४१६) भयनिगूढ़करचरणतुण्ड-खण्डलाऽऽकृतिः गुरुगरुडनखपञ्जराक्षेपक्षपणक्षिप्तक्षतजोक्षितो व्यसुः विश्वावसुः कमठ इव च लोठ्यमानो नभसि,

पृथु,—महान्, पीवर, इत्यर्थः, विकटः,—उग्र विशाल इत्यर्थः, ("विकटा वज्र-वाराह्यां विपुलविकरालयो" इति मेदिनी) य. कार्त्तवीर्य्यस्य—हैहयाधिपस्य. अस-कूट,—स्कन्धशिखर, तस्य कुट्टाक,—छेदक, ["अल्पमिचकुट्टलुण्टहड पाकन्" (३।२।१५५ पा०) इति कुट्टयतेः षाकन्] कुठार,—परशु, तस्य तुण्ड—मुख, निशितधारेत्यर्थः, तेन तष्टाः,—तनूकृता, चपिता इत्यर्थः, निकृत्ता इति यावत्, [तक्ष्णोते. कार्श्यार्थकस्य निष्ठाया रूपम्। "तष्टत्वष्टे तनूकृते" इत्यमरः] ये दुष्टा — दुर्वृत्ता, क्षत्रिया,—राजन्या तेषा कण्ठकुहराणां—गलरन्ध्राणां, रुधिराण्येव—रक्तान्येव, कुल्या—अल्पा कृत्रिमा सरित्, ("कुल्याऽल्पा कृत्रिमा सरित्" इत्यमरः) तासां प्रणालसहस्रैः,—प्रवाहसमूहैः, पूरित,—भरित, दूरदोधी—दूरदेशव्यापी, ["नन्दिग्रहि—" (३।१।१३४ पा०) इति रुणद्धेः कर्त्तरि णिनि]। रौधिर,—रुधिरमय, [रुधिरस्य विकार इत्यर्थे, "तस्य विकार." (४।३।१३४ पा०) इत्यण्] ह्रद,—अगाधजलाशय इव, ("तत्रागाधजलो ह्रदः" इत्यमरः), परशुरामो हि पितुः जमदग्ने निहन्तु कार्त्तवीर्य्यस्योपरि प्रकुप्य आदौ त सान्वयं निहत्य पश्चात् एकविंशतिकृत्व निखिलमेव राजन्य समूलघातं न्यवधीत्, निहतदौधिरह्रदेन पितॄन् तर्पयामास चेति पौराणिकी कथाऽत्रानुसन्धेया। अत्र परशुरामनिहतक्षत्त्रियरुधिरमय-ह्रदेन साकम् उष्णाशीरवैधर्म्यसाम्योक्तेरुपमाऽलङ्कार।

(४१६) भयेति।—भयेन—त्रासेन, गरुडदर्शनादिति भाव, निगूढ—सङ्कोचित, यत् करचरणतुण्ड तेन खण्डला—पर्त्तुला, आकृति,—अवयवो यस्य तथं क्त, गुर्विति।—गुरुणा—महता, गरुडस्य—वैनतेयस्य, नखपञ्जरेण—नखरसार-विशिष्टेन इत्यर्थ, य: आक्षेप,—आक्रमणम्, उत्क्षेपणम् इत्यर्थः, ततश्च क्षपण—भूमौ प्रक्षेप, तेन क्षिप्तेः,—निर्गलिते, देहादिति भाव, क्षतजे,—रक्ते, ("रुधिरे ऽसृग्लोहितास्ररक्तक्षतजशोणितम्" इत्यमर) उक्षितः,—सिक्त, सलिप्त इत्यर्थ, अत एव व्यसु,—गतजीवित विगतप्राण इत्यर्थः, ("स्त्रिया भूम्न्यसव प्राणा." इत्यमर) विश्वावसु,—तदाख्य., कमठ,—कच्छप., ("कूर्मे कमठकच्छपौ" इत्यमर) नभसि—आकाशे, लोठ्यमान:,—घूर्णमानः। आसीत् पुरा विश्वावसुर्नाम

(४१७) अरुणगर्भमांसपिण्डाण्ड इव च खण्डिमानमानीतः, (४१८) नियतकालातिपातदूयमानदाक्षायणीच्छिन्नो धातुतट इव च सुमेरोः, (४१९) असुरवधाभिचारचरुपचनपिशुनः

कश्चित् महर्षिस्तस्य चानुजः सुप्रतीको नाम ; असौ तु ज्यायसा भ्रात्रा सहैकं स्थातुं नैच्छत्, नित्यश एव धनविभागं कर्तुं भ्रातरमनुरुरोध, विभक्ता भ्रातरः नूनमभिवैरमभिहन्यन्ते इति ज्येष्ठेन प्रबोधितोऽपि कनिष्ठः यदा तद्वचनं नाभिनन्दितवान्, तदा तस्मै कनीयसे सुप्रतीकाय 'हस्तित्वमवाप्नुहि' इत्यभिशप्तवान्, कनिष्ठोऽपि ज्येष्ठं विभावसुं 'कच्छपत्वं लभस्व' इति अभिशशाप । एवं तौ सरसि अर्थार्थपूर्ववैरात् नित्यशः विवदमानौ गरुडेन भक्षितौ इति ; तथा चोक्तं भारते आदिपर्वणि विंशाध्याये,—"तावुभौ युद्धसम्मत्तौ परस्परवधैषिणौ ।…… ……भक्षयामास गरुडो तावुभौ गजकच्छपौ ॥" इति । अत्र गरुडनिहतरक्तोपलिप्तकच्छपेन सह उष्णाशोरवैधर्म्यसाम्योक्तेरुपमाऽलङ्कारः ।

(४१७) अरुणेति ।—अरुण—रक्त, गर्भस्य—कुक्षेः, अभ्यन्तरस्य इत्यर्थः, भ्रूणस्य वा, ("गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके" इति मेदिनी) मांसपिण्डं—पिशितखण्डं यस्य तथाभूतं, अण्ड इव—डिम्ब इव, खण्डिमानं—खण्डता, छिन्नतामित्यर्थः ["खण्डिमानम्" इत्यत्र "खण्डमानम्" इति पाठे,—खण्डपरिमाणं, खण्डस्वरूपमित्यर्थः ] आनीतः,—प्रापितः, अर्द्धस्य अस्तगमनात् खण्डितवद्दृश्यमान इति भावः । खण्डितारुणगर्भमांसपिण्डाण्डेन साकमुष्णाशोरवैधर्म्यसाम्योक्तेरुपमाऽलङ्कारः ।

(४१८) नियतेति ।—नियतकालस्य—कल्पान्तस्य, अतिपातेन—आगमेन ; यद्वा,—नियतस्य—नित्यस्य, कालस्य—महाकालस्य, सर्वभूतहारकस्येत्यर्थः, ("कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति मेदिनी) अतिपातः—अतिशयेन पतनम्, अत्यर्थमागमनमित्यर्थः तेन ; अथवा,—नियतः,—शास्त्रविहितः, यः कालः,—पूजनसमयः, यस्मिन् काले देव्या पूजा शास्त्रकृद्भिरुपदिष्टा तथाविधसमय इति यावत्, तस्य अतिपातः—उल्लङ्घनं, तेन दूयमाना—सन्तप्यमाना, सृष्टिध्वंसकरणादिति भावः, दाक्षायणी—दक्षकन्या, कालीत्यर्थः, संहाररात्रिरिति भावः, [दक्षस्यापत्यं स्त्री इत्यर्थे दक्षशब्दात् फिञ् ङीप् च ] तया छिन्नः,—विध्वंसितः, धातुतटः—गैरिकप्रस्थ इव, ("धातुर्मनःशिलाद्यद्रेर्गैरिकन्तु विशेषतः" इत्यमरः ) । रोषकषायितदाक्षायणीच्छिन्नधातुतटेन साकमुष्णाशोरवैधर्म्यसाम्योक्तेरुपमाऽलङ्कारः ।

(४१९) असुरेति ।—असुराणां—दानवानां, वधार्थं—नाशार्थम्, अभिचारः,—आथर्वणिकमारणादिक्रियाविशेषः, तस्य चरुः,—पायसविशेषः, तस्य पचन—

शोणितक्वाथकषायितकुक्षिः अतिविशङ्कटः कटाह इव च बार्हस्पत्यः, (४२०) सद्योगलितगजदानवदेहलोहितोपलेपभीषणो मुखमण्डलाऽऽभोग इव महाभैरवस्य मुहूर्त्तम् अदृश्यत। (४२१) जलनिधिजलप्रतिविम्बितरविबिम्बराजिभास्वराभ्रावलम्बिनो गृहीतार्द्रमांसभारा इव चाबभ्रमे वासरावसानवेला

पाकः, तस्य पिशुनः,—सूचकः, राजावेवाभिचारादिकरणप्रसिद्धेः, शोणितेति।—शोणितस्य—रक्तस्य, क्वाथेन—निष्पाकेण, तापेन घनीकरणेन इत्यर्थः, ("क्वाथः स्याद्दतिदु:खेऽपि निष्पाके च द्रवस्य च" इति मेदिनी) कषायितः,—रक्तीकृतः, कुक्षिः,—अभ्यन्तरं यस्य तथाभूतः, अतिविशङ्कटः,—अतिभीषणः, रक्तोपलिप्तत्वादिति भावः, [ "वे शालच्छङ्कटचौ" (५।२।२८ पा०) इति शङ्कटच्प्रत्ययः ] बार्हस्पत्यः,—बृहस्पतेरयं बार्हस्पत्यः, कटाह इव—स्थालीविशेष इव। पुरा देवासरयुद्धावसरे देवगुरुः बृहस्पतिरसुरवधसाधनाय आथर्वणिकाभिचारक्रियामकरोदिति पौराणिकी कथाऽत्रानुसन्धेया। अत्रासुररक्तोपलिप्तरक्तकटाहेन साकमुल्काशोरवैधर्म्यसाम्योक्तेरुपमाऽलङ्कारः

(४२०) सद्य इति।—सद्यः,—तत्क्षणं, निपातक्षण एव इत्यर्थः, गलितं—निःसृतं, गजदानवस्य—गजासुरस्य, देहात्—शरीरात्, यत् लोहितं—रक्तं, तस्य उपलेपेन—अनुलेपनेन, भीषणः,—उग्रः, महाभैरवस्य—महारुद्रस्य, मुखेति।—मुखमण्डलस्य—वदनबिम्बस्य, आभोग इव—आयतनमिव, अदृश्यत—अवलोक्यत, पूर्वोक्तविध उल्कारश्मिरिति पूर्वेण सम्बन्धः। महादेवकृतगजासुरनिधनवार्त्ता काशीखण्डे अष्टषष्टितमेऽध्याये उपवर्णिता; तथा हि,—"महिषासुरपुत्रोऽसौ समायाति गजासुरः। प्रमृद्नन् प्रमथान् सर्वान् निजवीर्य्यमदोद्धतः॥······ततस्त्रिशूलहेतिस्तमायान्तं दैत्यपुङ्गवम्। विज्ञायावध्यमन्येन शूलेनाभिजघान तम्॥ प्रोतस्तेन त्रिशूलेन स च दैत्यो गजासुरः। छत्रीकृतमिवात्मानं मन्यमानो जगौ हरम॥" इति। अत्र गजदानवरक्तोपलिप्तमहाभैरवमुखमण्डलेन साकमुल्काशोरवैधर्म्यसाम्योक्तेरुपमाऽलङ्कारः, एकस्यैवोल्काशोः अनेकासामुपमानानां दर्शनादियं मालारूपा वेदितव्या,—"मालोपमा यदेकस्योपमानं बहु दृश्यते" इति दर्पणोक्तेः।

(४२१) जलनिधीति।—जलनिधेः,—समुद्रस्य, जलेषु,—सलिलेषु, प्रतिबिम्बिता—प्रतिफलिता, या रविबिम्बराजिः,—सूर्य्यमण्डलच्छायाश्रेणिः, तया भास्वरं—दीप्यमानं, यत् अभ्रम्—आकाशं मेघो वा, तदवलम्बिनी—तदाश्रयिणी, अत एव

वेतालनिभा। (४२२) ज्वलत्सन्ध्यारागरज्यमानजल-प्रवाहः पुनरिव (४२३) पुराणपुरुषपीवरोरुसम्पुटपिष्टमधु-कैटभरुधिरपटलपाटलवपुः अभवत् अधिपतिः अर्णसाम्।

---

गृहीत,—धृत, आर्द्र,—सरस, तत्क्षणनिकृत्त इति यावत्, मांसभार,—पिण्डितराशिः यया तथाभूतेव, वासरावसानवेला—सन्ध्याकाल कृष्णवर्णा इति भावः, वेतालनिभा—वेतालसदृशी, आबभासे—शुशुभे, वेतालोऽपि आर्द्रमांसभारं वहतीति भाव। अत्र समुद्रनीरे प्रतिफलिततया, लौहित्यात् आर्द्रत्वेन प्रतीयमानया, सायङ्कालिक-सूर्यस्य अरुणप्रभया क्वचित् क्वचित् श्यामरुचे मेघपुञ्जस्य आरक्तीकृततया ईषदन्ध-कारीभूताया वासरावसानवेलाया गृहीतार्द्रमांसभारवेतालसादृश्यप्रतीते उपमाऽलङ्कारः सुव्यक्त एव।

(४२२) ज्वलदिति।—ज्वलता—राजमानेन, सन्ध्यारागेण—सायङ्कालिका-रुणवर्णेन, रज्यमान,—कुर्य्यमाण, प्रतिफल्यमानतया रक्तीक्रियमाण इत्यर्थः, जल-प्रवाह,—सलिलराशिः यस्य तथाभूत।

(४२३) अर्णसां—जलानां, ('सलिलं कमलं जलम्। अम्भोऽर्णस्तोय—" इत्यमर) अधिपति,—प्रभु, समुद्र इत्यर्थः, पुन,—प्राग्वत्, पुराणेति।—पुराण,—सनातन, पुरुष,—पुमान्, नारायण इत्यर्थ, तस्य पीवरे—स्थूले, ऊरुसम्पुटे—सक्थिरूपाधारे, सक्थियुगले वा, पिष्टयो,—निकृत्तयोरित्यर्थ, सुदर्शनेन इति भाव, मधुकैटभयो,—तदाख्ययोरसुरयुगलयो, रुधिरपटलेन—रक्तसमूहेन, पाटलम्—आरक्तं, वपु,—शरीरं यस्य तथाभूत, अभवदिव—अजायतेवेत्यर्थ, अर्णसामधिपति पुराणपुरुषपाटल-वपुर्धृक् बभूवेवेति भाव। अत्र उपमेयीभूते अर्णसामधिपतौ पुराणपुरुषपीवरोरुसम्पुट-पिष्टमधुकैटभरुधिरपाटलवपुष उपमानभूतस्य तादात्म्याध्यासादुत्कटैककोटिकसंशयो दयादुत्प्रेक्षाऽलङ्कार। सृष्टिप्रारम्भे जलनिधौ शयानस्य भगवतो नारायणस्य नाभिकमलात् ब्रह्मा समुद्भवत्। तदानीञ्च तस्यैव भगवत कर्णमलात् द्वावसुरौ मधुकैटभश्च समुत्पद्य बुभुक्षया नाभिकमलस्थितं ब्रह्माणम् अत्तुम् उद्यतौ, तदवलोक्य भीतेन ब्रह्मणा स्तुता योगनिद्रा विष्णो शरीरं तत्याज, ततश्च समुत्थाय भगवान् तौ तथाविधौ दृष्ट्वा पञ्चवर्षसहस्रं ताभ्यां बाहुयुद्धं कृत्वा तयोरेव सन्तुष्टयोर्वरं लब्ध्वा ऊरुदेशे निधाय चक्रेण निहतवानिति मार्कण्डेयपुराणे—"तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ। विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ॥" इत्यादि देवीमाहात्म्यम् अत्र अनुसन्धेयम्।

(४२४) अवसिते सन्ध्यासमये समनन्तरम् (४२५) अपरिमितयशःपानतृषिताय मुक्ताशैलशिलाचषक इव निजकुलकीर्त्या, (४२६) कृतयुगकरणोद्यताय आदिराजराजतशासनमुद्रानिवेश इव राज्यश्रिया, सकलद्वीपजिगीषाचलिताय श्वेतद्वीपदूत इव च आयत्या, (४२७) श्वेतभानुः उपानीयत निशया नरेन्द्राय इति ।

इति श्रीबाणभट्टकृते हर्षचरिते राज्यश्रीप्राप्तिर्नाम
अष्टम उच्छ्वासः ॥ ८ ॥

(४२४) अवसिते—समाप्तिं गते, अतिक्रान्ते इत्यर्थः ।

(४२५) निजकुलकीर्त्या—पुष्पभूतिवंशस्य यशसा, अपरिमितेति ।—अपरिमितानि,—प्रभूतानि, यशांसि—कीर्त्तयः, तेषां पानाय—पेयविषयीकरणाय, अधिगमायेत्यर्थः, तृषितः—तृष्णार्त्तः, लुब्ध इत्यर्थः, तस्मै, नरेन्द्राय इत्यग्रेणान्वयः, सर्वदिग्विजयेन इति भावः, मुक्ताशैलशिलाचषक इव—मुक्तागिरिप्रस्तरखण्डरूपपानपात्रमिव, ("चषकोऽस्त्री पानपात्रम्" इत्यमरः) ।

(४२६) राज्यश्रिया—राजलक्ष्म्या कृतेति ।—कृतं—सत्यं युगं, तस्य करणे—विधाने, पुनः प्रवर्त्तने इत्यर्थः, पापाचारिणः उन्मूल्य चतुष्पाद्धर्मसंस्थापनद्वारा इति भावः, उद्यतः,—प्रवृत्तः तस्मै, आदिराजेति ।—आदिराजस्य—प्रथमनृपतेः, मनोः वैवस्वतस्य वैन्यस्य पृथोर्वा इत्यर्थः, राजती—रजतनिर्मिता, शासनमुद्रा—राज्याधिकारमुद्रा, राजनामाङ्कितप्रत्ययोत्पादकमुद्राविशेषः इत्यर्थः, तस्याः निवेश इव—मुद्रितावयव इव । आयत्या—उत्तरकालेन, आगामिन्या शुभया नियत्या इत्यर्थः, ("उत्तरः कालः आयतिः" इत्यमरः) सकलेति ।—सकलानां—सर्वेषां, सप्तानामष्टादशानां वा इत्यर्थः, द्वीपानां—जम्बूशाकादीनां समन्ताज्जलवेष्टितभूभागानां, जिगीषया—जयाकाङ्क्षया, चलितः,—प्रस्थितः तस्मै, श्वेतद्वीपदूतः,—श्वेतद्वीपस्य—अष्टादशद्वीपान्तर्गतद्वीपभेदस्य, दूतः,—वार्त्तावहः, तद्देशवासिना सन्देशमादाय आगतः इति भावः, चन्द्रस्य अतिशुभ्रकान्तित्वात् श्वेतद्वीपदूततौपम्यं सुसङ्गतमेवेति । दैवमेवानुकूलं श्वेतद्वीपग्रहणार्थं तद्देशीयदूतं हर्षाय प्रेरितवदिति निष्कर्षः ।

(४२७) निशया—रजन्या, श्वेतभानुः,—शुभ्रांशुः, चन्द्रः इति यावत्, नरेन्द्राय—हर्षाय, उपानीयत—प्राप्यत, उपायनीकृत इति यावत् ; [ नयतेर्द्विकर्म्मकत्वेऽपि उपपूर्वकस्य तस्य उपहारकरणार्थत्वेन सम्प्रदानत्वात् "नरेन्द्राय"

इत्यत्र चतुर्थी, न तु द्वितीयेति वेदितव्यम्]। निशा श्वेतभानुं निजकुल-कीर्त्तिसमर्पितमुक्ताशैलशिलाचषकमिव, राजलक्ष्मीसमर्पिताऽऽदिराजराज्यशासनमुद्रा-निवेशमिव, आयतिप्रदत्तश्वेतद्वीपदूतमिव च नरेन्द्रमानयदिति निष्कर्षः, चन्द्रोदयो-ऽभूदिति भावः। अत्रैकस्मिन्नेव श्वेतभानौ भूयसां तथाविधचषकादीनामवैधर्म्यसाम्योक्तेः मालोपमाऽलङ्कारः।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना वि, ए, उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां, तदात्मजाभ्यां पण्डितश्रीसदाशुबोधविद्याभूषण-पण्डितश्रीमन्नित्यबोध-विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चामलाख्यायां श्रीहर्षचरितव्याख्यायाम् अष्टम उच्छ्वासः ॥ ८ ॥

